॥ श्रीः ॥

# श्रीमदमरसिंहविरचितं

व्याख्यया समेतम् ।

## प्रथमं काण्डम् ।

### स्वर्गवर्गः ।

बर्हिणबर्हापीडः मुषिरपरो बालवल्लवो गोष्ठे ।
मेदुरमुदिरश्यामलरुचिर्जयादेष गोविन्दः ॥

मुदेऽसौ धीराणां न गुणलवगर्वान्मम परि-
श्रमः किञ्च स्वार्थस्तदिह विबुधाः ! क्षन्तुमुचितम् ।
इतो ये सासूया अनृजुमतयो नूतनतया
खलास्तेऽमी हेया गुणिषु पुनरप्यञ्जलिरयम् ॥

अथ टीकासर्वस्वं दशटीकावित् करोत्यमरकोशे ।
श्रीमत्सर्वानन्दो वन्द्यघटीयार्तिहरपुत्रः ॥

यद्यपि सन्त्यतिगुणिनः श्रमस्तथाप्यत्र मम हि मौखर्यात्
ललितं रौति पिकश्चेद् ग्राम्यामो यातु किं काकः ॥

१. 'चिरचरो' क. ख. ग. पाठः. २. 'रो' ङ. छ. पाठः ३. 'गणग' ङ. छ. पाठः.
'' ग. पाठः.

त्रादौ भगवतः सेवायाः परोपदेशेन प्रारिप्सितप्रत्यूहप्रशमनाय धर्ममर्जय-

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।**
**सेव्यतामक्षयो धीराः ! स श्रिये चामृताय च ॥ ॥**

**यस्येत्यादि** । हे धीराः ! स सेव्यतामित्यनेन धैर्यशालिन एव सेवितुं क्नुवन्तीति तान् सम्बोधयति । यस्यानघा गुणाः । अनघाः रागादिपापरहिताः तथा चाजयकोशे —

"अघशब्दो भवेत् पापे दुःखव्यसनयोरपि"

गुणाः मैत्रीक्षमादयः । ज्ञानदयासिन्धोरिति । ज्ञानं समस्तवस्तुविषयं परिज्ञानं, दया परदुःखप्रहाणेच्छा, ताभ्यां सिन्धुः । 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' (वा. २. ३. १८) इति तृतीया । 'तृतीया' (२. १. ३०) इति योगविभागात् समासः । सिन्धुशब्दो विपुलाधारत्वादुपचरितः । सिन्धुसाम्यमेवाह— अगाधस्य अन्यैरनधिगतज्ञानदयापारत्वादपरिच्छेद्यगाम्भीर्यस्य । अक्षयः परहितापादनेषु नास्ति क्षयो विनाशो यस्येत्यक्षयः । सिन्धुपक्षे व्यक्तमेवागाधत्वमक्षयत्वं च । प्रयोजनानुपदर्शने च प्रेक्षावदप्रवृत्तेः प्रयोजनं दर्शयति— श्रिये चामृताय च । श्रियै त्रिवर्गसम्पत्त्यै । तदुक्तं व्याडिना —

"लक्ष्मीसरस्वती(धात्री?धी)त्रिवर्गसम्पद्विभूतिशोभासु ।
उपकरणवेषरचनाविधासु च श्रीरिति प्रथिता ॥"

अमृताय मोक्षाय । चकारावुभयप्राधान्यद्योतनार्थौ । सिन्धुरपि सुरासुरैः श्रियै लक्ष्म्यै अमृताय पीयूषाय च सेवितः । अत्र चानुक्तोऽपि शाक्यलक्षणोऽर्थो ज्ञानदयादिभिः स्पष्टं प्रतीयत इति प्रसादनामायमर्थगुणः । तदुक्तं सरस्वतीकण्ठाभरणे

"यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते । यथा —
अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।

१. 'हश' क. ख. घ. ङ. च. पाठः. २. 'स्तावधन' ग. ख. घ. ङ. च. पाठः. 'र्थो' घ. ङ. छ. पाठः

विरहविधुरकोकद्वन्द्वबन्धुर्बिभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

अत्रानुक्तोऽपि सूर्य उदयतीति पद्ममुद्राभञ्जकत्वादिना लक्ष्यते ।" बौद्धदर्शनविद्वेषिण इह प्रवृत्तिर्न स्यादित्यतोऽत्र बुद्धपदोपादानं न कृतं कविना । रूपक चा[1]प्यलङ्कारः । तदुक्तं दण्डिना—

"उपमैव तिरोभूतभेदा रूपकमिष्यते ।
यथा बाहुलता पाणिपद्मं चरणपल्लवः ॥"

इति ॥

इदानीमभिधित्सितमुपन्यस्यति—

**समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।**
**सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ।**

**समाहृत्येति** । नामलिङ्गानुशासनमुच्यते । 'णमु प्रह्वत्वे शब्दे' इत्यनुसाराद् नम्यते अभिधीयते अनेनेति नाम । लिङ्ग्यते ङीप्टाबादिभिर्व्यज्यते[2] इति लिङ्गं स्त्रीपुन्नपुंसकम् । तयोरनुशासनं शास्त्रम्, अनुशिष्यतेऽनेनेति करणव्युत्पत्त्या । स्वकपोलरचितत्वव्युदासाय समाहृत्यान्यतन्त्राणीत्युक्तम् । अन्यतन्त्राणि व्याडिवररुचिप्रभृतीनां तन्त्राणि समाहृत्य एकीकृत्य । अत एव सम्पूर्णमिदं, यतस्त्रिकाण्डोत्पलिन्यादीनि नाममात्रतन्त्राणि. व्याडिवररुच्यादिप्रणीतानि तु लिङ्गमात्रतन्त्राणि । वर्गैरिति इत्थम्भूतलक्षणे तृतीया । वर्गैर्लक्षितमित्यर्थः । प्रकरण वर्गः । प्रकरणबद्धं च सुखग्राह्यं भवति । वर्गानेव विशिनष्टि—सङ्क्षिप्तैः प्रतिसंस्कृतैरिति । स्तोकेन भूयोभिधानं सङ्क्षेपः । सूक्तिरचना प्रतिसंस्कारः । अथवा हरिप्रियावत् प्रतिसंस्कारः । अयमर्थः—हरिरिति विष्णो[3]र्नामात्र नोक्तम् । तदनु श्रीपर्याये हरिप्रियेत्युक्तम् । तेन हरिरप्यस्य नामेत्युक्तं भवति ॥

१. 'च काव्याल' क. ख. ग. ङ. च. पाठः. २ 'ते तल्लिङ्गं' क. ख. घ. ङ. च. पाठः.
३. 'ष्णुः । न विष्णोर्नामात्रोक्तम् ।' ङ. छ. पाठः.

प्रतिनाम लिङ्गाभिधाने गौरवं परिहरन्नाह—

**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।**
**स्त्रीपुन्नपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥**

**प्रायश** इत्यादि । प्रायशो बाहुल्येन रूपभेदो यथाक्रमं स्त्रीपुन्नपुंसकानां ङ्याब्विसर्गबिन्दुकृतः । तेन स्त्रीपुन्नपुंसकं ज्ञातव्यम् । तद् यथा—'कौमोदकी गदा खड्गो नन्दकः', 'सलिलं कमलं जलम्' । निश्चितलिङ्गेनाविप्रकर्षः साहचर्यम् । यत्र रूपभेदो नास्ति, तत्रानेनापि कुत्रचित् तज्ज्ञेयम् । यथा—'अश्वयुगश्विनी', 'भानुः करः', 'वियद् विष्णुपदम्' । तद्विशेषविधिः तस्य स्त्रीपुन्नपुंसकस्य विशेषेणोपादानम । तस्मादपि क्वचित् तज्ज्ञेय, यत्र रूपभेदसाहचर्ये न स्तः । यथा—'वल्लरिर्मञ्जरिः स्त्रियौ', 'विटङ्क पुन्नपुंसकमि'ति ॥

रूपभेदकृतो लिङ्गनिर्णयो द्वन्द्वैकशेषयोर्नास्तीति सङ्करदोषं च परिहरन्नाह—

**भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।**
**कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥**

**भेदाख्यानाये**त्यादि । भेदाख्यानाय लिङ्गानां भेदकथनाय भिन्नलिङ्गानां द्वन्द्वैकशेषौ अत्र न कृतौ । ननु भिन्नलिङ्गानामपि कृतौ । यथा—'अप्सरोयक्षरक्षोगन्धर्वकिन्नराः', 'मातापितरौ पितरौ' इति । अत्राह—अनुक्तानामिति । स्थानान्तरेऽनिर्दिष्टानां न कृतौ । निर्दिष्टानां तु कृतावेव । स्थानान्तरनिर्देशो यथा—'स्त्रियां बहुष्वप्सरसः', 'नैर्ऋतो यातुरक्षसी', 'जनयित्री प्रसूर्माता जननी', 'तातस्तु जनकः पिता' । ननु रत्नकोशादिवत् स्त्रीपुन्नपुंसककाण्डविधानेनैव कथनमुचितम् । तेन न रूपभेदसाहचर्यादिप्रतिपत्तिगौरवमपि न स्यात् । तत् किमिति लिङ्गसङ्करः क्रियत इत्यत आह—क्रमादृते न सङ्करः कृतः । सङ्करस्तु भिन्नलिङ्गानां मिश्रतारूपः । क्रमः प्रक्रमः प्रस्ताव इति यावत् । तद्

१. 'पि सन्निक' ग. घ पाठः. २. 'शव' ङ. छ. पाठः. ३. 'त्याह' क. ग. घ. ङ. झ. पाठः.

यथा — स्वर्गप्रक्रमे द्योदिवौ भिन्नलिङ्गे अप्यवश्यवाच्यत्वात् कथिते । विष्णुप्रस्तावे लक्ष्म्या नामेति ॥

विशेषविधावपि लाघवार्थं परिभाषते —

**त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने च द्वयोरिति ।**
**निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ५ ॥**

त्रिलिङ्ग्यामित्यादि । त्रयाणां लिङ्गानां समाहारस्त्रिलिङ्गी । तत्र त्रिष्विति पदं ज्ञेयम् यथा — 'तटं त्रिषु' । स्त्रीपुंसौ मिथुनम् । तत्र द्वयोरिति पदं ज्ञेयम् । यथा — 'शफरी द्वयोः' । निषिद्धं लिङ्गं यस्य तन्निषिद्धलिङ्गं नाम शेषार्थं शेषलिङ्गं ज्ञेयम् । यथा — 'द्वीपोऽस्त्रियाम्' । त्वन्तम् अथादि च नामलिङ्गपदं पूर्वं न भजते । तत्र त्वन्तनामपदं यथा —

"शोभा कान्तिर्द्युतिश्छविः । अवश्यायस्तु नीहारः" ।

त्वन्तलिङ्गपदं यथा — 'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिः' । अथादिनामपदं यथा —

"प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः" ।

अथशब्देनाथोशब्दोऽप्युपलक्ष्यते । यथा — 'पीताधानमथो झषाः' । अथादिलिङ्गपदं यथा — 'जवोऽथ शीघ्रं त्वरितम्' । ये तु —

"पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा"

इति न नामलिङ्गव्यवच्छेदः क्रियत इति चोदयन्ति, ते बालिशा एव, यतो लिङ्गनियमोऽत्र व्यवच्छिद्यते । यतः कूपः पुंलिङ्ग एव, उदपानं तूभयलिङ्गमिति ॥

अत्र च शास्त्रे त्रिभुवनं वाच्यम् । तत्र श्रेष्ठत्वात् स्वर्गमभिदधाति —

**स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।**
**सुरलोको द्योदिवौ द्वे स्त्रियौ क्लीबे त्रिविष्टपम् ॥ ६ ॥**

स्वरादयो नव स्वर्गे । स्वः अव्ययम् अव्यक्तलिङ्गम् । तथा चाह —

'गं । अ' क. ख. ह. च. छ पाठः.

---

* 'शस्तं चाथ त्रिषु द्रव्ये' इत्यवज्ञातीयक पाठ्यम् ।

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥"

इति । कथं तर्हि 'रम्यं स्वरि'ति तद्विशेषणस्य नपुंसकत्वम् । तथा चाह सनातनः ---

"स्वरपि मे न मनोहरमुन्नसत्पृषतलोचनया रहितं त्वया"

इति । तत्र लोकाश्रयत्वाल्लिङ्गस्येति युक्तिः । तथा च वामनः —

§ "द्विगुरद्धि पात्राद्यन्तः क्रियाऽव्ययविशेषणं नै(क्य ? क)"

इति । स्वरिति 'स्वृ शब्दोपतापयोः' । 'अन्येभ्योऽपि दृश्यन्ते' (३. २. ७५) इति विच् । स्वरशब्दस्य रेफान्तत्वादुत्वं न भवति. 'अतो रोरप्लुतादप्लुते' (६. १. ११३) इत्यत्र रुसम्बन्धिनो रेफस्योत्वविधानात् । स्वरशब्दस्यानेकार्थवर्गोपदिष्टस्यापि यदत्र पर्याये कथनं, तद् भूरिप्रयोगत्वात् । तथा चायमेव वक्ष्यति —

"भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते"

इति । अत एवाव्ययवर्गकथनीयस्यापि स्वरशब्दस्यात्र कथनम् । यच्चादावुपादानं स्वरशब्दस्य, तद् मङ्गलार्थं, महाव्याहृतिशब्दानुप्रविष्टत्वात् तस्य । ऋज्यते स्थीयतेऽस्मिन् इत्यर्गः स्थानम् । 'ऋज गतिस्थानार्जनेषु' । 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ् । शोभनोऽर्गः स्वर्गः । प्रादिसमासः । कं सुखं, तद्विपरीतमकम् 'नञ्' (२. २. ६) इति समासः । तद् नास्त्यत्रेति नाकः । 'नञोऽस्त्यर्थानां बहुव्रीहिर्वोत्तरपदलोपश्च' (वा० २. २. २४) इति समासोत्तरपदलोपौ । 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' (६. ३. ७५) इति नञः प्रकृतिवद्भावः । त्रिदशा दीव्यन्त्यत्रेति त्रिदिवः । दीव्यतेः 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कः । यद्यपि 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति परिगणनं वृत्तावुक्तं, तथापि

१. 'यांति' ङ. छ. पाठः. २. 'ति क' ङ. छ. पाठः. ३. 'गार्थात' च. पाठः. ४. 'ति । अ' क. घ. ङ च पाठः. ५. 'र्वा चोत्त' क. ख. ग. घ. च. पाठः. ६. 'ति प्र' क. ख. घ. च. पाठः.

§ इदं वामनकृते काव्यालङ्कारसूत्रे न दृश्यते।

सम्भवोदाहरणमेव तत् । पृषोदरादित्वाद् दशशब्दलोपः । दीव्यन्त्यत्रेति द्यौः । "'दिवेर्ड्यो दिवि' इति ड्योप्रत्ययः । गोशब्दवद् रूपम् । दिवीति *'दिवेर्डिविः' इत्यौणादिको डिविः । पदान्ते 'दिव उत्' (६. १. १३१) इत्युत्वे द्युभ्यामित्यादि । 'स्त्रियौ' इत्युक्तेऽपि यद् द्विपदप्रयोगोपादानं, तद् उक्तार्थानामपि प्रयोगो भवतीति ज्ञापनार्थम् । यथा—

नरं च नारायणमेव चादौ स्ततः सुतौ द्वौ जनयाम्बभूव"

इति । त्रिदशानां विष्टपं भुवनमिति त्रिविष्टपम् । पृषोदरादित्वाद् दशशब्दलोपः । विष्टपशब्दस्य पुन्नपुंसकत्वम् । तथा नामरमाला—'भुवनं विष्टपं पुमान्' । अतः 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२. ४. २६) इत्युभयलिङ्गत्वे प्राप्ते यत्र 'क्लीब' इति करोति, तत्र 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति युक्तिः । क्लीबशब्द ओष्ठ्यो बः । 'क्लीबृ अधाष्ट्र्ये' । अस्मादोष्ठ्यकारिकापठिताद् इगुपधात् कः । तथा चौष्ठ्यकारिका

"भ्वादौ बः पवर्गीयो बाधिबन्धनिबर्हिषु ।
बंहिबृंहिबधाबुन्दिबाहृलम्ब्याम्बिचुम्बिषु ॥
बहतौ बेहतौ चैव कबतौ रम्बतौ तथा ।
क्लीबिक्षीबतिबम्बेषु कुम्बिलुम्ब्योर्बुभिद्वये ॥
स्थैर्ये बदे बिटै शब्दे बटै च परिभाषणे ।
बनतौ स्याद् बणे चौष्ठ्यः प्राणने बलतावपि ॥
ब्रून्येकस्मिन्नदादौ स्याद् बुधिबिस्योर्बुसौ श्यनि ।
तुदादौ बिलतावेव ब्रीबभ्रात्योः क्रियादिषु ॥
सम्बे पम्बे बृहे शुल्बे स्यात् कुम्बिलुर्बितुम्बिषु ।
(ब ? ब्रू)सबर्हयोर्बस्ते च प्राणनार्थे भवेद् बले ॥

'पृषोदरादीनि यथोपदिष्टम् इति द' ङ छ पाठः　२. 'पः' क ख. ग. घ. पाठः.

इदं मुद्रितोणादौ न दृश्यते । † 'पिष्टपो विष्टपोऽप्यस्त्री' इति अमरव्याख्यायां भानुजिदीक्षितः ।

चुरादावेषु विज्ञेयो बकारोऽयं पवर्गजः ।
अन्यो ज्ञेयस्तु वोऽन्तःस्थो गणेष्वन्येषु धातुषु ॥"

तत्र 'बाधृ लोडने' । 'बदि अभिवादनस्तुत्योः' । 'बाकि कौटिल्ये' । 'बहि महि वृद्धौ' । 'बृहि शब्दे च' । 'बध बन्धने' । 'उबुन्दिर् निशामने' । 'बेहृ जेहृ बाहृ प्रयत्ने' । 'रबि लबि अबि शब्दे' । 'चुबि वक्त्रसंयोगे' । बर्धताविति प्रमादपाठः । बिभृत्सतीति भप्भा(व)स्यादर्शनात् । बहताविति तु पाठः । अस्ति च प्रकृत्यन्तरं बहिः । यत्र 'बबाह रक्तं पुरुषा' इति चण्डीपाठः । सानि बिभक्षतीति । 'कबृ वर्णे' । 'क्लीबृ अधार्ष्ट्ये' । 'क्षीबृ मदे' । 'बस्क मस्के'ति गतौ दण्डकः । 'कुबिच्छादने' । 'लुबि तुबि अर्दने' । 'बुध बोधने' । 'बुधिर् बोधने' । 'बद स्थैर्ये' । 'बिटै शब्दे' । 'बटै भटै परिभाषणे' । 'बन षण सम्भक्तौ' । 'अन रण बण भण शब्दार्थाः' । 'बल प्राणने धान्या(वि ? व)रोधने च' । 'ब्रूञ् व्यक्तायां वाचि' । 'बुध अवगमने' । बिस प्रेरणे' । 'बुस उत्सर्गे' । 'बिल भेदने' । 'ब्री वरणे' । 'बन्ध बन्धने' । चुरादौ 'सम्ब संवरणे' । 'षम्ब च ।' 'बटै पुटे' इति दण्डके । 'बृहिः' अत्रैव बर्हिः । 'शुल्ब सर्जने' । 'कुबिच्छादने' । 'लुबि तुबि अर्दने' । *'बस स्नेहच्छेदावरणेषु'(?) । 'ब्रूस बर्ह हिंसायाम्' । 'बस्त गन्ध अर्दने' । 'बल प्राणने' । 'अर्ब पर्ब बर्ब कर्ब खर्ब गर्ब मर्ब सर्ब चर्ब गतौ' इत्ययमपि भूवादौ भीमसेनेन पवर्गान्तप्रकरणे पठितः । एतदपरो यग्लवीयो वः ॥

**अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।**
**सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥**

**आदितेया दिविषदो लेखा अदितिनन्दनाः ।**
**आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥ ८ ॥**

**बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।**
**वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥ ९ ॥**

१. 'कपाटः । कु' ङ. छ. पाठः. २. 'सम्मार्ज' च. पाठः.

* धातुपाठे त्वयमन्तःस्थादिर्दृश्यते ।

अमरादयः षड्विंशतिः **सामान्यदेवतायाम्**। मरणं मरः। 'मृङ् प्राणत्यागे'। बहुलवचनाद् भावे अप्। एषां तन्नास्तीत्यमराः। एतच्च 'नञो (ज्वरज)रमरामित्र-मृताः' (६.२.११६) इत्यत्र वृत्तौ व्याख्यातम्[1]। नाकवत् समासोत्तरपदलोपौ। निरस्ता जरा यैस्ते निर्जराः। 'प्रादिभ्यो धातुजस्य बहुव्रीहिर्वोत्तरपदलोपश्च'[2] (वा०२.२.२४) इति समासोत्तरपदलोपौ। ते हि सर्वदा पञ्चविंशतिवर्षदेशीयाः। तथाहि श्रीरामायणे—

"रूपं वेदन्ति[3] सौमित्रे! पञ्चविंशतिवर्षवत्"

दीव्यन्तीति देवाः। पचाद्यच्। जन्मसत्ताविनाशात्मिकास्तिस्रो दशा एषामिति त्रिदशाः। न तु मनुष्याणामिव बाल्ययौवनवार्धकानि तिस्रो दशाः, अजरत्वात्। विबुध्यन्ते न स्वपन्तीति विबुधाः। 'बुध अवगमने'। इगुपधलक्षणः कः। 'षु प्रसवैश्वर्ययोः'। 'सुसूधागृधिभ्यः क्रन्' (उ० २.२४)। सुरा एषामस्तीति सुराः। मत्वर्थे अर्शआदित्वादच्। सुरापरिग्रहाद् वा सुराः। तथाहि श्रीरामायणे—

"सुरापरिग्रहाद् देवाः सुरा इत्यभिविश्रुताः।
अपरिग्रहणात् तस्या दैतेया असुरास्तथा॥"

इति। शोभनममावास्यादि पर्व अङ्गुल्यादि वा येषां ते सुपर्वाणः। प्रशस्तानि मनांसि येषामिति सुमनसः। त्रिदिवस्येशास्त्रिदिवेशाः[4]। द्यौरोकः स्थानं येषां ते दिवोकसः। अकारान्तोऽपि दिवशब्दोऽस्ति। तदा च दिवौकस इत्यपि स्यात्। तथाहि बुद्धचरिते—

"न शोभते तेन हि नो विना पुरं
मरुत्वता वृत्रवधे यथा दिवम्।"

इति। अदितिशब्दात् 'कृदिकारादक्तिनः', 'सर्वतोऽक्तिन्नर्थादित्येके'[5] (ग० ४.१.४५) इति ङीष्। ततः 'स्त्रीभ्यो ढक्' (४.१.१२०) इति ढक्। तेन

१. 'म्। नव्या ना' ङ. छ. पाठः. २. 'र्वा चोत्त' क. ख. ग. घ. च पाठः. ३. 'विन्दति' क. ख. ग. पाठः. ४. 'शाख्यास्ति' क. घ. च. पाठः. ५. 'नीति ति' ङ. छ. पाठः. ६ 'हत्वाद्' क. घ. पाठः.

आदितेयाः। दिवि सीदन्ति वर्तन्त इति दिविषदः। 'सत्सूद्विष—' (३.२.६१)इत्यादिना क्विप्। 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इति पक्षे सप्तम्या अलुक्। तेन 'मनस्सु येन द्युसदां न्यधीयत' (स. १. श्लो. ४३) इति माघप्रयोगः साधुः। सुषामादित्वात् षत्वम्। ग्रीवाहस्तपादतलेषु तिस्रो लेखा येषां सन्तीति लेखाः। प्रशंसायाम् अर्शआदित्वादच्। अदितिनन्दना इति। 'टुनदि समृद्धौ'। नन्द्यादित्वाल्ल्युः। 'कृद्योगा च षष्ठी समस्यते' (वा० २.२.८) इति समासः। ऋशब्देन अदितिरुच्यते। तत्रभूतत्वाद् ऋभवः। ऋपूर्वाद् भवतेस्तत्र भवन्तीति 'डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यानम्' (वा० ३.२.१८०) इति डुः। उपपदसमासः। अविद्यमाना निद्रा येषामित्यस्वप्नाः। अमर्त्या इति। 'नञ्' (२.२.६) इति समासः। अमृतं पीयूषमन्धः अन्नं येषां ते अमृतान्धसः। बर्हिः अग्निर्मुखं येषां ते बर्हिर्मुखाः। तथा च मनुः—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते"

इति। क्रतुभुज इति। 'अन्येभ्योऽपि दृश्यते' (३.२.१७८) इति क्विप्। गीरेव बाणो येषामिति गीर्बाणाः। शापद्वारा छेदनादिसम्भवात्। प्रशस्तं वृन्दं रूपमेषामिति वृन्दारकाः। 'शृङ्गवृन्दाभ्यामारकन्[2]' (वा०५.२.१२२) इत्यारकन्प्रत्ययः। देवता एव दैवतानि। स्वार्थे[3] *'देवतादिभ्योऽण्' इत्यण्। देवतेति देवशब्दात् स्वार्थिकस्तल्। 'तलि स्त्रीलिङ्गवचनं कर्तव्यम्' इति स्त्रीत्वे सिद्धे यत् पुनः 'स्त्रियाम्' इति करणं, तद् बहुवचनायातपुल्लिङ्गशङ्कानिराकरणार्थम्॥

**आदित्यविश्ववसवस्तुषिताभास्वरानिलाः।**
**महाराजिकसाध्याश्च रुद्राश्च गणदेवताः॥ १०॥**

आदित्यादयो नव प्रत्येकं गणदेवताविशेषे। गणदेवताः सङ्घदेवता इत्यर्थः। तत्र—

१. 'देषु' क. ख. ग. छ. पाठः. २. 'ताभ्यो' च. पाठः. ३. 'र्थे तल्' घ. च. पाठः.

* 'प्रज्ञादिभ्योऽण्' इत्येतत्स्थानीयमिदं व्याकरणान्तरवचनं स्यात्।

"आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः।
वसवश्चाष्टसङ्ख्याकाः षट्त्रिंशत् तुषितास्तथा ॥
आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः।
महाराजिकनामानो द्वे शते (षड्?)विंशतिस्तथा ॥
साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः।"

अदितिशब्दात् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (४.१.८५) आदित्याः। 'विश प्रवेशने'। 'अशूप्रुषिलुटिकणिखटिविशिभ्यः क्वन्' (उ० १.१४९)। विश्वे। 'वस निवासे'। 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ० १. १०) इति उः। वसवः। तुष्यन्तीति तुषिताः। 'तुष तुष्टौ'। 'रुचिवचि*कुंडि-कुषिभ्यः कितच्' (उ० ४.१८५) इति बहुलवचनात् कितच्। तथा चोक्त-मुणादौ —

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥"

समन्ताद् भासनशीला आभास्वराः। 'स्थेशभासपिसकसो वरच्' (३.२.१७५) अन्यते प्राण्यतेऽनेने ेलः। 'अन च' इत्यस्माद् धातोः 'सलिकल्यनिमाहि-भटिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्' (उ० १.५७)। बहुदेवकत्वान्म-हती राजिः पङ्क्तिरेषामिति महाराजिकाः। 'महाराजप्रोष्ठपदाभ्यां ठञ्' (४.२. ३५) इति ठञ्। संज्ञापूर्वकत्वाद् वृद्ध्यभावः। साध्यं सिद्धिरेषामस्तीति साध्याः। अर्शआदित्वादच्। रोदयन्तीति रुद्राः। 'रुदिर् अश्रुविमोचने' इत्यस्माण्ण्यन्ताद् 'रोदयतेर्णिलुक् च' (उ० २.२४) इति रक् णिलोपश्च ॥

**विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः।**
**पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११ ॥**

१. 'तुषितास्त्रिंशत् तथा च षट्' क. ख. घ. च. पाठः. २. 'तुषि' क. ख. घ. ङ. च. पाठः.

* 'रुचिवचिकुचिकुटिभ्यः कितच्' इति मुद्रितोणादिपाठः.

विद्याधरादयो दश प्रत्येकं **देवयोनिविशेषे**। देवा एव योनयः एषां निदानभूता इत्यर्थः। विद्याधरशब्दः पर्याये न पठित इत्येतावता रूपभेदेनोक्तः। मन्त्रविद्यादिकं धरतीति विद्याधरः। पचाद्यच्। पिशितमश्नातीति पिशाचः। पृषोदरादित्वात् पिशितशब्दस्य पिभावः। अशशब्दस्य शाचादेशः। 'शकुनिशकुन्तिपिशाचपिशङ्गा' इति शभेदः। प्रायेण गुह्यं कुत्सितं कायतीति गुह्यकः। 'कै शब्दे'। 'आतोऽनुपसर्गे कः' (३.२.३)। सिद्ध इति। *'षिधू हिंसासंराद्ध्योः'। गत्यर्थादिसूत्रेण कर्तरि क्तः। इष्टं प्राप्नोतीति भूतः। 'भू प्राप्तावात्मनेपदी'त्यस्मात् कर्तरि पूर्ववत् क्तः। एते पर्यायेऽपठिताः। अतोऽत्रोक्ताः। अपरे पर्याये व्याख्यातव्याः। विद्याधरः कामरूपी खेचरः। अप्सरसो देवयोषित उर्वश्यादयः। यक्षाः कुबेराद्याः। रक्षांसि विभीषणादीनि। गन्धर्वा हाहाहूहूप्रभृतयः। किन्नरा नरशरीराद्यः। पिशाचाः सत्त्वविशेषाः। कुबेरानुचरा गुह्यका माणिभद्रादयः। सिद्धा अणिमादिगुणोपेताः। भूता अधोमुखोर्ध्वमुखादयः सत्त्वाः॥

**असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः।**
**शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः॥ १२॥**

असुरादयो दश **असुरे**। अविद्यमाना सुरा येषां ते असुराः। दैत्य आदित्यवत्। दैतेय आदितेयवत्। दनौ जाता इति दनुजाः[1]। 'सप्तम्यां जनेर्डः' (३.२.९७) इति डः। दनोरपत्यानि दानवाः। अपत्यार्थे अण्। पूर्वे च ते देवाश्च पूर्वदेवाः। 'दिक्सङ्ख्ये संज्ञायाम्' (२.१.५०) इति समासः। सुरद्विष इति 'सत्सूद्विष—' (३.२.६१) इत्यादिना क्विप्॥

**सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।**
**समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः॥ १३॥**

१. 'नुजाता द' ङ. छ. पाठः.

* 'षिधु संराद्धौ' 'रध हिंसासंराद्धयोः' इति तु मुद्रितधातुपाठः।

**षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।**

**मुनीन्द्रः श्रीघनः शास्ता मुनिः**

सर्वज्ञादयोऽष्टादश **पूर्वबुद्धे** । सर्वं जानातीति सर्वज्ञः । सुष्ठु अपुनरावृत्त्या गतः सुगतः । प्रशस्ता अस्य बुद्धिरिति बुद्धः । प्रशंसायाम् अर्शआदित्वादच् । धर्मराज इति 'राजाहस्सखिभ्यष्टच्' (५. ४. ९१) इति समासान्तष्टच् । धर्मचक्रस्य प्रवर्तकत्वाद् धर्मराजः । यथा पुनरावृत्तिर्न भवति, तथा तेन प्रकारेण गत इति तथागतः । समन्तात् पुण्यसम्भाराद् ज्ञानसम्भाराच्च भद्रः श्रेष्ठः समन्तभद्रः ।

"माहात्म्यस्य समग्रस्य धैर्यस्य यशसः श्रियः ।
कामस्या(र्थ:थ) प्रयत्नस्य षण्णां भग इति श्रुतिः ॥"

ततो मतुपि भगवान् । क्लेशादिमारान् जयतीति मारजित् । लोकान् भुवनानि जितवानिति लोकजित् । क्विप् । जयतीति जिनः । इण्सिञ्जिदीङुष्यविभ्यो नक्' (उ० ६. २) इति नक् । षट्सु दानशीलक्षान्तिवीर्यध्यानप्रज्ञासु आद्यं ज्ञानमस्येति षडभिज्ञः । दश बलान्यस्य सन्तीति दशबलः । पूर्ववन्मत्वर्थेऽच् ।

"बुद्धिः क्षान्तिस्तथा वीर्यं ध्यानज्ञाने तथा कृपा ।
शीलोपेक्षे बलं दानं दशैतानि बलानि तु ॥"

अद्वयवादीति 'सुप्यजातौ णिनिस्ताच्छील्ये' (३. २. ७८) इति णिनिः । सत्त्वान् विनयति हितमनुशास्तीति विनायकः । 'ण्वुल्तृचौ' (३. १. १३३) इति कर्तरि ण्वुल् । मुनीनामिन्द्रः श्रेष्ठो मुनीन्द्रः । ज्ञानादिपुण्यसम्भारः श्रीः । तया घनः पूर्णः श्रीघनः । 'तृतीया' (२. १. ३०) इति योगविभागात् समासः । शास्ता उपदेष्टा । 'शासु अनुशिष्टौ' । [1]'तृन्तृचौ शंसिशासिशासिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २. ९४) इति तृन् । इट्पक्षे तु 'वयमपि च रे क्षत्रियाः शासितारः'

१. 'ज्ञा' ग. च. पाठः. २. 'दी सु' ग. ङ. छ. पाठः. ३. 'शसिंशा' घ., 'शंसिक्ष' ग. पाठः.

[1] तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' इति मुद्रितोणादिपाठः ।

।. अ. ३. श्लो. ३४) इति भवभूतिः । मुनिरिति। 'मन ज्ञाने' । 'मनेरुच्च' (उ० ४.१२४) इति इन् अकारस्योत्त्वं च ॥

**शाक्यमुनिस्तु यः ॥ १४ ॥**

**स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।**
**गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥ १५ ॥**

शाक्यमुन्यादयः सप्त शाक्यवंशावतीर्णे[1] मुनौ । शाकवनवासित्वात् शाक्यः । दिगादित्वाद् यत् । तथा च सुन्दरानन्दे[2]चरिते—

"शाकवृक्षप्रतिच्छन्नं वासं यस्माच्च चक्रिरे ।
तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति श्रुताः ॥"

शाक्यश्चासौ मुनिश्चेति शाक्यमुनिः । शाक्यसिंहः शाक्यश्रेष्ठः। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२.१.५६) इति समासः। सर्वार्थसिद्ध इति त्रिपदोऽयं बहुव्रीहिः । शुद्धोदनस्यापत्यं शौद्धोदनिः । 'अत इञ्' (४.१.९५) । शकन्ध्वादिः । गोतमस्यायं शिष्य इति गौतमः । 'तस्येदम्' (४.३.१२०) इत्यण्। सूर्यवंशजत्वादर्कबन्धुः। अर्कस्य बन्धुरर्कबन्धुः॥

**ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।**
**हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ॥ १६ ॥**

**धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।**
**स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृग्विधिः ॥ १७ ॥**

ब्रह्मादिर्विंशतिर्ब्रह्मणि ।

"बृहदस्य शरीरं यदप्रमेयं प्रमाणतः ।
बृहद् विस्तीर्णमित्युक्तं ब्रह्मा तेन स उच्यते ॥"

१. 'र्णेमु' क. घ. ङ. छ. पाठः. २. 'न्दने—' क. ग. पाठः

इति साम्बपुराणम् । 'बृह बृहि वृद्धौ' । *'बृंहेरं नलोपश्च' इति मनिन् अमागमश्च । आत्मना भवतीत्यात्मभूः । न तु कर्मवायुप्रेरणया । परमे स्थाने तिष्ठतीति परमेष्ठी[1] । †'परमे स्थः किच्च' इतीनिः । 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्यलुक् । 'स्थास्थिन्स्थूणामिति वक्तव्यम्' (वा० ८.३.९७) इति षत्वम् । पितॄणां प्रजापतीनामपि जनयितेति पितामहः । पितृशब्दात् 'पितृव्यमातुलमातामहपितामहाः' (४.२.३६) इति डामहच् । स च षिद् भवति । पितृजननी च तन्मूर्तिरित्यागमः । उपचाराद्धिरण्मयमण्डं हिरण्यम् । तथा च मनुः—

"तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्"

इति । तस्य गर्भो भ्रूण इति हिरण्यगर्भः । लोकस्य चतुर्दशभुवनस्येशो लोकेशः । सर्वं(वीः)दधातीति[2] धाता । धाञस्तृच् । विष्णोर्नाभिकमलस्थत्वादब्जयोनिः । कामक्रोधादिभ्यो द्रुह्यतीति द्रुहिणः । 'द्रुह जिघांसायाम्' । 'द्रुदक्षिभ्यामिनन्' (उ० २.५३) इत्यनुवर्तमाने 'अर्तेः किदिच्च' (उ०२.५४) इत्यनेन बहुलवचनादिनन् । स च किद् भवति । विरेचयतीति विरिञ्चिः । 'रिच वियोजनसंयमनयोः' इत्यस्माण्ण्यन्ताद्[3] 'अच इः' (उ० ४.१३९) इति इः । पृषोदरादित्वात् कुञ्जरवद् नुम् उपधाह्रस्वत्वं च । 'विरिञ्चो द्रुघणः सञ्ज्ञो[4] विरिञ्चिर्द्रुहिणो मत' इति शब्दार्णवः । सृजतीति स्रष्टा । तृन्नन्तः । प्रजानां सन्ततीनां पतिः प्रजापतिः । विदधातीति वेधाः । 'विधाञो वेधश्च' (उ० ४.२२६) इत्यसुन् वेधादेशश्च । विश्वसृगिति 'अन्येभ्योऽपि दृश्यते' (३.२.१७८) इति क्विप्[5] । 'क्विन्प्रत्ययस्य कुः' (८.२.६२) इति कुत्वम् । विदधातीति विधिः । बहुलवचनात् किः ॥

**विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।**
**दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ ॥**

१. 'ष्ठी । स्थः' घ. च. पाठः. २. 'ति विधा' क. घ. च. पाठः. ३. 'स्मात् अ' क. च. पाठः. ४. 'संज्ञो वि' ग., 'सजों वि' क. पाठः. ५. 'न्' क. ख. घ. ङ. छ. पाठः.

* 'बृंहेर्नोऽच्च', † 'परमे कित्' इति मुद्रितोणादिपाठः

दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥ १९

उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥

देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१ ॥

विश्वम्भरः कैटभजिद् विधुः श्रीवत्सलाञ्छनः ।

विष्ण्वादयश्चत्वारिंशद् विष्णौ । वेवेष्टीति विष्णुः । 'विषॢ व्याप्तौ' 'विषेः किच्च' (उ०३.३९) इति नुः । 'रषाभ्यां नो णः—'(८.४.१) इ णत्वम् । नराणां समूहो नारम् । 'तस्य समूहः' (४.२.३७) इत्यण् । तस्य यनं स्थानमिति नारायणः ।

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥"

इत्येवं वा व्युत्पत्तिः ।

"अथ नारायणो विष्णुरूर्ध्वकर्मा नरायणः"

इति संसारावर्तः । कलियुगे कृष्णगुणयोगात् कृष्णः । तथा च सङ्क्षिप्तभार हरिः—

*"सत्यत्रेताद्वापरयुगेषु सितरक्तपीतवर्णाभः ।
कृष्णः किल कलिकाले स एव पुरुषोत्तमो जयति[२] ॥"

१. 'तस्य कृतत्रे' क., 'गत्य त्रे' घ. च. पाठः. २. 'ति ॥ श्रीवि' ङ. छ. पाठः.

त्रेतायां त्रिपदार्पितत्रिभुवनो विष्णुः सुवर्णप्रभः ।
दूर्वाश्यामनिभः स रावणवधे रामो युगे द्वापरे
नित्यं योऽञ्जनसन्निभः कलियुगे वः पातु दामोदरः॥'
इति तु बालचरिते मङ्गलश्लोकः ।

विष्णुपुराणे—

"चाक्षुषस्यान्तरे देवो वैकुण्ठः पुरुषोत्तमः ।
विकुण्ठायामसौ जज्ञे वैकुण्ठैर्दैवतैः सह ॥"

इति । 'शिवादिभ्योऽण्' (४. १. ११२) । विष्टरस्तरुः । तथा च त्रिकाण्डे— 'विष्टरोऽस्त्री द्रुम' इति । तरुणा चाश्वत्थतरुरेव वाच्यः । तथा च भारते— 'अश्वत्थश्चास्मि वृक्षाणाम्' (गी. अ. १०. श्लो. २६) इति । तत्र श्रुत इति विष्टरश्रवाः । 'सर्वधातुभ्योऽसुन्' (उ० ४. १९०) इत्यसुन् । दाम्ना उदरे बद्धः दामोदरः । हृषीकमिन्द्रियं तस्येशो हृषीकेशः । 'हृषीकमीषद्रिपुवद्रिभूषणमि'ति षभेदः । हरिवंशे—

"यस्मात् त्वयैष दुष्टात्मा हतः केशी जनार्दन! ।
तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसि ॥"

इति स्मरणात् केशवः । तथा च हन्त्यर्थाद् वधेः 'अन्येभ्योऽपि दृश्यते' (वा० ३. २. १०१) इति डः । पृषोदरादित्वात् केशिन्शब्दस्यैकारस्याकारः नकारलोपश्च । यदोर्ज्यायान् पुत्रो मधुः, तद्वंशजत्वाद् माधवः । अत एवान्येऽपि विष्णुज्ञातयो माधवशब्देनोच्यन्ते । तथा च माघे—

"प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा "

इति । मा लक्ष्मीः, तस्याः धव इति वा व्युत्पत्तिः । पुण्डरीकमक्षि अस्येति पुण्डरीकाक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (५. ४. ११३) इति षच् । अनेन किल रुद्राय सहस्रपुण्डरीको बलिरुपनीतः । रुद्रेण तत्रैकमन्तर्धापितम् । तदानेन चक्षुरेकमुत्पाट्य पुण्डरीकस्थाने कृतमिति । तथा च महिम्नः स्तोत्रे—

"हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।"

इति । गां लब्धवानिति गोविन्दः । 'विदॢ लाभे' । 'गवादिषु विन्देः संज्ञायाम्'

१. 'रोऽग्रद्रु' क., 'रो द्रु' ग. ङ. ज. पाठः. २. 'ष' क. ङ. छ. पाठः. ३. 'म्रा' ग. पाठः. ४. 'घकाव्ये-' ङ. छ. पाठः. ५. 'श्व' ग. घ. ङ. च. छ. पाठः. ६. 'क्षुरुत्पा' च. पाठः.

(वा० ३. १. १३८) इति शः । 'शे मुचादीनाम्' (७. १. ५९) इति नुम् । कदापि न च्यवते क्षरतीत्यच्युतः । शार्ङ्गं विष्णुधनुः, तदस्यास्तीति शार्ङ्गी । 'अनुदात्तादेश्च—' (४. ३. १४०) इति विकारेऽञन्तादु 'अत इनि—' (५. २. ११५) इतीनिः । विषुशब्दो नानार्थेऽव्ययं निपातितः । विषु अञ्चतीति विष्वक् । क्विन् । 'अञ्चतेश्चोपसङ्ख्यानम्' (वा० ४. १. ६) इति ङीप् । विषूची समन्ततोगामिनी सेनास्येति विष्वक्सेनः । 'पूर्वपदात् संज्ञायामगः' (८.४. ३) इति सेनाया नो णत्वं 'पदव्यवायेऽपि' (८. ४. ३८) इति प्रतिषेधान्न भवति । विष्वगिति मूर्धन्यः षः । तथा च कप्फिणाभ्युदये यमकं —

"दर्शकाश्मकभूपालौ विष्वगारम्भरोषितौ ।
योद्धुं निविविशाते ताविष्वगारम्भरोपितौ ॥"

तत्रारम्भो मारणम् । इष्वगारं रणम् । भरोपितौ अतिशयेन तेजस्विनावित्यर्थः । समुद्रस्थान् जनानर्दितवानिति जनार्दनः । 'अर्द हिंसि हिंसायाम्' । नन्द्यादित्वाल्ल्युः । हरिवंशे —

"ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ।
उपेन्द्र इति कृष्ण ! त्वां तथा गास्यन्ति देवताः ॥"

इन्द्रावरजः इन्द्रकनिष्ठः । चक्रं पाणावस्येति चक्रपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' (वा० २. २. ३६) इति परनिपातः । वासुदेव इति । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४. १. ११४) इत्यण् । बलिवञ्चनाय स्वर्गमर्त्यपातालेषु त्रयो विक्रमा अस्येति त्रिविक्रमः । देवकस्यापत्यमिति देवकिः । 'अत इञ्' (४. १. ९५) । 'संज्ञापूर्वको विधिरनित्य' इति वृद्ध्यभाव इति वर्णदेशना । ततश्च स्त्रियाम् 'इतो मनुष्यजातेः' (४. १. ६५) इति ङीप् । देवकी । तस्या नन्दनो देवकीनन्दनः । शूरो नाम यादवो वसुदेवपितामहः । तद्वंशजत्वाच्छौरिः । बाह्वादेराकृतिगणत्वादिञ् । 'शर्वः शिवः केशवः शौरिरि'ति शभेदः ।

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" (अ०. १५. श्लो. १८)

१. 'र्दि' ङ. छ., 'ष्फि' क. ग. पाठः. २. 'त्रि' ग. घ. ङ. च. पाठः. ३. 'र्णो' ङ. छ. पाठः. ४. 'वा' क. ख. ङ. छ. पाठः.

इति भगवद्गीता। वनं पुष्पं, तन्मालायोगाद् वनमाली। व्रीह्यादित्वादिनिः। बलिध्वंसीति। 'सुप्यजातौ णिनिस्ताच्छील्ये' (३. २. ७८) इति णिनिः। सकारस्य यथि अनन्तर्भावात् परसवर्णोऽनुस्वारस्यायुक्त एव। स्वेनैव रूपेणानुस्वारोऽवतिष्ठत इति सर्वत्रैव बोद्धव्यम्। कंसारातिः कंसस्य शत्रुः। अक्षशब्देनेन्द्रियमुच्यते। अधइन्द्रियं पादः। ताभ्यां जातः अधोक्षजः। 'अन्येभ्योऽपि दृश्यते' (वा० ३. २. १०१) इति डः। तदुक्तमेकादशेन्द्रियपरिगणने विष्णुपुराणे--

"पायूपस्थं करौ पादौ वाक् च मैत्रेय! पञ्चमी।"

इति। विश्वं बिभर्तीति विश्वम्भरः। 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' (३. २. ४६) इति खच्। 'अरुर्द्विषदजन्तस्य मुम्' (६. ३. ६७) इति मुम्। कैटभजिदिति। 'सत्सूद्विष '(३. २. ६१) इत्यादिना क्विप्। 'ह्रस्वस्य पिति कृति तुक्' (६. १. ७१)। असुरान् विध्यतीति विधुः। 'व्यध ताडने'। §'पृभिदिव्यधिगृधिधृषिहृशिभ्यः' (उ० १. २३) इति कुः। वक्षःस्थले महापुरुषरूपलक्षणं श्वेतरोमावर्तविशेषः श्रीवत्सः। स एव लाञ्छनमस्येति श्रीवत्सलाञ्छनः॥

**वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः॥ २२॥**

वसुदेवद्वयं विष्णुपितरि। वसुभिर्दीव्यतीति वसुदेवः। पचाद्यच्। अस्मिन् जाते आनकाः पटहा दुन्दुभयश्च वादिता इत्यानकदुन्दुभिः। नृत्यत्वादेकवद्भावान्नपुंसकत्वे प्राप्ते लोकाश्रयत्वाल्लिङ्गस्येत्यत्र सर्वम्॥

**बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः।**
**रेवतीरमणो रामः कामपालो हलायुधः॥ २३॥**

१. 'सश' क. ग. घ. च. पाठः. २. 'सा' घ. च. पाठः. ३. 'गश्चे' क. ख. घ. ङ. छ. पाठः. ४. 'स्य' ग. पाठः.

§ 'पृ.........धृषिभ्य' इति मुद्रितोणादिपाठः।

**नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।**
**सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ २४ ॥**

बलभद्रादयः सप्तदश बलभद्रे । बलं भद्रं श्रेष्ठमस्येति बलभद्र । प्रलम्बं-मसुरं हतवानिति प्रलम्बघ्नः । देवत्वाद् 'अमनुष्यकर्तृके च' (३.२.५३) इति टक् । 'गमहन —' (६.४.९८) इत्यादिना उपधालोपः । 'हो हन्तेः—' (७.३.५४) इति कुत्वं घः । बलयोगाद् बलः । अर्शआदित्वाद् अच् । ततो बलश्चासौ देवश्चेति बलदेवः । 'विशेषणं विशेष्येण बहुलम्' (२.१.५७) इति समासः । रमयति मोदयति रूपमस्येति रामः । 'रमु क्रीडायाम्' । 'ज्वलितिकसन्तेभ्यो णः' (३.१.१४०) । उदात्तोपदेशत्वाभावादुपधावृद्धिः । कामम् इच्छां पालयतीति कामपालः । 'पृ पालनपूरणयोः' । 'कर्मण्यण्' (३.२.१) । रौहिणेय इति । 'स्त्रीभ्यो ढक्' (४.१.१२०) । तालो वृक्षविशेषः. स एव अङ्कः चिह्नमस्येति तालाङ्कः । तदुक्तं साम्बपुराणे ध्वजनिर्णये —

"तालस्तालाकृतिः कार्यो मकरो मकराकृति

'मसी परिमाणे' । § 'भूमिमस्योरुच' इति कलप्रत्ययः । मुसलः । तद्योगाद् मुसली । एवं हली ।

"गर्भसङ्कर्षणात् सोऽथ लोके सङ्कर्षणः स्मृतः"

इति हरिवंशः । सपूर्वात् कृषेः नन्द्यादिल्युः । सीरपाणिः दन्त्यादिः । 'सितसीर-सायका' इति सभेदः । कालिन्दी नदी । तद्भेदनात् कालिन्दीभेदनः । नन्द्यादिल्युः । बलयोगाद् बलः । मत्वर्थीयोऽच् ॥

**मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।**
**कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥ २५ ॥**

१. 'मजनह' क. ख. ग. घ. च. पाठः. २ 'म इच्छा ते पा' ङ. छ. पाठः. ३. 'वं दन्त्यसवान् । ग' ङ. छ. पाठः. ४. 'शे' ङ. छ पाठः. ५. 'णिः । सि' ङ. छ. पाठः.

§ इदं मद्रितोणादौ न दृश्यते ।

**सम्बरारिर्मनसिजः कुसुमेषुरनन्यजः।**
**पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः॥ २६॥**
**ब्रह्मसूर्विश्वकेतुः स्यात्**

मदनादय एकविंशतिः **कामदेवे** । मदयतीति मदनः। नन्यादिल्युः। 'मदी हर्षे'। माद्यतीति मत्। क्विप्। मथ्नातीति मथः। पचाद्यच्। मच्चासौ मथश्चेति मन्मथः। विरहिणं मारयतीति मारः। पचादिः। प्रकृष्टं द्युम्नं बलमस्येति प्रद्युम्नः। निर्जरवत् समासादिः। मत्स्यजातित्वान्मकर एव मीनः। स एव केतनमस्येति मीनकेतनः। कं ब्रह्माणं दर्पयतीति कन्दर्पः। 'गमश्च' (३. २. ४७) इति चकारात् खच्। यतो ब्रह्मापि स्वसुतां चकमे। दर्पयतीति दर्पकः। त्रिनयनेन भस्मीकृतत्वादनङ्गः। कामयते सुरतेच्छामुत्पादयतीति कामः। पचाद्यच्। सम्मोहनोन्मादनतापनशोषणस्तम्भनाख्याः पञ्च शरा अस्येति पञ्चशरः। 'स्मृ आध्याने'। स्मरयतीति स्मरः। अच्। सम्बरस्यारिः सम्बरारिः। एवं दन्त्यादिः। तथाहि साहित्यकल्पतरुणा श्रीपोल्योकेन[1](?) वासनामञ्जर्यां भणितं—

"स जयति मानसजन्मा रसवन्मारो मुनरनङ्गाख्यः
रुद्रस्य सम्बरारिः पुष्पवतीनां कुसुमधन्वा॥"

इति।

"क्लीबं तु सम्बरं नीरे बौद्धव्रतविशेषयोः।
विशेषे पुंसि दैत्यस्य मत्स्यस्य हरिणस्य च॥"

इति दन्त्यादौ रभसोऽपि।

'शम्बरो हरिणे दैत्ये शम्बरं सलिले स्मृतम्'

इति तालव्यादावजयः। तदा च देवानां शं कल्याणं वृणातीति शम्बरः। 'शमि-धातोः संज्ञायाम्' (३. २. १४) इत्यच्। वर्णदेशनाकृता तु पक्षद्वयमपि दर्शितम्। शृङ्गाररूपेण मनसि जायत इति मनसिजः। 'सप्तम्यां जनेर्डः' (३.२.९७)। 'तत्पुरुषे कृति बहुलम्' (६. ३. १४) इत्यलुक्। नान्यस्मिन् भूतग्रामे जातो-

१. 'ल्या' ख. छ., 'कन' च

ऽनन्यजः । 'सप्तम्यां जनेर्डः' (३. २. ९७) इति डः । पुष्पधन्वेति । 'वा संज्ञायाम्' (५. ४. १३३) इत्यनङ् । पक्षे पुष्पधनुः सान्तः । ब्रह्म तपः सुवति प्रेरयतीति ब्रह्मसूः । 'अन्येभ्योऽपि —'(३. २. १७८) इति क्विप् । विश्वव्यापी केतुर्द्युतिरस्येति विश्वकेतुः । तथा च रभसः —

"पताकायां द्युतौ केतुर्ग्रहोत्पातादिलक्ष्मसु"

इति । केचिद् ब्रह्मस्वादिचतुष्टयमनिरुद्धस्य नामेत्याहुः । तथा च वृद्धामर कोशः —

"अनिरुद्धो विश्वकेतुर्ब्रह्मसूरप्युषापतिः"

इति । रुद्रदासेन प्रश्नोत्तरे कामदेव एवोक्तः —

"कं वदन्ति तपोभङ्गकारिणं यतिनां जनाः ।
न स्वीकुर्वन्ति कं सन्तः सर्वधर्मविशारदाः ॥
ब्रह्मस्वम्"

अतो द्वयमेव दृश्यते ॥

## अनिरुद्ध उषापतिः ।

अनिरुद्धद्वयमनिरुद्धे । युद्धे केनापि न निरुद्ध इत्यनिरुद्धः ।

"उषा बाणस्य पुत्री स्यादनिरुद्धगृहा उषा"

इति जयपोर्व्यायिकः(?) ॥

## लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥ २७ ॥

लक्ष्मीषट्कं लक्ष्म्याम् । नीतिशालिनं पश्यतीति लक्ष्मीः । 'लक्ष दर्शनाङ्कनयोः' । 'लक्षेर्मुट् च' (उ० ३. १६१) इति ईप्रत्ययः । श्रीरिति । 'श्रिञ् सेवायाम् ।' 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' (वा० ३. २. १७८) इति क्विब्दीर्घत्वसम्प्रसारणनिषेधाः । अङ्यन्तत्वात् सोर्लोपाभावः । तथा च प्रयोगः

१. 'पञ्चम्यामजातौ ड' क. पाठः. २. 'म्यामजातौ ड' ग. घ.॰च. पाठः. ३. 'तीति' च. पाठः. ४. 'म्या' ख. घ. पाठः.

"हे लक्ष्मीः! स्या दरिद्राणां मा धीः! संस्पृश मे वपुः।
तन्त्रीः! कलामृतं कूज तन्द्रीः! संश्रय चक्षुषी॥"

इति।

"मातर्लक्ष्मि! भजस्व कञ्चिदपरं मत्काङ्क्षिणी मा च भूः"

इत्यादि 'कृदिकाराद्—' (ग० ४. १. ४५) इत्यादिना साधितेति मैत्रेयः। एवं श्रीशब्दोऽपि। पद्मयोगाद् पद्मा। मत्वर्थीयोऽच्। एवं कमला। एतयोरुभयोरुपादानादन्यपद्मपर्यायेणानभिधानं सूचितम्॥

**शङ्खो लक्ष्मीपतेः पाञ्चजन्यः**

लक्ष्मीपतेः शङ्खचक्रगदाखड्गमणिषु यथाक्रममेकैकं पाञ्चजन्यादिकम्। समुद्रे तिमिरूपचारी पञ्चजनो नामासुर आसीत्। तदस्थिजत्वात् पाञ्चजन्यः। 'बहिर्देवपञ्चजनेभ्यः' (वा० ४. ३. ५८) इत्युपसङ्ख्यानाञ्ञ्यः। 'शमु उपशमे'। 'शमेः खः' (उ० १. १०७) शङ्खः। नित्यं परसवर्णः। अवश्यमेव संज्ञाशब्दानां सदर्थेन चासदर्थेन च व्युत्पत्तिः कार्या, वायुतैलपायिकादिवत्। एतत् तु सर्वत्रोन्नेयम्॥

**चक्रं सुदर्शनम्।**
**कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः॥ २८॥**

चक्रमिति [†]'करोतेर्द्वे च' इति कृञो रन् द्वित्वं च। भक्तैः सुखेन दृश्यत इति सुदर्शनम्। '(भाषायां) शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः' (वा० ३. ३. १३०) इति खलपवादको युच्। नपुंसकलिङ्गमेतत्। तथा च बाणयुद्धे—

"पुनः कराग्रं कृष्णस्य चक्रं प्राप्त सुदर्शनम्"।

इति। कौ पृथिव्यां मोदत इति कौमोदकी। 'मुद हर्षे'। 'बहुलमन्यत्रापि' इति

१. 'दिसाध्यमिति' ङ. छ. पाठः. २. 'स्या' च. पाठः.

† इदं मुद्रितोणादौ न दृश्यते।

वुन् सप्तम्या अलुक् । देवास्त्रत्वाद् गदतीति गदा । पचाद्यच् । नन्दयतीति नन्दकः । 'आशिषि च' (३. १. १५०) इति वुन् । 'स्तुभ स्तम्भे' । कोः स्तोभके इति कुस्तुभो विष्णुः । इगुपधात् कः । अस्माच्छैषिकोऽण् । कौस्तुभः ॥

**गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।**
**नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥**

गरुत्मदादिनवकं गरुडे । गरुत् पक्षोऽस्यास्तीति गरुत्मान् । मतुप् । 'अयवादिभ्यः' (८. २. ९) इति वत्वप्रतिषेधः । गरं विषं हन्तीति[3] गरुडः । पृषोदरादिः । डप्रत्ययः डकार उकारश्च । तृक्षस्यापत्यमिति तार्क्ष्यः । गर्गादित्वाद् यञ् । बहुत्वे 'यञञोश्च' (२. ४. ६४) इति लुकि तृक्षाः । रौहिणेयवद् वैनतेयः । कनकरुचित्वात् शोभनपक्षः सुपर्णः । 'अश भोजने' । तालव्यान्तः । नन्द्यादिः । पन्नगाशनः ॥

**शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।**
**ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः ॥ ३० ॥**

**भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।**
**मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३१ ॥**

**उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।**
**वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३२ ॥**

**कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।**
**हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥**

**गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।**
**व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥ ३४ ॥**

१. 'षि वु' क. ख. घ. ङ. च. छ. पाठः. २. 'कः कु' ग. पाठः. ३ 'हरती' ग. घ. ब. पाठः. ४. 'त्यं ता' ङ. छ. पाठः.

शम्भ्वादयोऽष्टचत्वारिंशच्छिवे। शं कल्याणं भूतवान् लब्धवानिति शम्भुः। 'भू प्राप्तावात्मनेपदी' इति साधुः। 'डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यानम्' (वा० ३. २. १८०) इति डुः। ईष्टे प्रभवति। 'ईश ऐश्वर्ये'। इगुपधलक्षणः कः। ईशः। हरिवंशे

"पालयामि पशून् यस्मात् सृजामि च यदृच्छया
तेषां च पतिरेवाहं तस्मात् पशुपतिः स्मृतः॥"

शिवं कल्याणम्। तद्योगाच्छिवः। मत्वर्थीयोऽच्। शूली। 'अत इनिठनौ' (५. २. ११५) इति इनिः। महेश्वर इति। 'सन्महद्—' (२. १. ६१) आदिना समासः। 'आन्महतः समानाधिकरणजातीययोः' (६. ३. ४६) इत्यात्वम्। ईशितुं शीलमस्येति ईश्वरः। 'ईश ऐश्वर्ये'। 'स्थेशभासपिसकसो वरच्' (३. २. १७५)। प्रलये शृणातीति शर्वः। 'शॄ हिंसायाम्'। 'कॄगॄशॄदॄभ्यो वः' (उ० १. १६१) इति वः। ऐश्वर्ययोगाद् ईशानः। 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३. २. १२९)। शं कल्याणं करोतीति शङ्करः। 'शमि धातोः संज्ञायाम्' (३. २. १४) इत्यच्। भूतस्य प्रमथस्येशो भूतेशः। गजासुरवधे खण्डाः परशवोऽस्येति खण्डपरशुः। 'आङ्परयोः खनिशॄभ्यां डिच्च' (उ० १. ३४) इति कुः।

†"खण्डपरशुः परशुरामे शङ्करे चूर्णलेपिनि"

इति चतुरक्षरे[1] विश्वप्रकाशः। तदा पृषोदरादिः। गिरेः कैलासस्येशो गिरीशः। गिरौ शेत इति गिरिशः। छान्दसा अपि भाषायां प्रयुज्यन्त इत्यतो 'गिरौ डश्छन्दसि' (वा० ३. २. १५) इति डः। सुखयोगाद् मृडः। 'मृड सुखने'। इगुपधलक्षणः कः। मृत्युंजय इति। 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' (३. २. ४६) इति खच्। कृत्तिवासा इति। 'अत्वसन्तस्य चाधातोः' (६. ४. १४) इति दीर्घः। प्रलयकाले रौद्ररसाकस्थित उद्धतः सर्वो-

१ 'रेऽपि वि' क. ख. ङ. छ. पाठः.

† 'खण्डपर्शुः पर्शुराम........' इति मुद्रितविश्वप्रकाशपाठः।

परि वर्तत इति उग्रः । 'उच समवाये' । 'ऋज्रेन्द्राग्रवज्र —' (उ० २. ३१) इत्यादिना औणादिको रन् गश्चान्तादेशो गुणाभावश्च निपात्यते । कालकूटभरणजा श्रीः शोभा कण्ठे अस्येति श्रीकण्ठः । अत एव शितिः कालः कण्ठोऽस्येति शितिकण्ठः । लोकाचारविपरीतत्वाद् वामः । 'टुवम उद्गिरणे' । घञ् । 'नोदात्तोपदेश —' (७. ३. ३४) इत्यादिना वृद्ध्यभावे प्राप्ते ‡'न कमिवमिचमाम्' इति प्रतिषेधः । वामश्चासौ देवश्चेति वामदेवः । एवं महादेवोऽपि । रविचन्द्राग्नित्रिविधरूपत्वाद् विरूपाण्यक्षीण्यस्येति विरूपाक्षः । अग्निरेव रेतोऽस्येति कृशानुरेताः । 'जट सङ्घाते' । 'सर्वधातुभ्य इन्' (उ० ४. ११८) । धुरः त्रैलोक्यचिन्ताभारस्य जटिः सङ्घातोऽस्मिन्निति धूर्जटिः ।

"नीलं येन ममाङ्गं तु रसाक्तं लोहितत्विषम् ।
नीललोहित इत्येवं तेनाहं परिकीर्तितः ॥"

प्रलये कृत्स्नं हरतीति हरः । हृञः पचाद्यच् । भर्ग इति । 'भ्रस्ज भृजी भर्जने' । पचाद्यच् । न्यङ्क्वादित्वात् कुत्वम् । भर्ग्य इति पाठे 'ऋहलोर्ण्यत्' (३. १. १२४) । कुत्वम् । त्रीण्यम्बकानि नेत्राण्यस्येति त्र्यम्बकः । दक्षमहर्षियज्ञभञ्जकत्वात् क्रतुध्वंसी । नान्तः । गङ्गाधरणार्थं व्योमव्यापी केशो जटाभागीभूतोऽस्येति व्योमकेशः । अस्माद् रजोगुणापन्नाद् विश्वं भवतीति भवः । बिभेत्यस्मान्महाभैरवरूपात् त्रैलोक्यमिति भीमः । 'भियः *षुक् च' (उ०. १. १४३) इति मक् । प्रलयेऽपि तिष्ठतीति स्थाणुः । 'स्था णुः' (उ०. ३. ३७) इति णुप्रत्ययः । गणदेवतायां रुद्र उक्तः ॥

१ 'ह' ग. घ. च. पाठः, 'भरजा' ङ. छ. पाठः. २. 'स्यामि' क. ख. ग. च. पाठः. ३. 'व' ख. पाठः. ४. 'ति त्रद्विम' ङ. छ. पाठः. ५. 'वः । र' च. पाठः ६. 'पाण्य' च. पाठः. ७. 'शुक्रमस्य' क. ग. घ. च, 'शुक्रमस्ये' ख. पाठः. ८ 'स' ग. घ. पाठः. ९. 'तृ । त्री' ग. घ. पाठः. १०. 'स्येप' क. ङ. छ. पाठः. ११. 'स्थाणुः' ख. ग. घ. च. पाठः.

‡ 'अनाचामिकमिवमीनाम्' (वा. ७. ३. ३४) इति वार्त्तिकपाठे दृश्यते । *'षुग्वा' इति मुद्रितोणादिपाठः.

**कपर्दोऽस्य जटाजूटः**

**महेश्वरजटाजूटे** कपर्दः। 'पर्व पूरणे'। सम्पदादिक्विप्। 'राल्लोपः' (६. ४. २१) इति वस्य लोपः। कस्य गङ्गाजलस्य पूरणेन दायति शुध्यतीति कपर्दः। 'सुपि' (३. २. ४) इति योगविभागात् कः। दायतीति 'दैप् शोधने'। जूटो बन्धः॥

**पिनाकोऽजगवं धनुः।**

पिनाकद्वयं **शिवधनुषि**। त्रिपुरदाहे शरानलज्वालाजालैर्नाकमपिहितवानिति पिनाकः। अपिरेव पिहिर्नाक्रियावाची। शकन्ध्वादित्वाद् अकारस्य पररूपत्वम्। अथवा पातीति पिनाकः। 'पिनाकादयश्च' (उ० ४. १५) इति आकप्रत्ययः इत्वं नुमागमश्च निपात्यते। अजगवम्। अजकवमिति वा। 'गाण्ड्यजकात् संज्ञायाम्' (५. २. ११०) इति मत्वर्थीयो वः। अजो विष्णुः। को ब्रह्मा। ज्योत्स्नायणि 'स्थाणोर्धनुराजकवम्' इति नाममालायां दीर्घादिश्च।

"धनुरजगवं पिनाकं पुंसि च वृषभेऽजकावमपि पुण्यम्"

इति संसारावर्तः। तथा च 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः॥

**प्रमथाः स्युः पारिषदाः**

**शिवपार्श्वस्थाः** प्रमथा उच्यन्ते। रुद्रद्वेषिणः प्रमथन्तीति प्रमथाः। 'मथे विलोडने'। पचाद्यच्। पारिषदा इति। 'तत्र साधुः' (४. ४. ९८) इत्यण्। ते च चण्डेश्वरनन्दिमहाकालभृङ्गिप्रभृतयः॥

**ब्राह्मीत्याद्यास्तु मातरः॥ ३५॥**

१. 'वकारस्य' ङ. छ. पाठः. २. 'यामदां' घ. पाठः. ३. 'र्घश्च' ङ. छ. पाठः. ४. 'पूर्णम' ङ. छ. पाठः. ५. 'णं' क. ख. पाठः. ६. 'ङ्गिरिटिप्र' ग. पाठः.

ब्राह्मीत्याद्यां मातृगणे । ब्रह्मादिदेवानां स्वेदान्निर्गतत्वाच्छक्तिदेवताः सप्त ।

"ब्राह्मी च वैष्णवी चैन्द्री रौद्री वाराहिका तथा ।
कौबेरी चैव कौमारी मातरः सप्त कीर्तिताः ॥"

ब्रह्मण इयं ब्राह्मी । 'तस्येदम्' (४. ३. १२०) इत्यण् । 'ब्राह्मोऽजातौ' (६. ४. १७१) इति निपातनात् टिलोपः । तथा चाभिनन्दः—

"ब्राह्मि! वैश्रवणि! वैष्णवि! रौद्रि!
स्कान्दि! चान्द्रमसि! चण्डि! नमस्ते ।"

'ब्रह्माण्याद्यास्तु मातर' इति पाठे ब्रह्म अणतीति ब्रह्माणी । अण रण भणेति शब्दार्थात् 'कर्मण्यण्' (३. २. १) ॥

**विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।**

विभूतित्रयमणिमाद्यष्टशक्तिषु ।

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशिता वशिता चैव तथा कामावशायिता ॥"

तत्राणुत्वम् अणिमा, येन सूक्ष्मो भूत्वा विचरति । लघिमा लघुत्वं, येन वायोर्लघुतरो भवति । येनेप्सितप्राप्तिर्भवति, सा प्राप्तिः । प्राकाम्यम् इच्छानभिघातः । महत्त्वं महिमा, येन भुवनेऽपि न सम्माति । ईशिता प्रभुता, येन चरस्थावरभूतान्यादेशकारीणि भवन्ति । वशित्वं वशिता, येन स्वतन्त्रश्चरति । कामेनेच्छया अवशायितुं शीलमस्येति तद्भावः कामावशायिता । अनेकार्थत्वाद् धातूनां शीङिह तिष्ठत्यर्थे । भूतिरित्युक्त्वा विभूतिग्रहणमन्योपसर्गनिवृत्त्यर्थम् । विभूतिभूत्योर्भवतेः स्त्रियां भावे 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (३. ३. ९६) इति क्तिन् ॥

१. 'द्या रुद्रमारण' ड. छ., 'द्या ब्र' ग. घ. च. पाठः. २. 'इयं' ख. ङ. च. छ. पाठः. ३. 'पि स न' ग. घ. पाठः. ४. 'कराणि' ग. घ. च. पाठः.

**उमा कात्यायनी गौरी काली हैमवतीश्वरा ॥ ३६ ॥**

**शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला।**
**अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ॥ ३७ ॥**

उमादयः सप्तदश **गौर्याम्**।

"उ मेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम।" (कुमा० स. १. श्लो. २६)

इति व्युत्पत्त्या उमा। कतस्यापत्यमिति गोत्रे गर्गादित्वाद् यञ्। ततः स्त्रियां 'सर्वत्र लोहितादिकतन्तेभ्यः' (४. १. १८) इति ष्फक्। षित्वाद् ङीषि कात्यायनी। गौरादिङीषि गौरी। अवस्थाभेदेन काली। 'जानपदकुण्डगोणस्थलभाजनागकाल—' (४. १. ४२) इत्यादिना ङीप्। हैमवतीति। 'तस्यापत्यम्' (४. १. ९२) इत्यण्। ईशेः वरजन्तात् टापि ईश्वरा। तथा च भारविः—'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' (किरा०स.५.श्लो. ३३) इति। ईश्वरीत्यपि भवति। तत्स्वामिपर्याये वक्ष्यामः। शक्तिशक्तिमतोरभेदात् शिवशक्तिरेव शिवा। भवस्य स्त्री भवानी। पुंयोगे 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' (४. १. ४९) इति ङीपानुकौ। एवं शर्वाणी रुद्राणी मृडानी। सर्वाणि मङ्गलान्यस्यामिति सर्वमङ्गला। तपस्यन्त्यानया स्वयं विशीर्णमपि पर्णमपरिगृहीतमित्यपर्णा। जातेरित्यनुवृत्तेः 'पाककर्ण—' (४. १. ६४) इत्यादिना न ङीष्। पर्वतस्यापत्यं पार्वती। 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप्। सर्वे गत्यर्था ज्ञानार्था इति 'गमॢ गतौ' इत्यतो दुःखेन ज्ञायत इति दुर्गा। 'सुदुरोरधिकरणे' (वा०३. २. ४८) इति डः। अतिकोपनत्वात् चण्डिका। 'चडि कोपे'। 'बह्वादिभ्यश्च' (४. १. ४५) इति ङीप्। ततो वा 'संज्ञायाम्' (५.३.७५) इति कन्। 'केऽणः' (७. ४. १३) इति ह्रस्वत्वम्। जगन्मातृत्वाद् अम्बिका॥

१. 'कृ' च. पाठः. २. 'त्यी' च. पाठः. ३. 'तः' क. ख. ग. च. पाठः. ४. 'येऽपि व' ङ. छ. पाठः. ५. 'र्ण परिहृत' ग. घ. ङ. छ. पाठः. ६. 'इत्य' क. ख. घ. ङ. च. छ. पाठः.

**विनायको विघ्नराजद्वैमातुरगणाधिपाः ।**
**अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८ ॥**

विनायकाष्टकं **विनायके** । विघ्नानां विशिष्टो नायकः विनायकः । विघ्नराज इति । 'राजाहःसखिभ्यष्टच्' (५. ४. ९१) इति समासान्तः । दुर्गया चामुण्डया च पालितत्वाद् द्वयोर्मात्रोरपत्यमिति द्वैमातुरः । 'मातुरुत् सङ्ख्यासंभद्रपूर्वायाः' (४. १. ११५) इत्यण् उत्वं च । गणाः प्रमथाः । तेषामधिपो गणाधिपः । कार्त्तिकेयेनोत्पाटितदन्तत्वाद् एकदन्तः । हे महेश्वरसमीपे रम्बते अनेकार्थत्वाद् धातूनां तिष्ठतीति हेरम्बः । 'रबि शब्दे' । पचादिः । 'तत्पुरुषे कृति बहुलम्' (६. ३. १४) इत्यलुक् ॥

**कार्त्तिकेयो महासेनः शरजन्मा षडाननः ।**
**पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥**
**बाहुलेयस्तारकजिद् विशाखः शिखिवाहनः ।**
**षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥**

कार्त्तिकेयादयः सप्तदश **कार्त्तिकेये** । कृत्तिकानामपत्यं कार्त्तिकेयः । 'स्त्रीभ्यो ढक्' (४. १. १२०) । महती सेना अस्येति महासेनः ।

"मतिराविष्कृतानेन महती राजसेनया ।
तामेवमुक्त्वा समयं निन्दि(तां ? ना) राजसेन या ॥"

इति कीचकवधः । 'स्कन्दिर् गतिशोषणयोः' । पचाद्यचि स्कन्दः । सेनां नयति प्रापयतीति सेनानीः । क्विप् । पुरा किल तारकोपप्लुतानां देवानां रक्षणाय शिवेन स्वकं दहनरूपं बीजं वह्निमुखे संभृतम् । तेनापि तत् कृत्तिकासु सञ्चारितम् । ताश्च देवागतगर्भभरसत्रपाः शरवणं प्रविश्य प्रसूताः । तेनाग्निभूरित्याख्या तस्य । 'अन्येभ्योऽपि दृश्यते' (३. २. १७८) इति

१. 'दिति द्व' च. पाठः. २. 'र्गिति ढक । म' ख. पाठः. ३. 'ख्यास्य' ख. ङ. छ. पाठः.

क्विप्। अत एव शरजन्मापि। गूहति गोपायत्यात्मसैन्यमिति गुहः। 'गुहू संवरणे'। इगुपधलक्षणः कः। बहुलाः कृत्तिकाः। तासु जातो बाहुलेयः। 'स्त्रीभ्यो ढक्[1]' (४. १. १२०)। विशाखाभ्यां युक्तः कालः। 'नक्षत्रेण युक्तः कालः' (४. २. ३) इत्यण्। तस्य 'लुबविशेषे' (४. २. ४) इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' (१. २. ५१) इति प्रकृतिलिङ्गसं(ख्याः? ख्ये)। ततो विशाखयोर्जात इति 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' (४. ३. १६) इत्यण्। तस्य 'श्रविष्ठाफल्गुन्यनुराधा—' (४. ३. ३४) इत्यादिना लुक्। 'लुक् तद्धितलुकि' (१. २. ४९) इति स्त्रीप्रत्ययस्य लुक्। कृत्तिकाः षट् तारकाः। तथा च ज्योतिषे अश्विन्यादितारकामाने शिखण्डः—

"रसेन्द्रियानलशशिविषयगुणर्तुपञ्चयमपक्षाः"

इत्यादि। अतः षण्णां मातॄणामपत्यं षाण्मातुरः। द्वैमातुरवत्[2]।

"यस्मात् क्रीडति सोऽत्यर्थं कुमारस्तेन कीर्तितः"

इति। 'कुमार क्रीडायाम्'। पचाद्यच्। सदा बालत्वाद् वा कुमारः। तथा च स्कान्दपुराणे—

"पुत्रस्ते भविता देवि! महायोगबलान्वितः।
सदा बालोऽथ सुभगो धर्मज्ञो धर्मवत्सलः॥"

न पुनरनूढतया कुमारः। यतोऽनेन देवसेना विवाहिता। तथा च वायुपुराणे—

"शतक्रतोः रूपवती देवसेनेति वै सुता।
सा महेन्द्रेण रत्यर्थं भार्यात्वेनोपपादिता॥
उदीर्णसेनापतये महासेनाय सुव्रते!।"

इति[3]। अथवा 'कमु कान्तौ' *'कमेरुच्चोपधायाः' (उ० ३ १३८) इति बाहुलक आरन्प्रत्ययः उकारश्चोपधायाः। क्रौञ्चमसुरं दारितवानिति क्रौञ्चदारणः। 'दॄ विदारणे'। नन्द्यादित्वा[4]ल्युः।

1. 'गिति ढक्'। ख. पाठः. 2. 'ता। इ' ख. ङ. छ. पाठः. 3. 'ति। क्रौं' क. ग. घ. ङ. च. छ. पाठः. 4. 'दित्वाद् ल्युः' क. ख. घ. च. पाठः.

*'कमेः किदुच्चोपधायाः' इति मुद्रितोणादिपाठः।

इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः ।
वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥ ४१ ॥

जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥

वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥

संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।
आखण्डलः सहस्राक्ष ऋभुक्षाः

इन्द्रादयः पञ्चत्रिंशद् इन्द्रे । 'इदि परमैश्वर्ये' । उग्रवद् रः । इन्द्रः । मरुतो देवाः अस्य सन्तीति मरुत्वान् । मतुप् । 'झयः' (८. २. १०) इति वत्वम् । मघवेति । 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्—' (उ० १. १६५) इत्यनेन 'मह पूजायां'† कनिन्प्रत्ययो हकारस्य घकारोऽवमागमश्च निपातितः । वेवेष्टीति विट् । 'विष्लृ व्याप्तौ' । 'अन्येभ्योऽपि—' (३. २. १७८) इति क्विप् । व्यापकम् ओजः अस्येति विडौजाः । पृषोदरादित्वाद् ओकारस्यौत्वमिति वर्णदेशना । 'विडोजा विडौजा अपी'ति बुद्धबन्धुः । पाकं वृत्रासुरभ्रातरं शासितवानिति पाकशासनः । 'शासु अनुशिष्टौ' । नन्द्यादिः । वृद्धवचनं श्रुत्वा व्यवहरतीति वृद्धश्रवाः । असुन्नन्तः । वृद्धोपसेवीत्यर्थः । शोभनो नासीरोऽग्रेसरोऽस्येति सुनासीरः । द्विदन्त्यः । तथा च विदग्धे—

"पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः ।
क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥
सुनासीरः"

१. 'द इ' ग. घ. च. पाठः. २. 'जौ' ख. ङ. छ. पाठः.

† 'इत्यस्माद्' इति पूरणीयम् ।

"मुर्वीं वहन् स दानवलक्ष्मीकृत्यां गदां शुनासीरेण।
अनुबलितोऽञ्जलिमुकुलं लक्ष्मीकृत्याङ्गदांशुनासीरेण॥"

इति हरिप्रबोधयमके तालव्यादिरपि। पुरुर्नामासुरो हतोऽनेनेति पुरुहूतः। सम्प्रसारणे 'हलः' (६. ४. २) इति दीर्घः। 'पूःसर्वयोर्दारिसहोः' (३. २. ४१) इति खचि पुरन्दरः। जयशीलत्वाद् जिष्णुः। 'ग्लाजिस्थश्च ग्स्नुः' (३. २. १३९)। लेखर्षभो देवश्रेष्ठः। 'उपमितं व्याघ्रादिभिः—' (२. १. ५६) इत्यादिना समासः। शक्नोतीति शक्रः। 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाश्यशीङ्हसिसिधिशुभिभ्यो रक्' (उ० २. १३)। शतं मन्यवो यागा अस्येति शतमन्युः। दिवस्पतिरिति 'तत्पुरुषे कृति बहुलम्' (६. ३. १४) इति षष्ठ्या अलुक्। 'षष्ठ्याः पतिपुत्रपृष्ठ—' (८. ३. ५३) इत्यादिना विसर्गे सत्वम्। सुष्ठु त्रायते भुवनमिति सुत्रामा। 'त्रैङ् पालने'। 'आतो मनिन्क्वनिब्वनिपश्च' (३. २. ७४) इति मनिन्। 'अन्येषामपि दृश्यते' (६. ३. १३७) इति दीर्घत्वेन सूत्रामापीति वर्णदेशना। गोत्राः पर्वताः। तेषां पक्षभेदकत्वाद् गोत्रभित्। भिदेः क्विप्। वसूनि रत्नानि सन्त्यस्येति वासवः। अण्प्रकरणे 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' (वा० ५. २. १०३) इत्यण्। वृत्रहेति। 'ब्रह्मभ्रूणवृत्रेषु—' (३. २. ८७) इत्यादिना क्विप्। वर्षतीति वृषा। 'वृषु वृषु मृषु सेचने'। 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ० १. १६२) इति कनिन्। 'नोपधायाः' (६. ४. ७) 'सर्वनामस्थाने चासम्बुद्धौ' (६. ४. ८) इति दीर्घः। वास्तोष्पतिरिति। 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च' (४. २. ३२) इति निपातनाद् वास्तुशब्दस्य पुलिङ्गत्वं षष्ठ्यलुक् च। दिवस्पतिवत् सत्वम्। इण्परत्वाद् मूर्धन्यः षः। जम्भभेदी नान्तः। शालिहोत्रे—

"त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु।
हरिः स वर्णतोऽश्वस्तु पीतकौशेयसुप्रभः॥"

इति। हरिरश्वोऽस्येति हरिहयः। स्वाराडिति। 'रो रि' (८. ३. १४) इति

१. 'शुभ्रं व' ग. घ. च., 'गर्वं य' ङ. पाठः. २. 'क्ष्मी', ३. 'क्ष्मी' ङ. च. पाठः. ४. 'यनशी' क. पाठः. ५. 'वस इ' क. ङ. पाठः.

रलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६. ३. १११) इति दीर्घः । न मुञ्चतीति नमुचिः । 'मुच्लृ मोक्षणे' । किप्रत्ययः । नाकवन्न लोपो भवति । तं सूदितवानिति नमुचिसूदनः । नन्द्यादिः । 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति वा युच् । 'सूददीपदीक्षश्च' (३. २. १५३) इत्यनित्यत्वाद् युच्प्रतिषेधो न भवति । अनित्यत्वं च 'न यः' (३. २. १५२) इति योगविभागात् । सङ्क्रन्दन इति । 'कदि क्रदि क्लदि आह्वाने रोदने च' । नन्द्यादिल्युः । दुःसहश्च्यवनो मुनिरस्येति दुश्च्यवनः । प्रादिसमासः । तुरं वेगवन्तं सहत इति तुराषाट् । 'छन्दसि सहः' (३. २. ६३) इति ण्विः छान्दसा अपि लोके भवन्तीति । 'सहेः साडः सः' (८. ३. ५६) इति षत्वम् । 'अन्येषामपि —' (६. ३. १३७) इति दीर्घत्वम् । मेघा गजरूपिणः । ते वाहनान्यस्येति मेघवाहनः । आखण्डयति परबलमित्याखण्डलः । आङ्पूर्वात् 'खड खडि भेदे' इत्यस्माद् *'वृषादिभ्यः कलच्' (उ० १. १११) । 'ऋभुक्षो वज्रं' इति धातुपारायणे पूर्णचन्द्रः । सोऽस्यास्तीति ऋभुक्षाः । 'पथिमथ्यृभुक्षामात्' (७. १. ८५) इत्याकारः ॥

**तस्य तु प्रिया ॥ ४४ ॥**

**पुलोमजा शचीन्द्राणी**

पुलोमजादित्रयं शच्याम् । पुलोमजेति । 'पञ्चम्यामजातौ' (३. २. ९८) इति डः । शचीति । 'शच व्यक्तायां वाचि' । औणादिक इन् । 'कृदिकारादृ—' (ग० सू० ४. १. ४५) इति ङीप् । 'कौशिकः शची कोशातकी च' इति तालव्ये वर्णदेशना । भवानीवदिन्द्राणी ॥

**नगरी त्वमरावती ।**

**हय उच्चैःश्रवाः सूतो मातलिर्नन्दनं वनम् ॥ ४५ ॥**

**स्यात् प्रासादो वैजयन्तः**

'दित्वाद ल्यु' क. ख. पाठः.

* 'वृषादिभ्यश्चित्' इति मुद्रितोणादिपाठः.

इन्द्रस्य नगरीहयसूतवनप्रासादानां यथाक्रममेकैकं नामपञ्चकम्। अमरावतीति। 'मतौ बह्वचोऽनजिरादीनाम्' (६. ३. ११९) इति दीर्घः। उच्चैः श्रवसी अस्य उच्चैः श्रृणातीति वा उच्चैःश्रवाः। असुन्। 'वा शरि' (८. ५. ३६) इति विसर्गे सत्वं पक्षे। मतं मतिरुच्यते। मतं लातीति मातलिः। बहुलवचनात् कर्तरि किः। पृषोदरादित्वाद् वर्णागमः। नन्दयतीति नन्दनम्। नन्द्यादिभ्यो ल्युः। वैजयन्त्यः पताकाः अस्मिन् सन्तीति वैजयन्तः। अर्शआदित्वाद् अच्।

**जयन्तः पाकशासनिः।**

जयन्तद्वयम् **इन्द्रसुते**। जयतीति जयन्तः। 'तॄभूवसिवहिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च' (उ० ३. १२८) इति झच्। अन्तादेशः। पाकशासनिरिति। 'अत इञ्' (४. १. ९५)॥

**ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः॥ ४६॥**

ऐरावतचतुष्कम् **ऐरावते**। इरावान् समुद्रः। तत्र भवः ऐरावतः। 'तत्र भवः' (४. ३. ५३) इत्यण्। अभ्रात्मको मातङ्गो हस्तीत्यभ्रमातङ्गः। मध्यमपदलोपी समासः। ऐरावत ऐरावणः। पृषोदरादित्वात् णत्वम्। अभ्रमुनामा हस्तिनी। तस्या वल्लभः अभ्रमुवल्लभः॥

**ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः।**
**शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः॥ ४७॥**

ह्रादिन्यादयो दश **वज्रे**। ह्रादिनीति। 'ह्राद अव्यक्ते शब्दे'। 'आवश्यकाधमर्ण्ययोर्णिनिः' (३. ३. १७०)। उग्रवद् वज्रः। अस्त्रीति वज्रेण सम्बन्धनीयम्। तथा च पुंस्काण्डे वोपालितः—

"वज्रं नपुंसके (स्याद्) पविरशनिर्वा स्त्रियां स्वरुः प्रोक्तः।
दम्भोलिः शतकोटिर्नपुंसके कुलिशशतधारे॥"

१. 'य' क. पाठः.

इति । 'वज्रोऽस्त्री हीरके पवौ' इत्यनेकार्थेऽपि वक्ष्यति । 'कुलिशो मम वक्षसि' (स० ५. श्लो० २९) इति भट्टिकाव्ये पुंप्रयोगदर्शनाद् अस्त्रीति कुलिशेन सम्बध्नन्ति । 'कुलिहस्तो भुजादलः' । तेनः कुलं शेत इति कुलिशः । डप्रकरणे 'अन्यत्रापि दृश्यते' इति डः । भेदनशीलत्वाद् भिदुरम् । 'विदिभिदिच्छिदेः कुरच्' (३. २. १६२) । भिदिरम् इत्येव पाठः । भिदुरमिति पाठोऽसाधुरिति केचित् । यतः स्वभावाद् भिदुरादयः कर्मकर्तरि वर्तन्ते । न च वज्रं स्वयं भिनत्ति । तथा च—

"प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना:" (स० ६. श्लो० ८)

इति श्रीकण्ठसोमेन माघप्रयोगोऽसाधुरित्युक्तम् । तथा च 'इषिमदिमुदि —'(उ० १. ५१) इत्यादिना किरच् । वामनस्तु 'कर्मकर्तरि चायमिष्यत इति चकारः कर्तरीति समुच्चयार्थः' । तथा च भिदुरमित्यपीति समाधत्ते । पुनातेः 'अच इः' (उ० ४. १४०) पविः । शतं कोट्यो धारा अस्येति शतकोटिः । उपतापयतीति स्वरुः । 'स्वृ शब्दोपतापयोः' । 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ० १. १०) इति उः । शमयतीति शम्बः । अन्तर्भावितण्यन्तात् 'शमेर्बन्' (उ० ४. ९५) इति बन् । अथवा शं कल्याणम् अस्यास्तीति शंवः । 'कंशम्भ्यां बभयुस्तितुतयसः' (५. २. १३८) इति वः । दम्भाद् आटोपात् लीयत इति दम्भोलिः । पृषोदरादिः । अश्नातीति अशनिः । 'अश भोजने' । 'अर्तिसृधृधम्यश्यवितॄभ्योऽनिः' (उ० २. १०२) । वज्राशनिरिति समुदितं चास्य नाम । तथा च 'वज्राशनिर्भिदुर्वज्रम' इति त्रिकाण्डशेषः ॥

**व्योमयानं विमानोऽस्त्री**

व्योमयानद्वयं देवरथे । देवानां व्योम्नि यानं गमनं येनेति व्योमयानम् । करणे ल्युट् । विशिष्टं मानयतीति विमानः ॥

**नारदाद्याः सुरर्षयः ।**

१. 'दो पु' ग., 'दिपु' क. ख. पाठः. २. 'वितरिभ्यो' क. ख. घ. ङ. च. छ. पाठः.
३. 'नं ये' क. पाठः.

* 'पुम' इति पुंलिङ्गार्थक सङ्केत । 'अन्येष्वपि दृश्यते' (३. ३. १०१) इति मुद्रिताष्टाध्यायीपाठः ।

नारदाद्याः सुरर्षिशब्देनोच्यन्ते । आदिशब्देन तुम्बुरुभरतकोहलादेर्ग्रहणम् । नरस्य धर्मः नारः । 'नराच्चेति वक्तव्यम्' (वा० ४. ४. ४९) इत्यण् । तं ददातीति नारदः ॥

**स्यात् सुधर्मा देवसभा**

सुधर्माद्वयं देवसभायाम् । शोभनो धर्मोऽस्या इति सुधर्मा । 'धर्मादनिच् केवलात्' (५. ४. १२४) इत्यनिच् । एवं नकारान्तः । यत्तु वासवदत्तायां 'सुधर्मामिव स्वच्छकौशिकां विन्ध्याटवीं विवेश' इत्याबन्तता, तत् समासान्तो विधिरनित्य इति कृत्वा । 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३) इति (वा) डाप् । अत्र 'ऋन्नेभ्यो ङीप्' (४. १. ५) इति ङीपि प्राप्ते 'अनो बहुव्रीहेः' (४. १. १२) इति प्रतिषेधः । देवसभेति । 'सभा राजामनुष्यपूर्वा' (२. ४. २३) इति नपुंसकत्वे प्राप्ते अमनुष्यशब्दो रक्षःपिशाचे वृत्तौ दृढीकृतः । तेन देवसभेति सिध्यति ॥

**पीयूषममृतं सुधा ॥ ४८ ॥**

पीयूषत्रयम् अमृते । पीयिरिति सौत्रो धातुः । 'पीयेरूषन्' (उ० ४. ७७) इत्यूषन् । मूर्धन्यषः । न म्रियतेऽनेनेत्यमृतम् । 'मृङ् प्राणत्यागे' । 'तनिमृङ्भ्यां किच्च' (उ० ३. ८७) इति तन् । सुखेन धीयते पीयते इति सुधा । 'धेट् पाने' । 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् ॥

**मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।**

मन्दाकिनीचतुष्कम् आकाशगङ्गायाम् । मन्दमाकितुं शीलमस्या इति मन्दाकिनी । 'अक अग कुटिलायां गतौ' । ताच्छीलिको णिनिः । स्वर्णदीति । वाप्रकरणे 'गिरिनद्यादीनामुपसङ्ख्यानम्' (वा. ८. ४. १०) इति वा णत्वम् ॥

**मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९ ॥**

मेरुपञ्चकं मेरुपर्वते । मेरुरिति । 'मा माने' । 'मापो रुच' इति रुः । इकारश्चान्तादेशः । सुमेरुरित्यनेनान्योपसर्गनिवृत्तिः क्रियते । हेमप्रधानोऽद्रिर्हेमाद्रिः । शाकपार्थिवादिः । एवं रत्नसानुः ॥

**पञ्चैते देवतरवो मन्दारः पारिजातकः ।**
**सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५० ॥**

मन्दारादयः पञ्च देवभूमिष्ठा एव स्वभावाद् **देवतरव** उच्यन्ते । मन्दार इति । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'अङ्गिमदिमन्दिभ्य आरन्' (उ० ३. १३४) इत्यारन् ।

"पारे जातो विष्णुपद्याः पारिजात इति शब्दितः"

इत्यागमः । सम्यक् तनोति गन्धमिति सन्तानः । 'तनोतेर्ण उपसङ्ख्यानम्' (वा० ३. १. १४०) इति णः । कल्पः सङ्कल्प इच्छा । तत्फलो वृक्ष कल्पवृक्षः । अथवा कल्पस्थायी वृक्षः । हरिम् इन्द्रं चन्दयतीति हरिचन्दनम् । 'चदि आह्लादने' । नन्द्यादिल्युः ॥

**सनत्कुमारो वैधात्रः**

सनत्कुमारद्वय **ब्रह्मणः पुत्रे** । 'हंसगो द्रुहिणः सनत्' इति ब्रह्मपर्याये रभसः । सनतः कुमारोऽपत्यं सनत्कुमारः । विधातुरपत्यं वैधात्रः । अपत्यार्थेऽण् ॥

**स्वर्वैद्यावश्विनीसुतौ ।**
**नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५१ ॥**

स्वर्वैद्यपट्कमश्विनीकुमारयोः **स्वर्वैद्ययोः** । बडवारूपिण्याः संज्ञाया अश्वरूपयोगाद् अश्विनीति नाम । इन्नन्ताद् ङीप् । तस्याः सुतौ अश्विनीसुतौ । संज्ञा नामादित्यमहिला उत्तरकुरावश्वरूपधारिणी प्रागासीत । आदित्योऽपि तत्सङ्गमेच्छुरश्वरूपेण तत्सन्निधिमगमत् । स तयान्यपुंशङ्कया निरस्तः सन् तन्नासापुटद्वये रेतो निषिक्तवान् । तत्र तौ जातावित्याश्चर्यपर्वणि । अतो नासां त्यक्तवन्ताविति नासत्यौ । पृषोदरादिः डः । 'ङ्याप्पोः संज्ञाच्छन्दसोर्बहुलम्' (६. ३. ६३) इति ह्रस्वत्वम् । अत एव नासिकाभवत्वाद् 'द्वौ बाडवेयौ नासिक्यौ' इति रभसः । अश्विनाविति विशाखाशब्दवत् । 'नक्षत्रेभ्यो बहुलम्'

१. 'विश्वर्य' ह. छ. पाठः. २. 'सत्यौ इ' ह. छ. पाठः.

(४. ३. ३७) इत्यनेन लुगिति परं विशेषः। एवमयं ह्रस्वादिः। तथा च भट्टिः—'किमश्विनौ सोमरसं पिपासू' (स० २. श्लो० ४१) इति। दस्राविति। 'तसु उपक्षेपे, दसु च'। शक्रवद्रः। एवं दन्त्यसः। वैनतेयवदाश्विनेयौ। सर्व एव नित्यं द्विवचनाः। एकैकविवक्षायामेकैकवचनान्ता अपि। तथा च मोक्षधर्मे—

"नासत्यश्चैव दस्रश्च सुतौ द्वावश्विनावुभौ"

**स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः।**

अप्सरआदिद्वयं **स्वर्वेश्यायाम्**। उर्वशीमुखा उर्वश्यादय इत्यर्थः। आदिना च मेनकारम्भातिलोत्तमादीनां ग्रहणम्। वरुणप्रभवत्वाद् अद्भ्यः सृता इत्यप्सरसः। 'सृ गतौ'। असुन्। अपसारयन्ति स्खलयन्तीति वा अप्सरस इत्यौणादिकसूत्रेण निपातनाद् असुन् अपशब्दाकारलोपश्च। बहुत्वमस्य न सर्वसम्मतम्। तथा च कप्फिणाभ्युदये—

"मानिनः कुलवधूरिव रागादप्सरा व्यधित पार्श्वमशून्यम्"

इति। स्वर्वेश्या तालव्यशा मूर्धन्यषा च। उरून् महतो वशीकरोतीत्युर्वशी। 'वश कान्तौ'। पृषोदरादित्वादुकारलोपः। गौरादित्वाद् ङीष्। एवं ह्रस्वादिस्तालव्यान्तः। तथा च—

"दधात्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम्"

इति माघयमकम्। 'वस निवासे'। ऊरावुषितेति पृषोदरादित्वाद् व्युत्पादिते दीर्घादिर्दन्त्यस इति केचिदिति वर्णदेशना। तथा च हरिवंशे—

"नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी"

इति॥

**हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्॥ ५२॥**

हाहाद्वयं प्रत्येकमिन्द्रादिदेवानां **गन्धर्वविशेषे**। हा इति शब्दं जहातीति हाहाः। 'ओहाक् त्यागे'। विजन्तः। 'गन्धर्वो गीतिहाहसोः' इति संसारावर्ते सकारान्तः। हू इति कृत्वाह्वयति हूहूः। 'ह्वेञ् स्पर्धायां शब्दे च'। वच्यादिसूत्रेण सम्प्रसारणम्। 'हलः' (६. ४. २) इति दीर्घः। 'सम्प्रसा-

रणाच' (६. १. १०८) इति पूर्वरूपत्वम् । केचिद् हहा आदौ ह्रस्वः हुहुरा-न्यन्तयोर्ह्रस्व इति मन्यन्ते । तथा च ---

"गीतमाधुर्यसम्पन्नौ विख्यातौ च हहा हुहुः"

इति व्यासः । आदिना तुम्बुरुचित्रथप्रभृतयो गृह्यन्ते । गन्धमर्वन्तीति गन्धर्वाः । 'अर्व पर्व शर्व गतौ' । 'कर्मण्यण्' (३. २. १) । शकन्ध्वादित्वात् पररूपम् ।

"अपि गन्धर्वगान्धर्वदिव्यगायनगातवः"

इति शब्दार्णवः । अनयोः शुभंयाखलपूशब्दवद् रामदामेन रूपमुक्तम् । शृङ्गार-प्रकाशे तु अव्ययत्वमनयोः ॥

**अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।**
**कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥**
**बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।**
**आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५४ ॥**
**रोहिताश्वो वायुसखा शिखावानाशुशुक्षणिः ।**
**हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥ ५५ ॥**
**सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।**
**शुचिरप्पित्तम्**

अग्न्यादयः चतुस्त्रिंशदग्नौ । अङ्गति कुटिलं गच्छतीत्यग्निः । 'अगि रगि लगि गत्यर्थाः' । 'अङ्गेर्नलोपश्च' (उ० ४. ५१) इति निः । विश्वानरस्या-पत्यं वैश्वानरः । विदादित्वाद् अञ् । वहति प्रापयति हव्यमिति वह्निः । 'वहिश्रिश्रु*युद्रुग्लाहात्वरिभ्यो नित्' (उ० ४. ५२) इति नित् । होत्रं हविः । वीतिरशनम् । अतो होत्रमशनमस्येति वीतिहोत्रः । आहिताग्न्यादिः । 'वी †गतिप्र-जनकान्त्यशनखादनेषु' । कर्मणि क्तिन् । मृत्युञ्जयवद् धनञ्जयः । 'कृपीटमुदरं

१. 'र्व सर्व ग' ग. घ. ङ. च. छ. पाठः

* 'युद्रुग्ला......' इति मुद्रितोणादिपाठः. † 'गतिव्याप्तिप्रजन ...' इति मुद्रितधातुपाठः

जलम्' इति रत्नकोशः । जलमुत्पत्तिस्थानमस्येति कृपीटयोनिः । ज्वलन इति । ताच्छील्ये 'जुचङ्क्रम्य—' (३. २. १५०) इत्यादिना युच् ।

"वेदास्त्वदर्थं जाताश्च जातवेदास्ततो ह्यसि"

इति भारते । स चासुन्नन्तः । तनोतेरौणादिक ऊप्रत्ययः । तनूः । नपादिति 'नभ्राण्नपाद्—' (६. ३. ७५) इति सूत्रेण निपातितः । अतः इन्धनं विना तन्वाः शरीरस्य नपात न (र)क्षणमस्येति तनूनपात् तान्तः । इन्धनेन बृंहति वर्धत इति बर्हिः । 'बृंहेर्नलोपश्च' (उ० २. १०९) इति इसिः । लघूपधगुणः । शोषयतीति शुष्मा । शुषेर्णिजन्ताद् मनिन् । संज्ञापूर्वकत्वाद् न गुणः ।

"शुष्माणि प्रणयनादि संस्कृते तेन हवींषि जुहवांबभूविरे" (स० १४. श्लो० २२)।

इति माघप्रयोगात् पृथङ् नामेदम् । 'अर्तिसिवि†शुषिभ्यः कित्' (उ० १. १४०) इति मन्प्रत्यये(? प्रत्यये)नौणादौ शुष्मोऽदन्तोऽप्युक्तः । कृष्णवर्त्मा नान्तः । शोचिर्ज्वाला, सास्य केश इवेति शोचिष्केशः । 'इणः षः' (८. ३. ३९) इति षत्वम् । उषसि प्रभाते बुध्यत इत्युषर्बुधः । 'अहरादीनां पत्यादिषूपसङ्ख्यानम्' (वा० ८. २. ७०) इति व्यवस्थितविभाषया नित्यं रः । आश्रयमश्नातीत्याश्रयाशः । 'कर्मण्यण्' (३. २. १) । महान्तो भानवो रश्मयोऽस्येति बृहद्भानुः । 'कृश तनूकरणे' । 'ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यो *ऽक्तिनच्यतुजलिजिष्टुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः' (उ० ४. २) इत्यानुक् । पावक इति । 'पूञ् पवने' । ण्वुल् । अनल इति । 'अन च' इत्यस्माद् धातोरन्तर्भावितण्यन्ताद् 'वृषादिभ्यः कलच्' (उ० १. १११) इति कलच् । लोहितवर्णोऽश्वोऽस्येति लोहिताश्वः । तथा च शालिहोत्रे –

"वरुणस्त्वासितानश्वान् कुबेरः कुमुदोपमान् ।
हुताशनः किंशुकाभान् वायुर्बभ्रुं तथावृणोत् ॥"[1]

1. 'स्तु' ह. छ. पाठः.

† 'विसिशु'        * 'भ्यः क्तिनच्' इति मुद्रितोणादिपाठः ।

वायुः सखा अस्येति वायुसखा । 'अनङ् सौ' (७. १. ९३) इत्यनङ् । यदि वायोः सखा वायुसख इति षष्ठीतत्पुरुषः, तदा 'राजाहःसखिभ्यष्टच्' (५. ४. ९१) इति टचि वायुसख इति स्यात् । आङ्पूर्वाद् 'आङि शुषेः सनश्छन्दसि' (उ० २. १०३) इत्यनिः । आशुशुक्षणिः । क्रिमाक्ष्यः । हिरण्यं रेतोऽस्येति हिरण्यरेताः । तथा च 'अग्नेरपत्यं प्रथमं सुवर्णम्' इति श्रुतिः । दहन इति 'अनुदात्तेतश्च हलादेः' (३. २. १४०) इति युच् । देवान् हव्यं वहति प्रापयति स्वयं च लभत इति हव्यवाहनः । 'हव्येऽनन्तःपादम्' (३. २. ६६) इति वहेर्ञ्युट् । कालीकरालीमनोजवासु(लो)हितासुधूम्रवर्णा-स्फुलिङ्गिनीविश्वरुच्याख्याः सप्त वह्नेर्जिह्वा मार्कण्डेयपुराणोक्ताः । तासामर्चिःस्वभावत्वात् सप्त अर्चिषोऽस्येति सप्तार्चिः । दमुनाः सान्तः । 'दमु उपशमे' । अन्तर्भावितण्यन्ताद् 'दमेरुनसिः' (उ० ४. २३६) इत्युनसिप्रत्ययः । शोषयतीति शुक्रः । उग्रवद् रः । 'ऋज्रेन्द्र—' (उ० २. ३१) इत्यादिना निपातितत्वात् षकारस्य ककारः गुणाभावश्च । चित्राः विचित्राः भानवोऽस्येति चित्रभानुः । वैचित्र्यं च जिह्वारूपार्चिषो भेदात् । विभा प्रभा, तदेव वसु धनमस्येति विभावसुः । शुचिरिति । 'शुच शोके' अन्तर्भावितण्यन्तादस्माद् §'इन् सर्वधातुभ्यः' (उ० ४. ११७) इतीन् । स च 'इगुपधात् कित्' (उ० ४. १२१) इति कित् । अप्पित्तमिति षष्ठीसमासः । दाहकत्वात् पित्तमिव पित्तम् ।

"सोऽङ्घ्रिपाङ्गस्यां पित्तमिन्धानः शर्वरीं नयेत्"

इति प्रयोगदर्शनाद् वाक्यं च प्रयुज्यते ॥

## और्वस्तु वाडवो वडवानलः ॥ ५६ ॥

और्वत्रयं समुद्रस्थवह्नौ । ऊर्वस्य ऋषेरपत्यम् और्वः । बिदादित्वादञ् । अनेन किलायोनिजं पुत्रमिच्छता वक्षो मथितम् । तत्र हि ज्वालामयः पुरुषो जातः । तस्य च समुद्र आधार आसीदिति । अयमेव च वडवामुखभवत्वाद्

१. 'करालीविक' ख. पाठः. २. 'दा' क ख. ङ. छ. पाठ.

§ 'सर्वधातुभ्य इन्' इति मुद्रितोणादिपाठः ।

वाडवः। 'तत्र भवः' (४. ३. ५३) इत्यण्। बडवानल इत्याधाराधेयभावः सम्बन्धः ॥

**वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिशिखा स्त्रियाम्।**

ज्वालपञ्चकमग्निज्वालायाम्। ज्वाल इति। 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०)। कील इति। 'कील बन्धने'। इगुपधलक्षणः कः। स्त्रियां कीला। आर्चिरिति। 'अर्च पूजायाम्'। 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' (उ० २. १०८) इति इसिप्रत्ययः। इतस्ततो गच्छतीति हेतिः। 'हि गतौ'। 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३. ३. ९७) इत्यनेन निपातितः। *'शीङो निद्धस्वश्च' (उ० ५. २४) इति खः। शिखा। 'खर्परे शरि वा लोपो वक्तव्यः' (वा० ८. ३. ३६) इति पक्षे विसर्गलोपः। स्त्रियामित्यर्चिरादिभिः सम्बध्यते। 'ज्वालाभासोर्न पुंस्यर्चिः' इति क्लीबत्वमप्ययमर्चिषो वक्ष्यति ॥

**त्रिषु स्फुलिङ्गोऽग्निकणः**

स्फुलिङ्गद्वयम् अग्निकणे। स्फूत्कारेण लिङ्गति गच्छतीति स्फुलिङ्गः। लिगिर्गत्यर्थः। पचादिः। पृषोदरादित्वात् कारपदतकारयोर्लोपः ह्रस्वत्वं च। स्फुशब्देनैव स्फूत्कार उच्यत इति केचित् ॥

**सन्तापः सञ्ज्वरः समौ ॥ ५७ ॥**

सन्तापद्वयमग्नितापे। तपेर्घञ्। सन्तापः। सञ्ज्वर इति पचादिः ॥

**धर्मराजः पितृपतिः समवर्ती परेतराट्।**
**कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ॥ ५८ ॥**
**कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः।**

१. 'छृदिछादिभ्यः' ग. पाठः.

* 'शीङो ह्रस्वश्च' इति मुद्रितोणादिपाठः।

धर्मराजादयश्चतुर्दश यमे । यथापराधदण्डदानेन धर्मश्चासौ अर्शआद्यच् राजा चेति धर्मराजः । पितरः कव्यपालानलसोमादयः । तेषां पतिः पितृपतिः । अद्वयवादिवत् समवर्ती । परेताः मृताः । तेषु राजत इति परेतराट् । 'सत्सूद्विष—' (३. २. ६१) इत्यादिना क्विप् । कृतः अन्तो विनाशो येनेति कृतान्तः । 'निष्ठा' (२. २. ३६) इति पूर्वनिपातः । शमेर्नन्द्यादित्वाल्ल्युः । शमनः । यमाः मृत्युप्रभृतयोऽस्य किङ्कराः । तेषु राजत इति यमराट् । क्विप् । यमानामेव योगाद् यमः । अर्शआदित्वादच् । कलते प्राणिनां धर्माधर्माविति कालः । 'कल शब्दसङ्ख्यानयोः' । 'अकर्तरि च —' (३. ३. १९) इति प्रतिषेधस्यानित्यत्वात् 'कर्तरि कृत्' (३. ४. ६७) इति कर्तरि घञ् । कालदण्डाख्यस्य दण्डस्य धरः दण्डधरः । अन्यथा ण्युत्पत्तौ दण्डधार इति स्यात् । श्राद्धं पितृक्रिया । तदंशभाक्त्वात् श्राद्धदेवः । विवस्वतो रवेरपत्यं वैवस्वतः । अन्तं नाशं करोतीति अन्तकः । 'तत्करोति —' (वा० ३. १. २६) इति णिचि ण्वुल् ॥

**राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ॥ ५९ ॥**
**रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ।**
**यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६०**

राक्षसादयः पञ्चदश राक्षसे । रक्ष एव राक्षसः । प्रज्ञादित्वादण्[1] । कुणपः शवः । तद्भक्षणं शीलमस्येति कौणपः । 'शेषे' (४. २. ९२) इत्यण् । क्रव्यं मांसमत्तीति क्रव्यात् । 'क्रव्ये च' (३. २. ६९) इति विट् । क्रव्याद इति वासरूपविधिना अण् । अथवा कृत्तविकृत्तमत्तीति क्रव्यादः । पृषोदरादित्वात् कृत्तविकृत्तस्य क्रव्यादेशः । कृत्तविकृत्तं पक्वमांसमुच्यते । अस्रं रक्तं पिबतीत्यस्रपः । दन्त्यसः । तालव्योऽपीति गोवर्धनोणादिवृत्तिः । 'आतोऽनुपसर्गे कः' (३. २. ३) । 'सुराशीध्वोः' (वा० ३. २. ८) इत्युपसङ्ख्यानाद् 'गापोष्टक्' (३. २. ८) इति टक् न भवति । आशृणोतीति आशरः । 'शॄ हिंसायाम्' । पचाद्यच् । क्वचिदाशिर इति पाठः । रात्रिञ्चर इति । 'चरेष्टः' (३. २. १६) । 'रात्रेः कृति

१. 'धानादण्' क. ख. पाठः.

विभाषा' (६. ३. ७२) इति पक्षे मुम्। कर्बुर इति। 'कर्बृ वर्णे'। 'मद्गुरादयश्च' (उ० १. ४३) इति कुरच् रमागमश्च। 'कृगृशृवृञ्चतिभ्यः ष्वरच्' (उ० २. १२१) इति ष्वरच्। अकारमध्योऽपि। तथा च हारावलिः—

"नैर्ऋतस्तु खषापुत्रः कर्बरो निकषात्मजः।
आशरः कर्बुरः क्रव्यात् कौणपो यातुरक्षसी॥"

इति। यातुसंज्ञां धारयतीति यातुधानः। अन्तःस्थादिः। चवर्गादिरपीति पुरुषोत्तमः। धाञः 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ल्युः। पुण्यजन इति विरुद्धलक्षणा। मङ्गलभद्रवत्। निर्ऋत्यां भवः नैर्ऋतः। सर्वेषामन्तं यातीति यातु। 'कमिमनिजनिगाभायाहिभ्यश्च' (उ० १. ७९) इति तुन्। तथा चाभिनन्दः—

"यातु यातुप्रवीराणां प्रणम्य चरणानसौ।
नरो न रोपप्रकरं रोद्धुमिन्द्रजितः क्षमः॥"

इति। मरणादात्मानं रक्षतीति रक्षः। असुन्नन्तः। रूपभेदाद् नपुंसके॥

**प्रचेता वरुणः पाशी यादसांपतिरप्पतिः।**

प्रचेतआदयः पञ्च वरुणे। प्रचेताः सान्तः।

"वरं वृणन्त्यमुं देवा वरदश्च वरार्थिनाम्।
वृञ्धातुर्वरणे प्रोक्तस्तस्मात् स वरुणः स्मृतः॥"

इति साम्बपुराणम्। वृणातेः 'कृवृदारिभ्य उनन्' (उ० ३. ५३) इत्युनन्। नागपाशयोगात् पाशी। यादसां जलजन्तूनां पतिः यादसांपतिः। दिवस्पतिवद् अलुक्। वाक्यमेवेदं न समासो वा॥

**श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः॥ ६१॥**

**पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः।**

१. 'णया। म' ख. ग. घ. ङ. च. छ. पाठः.

**समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥**

**नभस्वद्वातपवनपवमानप्रभञ्जनाः ।**

श्वसनादयो विंशतिर्वाते । 'श्वस प्राणने' । 'करणाधिकरणयोश्च' (३. ३. ११७) इति ल्युट् । स्पर्शन इति । 'स्पृश संस्पर्शने' । 'बहुलमन्यत्रापि' (उ० २. ७८) इति युच् । वातीति वायुः । 'वा गतिगन्धनयोः' । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उ० १. १) । मातरिश्वा तालव्यो नान्तश्च मघववन्निपातितः । पृषद् बहुवर्णोऽश्वोऽस्येति पृषदश्वः । तदुक्तं प्राक् 'वायुर्बभ्रुं तथावृणोदि'ति । गन्धस्य वहो गन्धवहः । पचादिः । गन्धवाह इति । 'कर्मण्यण्' (३. २. १) । अनिलः पूर्वं गणदेवतायामुक्तः । आशुग इति । डप्रकरणे 'अन्यत्रापि—' (वा० ३. २. ४८) इति डः । सम्यग् गच्छतीति समीरः । 'ईर गतौ' । पचाद्यच् । मरुदेव मारुतः । प्रज्ञादित्वादण् । मरुदिति । 'मृङ् प्राणत्यागे' । 'मृग्रोरुतिः' (उ० १. ९९) । (मरुतोऽपि) । 'मारुतः स्पर्शनः प्राणः समीरो मरुतो जगद्' इति शब्दार्णवसंसारावर्तौ । जगत्प्राण इति संहतं नाम । विगृहीतं चेति केचित् । तथा च गच्छतीति जगत् । 'द्युतिगमिजुहोतीनां द्वे च' (वा० ३. २. १७८) इति क्विप् । 'गमः क्वौ' (६. ४. ४०) इत्यनुनासिकलोपः । तुक् । समीरितुं गन्तुं शीलमस्येति समीरणः । 'चलनशब्दार्थादकर्मकाद् युच्' (३. २. १४८) । नभोऽस्यास्तीति नभस्वान् । मतुप् । स हि नभःस्वामी । तथा च वायुपुराणे—

"शब्दाकाशबलानां च वायुरीशस्तथा कृतः"

इति । वातेः 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' (उ० ३. ८६) । वातः । पुनातीति पवनः । 'बहुलमन्यत्रापि' (उ० २. ७८) इति युच् । पवमान इति । 'पूङ्यजोः शानन्' (३. ३. १२८) इति शानन् । 'आने मुक्' (७. २. ८२) । प्रभनक्तीति प्रभञ्जनः । नन्द्यादिः ।

**प्राणापानसमानोदानव्यानाः पञ्च वायवः ॥ ६३ ॥**

**शरीरस्था इमे**

प्राणादयः पञ्च देहस्थवायौ । तत्र प्राणोऽन्नप्रवेशकृत् । अपानो विण्मूत्ररेतोविसृष्टिकृत् । समानोऽन्नपचनादिकरः । उदानो भाषितगीतादिकरः । व्यानः

स्वेदासृक्स्रवणोन्मेषनिमेषगत्यादिकरः। तदुक्तं —

"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥"

'अन च' इत्यस्माद् धातोः प्राणः। 'अनितेः (८. ४. १९) इति णत्वम्। एवं णत्ववर्जमपानादयः॥

**रंहस्तरसी तु रयः स्यदः।**
**जवः**

रंहआदयः पञ्च वेगे। रंह इति। 'रमेश्च' (उ० ४. २१९) इत्यसुन् हुगागमश्च। चकाराद् 'रहि गतौ' वा असुन्। तरतेरसुन्। तरः। रय इति। 'री गतिरेषणयोः'[1]। 'एरच्' (३. ३. ५६)। 'स्यदो जवे' (६. ४ २८) इति स्यदो निपातितः। जु इति सौत्रो धातुः। 'ऋदोरप्' (३. ३. ५७)। जवः। 'गजवती जवतीव्रहया चमूः' ( स० ९. श्लो० १०) इति रघुयमकम्॥

**अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्॥ ६४॥**
**सत्वरं चपलं तूर्णमविलम्बितमाशु च।**

शीघ्राद्येकादशकं शीघ्रे। रंहआदयो गतिवचनाः, शीघ्रादयो धर्मवचना इत्येतावता पृथक्करणम्। अत एव शीघ्रं पचतीति प्रयोगो भवति, न तु जवं पचतीति। 'रुष्यमत्वरसंघुषास्वनाम्' (७. २. २८) इति पक्षे इट्। त्वरितम्। लघ्विति। 'लघि शोषणे'[2]। 'लङ्घिबंह्योर्नलोपश्च' (उ० १. २९) इति कुः। 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्याजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्' (उ० २. १३) इति रक्। क्षिप्रम्। अरमिति। 'ऋ सृ गतौ'। अच्। द्रुतम्। 'द्रु गतौ'। 'नपुंसके भावे क्तः' (३. ३ ११४)। सह त्वरया वर्तत इति सत्वरम्। चपलमिति। 'चुप मन्दायां गतौ'। 'चुपेरच्चोपधायाः' (उ० १. ११६)

१. 'क्षेपण' ग. च. पाठः. २. 'गत्यर्थः। ल' ग पाठः.

इति कलः। तूर्णमिति। 'ज्वरत्वर—' (६. ४. २०) इत्यादिना ऊठ्। 'रदाभ्यां निष्ठातो नः —' (८. २. ४२) इति नत्वम्। लम्बतेर्भावे क्तः। नञि अविलम्बितम्। 'अशू व्याप्तौ'। आङ्पूर्वाद् वायुवद् उण्। आशु॥

**सततानारताश्रान्तसन्ततविरतानिशम्॥ ६५॥**

**नित्यानवरताजस्रमाप**

सततादयो नव **निरन्तरक्रियाकरणे**। संपूर्वात् तनोतः भावे क्तः। अनुनासिकलोपः। 'समो वा हिततयोः' इति विकल्पेन समो मकारस्य लोपः। सततम्। एवं सन्ततमपि सिध्यति। आङ्पूर्वो रमिर्विरामे वर्तते, 'आरत्युपरतिविरतय' इति। अविद्यमानमारतमस्मिन्नित्यनारतम्। अश्रान्तमिति। 'श्रमु तपसि खेदे च'। भावे क्तः। 'अनुनासिकस्य क्विझलोः क्ङिति' (६. ४. १५) इति दीर्घत्वम्। नास्ति विरतिरवसानमित्यविरतम्। रमेरेव भावे क्तः। नास्ति निशाप्रायो विच्छेदकरः कालोऽस्येत्यनिशम्। नित्यमिति। निशब्दाद् 'नेर्ध्रुवे' (वा० ४. २. १०४) इति त्यप्प्रत्ययः। अनारतवदनवरतम्। आङ्पूर्वे परं विशेषः। अजस्रमिति। 'जसु हिंसायाम्'। दन्त्यः। 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (३. २. १६७)। नञ्समासः॥

**अथातिशयो भरः।**
**अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्॥ ६६॥**
**तीव्रैकान्तनितान्तानि गाढबाढदृढानि च।**

अतिशयादयश्चतुर्दश **अतिशये**। क्रियाभ्यावृत्तावित्यर्थः। सन्ततातिशययोरयं भेदः — सन्ततं क्रियान्तरैरव्यवधानम्। अतिशयस्तु क्रियाभ्यावृत्तिः। पौनःपुन्यमिति यावत्। अतिपूर्वाच्छीङः 'एरच्' (३. ३. ५६)। अतिशयः। भर इति। 'भृ भर्त्सने'। 'ऋदोरप्' (३. ३. ५७)। अस्मादेवान्योपसर्गनिवृत्त्यर्थं निर्भरः। अतिक्रान्तं वेलां मर्यादाम् इत्यतिवेलम्। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा० २. २. १८) इति समासः। एवम् अतिमात्रमत्यर्थं चेति। मात्रा स्तोकः। अर्थो निवृत्तिर्विषयो वा। 'भृशु भ्रंशु अधःपतने'। इगुपधलक्षणः कः।

भृशं तालव्यशम् । उद्गाढमिति । 'गाहू विलोडने' । क्तत्वढत्वधत्वष्टुत्वढलोपदीर्घत्वानि । 'तमु काङ्क्षायाम्' । अश्रान्तवत् क्तः दीर्घत्वं च । नितान्तम् । बाढमिति 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु' (७. २. १८) इत्यत्र निपातितम् । दृढम् । 'दृढः स्थूलबलयोः' (७. २. २०) इत्यनेन निपातितम् ॥

**क्लीबे शीघ्राद्यमत्त्वे स्यात् त्रिष्वेषां सत्त्वगामि यत् ॥**

शीघ्रादि दृढपर्यन्तम् असत्त्वे अद्रव्ये वर्तमानं क्लीबे । यत् त्वेषां सत्त्वगामि द्रव्यगामि, तत् त्रिषु । वाच्यलिङ्गमित्यर्थः । तद् यथा — शीघ्रं भुङ्क्ते, सततं जुहोति । क्रियाविशेषणत्वान्नपुंसकता ।

"कलौ शीघ्रा जरा पुंसां शीघ्रो मृत्युश्च दुस्तरः ।
यथा गिरिनदीस्रोतः शीघ्रं वर्षासमुद्भवम् ॥"

इति वाच्यलिङ्गता अतिशयभरौ वर्जयित्वा, एतयोर्नित्यमेवासत्त्ववचनात् । पुँल्लिङ्गनिर्देशाद् 'घञबन्तः पुंसि' 'घाजन्तश्च' इति वचनाच्च पुँल्लिङ्गत्वमेवानयोः । तथा च रभसः— —

"गाढैकान्तनितान्तानि पुमानतिशयो भरः"

इति । यस्त्वतिशयं पचतीति प्रयोगः, तत् क्रियाविशेषणम् । 'मेरुमेत्य मरुदाशुवाहनः' (कुमा० स० ८. श्लो० २२) इति कालिदासदर्शनाद् आशुशब्दोऽपि त्रिष्वित्यन्ये । कोऽप्यतिशयस्यापि त्रिलिङ्गतां मन्यते । कुत्रापि 'भेद्यगामी'ति पाठः । भेद्यगामि विशेष्यगामीत्यर्थः ॥

**कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।**
**मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥**
**किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।**
**यक्षैकपिङ्गैलिविलश्रीदपुण्यजनेश्वराः ॥ ६९ ॥**

कुबेरादयः सप्तदश कुबेरे । त्रिचरणोऽष्टदंष्ट्रो भीषणमूर्तिरयं जातः । अत कुत्सितं बेरं शरीरमस्येति कुबेरः । 'कुबि छादने' । 'कुम्बेर्नलोपश्च' (उ० १. ६२) इत्येरगिति तूणादौ[2] ।

१. 'शाद नाम्न्यकर्तरि भावे च घञजम्नदृणघाशु च इ' ग. पाठः. २. 'त्युणा' ग.घ. पाठः.

"कुत्सायां क्वितिशब्दोऽयं शरीरं बेरमुच्यते ।
कुबेरः कुशरीरत्वान्नाम्ना तेन च सोऽङ्कितः ॥"

इति वायुपुराणम् । त्र्यम्बकसख इति । 'राजाहःसखिभ्यष्टच्' (५. ४. ९१) इति टच् समासान्तः । यमराडिव यक्षराट् । मनुष्यस्येव धर्म आचारोऽस्येति मनुष्यधर्मा । 'धर्मादनिच् केवलात्' (५. ४. १२४) इत्यनिच् समासान्तः । 'सप्तम्युपमानपूर्वपदस्योपसङ्ख्यानमुत्तरपदलोपश्च' इति समासः । धनद इति । 'आतोऽनुपसर्गे कः' (३. २. ३) । राजानो यक्षाः । तेषां राजेति राजराजः । टजन्तः । विश्रवसोऽपत्यं वैश्रवणः । तालव्यवान् । 'शिवादिभ्योऽण्' (४. १. ११२) इत्यत्र गणे 'विश्रवणरवणावि'ति पाठाद् विश्रवणादेशोऽण् च । पौलस्त्य इति । 'गर्गादिभ्यो यञ्' (४. १. १०५) । नरवाहन इति । अनाहितत्वान्न णत्वम् । 'पूर्वपदात् संज्ञायाम्---' (८. ४. ३) इत्यनेनापि न णत्वं, क्षुभ्नादित्वात् । अस्य चाकृतिगणत्वात् । 'यक्ष पूजायाम्' । कर्मणि घञ् । यक्षः । महेश्वरादेकं चक्षुः पिङ्गं पिङ्गलमस्येति एकपिङ्गः । इलिविलाया अपत्यम् ऐलिविलः । अण् । पुण्यजनो यक्षः । तस्येश्वरः पुण्यजनेश्वरः ॥

**अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ।**
**कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ ७० ॥**

कुबेरस्योद्यानपुत्रस्थानपुरीविमानानां यथाक्रमं नामपञ्चकम् । चित्ररथेन निर्वृत्तं चैत्ररथम् । 'तेन निर्वृत्तम्' (४. २. ६८) इत्यण् । नल एव कूबरो युगन्धरोऽस्येति नलकूबरः । केलीनां समूहः कैलम् । तैरास्यते स्थीयत अस्मिन्निति कैलासः । कृष्णसर्पवन्नित्यसमासः । 'स्वामिकैलासलासा' इति सभेदः । अलतीत्यलका । 'अल भूषणादौ' । 'कुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३५) इति क्वुन् । 'न यासयोः' (७. ३. ४५) इत्यत्र योगविभागात् 'प्रत्ययस्थाद्—' (७. ३. ४४) इत्यादिना इत्त्वं न भवति । 'पुष्प विकसने' । ण्वुल् । पुष्पकम् ॥

**स्यात् किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः ।**

किन्नरचतुष्कं किन्नरे । केचित् पृथक् पृथगिदं नामचतुष्कं मन्यन्ते । अश्वमुखत्वात् कुत्सितो नरः किन्नरः । 'किं क्षेपे' (२. १. ६४) इति समासः ।

एवं किंपुरुषः। मयुरिति। 'डुमिञ् प्रक्षेपणे'। 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १. ७)॥

**निधिर्ना शेवधिः**

निधिद्वयं **निधौ**। धाञः 'उपसर्गे घोः किः' (३. ३. ९२)। 'केवृ खेवृ शेवृ सेचने'। पचाद्यच्। शेवः। शेवान् दधातीति शेवधिः। बहुलवचनात् कर्तरि किः।

"मायातश्च्युतिमायातः शोभितः शतशोऽमितः।
सव्यासं धाम्नि स व्यासं मानशेवधिमानशे॥"

इति कप्फिणाभ्युदये तालव्ययमकम्। 'अशू व्याप्तौ'। आनशे प्राप्तवानित्यर्थः॥

**भेदाः शङ्खपद्मादयो निधेः॥ ७१॥**

शङ्खपद्मादयो नवानां निधीनां भेदाः। तथाहि—

"पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ।
मुकुन्दकुन्दनीलाश्च चर्चश्च निधयो नव॥"

इति हारावली। मार्कण्डेयपुराणेऽष्टविध उक्तः॥

[1]इति स्वर्गवर्गः।

## अथ व्योमवर्गः।

**द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्।
नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम्॥ १॥
वियद् विष्णुपदं वा तु पुंस्याकाशविहायसी।**

द्यवादयः षोडश **आकाशे**। 'अभ्र वभ्र मभ्र चर' गत्यर्थाः। पचाद्यच्

[1] पदद्वयमिदं च. पुस्तके परं दृश्यते.

अभ्रम् । आपो भ्रश्यन्त्यस्मादिति वा अब्भ्रम् । डः 'अन्यत्रापि दृश्यते' (वा० ३. २. ४८) इति । [१]'नामन्सामन्सीमन्हेमन्रोमन्लोमन्व्योमन्विधर्मन्ध्यामन्पाप्मन्' (उ० ४. १५२) इति व्येञो व्योम निपातितम् । 'श्रः करन्' (उ० ४. ३) इत्यनुवर्तमाने 'पुषेः कित्' (उ० ४. ४) इति करन् । कित्त्वाद् गुणाभावः । [१]पुष्करम् । अम्बते शब्दायते इत्यम्बरम् । 'रबि लबि अबि शब्दे' । 'ऋच्छेररः' (उ० ३. १३१) इति बाहुलकः अरः । नभ इति । 'णह बन्धने' । 'नहेर्दिवि भश्च' (उ० ४. २१२) इत्यसुन् भश्चान्तादेशः । अन्तरीक्षते जगदस्मिन्नित्यन्तरीक्षम । 'ईक्ष दर्शने' । अधिकरणे घञ् । वेदे तु छान्दसमेवेका-रह्रस्वत्वमिति वर्णदेशना । गगनमिति । 'गमेर्(ग)श्च' (उ० २. ८०) इति युच् । 'बहुलमन्यत्रापि' (उ० २. ७८) इति वा युच् । बहुलवचनादेव मकारस्य गकारः । नित्यत्वाद् अविद्यमानम् अन्तं विनाशोऽस्येति अनन्तम् । देवा न भूमिस्पृशः । अतोऽन्तरिक्षगामिते । तेन सुरवर्त्म । खमिति । 'डित् खनेर्मुट् चो-दात्तः' (उ० ५. २०) इति अच्प्रत्ययः । मुडागमस्त्वागमशासनस्यानित्यत्वा-दत्र न भवति । अन्यार्थस्तद्विधिः । स च डित् । विपूर्वाद् यमेः 'अन्येभ्यो-ऽपि—'(३. २. १७८)इति क्विप् । 'गमादीनां क्वावनुनासिकलोपो भवतीति वक्त-व्यम्' (वा० ६. ४. ४०) इत्यनुनासिकलोपः । वियत् । विष्णोः पदम् आस्पदं विष्णुपदम् । 'विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति' इति मुरारिः । 'काशृ दीप्तौ' । घञ् । आकाशः । आकाशं तालव्यशम् । विहाय इति विपूर्वाज्जहातेः 'वहि-हाधाञ्भ्यश्छन्दसि णिच्च' (उ० ४. २२२) इत्यसुन् । णित्त्वाद् युगागमः । वा पुंस्याकाशविहायसी इति सम्बन्धः ॥

इति व्योमवर्गः ।

## अथ दिग्वर्गः

**दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।**

१. 'तम् । पुषेः कित्' इति करन् । पुष्क' क. ख. घ. ङ. च. छ. पाठः. २ 'अदिंबर' घ. ङ. च. छ., 'अंबेर' क. ख. पाठः.

(१) 'नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन' इति मुद्रितोणादिपाठः ------ ------ पदद्वयमिदं च. पुस्तके परं दृश्यते.

दिगादयः पञ्च **सामान्यादिशि**। दिगिति। 'ऋत्विग्—' (३. २. ५९) इत्यादिना क्विन्। ककुभ् भान्ता।

"टापं चापि हलन्तानां दिशा वाचा गिरा क्षुधा।
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः॥"

इति भागुरिः। काष्ठेति। 'काशृ दीप्तौ'। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ० २. २)। व्रश्चादिना षत्वम्। व्याप्नोतीत्याशा। 'अशू व्याप्तौ'। आङ्पूर्वात् पचाद्यच्। 'हसृरुहियुषिभ्य इतिः' (उ० १. १०२) इतीतिप्रत्ययः। हरित्। ता इत्यनेन दिगादीनां स्त्रीत्वं व्यनक्ति। दिशां बहुत्वाद् बहुवचनम्॥

**प्राच्यपाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः॥ १॥**

प्राचीत्रिकं यथासङ्ख्यं **पूर्वादिदिक्त्रये**। प्रथमं प्रातरञ्चति सवितास्यामिति प्राची। प्रशब्दोऽत्र प्राथम्ये वर्तते। मध्ये अह्नोऽञ्चतीति अपाची। अपशब्दोऽयमपदिशवन्मध्यवाची। अवाचीत्यपपाठः। अवपूर्वोऽञ्चतिरधोमुखीभावे वर्तते। यथा 'अवाङधोमुख' इति विशेष्यनिघ्ने वक्ष्यति। 'अवाङ्मुखस्योपरि पुष्पवृष्टिः' (स० २. श्लो० ६०) इति रघुश्च। पश्चाद् दिनान्ते अञ्चत्यस्यामिति प्रतीची। सर्वत्र 'ऋत्विग्—' (३. २. ५९) इत्यादिना क्विन्। 'अञ्चतेश्चोपसङ्ख्यानम्' (वा० ४. १. ६) इति ङीप्। 'अचः' (६. ४. १३८) इत्यकारलोपः। 'चौ' (६. ३. १३८) इति दीर्घत्वम्। पूर्वदक्षिणपश्चिमा इति 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वाच्यः' (वा० ५. ३. २८)॥

**उत्तरा दिगुदीची स्यात्**

**उत्तरस्यां दिश्युदीची**। उत्क्रान्तो दृष्टिपथमतीतः सूर्योऽञ्चत्यस्यामित्युदीची॥

**दिश्यं तु त्रिषु दिग्भवे।**

१. 'तीत्। ह' क. ङ. छ. पाठः.　　२. 'प्। प्रतीचीति। अ' ग. घ. ङ. पाठः.

दिग्भवे[1] वस्तुनि दिश्यम् । 'दिगादिभ्यो यत्' (४. ३. ५४) ।

**इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥**
**कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।**

इन्द्रादयोऽष्टौ प्रत्येकं **पूर्वादिदिक्स्वामिषु** ॥

**ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥**
**पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।**

ऐरावतादयोऽप्यष्टौ क्रमेणैन्द्रादीनां **गजा** दिग्गजाः । ऐरावतः पूर्ववत् । पुण्डरीकयोगात् पुण्डरीकः । अर्शआदिः । खर्वत्वाद् वामनः । कौ मोदत इति कुमुदः । मूलविभुजादित्वात् कः । कृष्णवर्णत्वाद् अञ्जनः । नन्द्यादिः । पुष्पमिव दन्तावस्येति पुष्पदन्तः । सार्वभौम इति । 'तत्र विदितः' (५. १. ४३) इत्यण् । 'अनुशतिकादीनां च' (७. ३. २०) इत्युभयपदवृद्धिः । शोभनं प्रतीकमङ्गमस्येति सुप्रतीकः । कस्मिंश्चित् पुस्तके—

"करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात्" $

इत्यादयः पठ्यन्ते । ताश्चानुक्रमेणैरावतादीनां हस्तिन्यः ॥

**क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥ ४ ॥**

अपदिशं[2] विदिशौ द्वावग्न्यादि**कोणे** । क्लीबाव्ययमिति कर्मधारयः । अव्ययानामनेकार्थत्वादपशब्दो मध्यवाची । 'अव्ययं विभक्ति—' (२. १. ६) इत्यत्राव्ययमिति योगविभागात् समासः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' (५. ४. १०७) इत्यच् समासान्तः । 'अव्ययीभावश्च' (२. ४. १८., १. १. ४१) इत्यनेन नपुंसकत्वाव्ययत्वे । दिग्भ्यां विनिर्गता[3] इति विदिक् शान्ता ॥

**अभ्यन्तरं त्वन्तरालं**

1. 'वे दि' ङ. छ. पाठः. २. 'शा । वि' ङ. छ पाठः ३. 'ता वि' ग. घ. ङ. च. छ. ज पाठः.

$ अस्योत्तरार्धं 'ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती' इति ।

अभ्यन्तरद्वयं **मध्यमात्रे**। न तु प्रकरणाद् दिङ्मध्ये। तथा च प्रयोगः— 'पतितास्तेनान्तराले वयम्' इति। अन्तरं मध्यावकाशः। अभिगतमन्तरमभ्यन्तरम्। अन्तरं लातीत्यन्तरालम्। कप्रत्ययः। 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः॥

**चक्रवालं तु मण्डलम्।**

**मण्डलाकारे वस्तुनि** चक्रवालद्वयम्।

"स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च"

इति विश्वप्रकाशः। चक्रस्येव वालः संवरणमस्येति चक्रवालम्। मण्डयतीति मण्डलम्। वृषादित्वात् कलच्॥

**अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः॥ ७॥**
**धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत्।**
**घनजीमूतमुदिरजलमुग्धूमयोनयः॥ ८॥**

अभ्रादयः पञ्चदश **मेघे**। अपो बिभर्तीत्यभ्रम्। मूलविभुजादित्वात् कः। अभ्राति गच्छतीत्यभ्रमिति पचाद्यचि बकाररहितमपीति[1] तु धातुप्रदीपः। तथा च वृन्दावनयमकं—

"प्रगीतगोपोऽगोपः प्रस्वनदभ्रोऽदभ्रः"

इति। 'मिह सेचने'। पचाद्यच्। न्यङ्क्वादिकुत्वम्। मेघः। स्तनयित्नुरिति। 'स्तन गदी देवशब्दे'। चुरादिः। 'स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्' (उ० ३. २९)। 'अयामन्ताल्वाय्येत्न्विष्णुषु' (६. ४. ५५) इत्ययादेशः। बलाहक इति। वारिवाहशब्दस्य बलाहकादेशः। जलधारां बिभर्तीति धाराधरः। तडित्वान् मतुबन्तः। 'झयः' (८. २. १०) इति वत्वम्। हन्ति सन्तापमिति घनः। 'मूर्तौ घनः' (३. ३. ७७) इति हन्तेरप् घत्वं च। जीवनं मूतं बद्धमनेनेति जीमूतः। 'मूङ् बन्धने'। पृषोदरादित्वाद् वनलोपः। मोदत इति मुदिरः। 'इषिमदिमुदि—' (उ० १. ५४) इत्यादिना किरच्। जलमुक् चान्तः। धूमो योनिः कारणमस्येति धूमयोनिः॥

१. 'ति धा' ङ. छ. पाठः.

**कादम्बिनी मेघमाला**

कादम्बिनीद्वयं मेघपङ्क्तौ । कादम्बा हंसाः बलाकावन्मेघमनुधावन्ति । त[1]द्योगात् कादम्बिनी ॥

**त्रिषु मेघभवेऽभ्रियम् ।**

मेघजे वस्तुनि अभ्रियम् । भवार्थे 'समुद्राभ्राद् घः' (४. ४. ११८) ।

**स्तनितं गर्जितं मेघनिर्घोषो रसितादि च ॥ ७ ॥**

स्तनितचतुष्कं मेघशब्दे । 'नपुंसके भावे क्तः'(३. ३. ११४)। आदिना ह्रादह्रासध्वनितानां ग्रहणम् ॥

**शम्पा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ।**
**तडित् सौदामनी विद्युच्चञ्चलाचपला अपि ॥ ८ ॥**

शंपादयो दश विद्युति । भीषणतया शं सुखं पिबतीति शंपा । 'आतोऽनुपसर्गे कः' (३. २. ३) । शतं ह्रादा अस्याः शतह्रदा । पृषोदरादित्वाद्ध्रस्वत्वम् । ह्रादिनीत्यावश्यके णिनिः । इरावतो मेघस्येयम् ऐरावती । 'टिड्ढाणञ् —'(४. १. १५) इत्यादिना ङीप् । 'तड आघाते' । 'ताडेर्णिलुक् च' (उ० १. १०३) इतीति तडित् । 'श्वेतद्वीपः सुदामा' इति त्रिकाण्डशेषे ऐरावतपर्यायौ । अतः सुदाम्ना एकदिशि सौदामनी । 'तेनैकदिक्' (४. ३. ११२) इत्यण् । 'टिड्ढाणञ् —' इत्यादिना ङीप् । सौदामिनीत्यपपाठः । तथा च हरिप्रबोधयमकं —

> "खेऽन्तं[3] जगाम काञ्चनसरसमसौदामनलिताधामास्तम् ।
> कुवलयमिव सरजस्सरसमसौदामनीलताधामास्तम् ॥"

'द्युत दीप्तौ' । भ्राजभासादिना क्विप् । विद्युत् । चञ्चतेर्घञ् चञ्चः । तं लातीति चञ्चलेति सनातनः । चपलेति । 'चुप मन्दायां गतौ' । 'चुपेरच्चोपधायाः' (उ० १. ११६) इति कलच् ॥

१. 'न्तीति त' च. पाठः. २. 'त' घ. पाठः. ३. 'केऽभ्रं ज' क, ख, घ, 'खेऽभ्रं ज' ङ. छ., 'खेऽस्तं ज' च. पाठः. ४. 'न रसम' ग. घ. ङ. च. छ. पाठः

**स्फूर्जथुर्वज्रनिष्पेषः**

स्फूर्जथुद्वयं **वज्रसङ्घट्टशब्दे**। स्फूर्जथुरिति। 'ट्वितोऽथुच्' (३. ३. ८९)। 'पिष्ऌ सञ्चूर्णने'। अच्। निष्पेषो द्विमूर्धन्यः॥

**मेघज्योतिरिरंमदः।**

मेघज्योतिर्द्वयं **वज्राग्नौ**। इरया जलेन माद्यतीति इरंमदः। 'उग्रंपश्येरंमदपाणिंधमाश्च' (३. २. ३७) इत्यत्र निपातितः॥

**इन्द्रायुधं शक्रधनुः**

इन्द्रायुधद्वयं **शक्रधनुषि**॥

**तदेव ऋजु रोहितम्॥ ९॥**

तदेवोत्पातादिना ऋजु **रोहितं** स्यात्॥

**वृष्टिर्वर्षम्**

वृष्टिद्वयं **वर्षणे**। 'पृषु वृषु सेचने'। 'स्त्रियां क्तिन्' (३. ३. ९४)। वर्षमिति। 'अज्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' (वा० ३. ३. ५६) इत्यच्॥

**तद्विघातेऽवग्राहावग्रहौ समौ।**

ग्रहादिदोषेण **वृष्टिविघाते** अवग्राह[1]द्वयम्। 'अवे ग्रहो वर्षप्रतिबन्धे' (३. ३. ५१) इति विकल्पेन घञ्। 'ग्रहिवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप्॥

**धारासंपात आसारः**

धाराणां संपातः प्रपतनम् आसारः। 'सृ गतौ'। घञ्॥

**शीकरोऽम्बुकणाः स्मृताः॥ १०॥**

**वाताहतादिजलकणानां** शीकरः। 'शीकृ सेचने'। तालव्यः बाहुलकाद्

१. 'यां' क. ख. ग. घ. पाठः.

'ऋच्छेररन्' (उ० १. १३१) इत्यरन्। 'उच्चलच्छीकराच्छाच्छ' इति कण्ठाभरणेऽपि[1] तालव्यानुप्रासः॥

**वर्षोपलस्तु करका**

वर्षोपलद्वयं मेघजाशिलायाम्। करकेति। 'कृञादिभ्यः संज्ञायां—' (उ० ५. ३९) इति वुन्। *क्षुपकादिपाठाद् इत्वाभावः।

"वर्षोपले तु करका करकोऽपि च दृश्यते"

इति रुद्रः॥

**मेघच्छन्नेऽह्नि दुर्दिनम्।**

मेघान्धकारितादिने दुर्दिनम्। केचिद् रात्रिन्दिवे न अहश्शब्दं वर्णयन्ति। अह्नीत्युपलक्षणं वा। तथा च रत्नकोशे 'दुर्दिनं जलदध्वान्तम्' इति। एतेनैतदप्युपपन्नं स्याद्—

"यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः।
अनभिज्ञास्तामिस्राणां दुर्दिनेऽप्यभिसारिकाः॥"
(कुमा० स० ६. श्लो० ४३)

इति।

"यत् तालीदलपाकपाण्डु वदनं यद् दुर्दिनं नेत्रयोः"

इति 'लक्षणेयमि'ति शृङ्गारप्रकाशः॥

**अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्॥ ११॥**
**अपिधानतिरोधानपिधानच्छदनानि च।**

अन्तर्धादयोऽष्टापवारणे। अन्तर्धेति। 'अन्तरशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या' (वा० १. ४. ६५)। ततो धाञ्। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। टाप्। अन्तर्धिरिति। 'उपसर्गे घोः किः' (३. ३. ९२)। 'अन्तरपरिग्रहे' (१. ४. ६५) इति गतिसंज्ञायां कुगतिसमासः। अपवारणपञ्चके

१. 'ण ता', २. व्या' घ. च. पाठः. ३. 'घशि' ङ. च. पाठः. ४. 'त्र' क. पाठः. ५. 'व्या श्रदन्तरोरुपसर्गवत्प्रवृत्तिरिष्यते इति वा। त' ङ. छ. पाठः.

* 'क्षि' इति मुद्रितवार्त्तिः

भावे ल्युट् । पिधानमित्यत्र

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"[1]

इति अपिशब्दाकारलोपः । छदनमिति । 'छादेर्घेऽद्व्युपसर्गस्य' (६. ४. ९६) इति योगविभागाद् ह्रस्वत्वम् ॥

**हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १२ ॥**

**विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।**
**अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥ १३ ॥**

**द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।**

हिमांश्वादयो विंशतिश्चन्द्रे । चन्द्रं कर्पूरं सादृश्येन मातीति चन्द्रमाः । चन्द्रोपपदान्माङः 'चन्द्रान्मो डिच्च' (उ० ४. २२९) इत्यसुन् । आह्लादकत्वात् चन्द्रः । 'चदि आह्लादने' । शक्रवद् रः । 'उन्दी क्लेदने' । 'उन्देरिच्चादेः' (उ० १. १२) इत्युः इकारादेशश्च इन्दुः । विष्णा विधुरुक्तः । सुधांशुरित्युपचारात् । समुद्रोत्थत्वादब्जः । 'जीवेरातुः' (उ० १. ८२) इत्यनुवृत्तौ 'आतृकन् वृद्धिश्च' (उ० १. ८३) इति जैवातृकः । सोम इति । 'षुञ् अभिषवे' । 'अर्तिस्तुसुहुसृधृक्षिक्षुभाया(त्वा)पदियक्षिणीभ्यो मन्'(उ० १. १४५) । ग्लायतीति ग्लौः । 'ग्लै हर्षक्षये' । 'ग्लानुदिभ्यां डौः' (उ० २. ६७) इति डौः । कला निधीयन्तेऽस्मिन्निति कलानिधिः । 'कर्मण्यधिकरणे च' (३. ३. ९३) इति किः ।

"नक्षत्रग्रहविप्राणां वीरुधां चाप्यशेषतः ।
सोमं राज्येऽदधाद् ब्रह्मा यज्ञानां तपसामपि[2] ॥"

इत्यागमः ॥

**कला तु षोडशो भागः**

१. 'धाञ्कृञोस्तनिनह्योश्च बहुलेन न शौनकिः', २. 'ग्लापय' इ. छ. पाठः

चन्द्रस्य षोडशो भागः कला । 'कल शब्दसङ्ख्यानयोः' । पचाद्यच् । टाप् ॥

**बिम्बोऽस्त्री मण्डलं त्रिषु ॥ १४ ॥**

बिम्बद्वयं चन्द्रसूर्यादिमण्डले । 'वी[1] गतिप्रजनादौ' । 'उल्बादयश्च' (उ० ४. ९६) इति बन् ह्रस्वत्वं मुगागमश्च । बिम्बम् । मण्डलमुक्तम् । स्त्रियां गौरादिङीष् । क्रमानुरोधादत्रोक्तम् ॥

**भित्तं शकलखण्डे वा पुंस्यर्धः**

भित्तचतुष्कं खण्डे । भिनत्ति समुदायमिति भित्तम् । क्तः । शकलम्[2] । 'शक्ल शक्तौ' । 'शकिशम्योर्नित्[3]' (उ० १. ११७) इति कलच् नित्[4]त्वं च । 'शूरः समर्थे शकलं च खण्डे' इति शभेदः । 'खड खडि भेदे' । भावे घञ् । खण्डम् । 'शकलखण्डे वा पुंसी'ति सम्बन्धः । पक्षे रूपभेदात् क्लीबम् । अर्ध-शब्दः पुलिङ्ग एव खण्डे वर्तते ॥

**अर्धं[5] समेंऽशके ।**

समभागे अर्धम् । अर्धं नपुंसकमेव समप्रविभागे वर्तते, नान्यलिङ्गमिति भागवृत्त्यादिः । 'अर्धा शाटी' 'अर्धं वस्त्रम्' 'अर्धः कम्बलः' इत्यनुन्यासः । 'ऋधु वृद्धौ' । भावे घञ् ॥

**चन्द्रिका कौमुदी ज्योत्स्ना**

चन्द्रिकात्रयं ज्योत्स्नायाम् । चन्द्रोऽस्यामस्तीति चन्द्रिका । 'अत इनिठनौ' (५. २. ११५) इति ठन् । प्रियात्वेन कुमुदस्येयमिति कौमुदी । शेषे अण् । ज्योत्स्नेति । ज्योतिरस्या अस्ती[6]ति 'ज्योत्स्नातमिस्रा---' (५. २. ११४) इत्यादिना निपातिता ॥

**प्रसादस्तु प्रसन्नता ॥ १५ ॥**

१. 'बी' ङ. छ. पाठः. २. 'लमिति श' ख पाठः. ३ 'स्तिं' क. घ. पाठः. ४. 'ति' क. पाठः. ५ 'न्धप' क. ख. पाठः. ६. 'ति ज्योत्स्ना ज्यो' घ. च. पाठः.

प्रसादद्वयं प्रसन्नतायाम्। 'षद्लृ विशरणादौ'। घञ्। 'सानुसेतुप्रसादा' इति सभेदः। सदेरेव क्तान्तात् तलि प्रसन्नता॥

**कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्।**

कलङ्कषट्कं चिह्ने। कम् आत्मानं रङ्कयति हीनं करोतीति कलङ्कः। 'कर्मण्यण्' (३. २. १)। 'अकि लक्षणे'। 'हलश्च' (३. ३. १२१) इति करणे घञ्। अङ्कः। 'लच्छ लाछि लक्षणे'। ल्युट्। लाञ्छनम्। लक्ष्मेति 'लक्ष दर्शनाङ्कनयोः'। मनिन्। ल्युटि तु लक्षणम्॥

**सुषमा परमा शोभा**

उत्कृष्टशोभायां सुषमा। 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (८. ३. ८८) इति द्वितीयसकारे षत्वम्॥

**शोभा कान्तिर्द्युतिश्छविः॥ १८॥**

शोभामात्रे शोभाचतुष्कम्। 'शुभ शुम्भ शोभार्थे' इति निर्देशाद् 'गुरोश्च हलः' (३. ३. १०३) इत्यकारो गुणो नलोपश्च। शोभा। कान्तिरिति। 'कमु कान्तौ'। क्तिन्। अश्रान्तवद् दीर्घः। द्युतिरिति। 'इगुपधात् कित्' (उ० ४. १२१) इतीन्। छविरिति। 'कृविघृष्विच्छविस्थविकिकीदिवि'(उ० ४. ५७) इत्यनेन 'छो छेदने' क्विन् ह्रस्वत्वं च निपातितम्॥

**अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्।**
**प्रालेयं महिका च**

अवश्यायादयः सप्त हिमे। 'श्यैङ् गतौ'। 'श्याद्व्यधास्रुसंस्रुतीणवसावहृलिहश्लिषश्वसश्च' (३. १. १४१) इति णः। नीहार इति। 'अध्यायन्यायोद्यावसंहाराधारावायाश्च' (३. ३. १२२) इति चकाराद् घञ्। 'उपसर्गस्य घञ्यमनु-

१. 'स' क. ख. ग. पाठः. २. 'णगत्यवसादनेषु।' ङ. छ. पाठः. ३. 'र' च. पाठ. ४. 'न्यूनीक' ङ. छ. पाठः. ५. 'ति क' क. पाठः. ६. 'वि' क. छ. पाठः.

ये बहुलम्' (६. ३. १२२) इत्युपसर्गदीर्घत्वम्। तुषारं इति। 'तुष तुष्टौ'। अन्तर्भावितण्यन्ताद् बाहुलकात् 'कमे*रुचोपधायाः' (उ० ३. १३८)। 'तुषादयश्च' (उ० ३. १३९) इत्यारन्। किच्च सः। 'तुहिर् दुहिर् अर्दने'। 'वेपितुह्योर्ह्रस्वश्च' (उ० २. ५५) इतीनन्। तुहिनम्। हन्तीति हिमम्। 'हन्तेर्हि च' (उ० १. १९२) इति मक् हिरादेशश्च धातोः। प्रलयादागतमिति प्रालेयम्। 'तत आगतः' (४. ३. ७४) इत्यण्। 'केकयमित्रयुप्रलयानां यादेरियः' (७. ३. २) इतीयः। 'मह पूजायाम्'। क्वुन्। अकादेशः। टाप्। 'प्रत्ययस्थात् —' (७. ३. ४४) इत्यादिना इत्वम्। महिका॥

## अथ हिमानी हिमसंहतिः॥ १७॥

**महति हिमे** हिमानीद्वयम्। 'इन्द्रवरुण-—' (४. १. ४९) इत्यादिना 'हिमारण्ययोर्महत्त्वे' (वा० ४. १. ४९) इति ङीषानुकौ॥

## शीतं गुणे

गुणे **स्पर्शविशेषे** शीतमिति क्लीबं, रूपभेदात्। तथा च 'देवदत्तस्य शीतं वर्तते' इति प्रयोगः।

"उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि।
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः॥"

इति। शीतमिति। 'श्यैङ् गतौ'। 'नपुंसके भावे क्तः' (३. ३. ११४)। 'द्रवमूर्तिस्पर्शयोः[4] श्यः' (६. १. २४) इति सम्प्रसारणं यकारस्येकारः। 'हलः' (६. ४. २) इति दीर्घत्वम्। 'श्योऽस्पर्शे' (८. २. ४७) इति निषेधान्न नत्वम्॥

## तद्वदर्थाः सुषीमः शिशिरो जडः।

१. 'रः। तु'; २. 'याः इ' क. घ. ङ. च. छ. पाठः. ३. 'दिना' क. पाठः.
४. 'योः इ' ख. ङ. च. छ. पाठः.

* 'कमेः किदुच्चोपधायाः' इति मुद्रितोणादिपाठः.

**तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ १८ ॥**

सुषीमसप्तकं **शीतलद्रव्ये**। तद्वान् शीतगुणवान् अर्थोऽभिधेयो येषां ते तद्वदर्थाः। सुषीमादयः सप्त अन्यलिङ्गकाः। वाच्यलिङ्गका इत्यर्थः। तद् यथा—'शीतला भूः' 'शीतलं कूलं' 'शीतलो वातः' इति। सुषीम इति। 'सुषामादिषु च' (८. ३. ९८) इति षत्वम्। शिशिर इति। 'अजिरशिशिरशिबिर —' (उ० १. ५३) इति सूत्रेण। 'शश प्लुतगतौ' किरच् उपधेत्वं च निपात्यते।

"शश्वच्छशाङ्कशिशिराण्यपि शूकशिम्बि-
स्तालव्यशद्वययुताः कथिताः कियन्तः।"

इति शभेदः। जड इति। 'जलँ धान्ये'। पचादिः। डलयोरेकत्वस्मरणम्। चान्द्रा अपि 'वा डो ल' इति स्मरन्ति। शीतगुणोऽस्यास्तीति शीतलः। सिध्मादित्वाल्लच्। शीत इति। 'गत्यर्थाकर्मक—' (३. ४. ७२) आदिसूत्रेण क्तः। हिमः पूर्ववत्॥

**ध्रुव औत्तानपादिः स्याद्**

ध्रुवद्वयं **सर्वग्रहोपरिस्थिततारायाम्**। स्थिरत्वाद् ध्रुवः। *'ध्रुव गतिस्थैर्ययोः'। पचाद्यच्। कुटादित्वाद् ङित्त्वम्। औत्तानपादिरिति। 'अत इञ्' (४. १. ९५)॥

**अगस्त्यः कुम्भसम्भवः।**
**मैत्रावरुणिः**

अगस्त्यत्रयम् **अगस्त्ये**। अगं विन्ध्यं त्यक्तवान् इत्यगस्त्यः। 'अन्येष्वपि—' (३. २. १०१) इति त्यजेर्डः। पारस्करप्रभृतेराकृतिगणत्वात् सुडागमः। मित्रावरुणौ देवर्षी। एतयोरुर्वशीदर्शनाद् रेतः स्रुतम्। तत् कुम्भे प्रविष्टम्। तत्र जात इति कुम्भसम्भवः। अत एव मैत्रावरुणिश्च। 'देवताद्वन्द्वे च'

१. 'ज्ञाः। वा'. २. 'ज्ञा इ' ख पाठः. ३. 'युरिति' ङ. छ. पाठः. ४. 'ङ' क. घ. ङ. च. पाठः. ५. 'रकाया' ङ. च. छ. पाठः.

*'ध्रु गतिस्थैर्ययोः' इति मुद्रितधातुपाठः

(६. ३. २६) इत्यानङ् । तयोरपत्यमिति इञ् । अभेदपक्षे त्वेतत् । भेदपक्षे तु वारुणिरपि भवति ।

"अद्यापि दक्षिणामाशां वारुणिर्न निवर्तते"

इति भारते दर्शनात् ॥

**अस्यैव लोपामुद्रा सधर्मिणी ॥ १९ ॥**

**अगस्त्यधर्मपत्न्यां** लोपामुद्रा । लोपयति योषितां रूपाभिमानमिति लोपा । मुद्रयति स्रष्टुः सृष्टिमिति मुद्रा । पचाद्यच् । ततः कर्मधारयः ॥

**नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।**

नक्षत्रषट्कं **तारकायाम्** । न क्षरति न क्षीयत इति वा नक्षत्रम् । 'क्षि क्षये' । ष्ट्रन् । नाकवन्नञः प्रकृतिवद्भावः । क्षियः क्षरतेर्वा नक्षत्रमिति निपातनात् साधुत्वम् । ऋक्षमिति । 'ऋषि गतौ' । 'स्नुव्रश्चिकृत्यृषिभ्यः कित्' (उ० ३. ६६) इति सः । 'षढोः कः सि' (८. २. ४१) इति कः । भातीति भम् । पूर्ववद् डः । तारेति । 'तॄ प्लवनतरणयोः' । 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) इत्यङ् भिदादिपाठात् । गुणदीर्घत्वे निपातनात् । तारकेति । कर्तरि ण्वुल् । 'तारका ज्योतिष्युपसङ्ख्यानम्' (वा० ७. ३. ४५) इतीत्वप्रतिषेधः । उडु इति । 'डीङ् विहायसा गतौ' । उत्पूर्वः । बाहुलकाद् डुः तलोपश्च । अपिशब्दात् तारकापि वा स्त्रियामिति केचित् । उडुसाहचर्यात् पक्षे क्लीबे । तथाहि—

"द्वित्रैर्व्योम्नि पुराणशीधुमधुरच्छायैः स्थितं तारकैः"

इति प्रयोगः ।

"नक्षत्रे नेत्रमध्ये च तारकं तारकेति च"

इति कोशान्तरम् ॥

**दाक्षायण्यश्विनीत्यादितारा:**

१. 'यतः' ख. पाठः. २ 'तिषेधः । क्षि' ङ. छ. पाठः. ३. 'तौ वृश्चि' ङ. छ. पाठः ४. 'स्तु' क. च. पाठः. ५. 'ङ् भिदादिभ्योऽङ् । भि' क., 'ङ् भिदादिभ्योऽङिति भि' ख., 'ङ् । भि' घ. ङ. च. छ. पाठः. ६. 'त्व', ७. 'नि', ८. 'सां' क. ख. ङ. छ. पाठः. ९. 'ते' क. पाठः.

अश्विन्यादयः सप्तविंशतिर्दाक्षायण्य उच्यन्ते। दक्षस्य प्रजापतेरपत्यानि दाक्षायण्यः। गोत्रत्वमुपचर्य नडादित्वात् फक्। 'जातेरस्त्रीविषयादयोपधात्' (४. १. ६३) इति ङीप्॥

**अश्वयुगश्विनी ॥ २० ॥**

अश्वयुग्द्वयम् **अश्विन्याम्**। अश्वं युनक्ति सम्बध्नातीत्यश्वयुक्। ऋत्विगादिना क्विन्। अश्वरूपयोगादश्विनी। 'अत इनिठनौ' (५. २. ११५)॥

**राधे विशाखे**

राधाद्वयं **विशाखायाम्**। 'राध साध संसिद्धौ'। 'गुरोश्च हलः' (३. ३. १०३) इत्यकारः। विशाखे इति। 'शाखृ व्याप्तौ'। घञ्। "श्रावणाश्विनविनश(?)विशाखा" इति शब्दः। विशाखयोर्द्वित्वाद् 'राधे विशाखे' इति द्विवचनमुक्तम्। तथा च रामायणे—

"पत्न्योर्मध्यगतस्तत्र सुग्रीवः प्लवगेश्वरः।
विशाखयोर्मध्यगतः संपूर्ण इव चन्द्रमाः॥"

इति। 'विशाखयोश्च' (१. २. ६२) इत्येकत्वमभीष्टम्। तच्छान्दसम्। केचिद् भाषायामपिच्छान्दसाः प्रयुज्यन्त इतिकृत्वा समादधति। अतो 'राधा विशाखा' इत्यपि स्यात्॥

**पुष्ये तु सिध्यतिष्यौ**

पुष्यत्रयं **पुष्ये**। पुष्यन्ति सिध्यन्ति चास्मिन्नर्था इति पुष्य(सिध्यौ)[2]। 'पुष्यसिध्यौ नक्षत्रे' (३. १. ११६) इत्यधिकरणे क्यप्। 'तुष तुष्टौ'। §'अघ्न्यादयश्च' इति यक् इत्वं च। तिष्यः॥

१. 'माः। वि' क. घ. ङ. छ. पाठः. २. 'ति। पुष्यसि' क. घ. ङ. च. छ. पाठः.

अन्व' इति वा स्यात्। § 'अघ्न्यादयश्च' (उ० ४. १११) इति मुद्रितागादपाठः

श्रविष्ठया ।

समा धनिष्ठा

श्रविष्ठाद्वयं धनिष्ठायाम् । अतिशयेन श्रावयतीति श्रविष्ठा । शृणोतेः 'ऋदोरप्' (३. ३. ५७) । मतुप् । इष्ठन् । इष्ठनि 'विन्मतोर्लुक्' (५. ३. ६५) इति मतुपो लुक् । एवं 'धन धान्ये' पचाद्यचि मतुबादि । धनिष्ठा ॥

स्युः प्रोष्ठपदा भद्रपदाः स्त्रियः ॥ २१ ॥

प्रोष्ठपदाद्वयं प्रत्येकं पूर्वभद्रपदोत्तरभद्रपदासु । प्रोष्ठो गौः । तत्पदमिव पदमनयोरिति प्रोष्ठपदा । भद्रं पदमनयोरिति भद्रपदा ह्रस्वादिरिति वर्णविवेकः । "अहपर्तानिव भद्रपदानु(?)ानि" इति श्लेषश्च । पूर्वे प्रोष्ठपदे द्वे । उत्तरे च द्वे । समुदायश्चैषां चतुःसङ्ख्य इति बहुवचनम् । केचित्तु 'भद्रपदेन युक्तः काल' इति प्रयोगात् पुंलिङ्गतामाहुर्भद्रपदशब्दस्य । "भद्रपदासु भयं सलिलोत्थम्" इति तु वराहमिहिरः । यत्तु 'कदा पूर्वे प्रोष्ठपदे' 'कदा पूर्वे भद्रपदे' इति. तत् तारकयोर्द्वित्वादुपपद्यते । 'सुप्रातसुश्व --' (५. ४. १२०) इत्यादौ प्रोष्ठपदा निपातिताः ॥

मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।

मृगशीर्षत्रयं मृगशीर्षे । आकृत्या मृगस्येव शीर्षं मृगशीर्षम् । रूपभेदात् क्लीबम् । "सौम्या मृगशिरः स्त्रियाम्" इति रभसः । अग्रे हायनोऽस्या इत्याग्रहायणी । स्वार्थे अण् । गौरादित्वाद् ङीष् । अणन्तत्वाद् ङीपि सिद्धे गौरादिषु पाठः पुंवद्भावप्रतिषेधार्थः । एतेन आग्रहायणीभार्य इति सिद्धं भवति ॥

इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २२ ॥

१. 'प्लुक्' ङ. छ. पाठः. २. 'दासु' ङ च. छ. पाठः. ३. 'गौः । भद्रश्च गौः । त', ४. 'ति भद्रपदा ह' ५. 'पणय ।' क. ख. पाठः.

मृगशिरसः शिरोदेशस्थाः पञ्च तारका इल्वलाः। 'सानसि§वर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः' (उ० ४. १०७) इत्यनेन 'इल स्वप्नक्षेपणयोः' इत्यस्माद् वलप्रत्ययो गुणाभावश्च निपात्यते॥

**बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणो गुरुः।**
**जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः॥ २३॥**

बृहस्पतिनवकं **बृहस्पतौ**। बृहतां देवानां पतिः बृहस्पतिः। 'तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययो[1]§सुट् तलोपो वक्तव्यः' (वा० ६. १. १५७) इति तलोपसुडागमौ। गिरां पतिः गीर्पतिः। 'अहरादीनां पत्यादिषूपसङ्ख्यानम्' (वा० ८. २. ७०) इति रेफादेशः। रेफादेशाभावपक्षे विसर्जनीयोपध्मानीयौ भवतः। गीःपतिः गी॑पतिः। गीष्पतिरसाधुरित्यन्ये। कस्कादित्वात् साधुरिति चान्द्राः। धिषणायोगाद् धिषणः। अर्शआदित्वाद् अच्। 'गॄ निगरणे'। 'कृग्रोरुच्च' (उ० १. २४) इति कुः उकारश्चान्तादेशः। गुरुः। जीवयतीति जीवः। तथा च रामायणे—

> "तानार्तान् नष्टसंज्ञांश्च आहतानू बृहस्पतिः।
> विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्च जीवयन्॥"

इति। आङ्गिरस इत्यपत्यार्थे अण्। दिवस्पतिवद् वाचस्पतिः। अङ्गिरा एव चित्रशिखण्डी। तस्माज्जातः चित्रशिखण्डिजः॥

**शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः।**

शुक्रषट्कं **शुक्रे**। शुक्रः इन्द्रवत्। कविरेव काव्यः। चा[3]तुर्वर्णादित्वात् स्वार्थे ष्यञ्। उशना इति। 'वश कान्तौ'। 'वशेः कनसिः' (उ० ४. २४०) इति कनसिः। ग्रह्यादिसम्प्रसारणम्। 'ऋदुशन' (७. १. ९४) इत्यादिनानङ्।

1. 'योः। व' क. घ. ङ. च. छ. पाठः. 2. 'फाभा' क. पाठः. 3. 'चातुर्वर्ण्यादि' क. घ. ङ. च. छ. पाठः. 4. 'नेत्यन' क. ख. घ. च पाठः.

§ 'वर्णसिप'इति मुद्रितोणादिपाठः। § 'देवतयोः सु' इति मुद्रितवार्त्तिकपाठः

"सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्"
इति। कविरिति। 'कु शब्दे'। 'अच इः' (उ० ४. १४०)॥

**अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः॥ २४॥**

अङ्गारकादयः पञ्च मङ्गले। अगिर्गत्यर्थः। मन्दारवद् आरन्। भौमः। 'शिवादिभ्योऽण्' (४. १ ११२)॥

**रौहिणेयो बुधः सौम्यः**

रौहिणेयत्रयं बुधे। रौहिणेयं इति। 'स्त्रीभ्यो ढक्' (४. १. १२०)। बुध्यत इति बुधः। इगुपधलक्षणः कः। 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (४ १. ८५)। सौम्यः। तत्र हि पत्यन्तादिति वक्तव्ये उत्तरपदग्रहणमधिकविधानार्थ-मुक्तम्। यदा तु 'गर्गादिभ्यो यञ्' (४. १. १०५) इति यञ् क्रियते, तदा बहुषु 'यञञोश्च' (२. ४. ६४) इति लुकि सोमा इत्यादि॥

**समौ सौरिशनैश्चरौ।**

सौरिद्वयं शनैश्चरे। सूरस्यापत्यं सौरिः। 'अत इञ्' (४. १. ९५)। पङ्गुत्वात् शनैर्मन्दं चरतीति शनैश्चरः। 'शनैश्चरेण पादेन' इति वासवदत्तांश्लेषः॥

**तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः॥ २५॥**

तमआदिपञ्चकं राहौ। 'तमु काङ्क्षायाम्'। 'असुन्' (उ० ४. १९०) इत्यसुन्। 'तमांसि गुणतिमिरसैंहिकेयाः स्युः' इति नाममाला। रहयति सूर्याचन्द्रमसोः शौर्यमिति राहुः। 'रह त्यागे'। 'रहश्च' इति उण्। स्वर्भानुरिति। 'पूर्वपदात् संज्ञायाम्—' (८. ४. ३) इति णत्वे प्राप्ते क्षुभ्नादेराकृतिगणत्वान्न भवति। 'विध्वरुषोस्तुदः' (३.२. ३५) इति खश्। मुम्। विधुन्तुदः॥

१. यः। स्त्री' क. घ. ङ. च. छ. पाठः २. 'अ क्ति' क. घ. ङ. च. छ. पाठः. ३. 'त्तायां श्ले' ङ. छ. पाठः. ४. 'हति' ङ. छ. पाठः. ५. 'मगः इ' ख. घ. ङ. च. छ. पाठः.

**सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः।**

मरीच्यत्रिमुखाः सप्तर्षयः प्रत्येकं **चित्रशिखण्डिन** उच्यन्ते। सप्त च ते ऋषयश्चेति 'दिक्सङ्ख्ये संज्ञायाम्' (२. १. १०) इति समासः। मुखशब्द आद्यर्थे।

"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः।
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः॥"

चित्रशिखण्डश्चूडाविशेषः। तद्योगाच्चित्रशिखण्डिनः। अत इनिः। अदत्रिन् अत्रिः द्वितकारवान्। अतिशयेन वसुमान् वसिष्ठः। 'वस निवासे'। श्रविष्ठावत्॥

**राशीनामुदयो लग्नम्**

राशीनां मेषवृषादीनाम् उदयः उद्गतिः **लग्नम्**। 'ओलजी ओलस्जी व्रीडे'। क्तः। 'श्वीदितो निष्ठायाम्' (७. २. १४) इतीडभावः। 'ओदितश्च' (८. २. ४५) इति नत्वम्। नत्वस्यासिद्धत्वात् 'चोः कुः' (८. २. ३०) इति कुत्वम्॥

**ते तु मेषवृषादयः॥ २६॥**

ते इत्यनेन राशयो गृह्यन्ते। आदिना मिथुनकर्कटकसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनानां ग्रहणम्॥

**सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः।**
**भास्कराहस्करब्रध्नप्रभाकरविभाकराः॥ २७॥**

**भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः।**
**विकर्तनार्कमार्तण्डमिहिरारुणपूषणः॥ २८॥**

**द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः।**
**विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः॥ २९॥**

**भानुर्हंसः सहस्रांशुः सविता तपनो रविः।**

सूरादयः सप्तत्रिंशत् **सूर्ये** । सुवति प्रेरयति अन्धकारमिति सूरः । 'सू प्रेरणे' । 'सुसूधागृधिभ्यः क्रन्' (उ० २. २७) ।

"वारुणीवारुणीभूतसौरभा सौरभास्पदम्"

इति दण्डियमकम् । 'शुसिचिमीनां दीर्घश्च' (उ० २. २८) इति व्युत्पत्त्या तालव्यादिरपि । तथाच वासवदत्ताश्लेषः— 'केचित् कुमुदाकरा इव सोढशूरभास' इति । समर्थवाची च शूर[1]स्तालव्य एव । सरतीति सूर्यः । 'राजसूयसूर्य[2]—' (३. १. ११४) आदिसूत्रे[3] निपातितः । अर्यमा नान्तः । 'श्वन्नुक्षन्—' (उ० १. १६५) आदिसूत्रे[4] निपातितः । द्वादशमूर्तित्वाद् द्वादशात्मा । दिवाकरादिपञ्चसु 'दिवाविभाप्रभानिशाभास्कारान्तानन्त—' (३. २. २१) इत्यादिना टः । भास्कारान्तेत्यस्यैव निर्देशात् सत्वम् । तिमिरं बध्नातीति ब्रध्नः । 'बन्ध बन्धने' । 'बन्धेर्ब्रधिबुधी च' (उ० ३. ५) इति नक्प्रत्ययः । भास्संयोगाद् भास्वान् । मतुप् । 'मादुपधायाश्च—' (८. २. ९) इति वत्वम् । विवस्ते आच्छादयति इति वसेर्विपूर्वात् क्विप् । विवः रश्मिः । तद्योगाद् विवस्वान् । विश्वकर्मणा विकर्त्तित इति विकर्त्तनः । 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ल्युः । अर्च्यत इत्यर्कः । 'कृदाधारार्चिकलिभ्यः कः' (उ० ३. ४०) इति कः ।

"आर्तस्त्वं भव माण्डेति मार्ताण्डस्तेन स स्मृतः ।
मचन धातुर्महनान्मिहिरः स्मृतः ॥"

इति साम्बपुराणम् । मुदिरवन्मिहिरः । ऋच्छति गच्छतीत्यरुणः । 'अर्तेश्च' (उ० ३. ६०) इत्युनन् । वर्षेण पुष्णातीति पूषा । 'श्वन्नुक्षन्—' (उ० १. १६५) आदौ निपातितः । दिवो मणिरिव मणिः द्युमणिः । 'दिव उत्' (६. १. १३१) इति उः । तरणिरिति । 'अर्तिसृधृधम्यम्यश्यवि*तरिभ्योऽनिः'

१. 'रशब्दस्ता' ख. पाठः. २. 'र्येत्यादि' ङ. छ. पाठः. ३. 'त्रेण नि' ख. ङ. छ. पाठः. ४. 'त्रेण नि' ङ. छ. पाठः. ५. 'ति त्र' ङ. छ. पाठः. ६. 'कः । आ' क. घ. ङ. छ. पाठः. ७. 'तिमिर' घ. पाठः.

* 'तृभ्यो' इति मुद्रितोणादिपाठः

(उ० २. १०२) इत्यनिः। मित्रो द्वितकारः। 'ञिमिदा स्नेहने'। 'अमिचिमिदि⁺शंसिभ्यः क्त्रः' (उ० ४. १६५)। चित्रभानुविभावसू अग्निपर्याये दर्शितौ। रुचेः 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युच्। विरोचनः। गीर्पतिवदहर्पतिः। भातीति भानुः। 'दाभाभ्यां नुः' (उ० ३. ३२)। हन्ति गच्छतीति हंसः। 'वृतृवदिहनिकमिकषिभ्यः सः' (उ०. ३. ६२)। बहुलमन्यत्रापीति युच्। तपनः।

"हेलिर्हंसः सहस्रांशुस्तपनस्तापनो रविः"

इति शब्दार्णवः। सविता तृजन्तः। रविरिति। 'रु शब्दे'। 'अच इः' (उ० ४. १४०) इति इः॥

**माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः॥ ३०॥**

माठरत्रिकमेकैकमादित्यपार्श्वस्थे। सूर्यः कारुणिकः। अतो यथेष्टं देवानां वरं ददातीत्येतावताष्टादशेन्द्रादयो विघ्नदेवता नामान्तरेण पार्श्वे स्थापिताः। तथा चागमः—

"तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः।
वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो नामतश्च सः॥
यमोऽपि दक्षिणे पार्श्वे ख्यातो माठरसंज्ञया।
पूर्वद्वारे हरगुहौ राजश्रोषौ क्रमेण तौ॥"

इत्यादि। तत्र प्राधान्यात् त्रय उक्ताः। परिपार्श्वे वर्तन्त इति पारिपार्श्विकाः। परिपार्श्वे वर्तन्त इति चकारात् ठक्। मठति निवसति सूर्यसमीप इति माठरः। 'मठ निवासे'। अम्बरवद् अरः। बाहुलकाद् दीर्घः। पिङ्गलवर्णत्वात् पिङ्गलः। दण्डकारित्वाद् दण्डः॥

१. नुः ह' घ. च. पाठः. २. 'षियुमुचिभ्यः' ख. पाठः. ३. 'ह'. क. ख. ङ. छ. पाठः. ४. 'जृ' क. ख. पाठः.

⁺ 'शासि' इति मुद्रितोणादिपाठः।

**सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।**

सूरसूतपञ्चकं **सूर्यसारथौ** । 'ऋ गतौ' । 'अर्तेश्च' (उ०३. १६०) इत्युनन् । अरुणः । अविद्यमानावूरू अस्येति अनूरुः । काश्यपिरिति बाह्वादिः । इञ् ॥

**परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३१ ॥**

परिवेषचतुष्टयं चन्द्रसूर्ययोरुत्पातजरश्मिमण्डले ।

"संमूर्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः ।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः ॥"

इति परिवेषलक्षणे वराहमिहिरः । 'विष्लृ व्याप्तौ' । पचाद्यच् । पुंल्लिङ्गः परिवेषः ।

"परिवेषः स्यात् परिधौ परिधिः परिवेषणे"

इति मूर्धन्ये रुद्रः ।

"वेष्टने परिवेशः स्याद् भानोः सविधमण्डले"

इति तालव्येऽपि रभसः । तदा च 'विश प्रवेशने' साध्यः । परिधिरिति । धाञः कर्तरि किः । उपसूर्यकमण्डले द्वे नामनी । तथा च त्रिकाण्डे—

"मण्डलं †च विवेशश्च परिधिश्चोपसूर्यकम्"

इति । सूर्यमुपगतमुपसूर्यकम । प्रादिसमासः । स्वार्थिकः कः । मण्डलं पूर्ववत् ॥

**किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः ।**
**भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३२ ॥**
**स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।**
**रोचिः शोचिरुभे क्लीबे**

किरणादयो द्वाविंशती **रश्मौ** । 'कॄपॄवृजिमदिनिधाञः क्युः' (उ०२. ८३) इति क्युः । किरणः । वसन्ति रसा अस्मिन्नित्युस्रः । वसतेः 'स्फायितञ्चिवञ्चि—' (उ०. २. १३) आदिना रक् । सम्प्रसारणम् । बहुलवचनात् 'शासिवसिघ-

† 'परिवेशः' इति स्यात् ।

सीनां च' (८. ३. ६०) इति न षत्वम् । मयूख इति । मान् प्रमाणयन् गगनम् ओखति गच्छति इति मयूखः । 'मा माने' । उक्तिर्गत्यर्थः । पचादिपृषोदरादी ।

"अथो बभ्रुश्च भयङ्करे करे महौषधीरुग्णकरांशुमे शुभे"

इति जानकीहरणे तालव्योंऽशुः । बहुलमन्यत्रापीत्यश्नातेः कुप्रत्ययः नुगागमश्च । गभस्तिरिति । 'भस भर्त्सने' । पृषोदरादिः । 'घृ क्षरणे' । §'घृणिपृश्निपार्ष्णिभूर्णितूर्णिः' (उ० ४. ५३) इत्यनेन घृणिर्निपातितः । धृष्णिरिति । धृषेर्बहुलवचनात् 'सृघृषिभ्यां कित्' (उ० ४. ५०) इत्यनेन निप्रत्ययः किच्च । सूर्येऽपि भानुरुक्तः । किरतेः 'ॠदोरप्' (३. ३. ५७) करः । 'मृकणिभ्यामीचिः' (उ० ४. ७१) मरीचिः स्त्रीपुंसयोरिति सम्बन्धः । दीधितिरिति । 'दीधीङ् दीप्तिदेवनयोः' । क्तिन् । आर्धधातुक इट् । 'यीवर्णयोर्दीधीवेव्योः' (७. ४. ५३) इतीकारलोपः । प्रभादयः स्त्रियां स्युरिति सम्बन्धः । प्रभाति । 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् । रुक्त्विड्भासः सम्पदादिक्विबन्ताः ।

" जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
र्भाभिर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः ।"

इति वेणीसंहारे भाश्शब्दः पुंलिङ्गोऽपि । तत्र च प्रविष्टैरिति भावे क्तं कृत्वा हेतुतृतीयान्तं व्यधिकरणमिदम् । रुचिरिति । 'इगुपधात् कित्' (उ० ४. १२१) इति इत् किच्च । छविद्युती शोभापर्याये साधिते । दीप्तिरिति । 'स्त्रिआबादिभ्य इति वक्तव्यम्' (वा० ३. ३. ९४) । रोचिरिति । *'वसिरुच्योः संज्ञायाम्' (उ० २. १११) इति इसिन्प्रत्ययः । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' (उ० २. १०८) इत्यनेन शुचेरिसिः । शोचिः । केचिदातपान्तमेव किरणपर्यायं मन्यन्ते ॥

**प्रकाशो द्योत आतपः ॥ ३३ ॥**

१. 'यौ' । ङ छ. पाठः. २. 'ति अ' क. ख. ङ. च. छ पाठः. ३ 'भव शु' क. ख. ङ. छ. पाठः. ४. 'सिः । के' क. घ ङ. च. छ. पाठः.

§ 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि' 　 'वसौ रुचेः संज्ञायाम्' इति मुद्रितपाठः.

प्रकाशत्रयम् आलोके। स च रश्मिकार्यम्। प्रकाशद्योतौ भावे घञन्तौ। आतपः पचादिः॥

**कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति।**

कोष्णचतुष्कं किञ्चिदुष्णे। 'ईषदर्थे' (६. ३. १०५) इति कोः कादेशः। कोष्णम्। कवोष्णमिति। 'कवं चोष्णे' (६. ३. १०७) इति कोः कवादेशः। मन्दोष्णमिति कर्मधारयः। कदुष्णमिति। 'कोः कत् तत्पुरुषेऽचि' (६. ३. १०१) इति कदादेशः। गुणे क्लीब रूपभेदात्। तद्वति द्रव्ये वर्तमानाः कोष्णादयस्त्रिषु। यथा—'कोष्णा आपः' 'कोष्णः सूर्यः' 'कोष्णं भस्म' इति॥

**तिग्मं तीक्ष्णं खरं तद्वत्**

तिग्मत्रयम् अतिशयोष्णे। तिग्ममिति। 'तिज निशाने'। 'युजिरुचितिजां कुश्च' (उ० १. १५१) इति मक् कवर्गश्चान्तादेशः। 'तिजेर्दीर्घश्च' (उ० ३. १८) इति क्स्नप्रत्ययः दीर्घश्चेकारस्य च। तीक्ष्णम्। खम् इन्द्रियं रातीति खरम्। 'रा आदाने'। 'आतोऽनुपसर्गे कः' (३. २. ३)। तद्वदिति कोष्णवत् त्रिषु॥

**मृगतृष्णा मरीचिका॥ ३४॥**

मृगतृष्णाद्वयं नीरमरीचिमद्धाने यन्मरीचिर्दृश्यते। तत्र जलाभासत्वान्मृगाणामत्र तृष्णा भवतीति मृगतृष्णा। मरीचिरिव मरीचिका॥

*इति दिग्वर्गः।

१. 'शानने' क. ख. पाठः. २. 'परजन' ग. घ. ङ. च छ. पाठः.

*पदद्वयमिदं मातृकासु न दृश्यते

## अथ कालवर्गः ।

**कालो दिष्टोऽप्यनेहापि समयोऽपि**

कालचतुष्कं **संवत्सरादिकाले** । 'कल शब्दसङ्ख्यानयोः' । कर्मणि घञ् । दिष्ट इति । 'दिश अतिसर्जने' । क्तः । 'व्रश्च—' (८. २. ३६) इत्यादिना षत्वं, ष्टुत्वं च । न हन्ति न गच्छतीत्यनेहा । 'नञि हन एह च' (उ० ४. २२५) इति असिप्रत्ययः एह चादेशः । 'तस्मान्नुडचि' (६. ३. ७४) इति नुट् । 'ऋदुशन—' (७. १. ९४) इत्यादिना अनङ् । अत एव सवर्णदीर्घत्वम् अनेहापीति । अन्यथा यलोपस्यासिद्धत्वान्न स्यात् । समः पूर्वादिणः 'एरच्' (३. ३. ५६) समयः ॥

अथ पक्षतिः ।

**प्रतिपद् द्वे इमे स्त्रीत्वे**

पक्षतिद्वयं **प्रतिपत्तिथौ** । 'पक्षात् तिः' (५. २. २५) पक्षतिः । ङीपि दीर्घान्तापि । प्रतिपद्यतेऽस्यां चन्द्रः क्षयमुदयं चेति प्रतिपत् । सम्पदादिक्विप् ॥

**तदाद्यास्तिथयो द्वयोः ॥ १ ॥**

तदाद्याः प्रतिपद्द्वितीयाद्याः तिथिशब्देनोच्यन्ते । तिथीरति । 'अत सातत्यगमने' । 'ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिष्णुजिसन्स्यनिथिनुल्यसासकाः' (उ० ४. २) इत्यनेनेथिन्प्रत्ययः । पृषोदरादित्वादकारलोपः ॥

**घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।**

घस्रादयः पञ्च **दिवसे** । घसत्यन्धकारमिति घस्रः । बहुलवचनाद् घसेः 'स्फायितञ्चिवञ्चि—' (उ० २. १३) इत्यादिना रक् । 'स्यन्दनाजस्रघस्रा' इति सभेदः । 'दीङ् क्षये' । 'इणसिञ्जिदीङुष्यविभ्यो नक्' (उ० ३. २) । बाहुलको ह्रस्वः । दिनम् । अहन्निति । नञि जहातेः कनिन् । 'दिवादिभ्यः¶ कित्'

१. 'श्वादि' ङ छ पाठः. २. 'ात य' ङ. छ. पाठः ३. 'प्रानपद्द्व' ङ. छ. पाठः.

§ 'कृशिभ्यः कत्नि...ष्ठजिस...कः', ¶ 'दिवः कित्' इति मुद्रितोणादिपाठः

(उ० ३. १२१) इत्यसच् । दिवसः । वसेर्ण्यन्ताद् 'अर्तिकमिचमिभ्रमिदेविवा-शिवासिस्कन्धिभ्यश्चित्' (उ० ३. १३२) इत्यरः । तथा च 'बन्धौ वासरसङ्ग' इति मङ्खिभाषासमावेशः । केचिद् 'वाशृ शब्दे' तालव्यं साधयन्ति ॥

**प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥**
**प्रभातं च**

प्रत्यूषषट्कं प्रभाते । प्रत्यूषति वासरमिति प्रत्यूषः । मूर्धन्यः षः । 'ऊष रुजायाम्' । इगुपधलक्षणः कः । 'प्रत्यूषपूपकषकोष' इति षभेदः । 'प्रत्युषः पारिजात' इति सूर्यशतके मध्यह्रस्वोऽपि । अह्नो मुखम् आरम्भः अहर्मुखम् । 'कल गतौ' । चुरादिण्यन्ताद् 'अचो यत्' (३. १. ९७) । कल्यम् । 'उष दाहे' । 'उषः कित्' (उ० ४. २३९) इत्यसिः । उषः । प्रत्युष इति । प्रति-शब्दात् इतिसृष्टेः । 'ईदूदेद्द्विवचनं प्रगृह्यम्' (१. १. ११) इति प्रगृह्यत्वाद् यणादेशाभावः । बाहुलकाद् भावे तन् । प्रभातम् ॥

**दिनान्ते तु सायः**

दिनान्तद्वयं दिनावसाने । सायं इति । 'षो अन्तकर्मणि' । भावे घञ् । 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युगागमः । तथा च भारविः — 'सायमण्डलमभिलषन्तः' । सायंशब्दो मकारान्तोऽव्ययवर्गे वक्ष्यते । 'सायं सूक्ष्मं मत्स्यसायकद' इति सभेदः ॥

**सन्ध्या पितृप्रसूः ।**

सन्ध्याद्वयं सन्ध्यायाम् । सम्यग् ध्यायन्त्यस्यामिति सन्ध्या । 'ध्यै चिन्तायाम्' । अधिकरणे 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् । पितृप्रसू-रिति । 'सत्सूद्विष—' (३. २. ६१) इत्यादिना क्विप् ॥

**प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यम्**

१. 'भ नप' ङ. छ. पाठः. २. 'षः । ऊ' च. पाठः. ३. 'ति अन्यो' ङ. छ. पाठः. ४. 'स्यर्थम् । ' च. पाठः. ५. 'त' ङ. छ. पाठः. ६. 'यमिति' ङ. छ. पाठः. ७. 'याम् । आ' ङ. छ. पाठः

प्राह्णत्रयं यथाक्रमं **दिनस्याद्यन्तमध्यभागे** । प्रथमं तदहश्चेति प्राह्णः । अहश्शब्दोऽत्र दिनावयववृत्तिः । यथा 'ग्रामो दग्धः' 'पटो दग्ध' इति । 'राजाहस्सखिभ्यष्टच्' (५. ४. ९१) । 'अह्नोऽह्न एतेभ्यः' (५. ४. ८८) इत्यह्नादेशः । 'अह्नोऽदन्तात्' (८. ४. ७) इति णत्वम् । 'रात्राह्नाहाः पुंसि' (२. ४. २९) इति पुंस्त्वम् । अपरमह्न इत्यपराह्णः । 'पूर्वापर—' (२. २. १) इत्यादिना समासः । मध्यमह्नो मध्याह्नः । 'सङ्ख्याविसायपूर्वस्य—' (६. ३. ११०) इति ज्ञापकात् समासः । विशेषणसमासो वा । णत्वबहि†ं सर्वं पूर्ववत् । तिसृणां सन्ध्यानां समाहारस्त्रिसन्ध्यम् । §'वा टाबः' (वा० २. ४. १७) इति नपुंसकत्वम् । 'गोस्त्रियोरुपसर्जनस्य' (१. २. ४८) इति ह्रस्वत्वम् ॥

## अथ शर्वरी ॥ ३ ॥

**निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।**
**विभावरीतमस्विन्यौ रजनिर्यामिनी तमी ॥ ४ ॥**

शर्वर्यादयो द्वादश **रात्रौ** । 'शॄ हिंसायाम्' । 'कॄगॄशॄवृञ्चतिभ्यः ष्वरन्'$ (उ०२. १२१) । शर्वरी । 'शर्वरी शार्वरी शर्या' इति शब्दार्णवः । तनूकरोति सर्वव्यापारमिति निशा । 'शो तनूकरणे' । तालव्यादिः । 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् । निशीथयोगान्निशीथिनी । 'शपथनिशीथकृशानुकिशोरा' इति शभेदः । 'रा दाने' । 'राशदिभ्यां त्रिन्'‡ (उ० ४. ६८) । रात्रिः । 'कृदिकारात्—' (ग०. ४. १. ४५) इति ङीपि रात्री च । यामत्रययोगात् त्रियामा । यद्यपि चतुःप्रहरा रात्रिः, तथापि प्रथमावसानप्रहरै³योरर्धप्रहरौ दिनतुल्याविति । क्षणे⁴म् अव्यापारसुखं ददातीति क्षणदा । तथा च विश्वप्रकाशः— 'क्षणो व्यापारशून्ये स्यात्' । 'क्ष(प) प्रकरणे'* । चुरादिः । अङ् । क्षपा⁵ । पचाद्यच् । टाप् ।

१. 'क्रमेण दि' ङ. छ. पाठः २. 'ष्' क. ग. घ. ङ. च. छ. पाठः. ३. 'रौ दि' क. पाठः. ४. 'णं व्यापारवैकल्यं द' घ. च. पाठः. ५. 'पा इति । प' ख. पाठः.

† णत्ववर्जम् । § 'आबन्तो वा' इति मुद्रितवार्त्तिकपाठः । $ 'ष्वरच्', ‡ 'त्रिप्' इति मुद्रितोणादिपाठः. * 'क्षप प्रेरणे' इत्येव मुद्रितधातुपाठे दृश्यते ।

क्षपा । अथवा 'वासरूपोऽस्त्रियाम्' (३. १. ९४) इति प्रतिषेधस्यानित्यत्वाद् 'अ प्रत्ययात्' (३. ३. १०२) इत्यः । वृणातेः पचाद्यजन्तात् 'पिप्पल्यादयश्च' (ग० ४. १. ४१) इति चकारात् ङीप् । विभावरी । तमोयोगात् तमस्विनी । 'अस्मायामेधास्रजो विनिः' (५. २. १२१) इति विनिः । 'ऋन्नेभ्यो ङीप्' (४. १. ५) इति ङीप् । रजन्ति रागिणोऽत्रेति रजनिः । 'क्षिपेः किच्च' (उ०२. १०७) इति चकारादनिः । ताम्यतेरिन् । तमिः । द्वयं पक्षे ङीषन्तम् । पचाद्यचि टापा तमा च । तथा च विदग्धे—

"विभूषणं किं कुचमण्डलीना कीदृश्युमा चन्द्रमसः कुतः श्रीः ।
किमाह सीता दशवक्त्रनीता हारामहादेवरतातमातः ॥"

## तमिस्रा तामसी रात्रिः

तमोबहुला रात्रिस्तामसी । तत्र तमिस्रा 'ज्योत्स्नातमिस्रा—' (५. २. ११४) इत्यादिना निपातनात् साधुः ।

## ज्यौत्स्नी चन्द्रिकयान्विता ।

चन्द्रिका ज्योत्स्ना । एतद्युक्ता रात्रिर्ज्यौत्स्नी । 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' (वा० ५. २. १०३) इत्यण् ॥

## आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ॥ ५ ॥

आगामिवर्तमानाभ्यां दिनाभ्यां युक्ता निशा पक्षिणी । तौ च दिवसौ पक्षाविव । तद्योगात् पक्षिणी । अत इनिः । 'आगामिवर्तमानाहर्युक्तायामि'ति समासान्तविधेरनित्यत्वान्न टच् । केचिद् रेफरहितं टजन्तमेव पठन्ति ॥

## गणरात्रं निशा बह्व्यः

रात्रिसमूहे गणरात्रम् । रात्रीणां गणः समुदायो गणरात्रम् । राज

१. 'ला क. ख. घ. च. पाठः. २. 'ता भाः । ' ङ. छ. पाठः. ३. 'दिनि' ख. च पाठः. ४. 'क्ता या रा' ङ. छ. पाठः. ५ 'र्णी । आ' ङ. छ. पाठ. ६. 'इतीनिः' घ. च. पाठः. ७. 'धिरनित्य इत्यनि' ङ. छ. पाठः.

दन्तादिः । 'बहुगणवतुडति सङ्ख्या' (१. १. २३) इति सङ्ख्यासंज्ञा । 'अहः-सर्वैकदेश—' (५. ४. ८७) इत्यादिनाच् । 'रात्राह्नाहाः पुंसि' (२.४.२९) इति पुंस्त्वे प्राप्ते 'लोकाश्रयत्वाल्लिङ्गस्ये'ति नपुंसकता ॥

**प्रदोषो रजनीमुखम् ।**

प्रदोषद्वयं **रात्र्युपक्रमे** । 'दुष वैकृत्ये' । मूर्धन्यः षः । पचादिः । टाप् । प्रारम्भो दोषायाः प्रदोषः । प्रादिसमासः । 'एकविभक्ति चापूर्वनिपाते' (१. २. ४४) इत्युपसर्जनसंज्ञा । 'गोस्त्रियोरुपसर्जनस्य' (१. २. ४८) इति ह्रस्वत्वम् । ननु दोषाशब्दोऽव्ययः । तथायमेवाव्यये वक्ष्यति — 'नक्तं च दोषा च रजना-वि'ति । तत् कथं ह्रस्वत्वम् । टाबन्तोऽपि भट्टिकाव्ये दृश्यते इत्यदोषः । तथाहि —

"ततः कथाभिः समतीत्य दोषामारुह्य मैन्यैः सह पुष्पकं ते ।"
(स० २२. श्लो० २४)

इति ॥

**अर्धरात्रनिशीथौ द्वौ**

अर्धरात्रद्वयम**र्धरात्रे** । गणरात्रवदर्धरात्रः । 'अर्धं नपुंसकम्' (२. २. २) इति समासः । शेतेः 'निशीथगोपीथावगथाः' (उ० २. ९) इत्युणादौ तालव्य-वान् निशीथो निपातितः ॥

**द्वौ यामप्रहरौ समौ ॥ ६ ॥**

यामद्वयं **प्रहरे** । उपरमति रात्रिरहश्चानेनेति यामः । 'यमु उपरमे' घञ् । पुंसि संज्ञायां घः प्रहरः ॥

**स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।**

प्रतिपत्पञ्चदश्योरन्तरं मध्यं पर्वसन्धिः ॥

**पक्षान्तौ पञ्चदश्यौ द्वे**

पञ्चदशीशब्देन पूर्णिमामावास्ययोर्ग्रहणम् । पञ्चदशानां पूरणी पञ्चदशी ।

१. 'त्रिप्रक' ङ. छ. पाठः

'तस्य पूरणे डट्' (५. २. ४८)। द्वे पञ्चदश्यौ पूर्णिमामावास्ये पक्षान्तौ ॥

**पौर्णमासी तु पूर्णिमा ॥ ७ ॥**

पौर्णमासीद्वयं **पूर्णिमायाम्**। मीयते तिथीनां क्षयो वृद्धिश्चानेनेति मा-(च?श्च)न्द्रः। स पूर्णो यस्यां सा पौर्णमासी। 'सास्मिन् पौर्णमासी—' (४. २. २१) इति निपातनादण्। पूर्णिमेति। 'पूरी आप्यायने'। नपुंसकभावक्तान्ताद् 'भाववचनादिमब् वक्तव्यः' (वा० ४. ४. २०) इतीमप् ॥

**कलाहीने त्वनुमतिः**

उदयकाले प्रतिपद्योगात् कलाहीने चन्द्रे अनुमतिः। मन्यतेः क्तिन्।

**पूर्णे राका निशाकरे।**

पूर्णे निशाकरे पौर्णमासी राका। 'रा दाने'। 'कृदाधारार्चिकलिभ्यः कः' (उ० ३. ४०) ॥

**अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ८ ॥**

अमावास्याचतुष्कम**मावास्यायाम्**।

''अमा नाम रवे रश्मिश्चन्द्रलोके प्रतिष्ठितः।
तत्र सोमो वसेद् यस्मादमावास्या ततः स्मृता ॥''

इति। 'अमावस्यदन्यतरस्याम्' (३. १. १२२) इति ण्यति पाक्षिकवृद्ध्यभावे अमावस्या। दर्शोऽमामा(वा?व)सी च सा' इति रभसः। भद्रमङ्गलवद् अदर्श एव दर्शः ॥

**सा दृष्टेन्दुः सिनीवाली**

सा अमावास्या उदयकाले प्रतिपद्योगाद् दृष्टेन्दुः सिनीवाली। सह एन विष्णुना वर्तत इति सा लक्ष्मीः। तद्योगाद् व्रीह्यादिरिनिः। 'यस्येति च'[४]

१. 'द्। प' ङ. छ. पाठः. २. 'रा आदा' ङ. छ. पाठः. ३. 'वा' च. पाठः. ४. 'स्येत्या' क. घ. ङ. च. छ. पाठः.

(६. ४. १४८) इत्याकारलोपः । सिनी चन्द्रकला । सा कला बाली अल्पा अत्रेति सिनीबाली । 'पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च' (४. १. ६४) इति ङीष् ॥

**स्यान्नष्टेन्दुकला कुहूः ।**

उदयकाले अमावास्यायोगान्नष्टेन्दुकलामावास्या कुहूः । 'कुह विस्मापने' । चौरादिकः । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (उ० १. ८४) इति बहुलवचनाद् ऊप्रत्ययः ॥

**उपरागो ग्रहः**

राहुणा चन्द्रसूर्ययोर्ग्रहणे उपरागद्वयम् । 'रञ्ज रागे' । भावे घञ् । रञ्जेः 'घञि च भावकरणयोः' (६. ४. २७) इत्यनुनासिकलोपः । ग्रह इति । भाव एव 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप् ॥

**राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥**

**सोपप्लवोपरक्तौ द्वौ**

सोपप्लवद्वयं राहुग्रस्ते चन्द्रे चादित्ये च । सोपप्लव इति । 'वोपसर्जनस्य' (६. ३. ८२) इति सभावः । उपरक्तः । कर्तरि क्तः ॥

**अग्न्युत्पात उपाहितः ।**

अग्न्युत्पातद्वयमग्नेरन्यथात्वे । तथाहि — प्रकृतेरन्यथात्वमुत्पात इत्युक्तम् । 'दधातेर्हिः' (७. ४. ४२) इति हिरादेशः । उपाहितः ॥

**एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥ १० ॥**

एकयोक्त्या प्रयुक्त्या एकदैव विवक्षायां दिवाकरनिशाकरौ पुष्पवन्ता-

१. 'ला अत्रे' घ. पाठः. २. 'क्षया दि' च. पाठः.

विति व्यपदिश्येते । शृङ्गारप्रकाशे तु सरूपैकशेषोऽयं दर्शितः । नाममालायां तु 'रविशशिनौ पुष्पवन्ताख्यावि'त्यदन्तः । दिवाकरनिशाकरावित्यत्र 'देवताद्वन्द्वे च' (६. ३. २६) इति न पूर्वपदस्यानङ्, वेदलोकयोरप्रसिद्धत्वात् । अत एव 'रविचन्द्रावपि नोपलक्षितौ' इति घटकर्परः ॥

**अष्टादश निमेषास्तु काष्ठा**

पुंसो यावत्कालेनाकृत्रिमनेत्रविकासानन्तरं पक्ष्माकुञ्चनं जायते, स निमेषः । तेऽष्टादश काष्ठा दिक्पर्याय उक्ता । समूहवचनत्वात् काष्ठेत्येकवचनम् । एवं सर्वत्र बोद्धव्यम् ॥

**त्रिंशत् तु ताः कला ।**

ताः काष्ठास्त्रिंशतं कला । 'कल सङ्ख्याने' । पचादिः ॥

**तास्तु त्रिंशत् क्षणः**

कलास्त्रिंशत् क्षणः । 'क्षण हिंसायाम' । पचादिः ॥

**ते तु मुहूर्तो द्वादशास्त्रियाम् ॥ ११ ॥**

क्षणा द्वादश मुहूर्तः । 'हुर्छा कौटिल्ये' । बाहुलकादस्माद् 'अञ्जिघृषिभ्यः क्तः' (उ० ३. ८०) मुट् चागमः । 'राल्लोपः' (६. ४. २१) इति छस्य लोपः ॥

**ते तु त्रिंशदहोरात्रः**

मुहूर्तास्त्रिंशदहोरात्रः । गणरात्रवदत् । 'अहो रुविधौ रूपरात्रिरथन्तरेषु वक्तव्यम्' (वा० ८. २. ६८) इति रुत्वम् ॥

**पक्षस्ते दश पञ्च च ।**

१. 'त तु क' ख. पाठः.

अहोरात्राः पञ्चदश पक्षः। पचेर्बाहुलकाद् 'वृतृवदिहनिकमि¶कषियुमु-चिभ्यः सः' (उ० ३. ६२)॥

**पक्षौ पूर्वापरौ शुक्लकृष्णौ**

ज्यौतिषक्रमेण शुक्लपक्षः पूर्वसंज्ञः, कृष्णपक्षोऽपरसंज्ञः। अत एव कृष्णपक्षेऽपरपक्ष इति रूढिः॥

**मासस्तु तावुभौ॥ १२॥**

उभौ पक्षौ मासः। 'मसी परिमाणे'। 'हलश्च' (३. ३. १२१) इति करणे घञ्॥

**द्वौ द्वौ माघादिमासौ स्याद् ऋतुः**

द्वौ द्वौ[1] माघादिमासौ ऋतुः। 'ऋ गतौ'। 'अर्तेश्च तुः' (उ० १. ७४) इति तुः। स च किच्च। माघफाल्गुनौ शिशिरर्तुः। एवं द्वाभ्यां द्वाभ्यामपरे पञ्च। ननु 'षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमाद्' इति वक्ष्यति। अथ कथं द्वौ द्वौ[2] माघादिमासावृतुः। उच्यते। एतदयनप्रदर्शनार्थमुक्तम्। मार्गादि-मासावित्युच्यमाने हेमन्तशिशिरवसन्तैर्भ्रमयनमुक्तं स्यात्। न च तैरयनं, किन्तु शिशिरवसन्तग्रीष्मैरिति॥

**तैरयनं त्रिभिः।**

ऋतुभिस्त्रिभिरयनम्। 'इण् गतौ'। भावे ल्युट्॥

**अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः॥ १३॥**

उदगुत्तरा गतिर्माघादारभ्याषाढान्तमुत्तरायणम्। दक्षिणा गतिः श्रावणा-दारभ्य पौषं यावद् दक्षिणायनमित्ययने द्वे वत्सरः॥

**समरात्रिन्दिवे काले विषुवद् विषुवं च तत्।**

१. 'वि' च., 'पि' ङ. छ. पाठः.  २. 'द्वौ मा' च. पाठः.

¶ 'कषिभ्यः सः' इति मुद्रितोणादिपाठः.

विषुवद्द्वयं विषुवे । विषुशब्दान्मतुप् । 'संज्ञायाम्' (८. २. ११) इति वत्वम् । विषुवत । 'वप्रकरणेऽन्यत्रापि' (वा० ५. २. १०९) इति वः । विषुवम् । 'विषुवं विषुवद् विभूषणमि'ति षभेदः । 'विषुवान् समरात्रिवासरः कालः' इति पुंस्काण्डे वोपालितः । 'विषुशब्दोऽप्यत्रे'ति रक्षितः ।

"पुष्ययुक्ता पौर्णमासी पौषी मासे च यत्र सा ।
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥"

इति पुस्तकान्तरे पाठः । अस्यार्थः— पुष्यर्क्षयुक्ता पौर्णमासी यस्मिन् मासे सा पौर्णमासी पौषी । तया युक्तोऽपि यो मासः, सोऽपि पौषः । एवमपरे माघाद्या बोद्धव्याः ॥

## मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥

मार्गशीर्षचतुष्कं मार्गशीर्षमासे । मृगशिरोयुक्ता पौर्णमासीति 'नक्षत्रेण युक्तः कालः' (४. २. ३) इत्यण् । 'अजादौ तद्धिते शिरसः शीर्षादेशो वक्तव्यः' (वा० ६. १. ६१) इति शिरसः शीर्षादेशः । मार्गशीर्षी । सास्मिन् पौर्णमासीति मार्गशीर्षो मासः । 'सास्मिन् पौर्णमासीति संज्ञायाम्'[३] (४. २. २१) इत्यण् । सहो बलमस्यास्तीति सहाः । वैद्यके बलाधायकत्वं मार्गमांसस्योक्तम् । सहःशब्दाद् 'मत्वर्थे मासतन्वोः' (४. ४. १२८) इति मासे वाच्ये मत्वर्थे यत् । तस्य 'लुगकारेकाररेफाश्च वक्तव्याः' (वा० ४. ४. १२८) इति लुक् । यदा तु न लुक्, तदा सहस्यः । तथा च—

"सहस्यप्रथमे (वे ? चै)व वाहयेद् दोषसञ्चयम्"

इति चरकः । 'तत्र मार्गे सहः सहा' इति शब्दार्णवः । अतः सान्तोऽदन्तश्च । मृगशिरा एव मृगः । तथा च—'मृगशिरो मृग' इति रुद्रः । तद्युक्ता पौर्णमासी मार्गी । 'सास्मिन् पौर्णमासी—' इत्यणि मार्गः । आग्रहायणीयोगादाग्रहायणिकः । 'आग्रहायण्यश्वत्थाट्ठक्' (४. २. २२) ॥

१. 'वं विषुवद्' क. घ. ङ. च. छ. पाठः. २. 'ष्ययु' क. ख. ङ. छ. पाठः. ३. 'यण्' क. घ. ङ. च. छ. पाठः. ४. 'शीर्षस्यो' ङ. छ. पाठः.

**तषसहस्यौ**

पौषत्रयं **पौषे**। पौषतैषयोर्नक्षत्रादण्। 'यलोपो वक्तव्यः' (वा० ६. ४. १४९) इति विशेषः। ततः पूर्ववदण्। सहोवर्धकत्वात् सहस्यः। 'तत्र साधुः' (४. ४. ९८) इति यत्॥

**तपा माघे**

तपोद्वयं **माघे**। पुण्यमासत्वात् तपोऽत्र वर्धत इति तपाः। सान्तः। सहोवत्। तथा च—'तपासि मन्दगभस्तिरभीशुमान्' इति। ग्रीष्मवाची त्वकारान्तः। मार्गवन्माघः॥

**अथ फाल्गुने।**

**स्यात् तपस्यः फाल्गुनिकः**

फाल्गुनत्रयं **फाल्गुने**। 'फलेर्गुक् च' (उ० ३. ५६) इत्युनन्नन्तो ह्रस्वादिरिति वर्णदेशना।

"फाल्गुनस्त्वर्जुने मासे फाल्गुनी चास्य पूर्णिमा"

इति धरणिकोशे दीर्घादिरपि। फाल्गुनिक इति। 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' (४. २. २३) इति नक्षत्राणन्तेभ्यः सास्मिन्नर्थे ठगणौ॥

**स्याच्चैत्रे चैत्रिको मधुः॥ १५॥**

चैत्रत्रयं **चैत्रे**। मधुरिति। 'मन ज्ञाने'। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधताश्च' (उ० १. १८) इति उः धश्चान्तादेशः॥

**वैशाखे माधवो राधः**

वैशाखत्रयं **वैशाखे**। कुसुमगतं मध्वत्रास्तीति माधवः। मत्वर्थे 'मधोर्ञ

१. 'कः। वि', २. 'पी' ख. पाठः.

च' (४. ४. १२९) इति ञः । मार्गवद् राधः ॥

**ज्यैष्ठे शुक्रः**

ज्यैष्ठद्वयं **ज्यैष्ठे** । ज्यैष्ठ इत्यण्द्वयेन ।

"ज्येष्ठो मासि च वृद्धे च ज्येष्ठा च गृहगोधिका"

इति त्रिकाण्डशेषः । शुक्र उक्तः ॥

**शुचिस्त्वयम् ।**

**आषाढे**

शुचिद्वयमाषाढे । अग्नौ शुचिरुक्तः । 'स्यादाषाढे त्वषाढकः' इति शब्दार्णवः । 'तुराषाडाषाढ' इति षभेदः । आशा दिशो ढौकते इत्याशाढस्तालव्यवानपीति केचित् । तदा च डप्रकरणे *'अन्यत्रापि—' (३. २. १०१) इति डः । अत्र प्रमाणं चिन्त्यमिति हड्डचन्द्रः ॥

**श्रावणस्तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥**

श्रावणत्रयं **श्रावणे** । श्रावणो मध्यवकारः । तथा च रभसः—

"स्त्रीपुंसयोर्ऋक्षभेदे श्रवणं श्रुतिकर्णयोः"

इति । नभो मेघोऽस्यास्तीति नभाः ॥

**स्युर्नभस्यप्रोष्ठपदभाद्रभाद्रपदाः समाः ।**

नभस्यचतुष्कं **भाद्रे** । सहस्यवन्नभस्यः । मार्गवद् भाद्रः । एकदेशेनापि व्यवहारो भवति । यथा सत्यभामा भामेति । पूर्ववदण्द्वयेन भार्द्रपदादीनां व्यु-

१. 'श्च' क. घ. च. पाठः. २. 'ञः । 'मघोरञ् च' इत्यण् इति केषाञ्चित् सू...पाठः मा' ङ. छ. पाठः. ३. 'भो' ङ. छ. पाठः. ४. 'द्रार्दा' ङ. छ. पाठः.

* 'न्येष्वपी'ति मुद्रिताष्टाध्यायीपाठः

त्पत्तिर्नक्षत्रपर्याये दर्शिता ॥

**स्यादाश्विन इषोऽप्याश्वयुजोऽपि**

आश्विनत्रयमाश्विने । 'इष गतौ' । एषणम् इट् यात्रा । सा अस्मिन् मासे जिगीषावतामस्तीति इषः । अर्शआद्यच् ।

"श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः"

(स० ६. श्लो० ४९)

इति माघयमकाद् ह्रस्वादिमूर्धन्ये ॥

**स्यात् तु कार्त्तिकः ॥ १७ ॥**

**बाहुलोर्जौ कार्त्तिकिकः**

कार्तिकचतुष्कं कार्त्तिके । 'ऊर्जमुत्साहमाहुरि'ति नाममाला । तदस्मिन् मासे जिगीषावतामस्तीति ऊर्जः । अर्शआद्यच् । सर्वमपरं पूर्ववत् ॥

**हेमन्तः**

हेमन्ततौं हेमन्तः । एतच्च मार्गपौषयोः । हन्तीति हेमन्तः । 'हन्तेर्मुट् हिश्च' (उ० ३. १२९) इति झच् हिरादेशो मुडागमश्च ॥

**शिशिरोऽस्त्रियाम् ।**

शिशिरर्तौ शिशिरः । द्वितालव्यः । एतन्माघफाल्गुनयोः । 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' (उ०१. ५) इत्यनेन 'शश प्लुतगतौ' निपातितः ॥

**वसन्ते पुष्पसमयः सुरभिः**

वसन्तत्रयं वसन्ते । एतच्चैत्रवैशाखयोः । वसति कामोऽस्मिन्निति वसन्तः । जयन्तवत् झच् । मल्लिकादिपुष्पाणां समयः कालः पुष्पसमयः । सुष्ठु रभ-

१. 'ट च' क. घ. च., 'क् च' ङ. छ. पाठः.

न्ते रभसप्राया अत्र भवन्तीति सुरभिः। सुपूर्वाद् रभेः *'इन् सर्वधातुभ्यः' (उ० ४. ११९) इतीन् ॥

**ग्रीष्म ऊष्मकः ॥ १८ ॥**

**निदाघ उष्णोपगम उष्ण उष्णागमस्तपः।**

ग्रीष्मसप्तकं ग्रीष्मे। एतज्ज्येष्ठाषाढयोः। ग्रीष्म इति। गिरतेः 'ग्रीष्मः' (उ० १. १५५) इत्यनेनौणादिकसूत्रेण मक्प्रत्ययः ग्री इत्ययमादेशः षुगागमश्च निपातितः। ऊष्मैवोष्मकः। 'उष दाहे'। बाहुलकान्मनिन्दीर्घत्वे। 'ऋतावुष्णशीते'¶ इति यावादिपाठात् कन्।

"ऊष्मो घर्मेऽश्रुणि ज्यैष्ठे पुमानूष्मा स्त्रियां त्विषि"

इत्यदन्तेऽपि तारपालः। निदाघ इति। 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ्। न्यङ्क्वादिकुत्वम्। उष्णानामुपगमोऽत्रेत्युष्णोपगमः। उष्ण इति। 'उष दाहे'। 'इण्सिजिदीङुष्यविभ्यो नक्' (उ० ३. २)। उष्णागम इत्युपसर्गनियमार्थम्। तपतीति तपः। पचाद्यच्। तथा च माघे—

"तपेन वर्षाः शरदा हिमागमः"

इति ॥

**स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः**

प्रावृड्द्वयं वर्षासु। तच्च श्रावणभाद्रपदयोः। प्रावृट् षान्ता। 'प्रृषु वृषु सेचने'। सम्पदादिक्विप्। 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (६. ३. ११६) इति पूर्वपदस्य दीर्घत्वम्। वर्षणं वर्षाः। अर्शआद्यच्। भूम्नीति बहुत्वे ॥

**अथ शरत् स्त्रियाम् ॥ १९ ॥**

१ 'ति घ' ङ. छ. पाठः. २. 'वृषु प्रृषु से', ३. 'ददी' ख. च. पाठः.

* 'सर्वधातुभ्य इन्' इति मुद्रितोणादिपाठः। ¶ 'ऋतावूष्मशीते' इत्येव गणसूत्रपाठः सर्वानन्देन दृष्टः स्यात्। 'उष्णशीते' इतीह लेखनं तु लेखकभ्रमकृतं स्यात्।

शरदि शरत् । दान्ता । तदाश्विनकार्त्तिकयोः । 'शॄ हिंसायाम्' । 'शॄदृभसोऽदिः' (उ० १. १३९) ॥

**षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।**

अमी षडुक्ता मार्गादीनां युगैर्ऋतव उच्यन्ते । ऋतवः पुंसीति सम्बन्धः ॥

**संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समा ॥ २० ॥**

संवत्सरादयः षट् संवत्सरे । संपूर्वाद् वसेः *'संपरिपूर्वाच्चिच्च' (उ० ३. ७२) इति सरन् । 'सः स्यार्धधातुके' (७. ४. ४९) इति धातुसकारस्य तकारः । पक्षे 'वा पदान्तस्य' (८. ४. ५९) इति परसवर्णत्वेन सानुनासिको वकारः । अन्तःस्था द्विप्रभेदाः सानुनासिका निरनुनासिकाश्चेति । एवं द्वे रूपे । सव्वँत्सरः संवत्सरः । केचित् 'पॆद स्थैर्ये' सम्पत्सर इति मकारवदपरं रूपं समादधते । एवं सम्पॆदादयोऽपि । वत्सर इति । 'वसेश्च' (उ० ३. ७१) इति सरन् । अब्द इति । 'आप्ऌ व्याप्तौ' । 'अब्दादयश्च' (उ० ४. ९९) इत्यनेन दन् आदिह्रस्वत्वं च । हायन इति । 'हश्च व्रीहिकालयोः' (३. १. १४८) इति ल्युट् युगागमः । हायनोऽस्त्रीति सम्बन्धः । समेति । 'सम ष्टम वैक्लव्ये' । दन्त्यादिः । पचाद्यच् । टाप् । समा बहुवचनान्ता इति केचित् । तथा च वामनः—

"बह्वश्च समासिकतावर्षाप्सुमनोजलौकसोऽप्सरसः"

इति । अन्ये नानुमन्यन्ते । तथा च 'समां समां विजायते' (५. २. १२) इत्यत्र वृत्तिः—'समायां समायां विजायत इत्यर्थः' ॥

**मासेन स्यादहोरात्रः पैत्रः**

१. 'त्'. २. 'व' ङ. छ. पाठः. ३. 'म्त्र' क. पाठः. ४ 'ट् । हा' क. ङ. च. पाठः. ५. 'ह्वयश्च' च. पाठः.

'सपूर्वोच्चित्' इति मुद्रितोणादिपाठः ।

मानुषेण मासेन पितॄणां कव्यवालादीनामहोरात्रः ॥

**वर्षेण दैवतः ।**

मनुष्याणामेव वर्षेण देवानामहोरात्रः । पैत्रदैवतयोः शेषेऽण् । तत्रोत्तरायणं देवानां दिनं, दक्षिणायनं रात्रिरिति व्यवस्था ॥

**दैवे युगसहस्रे द्वे ब्राह्मः**

देवानां युगसहस्रद्वयेन ब्रह्मणोऽहोरात्रः । ब्राह्म इति पूर्ववदण् । 'ब्राह्मोऽजातौ' (६. ४. १७१) इति टिलोपः । मानुषेण चतुर्युगेन देवानामेकं युगम् । लैङ्गे युगमानं यथा—

"पूर्वं कृतयुगं नाम ततस्त्रेता विधीयते ।
द्वापरश्च कलिश्चैव युगान्येतानि सुव्रताः ॥
सहस्राणां शतान्यासंश्चतुर्दश च सङ्ख्यया ।
चत्वारिंशत्सहस्राणि तथान्यानि कृतं युगम् ॥
तथा दशसहस्राणि वर्षाणां शतसङ्ख्यया ।
अशीतिश्च सहस्राणि कालस्त्रेतायुगस्य च ॥
सप्तैव नियुतान्याहुर्वर्षाणां मानुषाणि तु ।
विंशतिश्च सहस्राणि कालः स द्वापरस्य तु ॥
तथा शतसहस्राणां वर्षाणां त्रीणि सङ्ख्यया ।
षष्टिश्चैव सहस्राणि कालः कलियुगस्य तु ॥
एवं चतुर्युगः कालः ऋते सन्ध्यांशकात् स्मृतः ।"

ज्योतिषे तु—

"वस्वश्विमैत्रा ऋतुरन्ध्रमासा वेदा रसाष्टा(?) भुजवह्निदेहाः ।
एतानि शून्यत्रयताडितानि युगाब्दसङ्ख्याः परिकीर्तितानि[1] ॥"

इति । एतत् तु मानुषमानेन सत्यादीनां मानम् । तदङ्केनापि[2] यथा — सत्यस्य

१. 'नि । ए' क. ड. ञ. छ. पाठः. २. 'दशकेना' ड. छ. पाठः.

१७२८००० । त्रेतायाः १२९६००० । द्वापरस्य ८६४००० । कलेः ४३२००० । इदानीं चैकाशीतिवर्षाधिकसहस्रैकपर्यन्तेन शकाब्दकालेन (१०८१) षष्टिवर्षाधिकद्विचत्वारिंशच्छतानि[1] कलिसन्ध्याया भूतानि (४२६०) । तथा च गणितचूडामणौ श्रीनिवासः—

" कलिसन्ध्यायाः खसमयकरकृतवर्षाणि " (?) (४२६०) ॥

**कल्पौ तु तौ नृणाम् ॥ २१ ॥**

तच्च ब्रह्मणो दिनं नृणां द्वौ कल्पौ । अत्रापि स्थितिकालो भूतानां ब्रह्मणो दिनम् । प्रलयकालश्च भूतानां ब्रह्मणो रात्रिः । तथा च लैङ्गे—

" चतुर्युगसहस्रो वै कल्पश्चैको द्विजोत्तमाः ! ।
निश्यन्ते सृजते लोकान् नश्यन्ते निशि जन्तवः ॥
कोटीनां द्वे सहस्रे तु अष्टौ कोटिशतानि च ।
द्विषष्टिश्च तथा कोट्यो नियुतानि च सप्ततिः ॥
कल्पान्तसङ्ख्या दिव्या वै कल्पमेवं तु कल्पयेत् ।
कल्पानां वै सहस्रं तु वर्षमेकमजस्य तु ॥
कल्पानामष्टसाहस्रं ब्राह्मं वै ब्रह्मणो युगम् ।"

इति ॥

**मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ।**

दिव्यानां युगानामेकसप्ततिर्मन्वन्तरम् । अन्यो मनुरन्यस्मिन्निति मन्वन्तरम् । 'सुप्सुपा' (२. १. ४) इति समासः । तदुक्तं लिङ्गपुराणे[3]—

" एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः ।
कृतत्रेतायुगादीनां मनोरन्तरमुच्यते ॥
मन्वन्तरस्य सङ्ख्या च वर्षाणामिह कीर्तिता ।
त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण द्विजोत्तमाः ! ॥

१. 'द्वा' च. पाठः. २. 'य' ङ. छ. पाठः. ३. 'लै' ख. पाठः. ४. 'दियुक्तानां' क. ङ. च. छ. पाठः. ५. 'ग्रेणेह' ङ. छ. पाठः.

सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु ।
विंशतिश्च सहस्राणि कालो यः साधिकं विना ॥
मन्वन्तरस्य सङ्ख्यैषा लिङ्गेऽस्मिन् कीर्तिता द्विजाः ! ।
मनवश्च ब्रह्मसुताश्चतुर्दश भवन्ति वै ॥"

तथा च विष्णुपुराणे—

"स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ।
औत्तमिस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
षडेते मनवोऽतीताः साम्प्रतं तु मनोः सुतः ।
वैवस्वतोऽयं यस्यैतत् सप्तमं वर्तते युगम् ॥"

इत्यादि ॥

**संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २२ ॥**

संवर्तपञ्चकं **प्रलये** । संवर्तते उपरमतेऽत्रेति संवर्तः । 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ् । अत्र वर्ततेरवसानमर्थः । तथा च लोके—'अमुको निवृत्तः' । उपरत इत्यर्थः । 'लीङ् श्लेषणे' । 'एरच्' (३. ३. ५६) । प्रलयः । क्रृपेरच् । कल्पः । 'कृपो रो लः' (८. २. १८) इति लत्वम् । 'क्षि क्षये' । पुंसि संज्ञायां घः । क्षयः । कल्पस्य सृष्टेरन्तः कल्पान्तः ॥

**अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम् ।**
**कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम् ॥ २३ ॥**

पङ्कादयो द्वादश **पापे** । 'पचि व्यक्तीकरणे' । 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति घञ् । पङ्कम् । पाप्मेति 'नामन्[1]—' (उ० ४. १५२) आदिसूत्रे पातेर्मन्पुगागमाभ्यां निपातितः । 'पानीविषिभ्यः पः' (उ० ३. २३) । पापम् । 'किल श्वै[2]त्यक्रीडनयोः' । 'किलेर्बुक् च' (उ० १. ५०) इति

१. 'नसामन्नादि' क. ख., 'नृपामन्नादि' ङ. छ. पाठः. २. 'शै' क. ख. ङ. पाठः.

टिषच् बुगागमश्च । किल्बिषम् । शुभं कर्म श्यति तनूकरोतीति कल्मषम् । पृषोदरादिः । कलुषमिति । 'पृ*हनिकलिभ्य उषच्' (उ० ४. ७६) । त्रीण्येव मूर्धन्यषाणि । 'वृजी वर्जने' । 'वृजेः किच्च' (उ० २. ४९) इति इनच्प्रत्ययः । वृजिनम् । गच्छत्यधोऽनेनेति एनः । 'इण् गतौ' । 'इण आगसि' (उ० ४. १९९) इति नुट् असुन् च । न हन्ति धन्यमित्यघम् । डप्रत्ययः न्यङ्क्वादिकुत्वं च । अंह इति । 'अहि गतौ' । 'सर्वधातुभ्योऽसुन्' (उ० ४. १९०) । 'अमेर्हुक् च' (उ० ४. २१४) इत्यनेन वा हुगागमासुनौ । केचिदत्र 'शीघ्रमङ्घोविघातमि'ति सूर्यशतकानुप्रासदर्शनाद् घकारमपि कल्पयन्ति । तदप्रामाणिकम् । यतो हकारघकाराभ्यामेव नागरो नामायमनुप्रासः । तदुक्तं सरस्वतीकण्ठाभरणे—

"एकत्वं बुद्धिभेदेऽपि तत्त्वेऽप्येकत्व[2]निह्नवैः ।
यस्य वर्णस्य तं प्राहुरनुप्रासस्य जीवितम् ॥"

यथा-

"हरेर्लङ्घितघर्मांशुर्व्योम्नि दीर्घेण रंहसा ।
बलिबन्धनघोरोऽङ्घ्रिरंहस्सङ्घं निहन्तु वः ॥"

अत्र हकारघकारयोर्भेदेऽपि तुल्यस्थानत्वादेकत्वबुध्या नागरानुप्रासोऽयमि"ति । दुष्पूर्वादिणो 'नपुंसके भावे क्तः' (३. ३. ११४) । दुरितम् । दुः निन्दितं कृतं करणमस्येति दुष्कृतम् । पूर्ववत् क्तः । 'इदुदुपधस्य चाप्रत्ययस्य' (८. ३. ४१) इति षत्वम् ॥

**स्याद् धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।**

धर्मपञ्चकं **धर्मे** । धरति विश्वमिति धर्मः । सोमवन्मन् । 'पूञो णु$ड्ह्रस्वश्च'

१. 'स्य' क. घ. ङ. च. छ. पाठः. २. 'च' . छ. पाठः. ३. 'स्य' ङ. छ., 'स्तु' च. पाठः. ४. 'वः । अत्र' ङ. छ. पाठः. ५. 'त्यप्रस्था' घ. च. पाठः.

* 'नहिक' इति मुद्रितोणादिपाठः । $ 'यण्णुग् ह्रस्वश्चे'ति मुद्रितोणादिपाठः ।

(उ० ५. १९) इति यण्णुडागमह्रस्वत्वानि । पुण्यम् । श्रेय इति । इदमनयोरतिशयेन श्रेष्ठमित्यस्मिन्नर्थे 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५. ३. ५७) इतीयसुन् । प्रशस्यशब्दात् 'प्रशस्यस्य श्रः' (५. ३. ६०) इति श्रादेशः । शोभनं कृतं सुकृतम् । वर्षति वाञ्छितमिति वृषः । 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५) ॥

**मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ॥ २४ ॥**
**स्यादानन्दथुरानन्दः शर्मसातसुखानि च ।**

मुदादयो द्वादश प्रीतौ । मोदतेः सम्पदादिक्विप् । मुत् । प्रीणः स्त्रियां क्तिन् । प्रीतिः । प्रीतिसाहचर्यान्मुदः स्त्रीत्वम् । 'प्रमदसम्मदौ हर्षे' (३. ३. ६८) इत्यनेनेतौ निपातितौ । हर्षप्रमोदामोदा भावघञन्ताः । आनन्दथुरिति । 'टुनदि समृद्धौ' । 'द्वितोऽथुच्' (३. ३. ८९) । अस्मादेव धातोरानन्दः । घञ् । शृणात्यशुभमिति शर्म । 'सर्वधातुभ्यो मनिन्' (उ० ४. १४६) क्षिणोत्यशुभमिति सातम् । 'षै क्षये' । बाहुलकादस्माद् 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' (उ० ३. ८६) इति तन् । अस्मादेव सायतेरधिकरणे वा सनोतेः कर्मणि वा क्तः । सायतेः 'आदेच उपदेशेऽशिति' (६. १. ४५) इत्यात्वम् । सनोतेः 'जनसनखनाम्—' (६. ४. ४२) इत्यादिनात्वम् । अयं च दन्त्यादिः । तथा च देवीशतकेऽनुलोमप्रतिलोमयमकं—

"सा भावक्षालवर्या नुतविभवितनुर्या वलक्षावभासा
जानानस्याशयप्रा नवनलिनवनप्रायशस्याननाजा ।
सातं वसानस्था रहसि रसिहरस्थानननसावतंसा
पायादक्ता गणत्रा मतनमनतमत्राणगक्ता दयापा ॥"

अस्यार्थः— 'या भावक्षालवर्या भावशुद्धिवरणीया । नुतविभवितनुः स्तुतसमर्थतनुः । वलक्षावभासा शुक्लदीप्तिः । जानानस्याशयप्रा जानानस्याशयपूरिका । नवनलिनवनप्रायशस्यानना नवपद्मवनोपमप्रशस्यवक्त्रा । अजा अजाता । सातं सु-

१. नेत्यादिना ईयसुन ।' ङ. छ. पाठः. २. 'वे घ' ख. च. पाठः.

ग्वम् वर्म सन्नाहः। आननस्था वक्त्रस्था सती। रहसि विजने। रसिहरस्थाननर्मावतंसा रसिकहरस्थानक्रीडाभूषणा। सा पायात्। अक्ता पूजिता। गणत्रा गणरक्षिका। मतनमनतमत्राणरक्ता एकान्तसम्मतप्रणामरक्षणरक्ता। दयापा दयारक्षिका' इति। सुष्ठु खनत्यशुभामिति सुखम्। 'जातिकालसुखादिभ्योऽनाच्छादनात्' (६. २. १७०) इत्यादिस्वरसूत्रे सुखशब्दनिर्देशदर्शनात् सुपूर्वात् खनेः। 'डोऽन्यत्रापि दृश्यते' इति वा. 'अमन्ताड्डः' इति वा डः॥

**श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्॥ २५॥**

**भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्।**
**शस्तं च**

श्वःश्रेयसद्वादशकं **कल्याणे**। श्वःश्रेयसमिति मयूरव्यंसकादिसमासः। 'श्वसो वसीयः श्रेयसः' (५. ४. ८०) इत्यच् समासान्तः। शिवशब्द उक्तः। 'भदि कल्याणे'। 'ऋज्रे—' (उ०२. २१) इत्यादिना रः दश्चान्तादेशः। भद्रम्। कल्यं सुखमणतीति कल्याणम्। 'कर्मण्यण्' (३. २. १)। मङ्गेः 'वृषादिभ्यः कलच्' (उ०. १. १११)। मङ्गलम्। शुभेरिगुपधलक्षणः कः। शुभम्। धन्येषु भवितुं शीलमस्येति भावुकम्। 'लषपतपद—' (३. २. १५४) इत्यादिना ताच्छीलिक उकञ्। 'भवो भद्राप्तिसत्तास्वि'त्यजयः। अतो भवो वाञ्छितप्राप्तिरत्रास्तीति भविकम्। 'अत इनिठनौ' (५. २. ११५) इति ठन्। भव्यम्। 'भव्यगेय——' (३. ४. ६८)आदिसूत्रेण साधु। कुशेः सौत्राद् वृषादित्वात् कलच्। कुशलम्। 'राम इव कुशलवयो रूपोच्छ्राय' इति तालव्यश्लेषः। 'कुरङ्गैरिव कुशलवादिभिरि'त्याश्चर्यमञ्जरी च। 'कुष निष्कर्षे' इत्यस्मान्मूर्धन्यपमिति केचित्। धातवश्च शृङ्गारप्रकाशे षट्प्रकारा उक्ताः। परिपठिताः, अपरिपठिताः, परिपठितापरिपठिताः, प्रत्ययधातवः, नामधातवः, प्रत्ययनामधातवश्च। तत्र परिपठिता भूवादयः। अपरिपठिता आन्दोलयत्यादयः। यथा—

१ 'नतेऽङ्गे:' ङ. छ. पाठः. २. 'वन शी' क. ङ. छ. पाठः. ३. 'धुः' ट च. छ. पाठः. ४. 'भिर्भिक्षुरि' ख. ङ. छ. पाठः ५. 'री। कु' ङ. छ. पाठः.

"नीपानान्दोलयत्येष प्रेङ्खोलयति मे मनः ।
पवनो वीजयन्नाशां मानाशामुच्चुलुम्पति ॥"

सौत्रधातवः परिपठितापरिपठिताः (स्तम्भु)प्रभृतयः । सनाद्यन्ताः प्रत्ययधातवः । कण्ड्वादयो नामधातवः । येभ्यः परिपठितधातुभ्यो नामत्वसिद्धये नामभ्यो धातुत्वसिद्धये क्विबादिप्रत्यया लुप्यन्ते, तत्प्रत्ययेन नामानि धातवश्चेति प्रत्ययनामधातवः । यथा —

"गिरा गीर्ब्रह्मयामाशीश्रियः प्रतिभुवौ तव" (?)

इति । क्षिणोत्यशुभामिति क्षेमम् । धर्मवन्मानिन् । क्षेममस्त्रियामिति सम्बन्धः । शस्तमिति । 'शंसु स्तुतौ' । 'नपुंसके भावे क्तः' (३. ३. ११४) । 'यस्य विभाषा (७. २. १५) इति निष्ठायामिट्प्रतिषेधः ॥

## अथ त्रिषु द्रव्ये पापपुण्यसुखादि च ॥ २६ ॥

एते पापादयो गुणे वाच्ये यथोक्तलिङ्गाः । यौ पुनरेतौ पापपुण्यौ सुखादीनि शस्तान्तानि द्रव्ये विशेष्ये वर्तमानानि, तानि त्रिषु । तद्यथा —

"पापा ऋतुमती कन्या पापो राजा निरक्षरः ।
पापं व्याधकुलं हिंस्रं पापो विप्रश्च सेवकः ॥"

इति ।

"पुण्यं तीर्थमिदं पुण्या नदी पुण्योऽयमाश्रमः"

इति ।

"सुखं कामिकुलं द्रव्यात् सुखो वासः सहाम्बया ।
सुखा युवतिरिच्छन्ती सुखा वै भगवद्गृहाः ॥"

१. 'यान्ता धा' ख. ङ. छ. पाठः. २. 'मधेयधा' ङ. छ. पाठः. ३. 'नि च धा' क. ख., 'पि च धा' च पाठः. ४. 'वो वव' घ. च. पाठः. ५. 'यः ।' ङ. छ. पाठः. ६. 'मघवन गृहाः' क. ख. पाठः.

इति । यदा न द्रव्यगामि, तदा नपुंसकमेव । यथा

"दारिद्र्येऽपि धनित्वेऽपि मनः शान्तिः सुखम् ।
सुखं सज्जनसंवादः सुखं शान्तिरनुत्तमा ॥"

ननु दुष्कृतोऽयं व्यापारः' 'सुकृतं कर्म' 'कल्मषोऽयमात्मन्यध्याहारः' इति त्रिषु वृत्तिः । तथा च भारविः —

"सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्"

इति । अतः कथं पापपुण्यादीनां ग्रहणम् । उच्यते । सुष्ठु कृतः सुकृत इति क्रियानिबन्धनैव तयोर्वृत्तिः, नान्यथा गुणनिबन्धनैवेति । यत्तु 'कल्मषोऽयमात्मन्यध्याहार' इति, नायं शिष्टप्रयोगः ॥

**मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।
प्रशस्तवाचकान्यमूनि**

मतल्लिकादीनि पञ्च प्रशस्तवाचकानि । ननु शस्तप्रशस्तयोः को भेदः । यावता मतल्लिकादयः प्रशस्तपर्यायाः पृथक्कृताः । उच्यते । शस्तं मङ्गलम् । प्रशस्तं स्तुत्यर्थम् । श्रेष्ठमिति यावत् । किञ्च शस्तवचनाश्च शिवादयो गुणमात्रेऽपि वर्तन्ते । मतल्लिकादयस्त्वनिष्टलिङ्गा द्रव्ये वर्तन्ते । खट्वादिवदाविष्टलिङ्गाश्चान्यलिङ्गेनापि सामानाधिकरण्ये लिङ्गं न जहति । तद्यथा — 'अश्वो मतल्लिका, गौः प्रकाण्डम्' इति । तथा च माघे — अरिमंथोरैक्षत गोमतल्लिकाम्' इति । एते च स्वार्थे कप्रत्ययान्ताः कचिदन्यलिङ्गा अपि स्युः । यथा —

"दण्डकानध्यवात्तां यौ वीररक्षःप्रकाण्डकौ"

इति । 'कुमारीतल्लजिके'ति च । 'सङ्घोद्धौ गणप्रशंसयोः' (३. ३. ८६) इत्युत्पूर्वाद्धन्तेः अप्प्रत्ययटिलोपघत्वैरुद्धो निपातितः ॥

१. 'इवाग' ङ. छ. पाठः. २. 'साधव' क. ग. ङ. छ. पाठः. ३. 'नि । क' ख. पाठः. ४. 'नां सुखादीनां ग्र' क. ख. घ. ङ. पाठः. ५. 'म ग' क. घ. ङ. च. छ. पाठः. ६. 'व्येऽनिव' ग. ङ. पाठः. ७. 'ण्येऽपि लि' ग. घ. ङ. पाठः. ८. 'ज' क. ख. घ. ङ. छ. पाठः.

अयः शुभावहो विधिः ॥ २७ ॥

शुभकारि दैवस्य अयः । एति पचाद्यच् । अयोऽजन्तः । तथा च किरातः

"सुलभैः सदा नयवतायवता निधिगुह्यकाधिपरमैः परमैः"

इति ॥

**दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।**

दैवषट्कं **प्राक्तनशुभाशुभकर्मणि** । देवः परमेश्वरः । तत्र भवं दैवम् । 'तत्र भवः' (४. ३. ५३) इत्यण् । देवेन निर्वृत्तम् इति वा अण् । दिशेः क्तः । दिष्टम् । भागधेयमिति । स्वार्थे 'भागरूपनामभ्यो धेयः' (वा० ५. ४. ३६) । भाग्यमिति । 'ऋहलोर्ण्यत्' (३. १. १२४) । 'भाग्यैकदेशयोर्भाग' इति रुद्रः । यमेः क्तिन् । नियतिः । धाञः 'उपसर्गे घोः किः' (३. ३. ९२) ।

**हेतुर्ना कारणं बीजम्**

हेतुत्रयं **कारणे** । 'हि गतौ' । 'कमिमनिजनिगाभायाहिभ्यश्च' (उ० १. ७५) इति तुन् । कारणमिति । ण्यन्तात् कृञः कर्तरि 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ल्युट् । 'उपसर्गे च संज्ञायाम्' (३. २. ९९) इति जनेर्डः । बीजम् । 'अन्येषामपि दृश्यते' (६. ३. १३७) इति दीर्घत्वम् ॥

**निदानं त्वादिकारणम् ॥ २८ ॥**

निदानद्वयं **प्रथमकारणे** । निदानमिति । 'बहुलमन्यत्रापि' इति युच् । एतद् वैशेषिकपरिभाषया समवायिकारणमुच्यते, बौद्धानामुपादानकारणं, वैद्यानां कारणकारणमिति ॥

**क्षेत्रज्ञ आत्मा पुरुषः**

१ 'वा' क. ङ. छ. 'व' च. पाठः. २. 'यष्ट। भा' क. ख. पाठः. ३. 'म' क घ. ङ. छ. पाठः. ४. 'बी' क. पाठः.

क्षेत्रज्ञत्रयं शरीराधिदैवतं देहान्तर्भोक्तरि। तथा च भगवद्गीता—

"इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ(मि ? इ)ति तद्विदः॥"

क्षेत्रज्ञ इति। 'आतोऽनुपसर्गे कः' (३. २. ३)। आत्मेति। 'अत सातत्यगमने'। 'सातिभ्यां मनिन्मनिणौ' (उ० ४. १५४) इति मनिण्।

"अव्यक्तं मन इत्याहुः शरीरं पुरमुच्यते।
अव्यक्तकं पुरे शेते पुरुषस्तेन चोच्यते॥"

इति पुरुषः। पृषोदरादिः॥

**प्रधानं प्रकृतिः स्त्रियाम्।**

प्रधानद्वयं प्रकृतौ। धाञोऽधिकरणे ल्युट्। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। 'स्त्रियां क्तिन्' (३. ३. ९४)। यथा च भगवद्गीता—

"विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते॥"

इति॥

**विशेषः कालिकोऽवस्था**

कालकृतो वस्तुधर्मो यौवनादिकृतो विशेषो वा अवस्था। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। '........व्यवस्थायामसंज्ञायाम्' (१. १. ३४) इति निपातनात् 'स्थागापापचो भावे' (३. ३. ९५) इति क्तिन् न भवति॥

**गुणाः सत्त्वं रजस्तमः॥ २९॥**

१. 'ते अन्त' क. ख. ङ. छ. पाठः. २. 'ते॥ का' क. ङ. च. छ. पाठः. ३. 'र्मो यो यौ' ङ. छ. पाठः. ४. 'षोऽव' ज. पाठः.

सत्त्वादयस्त्रयः प्रकृतेर्गुणाः[1]। सत्त्वं लघुप्रकाशकम्। रजश्चलं लोभजनकम्। तमः प्रमादमोहजनकमिति साङ्ख्यशास्त्रे व्युत्पादितम्।

"सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥"

इति श्रीभगवद्गीता। सतो भावः सत्त्वम्। भावे त्वप्रत्ययः। 'भूरञ्जिभ्यां कित्' (उ० ४. २१८) इत्यसुन्। रजः। ताम्यतेरसुन्। तमः॥

**जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः।**

जनुरादिषट्कं[2] जन्मनि। 'जनेरुसिः' (उ० २. ११९)। जनुः। सान्तम्। 'जन जनने'। भावे ल्युट्। जननम्। जनेर्मनिन्। जन्म। 'जनिघसिभ्याम्' (उ० ४. १३१) इति णिः। जनिः। 'जनिवध्योश्च' (७. ३. ३५) इति वृद्ध्यभावः। साहचर्यात् स्त्रियाम्। 'किमम्ब! जनिना जन्तोर्वृथाजन्मनः' इति[3] (चितप ?)प्रयोगदर्शनात् पुंस्यपि। उत्पत्तिरिति। क्तिन्। उद्भव इति। 'ऋदोरप्' (३. ३. ५७)॥

**प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः॥ ३०॥**

प्राणिषट्कं मनुष्यादिप्राणिनि। प्राणिशरीरिणोः 'अत इनि—' (५. २. ११५) इति इनिः। चेतनो नन्द्यादिः। जन्मीति व्रीह्यादिः। इनिः। 'नस्तद्धिते' (६. ४. १४४) इति टिलोपः। 'यजिमनिशुन्धिदसिजनिभ्यो *युः' (उ० ३. २०)। जन्युः॥

**चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः॥ ३०½॥**

चित्तसप्तकं मनसि। 'चिती संज्ञाने'। क्तः। चित्तम्। 'श्वीदितो निष्ठायाम्' (७. २. १४) इतीडभावः। असुनि चेतः। ह्रियते विषयैरिति हृद-

१. 'ताः। स' ङ. छ पाठः. २. 'शम्' ङ. छ. पाठः. ३. 'ति पुं' ख. पाठः.

* 'युच्' इति मुद्रितोणादिपाठः।

यम्। 'वृह्रोः षुग्दुकौ च' (उ० ४. १०२) इति क्यन् दुगागमश्च। 'क्षुब्धस्वान्त—' (७. २. १८) इत्यादिना स्वान्तं साधु। तत्र मनस्यभिधेये स्वनेः शब्दार्थान्निष्ठायामिडभावोपधावृद्धी निपात्येते। हरतेः क्विप्तुकौ। हृत्। वर्णव्यत्ययात् तकारे दकारः। तथा च 'हृदि प्राण' इति प्रयोगः। मन एव मानसम्। प्रज्ञाद्यण्। असुनि मनः॥

†इति कालवर्गः।

## अथ धीवर्गः।

**बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः।**
**प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः॥ १॥**

बुद्ध्यादयश्चतुर्दश बुद्धौ। बुध्यतेः क्तिन्। बुद्धिः। 'ईष गतिहिंसादानेषु'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। ईषा। मनस ईषा मनीषा। मूर्धन्यषा। पृषोदरादिटिलोपः। धृष्णुवन्ति प्रगल्भन्तेऽनयेति धिषणा। 'धृषेर्धिष*च संज्ञायाम्'(उ० २. ८४) इति क्युः। धिषणेति णकारान्तत्वान्मूर्धन्यषत्वम्। अन्यथा णत्वं न स्यात्। 'ध्यायतेः सम्प्रसारणं क्विप् च' (वा० ३. २. १७८) इति क्विप्। 'हलः' (६. ४. २) इति दीर्घः। धीः। प्रज्ञेति। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। शेत इति शेः। विच्। शयानं मुष्णातीति शेमुषी। मूलविभुजादित्वात् कः। गौरादिङीप्। मतिज्ञप्त्युपलब्धीनां क्तिन्। प्रेक्षेति। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। चिदादित्रिषु सम्पदादिक्विप्। चित् तान्तौ। अपरे दान्ते। चेतनेति। 'चित सञ्चेतने'। चुरादिः। 'ण्यासश्रन्थो युच्' (३. ३. १०७)॥

१. 'द' ङ. छ. पाठः. २. 'युच्' क. ङ. च. छ. पाठः. ३. 'वत्त्वम्।' क. घ. च. छ. पाठः. ४. 'न्तः', ५. 'रौ', ६. 'न्तौ' च. पाठः.

† पदद्वयमिदं मातृकासु न दृश्यते। * 'ष् च' इति मुद्रितोणादिपाठः

**धीर्धारणावती मेधा**

धारणायुक्ता धीर्मेधा। 'मिधृ मेधृ हिंसासंराध्योः'। भिदादित्वादङ् ॥

**सङ्कल्पः कर्म मानसम्।**

इदमहं कुर्यामिति **मानसो व्यापारः** सङ्कल्पः। भावे घञ् ॥

**चित्ताभोगो मनस्कारः**

चित्ताभोगद्वयं **मनस्कारे**। आभोगस्तात्पर्यम्। व्यापार इति केचित्। अनागतचिन्तनादिलक्षणो मनस्कारः। मनसः कारो निश्चय इति षष्ठीसमास इति केचित्। 'अतः कृकमि—'(८. ३. ४६) आदिसूत्रेण सत्वम्। मनसि करणं मनसिकार इत्यपि दृश्यते। तदा च बाहुलकात् सप्तम्यलुक् ॥

**चर्चा सङ्ख्या विचारणा ॥ २ ॥**

चर्चात्रयं **विचारणायाम्**। विचारणा च प्रमाणैरर्थपरीक्षा। 'चर्च अध्ययने'। चुरादिर्ण्यन्तात्[1] 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (३. ३. १०५) इत्यङ्। चर्चा। ख्यातेः 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। सङ्ख्या। विचारणेति। 'चर संशये'। चुरादिः। 'ण्यासश्रन्थो युच्' (३. ३. १०७) ॥

**अध्याहारस्तर्क ऊहः**

अध्याहारत्रयम**ध्याहारे**। न्यूनपूरणार्थमधिकोपादानमध्याहारः। 'तर्क वृतु वृधु भाषार्थाः' इति चौरादिदण्डकाद् भावे घञ्[2]। तर्कः। 'ऊह वितर्के'। घञ्। ऊहः ॥

**विचिकित्सा तु संशयः।**

**सन्देहद्वापरौ च**

विचिकित्साचतुष्कं **सन्देहे**। 'कित निवासे'। विपूर्वात् स्वार्थे 'गुप्तिज्-

१. 'णिजन्ता' इ. छ. पाठः. २. 'अ्। ऊ' च. पाठः.

किम्यः सन्' (३. १. ५)। 'अ प्रत्ययात्' (३. ३. १०२) इत्यः। विचिकित्सा। शीङः 'एरच्' (३. ३. ५६)। संशयः। 'दिह उपचये'। घञ्। सन्देहः। द्वापर इति। 'स्थाणुर्वा पुरुषो वे'त्येवंभूतौ द्वावपरावात्मीयौ परौ वा प्रधानभूतावस्मिन्निति बहुव्रीहिः। सर्वनामसङ्ख्ययोरुपसङ्ख्यानात् परत्वात् सर्वनाम्नः सङ्ख्यायाः पूर्वनिपातः। पृषोदरादित्वात् पूर्वपदस्य आत्वम्॥

**अथ समौ निर्णयनिश्चयौ॥ ३॥**

स्थाणौ स्थाणुरेवायमित्यादि**निर्णये** निर्णयद्वयम्। निर्पूर्वाद्[1] नयतेः 'एरच्' (३. ३. ५६)। 'उपसर्गादसमासेऽपि—' (८. ४. १४) इति णत्वम्। यदा तु निस उपसर्गप्रतिरूपकत्वं, तदा न णत्वम्। निर्णयः। निश्चय इति। निःपूर्वाच्चिनोतेः 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप्॥

**मिथ्यादृष्टिर्नास्तिकता।**

मिथ्यादृष्टिद्वयं **परलोको नास्तीति दृष्टौ**। मिथ्यादृष्टिरिति कर्मधारयः। यथा — नास्ति सुकृतं, नास्ति स्वर्ग इति। नास्तिकतेति। 'अस्ति नास्ति दिष्टं मतिः' (४. ४. ६०) इति ठक्। ततो भावे तल्॥

**व्यापादो द्रोहचिन्तनम्।**

व्यापादद्वयं **द्रोहचिन्तायाम्**। ण्यन्ताद् घञ्। व्यापादः॥

**समौ सिद्धान्तराद्धान्तौ**

सिद्धान्तद्वयं **सिद्धान्ते**। सिद्धोऽन्तोऽनेनेति सिद्धान्तः। एवं राद्धान्तोऽपि॥

**भ्रान्तिर्मिथ्यामतिर्भ्रमः॥ ४॥**

भ्रान्तित्रयं **भ्रमे**। 'भ्रमु अनवस्थाने'। क्तिन्। 'अनुनासिकस्य क्विझलोः क्ङिति' (६. ४. १५) इति दीर्घः। भ्रान्तिः। मिथ्यामतिरिति कर्मधारयः। घञि भ्रमः॥

1. निर्पू' क. पाठः.

**संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।**
**अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥**

संविदादिदशकमभ्युपगमे । विदेः सम्पदादित्वात् क्विपि संवित् । आङ्पूर्वाद् गमेः 'भ्रमेश्च डूः' (उ० २. ७१) इति डूप्रत्ययः । तत्र चकारो 'गमेर्डोः' (उ० २. ७०) इत्यतो गमेरनुकर्षणार्थः । आगूः साहचर्यात् स्त्रियाम् । 'यमः समुपनिविषु च' (३. ३. ६३) इति यमेरप् । नियमः । शृणोतेः 'ऋदोरप्' (३. ३. ५७) आश्रवादयः । *अङ्गीकरणमिति । च्व्यन्तानुप्रयुक्तात् कृञो भावे ल्युट् । निश्चयवदप्, अभ्युपगमः । दधातेः 'उपसर्गे घोः किः' (३. ३. ९२) । समाधिः ॥

**मोक्षे धीर्ज्ञानम्**

मोक्षे मोक्षविषये यद् ज्ञानं, तद् धीरित्युच्यते । केचिद् मोक्षे धीर्बुद्धिर्ज्ञानमिति वदन्ति । तथा च—

"ज्ञानाग्निः सर्वकर्माणि[1][2] भस्मसात् कुरुतेऽर्जुन !"

इति भगवद्गीतायां मोक्षे[3] धीरेवोच्यते ॥

**अन्यत्र विज्ञानं शिल्पशास्त्रयोः ।**

अन्यत्र शिल्पशास्त्रविषये अवबोधो विज्ञानम् । शिल्पं चित्रादि । शास्त्रं स्मृत्यादि ॥

**मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥**
**मोक्षोऽपवर्गः**

१. 'मः । उ' ङ. छ. पाठः. २. 'भूतानि भ' ङ. छ. पाठः. ३. 'क्षधी' ख. ङ. च. छ. पाठः.

* 'अङ्गीकार इति । च्व्यन्तानुप्रयुक्तात् कृञो भावे घञ्' इत्येवात्र पठनीयम् । अन्यथा वृत्तभङ्गात् ।

मुक्त्यष्टकं मोक्षे। शरीरेन्द्रियाभ्यामात्मनो मुक्तत्वं मुक्तिः। मुचेः क्तिन्। एतयोरेव विरहेणात्मनः केवलत्वं कैवल्यम्। 'गुणवचन—' (५. १. १२४) इत्यादिना ष्यञ्। 'निर्वाणोऽवाते' (८. २. ५०) इति निपातितम्[2]। निर्वाणम्। निर्वातिरात्यन्तिकदुःखच्छेदः। धर्मे श्रेय उक्तम्। निःश्रेयसमिति। 'अचतुरविचतुर[3]—' (५. ४. ७७) इत्यादिना अच्। 'तनिमृङ्भ्यां किच्च' (उ० ३. ८८) इति तन्। नञ्। अमृतम्। 'मोक्ष अवसाने'। चुरादिः। 'एरच्' (३. ३. ५६)। मोक्षः। 'वृजी वर्जने'। भावे घञ्। अपवर्गः॥

**अथाज्ञानमविद्याहंमतिः स्त्रियाम्।**

अज्ञानत्रयमहङ्कारे। अविद्येति। 'संज्ञायां समज—' (३. ३. ९९) इत्यादिना क्यप्। अहङ्कारप्रधाना मतिः अहम्मतिः। अहंशब्दोऽव्ययमहङ्कारे निपातितः॥

**रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी॥७॥**

**गोचरा इन्द्रियार्थाश्च**

**रूपादिपञ्चसु** चक्षुरादिग्राह्येषु विषयत्रयम्। *'खष्पशिष्पशष्पबाष्पपुष्पपर्परूर्पशिल्पतल्पाः' (उ० ३. २८) इति रौते रूपं निपातितम्। शब्द इति। 'शप आक्रोशे'। 'शाशपिभ्यां ददनौ' (उ० ४. ९७) इति दन्। 'गन्ध अर्दने'। पचाद्यच्। गन्धः। 'रस आस्वादने'। चुरादिः। 'एरच्' (३. ३. ५६)। रसः। स्पर्श इति। 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति घञ्। विषिण्वन्ति इन्द्रियाणीति विषयाः। 'षिञ् बन्धने'। पचाद्यच्। 'परि-

---

१. 'ण इ' क. ङ. छ. पाठः. २. 'तम्। निर्वाति' क. ङ. च. छ. पाठः. ३. 'रादि' क. ख. च. पाठः. ४. 'पत' क. ङ. च. छ. पाठः. ५. 'शि' क. ख., 'धीयभ्यां' घ. च. पाठः.

*'खष्पशिल्पशष्पबाष्पपुष्पपर्परूपतल्पाः' इति मुद्रितोणादिपाठः।

निविभ्यः—' (८. ३. ७०) इत्यादिना षत्वम् । गाव इन्द्रियाणि चरन्त्येष्विति गोचराः । 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' (३. ३. ११९) इत्यधिकरणे घञ् । इन्द्रियैरर्थ्यन्तेऽभिलष्यन्त इतीन्द्रियार्थाः । 'अर्थ याच्ञायाम्' । स्पर्शवद् घञ्

## हृषीकं विषयीन्द्रियम् ।

हृषीकत्रयम् इन्द्रिये । 'हृषु आलीक्ये' । मूर्धन्यषः । 'अनिहृषिभ्यां कित' (उ० ४. १७) इति करणे ईकन् । विषयो ग्राह्यत्वेनास्यास्तीति विषयी । अत इनिः । इन्द्रियमिति । इन्द्रस्यात्मनो लिङ्गमित्यस्मिन्नर्थे इन्द्रशब्दात् षष्ठ्यन्ताद् घच्प्रत्ययो निपात्यते ॥

## कर्मेन्द्रियं तु पाय्वादि

पाय्वादि कर्मेन्द्रियमुच्यते । कर्मसाधनमिन्द्रियं कर्मेन्द्रियम् । शाकपार्थिवादि । आदिना उपस्थादीनां ग्रहणम् । तथा च कामन्दकीये—

"पायूपस्थं पाणिपादं वाक् चैवेन्द्रियसङ्ग्रहः ।
उत्सर्गानन्दनत्यागगत्यालापाश्च तत्क्रियाः ॥"

इति ॥

## मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥

मनोनेत्रादीनि धीन्द्रियाणि । धीर्ज्ञानं, तन्निमित्तमिन्द्रियं धीन्द्रियम् ।

"मनः कर्णौ तथा नेत्रं रसना च त्वचा सह ।
नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते ॥"

## तुवरस्तु कषायोऽस्त्री

तुवरद्वयं कषायरसे । 'तु' इति सौत्रो धातुः । तत औणादिकः 'छि-

१ 'यां । इन्द्रि' इ. छ. पाठः. २. 'द्रिः' ख. पाठः. ३. 'याः ॥ म' इ. छ. पाठः. ४. 'द्रि धी' क. ग. 'नि धी' इ. छ. पाठः ५. 'त्तकर्मि' इ. छ. पाठः.

त्वरच्छत्वर—' (उ० ३. १) इत्यादिना वंरच् दीर्घत्वं च। तथा च—

"नरेऽश्मश्रुणि शृङ्गाभ्यां रहिते गवि तूवरः।
काले प्राप्ते कषाये च रसे पुंव्यञ्जने च्युते(?)॥"

"नापि कषायस्तुवर" इति ह्रस्वादिरपि वोपालितेनोक्तः। अन्यथा आर्याभङ्गः। कुत्सितो वरः कुवरः। ह्रस्वादिः कवर्गादिश्चेत्यन्यः। कषायो मूर्धन्यैषः॥

**मधुरो लवणः कटुः।**
**तिक्तोऽम्लश्च रसाः पुंसि**

मधुरादयः पञ्च प्रत्येकं **मधुरादिरसवाच्याः**। मधु माधुर्यं, तद्योगाद् 'ऊषसुषिमुष्कमधो रः' (५. २ १०७)। मधुरः। लवण इति। 'लूञ् छेदने'। नन्द्यादिल्युः। 'लवणाल्लुक्' (४. ४. २४) इति निपातनाद् णत्वम्। 'कटे वरणे वर्षे च'*। 'चटिकटिभ्याम्' इत्युः। कटुः। 'तिज निशाने'। बाहुलकाद् 'घृषिभूभ्यः क्तः'। तिक्तः। 'रबि लबि अबि शब्दे'। 'मूङ्नीशक्यम्ब्यमिभ्यः क्लः' (उ० ४. १०८) अम्लः॥

**तद्वत्सु षडमी त्रिषु॥ ९॥**

तूवरादयः षट् तद्वत्सु रसगुणयुक्तेषु वर्तमानास्त्रिषु। यथा— तूवरो विभीतकः, तूवरं जलं, तूवरा हरीतकी॥

**विमर्दोत्थे परिमलो गन्धे जनमनोहरे।**

सुरतादिविमर्दोत्थे नानागन्धद्रव्याणां च परिमलनादुद्भूते **मनोहरगन्धे** परिमलः। 'मल मल्ल धारणे'। घञ्। संज्ञापूर्वकत्वाद् वृद्ध्यभावः॥

**आमोदः सोऽतिनिर्हारी**

१. 'ट्व' क. ख. पाठः. २. 'था भ' क. पाठः. ३. 'न्यः' ङ छ. पाठः. ४. 'शु' च. पाठः. ५. 'लादु' क. ख. पाठः. ६. 'त' ङ. छ. पाठः.

* 'कटे वर्षावरणयोः' इति मुद्रितधातुपाठः।

दात इति । 'दैप् शोधने' । अ(घोरिति ! दाबिति घोः) प्रतिषेधाद् 'दो दद्घोः' (७. ४. ४६) इति ददादेशो न भवति । 'षिञ् बन्धने' । 'अञ्जिघृषिभ्यः क्तः' (उ० ३. ८९) । सितः । 'क्षितौ विकसितं सितम्' इति कीचकवधः । 'गुङ् गतौ' । रक्प्रत्ययवृद्धिभ्यां गौरो निपातितः । अथवा 'गुरी उद्यमने' । रक् रेफलोपः उकारस्य चौकारः । वलत इति वल् । क्विप् । वलमानमक्ष्यस्मिन्निति वलक्षः । पूर्ववत् षच् समासान्तः । 'धावु गतिशुद्ध्योः' । वृषादिकलच् । धवलः । बहुलवचनाद् ह्रस्वत्वम् । अर्जुन इति । 'अर्ज सर्ज अर्जने' । 'अर्जेर्णिलुक् च' (उ० ३. ५८) इत्युनन् ॥

**हरिणः पाण्डुरः पाण्डुः**

हरिणत्रयं **पाण्डौ** ।

"सितपीतसमायोगः पाण्डुवर्णः प्रकीर्तितः"

'श्यास्त्याहृञविभ्य इनच्' (उ० २. ४८) । हरिणः । पाण्डुगुणयोगात् पाण्डुरः । 'नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्' (वा० ५. २. १०७) इति रः ॥

**ईषत्पाण्डुस्तु धूसरः ॥ १३ ॥**

**किञ्चित्पाण्डौ** धूसरः । ईषच्छब्दोऽव्यक्तपरः । 'धू विधूनने' । '* कृधूमदिभ्यः सरन्' (उ० ३. ७३) । बाहुलकान्न षत्वम् । तथा च जानकीहरणे—

"महिषधूसरितः सरितस्तटाः परिगतो विषदाविषदापितैः"

इति ॥

**कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।**

कृष्णादयः सप्त **कृष्णे** । 'कृष विलेखने' । 'कृषेर्वर्णे' (उ० ३. ४) इति नक् । नील इति । 'नील वर्णे' । इगुपधलक्षणः कः । न सितः असितः । 'श्यैङ् गतौ' । 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' (उ० १. १५०) । श्यामः ।

१. 'तः ॥ कृ' ङ. छ. पाठः.

* क्सर इति वर्तमाने 'कृधूमदिभ्यः कित्' इति मुद्रितोणादिपाठः

काल उक्तः । श्यामोऽस्यास्तीति श्यामलः । सिध्मादित्वाल्लच् । मेचक इति । 'मच मुचि कल्कने' । क्वुन् । 'मनिपचिमचां नाम्नि' इत्येत्वम् ॥

**पीतो गौरो हरिद्राभः**

पीतत्रयं **पीते** । पातेः 'अञ्जिघृषिभ्यः क्तः' (उ० ३. ८९) । 'घुमास्थागापा—' (६. ४. ६६) इत्यादिना ईत्वम् । पीतः । गौर उक्तः । हरिद्राया इव भा दीप्तिरस्येति हरिद्राभः ॥

**पलाशो हरितो हरित् ॥ १४ ॥**

पलाशत्रयं **हरिते** । पलाशं पत्रं, तत्तुल्यवर्णतया पलाशः ।

"पत्रे पलाशं ना रक्षःशटीहरितकिंशुके"

इति तालव्यान्ते रुद्रः । अतो ह्रस्वादिः पुँल्लिङ्गश्च । पालाशपाठे तु 'अन्येषामपि दृश्यते' (६. ३. १३७) इति यथाकथञ्चिद् दीर्घः । हरित इति । 'हृश्याभ्याम्—' (उ० ३. ९३) इतीतच् । हरिदिति । 'हृसृरुहियुषिभ्य इतिः' (उ० १. ९७)[1] ॥

**लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ।**

लोहितत्रयं **लोहिते** । 'रुह बीजजन्मनि प्रादुर्भावे च' । 'रुहे रश्च लो वा' (उ० ३. १०८) इतीतन् । पक्षे रोहितः । 'रञ्ज रागे' । क्तः । रक्तः । जपाभो रोहितः । सन्ध्याभस्तु रक्तः । तथा च भागुरिः—

"बन्धुजीवजपासन्ध्याच्छायावर्णे मनीषिभिः ।
शोणरोहितरक्तानां प्रयोगः परिकीर्तितः ॥"

इह त्वल्पभेदाद् नादृतः । कोकनदच्छवी रक्तोत्पलसमानः । शोणः । 'शोणृ वर्णगत्योः' । पचाद्यच् ॥

१ 'दिति इत् ॥' क. पाठः.

**अव्यक्तरागस्त्वरुणः**

अव्यक्तरागे **किञ्चिल्लोहिते** अरुणः । यथा मद्यमत्तस्य चक्षूरागः । 'अरुणः कृष्णलोहित' इत्यमरमाला ॥

**श्वेतरक्तस्तु पाटलः ॥ १५ ॥**

**श्वेतरक्तमिश्रे पाटलकुसुमाभे** पाटलः । 'अट पट गतौ' । हेतुमण्णिच् । वृषादिकलच् ॥

**श्यावः स्यात् कपिशः**

श्यावद्वयं कृष्णपीतमिश्रे **श्यामले** । तथा च रत्नमाला—'श्यावः श्यामश्च श्यामले' । 'श्यैङ् गतौ' । कृगृशृदृभ्यो व औणादिकः । कपिर्वर्णस्याख्या । लोमादित्वात् शः । कपिशः । तालव्यवान् । तथा च —

"कपिशितं पिशितं मदनाग्निना" (स० ६. श्लो० ९)

इति माघः ॥

**धूम्रधूमलौ कृष्णलोहिते ।**

धूम्रत्रयं **कृष्णलोहितमिश्रे** । 'धूमाभो धूमलो धूम्र' इति रत्नमाला । धूमं रातीति धूम्रः । 'रा दाने' । पृषोदरादित्वादकारलोपः । धूममेव लातीति धूमलः । कृष्णमिश्रो लोहितः कृष्णलोहितः । शाकपार्थिवादिः ॥

**कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥**

कडारषट्कं **कपिले** । 'कपिलः पिङ्गलो बभ्रुः' इत्यमरमाला । कडार इति । 'गड सेचने' । 'गडेः कड च' (उ० ३. १३९) इत्यारन् कडादेशश्च धातोः । कपिल इति । 'कबृ वर्णे' । 'कवेः पश्च' (उ० १. ५८) इति बाहुलक इलच् पश्चान्तादेशः । 'पिजि वर्णे' । घञ् । पिङ्गः । 'पिश अवयवे' । 'श्रादिभ्यश्च' इत्यङ्गच् । पिशङ्गः । तालव्यवान् । तथा च माघे—

"परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलता" (स० ४. श्लो० ४८)

इति । कद्रुरिति । 'कमु कान्तौ' । 'अम्न्यादयश्च' (उ० ४. ११४) इत्यनेन डुन्

रुगागमटिलोपाभावाश्च निपात्यन्ते । दकारश्चान्तादेशः । पिङ्गल इति । 'पिजि वर्णे' । वृषादिकलच् । न्यङ्क्वादित्वात् कुत्वम् ॥

**चित्रकिर्मीरकल्माषशबलैतास्तु कर्बुरे ।**

चित्रषट्कं **नानावर्णे** । 'अमिचि(मि?)मिदिशसिभ्यः क्त्रः' (उ० ४ १६५) । चित्रमिति नपुंसकमसाधु, यतो 'गुणे शुक्लादयः पुंसि' इति वक्ष्यति । तथाचामरमाला —'कल्माषश्वित्रकिर्मीरौ' इति । तस्मात् 'चित्रकिर्मीरकल्मा(षौ? ष)' इति समस्त एव पाठः । चित्रं त्यक्त्वा 'गुणे शुक्लादयः पुंसि' इति केचित् समादधति । किर्मीर इति । 'गम्भीरादय'$ इति किरतेरीरन् मुगागमश्च । 'कल्माषः कलुषे कृष्ण' इति मूर्धन्यान्ते रुद्रः । एवम् 'अन्यतो ङीष्' (४. १. ४०) इति ङीषि कल्माषी ।

"भ्रमरोत्करकल्माषाः कुसुमानां समृद्धयः"

इति टाबन्तोऽपि[1] । शबल इति । 'शप आक्रोशे' । 'शपेर्बश्च' (उ० १. ११०) इति कलः । कल्माषीवद् ङीषि शबली ।

"उपस्रोतस्सुस्थस्थितमहिषगोवर्गशबलाः
स्रवन्तीनां जाताः प्रमुदितविहङ्गास्तटभुवः ॥"

इति टाबन्तोऽसाधुरिति *भट्टवामनः । किन्तु अर्शआद्यचि साधुः । शबलस्ताल्व्यादिः । तथाच वृन्दावने—

"शकुनिपताकाशबलं घनवृन्दं चक्षुषापताकाशबलम् ॥"

इति । एतेर्वातवत् तन् । एतः । राक्षसे कर्बुर उक्तः ॥

**गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥ १७ ॥**

**[रोहिणी रोहिता रक्ता लोहिनी लोहिता च सा ।**
**लोहितिका लोहिनिका रागात् कोपादिनापि वा ॥१८॥**

१. 'षाविति' ङ. पाठः.

$ अस्य स्थाने 'गभीरगम्भीरौ' (४. ३५) इति मुद्रितोणादौ पठ्यते । * 'शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः' (५. २. ४५) इति काव्यालङ्कारः ।

**शोणी शोणाथ पिशङ्गी पिङ्गला हरिणी त्वियम् ।**
**हरिनैनी त्वियमेता श्येनी श्येता सिता च सा ॥ १९ ॥**

**नीलैव वस्त्रे वा नाम्नि नीली प्राणिनि चौषधौ ॥ १९½ ॥]**

गुणे वर्णमात्रे वर्तमानाः शुक्लादयः कर्बुरान्ताः पुंसि । यथा हंसस्य शुक्लः । तद्वति द्रव्ये वर्तमाना अभेदोपचाराद् गुणिलिङ्गा वाच्यलिङ्गाः । यथा शुक्लो हंसः, शुक्ला हंसी, शुक्लं हंसकुलम् । क्वचिद् 'रोहिणी रोहिता रक्ता' इति पाठः । तद् व्याख्यायते । अत्र च ङ्यापोरेव विशेषो नार्थे । रोहिणीलोहिनी-हरिण्येनीश्येनीनां 'वर्णादनुदात्तात् तोपधात् तो नः' (४. १. ३९) इति ङीब्-नत्वे । रोहितारक्तालोहिताशोणापिङ्गलाहरिताश्येतासितानां टाप् । लोहितिका-लोहिनिकयोः कनप्रत्ययान्तयोः 'केऽणः' (७. ४. १३) इति ह्रस्वत्वम् । रागा-र्थत्वे 'रक्ते' (५ ४. ३२) इत्यनेन सूत्रेण कन् । यदा कोपादिना अनित्यं लोहितत्वं, तदा 'वर्णे चानित्ये' (५. ४. ३१) इत्यनेन कन् । अतो लोहि-तिकालोहिनिकाद्वयं कुसुम्भादिरक्ते वर्तते । शोणीति । 'शोणात् प्राचाम्' (४. १. ४३) इति ङीप् । पिशङ्गीति । 'पिशङ्गाच्चेति वक्तव्यम्' (वा० ४. १. ३९) इति ङी(प्? प्) । नीला इति वस्त्रे वाच्ये टाप् स्यात । तद् यथा नीला शाटी-ति । प्राणिन्योषधौ च वाच्यायां नीलशब्दादेव 'जानपदकुण्डगोणस्थलभाजना-गकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादना-योविकारमैथुनेच्छाकेशवेशेषु' (४ १. ४२) इति ङीप् । तद् यथा नीली स्त्री, नीली ओषधिः ॥

† इति धीवर्गः ।

## अथ शब्दादिवर्गः ।

**ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती ।**
**व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥**

† ङ. पुस्तके परमिदं पदद्वयं दृश्यते । छ. पुस्तके तु 'धीवर्गः' इत्येव दृश्यते

ब्राह्मीत्रयोदशकं **वचसि**। ब्रह्मणि भवा ब्राह्मी। 'ब्राह्मोऽजातौ' (६. ४. १७१) इति टिलोपः। 'टिड्ढाणञ्—' (४. १. १५) आदिना ङीप्। भरतेनेहावतारितत्वाद् भारती। 'शेषे' (४. २. ९२) अण्। भाषेति। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। गृणन्ति तामिति गीः। 'गॄ शब्दे'। सम्पदादिक्विप्। 'र्वोरुपधाया दीर्घ इकः' (८. २. ७६) इति दीर्घः। उच्यत इति वाक्। 'क्विब्वचि प्रच्छि—' (उ० २. ६०) इत्यादिना क्विब्दीर्घत्वासम्प्रसारणानि। वाणीति। 'अण रण वण भण शब्दार्थाः'। घञ्। गौरादिङीप्। सरोऽस्या आश्रयत्वेनास्तीति सरस्वती। 'तदस्यास्त्यस्मिन्निति मतुप्' (५. २. ९४)। इयं हि ब्रह्मलोके ब्रह्मसर आश्रित्य नदीरूपेण लोकमिममवतीर्णा। हरतेर्घञ्। व्याहारः। वचेः कर्मणि क्तिन्। उक्तिः। लपितभाषितयोः 'नपुंसके भावे क्तः' (३. ३. ११४)। वचेर्ल्युट्। वचनम्। अमुनि वचः॥

## अपभ्रंशोऽपशब्दः स्यात्

अपभ्रंशद्वयं **गावीत्याद्यपभ्रंशे**। 'भृशु भ्रंशु अधःपतने'। कर्मणि घञ्। अपभ्रंशः। तालव्यशः। दन्त्योऽपीति केचित्। शब्दानुशासनेऽसंस्कृतः शब्दोऽपशब्दः। निपातस्यानेकार्थत्वादपशब्दोऽसंस्कृतार्थे वर्तते॥

## शास्त्रे शब्दस्तु वाचकः।

प्रकृतिप्रत्ययद्वारेणार्थस्य वाचको गौरादिः* **साधुशब्दः** संस्कृतः शास्त्रे शब्द उच्यते। लोके तु संस्कृतोऽसंस्कृतश्च शब्द उच्यते। शब्द उक्तः। वचेर्ण्वुल्। वाचकः॥

## तिङ्सुबन्तचयो वाक्यं

तिङ्सुबन्तचयः समुदायो वाक्यम्। 'द्वन्द्वात् परो यः श्रूयते; लभतेऽसौ प्रत्येकमभिसम्बन्धम्' इति वचनादन्तशब्द उभयोरपि सम्बध्यते। उदाहरणं तु—'ओदनं पचति'। तिङ्ग्रहणं क्रियोपलक्षणम्। तेन 'ग्रामं गतवान्' इत्या-

* गौरित्येवमादिरित्यर्थः

चयोऽपि वाक्यम् । यद्वा तिङन्तचयः सुबन्तचयश्च वाक्यम् । यथा—पचति च, पठति च, धवश्च खदिरश्च ॥

**क्रिया वा कारकान्विता ॥ २ ॥**

वाक्यम् । यथा—'देवदत्तो ग्रामं गच्छति' । वाक्यमिति । वचेः कर्मणि 'ऋहलोर्ण्यत्' (३. १. १२४) । 'चजोः कुघिण्ण्यतोः' (७. ३. ५२) इति कुत्वम् ॥

**श्रुतिः स्त्री वेद आम्नायः**

श्रुतित्रयं वेदे । श्रूयते धर्मादिरनयेति श्रुतिः । 'श्रुयजीषिस्तुभ्यः करणे' (वा० ३. ३. ९४) इति वक्तव्येन क्तिन् । विदन्ति धर्मादिकमनेनेति वेदः । विदेः करणे घञ् । आम्नाय इति । आङ्पूर्वो मनतिरुपदेशे । आम्नायते उपदिश्यते धर्मादिरनेनेति घञ् । 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युक् ॥

**त्रयीधर्मस्तु तद्विधिः ।**

त्रयी वक्ष्यमाणा । तस्या यो विधिर्विधानं यज्ञादि सः त्रयीधर्मः । तदुक्तं—

"विधानमृग्यजुःसाम्नां त्रयीधर्मं विदुर्बुधाः"

इति । समासे गुणीभूतस्यापि त्रयीशब्दस्य वक्तुर्विवक्षावशात् तच्छब्देन परामर्शः ॥

**स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥**

ऋक्त्रयं पृथक् पृथग् वेदे । ऋच्यन्ते देवा अनयेति ऋक् चान्ता । 'ऋच स्तुतौ' । सम्पदादिक्विप् । सामन्निति । †'सो अवसाने' । 'सातिभ्यां मनिन्मनिणौ' (उ० ४. १७४) इति मनिन् । यजुरिति । 'यज देवपूजादौ' । 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' (उ० २. ११७) इत्युसिः । इतिरतिक्रान्तवाची । अयमर्थः—एते वेदास्त्रयस्त्रयीशब्देनोच्यन्ते । 'सङ्ख्याया अवयवे

† इयमानुपूर्वी प्रसिद्धधातुपाठे न दृश्यते

तयप्' (५. २. ४२) । तस्य 'द्वित्रिभ्यां तयस्यायज् वा' (५. २. ४३) इत्ययचि 'टिड्ढाणञ्—' (४. १. १५) आदिना ङीप् ॥

**शिक्षेत्यादि श्रुतेरङ्गम्**

वेदस्य शिक्षादिरङ्गम् । आदिना कल्पप्रभृतयः । तदुक्तं—

"शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां श्रुतिः ।
छन्दसां विचितिः षट् तैः षडङ्गो वेद उच्यते ॥"

आकारादीनां वर्णानां स्थानकालप्रयत्नप्रबोधिका 'ऋटुरषाणां मूर्धा' इत्यादिः शिक्षा । 'शिक्षि विद्योपादाने' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । यागक्रियाणामुपदेशः कल्पः । साधुशब्दान्वाख्यानं व्याकरणम् ।

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥"

इति । निश्चयेनोक्तं निरुक्तमिति । ग्रहणादीनां गणनशास्त्रं[1] ज्योतिःश्रुतिः । छन्दसां पद्यानां विचितिश्छन्दोविचितिः ॥

**ओङ्कारप्रणवौ समौ ।**

ओङ्कारद्वयमोङ्कारे । अवति भूतानीति ओम् । 'अवतेष्टिलोपश्च' (उ० १. १४७) इति मनिन् टिलोपश्च प्रत्ययस्य । 'ज्वरत्वर—' (६. ४. २०) इत्यादिना वकारस्य तदुपधाया अकारस्य च ऊठ् । 'सार्वधातुक—' (७. ३. ८४) इत्यादिना गुणः । ततो 'वर्णात् कारः' (वा० ३. ३. १०८) इति कारः । ओङ्कारः । प्रकृष्टो नवः स्तुतिः प्रणवः । 'णु स्तुतौ' । 'ऋदोरप्' (३. ३. ५७) । 'उपसर्गादसमासे—' (८. ४. १४) इत्यादिना णत्वम् ॥

**इतिहासः पुरावृत्तम्**

इतिहासद्वयं व्यासादिप्रणीते भारतादौ । इतिहशब्दः पारम्पर्योपदेशेऽव्ययम् । इतिहास्तेऽस्मिन्नितिहासः । आस्तेरधिकरणे 'हलश्च' (३. ३. १२१) इति घञ् । पुरावृत्तनिबन्धनप्रायत्वात् पुरावृत्तम् ॥

**उदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥**

१. 'नां शास्त्र वि' क. ख. घ. च. पाठः

उदात्ताद्यास्त्रयः **स्वराः**। आदिनानुदात्तस्वरितयोर्ग्रहणम्। तत्र 'उच्चैरुदात्तः' (१. २. २९), 'नीचैरनुदात्तः' (१. २. ३०), 'समाहारः स्वरितः' (१. २. ३१)। उच्चैरादीयत उच्चार्यत इत्युदात्तः। क्तः॥

**आन्वीक्षिकीदण्डनीती तर्कविद्यार्थशास्त्रयोः।**

यथाक्रममान्वीक्षिकी दण्डनीतिस्तर्कशास्त्रार्थशास्त्रयोः। तर्कशास्त्रं न्यायवैशेषिकादि। आगमोक्तवस्तुतत्त्वानामनु पश्चादीक्षणमन्वीक्षा। तदस्य प्रयोजनमिति ठक्। आन्वीक्षिकी। दीर्घादिः। अर्थाः भूहिरण्यादयः। तेषु प्रधानमर्थो भूमिः। इतरेषां तद्योनित्वात्। तच्च चाणक्यादिप्रणीतं दण्डनीतिरुच्यते। द्विवचनान्तत्वाद् दीर्घत्वम्। प्रकृत्या ह्रस्वो नीतिशब्दः। सामादीनां चतुष्क उपायो दण्डः। तस्य नीतिः प्रणयनं दण्डनीतिः। प्रायोवृत्त्या नीतेर्दण्डेन व्यपदेशः प्रजादोषबाहुल्येन प्रायशो दण्डस्य प्रणयनाद्। दण्डनीत्यर्थं शास्त्रं दण्डनीतिः॥

**आख्यायिकोपलब्धार्था**

उपलब्धः केनाप्यर्थो यस्याः सा सत्यार्थाख्यायिका। ख्यातेर्ण्वुल्। तदुक्तं—

"कन्यापहारसङ्गरसमागमाभ्युदयभूषितं यस्याम्।
नायकचरितं ब्रूते नायक एवास्य वानुचरः॥
वक्त्रापरवक्त्रवती सोच्छ्वासा संस्कृतेन गद्येन।
साख्यायिकेति कथिता माधविकाहर्षचरितादिः॥"

**पुराणं पञ्चलक्षणम्॥ ६॥**

पुराणद्वयं व्यासादिप्रणीत**मत्स्यपुराणादौ**। पुरा पूर्वस्मिन् भूतमिति पुराणं निपातितम्। पञ्च लक्षणान्यस्येति पञ्चलक्षणम्। तथाहि—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्॥"

**प्रबन्धकल्पना कथा**

प्रबन्धकल्पना बह्वनृता स्तोकसत्या **कथा** । 'कथ वाक्यप्रबन्धे' । चौरादिणिच् । 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (३. ३. १०५) इत्यङ् । तथा च—

"पर्यायेण बहूनां यत्र प्रतियोगिनां कथा कुशलैः ।
क्रियते शूद्रकवधवन्मनीषिभिः[1] परिकथा सा तु ॥
ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः ।
मध्यादुपान्ततो वा सा खण्डकथा तु पार्थमित्यादिः (?) ॥
यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः ।
चरितं विचित्रमन्यत् सा च कथा चित्रलेखादिः ॥
लक्ष्यान्वयाद्भुतार्था पिशाचभाषामयी महाविषया ।
नरवाहनदत्तादेश्चरितमिव बृहत्कथा भवति ॥
याख्यायिकेव साङ्का सोच्छ्वासा दिव्यगद्यपद्यमयी ।
सा दमयन्तीवासवदत्तादिरिहोच्यते चम्पूः ॥"

इति । कोहलाचार्यः पुनरेवमाह—

"प्रबन्धकल्पनायां प्राक् सत्यां सुज्ञाः कथां विदुः ।
परम्पराश्रयो यस्यां सा मताख्यायिका क्वचित् ॥"

इति ॥

## प्रवल्हिका प्रहेलिका ।

प्रवल्हिकाद्वयं **प्रहेलिकायाम्** । तथा च विदग्धमुखमण्डने—

"एकीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥
तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥"

१. 'जिगीषुभिः' ख. ङ. छ. पाठः,

—पानीयकुम्भः। 'बर्ह बल्ह परिभाषणहिंसादानेषु'। 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३५) इति क्वुन्। प्रवल्हिका। 'हिल भावकरणे'। ण्वुल्। प्रहेळिका॥

**स्मृतिस्तु धर्मसंहिता**

स्मृतिद्वयं मन्वादिप्रणीतधर्मशास्त्रे। महर्षिभिर्वेदार्थस्मरणं स्मृतिः। तद्योगाद् ग्रन्थोऽपि स्मृतिः। क्तिन्। धर्मस्य संहिता शास्त्रं धर्मसंहिता॥

**समाहृतिस्तु संग्रहः॥ ६॥**

समाहृतिद्वयं नानास्थानस्थितानामेकत्र करणे। हृञः क्तिन्। समाहृतिः। सङ्ग्रह इति। 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप्। तदुक्तं—

"विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः॥"

**समस्या तु समस्यार्था**

समस्याद्वयं श्लोकस्य पादैकेन द्विकत्रिकेण वा यत् पूरणं, तत्र। तद्यथा—

"मुमूर्षोः किं तवाद्यापि चैन्यचित्रकनागरैः।
स्मर नारायणं येन त्रेतायां रावणो हतः॥"

इत्यादि। समस्येति। 'असु क्षेपणे'। 'ऋहलोर्ण्यत्' (३. १. १२४)। संज्ञापूर्वकत्वान्न वृद्धिः। समस्योऽर्थो यस्याः सा समस्यार्था। क्वचित् समासार्थेति पाठः। तदा च कर्मणि 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति घञ्॥

**किंवदन्ती जनश्रुतिः।**

१. 'वर्यैचि' क. ग. घ. च., 'किं विचि' ख. पाठः.

किंवदन्तीद्वयमसत्ये सत्ये वा **लोकापवादे**। को विवादः किंवदन्ती। किंपूर्वाद् वदेः 'तॄभूवसिवहिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च' (उ० ३. १२८) इति झच्। तस्य च 'झोऽन्तः' (७. १. ३) इत्यन्तादेशः। गौरादिङीप्। जनेभ्यः श्रुतिः जनश्रुतिः। क्तिन्॥

**वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्**

वार्ताचतुष्कं **वार्तायाम्**। वार्ता पृषोदरादिः। प्रमाणवर्तनं प्रवृत्तिः। क्तिन्। वृत्तोऽनुवर्तनीयोऽन्तः समाप्तिरस्येति वृत्तान्तः। उद्गतोऽन्तोऽस्येत्युदन्तः॥

**अथाह्वयः॥ ७॥**

**आख्याह्वे अभिधानं च नामधेयं च नाम च।**

आह्वयषट्कं **नामनि**। आहूयतेऽनेनेत्याह्वयः। 'ह्वेञ् स्पर्धायां शब्दे च'। 'पुंसि संज्ञायां घः प्रायेण' (३. ३. ११८) इति घः। आख्या। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। आह्वेति। 'कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः' (वा० ३. २. ३)। अभिधानमिति। करणे ल्युट्। भागधेयवन्नामधेयम्। व्योमवन्नाम॥

**हूतिराकारणाह्वानं**

हूतित्रयं **हकार** इति ख्याते। हूतिरिति। ह्वेञः क्तिन् सम्प्रसारणम्। 'हलः' (६. ४. २) इति दीर्घत्वम्। आकारयतिराह्वाने वर्तते। तथा च माघे—

"प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा"

इति। आकारणेति। कृञो ण्यन्ताद् 'ण्यासश्रन्थो युच्' (३. ३. १०७)॥

**संहूतिर्बहुभिः कृता॥ ८॥**

**बहुभिराह्वानं** संहूतिः॥

१. 'थकका' ङ. छ., 'हकका' ख. पाठः.

**विवादो व्यवहारः स्याद्**

विवादद्वयम्**ऋणादानादिन्याये**। उभयत्र घञ्।

"विर्नानार्थेऽव सन्देहे हरणं हार उच्यते।
नानासन्देहहरणाद् व्यवहार इति स्मृतः॥"

इति कात्यायनः॥

**उपन्यासस्तु वाङ्मुखम्।**

उपन्यासद्वयं **वचनोपक्रमे**। 'असु क्षेपणे'। घञ्। उपन्यासः। वाचो मुखमुपक्रमः वाङ्मुखम्॥

**उपोद्घात उदाहारः**

उपोद्घातद्वयमुदाहारे प्रकृतस्योपपादके **दृष्टान्तादौ**। द्वावपि घञन्तौ॥

**शपनं शपथः पुमान्॥९॥**

शपनद्वयं **शपथे**। तद्यथा—

"अनृतं वदन् घोराणि नरकाण्येव यास्यसि"

'शप आक्रोशे'। ल्युट्। शपनम्। 'शीङ्शपिरुगमिवञ्चिजीवि*नदिप्राणिभ्योऽथः' (उ० ३. ११३)॥

**प्रश्नोऽनुयोगः पृच्छा च**

प्रश्नत्रय **पृच्छायाम्**। प्रश्न इति। 'प्रच्छ ज्ञीप्सायाम्'। 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३. ३. ९०)। 'च्छ्वोः शूडनुनासिके च' (६. ४. १९) इति छस्य शकारः। 'प्रश्ने चासन्नकाले' (३. २. ११७) इति निपातनाद् 'ग्रहिज्या'दिना न सम्प्रसारणम्। पृच्छेति। भिदादित्वादङ्॥

१. प्रश्ने। प्र' घ. च. पाठः.

* 'जीविप्राणिभ्योऽथः' इति मुद्रितोणादपाठः।

**प्रतिवाक्योत्तरे समे ।**

प्रतिवाक्यद्वयमुत्तरे। पृष्टस्य वाक्यस्य प्रतिवचनं प्रतिवाक्यम्। प्रादिसमासः। तरतेः 'ॠदोरप्' (३. ३. ५७)। उत्तरम्॥

**मिथ्याभियोगोऽभ्याख्यानम्**

मिथ्याभियोगद्वयं शतं मे धारयतीत्याद्यभियोगे। मिथ्याभियोग इति कर्मधारयः। अभ्याख्यानमिति ल्युट्॥

**अथ मिथ्याभिशंसनम्॥ १०॥**

**अभिशापः**

मिथ्याभिशंसनद्वयं सुवर्णस्तेयादिवाच्यत्वे। शपेर्घञ्। अभिशापः॥

**प्रणादस्तु शब्दः स्यादनुरागजः।**

अनुरागजः प्रीतिजनितो मुखवाद्यादिः प्रणादः। नदेर्घञि 'उपसर्गाद्—' (८. ४. १४) इत्यादिना णत्वम्॥

**यशः कीर्त्तिः समज्या च**

यशस्त्रिकं कीर्त्तौ। 'अशू व्याप्तौ'। †'अशेर्युट् च' (उ० ४. १९१) इत्यसुन् युडागमश्च धातोः। यशः। 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' (३. ३. ९७) इति निपातनात् कीर्त्तिः। समज्येति। 'संज्ञायां समज—' (३. ३. ९९) इत्यादिना क्यप्। 'घञपोः प्रतिषेधे क्यप उपसङ्ख्यानम्' (वा० २. ४. ५६) इति वचनाद् 'अजेर्व्यघञपोः' (२. ४. ५६) इत्यजेर्वीभावो न भवति। "समैः सर्वैः ज्ञायत इति घञ्। 'घञर्थे कविधानं कर्तव्यम्' (वा० ३. ३. ५८) इति कः। समज्ञा" इति पुरुषोत्तमः। 'प्रख्यातो विश्रुतः समज्ञाते' इति रत्नकोशे। समाङ्पूर्वो जानातिः ख्यातौ। ततोऽङ्। समाज्ञेत्यन्ये॥

**स्तवः स्तोत्रं नुतिः स्तुतिः॥ ११॥**

१. 'र्थे' ङ. छ. पाठः. २. 'तो नङ।' ङ. छ. पाठः.

† 'अशेर्देवने युट् च' इति मुद्रितोणादिपाठः।

स्तवचतुष्कं **स्तुतौ** । 'ॠदोरप्' (३. ३. ५७) । स्तवः । स्तोत्रमिति । 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' (३. २. १८२) इति[1] करणे ष्ट्रन् । 'णु स्तवने' । बाहुलकः करणे क्तिन् । नुतिः । 'श्रुयुजीविस्तुभ्यः करणे' (वा० ३. ३. ९५) इति क्तिन् । स्तुतिः ॥

**आम्रेडितं द्विस्त्रिरुक्तम्**

शोकादिना ससम्भ्रमं **द्विस्त्रिर्वाभिधान**मा‌म्रेडितम् । 'मेड्ट म्रेड्ट म्लेड्ट उन्मादे' । भावे क्तः ॥

**उच्चैर्घुष्टं तु घोषणा ।**

उच्चैर्घुष्टद्वयमु**च्चैःशब्दने** । उच्चैरव्ययम्[2] । घुष्टमिति । 'घुषिर् अविशब्दने'[3] । चौरादिकः । 'घुषिरविशब्दने' (७. २. २३) इतीडभावः । ततः कर्मधारयः । घोषणेति । युच् ॥

**काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥१२॥**

शब्दस्य शोकभीत्यादिना[4] यो **विकारो नीचत्वादिः**, सा काकुः । आदिना कामलाभयोर्ग्रहणम् । कानं का[5]ः शब्दः कुः कुत्सितो यत्र सा काकुः ॥

**अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।**
**उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥**

अवर्णदशकं[6] **निन्दायाम्** । यथा अवर्णादयो निन्दार्थाः, तथा उपक्रोशादयोऽपीति वतेरर्थः । वर्णः स्तुतिः । विपरीतार्थे नञ् । अवर्णः । 'क्षिप प्रेरणे' । घञ् । क्षेपः । परीवाद इति । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति वा दीर्घः । क्रोशेर्घञ् । उपक्रोशः । जुगुप्सेति । 'गुप गोपनकुत्सनयोः' । 'गुपादिसूत्रेण सन् । 'अ प्रत्ययात्' (३. ३. १०२) इत्यकारप्रत्ययः । टाप् ।

१. 'ति ष्ट्र' ङ. छ. पाठः. २. 'रित्यव्य' ख. पाठः. ३. 'न' क. ख. पाठः. ४. 'दिः । घु' घ. च. पाठः. ५. 'ना ध्वानिना यो' ङ. छ. पाठः. ६. 'काश' ख. पाठः.

कुत्सेति । 'कुत्स आक्षेपणे' । भावे भिदादित्वादङ् । निन्देति 'णिदि कुत्सायाम्'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः । 'गर्ह गल्ह कुत्सायाम्' । नपुंसके भावे ल्युट् । 'गर्हणम् ॥

**पारुष्यमतिवादः स्याद्**

पारुष्यद्वय**मप्रियवचने** । अप्रियं वचः परुषम् । तस्य भावः पारुष्यम् । वदेर्घञ् । अतिवादः ॥

**भर्त्सनं त्वपकारधीः ।**

चोरस्त्वमसि, घातयिष्यामीति अन्यापकारवचनं भयजनकं भर्त्सनम् । 'भर्त्स तर्ज सन्तर्जने' । करणे ल्युट् ॥

**यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ॥ १४॥**

**दुर्वाद** उपालम्भः । स च निन्दापूर्वकः परिभाषणम् । तच्च गुणाविष्करणपूर्वकं निन्दापूर्वकं च । आद्यं यथा—'महाकुलजस्य भवतः किमुचितमिदम्'। द्वितीयं यथा — 'बन्धकीसुतस्य भवत उचितमेवेदम्' इति । तत्र सनिन्द उपलम्भः परिभाषणम् । भावे ल्युट् । तथा च भागुरिः—

"निन्दापूर्व उपालम्भः परिभाषणमुच्यते" ॥

**तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।**

स्त्रीनिमित्तं पुन्निमित्तं वा मैथुनं प्रति आक्रोश उद्घोषणा । स आक्षारणा । 'क्षर सञ्चलने' । प्रयोजकण्यन्ताद् युच् ॥

**स्यादाभाषणमालापः**

आभाषणद्वयं गमनागमनादिसमये **प्रियवचनभाषणे** । आभाषणमिति भावे ल्युट् । आलापादयोऽपलापान्ताः परिदेवनबहिर्घञन्ताः ॥

१. 'अवक्षे' क. ख. ङ. छ. पाठः. २. 'मसीति' ङ. छ., 'मिति घा' घ. च. पाठः. ३. 'वर्धका' क. ख. ङ. छ. पाठः.

**प्रलापोऽनर्थकं वचः ॥ १५ ॥**

प्रयोजनशून्यमुन्मत्तादिवचनं प्रलापः ॥

**अनुलापो मुहुर्भाषा**

मुहुः क्षणं क्षणं भाषा तु अनुलापः ॥

**विलापः परिदेवनम् ।**

विलापद्वयं शोकार्तवाक्ये । परिदेवनमिति । 'दिवु परिदेवने' । चुरादिः‡ । भावे ल्युट् ॥

**विप्रलापो विरोधोक्तिः**

विप्रलापद्वयमन्योन्यविवादवचने । विरुद्धप्रलापो विप्रलापः । उदाहरणं चात्र ममैव श्लोकः—

"एकः स(र)न्मधुसरोजमवैति वक्रमन्यः सुधाकिरणबिम्बमदो मृगाक्ष्याः ।
यूनोर्मुहुर्विवदतोर्वदने बभूवुः सिद्धान्तवन्मधुपराजिगतागतानि ॥"

**सल्लापो भाषणं मिथः ॥ १६ ॥**

मिथोऽन्योन्यं प्रीतिभाषणं सल्लापः । यस्तु आलापः स ए(व ?)केनापि क्रियते, इदं तु परस्परभाषण एव *परमिति विशेषः ॥

**सुप्रलापः सुवचनम्**

अर्थग्रन्थपरिशुद्धः प्रलापः सुप्रलापः । तत् सुवचनम् । 'वच परिभाषणे' । ल्युट् ॥

**अपलापस्तु निह्नवः ।**

१. 'अर्थवन्म' ङ. पाठः. २. 'हूनि सि' घ. च. पाठः.

‡ एकोऽर्दनेऽन्यः परिकूजन इति धातुद्वयमेव चुरादावाह देवः । * 'परमिति' इत्यस्य स्थाने 'इति परं' इति पाठः स्यात् ।

अपलापद्वयं येन वचनेन तन्निह्नूयते तत्र। तद्यथा—धारयन्नेव न धारयामीति। 'ह्नुङ् अपनयने'। 'ऋदोरप्' (३. ३. ५७)॥

**सन्देशवाग् वाचिकं स्याद्**

सन्देशवाग्द्वयं **सन्देशवचने**। सन्दिश्यत इति सन्देशः। कर्मणि घञ्। तस्य वाक्। यया सन्दिष्टेनान्योऽभिधीयते, सा सन्देशवाक्। वाचिकमिति। 'वाचो व्याहृतार्थायाम्' (५. ४. ३५) इति स्वार्थिकष्ठक्। तस्य इकादेशः॥

**वाग्भेदास्तु त्रिषूत्तरे ॥१७॥**

इत उत्तरे वक्ष्यमाणा उषत्यादयः सम्यगन्ता वाग्विशेषास्त्रिषु। तद्यथा—

**उषती वागकल्याणी**

उषती वाक्। उषन् व्याहारः। उषद् वचः। अकल्याणी **निन्दार्था वागुषती**। तद्यथा—'ब्राह्मणो हन्तव्यः'। 'उष दाहे'। शतृ। उषती। उषत्यादेस्त्रिलिङ्गत्वादेव कामचारात् स्त्रीत्वमुक्तम्॥

**स्यात् कल्या तु शुभात्मिका।**

शुभात्मिका **शुभस्वभावा वाक्** कल्या। यथा— 'दीर्घायुर्भव। जीव' इत्यादि। प्रत्यूषे कल्यमुक्तम्। टापा कल्या॥

**अत्यर्थमधुरं सान्त्वं**

अत्यर्थमतिशयेन **मधुरं वाक्यं** सान्त्वम्। 'सान्त्व सामप्रयोगे'। चुरादिः पचाद्यच्।

"दिष्ट्या रमसे सामनि परमे वचसां त्वम्।
सुजनो हि वदति मित्रं परमेव च सान्त्वम्॥"

इति शिवभद्रे दन्त्ययमकम्॥

**सङ्गतं हृदयङ्गमम् ॥ १८ ॥**

**युक्तियुक्ते वचसि** सङ्गतद्वयम्। गमेः 'नपुंसके भावे क्तः' (३. ३. ११४)। सङ्गतम्। हृदयङ्गममिति। 'गमश्च' (३. २. ४७) इति खश्। 'खित्यनव्ययस्य' (६. ३. ६३) इति मुम्॥

**निष्ठुरं परुषं**

[illegible]
इति कुरच् । कित्त्वाद् 'आतो लोप—' (६. ४. ६४) इत्याकारलोपः । 'उपसर्गाद्—' (८. ३. ६५) इत्यादिना षत्वम् । 'पॄ पालनपूरणयोः' । §'नहिकलिहानिपॄलस्यर्तिभ्य उषच्' (उ०४.७७) इत्युषच् । परुषं मूर्धन्यषम् ॥

**ग्राम्यमश्लीलं**

ग्राम्यद्वयं **भण्डवचने** । हालिकशाकटिकप्रधानत्वाद् ग्रामस्येति । ग्रामे भवं ग्राम्यम् । 'ग्रामाद् यखञौ' (४. २. ९४) इति भावे यः । अश्लीलमिति । श्रीः चारुता । नञा अश्रीः । आकृतिगणत्वात् सिध्मादिलच् । 'कपिलकादीनां †छन्दस्युपसङ्ख्यानम्' (वा०८. २. १८) इति लत्वम् ॥

**सूनृतं प्रिये ।**

**सत्ये**

इन्द्रो भवानिति प्रियं, न सत्यम् । काणो भवानिति सत्यं, न प्रियम् । यत् पुनः **प्रियं च सत्यं**, तत् सूनृतम् । सुष्ठु नृत्यन्त्यनेनेति सूनृतम् । मूलविभुजादित्वात् कः । 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः । तथा च वासवदत्तायां विरुद्धालङ्कारे दन्त्यश्लेषः—'अपि ते सखि! वल्लभोऽसूनृतं दधदपि सूनृतभाषी' । असून् प्राणान् ऋतं सत्यं दधदपीत्यर्थः ॥

**अथ सङ्कुलक्लिष्टे परस्परपराहते ॥ १९ ॥**

यावज्जीवमहं मौनीत्यादिवाक्ये **परस्परविरुद्धे** सङ्कुलद्वयम् । 'कुल संस्त्याने' । कः । 'कपिसङ्कुलभीमगुहम्' इत्यादिभट्टिभाषासमावेशः ।

१. 'वं मौ' क., 'वनं मौ' ग. पाठः.

§ 'पॄनहिकलिभ्य उषच्' इति मुद्रितोणादिपाठः । † 'संज्ञाच्छन्दसोर्वेति वाच्यम्' इति मुद्रितवार्त्तिकपाठः ।

क्लिष्टमिति । 'यस्य विभाषा' (७.२.१५) इडभावः । सरस्वतीकण्ठाभरणे तु क्लिष्टलक्षणं यथा—

"दूरे यस्यार्थसंवित्तिः क्लिष्टं नेष्टं हि तत् सताम्"

यथा—

"विजितात्मभवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥"

अस्यार्थः—विना गरुत्मता जित इन्द्रः । तस्यात्मभवोऽर्जुनः । तद्वेषी कर्णः । तस्य गुरुः सूर्यः । तस्य पादै रश्मिभिरभिहतो लोकः, आकाशमभिनन्दति । कीदृशम् । हिमापहो वह्निः । तस्यामित्रं जलम् । तद् धारयन्ति ये मेघाः, तैर्व्याप्तमिति ॥

**लुप्तवर्णपदं ग्रस्तं**

अशक्त्या लुप्तवर्णं लुप्तपदं च यद् वचः असम्पूर्णमिति यावत्, तद् ग्रस्तम् । 'ग्रसु ग्लसु अदने' । क्तः ॥

**निरस्तं त्वरितोदितम् ।**

त्वरयोदितं वाक्यं निरस्तम् । 'असु क्षेपणे' । क्तः ॥

**अम्बूकृतं सनिष्ठेवम्**

सनिष्ठेवं श्लेष्मकणसहितं वाक्यमम्बूकृतम् । अम्बुशब्द उपचारादम्बुयुक्ते । ततश्च्वौ कृते 'च्वौ च' (७.४.२६) इति दीर्घः । पृषोदरादिदीर्घत्वे सनिष्ठीवमित्यपि केचित् ॥

**अबद्धं स्यादनर्थकम् ॥ २० ॥**

अबद्धद्वयं समुदायार्थशून्ये वचांसि । यथा—

"जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि[1] ।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन्! रुमायां[2] लशुनस्य कोऽर्घः ॥"

१. 'द्रकाणि ।' घ. च. पाठः. २. 'लु' ख. छ. पाठः

इत्यत्र समुदायेनैकोऽर्थो नास्ति । अबद्धमिति । 'बध बन्धने' । क्तः । नञ्समासः । अविद्यमानः समुदायार्थोऽस्येत्यनर्थकम् । 'नञोऽस्त्यर्थानाम्—' (वा० २. २. २४) इति समासः । 'अभावे नञ' इति उरःप्रभृतिपाठान्नित्यं कप् समासान्तः ॥

**अनक्षरमवाच्यं स्याद्**

अनक्षरद्वयं **दुर्वचने गाल्यादौ** । 'अक्षरं कुत्सितं नञा' इत्यनक्षरम् । निपातस्यानेकार्थत्वान्नञो निन्दार्थत्वम् । अवाच्यमिति । 'वचोऽशब्दसंज्ञायाम्' (७. ३. ६७) इति न कुत्वम् ॥

**आहतं तु मृषार्थकम् ।**

मृषार्थकमत्यन्ताभूतार्थं **खपुष्पादिपदम्** आहतम् । हन्तेः 'नपुंसके भावे क्तः' (३. ३. ११४) ॥

**अथ म्लिष्टमविस्पष्ट**

म्लिष्टद्वयम**व्यक्तवचने** । 'म्लेच्छ अव्यक्ते शब्दे' । म्लेच्छेः क्तप्रत्ययेन 'क्षुब्धस्वान्तध्वान्तम्लिष्ट—' (७. २. १८) इत्यादिना म्लिष्टं निपातितम् । न विस्पष्टम् अविस्पष्टम् ॥

**वितथं त्वनृतं वचः ॥ २१ ॥**

न ऋतम् अनृतम् । तद् वचो वितथम् ॥

**सत्यं तथ्यमृतं सम्यग्**

सत्यचतुष्कं **सत्यवचने** । सत्सु साधु सत्यम् । दिगादित्वाद् यत् । तथा साधु तेन प्रकारेण साधु तथ्यम् । 'तत्र साधुः' (४. ४. ९८) इति यत् । ऋतमिति । 'ऋ गतौ' । क्तः । अर्थेन सह समञ्चति सङ्गच्छत इति सम्यक् । 'अञ्चु गतिपूजनयोः' । 'ऋत्विगा'दिना क्विन् । 'समः समि' (६. ३. ९३) इति सम्यादेशः । भसंज्ञकस्य 'अचः' (६. ४. १३८) इत्यकारलोपः ॥

**अमूनि त्रिषु तद्वति।**

अमूनि सत्यादीनि तद्वति त्रिषु। यथा—सत्या नारी। सत्यो ब्राह्मणः। सत्यं जलम्। पुंसि सम्यक् सम्यञ्चावित्यादि। स्त्रियाम् 'अञ्चतेश्चोपसङ्ख्यानम्' (वा० ४. १. ६) इति ङीप्। समीची। अनेन च 'वाग्भेदास्तु त्रिषूत्तरे' इत्यस्यावधिर्दर्शितः॥

**शब्दे निनादनिनदध्वनिध्वानरवस्वनाः॥ २२॥**
**स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः।**
**आरवारावसंरावविरावाः**

शब्दादयः सप्तदश शब्दे। शब्द उक्तः। निनादनिनदाविति। 'णद अव्यक्ते शब्दे'। 'स्वनहसोर्वा' (३. ३. ६२) इति वर्तमाने 'नौ गदनदपठस्वनः' (३. ३. ६४) इति विभाषा घञपौ। † 'खनिकन्यङ्ज्यसिवसिध्वनिपनिसिनिग्रन्थिचरिभ्यश्च' (उ० ४. १४२) इति इः। ध्वनिः। 'ध्वन शब्दे'। घञ्। ध्वानः। रौतेः 'ऋदोरप्' (३. ३. ५७)। रवः। स्वनस्वानाविति। 'स्वन शब्दे'। 'स्वनहसोर्वा' इत्यब्घञौ। 'घुष घुष्टौ'। घञ्। निर्घोषः। 'ह्राद अव्यक्ते शब्दे'। 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति घञ्। निर्ह्रादः। घञि नादः। निस्वाननिस्वनौ निनादनिनदवत्। निग्रहणमुपसर्गनियमार्थम्। आरवारावयोः 'विभाषाङि रुप्लुवोः' (३. ३. ५०) इत्यब्घञौ। संरावविरावयोः 'उपसर्गे रुवः' (३. ३. २२) इति घञ्॥

**अथ मर्मरः॥ २३॥**

**स्वनिते वस्त्रपर्णानां**

**वस्त्रपर्णयोर्ध्वनौ** मर्मरः। 'मृङ् प्राणत्यागे'। 'कृदरादयश्च' (उ० ५. ४१) इत्यरन्प्रत्ययो मुमागमश्च॥

१. 'घु। स' घ. च. छ. पाठः.

† 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्र—' इति मुद्रितोणादिपाठः।

**भूषणानां तु शिञ्जितम् ।**

**नूपुरादिभूषणानां ध्वनौ** शिञ्जितम् । 'शिजि अव्यक्ते शब्दे' । तालव्यादिः । कर्मणि क्तः । 'गुरोश्च हलः' (३. ३. १०३) इत्यप्रत्ययेन शिञ्जाशब्दोऽपि ॥

**निक्काणो निक्कणः क्काणः क्कणः क्कणनमित्यपि ॥ २४ ॥**

निक्काणपञ्चकं **वीणाया अन्यस्यापि क्कणने** वर्तते । निक्काणनिक्कणयोः 'नौ गदनद—' (३. ३. ६४) इत्यतो नावित्यनुवर्तमाने 'क्कणो वीणायां च' (३. ३. ६५) इत्यप् । पक्षे घञ् । क्काणक्कणयोः 'व्यधजपोरनुपसर्गे' (३. ३. ६१) इत्यतोऽनुपसर्गेऽनुवर्तमाने 'क्कणो वीणायां—' इत्यनेनैव घञपौ । ल्युटि क्कणनम् ॥

**वीणायाः क्कणिते प्रादेः प्रक्काणप्रक्कणादयः ।**

वीणायाः क्कणिते प्रादेरप्युपसर्गादुत्तरस्य क्कणेर्धातोः प्रक्काणप्रक्कणादयो भवन्ति । तथाहि—'क्कणो वीणायां च' (३. ३. ६५) इत्यब्विकल्पः । तत्र वीणाग्रहणस्यैतदेव प्रयोजनं, वीणाविषयेऽन्योपसर्गादपि यथा स्यात् । आदिना उपक्काणोपक्कणादयः ॥

**कोलाहलः कलकलः**

कोलाहलद्वयं **कलकले** । 'कुल संस्त्याने' । कोलनं कोलः एकीभावः । तमाहलति भिनत्तीति 'हल विलेखने' अच् । कोलाहलः । 'कल शब्दसङ्ख्यानयोः' । अच् । 'प्रकारे गुणवचनस्य' (८. १. १२) इति द्विर्वचनम् । कलकलः ॥

**तिरश्चां वाशितं रुतम् ॥ २५ ॥**

तिरश्चां **पशूनां** रुतं **शब्दः** वाशितम् । 'वाशृ शब्दे' । तालव्यान्तः । क्तः । तथा च कप्फिणाभ्युदयप्रतिलोमानुलोमयमकं—

१. 'च्छ' ख., 'पि' ङ. छ., 'लिप' च. पाठः.

'सेवावाशिशिवावासे' इति । सेवा उपासना । उपासनया वाशिन्यः शब्दकारिण्यः याः शिवाः फेरवाः तासां वासो गृहं यत्र, तत्र युद्धमभूदित्यर्थः । रौतेः क्तः । रुतम् ॥

**स्त्री प्रतिश्रुत् प्रतिध्वाने**

प्रतिश्रुदादिद्वयं **प्रतिशब्दे** । शृणोतेः क्विप् । प्रतिश्रुत् । प्रतिध्वान पूर्ववत् ॥

**गीतं गानमिमे समे ॥ २७½ ।**

गीतद्वयं **गीते** । गायतेः क्तः । गीतम् । अस्मादेव ल्युटि गानम् ॥

*इति शब्दादिवर्गः ।

## अथ नाट्यवर्गः ।

**निषादर्षभगान्धारषड्जमध्यमधैवताः ।**
**पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥**

निषादादयः सप्त **तन्त्रीसमुत्थे कण्ठोत्थिते** च **शब्दे**[1] । तथा च नारदः—

"षड्जं नदति मयूरो गावो रंहन्ति चर्षभम् ।
अजाविके तु गान्धारं क्रौञ्चो नदति मध्यमम् ॥
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।

१. 'ते श' घ. च. पाठः.

* पदद्वयमिदं मातृकासु न दृश्यते ।

अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः ॥"

इति । एते च मत्ताः पञ्चमं गायन्ति । तथा च विशाखिलः—

"अश्वस्तु धैवतं सोऽपि मत्तः पञ्चमसङ्गतम् ।
निषादं तु गजो गर्जत्युन्मदोऽसौ सपञ्चमम् ॥"

इति । निषीदन्ति स्वरा अस्मिन् इति निषादः । तेन हेतुना

"अशेषसन्धिविषयं स तु व्याप्यावतिष्ठते "

सदेः 'अकर्तरि च—' (३. ३. १९) इति घञ् । 'सदिरप्रतेः' (८. ३. ६६) इति षत्वम् ।

"वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः ।
नदत्यृषभवद् यस्मात् तेन स ऋषभः स्मृतः ॥"

'ऋषि गतौ' । 'ऋषिवृषिभ्यां कित्' (उ० ३. १२३) इत्यभन् ।

"वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः ।
नानागन्धवहः पुण्यो गान्धारस्तेन स स्मृतः ॥"

†गान्धारोऽभिजनोऽस्येति गान्धारः । 'सिन्धुतक्षशिलादिभ्योऽणञौ' (४.३.९३) ।

"कण्ठादुत्तिष्ठति व्यक्तं षड्जः षड्भ्यस्तु जायते ।
कण्ठोरस्तालुनासाभ्यां जिह्वाया दशनादपि ॥"

पूर्ववज्जनेर्डः ।

"तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः ।
नाभिं प्राप्तो महानादो मध्यस्थस्तेन मध्यमः ॥"

'मध्यान्मः' (४. ३. ८) ।

"अभिसन्धीयते यस्मात् स्वरांस्तेनैष धैवतः ।
स तु तारप्रधानत्वाल्ललाटेऽप्यवतिष्ठते ॥"

धीमद्भिर्गीयत इत्यर्थे 'शेषेऽण्' । नैरुक्तो वकारः ।

१. 'था वि' क. ख. पाठः. २. 'हेतुना ॥' क. ख. ङ. छ. पाठः. ३. 'रात् ते' ङ छ. पाठः.

† 'गन्धारा अभि' इति पाठः स्यात् ।

"वायुः समुत्थितो नाभेरुरोहृत्कण्ठमूर्धसु ।
विचरन् पञ्चमस्थानप्राप्त्या पञ्चम उच्यते ॥"

पञ्चन्शब्दाद् मट् ॥"

**काकली तु कले सूक्ष्मे**

**मधुरास्फुटो ध्वनिः** कलः । तस्मिन् **कले सूक्ष्मे** काकली । ईषत् कलोऽस्येति काकली । 'ईषदर्थे' (६. ३. १०५) इति कोः कादेशः । गौरादिङीप् ॥

**ध्वनौ तु मधुरास्फुटे ।**
**कलः**

मधुरे **श्रुतिसुखे** अस्फुटे **अव्यक्ताक्षरे ध्वनौ** कलः । 'कड मदे' । 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' (३. ३. ११९) इति चकारस्यानुक्तसमुच्चयार्थत्वाद् घः । डलयोरेकत्वस्मरणम् ॥

**मन्द्रस्तु गम्भीरे**

**गम्भीरे ध्वनौ** मन्द्रः । शक्रवद् रः ॥

**तारोऽत्युच्चैः**

**अत्युच्चैर्ध्वनौ** तारः । तारयति रोधयतीत्यच् ॥

**त्रयस्त्रिषु ॥ २ ॥**

कलादयस्त्रयस्त्रिषु । कलो ध्वनिः , कला वाणी इत्यादि ॥

**समन्वितलयस्त्वेकतालः**

सम्यगन्वितः समन्वितः लयो द्रुतादिर्यत्र येन वा, सम्यग् यथाशास्त्रं वा (अन्वि)तः लयो मध्यमलयः स ए(व ? क)तालः । स(मंतान ? मताल)[1] इति यस्याख्या । तौर्यत्रिकमेकताल[2] इति केचित् ॥

1. 'मं ता इ', क., 'मं दान इ' घ. च. पाठः.   २. 'व ता' घ. पाठः.

**वीणा तु वल्लकी ।**

**विपञ्ची**

वीणात्रयं **वीणायाम्** । 'रास्नासास्नास्थूणावीणा' (उ० ३. १५) इत्यनेन 'वी गतिप्रजनकान्त्यशनखादनेषु' नप्रत्ययः । णत्वम् । गुणाभावः । अवृद्धिश्च(?) । वीणा । 'वल वल्ल संवरणे' । 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३५) । क्वुन् । गौरादिः । वल्लकी । विपञ्चयति विस्तारयति शब्दमिति विपञ्ची । 'पचि विस्तारवचने' । ण्यन्तात् पचाद्यच् । गौरादिः ॥

**सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥**

सा वीणैव सप्तभिस्तन्त्रीभिर्लक्षिता परिवादिनी । 'सवगसिआ' इति यस्य प्रसिद्धिः । परितो वादः परिवादः । तद्योगाद् अत इनिः ङीप् च ॥

**ततं वीणादिकं वाद्यम्**

**वीणादीनां वाद्यं** ततम् । 'तनिमृङ्भ्यां किच्च' (उ० ३. ८८) इति तन् । तन्त्रीतननाद् वाद्यमपि ततम् ॥

**आनद्धं मुरजादिकम् ।**

**मुरजादीनां वाद्यमानद्धम्** । मुखे चर्मणा बद्धमानद्धम् । 'णह बन्धने' । 'नपुंसके भावे क्तः' (३. ३. ११४) । आदिना पटहादयः ॥

**वंश्यादिकं तु शुषिरं**

**वंश्यादीनां वाद्यं** शुषिरम् । शुषिश्छिद्रम् । तद्योगाद् मधुरवद् रः । आदिना शङ्खकाहलादयः ।

"शिरीषं शुषिरं शिष्यं शीर्षं तालव्यशादयः"

इति शभेदः ॥

**कांस्यतालादिकं घनम् ॥ ४ ॥**

१. 'न्त्यादाने' घ. च पाठः.

कांस्यादीनां वाद्यं घनम् । घनशब्द उक्तः । आदिना घण्टादि ॥

**चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।**

इदं ततादि चतुर्विधं चतुष्प्रकारं वाद्यादित्रिकनामकम् । वादयन्ति ध्वनयन्ति तदिति वाद्यम् । कर्मणि 'अचो यत्' (३. १. ९७) । §'भूमिवदिगृभ्यो णित्रन्' (उ० ४. १७२) । वादित्रम् । 'तुद व्यथने' । कर्म(णि) ण्य(ण्यत्) । आतोद्यम् ॥

**मृदङ्गा मुरजाः**

मृदङ्गद्वयं **मुरजे** । मृत्तिका अङ्गं यस्यासौ मृदङ्गः । यद्वा 'मृदु मर्दने' । *'त्रादिभ्यश्च' (उ० १. १२५) इत्यङ्गच् । बाहुलकाद् गुणाभावः । मुराज्जातो मुरजः । व्यक्तौ बहुवचनम् ॥

**भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ ५ ॥**

मुरजस्याङ्क्यादयस्त्रयो भेदाः । तदुक्तं—

"हरीतक्यादयस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः ।
आलिङ्ग्यश्चैव गोपुच्छः प्रकृत्या सम्प्रकीर्तितः ॥"

अङ्के उत्सङ्गे वाद्यत इत्यङ्क्यः । 'तत्र साधुः' (४. ४. ९८) इति यत् । वाद्यमान आलिङ्ग्यत इत्यालिङ्ग्यः । आङ्पूर्वाद् 'लिगि गत्यर्थे' इत्यस्मात् कर्मणि घञ् । ततो यत् । वादनार्थमूर्ध्वः सन् कायति शब्दायत इत्यूर्ध्वकः । ऊर्ध्वशब्दोऽयम् । अतो निर्विकारः । तदुक्तं वर्णदेशनायाम्—'उज्जिहीते उद्गच्छतीत्यूर्ध्वः । उद्धाञो डप्रत्यये, आदिवर्णस्याप्यूकारादेशे नैरुक्ते वकाररहित ऊर्धः । यस्तूपरिपर्याय आश्रयपरतन्त्रः, स मकारान्तोऽव्ययं वकार-

१ 'भ्र' घ. पाठः.   २. 'तः क' क. ख. घ. ङ. पाठः.

§ 'भूव',      'तरत्यादिभ्यश्च' इति मुद्रितोणादिपाठः.

वांश्च। तथा च कविरहस्ये—'ऊर्ध्वं धुनोति वायुः' इति। एतत्पर्यायोऽप्यनव्ययमदन्तोऽस्ति। ऊर्ध्वदेहे भवः और्ध्वदेहिक इति। 'अन्तःपूर्वपदाट्ठञ्' (४.३.६०) इत्यनुवृत्तौ 'अध्यात्मादिभ्य उपसङ्ख्यानम' इति ठञ् इत्यत्र जयादित्यः।

"कुर्वतीरुपलैस्तुङ्गैर्भुवनं नीचमूर्ध्वजैः।
तस्याचलालीरन्वेति चित्रा नागचमूर्ध्वजैः॥

इति वकारवत्त्वमूर्ध्वशब्दस्य व्युत्पादितम्॥

**स्याद् यशःपटहो ढक्का**

यशःपटहद्वयं **ढक्कायाम्**। ढगिति कायतीति ढक्का। 'आतोऽनुपसर्गे कः' (३.२.३)॥

**भेरी स्त्री दुन्दुभिः पुमान्।**

भेरी(त्र?द्व)यं **भेरिकायाम्**। भिय इन्द्रवद् रन् धातोरेत्वं च 'ऋज्रेन्द्र—' (उ० २.३१) इत्यादिना निपात्यते। पिप्पल्यादित्वाद् ङीप्। दुन्दुशब्देन उभिः पूरणं यत्र स दुन्दुभिः। 'उभ उम्भ पूरणे'। सार्वधातुक इ(नि!)ः। शकन्ध्वादिः॥

**आनकः पटहोऽस्त्री स्यात्**

आनकद्वयं **पटहे**। आङ्पूर्वादनितेः 'कृञादिभ्यः संज्ञायां वुन्' (उ० ५.३५)। अकादेशः। आनकः। पट इति शब्दं जहातीति पटहः। पटहोऽस्त्रीति सम्बन्धः। तथा च पुन्नपुंसकाधिकारे चन्द्रगोमी—

"उपवासं गृहं गेहं लोहं पटहमित्यपि"

**कोणो वीणादिवादनम्॥ ६॥**

धनुरादौ **वीणादिवादनवस्तुनि** कोणः। 'कुण शब्दोपकरणयोः'। करणे 'हलश्च' (३.३.१२१) इति घञ्॥

**वीणादण्डः प्रवालः स्यात्**

**वीणाया दण्डे** प्रवालः । 'वल वल्ल संवरणे'। कर्मणि घञ्।

"प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे "

इति शाश्वत. ॥

**ककुभस्तु प्रसेवकः।**

ककुभद्वयं **वीणादण्डाधः[1]स्थितवक्रदारुणि**। कं वातं स्कुभ्नाति वारयतीति ककुभः । स्कुभेः सौत्राद् 'मूलविभुजादित्वात् कः। पृषोदरादिसलोपः। प्रसेवक इति। 'सेवृ षेवृ सेवने'। दन्त्यादिः। 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३९) इति क्वुन् ॥

**कोलम्बकस्तु कायोऽस्याः**

अस्या **वीणायाः** कायः **तन्त्रीदण्डादिसमुदायः** कोलम्बकः। क्रोडां लम्बमानः कायतीति कोलम्बकः। पृषोदरादिः ॥

**उपनाहो निबन्धनम् ॥ ७ ॥**

**यत्र तन्त्री निबध्यते तस्मिन्नूर्ध्वभागे** उपनाहद्वयम्। 'णह बन्धने'। 'हलश्च' (३. ३. १२१) इति घञ्। ल्युटि निबन्धनम् ॥

**वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः।**
**मर्दलः प्रणवोऽन्ये च**

डमरुप्रभृतयः षट् प्रत्येकं **वाद्यानां भेदे**। कापालिकयोगिवाद्यं डमरुः प्रसिद्धः। स एव विपुलो मड्डुः[2]। चूर्चुके[3] इति यस्य प्रसिद्धिः। 'डुमस्जो शुद्धौ'।

१. 'व' ङ. छ. पाठः. २. 'रु' घ. पाठः. ३. 'ङ्क' ङ. पाठः.

'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १. ७)। 'झलां जश् झशि' (८. ४. ५३) इति जश्त्वं सकारस्य दकारः। 'न्यङ्क्वादीनां च' (७. ३. ५३) इति कुत्वं गकारः। पृषोदरादित्वाद् गकारस्य डकारः। डिण्डीति शब्दं मिनोतीति डिण्डिमः। डिङ्गुरीति यस्य प्रसिद्धिः। 'डुमिञ् प्रक्षेपणे'। 'अन्येभ्योऽपि दृश्यते' (वा० ३. २. १०१) इति डः। झर्झरः करड इत्युच्यते। 'जर्ज चर्च झर्झ परिभाषणसन्तर्जनयोः'। §'ऋच्छेररन्' (उ० ३. १३१) इति बाहुलकोऽरन्। मर्दलः प्रसिद्धः। *'मृद तृप्तियोगे'। चुरादिः। वृषादिभ्यः कलच् (उ० १. १११)। प्रणुवन्ति स्तुतिं कुर्वन्त्यनेनेति प्रणवः। गायनपटह उच्यते। 'णु स्तुतौ'। प्रपूर्वः। 'पुंसि संज्ञायां घः प्रायेण' (३. ३. ११८)। केचित् पणव इति वर्णयन्ति। अन्ये गोमुखहुडुक्कादयः॥

**नर्तकीलासिके समे ॥ ८ ॥**

नर्तकीद्वयं नर्तक्याम्। 'शिल्पिनि ष्वुन्' (३. १. १४५)। 'षिद्गौरादिभ्यश्च' (४. १. ४१) इति ङीष्। लासिकेति। 'लस श्लेषणक्रीडनयोः'। कर्तरि ण्वुल्। 'नृतिखनिरञ्जिभ्यः—' (वा० ३. १. १४५) इति परिगणितत्वान्नात्र ष्वुन्। समे इत्यनेन स्त्रीलिङ्गत्वं दर्शितम्॥

**विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्।**

विलम्बितत्रिकाणां वाद्यानां यथाक्रमं तत्वादिनामत्रयम्। विलम्बन्ते पदादयोऽत्रेति विलम्बितम्। लम्बेः 'क्तोऽधिकरणे—' (३. ४. ७६) इत्यादिना क्तः। द्रवन्ति त्वरन्ते करचरणादयोऽत्रेति द्रुतम्। 'द्रु गतौ'। पूर्ववत् क्तः। विलम्बितद्रुतयोर्मध्यभवत्वाद् मध्यम्। तत्वमिति। करचरणानां तननं तत्। 'तनु विस्तारे'। सम्पदादित्वात् क्विप्। तद्योगाद् 'अन्येभ्योऽपि दृश्यते' (वा० ५. २. १०९) इति वः। 'तसौ मत्वर्थे' (१. ४. १९) इति भसंज्ञकत्वात् तकारस्य जश्त्वाभावः। ओघ इति। 'उच समवाये'। घञ्। पृषोदरादित्वाद् घत्वम्॥

१. 'डिङ्गुनी' च., 'डङ्गुनी' घ., 'डिङ्गुरी' ख. पाठः. २. 'म' ख. पाठः. ३. 'मुडुकाद' ङ. छ. पाठः.

§ 'ऋच्छेररः' इति मुद्रितोणादिपाठः। * 'मद तृप्तियोगे' इति मुद्रितधातुपाठः

**तालः कालक्रियामानं**

ईदृशैरङ्गैर्हस्ताङ्गुल्याकुञ्चनप्रसारणक्रियाभिर्नर्तितव्यं गातव्यं चेति **काल-क्रिययोः प्रमाणं** तालः। 'तल प्रतिष्ठाकरणयोः'। चुरादिः। घञ्॥

**लयः साम्यम्**

**गीतवाद्यपादन्यासानां क्रियातालयोश्च साम्ये** लयः। 'लीङ् श्लेषणे'। 'एरच्' (३.३.५६)॥

**अथास्त्रियाम्॥९॥**

**ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने।**

ताण्डवषट्कं **नृत्ते**। ताण्डयेन मुनिना प्रोक्तम् इति विग्रहे 'कलापिवैशम्पायनान्तेवासिभ्यश्च' (४.३.१०४) इति णिनिः। 'आपत्यस्य च तद्धितेऽनाति' (६.४.१५१) इति यलोपः। ताण्डि नृत्तशास्त्रम्। तदस्यास्तीति ताण्डवम्। 'अन्येभ्योऽपि दृश्यते' (वा० ५.२.१०९) इति वक्तव्येन वः। नैरुक्त इकारस्याकारः। ताण्डवमस्त्रीति सम्बन्धः। 'नट अवस्यन्दने'। ल्युट्। नटनम्। ण्यति नाट्यम्। 'लस श्लेषणक्रीडनयोः'। भावे ण्यत्। लास्यम्। 'नृती नर्तने'। 'ऋदुपधाच्चाकॢपिचृतेः' (३.१.११०) इति क्यप्। नृत्यम्। नृत्तमिति पाठे भावे क्तः। ल्युटि नर्तनम्॥

**तौर्यत्रिकं नृत्तगीतवाद्यं नाट्यमिदं त्रयम्॥१०॥**

**नृत्तत्रिकं** तौर्यत्रिकमुच्यते। नाट्यं च तत्। '*तुरी त्वरायाम्'। 'ऋहलोर्ण्यत्' (३.१.१२४)। दीर्घत्वं च। तूर्यं मुरजादि। तत्र भवं तौर्यम्। त्रयोंऽशा अस्येति त्रिकम्। 'सङ्ख्याया अतिशदन्तायाः कन्' (५.१.२२) इति कन्। तौर्येण त्रिकं तौर्यत्रिकम्। 'तृतीया' (२.१.३०) इति योगविभागात् समासः। नटस्येदं नाट्यम्। 'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः' (४.३.१२९)॥

* 'तुर त्वरणे' इति मुद्रितधातुपाठः।

**भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ।**
**स्त्रीवेषधारी पुरुषः**

**स्त्रीवेषधारी यः पुरुषो नृत्यति**, तत्र भ्रकुंसत्रयम् । भ्रुवोः कुंसो भावो यत्र स भ्रुकुंसः । एवं भ्रूकुंसादिरपि । भ्रूभ्यां कुंसत्यभिप्रायविशेषमिति वा । 'पट पुट' इति दण्डकपठिताद् भासार्थात् कुसिधातोश्चुरादेः एरचि 'भ्रकुंसादीनामकारो वक्तव्यः' (वा० ६. ३. ६१) इति भ्रूशब्दस्याकारः । भ्रकुंसः । 'इको ह्रस्वोऽङ्यो गालवस्य' (६. ३. ६१) इति विभाषा ह्रस्वत्वे भ्रुकुंस-भ्रूकुंसौ । ऋकारो वा इत्यन्यः । तथा च—

"भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्च भृकुंसकः"

इति । 'स्वर्महंसभ्रुकुंसाः' इति सभेदः ॥

**नाट्योक्तौ गणिकाज्जुका ॥ ११ ॥**

नाट्योक्तावित्यधिकारः प्रागङ्गहारात् । गणिका **वेश्या नाट्योक्तौ** अज्जुका । 'अर्ज्ज सर्ज अर्जने' । बाहुलकात 'समि कम उकन्' (उ० २. ३२) रलोपश्च ॥

**भगिनीपतिरावुत्तः**

**भगिन्याः पतिः** आवुत्तः ॥

**भावो विद्वान्**

विद्वान् पण्डितो भावः । 'भवतेश्चोपसङ्ख्यानम्' इति णः ॥

**अथावुकः ।**
**जनकः**

**जनक** आवुकाख्यः । 'अव रक्षणे' । बाहुलकाद् 'मृकणिभ्यामूकोकणौ' (उ० ४. ३९) इत्युकण् । 'अत उपधायाः' (७. २. ११६) इति वृद्धिः ॥

**युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥**

कुमारद्वयं **युवराजे**। कुमार उक्तः॥

**राजा भट्टारको देवः**

भट्टारकद्वयं **राजनि**। भट्यन्त इति। 'भट भृतौ'। क्विप्। भटाः सेवकाः। तैस्तारकः उत्तारकः। पृषोदरादित्वात् तकारस्य टकारः। देव उक्तः॥

**तत्सुता भर्तृदारिका।**

तत्सुता **राजदुहिता** भर्तृदारिका॥

**देवी कृताभिषेकायाम्**

पट्टबन्धनाय भृङ्गारादिना **कृताभिषेकायां राजमहिष्यां** देवी॥

**इतरासु तु भट्टिनी॥ १३॥**

**अकृताभिषेकासु** सर्वास्वितरासु भट्टिनी॥

**अब्रह्मण्यमवध्योक्तौ**

**न वधमर्हतीत्युक्तौ** अब्रह्मण्यम्। ब्रह्मणे हित ब्रह्मण्यम्। '—यवमाषतिलवृषब्रह्मणश्च' (५. १. ७) इति यत्। नञा अब्रह्मण्यम्॥

**राज्ञः स्यालस्तु राष्ट्रियः।**

**राज्ञः स्यालो** राष्ट्रियः। 'राष्ट्रावारपाराद् घखौ' (४. २. ९३)॥

**अम्बा माता**

**माता** अम्बाख्या। 'अबि रबि लबि स्रंसने'। पचादिः॥

**अथ बाला स्याद् वासूः**

**बाला कुमारी** वासूः। वधूशब्दवत्। 'वस निवासे'। 'णित् कसिपद्यर्तेः' (उ० १. ८८) इति बहुलवचनादूप्रत्ययः णिद्भावश्च॥

**आर्यस्तु मारिषः॥ १४॥**

आर्योऽभ्यर्हितो मारिषः। मूर्धन्यषः। मृङो बहुलवचनाद् 'रुहेर्वृद्धिश्च' (उ० १.५०) इति टिषच्॥

**अत्तिका भगिनी ज्येष्ठा**

**ज्येष्ठा भगिनी** अत्तिका। 'अद भक्षणे'। 'वृतेस्तिकन्' (उ० ३. १४७) इति बहुलवचनात् तिकन्। 'अत्तिका चान्तिका तथा' इति द्विरूपकोशः॥

**निष्ठा निर्वहणं**

निष्ठाद्वयं **नाटकपञ्च(म)सन्धौ**। तथा च दत्तिलः—

"मुखं प्रतिमुखं चैव गर्भो विमर्श एव च।
तथा निर्वहणं चैव नाटके पञ्च सन्धयः॥
बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथाक्रमम्।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत्॥"

निष्ठेति। निपूर्वात् तिष्ठतेः 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। 'उपसर्गात् सुनोति—' (८. ३. ६५) इत्यादिना षत्वम्। निर्वहणमिति। निस्पूर्वाद् वहतेः करणे ल्युट्। 'कृत्यचः' (८. ४. २९) इति णत्वम्॥

**समे।**

**हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति॥ १८॥**

हण्डे इत्यादि क्रमेण **नीचादित्रयाणां सम्बोधने**। त्रयमप्यव्ययम्। हला इति दीर्घाकारान्तम्। तथा च—'हला सउन्दले!' इति कालिदासः। समे हण्डे हञ्जे इति सम्बन्धः। शब्दरूपापेक्षया समे इति नपुंसकत्वम्। एकारान्तत्वमेतयोः। केचित्तु सम्बुद्धौ प्रायशः प्रयोगादनयोः सम्बुद्ध्यन्ते दर्शिते, स्वभावतस्तु टावन्तत्वम्। तथा च हारावली—

"प्रेष्या हञ्जेति भद्रेति गम्या सखी हलेति च"॥

१. 'खि' ख. घ. च. छ. पाठः.

**अङ्गहारोऽङ्गविक्षेपः**

अङ्गहारद्वयं नृत्यविशेषादङ्गभङ्गविशेषे । तथा च भरताचार्यः—

"स्थिरहस्तादिषट्त्रिंशत् सम्प्रोक्ता ह्यङ्गहारकाः ।
करणैरिह संयुक्ता अङ्गहारा इति स्मृताः ॥

स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः पुमान् ।
सूचीविद्धस्तथा चैव व्यपविद्धस्तथैव च ॥"

इत्येवंभेदाभिन्नाः । अङ्गस्य हारोऽङ्गहारः । भावे घञ् । 'अङ्गहारस्त्वङ्गहारि-रि'ति शब्दार्णवः । अङ्गविक्षेप इति । पचाद्यच् ॥

**व्यञ्जकाभिनयौ समौ ।**

व्यञ्जकद्वयं हस्तादिभिः क्रोधादिना शस्त्रप्रहारादिसूचने । व्यनक्ति भावानिति व्यञ्जकः । ण्वुल् । अभिनयति व्यनक्तीत्यभिनयः । पचादिः । तथा चाचार्यः—

"अभिपूर्वस्तु नीधातुराभिमुख्यार्थनिर्णये ।
यस्मात् पदार्थान् नयति तस्मादभिनयः स्मृतः ॥"

**निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १८ ॥**

द्वे आङ्गिकसात्त्विके यथाक्रममङ्गेन भ्रूलतादिना सत्त्वेन चित्तावधानेन निर्वर्तिते भूते । अङ्गेन निर्वर्तितम् आङ्गिकम् । एवं सात्त्विकम् । 'निर्वृत्तेऽक्षद्यूता-दिभ्यः' (४. ४. १९) इत्यत्र निर्वृत्त इति योगविभागाट्ठक् । स्त्रियाम् आ-ङ्गिकी सात्त्विकी ।

"स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥"

गतो नाट्योक्त्यधिकारः ॥

१. 'ताः एते च स्थिरहस्ता अङ्गहारा इति स्मृताः । एव' ङ. छ. पाठः.

**शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।**
**बीभत्सरौद्रे च रसाः**

शृङ्गारादयोऽष्टौ प्रत्येकं शृङ्गारादिरसे । रस्यते आस्वाद्यत इति रसः । तथा चाचार्यः—

"यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥
भावाभिनयसम्बन्धात् स्थायिभावांस्तथा नराः ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥
पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा ।
स शृङ्गारो रसो ज्ञेयः क्रीडारत्यादिकारणम् ॥
ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥"

उत्साहात्मको वीरः ।

"उत्साहाध्यवसायादविषादित्वादविस्मयादमोहाच्च ।
एभिस्त्वभिनयविशेषैर्वीररसो नाम सम्भवति ॥"

शोकोपचयात्मकः करुणः । तथा चाचार्यः—

"इष्टवधदर्शनाद् वा विप्रियवचनस्य संश्र(या ? वा)द् वापि ।
एतैर्भावविशेषैः करुणरसो नाम सम्भवति ॥"

विस्मयोपचयात्मकोऽद्भुतरसः । यदाह मातृगुप्तः—

"अद्भुतो विस्मयस्थायिभावप्रभव उच्यते ।
प्रासादोद्यानशैलादिगमनैर्दिव्यदर्शनैः ॥
सभाविमानमायेन्द्रजालशिल्पादिदर्शनैः ।
हृदयेप्सितलाभैश्च विभावैस्तस्य सम्भवः ॥"

इति । हासोपचयात्मको हास्यः । तथा चाचार्यः—

"विपरीतालङ्कारैर्विकृताकाराभिधानवेशैश्च ।
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः ॥"

भयोपचयात्मको भयानकः ।

"उच्चैर्भैरवसंरावरक्षःप्रेतादिदर्शनैः ।
शून्यागारसभारण्यवधबन्धनवीक्षणैः ॥
तन्द्रायासक्लतोद्वेगशिवोलूकरुतादिभिः ।
विभावैर्जायते स्त्रीणां नीचानां च भयानकः ॥"

जुगुप्सात्मको बीभत्सः । तथा च मातृगुप्तः —

"विकृतैः पूतिमांसादिदर्शनश्रुतिकीर्तनैः ।
विभावैर्जायते चासौ बीभत्सो नीचसंश्रयः ॥"

क्रोधात्मको रौद्रः । उक्तमाचार्येण —

"युद्धप्रहरणतापनविविधच्छेदनविदारणैर्विविधैः ।
सन्त्राससम्भ्रमाद्यैरेभिः सञ्जायते रौद्रः ॥"

शान्तोऽपि नवमो रसोऽस्ति । तदुक्तं रत्नकोशे —

"शृङ्गारवीरबीभत्सरौद्रहास्यभयानकाः ।
करुणाद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः ॥"

स तु धर्मशृङ्गारत्वाच्छृङ्गार एवानुप्रविष्टः । तथाहि— त्रिविधः शृङ्गारो धर्मार्थकामभिन्नः । तत्राद्यो यथा नन्दयन्त्यां[1] ब्राह्मणभोजनम् । द्वितीयः स्वादिशमात्मसात्कर्तुमुदयनस्य पद्मावतीपरिणयोऽर्थशृङ्गारः[*] । तृतीयः स्वप्न[2]वासवदत्ते तस्यैव वासवदत्तापरिणयः कामशृङ्गारः ॥

**शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥**

शृङ्गारादीनां स्वरूपमुक्तम् । इदानीं तत्पर्यायमाह ॥

१. 'न्त्या' क. पाठः.  २. 'प्ने वासवदत्ता' ङ. पाठः.

* 'शृङ्गारः स्वप्नवासवदत्ते । तृतीयस्तस्यैव' इति पाठः स्यात् ।

**उत्साहवर्धनो वीरः**

उत्साहवर्धनद्वयं **वीरे**। उत्साहेन वर्धनः उत्साहवर्धनः। 'तृतीया' (२. १. ३०) इति योगविभागात् समासः। 'शूर वीर विक्रान्तौ'। पचादिः। वीरः॥

**कारुण्यं करुणा घृणा।**
**कृपा दयानुकम्पा स्यादनुक्रोशोऽपि**

कारुण्यादयः सप्त **कारुण्ये**। करुणैव कारुण्यम्। 'वर्तमानसामीप्ये —' (३. ३. १३१) इति ज्ञापकात् चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। 'कृवृदारिभ्य उनन्' (उ० ३. ५३)। करुणम्। टाप्। करुणा। पुंसि करुणः। घृणेति। 'घृ सेचने'। 'इण्सिञिजिदीङुष्यविभ्यो नक्' (उ० ३. २) इति बाहुलको नक्। कृपेति। 'कृप कृपायाम्' इति निपातनात् कृपेः सम्प्रसारणम्। भिदाद्यङ्। लाक्षणिकत्वात् 'कृपो रो लः' (८. २. १८) इति न लत्वमिति वृत्तिः। 'दय दाने'। भिदाद्यङ्। दया। अनुकम्पेति। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। क्रुशेर्घञ्। अनुक्रोशः॥

**अथो हसः॥ १८॥**

**हासो हास्यं च**

हसत्रयं **हास्ये**। हसहासयोः 'स्वनहसोर्वा' (३. ३. ६२) इति वा अप्। 'ऋहलोर्ण्यत्' (३. १. १२४)। हास्यम्॥

**बीभत्सं विकृतं त्रिष्विदं द्वयम्।**

बीभत्सद्वयं **बीभत्से**। 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (३. १. ६) इति सन् (उपधा?)दीर्घत्वं च। 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (८. २. ३७) इत्यादिना बकारस्य भकारः। 'खरि च' (८. ४. ५५) इति धकारस्य तकारः। ततः पचाद्यच्। विकृतमिति। कृञो 'नपुंसके भावे क्तः' (३. ३. ११४)। एतौ रसे क्लीबे। उपचारान्मांसशोणितादौ। स्त्रियां बीभत्सा॥

**विस्मयोऽद्भुतमाश्चर्यं चित्रमपि**

विस्मयचतुष्कमद्भुते। 'स्मिङ् ईषद्धसने'। 'एरच्' (३. ३. ५६)। अदुपपदाद् भवतेः 'अदि भुवो डुतच्' (उ०५.१)। अद्भुतम्। 'चरेराङि चागुरौ' (वा०३. १. १००) इति यत्प्रत्ययः। 'आश्चर्यमनित्ये' (६. १. १४७) इति निपातनात् सुडागमश्च। आश्चर्यम्। चित्रशब्द उक्तः॥

**अथ भैरवम्॥ १९॥**

**दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्।**

**भयङ्करं प्रतिभयं**

भैरवादयो नव **भयानकरसे**। भीरुशब्दात् 'तस्येदम्' (४. ३. १२०) इत्यण्। भैरवम्। 'दॄ अवदारणे'। करुणावदुनन्। दारुणम्। भीषयतेर्नन्द्यादिल्यु.। भीषणम्। भीष्मभीमयोः 'भियः षुग् वा' (उ०. १. १५३) इति मग्, वा षुक् च। 'घुर भीमार्थशब्दयोः'। कर्तरि पचाद्यच्। घोरम्। भयानकमिति। 'आनकच् शीङ्भियः' (उ० ३. ८२) इत्यानकच्। भयङ्करमिति। 'मेघर्तिभयेषु कृञः' (३.२.४३) इति खच्। प्रतिभयमिति। 'एरच् (३.३.५३)॥

**रौद्रं तूग्रम्**

रौद्रद्वयं **रौद्रे**। रुद्रो देवतास्येति रौद्रम्। 'सास्य देवता' (४. २. २४) इत्यण्। तथा चाचार्यः - -

"रुद्राधिदैवतो रौद्रः करुणो यमदैवतः"

इति। उग्र उक्तः। ततोऽर्शआद्यच्॥

**अमी त्रिषु॥ २०॥**

**चतुर्दश**

अद्भुतादयश्चतुर्दश यदा विशेषणतया वस्तुनि वर्तमानाः तदा त्रिषु। 'शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः' इत्यनेन रूपभेदेन पुंस्त्वम्। 'बीभत्सरौद्रे च' इत्यनेन नपुंसकत्वमुक्तम्॥

१. 'णि' ङ. छ. पाठः.

**दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।**

दरादयः षड् **भये** । 'दृ भये' । 'ऋदोरप्' (३. ३. ५७) । दरः । 'त्रसी उद्वेगे' । भावे घञ् । त्रासः । 'स्त्रियां क्तिन्' (३. ३. ९४) । भीतिः । सम्पदादिक्विप् । भीः । भीतिसाहचर्यात् भीरपि स्त्री । साध्वस्यति क्षिपतीति साध्वसम् । पचादिः । भयमिति । 'अज्विधौ भयादीनामुपसङ्ख्यानं नपुंसके भावे क्तादिनिवृत्त्यर्थम्' (वा० ३. ३. ५६) इत्यच् । वासरूपविधानात् क्तादयोऽपि भवन्ति । तथा च— 'भीतं भयनम्' इत्यमरमाला ॥

**विकारो मानसो भावः**

**कामक्रोधादिकृतचित्तविकारो** भावः । 'भू प्राप्तावात्मनेपदी' । अन् । यदाहाचार्यः—

"वागङ्गसत्त्वाभिनयैराहार्याभिनयैरपि ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥"

स च त्रिविधः । स्थायी व्यभिचारी सात्त्विकश्च । तत्र स्थायिसात्त्विकौ प्रत्येकमष्टधा । व्यभिचारी च त्रयस्त्रिंशत्प्रभेदभिन्नः । तथा च मातृगुप्तः—

"निर्वेदो ग्लानिराशङ्का तथासूया मदः श्रमः ।
आलस्यमथ दैन्यं च चिन्ता मोहः स्मृतिर्मतिः ॥

व्रीला चपलतामर्ष आवेगो जडता धृतिः ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥

त्रासो हर्षः प्रबोधश्च अवहित्थं तथोग्रता ।
वितर्को व्याधिरुन्मादो मरणं शौचमेव च ॥

त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः ।"

**अनुभावो भावबोधकः ॥ २१ ॥**

१. 'स्यं चैव दै' क. पाठः. २. 'डा' घ. ङ. च. छ. पाद

भावस्य हर्षादेर्बोधको रोमाञ्चादिश्चेष्टाविशेषोऽनुभावः। शृङ्गाराभिनये मातृगुप्तः—

"तस्य लोचनचातुर्यभ्रूक्षेपस्मितविभ्रमाः।
चित्राङ्गहारवाद्यादिरनुभाववर्गणः स्मृतः॥"

तथा चाचार्यः—

"स्थितिशौर्यवीर्यधैर्यैरुत्साहपराक्रमैर्विवादैश्च।
वाक्यैराक्षेपकृतैर्वीररसः सम्यगभिनेयः॥"

तथा—

"सस्वनरुदितैर्मोहागमैर्विलपितैः परिदेवितैश्च।
अभिनेयः करुणरसो देहायासाभिघातैश्च॥"

अद्भुतस्य तु,

"स्पर्शग्रहणैरुन्मुक्तनयनैश्च हाहेति साधुवादैश्च।
वेपथुगद्गदवचनस्वेदाद्यैरभिनयस्तस्य॥"

षड्विधहास्ये षड्विध एवानुभावः। तत्र स्मिताभिनय आचार्यः—

"ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत्॥"

"करचरणवदनवेपथुगात्रस्तम्भहृदयप्रयत्नेन।
शुष्कोष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः॥"

बीभत्साभिनये मातृगुप्तः—

"नासाप्रच्छादनाव्यक्तपादपाताक्षिकूणनैः।
हृल्लेखोद्वेजनाद्यैश्च तज्ज्ञैरभिनयः स्मृतः॥"

रौद्राभिनय आचार्यः—

"नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्तनैश्चैव।
एभिः सत्त्वविशेषैस्तस्याभिनयः प्रयोक्तव्यः॥"

१. 'गु' ख. पाठः.

**गर्वोऽभिमानोऽहङ्कारः**

गर्वत्रयमहङ्कारे ।

"गर्वो नाम कुलैश्वर्यरूपविद्याबलादिभिः ।
इष्टार्थविषयप्राप्तेर्जायते नीचगोचरः ॥"

इत्याचार्यः । 'कृगॄदृभ्यो वः' (उ० १. १६१) । गर्वः । 'मान पूजायाम्' घञ् । अभिमानः । अहंशब्दादहङ्कारवाचिनो निपाताद् बाहुलको वर्णात् कारः । अहङ्कारः ॥

**मानश्चित्तसमुन्नतिः ।**

परत उत्कर्षेण चेतस उन्नतिर्मानः । यथा 'शूरोऽस्मि, अर्थवानस्मि' इति । प्रणतियोग्येषून्नतकन्धरत्वं वा मानः । अभिमानवद् घञ् । मातेर्वा ल्युट् । 'कोऽसावनुमान' इति भाष्यप्रयोगात् पुंस्त्वम् । तदुक्तं सरस्वतीकण्ठाभरणे —

"महाभाष्यकृतः 'कोऽसावनुमान' इति स्मृतेः ।
ल्युडन्तोऽपि न पुँल्लिङ्गो मानशब्दः प्रदुष्यति ॥"

**अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥**
**रीढावमाननावज्ञावहेलनमसुक्षणम् ।**

अनादरनवकं परिभवे । 'दृङ् आदरे' । आङ्पूर्वः । 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप् । आदरः । नञा अनादरः । परिभव इति । 'ऋदोरप्' (३. ३. ५७) । पक्षे 'परौ भुवोऽवज्ञाने' (३. ३. ५५) इति वा घञ् । तिरस्क्रियेति । 'कृञः श च' (३.३.१००) इति शः । 'सार्वधातुके यक्' (३.१.६७) । रिङ्शयग्लिङ्क्षु' (७. ४. २८) इति रिङादेशः । 'तिरसोऽन्यतरस्याम्' (८. ३. ४२) इति वा (ष ? स)त्वम् । केचित् तु 'तिरसोऽन्यतरस्याम्' इति (ष ? स)-त्वं न मन्यन्ते, गतिसंज्ञाया अनुवृत्तेः, 'तिरोऽन्तर्धौ' (१.४.७१) इत्यन्तर्धौ तिरसो गतिसंज्ञाविधानात् । तथाहि वृत्तिः—'गतेरित्येव । तिरः कृत्वा काण्डं गतः' । अत एव तत्पक्षे तिर(ष्क्रि ? स्क्रि)येति *मूर्धन्यष(?)कारयुक्तः पाठो-

* 'दन्त्यस' इत्यस्यैव स्थाने लेखकप्रमादापतितोऽयं पाठः स्यात्

ऽसाधुः। अपरस्त्वत्राप्यन्तर्धानं मन्यते। तथाहि—यो येनानादृतः, स इतोऽवश्यमेव कायवाङ्मनसामन्यतमेन व्यवधीयत इति भवति (ष ? स)त्वम्। अतः (ष ? स)कारयुक्तः पाठोऽपि *साधुः। रीढेति। 'री गतिरेषणयोः'। बहुलवचनात् $'समेर्ढः'। गुणाभावश्च। अवमाननेति। 'मान पूजायाम्'। चुरादिण्यन्तात् 'ण्यासश्रन्थो युच्' (३. ३. १०७)। अवज्ञेति। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। अवहेलनमिति। 'हेडृ होडृ अनादरे'। भावे ल्युट्। डलयोरेकत्वस्मरणम्। †सुक्षणमिति। 'सुर्क्ष अनादरे'। रेफवान्। ल्युट्। नैरुक्तो रेफलोपः। दीर्घत्वे सूक्षणमिति राजश्रीधातुवृत्तिः। 'अवहेलमसूक्षणम्' इति पाठान्तरम्[1]। हड्डचन्द्रश्च—"अवहेलस्य घञन्तत्वान्नपुंसकत्वाभावात् सोऽसाधुरिति केचित्। तथा चामरमाला—

"क्षेपोऽवहेलो निर्वादः परिभावोऽप्यनादरः।
निकारः सूक्षणं षण्डे हेलावज्ञे स्त्रियौ मते॥"

इति। असुक्ष[2]णो[3]ऽपि नामानुशासने पुंस्काण्डे दृश्यते। 'परिभावोऽसुर्क्षणः परीभावः क्षेपः' इत्यादि। तथा चाविद्यमानः सुर्क्षणः ‡सुहर्षोऽस्येति व्युत्पत्तिः॥

## मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा

मन्दाक्षपञ्चकं लज्जायाम्। मन्दमाक्षि यस्मिंस्तन्मन्दाक्षम्। पूर्ववत् षच् समासान्तः। ह्रीरिति। 'ह्री लज्जायाम्'। सम्पदादिः। त्रपेति। 'त्रपूष् लज्जायाम्'। 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४)। (व्रीडेति) 'व्रीड चोदने लज्जायां च'। 'गुरोश्च हलः'(३. ३. १०३) इत्यः। 'व्रीडोऽक्लीबे' इति रभसः। 'व्रीडादिवाभ्याशगतैर्विलिल्ये' (स० ३. श्लो० ४०) इति माघप्रयोगः। लत्वे व्रीलेति धातुप्रदीपः। लज्जेति। 'ओलजी ओलस्जी व्रीडे'। 'गुरोश्च हलः' इत्यः। 'झलां जश् झशि' (८. ४. ५३) इति सकारस्य दकारः। 'स्तोः श्चुना श्चुः' (८. ४. ४०) इति श्चुत्वेन जकारः॥

१. 'रमस्ति। ह' ङ. छ पाठः. २. 'क्ष' क. ख. घ. च. पाठः. ३. 'णो ना क. पाठः. ४. 'त्रे' ख. घ. ङ. च. छ. पाठः.

* तथा च 'तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारात्' (५. २. ११) इति काव्यालङ्कारे वामनः।
$ 'शमेर्ढः' (उ० १. १०४) इति मुद्रितोणादिपाठः। † 'रीढावमाननावज्ञा अवहेलनसुक्षणे' इति मूलपाठो व्याख्यातुरभिमत इति भाति। ‡ सुहर्षार्थानुसारात् सुर्क्षणशब्दो नीरेफः पठितुं युक्तः।

**सापत्रपान्यतः ॥ २३ ॥**

**लज्जैव श्वशुरादिदर्शनाद् अन्यतो भवन्ती** अपत्रपा ॥

**क्षान्तिस्तितिक्षा**

क्षान्तिद्वयं **क्षमायाम्** । 'क्षमूष् सहने' । क्तिन् । 'अनुनासिकस्य —' (६.४.१५) इत्यादिना दीर्घः । तितिक्षेति । 'तिज निशा(त)ने क्षमायां च' । 'गुप्तिज्किद्भ्यः सन्' (३.१.५) । अयं च निन्दाक्षमाव्याधिप्रतीकारेष्विष्यते । अतः 'अ प्रत्ययात्' (३.३.१०२) इत्यकारः ॥

**अभिध्या तु परस्वविषयस्पृहा ।**

**परधनविषया** स्पृहा **जिघृक्षा** अभिध्या । ध्यायतेः 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् ॥

**अक्षान्तिरीर्ष्या**

अक्षान्तिद्वयं **पराभ्युदयासहिष्णुतायाम्** । ईर्ष्येति । 'सूक्षर्य ईर्ष्य ईर्ष्यायाम्' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । दीर्घादिरयम् । शब्दभावे न्यासकृतानुशासने नेर्ष्यादावित्यनेन सूत्रेण दीर्घत्वप्रतिषेधस्योक्तत्वात् ईर्ष्येति(?) । शाकल्यस्य मतेन(?) 'अचो रहाभ्यां द्वे' (८. ४. ४६) इति द्वित्वम् ॥

**असूया तु दोषारोपो गुणिन्यपि ॥ २४ ॥**

**गुणवत्यपि पुरुषादौ दोषाविष्करणमसूया** । *'असु क्षेपणे' । 'कण्ड्वादिभ्यो यक्' (३. १. २७) । 'अ प्रत्ययात्' (३. ३. १०२) इत्यकारः । दीर्घत्वं च ॥

**वैरं विरोधो विद्वेषः**

वैरत्रयं **वैरे** । वीरे भवं वैरम् । 'तत्र भवः' (४. ३. ५३) इत्यण् । 'रुधिर् आवरणे' । घञ् । विरोधः । विद्वेषोऽपि घञन्तः ॥

* 'असु उपतापे' इति मुद्रितकण्ड्वादिपाठः ।

**मन्युशोकौ तु शुक् स्त्रियाम् ।**

मन्युत्रिकं **शोके** । ‡'जनिमनिदसिभुजः क्युः' (उ० ३. २०) । मन्युः । 'शुच शोके' । 'चजोः—' (७. ३. ५२) इत्यादिना कुत्वम् । शोकः । शुक् । क्विप् ॥

**पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २७ ॥**

पश्चात्तापत्रयं **पश्चात्तापे** । मोहादिनावधीरणं कृत्वा पश्चात् तप्यत इति पश्चात्तापः । 'तप सन्तापे' । घञ् । एवमनुतापः । विप्रतिपूर्वात् सर्तेर्घञ् । 'उपसर्गस्य—' (६. ३. १२२) इत्यादिना दीर्घत्वम् । विप्रतीसारः ॥

**कोपक्रोधामर्षरोषाः प्रतिघो रुट्क्रुधौ स्त्रियौ ।**

कोपसप्तकं **क्रोधे** । 'कुप क्रोधे', 'क्रुध कोपे' । घञ् । कोपक्रोधौ । 'मृष तितिक्षायाम्' । घञ् । नञा अमर्षः । 'ज्वलयति महतां मनांस्यमर्षः' इति भारविः । दीर्घादिरप्ययम् । तथा च —'निरुद्योगं निरामर्षम्' इति विशाखदत्तः । 'रुष रोषे' । घञ् । रोषः । 'घृषु सङ्घर्षे' । 'अन्येभ्योऽपि—' (३. २. १०१) इति डः । प्रतिघः । रुट् षान्ता । क्रुद् धान्ता । द्वौ क्विबन्तौ ॥

**शुचौ तु चरिते शीलम्**

कामक्रोधादिरहितं चरितं शुचि । तस्मिन् शीलम् । 'शील समाधौ' । तालव्यादिः । इगुपधलक्षणः कः ॥

**उन्मादश्चित्तविभ्रमः ॥ २८ ॥**

चित्तविभ्रमश्चित्तवैक्लव्यमुन्मादः । 'मदी हर्षे' । भावे घञ् । 'अत उपधायाः' (७. २. ११६) इति वृद्धिः ॥

**प्रेमा ना प्रियता हार्दं प्रेम स्नेहः**

प्रेमपञ्चकं **स्नेहे** । 'पृथ्वादिभ्य इमनिज् वा' (५. १. १२२) इतीमनिच् । 'प्रियस्थिर—'(६. ४. १५७) इति प्रादेशः । प्रेमा नान्तः । प्रिय-

‡ 'यजिमनिशुन्धिदसिभ्यो युच्' इति मुद्रितोणादिपाठः ।

तेति । 'तस्य भावस्त्वतलौ' (५. १. ११९) । हृदये भवं हार्दम् । 'तत्र भवः' (४. ३. ५३) इत्यण् । 'हृदयस्य हृल्लेखयदण्लासेषु' (६. ३. ५०) इति हृदादेशः । प्रेमेति । 'प्रीञ् तर्पणे' । †'मनिन् सर्वधातुभ्यः' (उ० ४. १४६) इति मनिन् । 'ष्णिह प्रीतौ' । भावे घञ् । स्नेहः ॥

अथ दोहदम् ।

**इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ॥ २७॥**

**कामोऽभिलाषस्तर्षश्च**

दोहदादयो द्वादश इच्छायाम् । विशेषस्यापि सामान्येनाभिधानं भवति । तथा च रत्नकोशे अपत्रपाया लज्जाविशेषत्वेऽपि 'ह्रीर्लज्जापत्रपा व्रीडा' इति निर्देशः । तदिहापि दोहदस्य इच्छाविशेषत्वेऽपि सामान्येन निर्देशः । दोहं पूर्तिं ददातीति दोहदः । 'आतोऽनुपसर्गे कः' (३. २. ३) । दोहल इति पाठे दोहं पूर्तिं ददातीति पूर्ववत् कः । 'इच्छा' (३. ३. १०१) इत्यनेन सूत्रेणेच्छा निपातिता । काङ्क्षावाञ्छेहानां 'गुरोश्च हलः' (३. ३. १०३) इत्यः । स्पृहेति । 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) । तृडिति । *'ञितृष पिपासायाम्' । क्विप् । लिप्सेति । 'डुलभष् प्राप्तौ' । 'सनिमीमाघुरभ—' (७. ४. ५४) इत्यादिना इस् । 'अत्र लोपोऽभ्यासस्य' (७. ४. ५८) इत्यभ्यासलोपः । 'अ प्रत्ययात्' (३.३.१०२) इत्यकारः । आमकत्वेन मन एव रथो यत्रेति मनोरथः । 'कमु कान्तौ' । उन्मादवद् घञ् । कामः । 'लष कान्तौ' । मूर्धन्यषः । घञ् । अभिलाषः । 'ञितृष पिपासायाम्' । घञ् । तर्षः ॥

**स महाल्लाँलसा द्वयोः ।**

१. 'शः । इद्दा' घ. च. पाठः २. 'अदीर्घत्वे का' क. ख. घ. पाठः

† 'सर्वधातुभ्यो मनिन्' इति मुद्रितोणादिपाठः । * 'ञितृषा' इति मुद्रितधातुपाठः ।

स **तर्षो महान्** लालसा। 'लस कान्तौ'। यङ्लुगन्ता(दच्? दः)। 'छायां निजस्त्रीचटुलालसानाम्' (स० ४. श्लो० ६) इति माघः॥

**उपाधिर्ना धर्मचिन्ना**

उपाधिद्वयं **धर्मचिन्तायाम्**। उपशान्त आधिर्यस्मिन् स उपाधिः। निर्जरवत् समासोत्तरपदलोपौ॥

**पुंस्याधिर्मानसी व्यथा॥ २८॥**

मानसी व्यथा **मनसो दुःखम्** आधिः। धाञः 'उपसर्गे घोः किः' (३. ३. ९२)॥

**स्याच्चिन्ता स्मृतिराध्यानम्**

चिन्तात्रयं **चिन्तायाम्**। 'चिति स्मृत्याम्'। चुरादिणिच्। 'चिन्तिपूजि---' (३. ३. १०५) इत्यादिना अङ्। 'णेरनिटि' (६. ४. ५१) इति णिलोपः। स्मृतिरिति। 'स्त्रियां क्तिन्' (३. ३. ९४)। ल्युटि आध्यानम्॥

**उत्कण्ठोत्कलिके समे।**

उत्कण्ठाद्वयं **कामादिना सोत्सुकस्मरणे**। उत्कण्ठेति। 'मठि कठि शोके'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। उत्कलिकेति। 'कल सङ्ख्याने'। चुरादिरदन्तः। 'क्वुन् शिल्पिसंज्ञयोः—' (उ० २. ३५) इति क्वुन्। 'उत्कण्ठोत्कलिके स्त्रियौ' इति धातुप्रदीपः॥

**उत्साहो व्यवसायः स्यात्**

उत्साहद्वय**मुत्साहे**। उत्साहः (व्यवसाय) इति सहिस्यतिभ्यां घञ्। उपधावृद्धिः॥

**स वीर्यमतिशक्तिभाक्॥ २९॥**

**उत्साह एवातिशक्तियुक्तो** वीर्यम्[1]। 'शूर वीर विक्रान्तौ'। चुरादिणिच्। 'अचो यत्' (३. १. ९७)॥

१. 'यं क्लीबम्। शृ' क. ख. ङ. छ. पाठः.

**कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।**

**कुसृतिर्निकृतिः शाठ्यं**

कपटनवकं **छद्मनि** । कं ब्रह्माणमपि पटयति मोहयतीति कपटः । 'पट गतौ' । अच् । कपटोऽस्त्रीति सम्बन्धः । 'अज गतिक्षेपणयोः' । भावे घञ् । उपधावृद्धिः । 'अजिव्रज्योश्च' (७. ३. ६०) इति न कुत्वम् । व्याजः । 'दन्भु दम्भे' । घञ् । दम्भः । आधिवदुपधिः । 'छद अपवारणे' । चुरादिणिच् । 'अत उपधायाः' (७. २. ११६) इति वृद्धिः । 'मनिन्—' (उ० १. १४६) इति मनिन् । 'इस्मन्त्रन्क्विषु च' (६. ४. ९७) इति ह्रस्वत्वम् । छद्म । कितवस्य भावः कैतवम् । युवादण् । चित्तस्य कुत्सिता सृतिः गतिः कुसृतिः । 'सृ गतौ' । क्तिन् । 'कृञ् हिंसायाम्' । निकृतिः । शठस्य भावः शाठ्यम् । अथवा 'शठ कैतवे' । तालव्यादिः । 'ऋहलोर्ण्यत्' (३. १. १२४) ॥

**प्रमादोऽनवधानता ॥ ३० ॥**

प्रमादद्वयम**नवधाने**। 'मदी हर्षे' । घञ् । प्रमादः । तलि अनवधानता ॥

**कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।**

कौतूहलचतुष्कं **कौतुके** । यद्वशादपूर्वदिदृक्षा स्यात् । कौतूहलकौतुकयोः प्रज्ञादित्वात् स्वार्थेऽण् । कुतूहलमिति । कुपूर्वात् 'तूल निष्कर्षे' इत्यस्माद् घञ् । पृषोदरादित्वाद्[1] वर्णागमः । कुतुकमिति । पृषोदरादिः ॥

**स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा ॥ ३१ ॥**

**हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ।**

स्त्रीणां **शृङ्गारभावजाः** क्रियाश्चेष्टा **विलासादयो** हावशब्देनोच्यन्ते । हूयन्ते रागिणोऽत्रेति हावः । 'हु दानादानयोः' । बाहुलकाद् घञ् । तथा च राहुलः—

१. 'दिः । कु' क. ख. पाठः.

"प्राप्तेषु शृङ्गाररसाश्रयेषु भावेषु कामाङ्कुरचिह्नितेषु ।
उत्पद्यते यत् स्थितिवीक्षितोक्तमुन्मीलितं रम्यतया स हावः ॥"

'लस श्लेषणक्रीडनयोः' । दन्त्यसः । भावे घञ् । विलासः । 'वा गतिगन्धनयोः' । 'मृगय्वादयश्च' (उ० १.३७) इति कुः । विपूर्वः । 'आतो लोप इटि च' (६. ४. ६४) इत्याकारलोपः । वबयोरेकत्वस्मरणम् । विबुः गतिविशेषः । स उच्यति समवैत्यस्मिन्निति । 'उच समवाये' । घञ् । कुत्वम् । यणादेशः विब्वोकः । 'भ्रमु चलने' । भावे घञ् । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (७. ३. ३४) इति प्रतिषेधाद् 'अत उपधायाः' (७. २. ११६) इति न वृद्धिः । विभ्रमः । 'लड विलासे' । क्तः इट् च । डलयोरेकत्वस्मरणम् । ललितम् । 'हेडृ होडृ अनादरे' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । डलयोरेकत्वस्मरणम् । हेला । 'लीङ् श्लेषणे' । '*मूङ्पूङ्श(क्ति ? कि)भ्यः क्कः' (उ० ४. ११०) इति बाहुलकः क्कः । लीला । तथा चाचार्यः —

"स्थानासनगमनानां नेत्रभ्रूकर्मणां चैव ।
उत्पद्यते विशेषो योऽक्लिष्टः[1] स तु विलासः स्यात् ॥
इष्टानां भावानां प्राप्तावभिमानगर्वसम्भूतः ।
स्त्रीणामनादरकृतो बिब्बोको नाम स ज्ञेयः ॥
विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो व्यत्यासो विभ्रमः प्रोक्तः ॥
करचरणाङ्गन्यासः सभ्रूनेत्रोष्ठसम्प्रयुक्तस्तु ।
सुकुमारविधानेन स्त्रीभिः परिकीर्तितं ललितम् ॥"

राहुलकः —

"विदग्धशृङ्गाररसोपपन्नां वधूजनस्याभिनिवेशनिष्ठाम् ।
वदन्ति हेलामिवं[2] चारुचेष्टां जने तु हेवाक इति[3] प्रसिद्धिः ॥"

१ 'यः क्लि' क. ख. घ. च. छ. पाठः. २. 'ङ्गैर्हौ' क. ख. पाठः. ३. 'ति' क. पाठः.

* 'मूशक्यबिभ्यः क्कः' इति मुद्रितोणादिपाठः ।

मातृगुप्तः —

"प्रियवाग्भिरलङ्कारैर्मधुरैः प्रीतियोजितैः ।
प्रियस्यानुकृतिः स्त्रीणां लीला स्यात् तु यथोच्यते ॥"

लीलेति इतिशब्दस्य निपातितत्वात् स आद्यर्थे । आदिना च विच्छित्तिकिलिकिञ्चितमोट्टायितकुट्टमितविकृतानां ग्रहणम् । तदुक्तमाचार्येण —

"लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥
विकृतं चेति विख्याता दश स्त्रीणां स्वभावजाः ।
माल्याच्छादनभूषणविलेपनानामनादरन्यासः ॥
स्वल्पोऽपि परां शोभां जनयति यः सा तु विच्छित्तिः ॥

मुक्तारत्नादिकमुत्सृज्य बिसकिसलयाद्यनुरागो विच्छित्तिरिति केचित् ।

"स्मितहसितरुदितभयरोषदुःखगर्वश्रमाभिलाषाणाम् ।
सङ्करकरणं हर्षादसकृत् किलिकिञ्चितं ज्ञेयम् ॥
इष्टजनस्य कथायां लीलाहेलादिदर्शने वापि ।
तद्भावभावनाकृतमुक्तं मोट्टायितं नाम ॥
केशस्तनादिहरणग्रहणेष्वतिहर्षसम्भ्रमोत्पन्नम् ।
कुट्टमितं विज्ञेयं सुखमपि दुःखोपरागेण ॥
प्राप्तानामपि वचसां क्रियया यद् भाषणं ह्रिया स्त्रीभिः ।
व्याजात्मभावतो वाप्येवं समुदाहृतं विकृतम् ॥"

**द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥**

द्रवषट्कं **वल्लभादीनां परिहासे** । 'दु द्रु गतौ' । 'ऋदोरप्' (३. ३. ५७) । द्रवः । 'वेल्ल केल्ल खेल्ल क्षेल्ल चेल्ल चलने' । '† इन् सर्वधातुभ्यः' (उ० ४. ११९) इतीन् । केलिः । घञि दीर्घत्वे च परीहासः । क्रीडेति

† 'सर्वधातुभ्य इन' इति मुद्रितोणादिपाठः ।

'क्रीडृ विहारे' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । लीला पूर्ववत् ।
नर्मेति । 'नृ नये' । 'मनिन्—' (उ० १. १४६) इति मनिन् ॥

**व्याजोऽपदेशो लक्ष्यं च**

व्याजत्रयं **साध्यगोपनात्मकेऽपदेशे** । कपटे व्याज उक्तः । अपरद्रोहफलं त्वन्यमुद्दिश्यान्यार्थानुष्ठानमपदेशः । तदेव परद्रोहफलं (कपट इति) कपटापदेशयोर्भेदः । तथा च भारविः—'निकृतिपरेषु परेषु भूरिधाम्नः' इति । निकृतिपरेषु अपकारपरेष्वित्यर्थः ।

"अन्यार्थकथनं यत् तु सोऽपदेश इति स्मृतः"

इति भरताचार्यः । 'दिश अतिसर्जने' । घञ् । अपदेशः । लक्ष्यमिति । 'लक्ष दर्शनाङ्कनयोः' । चुरादिणिच् । 'ऋहलोर्ण्यत्' (३. ३. १२४) । अतो यकारवान् । तथा च पुरुषोत्तमः—

"कक्ष्यायां तार्क्ष्यलक्ष्ये च यकारः कथ्यते बुधैः"

"लक्ष्यं छद्मनि विख्यातो (?) लक्ष्यं सङ्ख्याशरव्ययोः"

इति यान्ते धरणिरपि ।

"लक्षं शरव्ये सङ्ख्यायां लक्ष छद्मनि कथ्यत"

इति क्षान्ते विश्वप्रकाशः ॥

**क्रीडा खेला च कूर्दने ।**

क्रीडात्रयं **कन्दुकादिखेलायिते**[१] । क्रीडा पूर्ववत् । खेलेति । 'खेलृ चलने' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । 'कुर्द खुर्द गुर्द क्रीडायाम्' । ह्रस्वादिः । भावे ल्युट् । कूर्दनम् । 'उपधायां च' (८. २. ७८) इति दीर्घत्वम् । दीर्घत्वमस्यानित्यमिति धर्मदासः ॥

१. 'खाद्यते' क. ख. घ. च. पाठः.

**घर्मो निदाघः स्वेदः स्यात्**

घर्मत्रयं **प्रस्वेदे**। ऋतौ घर्मनिदाघावुक्तौ। 'ञिष्विदा गात्रप्रक्षरणे'। पचादिः। स्वेदः॥

**प्रलयो नष्टचेष्टता॥ ३३॥**

नष्टचेष्टता हर्षादिना परिस्पन्दनाशः। तत्र प्रलयः। पूर्ववत्॥

**अवहित्थाकारगुप्तिः**

कोपादिनाङ्गस्य विकार आकारः। तस्य लज्जादिना गुप्तिः संवरणम् अवहित्था। 'डीङ् विहायसा गतौ'। अवपूर्वात् पृथादय इति क्थन् हिद्धा-वश्च। ततष्टाप्॥

**समौ संवेगसम्भ्रमौ।**

संवेगद्वयं **सम्भ्रमे**। परचक्रादिदर्शनकृतं तारल्यं सम्भ्रमः। 'ओविजी भयचलनयोः'। घञ्। संवेगः। सम्भ्रमः। 'भ्रमु अनवस्थाने'। घञ्॥

**स्यादाच्छुरितकं हासः सोत्प्रासः**

सोत्प्रासः **सोपहासः ससोल्लुण्ठो हासो नटवटुकादेराच्छुरितकम्**। 'छुरछेदने'। भावे क्तः। 'यावादिभ्यः कन्' (५. ४. २९)॥

**स मनाक् स्मितम्॥ ३४॥**

**स एव हासो** मनाग् **अनुद्भिन्नः** स्मितम्। 'स्मिङ् ईषद्धसने'। भावे क्तः। तथा च भरताचार्यः—

"ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत्॥"

**मध्यमः स्याद् विहसितं**

हास एव मध्यमः **स्मितहसितयोरन्तरालं** विहसितम्।

"आकुञ्चिताक्षिगण्डं यत् सस्वनं मधुरं तथा।
कालागतं सास्यरागं तद्वै विहसितं भवेत्॥"

इति। अपरेऽपि हास्यभेदाः सन्ति। प्राधान्यादिदमेवोक्तम्। तथा चाचार्यः—

"स्मितमथ हसितं विहसितमुपहसितं चापहसितं*मवहसितम्।
द्वौ द्वौ भेदौ स्यातामुत्तममध्याधमप्रकृतौ॥
उत्फुल्लनयनं यत्तु गण्डैर्विकासितैरथ।
किञ्चिल्लक्षितदन्तं च हसितं तद् विधीयते॥
उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम्।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत॥
अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत्॥
संरब्धसाश्रुनेत्रं च विक्रुष्टस्वनमुद्धतम्।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत्॥"

**रोमाञ्चो रोमहर्षणम्।**

रोमाञ्चद्वयं **रोमाञ्चे**। 'अञ्चु गतिपूजनयोः'। 'घञर्थे कविधानं कर्तव्यम्' (वा० ३. ३. ५८) इति भावे कः, स्थास्नेत्यादिपरिगणनस्य सम्भवप्रदर्शनार्थत्वात्। अञ्चः। रोम्णामञ्चो रोमाञ्चः। हृषेर्ल्युट् हर्षणम्। पूर्ववत् समासः॥

**क्रन्दितं रुदितं क्रुष्टं**

क्रन्दितत्रयं **रोदने**। 'कदि क्रदि आह्वाने रोदने च'। 'नपुंसके भावे क्तः' (३. ३. ११४)। क्रन्दितम्। क्रन्दनमिति पाठे ल्युट्। 'रुदिर् अश्रुविमोचने'। क्तः। रुदितम्। 'क्रुशि अनादरे'। क्तः। क्रुष्टम्॥

१. 'नु' च पाठः. २. 'ते। उ' ङ. छ. पाठः.

*'अतिहसितम्' इति स्यात्।

**जृम्भस्तु त्रिषु जृम्भणम् ॥ ३७ ॥**

जृम्भद्वयं हार्म्भीति ख्यातायाम् । 'जभ जृभि गात्रविनामे' । 'इदितो नुं धातोः' (७. १. ५८) इति नुम् । घञ् । जृम्भस्त्रिषु । ल्युटि जृम्भणम् ॥

**विप्रलम्भो विसंवादः**

विप्रलम्भद्वयं **मिथ्याफलाख्याने** । विप्रपूर्वाल्लभेर्भावे घञ् । 'उपसर्गात् खल्घञोः' (७. १. ६७) इति नुम् । वदेर्घञ् । विसंवादः ॥

**रिङ्गणं स्खलनं समे ।**

**पिच्छिलादौ स्खलने** रिङ्गणद्वयम् । 'उख नख' इति दण्डके रिगिर्गत्यर्थः । ल्युट् । 'स्खल चलने' । ल्युट् । स्खलनम् ॥

**स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३८ ॥**

निद्रादयः पञ्च **निद्रायाम्** । 'द्रै स्वप्ने' । 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् । निद्रा । शेतेर्ल्युट् । शयनम् । 'ञिष्वप् शये' । दन्त्यसः । भावे घञ् । स्वापः । 'स्वपो नन्' (३. ३. ९१) इति नन् । स्वप्नः । 'विश प्रवेशने' । घञ् । संवेशः । संपूर्वो विशिः स्वप्ने वर्तते । तथा च—

"तं पश्य शुभसंविष्टं तृणपर्णमयान्तरे"

इति प्रयोगः ॥

**तन्द्रिः प्रमीला**

तन्द्रिद्वयं **तन्द्रिकायाम्** । आलस्य इति केचित् । अत्यन्तपरिश्रमादिकारणात् सर्वाङ्गनिमीलनं तन्द्रिः । तन्द्रिः सौत्रो धातुः । 'वङ्क्र्यादयश्च' (उ० ४. ६८) इत्यौणादिकः क्रिः । तथा चारुणदत्तः — 'तन्द्रिवल्लरिशालिशष्कुलिहल्यावलिधूलिः' । 'सौत्रस्तन्द्रिरनागमः' इति गोवर्धनः । 'कृदिकारात्—' (वा० ४. १. ४५) इति ङीपि तन्द्री च । 'विमज्य नक्तन्दिवमस्ततन्द्रिणा' इति भारविः ।

१. 'र्भी' क. ङ., 'दी' ख. पाठः.

"मूर्छा तन्द्रा तन्द्री सुप्तिर्निद्रा प्रमीला च"

इति पालितः । 'तन्पूर्वाद् रातेस्तद्रा' इति विनीतकीर्त्तिः । ततोऽङ् । प्रमीलेति । 'मील निमेषणे' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः ॥

**भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियः ।**

भ्रकुटित्रयं **भ्रुकुटौ** । एतच्च क्रोधादिस्थानेषु भ्रुवोर्मूलसमुत्क्षेपाद् भवति । भ्रुवः कुटिः कुटिलता भ्रुकुटिः । 'कुट कौटिल्ये' 'कृगृशृवृकुटिभिदिभ्यश्च' (उ० ४. १४७) इतीन् । भ्रुकुंसादिवद् ह्रस्वादिः । 'कृदिकारात् —' (वा० ४. १. ४९) इति ङीषपि । 'अथ भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियः' इति रभसः ॥

**अदृष्टिः स्यादसौम्येऽक्षिण**

असौम्ये **सरोषेऽक्षिण** अदृष्टिः । न दृष्टिरदृष्टिः । नञेव निपातत्वादसौम्ये ॥

**संसिद्धिप्रकृती त्विमे ॥ ३७ ॥**

**स्वरूपं च स्वभावश्च निसर्गश्च**

संसिद्धिपञ्चकं **स्वभावे** । इमे इत्यनेन रूपभेदेन स्त्रीत्वमुक्तम् । 'षिधू संराद्धौ' । क्तिन् । संसिद्धिः । स्वं च तद् रूपं चेति स्वरूपम । स्वश्चासौ भावश्चेति स्वभावः । 'सृज विसर्गे' । घञ् । निसर्गः ॥

**अथ वेपथुः ।**

**कम्पः**

वेपथुद्वयं **कम्पे** । 'टुवेपृ कम्पने' । 'ट्वितोऽथुच्' (३. ३. ८९) । वेपथुः । 'कपि चलने' । कम्पः ॥

**अथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥**

क्षणपञ्चक**मुत्सवे** । 'क्षण हिंसायाम्' । भावे घञ् । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः । उद्गतो हर्षो यत्र स उद्धर्षः । 'मह पूजायाम्' ।

१ 'पालित' क. ख. पाठः.

चुरादिः । 'एरच्' (३. ३. ५६) । महः । क्षणवद् वा महः ।

"न खलु दूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितैः ॥"

(स० ६. श्लो० १९)

इति माघः । यस्तु क्लीबलिङ्गः सान्तः, सोऽनेकार्थे वक्ष्यते । तथा च

"तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः"

इति । उद्धव इति । उत्पूर्वाज्जुहोतेः 'ऋदोरप्' (३. ३. ५७) । उत्सव इति । 'षु प्रसवैश्वर्ययोः' । उत्पूर्वाद् 'ऋदोरप्' ॥

इति नाट्यवर्गः

## अथ पातालभोगिवर्गः

**अधोभुवनपातालबलिसद्मरसातलम्**
**नागलोकः**

अधोभुवनपञ्चकं **पाताले** । अधश्च तद् भुवनं चेति अधोभुवनम् । पतन्त्यस्मिन्निति पातालम् । 'पतिचण्डिभ्यामालञ्' (उ० १. १२२)। रसाया अधस्तल रसातलम् ॥

**अथ कुहरं शुषिरं विवरं बिलम् ॥ १ ॥**
**छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ।**

कुहरादय एकादश **रन्ध्रमात्रे** । कुं महीं हरतीति कुहरम् । 'हरतेरनुद्यमनेऽच्' (३. २. ९) । शुषेर्बाहुलकः किरच् । शुषिरम् । विवरं, वृणोतेः पचाद्यच् । बिलम् । 'बिल भेदने' । इगुपधलक्षणः कः । छिद्रम् । 'छिद्र कर्णव्यथने' । चुरादिण्यन्ताद् 'एरच्' (३.३.५६)। निश्चयेन व्यथा भयं यत्रेति निर्व्यथनम् । 'व्यथ भयचलनयोः' । अधिकरणे ल्युट् । रोकमिति । रुचेर्घञ् । 'लो-

१. 'पा । स्वर्गव' ञ., 'पा । ना' छ. पाठः. २. 'स्वर्गव' क. ख. घ. पाठः.

काश्रयत्वा'द्धिङ्गस्ये'ति नपुंसकता । शोभनमभ्रमाकाशमस्मिन्निति श्वभ्रम् । शोभनवाची तालव्योऽपि शुशब्दोऽस्ति । तथा चाह — 'शावशेरासौ (?)' इति । एके 'श्वभ्र गत्याम्' एरचा साधयन्ति । 'श्वभ्रकश्मीरशिल्पम्' इति शभेदः । भिदादिपाठादङ् । वपा । शुषिरिति । शुषेः 'इगुपधात् कित्' (उ० ४. ११९) । इत । पक्षे ङीष् ॥

**गर्तावटौ भुवि श्वभ्रे**

गर्तद्वयं **भूमिच्छिद्रे** । गिरतेर्वातवत् तन् । गर्तः । रभसेन तु 'ज्वालासटारभसगर्तकगर्तशृङ्गाः' इत्यनेन स्त्रीत्वमुक्तम् । अवतेः 'शकादिभ्योऽटन्' (उ० ४. ८१) इत्यवटः । अवटिरिदन्तोऽपीति हट्टचन्द्रः ॥

**सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥**

रन्ध्रयुक्ते वंशादौ शुषिरं स्वर्गवर्गे* साधितम् ॥

**अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।**

अन्धकारपञ्चकमन्धकारे । अन्धं करोतीति 'कर्मण्यण्' (३. २. १) । अन्धकारः । स्वान्तवद् ध्वान्तं निपातितम् । तमिस्रशब्दो रात्रावुक्तः । मिहिरवत् तिमिरम् । 'तमु काङ्क्षायाम्' । असुन् । तमः ॥

**ध्वान्ते गाढेऽन्धतमसं**

**अतिशयितान्धकारे**ऽन्धतमसम् । अन्धं करोतीत्यन्धम् । 'तत् करोति—' (वा० ३. १. २६) इति णिच् । तदन्तात् पचाद्यच् । अन्धं च तत् तमश्चेत्यन्धतमसम् । 'अवसमन्धेभ्यस्तमसः' (५. ४. ७९) इति समासान्तोऽच् ॥

**क्षीणेऽवतमसं**

* नाट्यवर्गे शुषिरशब्दः साधितः । किन्तु 'नाट्यवर्गे' इत्यनुक्त्या, तत्र तत्र स्वर्गव्योमादिवर्गाकथनेन च नाट्यवर्गान्त ग्रन्थं स्वर्गवर्गं व्याख्याता मन्यत इति भाति । अत एव च नाट्यवर्गान्ते क. ख. घ. पुस्तकेषु "इति स्वर्गवर्गः" इति लिखितं दृश्यते ।

**क्षीणान्धकारे**ऽवतमसम् अवहीनं तमोऽवतमसम् । कुगतिसमासः । अन्धतमसवदच् ॥

**तमः ॥ ३ ॥**

**विष्वक् सन्तमसं**

**विष्वग्व्यापिनि** तमसि सन्तमसम् । सन्ततं तमः सन्तमसम् । अवतमसवदच् ॥

**नागाः काद्रवेयाः**

नागद्वयं **मानुषाकारे फणालाङ्गूलादियुक्ते नागे** । नगे पर्वते भवाः नागाः । 'तत्र भवः' (४. ३. ५३) इत्यण् । कद्र्वा अपत्यं काद्रवेयः । 'शुभ्रादिभ्यश्च' (४. १. १२३) इति ढक् । 'ढे लोपोऽकद्र्वाः' (६. ४. १४७) इति प्रतिषेधादूकारस्य लोपाभावाद् 'ओर्गुणः' (६. ४. १४६) ।

"काद्रवेया इमे ज्ञेयाः शेषवासुकितक्षकाः ।
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ ॥"

इत्यादयस्ते ॥

**तदीश्वरः ।**

**शेषोऽनन्तः**

शेषद्वयं **नागराजे** । शेषः । 'शिषॢ विशेषणे' । पचाद्यच् ।

**वासुकिस्तु सर्पराजः**

वासुकिद्वयं **वासुकौ** । वसु रत्नं के मस्तके यस्य तस्यापत्यं वासुकिः । 'अत इञ्' (४. १. ९५) ॥

**अथ गोनसे ॥ ४ ॥**

**तिलित्सः स्याद्**

१. 'रत्नं' क. ख. पाठः. २. 'सारणे' घ. च., 'सरणे' क. ख. पाठः.

गोनसद्वयं तिलित्से सर्पे । गौरिव नासा अस्य गोनसः । दन्त्यसः । 'अच् नासिकायाः संज्ञायां नसं चास्थूलात्' (५. ४. ११८) इत्यच् समासान्तः नासिकायाश्च नसादेशः'। 'गोनासाय नियोजितागदरजाः' इति राजशेखरः। तदा च नासिकासमानार्थान्नासाशब्दात् । तडिति स्यतीति तिलित्सः । पृषोदरादिः ॥

**अजगरे शयुर्वाहस इत्युभौ ।**

अजगरत्रयमजगरे । अजं छागं गिरतीत्यजगरः । पचादिः । शेते इति शयुः । म(रु?यु)वद् उः । वाहस इति । 'वहियुभ्यां णित' (उ० ३. ११९) इत्यसच् । णित्त्वाद् वृद्धिः ॥

**अलगर्धो जलव्यालः**

अलगर्धद्वयम् अलाधे[1]ति ख्याते । अरः शीघ्रः । गृध्यतीति गर्धः । 'गृधु अभिकाङ्क्षायाम्' । पचाद्यच् । अरश्चासौ गर्धश्चेत्यरगर्धः । रलयोरेकत्वस्मरणम् ॥

**समौ राजिलडुण्डुभौ ॥ ५ ॥**

राजिलद्वयं डौं[2]ढेति ख्याते । राजी रेखास्मिन्नस्तीति सिध्मादिलच् ॥

**मालुधानो मातुलाहिः**

मालुधानद्वयं माले[3]आ इति ख्याते। मालैर्धीयते पोष्यते इति मालुधानः । पृषोदरादिः । मातुला नाम अहिर्मातुलाहिः ॥

**निर्मुक्तो मुक्तकञ्चुकः ।**

निर्मुक्तद्वयम् अनन्तरं मुक्तकोपके । मुचेः क्तः । निर्मुक्तः ॥

**सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ॥ ६ ॥**
**आशीविषो विषधरश्चक्री व्याडः सरीसृपः ।**
**कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥**

१. 'से' ङ. छ. पाठः. २. 'डा' ख., 'डण्डेति' घ., 'लौण्डेति' ङ. छ. पाठः. ३. 'लु' ख. घ. ङ. छ. पाठः.

**दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।**
**उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥**

सर्पादयः पञ्चविंशतिः **सर्पे** । सर्पः । 'गम्लृ सृप्लृ गतौ' । दन्त्यादिः । कर्तरि पचाद्यच् । पृदाकुः । 'पर्द कुत्सिते शब्दे' । 'पर्देर्नित सम्प्रसारणमल्लोपश्च' (उ० ३. ८०) इति काकुप्रत्ययः रेफस्य सम्प्रसारणमकारस्य लोपश्च । भुजं कुटिलं गच्छतीति भुजगः । डप्रकरणे 'अन्यत्रापि दृश्यते' (वा० ३. २. ४८) इति डः । भुजङ्ग इति । 'खच्च डिद्वा' (वा० ३. २. ३८) इति वक्तव्येन खच् । आहन्तीत्यहिः । आङ्युपपदे हन्तेः 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ० ४. १३९) इत्यनेन इञ्, पूर्वपदह्रस्वत्वं डिच्च । भुजङ्गम इति । 'गमश्च' (३. २. ४७) इति खच् । पूर्वपदे मुम् । आशीः सर्पदंष्ट्रा । तालव्यशो । तत्र विषमस्येति पृषोदरादिः सलोपः । ईकारान्तोऽप्याशीशब्दोऽस्ति । 'आशीमिव कलामिन्दोः' इति राजशेखरः । व्याडः । 'ला आदाने' । 'आतश्चोपसर्गे' (३. १. १३६) इति कः । पृषोदरादित्वाद् डत्वम् । कुटिलं सर्पतीति सरीसृपः । 'गम्लृ सृप्लृ गतौ' । 'नित्यं कौटिल्ये गतौ' (३. १. २३) इति यङ् । द्विर्वचनम् । 'रीगृदुपधस्य च' (७. ४. ९०) इति रीक् । पचाद्यच् । 'यङोऽचि च' (२. ४. ७४) इति यङो लुक् । 'न धातुलोप आर्धधातुके' (१. १. ४) इति गुणनिषेधः । 'सारस्वत**सरीसृपाः**' इति सभेदः । कुण्डलमिव वपुरस्यासीनस्येति कुण्डली । नान्तः । गूढा अलक्ष्याः पादा अस्येति गूढपात् ।

"पादानामपि विज्ञेया द्वे शते द्वे च विंशती"

इत्यागमात् सपादत्वं सर्पाणाम् । 'पादस्य लोपोऽहस्त्यादिभ्यः' (५. ४. १३८) इत्यकारलोपः । चक्षुःश्रवा इत्यत्रासुन् । काकस्योदरमिवास्योदरमिति काकोदरः । दर्व्याकारत्वात् फणैव दर्वी । तां करोतीति दर्वीकरः । 'कृञो हेतुताच्छील्यानुलोम्येषु' (३. २. २०) इति टः । दन्दशूक इति । 'दंश दंशने' । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' (३. १. २४) इति यङ् । 'यजजपदशां यङः' (३. २. १६६) इत्यूकप्रत्ययः । 'जपजभदहदश —' (७. ४. ८६) इत्यादिनाभ्यासस्य नुगागमः । बिलेशय इति । 'अधिकरणे शेतेः (३.

१. 'लो', २. 'र्शा' क. ख. घ. च. पाठः. ३. 'लः' क. ख. पाठः. ४. 'दिः।' ङ. छ. पाठः.

२. १५) इत्यच्। 'शयवासवासिष्वकालात्' (६. ३. १८) इत्यलुक्। उरग इति। 'उरसो लोपश्च' (वा० ३. २. ४८) इति डप्रत्ययसलोपौ। पन्नं पतितं यथा तथा गच्छतीति पन्नगः। 'सर्वत्रपन्नयोरुपसङ्ख्यानम्' (वा० ३. २. ४८) इति डः। भोगः फणा कायः (वा)। तद्योगाद् भोगी। नान्तः। जिह्मं कुटिलं गच्छतीति जिह्मगः। भुजगवद् डः। पवनाशनस्तालव्यशः॥

**त्रिष्वाहेयं विषास्थ्यादि**

अहेर्विषचर्मादावाहेयम्। अहौ भवम् आहेयम्। 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' (४. ३. ५६) इति ढञ्। स्त्रियामाहेयी॥

**स्फटायां तु फणा द्वयोः।**

स्फटाद्वयं **फणायाम्**। 'स्फट स्फुट विशरणे'। अच्। स्फटा। 'फण गतौ'। अच्। फणा। फणा द्वयोरिति सम्बन्धः॥

**समौ कञ्चुकनिर्मोकौ**

कञ्चुकद्वयं **सर्पचर्मणि**। कञ्चुकः। 'काचि दीप्तिबन्धनयोः'। बाहुलकात् 'समि कम उकञ्' (उ० २. ३२) इत्युकञ्। निर्मोकः। मुचेः कर्मणि घञ्॥

**क्ष्वेडस्तु गरलं विषम्॥ ९॥**

क्ष्वेडत्रयं **विषे**। क्ष्वेडः। 'ञिक्ष्विदा गात्रप्रक्षरणे'। पचाद्यच्। पृषोदरादित्वाद् दकारस्य डत्वम्। गरलम्। 'गॄ निगरणे'। 'वृषादिभ्यश्चित्' (उ० १. १११) इति कलच्। विषमिति। 'विष्लृ व्याप्तौ'। इगुपधलक्षणः कः। 'शङ्करोऽपि न विषादी' इति वासवदत्तायां मूर्धन्यश्लेषः॥

**पुंसि क्लीबे च काकोलकालकूटहलाहलाः।**
**सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्रः प्रदीपनः॥ १०॥**
**दारदो वत्सनाभश्च विषभेदा अमी नव।**

१. 'स्फु' ख. च. पाठः. २. 'याम्। स्फु' क. ख. पाठः. ३. 'स्फु' ख च. पाठः. ४. 'कारः। ग' ङ. छ. पाठः.

काकोलादयो नव प्रत्येकं **स्थावरविषभेदे** । 'पुंसि क्लीबे च काकोल इति सम्बन्धः । काकोलो डम्बरकाकः । तद्वत् कृष्णवर्णत्वात् काकोलः । कालं यममपि कूटयति दहतीति कालकूटः । 'कूट परिदाहे' । चौरादिकात् 'कर्मण्यण्' (३. २. १) ।

"तिर्यग् रेखिकयाचितं द्विजपदैर्युक्तं तथा ग्रन्थिभि
व्याप्तं बिन्दुभिरेव यद् घनतरैस्तत् कालकूटं विषम् ।"

इति । इदं च

"गोनासगोनसौ हो(ला ! ल)हलं हलहलं विषम्"

इति दीर्घाद्यपि । तथा च 'अद्याद् विषं स खलु हालहलं प्रजानन्' इति सूरजातकमाला । अतस्त्रैरूप्यम् । सौराष्ट्रिकशौक्लिकेयौ दन्त्यतालव्यादी ।

"ब्रह्मपुत्रस्तु कपिलो मलयाद्रिभवः खरः ।
प्रदीपनस्तु दहनो रक्तवर्णोऽञ्जनाद्रिजः ॥"

दरददेशे भवः दारदः । प्रायशो वत्सान् नभते हिनस्तीति वत्सनाभः । 'णभ तुभ हिंसायाम्' । 'कर्मण्यण्' (३. २. १) । अयं सिन्दुवारसदृशपत्रः ॥

**विषवैद्यो जाङ्गलिकः**

विषवैद्यद्वयं **गारुडिके** । जाङ्गलं विषम् । तद्योगाद् ग्रन्थोऽपि । तदधीते वेत्ति वा । 'क्रतूक्थादिसूत्रान्ताट्ठक्' (४. २. ६०) । जाङ्गलिकश्चवर्गादिः ॥

**व्यालग्राह्यहितुण्डिकः ॥ ११ ॥**

व्यालग्राहिद्वयं भिक्षार्थं सर्पधारिणि **वादिया** इति ख्याते । व्यालग्राहीति । ग्रह्यादित्वाण्णिनिः । अहितुण्डेन दीव्यतीत्यहितुण्डिकः । 'तेन दीव्यति—'(४. ४. २) इति ठक् । संज्ञापूर्वकत्वाद् नादिवृद्धिः । 'व्यालग्राहोऽहितुण्डिकः' इत्यमरमाला ॥

*इति पातालभोगिवर्गः ।

१. 'त', २. 'ह' ङ. छ. पाठः. ३. 'दी' ङ. छ. पाठः

पदद्वयमिदं मातृकासु न दृश्यते ।

## अथ नरकवर्गः ।

**स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।**

नारकचतुष्कं **नरके** । नरक एव नारकः । प्रज्ञादित्वाद् अण् । नरक इति । 'नॄ नये' । 'कृञादिभ्यः संज्ञायां वुन्' (उ०५.३५) । अयः शुभावहो विधिः । स निर्गतोऽस्माद् निरयः । दुष्टा गतिर्गमनमस्यां दुर्गतिः । गमेः क्तिन् ॥

**तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥**

**सङ्घातः कालसूत्रं चेत्याद्याः**

तपनादयः षड् **नरकभेदाः** । तपन उक्तः । 'तरङ्गस्वल्पयोर्वीचिः' इति रुद्रः । नास्ति सुखस्य स्वल्पोऽप्यत्रेत्यवीचिः । ह्रस्वादिस्त्रिलिङ्गश्च । 'अवीचिं गाहन्ते हुतवहशिखापूरितमपि' इति शिल्पलेखः । महान् रौद्रो रवोऽत्रेति महारौरवः । नैरुक्तो वर्णलोपः । एवं रौद्रो रवोऽत्रेति रौरवः । संहन्त्यस्मिन्निति सङ्घातः । चुरादिणिर्चि 'एरच्' (३.३.५६) । कालसूत्रेण संसूत्र्य दारुवत् पाट्यन्तेऽत्रेति कालसूत्रम् । आदिना शा(लु?ल्म)लीतप्तवालुकादीनां ग्रहणम् ॥

**सत्त्वास्तु नारकाः ।**

**प्रेताः**

**नरकस्थाः** सत्त्वा **जन्तवो** नारकाः प्रेताश्चोच्यन्ते । नरके भवा नारकाः । प्रेता इति । 'इण् गतौ' । क्तः ।

**वैतरणी सिन्धुः**

**नरकनद्यां** वैतरणी । विरुद्धं तरणं वितरणम् । तर्दस्यामस्ति । अण्-

१. 'धिः नि' ङ. छ. पाठः. २. 'स्या' घ. च. पाठः. ३. 'चिः । अवीचिर्ह्रस्वा' घ. च. पाठः. ४. 'दिः स्त्रीलि' ङ. छ. पाठः. ५. 'खाः' घ. च. पाठः. ६. 'च' घ. च. पाठः. ७. 'लि' घ. ङ., 'लीलत वा' क. ख. पाठः. ८. 'द्यस्या' क. ख. ङ. छ. पाठः.

प्रकरणे 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' (वा० ५. २. १०३) इत्यण्। ङीप्। रामदासेन ह्रस्वान्तोऽप्युत्पन्न एव दर्शितः ॥

**अलक्ष्मीर्निर्ऋतिः समे ॥ २ ॥**

अलक्ष्मीद्वयम् **अलक्ष्म्याम्**। अलक्ष्मीरिति विरोधे नञ्। निर्ऋतिरिति। निष्पूर्वाद् 'ऋ गतौ' इति धातोः कर्मणि क्तिन् ॥

**विष्टिराजूः**

विष्टिद्वयं **वेतनं विना हठादिना कर्मकरणे**। वेठ इति यस्यां नीचोक्तिः। विष्टिरिति। 'विप्लृ विप्रयोगे'। क्तिन्। आजूः दीर्घान्ता। आङ्पूर्वाद् जनेः 'भ्रमेश्च डूः' (उ० २. ७१) इति बाहुलकाद् डूटिलोपौ।

"त्रिपु कर्मकरे विष्टिः स्त्र्याजूर्वेतनकर्मसु"

इति रुद्रः। दुःखहेतुत्वादस्य दुःखप्रकरणे निबन्धः। भद्रनाम्नि करणे विष्ट्यादिद्वयमिति केचित् ॥

**कारणा तु यातना तीव्रवेदना।**

कारणाद्वयम **अतिवेदनायाम्**। 'कॄञ् हिंसायाम्'। 'यत निकारोपस्कारयोः'। ण्यन्ताभ्यामाभ्यां 'ण्यासश्रन्थो युच्' (३. ३. १०७)। कारणा। यातना। तीव्रवेदनेति कर्मधारयः। 'विद वेदनाख्याननिवासनेपु'। पूर्ववद् णिज्युचौ ॥

**पीडा बाधा व्यथा दुःखममानस्यं प्रसूतिजम् ॥ ३ ॥**
**स्यात् कष्टं कृच्छ्रमाभीलं**

पीडादयो नव **दुःखे**। 'पीड अवगाहने'। युचि प्राप्ते भिदादिपाठादङ्। बाधेति। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। व्यथेति। 'व्यथ भयचलनयोः'। 'घटादयः षितः' इति षित्संज्ञायां 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४)

१. 'त्यतः क' क. ख., 'त्यत्र क' घ. च. पाठः. २. 'णे। वि' ङ. छ. पाठः. ३. 'स्यां' च. पाठः. ४. 'प्लृ प्र' ङ. छ. पाठः. ५. 'ङ। दुः' च. पाठः.

* 'निकारोपस्कारयोः' इति धातुवृत्त्यादिषु पाठो दृश्यते। यातनार्थे निकारशब्दस्यैव प्रचुरः प्रयोगः।

इत्यङ्। दुःखमिति दुःपूर्वात् खनेः 'अन्येभ्योऽपि दृश्यते' (वा० ३. २. १०१) इति डः। 'इदुदुपधस्य चाप्रत्ययस्य' (८. ३. ४१) इति नित्यं षत्वमिति धातुपारायणम्।

"लिखितव्यं न वा दुष्खं किन्तु दुष्कं सलक्षणम्"

इति पुरुषोत्तमः। सविसर्गोऽपि दुःखशब्द इति चान्द्राः। तथा च रुद्रटे बिन्दुच्युतके—

"कान्ते नयनानन्दो बालेन्दुः खे न भवति सदा"

इति। प्रयोगान्तरमपि—

"काले तडिल्लताजालमेघमण्डलमाण्डिते।
कान्तः सर्वगुणोपेतो बालेन्दुः खे न लभ्यते॥"

इति। मानसे साधु मानस्यम्। 'तत्र साधुः' (४. ४. ९८) इति यत्। नञा अमानस्यम्। प्रसूतिजं पूर्ववद् डान्तम्। कष्टमिति। कष हिंसार्थः। भविष्यत्काले क्तः। 'कष्टं भविष्यतीत्याहुः' इति वचनात्। 'कृच्छ्रगहनयोः कषः' (७. २. २२) इतीडभावः। कृच्छ्रमिति। 'कृती छेदने'। 'कृतेश्छः क्रू च' (उ० २. २२) इत्यनेन रक् छश्चान्तादेशः। आभीलमिति। 'इल स्वप्ने'। अभिपूर्वः। इगुपधलक्षणः कः। 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः। कचिन्नाभीलमिति पाठः॥

## त्रिष्वेषां भेद्यगामि यत्॥ ३३॥

एषां पीडादीनां मध्ये यद् भेद्यगामि द्रव्यगामि, तत् त्रिषु। यथा 'कष्टा सेवा' 'कष्टो भृत्यभावः' 'कष्टं व्याकरणम्' इति॥

‡ इति नरकवर्गः।

## अथ वारिवर्गः।

## समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः।

१. 'दुष्खमि', २. 'दुषः पू' क. ख. पाठः ३. 'र्गो दुः' घ. ङ. च. छ. पाठः. ४. 'नेति' क. ख. पाठः. ५. 'भि' ङ. पाठः. ६. 'मि त' घ. च. पाठः.

‡ पदद्वयमिदं ङ. पुस्तके परं दृश्यते, छ. पुस्तके 'नरकवर्गः' इति।

**उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥ १ ॥**

**रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।**

समुद्रादयः पञ्चदश **समुद्रे** । चन्द्रोदये आपः क्लिद्यन्त्यस्मिन्निति समुद्रः । 'उन्दी क्लेदने' । 'स्फायितञ्चिवञ्चि —' (उ० २. १३) इत्यादिना रक् । आपो धीयन्तेऽत्रेत्यब्धिः । 'कर्मण्यधिकरणे च' (३. ३. ९३) इति किः । अकुत्सितं पारमस्येत्यकूपारः । 'अन्येषामपि —' (६. ३. १३७) इति दीर्घः । अविद्यमाना कुः पृथिवी पारेऽस्येति वा । पारमावृणोतीति पारावारः । पारापार-शब्दोऽप्यत्र । तथा च हरिप्रबोधसन्दृब्धयमकं-

"सतमाः सतमालतया पारापारायतः सदावां दावः ।
लोकालोकानुकृतिः सह्यः स ह्ययमनभ्रकूटैः कूटैः ॥"

इति । उदकमस्मिन्नस्तीत्युदन्वान् । 'उदन्वानुदधौ च' (८. २. १३) इति नि-पातितः । उदकं धीयतेऽत्रेत्युदधिः । अब्धिवत् किः । 'पेषंवासवाहनधिषु च'(६. ३. ५८) इति उदकस्योदभावः । सिन्धुरिति । 'स्यन्दू प्रस्रवणे' । 'स्यन्देः सम्प्रसारणं धश्च' (उ० १. ११) इत्युः धश्चान्तादेशः सम्प्रसारणं च । 'सरो नीरे तटाके च' इति रुद्रः । तद्योगान्मतुप् । 'झयः' (८. २. १०) इति वत्वम् । सरस्वान्[1] । सगरेणावनारितत्वात् सागरः । 'तस्येदम्' (४. ३. १२०) इत्यण् । अर्णांस्यत्र सन्तीत्यर्णवः । 'अर्णसो लोपश्च' (वा० ५. २. १०९) इति वः सलोपश्च । जलनिधिरब्धिवत् । यादो जलजन्तुः । तत्पतित्वाद् यादः-पतिः । दिवस्पतिवत् षष्ठ्या अलुक्[2], अपांपतिः । वाक्येनैव नामेत्यन्ये ॥

**तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २ ॥**

क्षीरोदद्वयं प्रत्येकं **समुद्रप्रभेदे** । क्षीरमुदकमस्येति क्षीरोदः[3] । एवं लव-

१. 'न । सा' क. ख. पाठः. २. 'प्रचक्षु' क. ख. ङ. छ. पाठः. ३. 'स्य क्षी' क. ख. ङ. छ. पाठः. ४. 'दः । ल' घ. च. पाठः.

'संज्ञायाम्' (८. २ ११) इति स्यात् ।

आदः। 'उदकस्योदः संज्ञायाम्' (६. ३. ५७) इत्युदकस्योदभावः। अपरे इत्यनेन दध्युदादयो गृह्यन्ते। तथा च हारावली—

"क्षीरोदः क्षारोदो दध्यम्बुघृतोदकौ तथेक्षुरसः।
मदिरोदः स्वादूदक इति सप्त महानदाः क्रमशः॥"

इति॥

**आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्।**
**पयः कीलालममृतं जीवनं भुवनं वनम्॥ ३॥**
**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्।**
**अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्॥ ४॥**
**मेघपुष्पं घनरसः**

अबादयः सप्तविंशतिर्जले। आप इति। 'आप्नोतेर्ह्रस्वश्च' (उ०२.२२१) इति क्विप्। निम्नोन्नतमपवारयतीति वाः। वृणोतेर्णिच्। क्विप्। वाः वारी वारि इति प्रयोगात् क्लीबे। तथा च 'वारि पतन्ति नदन्ति मयूराः' इति घटकर्परः। वारि इति। 'वृञ् वरणे'। णिच्। 'वसिवपियजिराजिव्रजिसदिहनिवशिवादिवारिभ्य इञ्' (उ० ४. १२६) इतीञ्। सलिलम्। 'सल गतौ'। 'सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्' (उ० १. ५७)।

"कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासालम्"
(स० १३. श्लो० ३५)

इति भट्टिभाषासमावेशेऽपि दन्त्यादिः। कमलम्। 'कमु कान्तौ'। 'कलस्तृपश्च' (उ० १. १०९) इति बाहुलकः कलः। जलम्। 'जल धान्ये'। पचादिः। पीयत इति पयः। 'पिबतेरिच्च' इत्यसुन्। गुणः। कीलालमिति। 'कील बन्धने'। 'तमिबिडि—' (उ० १. १२३) इत्यादिना कालन्प्रत्ययः। अमृतमुक्तम्। जीव्यतेऽनेनेति जीवनम्। करणे ल्युट्। भुवनमिति। 'भूसुधूभ्रस्जिभ्यश्छन्दसि'

१. 'दः। संज्ञायामुदकस्योदभावः।' क. ख. पाठः. २. 'शः॥ अ' ङ. छ. पाठः. ३. 'आपआद' क. ख. घ. च. पाठः. ४. 'स' ङ. छ. पाठः. ५. 'लच्। ज' घ. च. पाठः.

(उ० २. ८२) इति क्युन्। बाहुलकाद् भाषायामपि । वनम् । 'वन षण संभक्तौ' । पचाद्यच्। कं शरीरं बध्नातीति कबन्धम् । 'कर्मण्यण्' (३. २. १)। केचित् कमन्धं चेति नामद्वयं मकारमध्यमाहुः । उदकमित्यौणादिकं निपातितम् । पीयत इति पाथः । 'उदके थुट् च' (उ० ४ २०५) इत्यसुन् । पुष्करमिति । 'पुषः कित्' (उ० ४. ४) इति करन् । निम्नप्रवृत्त्या सर्वतो मुखान्यस्येति सर्वतोमुखम् । अम्भ इति । आपेः 'उदके नुम्भौ च' (उ० ४. २११) इत्यसुन् नुमागमो भश्चान्तादेशो ह्रस्वश्च क्रियते ।अर्ण इति । 'ऋ गतौ'। 'उदके नुट् च' (उ० ४. १०८) इत्यसुन् नुडागमश्च प्रत्ययस्य । तायति पालयतीति तोयम् । 'तायृ पालने' । पृषोदरादिः । पातेरनीयर् । पानीयम्। नीरमिति । 'नीर नीर गतौ' । इगुपधलक्षणः कः । क्षीरम्। 'क्षि निवासगत्योः'। 'शुषिचिक्षिमीनां दीर्घश्च' (उ० २. २८) इति रक् । अम्ब्विति । 'अबि रबि लबि शब्दे' । 'भृमृशीपॄचरित्सरि—' (उ० १. ७) इत्यादिना बाहुलक उः। सम्बरम । 'सम्ब संवरणे' 'शम्ब च' । चुरादिणिच् । 'ऋच्छेररन्' (उ० ३. १३१) इति बाहुलकोऽरन् । तालव्यादि दन्त्यादि चेति कन्दर्पनामन्युक्तम् ।

"घनरसमन्धं क्षीरं घृतममृतं जीवनं भुवनम्"

इति रत्नकोषे घनरसं क्लीबम् ।

"पुंलिङ्गः स्याद् घनरसः सान्द्रनिर्यासनीरयोः"

इति तु रुद्रः ॥

## त्रिषु द्वे आप्यमम्मयम् ।

आप्यद्वयं पयोविकारे । आप्यसाधुत्वे त्रिमुनिलक्षणाभावः । चन्द्रगोमी तु 'आप्यं च' इति निपातितवान् । केचित् तु 'तद्धिताः' (४. १.७६) इति बहुवचनाद् यञ् । आप्यम् । अम्मयमिति । 'नित्यमेकाचो मयटमिच्छन्ति' (वा० ४.३.१४४) इति मयट्। जश्त्वानुनासिकत्वे । यदा 'तत्प्रकृतवचने मयट्' (५.४.२१) इति मयट् व्युत्पाद्यते, तदा जलबहुलेऽपि । स्त्रियामाप्या अम्मयी च ॥

## भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः

१. 'द्वे' क. ङ., 'द्व' ख. पाठः. २. 'अ' ग. पाठः. ३. 'ति व्यु' क. ख. घ. च. पाठः. ४. 'ले । स्त्रि' ङ. छ. पाठः.

भङ्गचतुष्कं स्वल्पोल्लोले। भङ्गः। 'भञ्जो आमर्दने'। घञ्। तरङ्गः। 'तॄ प्लवनतरणयोः'। 'त्रादिभ्यश्च' (उ० १. १२५) इत्यङ्गच्। ऊर्मिर्दीर्घादिः। 'ऋ गतौ'। 'अर्तेरू च' (उ० ४. ४५) इति मिप्रत्ययः ऊकारश्च धातोः। 'ऊर्मिर्वा स्त्रियाम्' इति योजना। तथा च वामनः—

"पुल्लिङ्गस्त्रीलिङ्गा मरीचिमणियष्टिमुष्टयो न्यासः(?)।
त्रुटि(म? र)पि पाटलिशा(लु? ल्म)लितरणिश्रेण्यूर्मयो वस्तिः॥"

वीचिः। 'वा गतिगन्धनयोः'। 'वातेः कित्' इति ईचिः। कित्त्वादाकारलोपः। वीचिरपि वा स्त्रियामिति केचित्॥

अथोर्मिषु॥ ७॥
महत्सूल्लोलकल्लोलौ

उल्लोलद्वयम् अतिशयितोल्लोले। उत्पूर्वाद् 'लोडृ रोडृ उन्मादने' इत्यतः पचाद्यच्। डलयोरेकत्वस्मरणाल्लत्वम्। कल्लोलः। 'कल अव्यक्ते शब्दे'। *'कपि-कडिगण्डिकल्लिवटिभ्य ओलच्' (उ० १. ६९)॥

स्यादावर्तोऽम्भसां भ्रमः।
चक्रवदपां भ्रमणमावर्तः॥

पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः॥ ८॥

पृषच्चतुष्कं जलकणिकायाम्। अन्यत्रोपचारात्। 'पृषु वृषु सेचने'। 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवत्' (उ० २. ८५) इत्यनेनातिप्रत्ययः शतृवदतिदेशश्च। पृषत्। रूपभेदात् क्लीबत्वम्। बहुवचनं च स्त्रीलिङ्गभ्रान्तिनिरासार्थम्। §'बिन्दुरिच्छुः' (३. २. १६९) इत्यनेन औणादिको बिन्दुर्निपातितः। पृषता इति। 'पृषु वृषु सेचने'। 'पृषुरञ्जिभ्यां कित्' (उ० ३. १११) इत्यतच्प्रत्ययः किच्च। बिन्दवश्च पृषताश्च बिन्दुपृषताः। विप्रुष इति। 'प्लुष प्रुष स्नेहनसेचन-

१. 'अंबम' क. ख. घ. च. पाठः. २. 'दिः। अ' ङ. छ. पाठः. ३. 'कु' क. ख. पाठः. ४. 'लि'. ५. 'टि' क. ख. पाठः. ६. 'वक्रमपां' घ. पाठः. ७. 'णायाम्' क. ख. ङ. छ. पाठः.

* 'कपिगडिगण्डिकटिपटिभ्यः ओलच्' इति मुद्रितोणादिपाठः। § ईदृशमौणादिकं सूत्रं मृग्यम्।

पूरणेषु' । 'अन्येभ्योऽपि—' (३. २. १७८) इति क्विप् । बहुवचननिर्देशः प्रायिकः। 'पृषतो विन्दुरिष्यते' इत्यमरमालायामेकवचननिर्देशात् ॥

**वक्राणि पुटभेदाः स्युः**

वक्रद्वयं **नद्यादीनां वक्रे**। यत्र 'वाङ्क' इति नीवोक्तिः। 'वञ्चु कौटिल्ये'। 'स्फायितञ्चिवञ्चि—' (उ० २. १३) इत्यादिना रक्। न्यङ्क्वादित्वात् कुत्वम् वक्रम् । संश्लिष्टं भिनत्तीति पुटभेदः । 'कर्मण्यण्' (३. २. १) ॥

**भ्रमाश्च जलनिर्गमाः।**

भ्रमद्वयं **प्राकारादिषु जलनिस्सरणद्वारे**। भ्रमतः पचाद्यच्। तथा च—

"वणिक्पथे पूगकृतानि यत्र भ्रमागतैरम्बुभिरम्बुराशिः"

(स० ३. श्लो० ३८)

इति माघप्रयोगः ॥

**कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥**

कूलादयः पञ्च **कूले**। 'कूल आवरणे'। इगुपधलक्षणः कः। रोध इति। रुधेः असुन्। तीरमिति। 'पार तीर कर्मसमाप्तौ'। चुरादिणिच्। 'एरच्' (३. ३. ५६)। प्रतीरमित्युपसर्गनियमः। तट(त्रि[३] मिति)। 'तट उच्छ्राये'। पचाद्यच्। स्त्रियां तटी। गौरादित्वाद् ङीप् ॥

**पारावारे परार्वाची तीरे**

पारावारद्वयं यथाक्रमं **पारकूलावारकूलयोः**। 'पार तीर कर्मसमाप्तौ'। चुरादिणिच्। 'एरच्' (३. ३. ५६)। अवारमिति। अवपूर्वाद् 'ऋ गतौ' इति धातोः कर्मणि घञ् ॥

**पात्रं तदन्तरम्।**

**पारावारयोः** अन्तरं **मध्यं** पात्रमुच्यते। पात्तं इति यस्य प्रसिद्धिः। 'पा पाने'। 'ष्ट्रन् सर्वधातुभ्यः' (उ० ४. १६०) इति ष्ट्रन्। 'दीर्घादाचार्याणाम्' (८. ४. ५२) इति निषेधाद् 'अनचि च' (८. ४. ४७) इति न द्वित्वम् ॥

**द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥**

१., २. 'च' ख. पाठः. ३. 'दिद्री' क. ख. ङ. छ. पाठः. ४. 'ण्यन्तः । ए' क. ख. घ. पाठः. ५. 'त्र', ६. 'न । द्री' ङ. छ. पाठः.

द्वीपद्वयं द्वीपे। द्विः कृता आपोऽस्मिन्निति द्वीपः। 'ऋक्पूरब्धूःपथामानक्षे' (५. ४. ७४) इत्यकारः समासान्तः। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६. ३. ९७) इत्यप्शब्दाकारस्य ईकारः। सवर्णदीर्घः। द्वीपोऽस्त्रियामिति सम्बन्धः। एवम् अन्तर्गता आपोऽस्मिन्नित्यन्तरीपम्। पूर्ववत्॥

**तोयोत्थितं तत् पुलिनं**

तद् द्वीपमनन्तरमेव तोयोत्थितं पुलिनाख्यम्। 'पुल महत्त्वे'। 'बहुलमन्यत्रापि' (उ० २. ५१) इत्यनेनेनच् किच्च। त्रिकाण्डे तु पुलिनं द्वीपमुच्यते॥

**सैकतं सिकतामयम्।**

सैकतद्वयं वालुकातटे। सिकतेति। 'कस गतौ'। क्तः। इट्। पृषोदरादित्वाद् वर्णविपर्यय इति धातुप्रदीपः। ततः 'सिकताशर्कराभ्यां च' (५. २. १०४) इति मत्वर्थीयोऽण्। 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' (४. ३. १४३) इति मयटा सिकतामयम्॥

**निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ०**

निषद्वरादयः पञ्च कर्दमे। निषद्वरः। 'षद्लृ विशरणगत्यवसादनेषु'। 'नौ षदेः' (उ० २. १२२) इत्यनेन वरच्। 'सदिरप्रतेः' (८. ३. ६६) इति षत्वम्। जम्बालः। 'चमु छमु जमु झमु अदने'। 'शीङो नग्धुग्र्वलञ्वालन्' (उ० ४. ३८) इति बाहुलकाद् वालन्। 'पचि विस्तारे'। घञ्। पङ्कः। 'शद्लृ शातने'। तालव्यादिः। घञ्। शादः। कर्दति कुत्सितं शब्दं करोतीति कर्दमः। 'कर्द कुत्सिते शब्दे'। कर्दनं * कर्दः(६)। कर्दं कुत्सितं दाम्यतीति पचादिरिति धातुप्रदीपः। अथवा 'कलिकर्द्योरमः' (उ० ४. ८४)॥

**जलोच्छ्वासाः परीवाहाः**

१. 'भ्या म' क. ख. पाठः. २. 'द्व' क. ख. घ. च. पाठः. ३. 'गव' ङ. पाठः ४. 'व' ख. घ. पाठः. ५. 'वा' ख. घ. पाठः. ६. 'दिः। क' घ. च. पाठः.

* मैत्रेयरक्षितधातुप्रदीपे नेयमानुपूर्वी दृश्यते

जलोच्छ्वासादिद्वय **पुष्करिण्यादौ जलनिष्कासमार्गे**। उत्तिष्ठज्जलगुम्भुकमिति केचित्। जलस्योच्छ्वासो जलोच्छ्वासः। 'श्वस प्राणने'। घञ्। वहतेर्भावे घञ्। परीवाहः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति दीर्घः॥

**कूपकास्तु विदारकाः।**

कूपकद्वयं **जलस्थे स्रोतोद्वैधीकारिणि शिलादौ**। कूपा एव कूपकाः। विदारयन्तीति विदारकाः॥

**नाव्यं त्रिलिङ्गं नौतार्ये**

**नौकागम्ये देशे** नाव्यम्। नौशब्दाद् 'नौवयोधर्मविषमूल—' (४. ४. ९१) इत्यादिना यत्। 'वान्तो यि प्रत्यये' (६. १. ७९) इत्यावादेशः। स्त्रियां नाव्या॥

**स्त्रियां नौस्तरणिस्तरिः॥ १०॥**

नौत्रयं **नौकायाम्**। नौरिति। 'नयतेर्डौः' इति डौप्रत्ययः। सूर्ये तरणिशब्द उक्तः। तरिरिति। 'अच इः' (उ० ४. १४०) इति इः। ङीपि तरी च। 'तरीषु तत्रत्यमफल्गु भाण्डम्' (स० ३. श्लो० ७६) इति माघः॥

**उडुपं तु प्लवः कोलः**

उडुपत्रय **हेलके**। उडुपो ह्रस्वादिमध्यः। 'उडुपो हेलचन्द्रयोः' इति चन्द्रगोमी।

"रूपं तल्पं शिल्पं समीपकूपोडुपान्तरीपाणि"

इति वामनस्याप्यार्या दीर्घत्वे भग्ना स्यात्।

"ददृशुश्चिरमुडुकरिणीसहस्रमन्तं सुधामदं सकलम्"

इत्यत्र हरिप्रबोधे कीर्तिमताल्ङ्कारप्रणीतटीकायाम् 'उडव आप' इति व्याख्यातम्। अतस्ततः पातीत्युडुपः। 'प्लृङ् प्लव गतौ'। पचादिः। प्लवः। 'कुल संस्त्याने' पूर्ववदच्। कोलः॥

**स्रोतोऽम्बुसरणं स्वतः।**

**वेगेन जलवहने** स्रोतः। स्वत इति तृतीयान्ताद् 'इतराभ्योऽपि—' (५. ३. १४) इति तसिल्। स्रोतो दन्त्यवत्। 'स्रु गतौ'। 'स्रुरीभ्यां तुट् च'

(उ० ४. २०३) इत्यसुन् तुट् च प्रत्ययस्य ॥

**आतरस्तरपण्यं स्यात्**

**नद्यादेस्तरणे कपर्दकादा**वातरद्वयम्। तरतेः करणे (घञ्।घः)।

**द्रोणी काष्ठाम्बुवाहिनी ॥ ११ ॥**

द्रोणीद्वयं **काष्ठकृतसेचन्याम्**। 'कृपॄजॄष्वृसिद्रुपन्यनिस्वपिभ्यो नित्' (उ० ४. १०) इति निः। गौरादिङीपि द्रोणी। काष्ठाम्बुवाहिनीति षष्ठीसमासः ॥

**सांयात्रिकः पोतवणिक्**

सांयात्रिकद्वयं **वहित्रगामिनि वणिग्जने**। संयात्रा द्वीपान्तरगमनमुच्यते। तदस्य प्रयोजनमिति ठक्। सांयात्रिकः। पोतवणिग् जान्तः ॥

**कर्णधारस्तु नाविकः।**

कर्णधारद्वयं **कर्णहार** इति ख्याते। नौकाकर्णप्रायं महाकेनिपातं धारयतीति कर्णधारः। 'कर्मण्यण्' (३. २. १)। नाविक इति। नावा तरतीत्यस्मिन्नर्थे 'नौद्व्यचष्ठन् (४. ४. ७) ॥

**नियामकाः पोतवाहाः**

नियामकद्वय गुणवृक्षोपरिस्थे **'निर्जिवा'** इति ख्याते। केचिद् नौवा(टि? ह)कस्य नामद्वयमिदं मन्यन्ते। नियमयन्तीति नियामकाः। 'यमु उपरमे'। ण्वुल्। पोतं वाहयन्तीति पोतवाहाः। 'कर्मण्यण्' (३. २. १) ॥

**कूपको गुणवृक्षकः ॥ १२ ॥**

**गुणरुत्थाख्ये** कूपकद्वयम्। कूपक उक्तः। गुणवृक्षक इति षष्ठीसमासः ॥

१. 'नित्। गौ' घ. ङ. च. छ. पाठः. २. 'त्यनेन ठ' घ. ङ. च. छ. पाठः. ३. 'धा' घ. च. पाठः. ४. 'वावा इ' घ. ङ. च. छ. पाठः. ५. 'रुथ्याख्ये' ङ. छ. पाठः.

**नौकादण्डः क्षेपणी स्याद्**

नौकादण्डद्वयं हडीति ख्यातायाम्। क्षेपणीति। 'क्षिप प्रेरणे'। 'करणाधिकरणयोश्च' (३. ३. ११७) इति ल्युट्। 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप्॥

**अरित्रं केनिपातकः।**

अरित्रद्वयं केनिपाते। अरित्रमिति। 'ऋ गतौ'। 'अर्तिलूधूसूखनसहचर इत्रः' (३. २. १८४)। के जले निपात्यत इति केनिपातः। घञ्। 'हलदन्तात् सप्तम्याः संज्ञायाम्' (६. ३. ९) इत्यलुक्। कश्चात्र स्वार्थिकः। 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनानि नातिवर्तन्ते' इति पुंस्त्वमेव॥

**अभ्रिः स्त्री काष्ठकुद्दालः**

अभ्रिद्वयं काष्ठमये कुद्दाले। एतच्च वहित्रस्य नेलकादिमलचञ्चनार्थं क्रियते। अभ्रिरिति। 'अभ्र वभ्र मभ्र चर गत्यर्थाः'। 'इन्' (उ० ४. ११९) इति इन्॥

**सेकपात्रं तु सेचनम्॥ १३॥**

सेकपात्रद्वयं सामान्येन सेचनपात्रे। सेचनम्। 'सिचिर् क्षरणे'। करणे ल्युट्।

**त्रिष्वागाधात्**

आ अगाधात् अगाधपर्यन्तं प्रसन्नादयस्त्रिषु॥

**प्रसन्नोऽच्छः**

प्रसन्नद्वयं निर्मले। प्रसन्नः। 'षद्लृ विशरणगत्यवसादनेषु'। दन्त्यादिः। क्तः। अच्छ इति। नञ्पूर्वात् 'छो छेदने' इत्यस्माद् 'अन्येभ्योऽपि दृश्यते' (वा० ३. २. १०१) इति डप्रत्ययः॥

---

१ 'थ चह इति' ख. घ. पाठः. २. 'स्खलना' घ. च. पाठः. ३. 'डः॥' घ. छ. पाठः.

**कलुषोऽनच्छ आविलः।**

कलुषत्रयमाविले। पापं कलुषमुक्तम्। नञा अनच्छः। आविलम्। 'विल भेदने'। इगुपधलक्षणः कः॥

**निम्नं गभीरं गम्भीरम्**

निम्नत्रयं गभीरे। 'म्ना अभ्यासे'। निपूर्वः। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। लोकाश्रयत्वाल्लिङ्गस्य स्त्रीत्वनियमाभावः। गभीरगम्भीरशब्दौ 'गाङ् गतौ' 'गम्लृ सृपॢ गतौ' यथाक्रमं निपातितौ॥

**उत्तानं तद्विपर्यये॥ १४॥**

तद्विपर्यये अनिम्ने उत्तानम्। तनोतेर्घञ्॥

**अगाधमतलस्पर्शं**

अतिनिम्ने अगाधद्वयम्। 'गाधृ प्रतिष्ठायाम्'। नञ्समासः। अतलस्पर्शमिति विशेषणं, न नामेति केचित्॥

**कैवर्तौ दाशधीवरौ।**

कैवर्तत्रयं कैवर्ते। कस्य जलस्य ई लक्ष्मीः, तया वर्तो वर्तनमस्येति कैवर्तः। स्वार्थिकोऽण्। 'दाशृ दाने'। अच्। दाशः। 'शालो झषे धीवर एव दाशः' इत्यूष्मभेदे पुरुषोत्तमः।

"कैवर्तभृत्ययोर्दासो दासी वाशा च चेटिका"

इति दन्त्यान्ते रभसः। 'छित्वरच्छत्वरधीवरपीवर—' (उ० ३. १) इत्यादिना † ष्वरच्प्रत्ययेन धाञो धीवरो निपातितः। स्त्रियां धीवरी॥

**[आनायः पुंसि जालं स्यात् सणसूत्रं पवित्रकम्।]**

१. 'रीति॥' ङ. छ. पाठः।

† 'ष्वरच्' इति मुद्रितोणादिपाठः।

इति क्वचित् पाठः। तदा च आनायद्वयं **जाले**। ‡'जल धान्ये'। घञ्। जालम्। सणसूत्रद्वयं **सणसूत्रे**। 'षणु दाने'। 'धात्वादेः षः सः' (६. १. ६४)। सणो दन्त्यादिः। तस्य सूत्रं सणसूत्रं.

"कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत्।
सणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम्॥" (अध्या० २. श्लो० ४४)

इति मनुवचनात्। पवित्रकं तदुच्यते॥

**मत्स्यधानी कुवेणी स्याद्**

मत्स्यधानीद्वयं **मत्स्यधारख्यारिकादौ**। मत्स्या धीयन्तेऽस्यामिति मत्स्यधानी। अधिकरणे ल्युट्। ङीषि कुवेणी च॥

**बडिशं मत्स्यवेधनम्** ॥ १५ ॥

बडिशद्वयं **बडिशे**। बडिं बडिकां ग्रथितां श्यतीति बडिशम्। 'शो तनूकरणे'। 'आतोऽनुपसर्गे कः' (३. २. ३)। स्त्री(त्व)विवक्षायां गौरादित्वाद् ङीष्। बडिशी। मत्स्यवेधनम्। करणे ल्युट्॥

**पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः।**
**विसारः शकली च**

पृथुरोमाष्टकं **मत्स्ये**। पृथु रोम वल्कलमस्यासौ पृथुरोमा। नान्तः। मत्स्यत्वाविशेषादलोमकेऽपि प्रवृत्तिः। झष इति। 'कश शिष झष जष रिष हिंसार्थाः'। पचाद्यच्।

"पाणिनीयप्रत्याहार इव महाप्राणझषाश्लिष्टो झषालङ्कृतश्च" [समुद्रः] इत्याश्चर्यमञ्जरी। मत्स्य इति। 'मदी हर्षे'। 'ऋतन्याञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यो ऽनिज्यतुजलिजिष्ठुजिष्णु[1] जिसन्स्यनिथिनुल्यश'। 'सानुकः' (उ० ४. २)

1. 'लि' ङ. छ. पाठः.

‡ 'जल घातने' 'जल अपवारणे' इति मुद्रितधातुपाठः। * 'भ्यः कालि', '¶'ष्ठु', † 'स्य' इति मुद्रितोणादिपाठः।

इत्यनेन स्यन्प्रत्ययः । स्त्रियां गौरादिङीष् । 'सूर्यतिष्य—' (६. ४. १४९)इत्यादिना 'मत्स्यस्य ङ्यां चेति वक्तव्यम्' (वा० ६. ४. १४९) इति यलोपे मत्सी इति भवति । मीन इति । 'मीङ् माने । 'फेनमीनौ' (उ० ३. ३) इत्यनेन नग् अन्तस्य च ईत्वम् । वैसारिण इति । 'सृ गतौ' । ग्रह्यादित्वाद् णिनिः । विसारी । ततः स्वार्थे 'विसारिणो मत्स्ये' (५. ४. १६) इत्यण् । 'इनण्यनपत्ये' (६. ४. १६४) इति प्रकृतिभावाद् 'नस्तद्धिते' (६. ४. १४४) इति टिलोपो न भवति । अण्डाद् जातः अण्डजः । विसार इति । 'व्याधिमत्स्यबलेषूपसङ्ख्यानम्' (वा० ३. ३. १७) इति सर्तेर्घञ् । शकलं वल्कलं, तद्योगात् शकली । अत इनिः । 'शकलं वल्कलेऽर्धे च' इति तालव्यादावजयः ॥

**अथ गडकः शकुलार्भकः ॥ १६ ॥**

गडकद्वयं **गडके** । 'गड सेचने' । औणादिकः (क्ष १ कु)न् । अकादेशः । शकु(ला २ लोऽ)र्भक इवायमिति शकुलार्भकः ॥

**सहस्रदंष्ट्रः पाठीनः**

सहस्रदंष्ट्रद्वयं (वा ३ वदा)लौ । सहस्रं दंष्ट्रा अस्य सहस्रदंष्ट्रः । पाठिं पृष्ठं नमयतीति पाठीनः । नमयतेर्डः । 'अन्येषामपि —' (६. ३. १३७) इति दीर्घः । चित्रवदालिविशेषः पाठीन इति केचित् ॥

**उलूपी शिशुकः समौ ।**

उलूपीद्वयम् **उण्डुवालाख्ये** । ऊर्ध्वं लुम्पतीत्युलूपी । 'लुप्लृ छेदने' । उत्पूर्वाद् 'आवश्यकाधमर्ण्ययोर्णिनिः' (३. ३. १७०) । पृषोदरादित्वात् तकारलोपोपधादीर्घत्वे । चापल्यात् शिशुरिव शिशुकः ।

"शिशुकः शिशुमारेऽपि बालकोलूपिनोरपि"

इति रुद्रः ।

"चुलुपी शिशुमारस्तु कुर्ण्डीभेदे कुलान्तरे"

इति चवर्गे रभसः ॥

**नलमीनश्चिलिचिमः**

---

१. 'डु' ङ., 'डुवाडाख्ये' छ., 'डुलवा' घ. च. पाठः. २. 'वं: आ', ३. 'योरिति णि' क. ख. घ. च. पाठः. ४. 'ण्ड', ५. 'डा' ड. छ. पाठः.

नलमीनद्वयं वालुकागडुके । प्रायो नलवने तिष्ठतीति नलमीनः । न-लचारित्वात् तलमीन इति केचित् ।

"नषमीनश्चिलिचिमो बृहन्मत्स्योऽब्धिजस्तिमिः"

इति रत्नमालायामदन्तः इकारत्रयवांश्च ।

"लक्षणा सारसी क्रौञ्ची कुञ्चा मीनश्चिलीचिमिः"

इति तु वोपालितः ॥

**प्रोष्ठी तु शफरी द्वयोः ॥ १७ ॥**

प्रोष्ठीद्वयं **प्रोष्ठिकायाम्** । प्रकृष्ट ओष्ठोऽस्या इति प्रोष्ठी । शकन्ध्वादिः । 'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च' (४. १. ५५) इति वा ङीप् । 'ओत्वोष्ठयोर्वा' (वा० ६. १. ९४) इत्युपसङ्ख्यानाद् वा पररूपत्वम् । शफरी तालव्यादिः । गौरादिङीप् । शफरी द्वयोः ॥

**क्षुद्राण्डमत्स्यसङ्घातः पोताधानम्**

क्षुद्राण्डमत्स्यसङ्घातद्वयं **पोहाल** इति ख्याते । अनन्तरमण्डान्निस्सृतो मत्स्योऽण्डमत्स्यः । पश्चात् क्षुद्रशब्देन कर्मधारयः । तेषां सङ्घातः । क्षुद्राण्डमत्स्यसंघातः । पोताधानमिति । आङ्पूर्वाद् धाञोऽधिकरणे ल्युट् ॥

**अथो झषाः ।**

**रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १८ ॥**
**तिमिङ्गिलादयश्च**

रोहितादयः सप्त प्रत्येकं **मत्स्यविशेषे** । रोहितो लोहित उक्तः । 'रुहेरु-हियुजिभ्य इतिः' (उ० १. १०२) इत्यस्मिन् सूत्रे रोहि(तम्म[3] न्म)त्स्यजातिरिति हलन्त[4] उक्तः । तदा च जातौ 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (१. २. ५८) इति बहुवचनम् । तन्त्रान्तरे तु 'मत्स्यराजस्तु रोहितः' इत्युक्तम् । 'मद्गुरादयश्च' (उ० १. ४३) इत्यनेन 'टुमस्जो शुद्धौ' इत्यतः कुर-

१. 'काउडु', २. 'ति वो' ङ. छ. पाठः. ३. 'हिनम' क. ख, 'हिम' घ. ङ. छ. पाठः. ४. 'लदन्त' ङ. पाठः.

न्प्रत्ययेन मद्गुरो निपातितः। 'शाडृ श्लाघायाम्'। घञ्। (शालः)।

"शालो झषे धीवर एव दाशः"

इत्यूष्मभेदः। 'कैवर्त इव आबद्धराजीवोत्पलसाल' इति वासवदत्तायां दन्त्यादिः। राजीयोगाद् राजीवः। वप्रकरणे 'अन्यत्रापि दृश्यते' (वा० ५. २. १०९) इति वः। रालगन्धे इति ख्यातोऽयम्। शकुलस्तालव्यादिः। 'शक्ल शक्तौ'। *'क्रमे उलच्'(?) इति बाहुलकाद् उलच्। तिमिरिति। 'तमु काङ्क्षायाम्'। 'क्रमित-मिम्तम्भामत इच्च' (उ० ४. १२३) इति इन् अकारस्येकारः। तिमिं गिलतीति तिमिङ्गिलः। 'गॄ निगरणे'। मूलविभुजादित्वात् कः। 'गिलेऽगिलस्येति वक्तव्यम्' (वा० ६. ३. ७०) इति मुमागमः। आदिना लैबिशप्रभृतयः॥

## अथ यादांसि जलजन्तवः।

यादोद्वयं **जलजन्तुषु**। याद इति यातेः †'असुन् सर्वधातुभ्यः' (उ० ४. १९०) इत्यसुन्। बाहुलकाद् दगागमः। जलजन्तव इति षष्ठीसमासः॥

## तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः॥ १९॥

शिशुमारादयश्चत्वारः प्रत्येकं **जलजन्तुभेदाः**। शिशुमारः। 'कर्मण्यण्' (३. २. १) उद्र इति। 'उन्दी क्लेदने'। 'स्फायितञ्चिवञ्चि—' (उ० २. १३) इत्यादिना रक्। 'खरुशङ्कुपीयुनीलङ्गुलिगुः' (उ० १. ३७) इत्यनेन 'शकि शङ्कायाम्' इत्य(तः) कुप्रत्ययेन शङ्कुर्निपातितः। अतस्तालव्यादिः। 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६. १. १५४) इत्यत्र मकरशब्दः अव्युत्पन्नप्रातिपदिक-मित्युक्तम्। आदिना कुम्भीरप्रभृतयो ग्राह्याः॥

## स्यात् कुलीरः कर्कटकः

१. 'गु इ' ङ. छ. पाठः. २. 'न्त' क. ख. पाठः. ३. 'इलिश' ४. 'शि' ङ. छ. पाठः. ५. 'यां कु' क. ख. घ. च. पाठः. ६. 'गृह्यन्ते॥' क. पाठः.

* 'क्रमेरलच', † 'सर्वधातुभ्योऽसुन्' इति मुद्रितोणादिपाठः।

कुलीरद्वयं **कर्कटके**। 'कुल संस्त्याने'। 'गभीरगम्भीरौ' (उ० ४. ३५) इति बाहुलकादीरन्। कुलीरः। कर्किः सौत्रो धातुः। ततः 'शकादिभ्योऽटन्' (उ० ४. ८२)। कर्कटकः॥

**कूर्मे कमठकच्छपौ।**

कूर्मत्रयं **कच्छपे**।

"ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः"

इति रभसः। अतः कुत्सिता ऊर्मिः कूर्मिः। तद्योगात् कूर्मः। अर्शआद्यच्। कमठ इति। 'कमु कान्तौ'। 'कमेरठः' (उ० १. १०९) इत्यठः। बाहुलकान्न ठस्येकः। कच्छेन प्रायेण पिबतीति कच्छपः। 'सुपि' (३. २. ४) इति योगविभागात् कः॥

**ग्राहोऽवहारः**

ग्राहद्वयं **लताकारे तन्तुनागे**। जलहस्तिर्नाति केचित्। गृह्णातीति ग्राहः। 'विभाषा ग्रहः' (३. १. १४३) इति व्यवस्थितविभाषया जलचरे नित्यमेव णप्रत्ययः। अवहार इति 'श्याद्व्यधा'[1]दिना (३. १. १४१) सूत्रेण णः॥

**नक्रस्तु कुम्भीरः**

नक्रद्वयं **कुम्भीरे**। न क्रामतीति नक्रः। नाकवत् प्रकृतिवद्भावो डप्रत्ययश्च निपात्यते। कुम्भीं रातीति कुम्भीरः। 'आतोऽनुपसर्गे कः' (३. २. ३)॥

**अथ महीलता॥ २०॥**

**गण्डूपदः किञ्चुलकः**

'किञ्चो[2]हि' इति ख्यातायां महीलतात्रयम्। भुवो लतेव लता महीलता। किञ्चिच्चलतीति किञ्चुलुकः। पृषोदरादिः॥

१. 'दिसू' क. ख. घ. च. पाठः. २. 'ञ्चा' च. पाठः.

**निहाका गोधिका समे ।**

निहाकाद्वयं **गोधिकायाम्**[1]। निहाका। 'ओहाक् त्यागे'। 'नौ हः' (उ० ३. ४४) इति कन्प्रत्ययः। राकावदित्त्वाभावः। गोधिकेति। 'गुध रोषे'। कर्तरि पचाद्यच् कप्रत्ययः ह्रस्वादयश्च ॥

**रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २१ ॥**

रक्तपात्रयं **जलौकायाम्**। रक्तपेति। 'आतोऽनुपसर्गे कः' (३. २. ३) इति कः[2]। जलमोको वसतिस्थानमस्या इति जलौका। 'ओक उचः के' (७. ३. ६४) इति निपातनाद् ओकोऽदन्तः।

"जलौकापि[3] जलोकः स्याज्जलूका जलजन्तुकः"

इति तारपालः।

"जलौका[4] रक्तपानंर्डा (?) स्त्रियां भूम्नि जलौकसः"

इति शब्दार्णवः।

"जलायुक्ता जलौका च जलौकाश्च जलोरगी"

इति संसारावर्ते बहुत्वं नास्ति।

'जलौकसेनेव रक्ताकृष्टिनिपुणेन वेश्याजनेन'

इति वासदत्तायां विशेषणसमासाद् अर्शआद्यचि एकवचनत्वमुक्तम् ॥

**मुक्तास्फोटः स्त्रियां शुक्तिः**

मुक्तास्फोटद्वयं **मोतिहड**[6] इति ख्याते। मुक्ताः स्फुटन्त्यस्मिन्निति मुक्ता-

१. 'धायां' क. ख. ङ. पाठः. २. 'कः। ज' क. ख. घ. च. पाठः. ३. 'लौं' क. ख. ङ. च. छ. पाठः. ४. 'लौ' ङ. छ. पाठः. ५. 'तही स्त्रि' ङ. छ., 'नसि स्त्रि' क. ख. पाठः. ६. 'मा' घ. च. पाठः.

स्फोटः । 'स्फुट विकसने'। 'हलश्च' (३.३.१२१) इत्यधिकरणे घञ् । शुक्तिरिति। 'शुच्य अभिषवे'। 'क्तिच्क्तौ च संज्ञायाम्' (३. ३. १७४) इति क्तिच्। 'लोपो व्योर्वलि' (६. १. ६६) इति यलोपः। 'तितुत्रतथ– –' (७. २. ९) इत्यादिना इण्णिषेधः।

"शुक्तिर्दुर्नामिकामुक्तास्फोटयोरश्वलक्षण"

इति तालव्यादावजयः॥

**शङ्खः स्यात् कम्बुरस्त्रियाम्।**

शङ्खद्वयं शङ्खे। 'शमेः खः' (उ० १. १०७)। शङ्खः। बाहुलकान्न खकारस्येनादेशः। कं वाति गच्छतीति कम्बुः। मृगय्वादित्वात् कुप्रत्ययः॥

**क्षुद्रशङ्खाः शङ्खनखाः**

क्षुद्रशङ्खद्वयं क्षुद्रशङ्खे। जोङ्गडा इति यत्र नीचोक्तिः[2]। शङ्खा नखा इव शङ्खनखाः॥

**शम्बूका जलशुक्तयः॥ २२॥**

शम्बूकद्वयं शम्बूके। 'शमु उपशमे'। 'उलूकादयश्च' (उ० ४. ४१) इत्यनेन ऊकबुगागमौ। 'शम्बूकपिण्याकमधूकफेन' इति पुंलिङ्गानुशासनेऽमरमाला।

"शम्बूकाभिः सहपरिचयात्त्रीयते पामरीभिः"

इति कालिदासः।

"शम्बूकः शम्बुकश्चैव पूर्वः कान्तस्तु सर्वदा।
ककारेण विना शेषो दृश्यते ग्रन्थविस्तरे॥"

इति उत्पलिनी॥

१. 'खः। बा' च. पाठः. २. 'क्तिः। न श' क. ख. ङ. छ. पाठः. ३. 'ङ्खा इ' घ. च. पाठः.

**भेके मण्डूकवर्षाभूसालूरप्लवदर्दुराः।**

भेकषट्कं वेङ्ग इति ख्याते। बिभेतेः 'इणभीकापाशल्यतिमर्चिभ्यः कन्' (उ० ३. ४३) इति कन्। भेकः। 'मडि भूषायाम्'। 'गडिमण्डिभ्यामूकन्' (उ० ४. ४२)। मण्डूकः। 'अन्येभ्योऽपि दृश्यते' (३. २. १७८) इति क्विप्। वर्षाभूः। मलतीति मालूरः। 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४. ९०)। 'अन्येषामपि ..' (६. ३. १३७) इति दीर्घः। 'परिसरकृकलासस्वेदसालूरसर्पा' इत्यूष्मभेदः। 'प्लु गतौ'। पचादिः। प्लवः। 'दॄ विदारणे'। 'मुकुरदर्दुरौ' (उ० १. ४०) इत्यनेन दर्दुरो निपातितः॥

**शिली गण्डूपदी**

शिलीद्वयं किञ्चुलुकभार्यायाम्। किञ्चुलुकजातिस्त्रीमात्रे वा। 'शिल उञ्छे'। तालव्यादिः। इगुपधलक्षणः कः। 'पुंयोगादाख्यायाम्' (४. १. ४८)। 'जातेरस्त्रीविषयादयोपधात्' (४. १. ६३) इति शिल्यादिषु पञ्चसु ङीप्॥

**भेकी वर्षाभ्वी**

भेकीद्वयमपि तथैव। वर्षाभ्वीत्यसाधुः, स्त्रीप्रत्ययस्य लक्षणाभावात्। स्त्रियामपि वर्षाभूरित्येव भवति। किन्त्वमरमालायां भागुरौ च स्त्रीप्रत्ययान्तः प्रयोगो दृश्यते। तत्र मूलं चिन्त्यम्॥

**कमठी डुलिः॥ २३॥**

कमठीद्वयमपि तथैव। डुलिरिति। 'डुल उत्क्षेपणे'। चुरादिणिचोऽनित्यत्वाद् 'इगुपधात् कित्' (उ० ४. ११९) इति (किः (इः)। साहचर्याद् डुलेरपि स्त्रीत्वम्।

> "भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य तु।
> शिली गण्डूपदस्यापि कच्छपस्य डुलिः स्मृता॥"

इति भागुरिः। स्वल्पजातौ शिल्यादय इति केचित्॥

**मद्गुरस्य प्रिया शृङ्गी**

१. 'ङ्ग' क. ख. ङ. छ. पाठः. २. 'ण्डि' क. ख. पाठः. ३. 'वः।' ङ. छ. पाठः.

मकरस्य प्रियायां शृङ्गी। 'शॄ हिंसायाम्'। 'शृणातेर्ह्रस्वश्च' (उ० १. १२१) इति गन् कित्त्वह्रस्वत्वनुमागमाश्च ॥

**दुर्नामा दीर्घकोषिका ।**

दुर्नामद्वयं **तिसनामेति** ख्यातायाम् । दुर्नामा नान्तः । 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३) इति पक्षे डाप् । 'अन उपधालोपिनोऽन्यतरस्याम्' (४. १. २८) इति ङीपा दुर्ना(मी ? म्नी)त्यपि । दीर्घकोपिकेति जातौ ङीप् । स्वार्थे कन् । 'केऽणः' (७. ४. १३) इति ह्रस्वत्वम् । कोषो मूर्धन्यषः । तथा च मूर्धन्यान्ते धरणिः—

"कोषो दिव्ये धने पेश्यां कुड्मलासिपिधानयोः ।
पनसादिफलस्यान्तः कोषः शब्दादिसङ्ग्रहः ॥"

इति । 'काशा वाशा अमरकोशादयस्तालव्या' इति वर्णदेशना । 'सुरतैः शपेयम्'(?) इति घटकर्परोऽपि ॥

**जलाशयो जलाधारः**

जलाशयद्वयं **सामान्यजलस्थाने** । जलमाशेतेऽत्र तिष्ठतीति जलाशयः । 'पुंसि संज्ञाया घः प्रायेण' (३. ३. ११८) इत्यधिकरणे घः । जलमाध्रियतेऽत्रेति जलाधारः । 'अध्यायन्यायोद्यावसंहाराधारावायाश्च' (३. ३. १२२) इति घञ् ॥

**तेष्वगाधजलो ह्रदः ॥ २४ ॥**

तेषु **जलाशयेषु** योऽगाधजलः, स ह्रदः । 'ह्राद अव्यक्ते शब्दे'। पचादिः । पृषोदरादिह्रस्वत्वम् ॥

**आह्रावस्तु निपानं स्यादुपकूपजलाशये ।**

आहावद्वयं **कूपसमीपे पश्वाद्यर्थं प्रस्तरादिरचिते जलाशये** । आहूयन्ते

१. 'रप्रि' क. ख. पाठः. २. या शृ' ङ. च. छ. पाठः. ३ 'ङ्गी शृ' घ. ङ. च छ. पाठः.

पशवोऽत्रेत्याहावः । ह्वयतेर्धातोः 'निपानमाहावः' (३. ३. ७४) इत्यप् संप्रसारणं वृद्धिश्च निपात्यते । निपिबन्त्यस्मिन्निति निपानम् । अधिकरणे ल्युट् ॥

## पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥ २६ ॥

अन्धुचतुष्कं कूपे । 'अम रोगे' । 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च' (उ० १. २७) इत्यनेन कुप्रत्ययो धुगागमश्च । एवं ह्रस्वोऽन्धुः । प्रहिरिति । 'प्रहरतेः कूपे' (उ० ४. १३४) इत्यनेन इः डिच्च । डित्त्वात् टिलोपः । 'कु शब्दे' । 'कुयुभ्यां च' (उ० ३. २७) इति पः ऊकारश्चान्तादेशः । कूपः । उदकं पिबन्त्यस्मिन्निति उदपानम् । अधिकरणे ल्युट् । 'उदकस्योदः संज्ञायाम्' (६. ३. ५७) इत्युदादेशः । उदपानं तु पुंसि वेति सम्बन्धः । तुशब्दस्य सार्थकता 'त्रिलिङ्ग्यां त्रिष्विति पदम्' इत्यत्रोक्ता ॥

## नेमिस्त्रिकास्य

नेमिद्वयं **सर्वोपरिस्थकूपपट्टप्रान्ते** । भूमिस्थितकूपपट्ट इति केचित् । 'नियो मिः' (उ० ४. ४३) इति नयतेर्मिः । त्रिकेति । त्रिशब्दात् 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' (५. १. ५८) इति कन् । टाप् ।

"(त्रिका) कूपस्य नेमौ स्त्री पृष्ठवंशाधरे त्रिकम्"

इति रभसः ॥

## वीनाहो मुखबन्धनमस्य यत् ।

कूपस्य **नान्दीपट्टे** वीनाहः । विपूर्वात् 'णह बन्धने' इत्यतोऽधिकरणे 'हलश्च' (३. ३. १२१) घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति दीर्घः ॥

## पुष्करिण्यां तु खातं स्यात्

पुष्करिणीद्वयं **पुष्करिण्याम्** । पुष्करं जलं, तद्योगात् पुष्करिणी। 'पुष्करादिभ्यो देशे' (५. २. १३५) इतीनिः । खातमिति । 'खनु अवदारणे' । कर्मणि क्तः । 'जनसनखनां सञ्झलोः' (६. ४. ४२) इत्यात्वम् ॥

**अखातं देवखातकम् ॥ २६ ॥**

अखातद्वय सुरखाते । अपौरुषेये दैव इति यावत् । देवकुण्ड इत्यन्ये । देवखात इति तृतीयासमासः ॥

**पद्माकरस्तटाकोऽस्त्री**

पद्माकरद्वय पद्मयुक्तजलाशयमात्रे । 'तड आघाते' । 'पिनाकादयश्च' (उ० ४. १५) इत्यनेन आकप्रत्ययः डकारस्य च टत्वम् । तटाकोऽस्त्रीति सम्बन्धः ॥

**कासारः सरसी सरः ।**

कासारत्रयं सरसि । 'कासृ शब्दे' । दन्त्यान्तः । तुषारवद् आरन् । कासारः । सरसी गौरादिङीष् । पद्मकमेव सामान्यसरसीति केचित् । सर्तेः असुन् । सरः ॥

**वेशन्तः पल्वलं चाल्पसरः**

वेशन्तत्रयमल्पसरसि । 'जॄविशिभ्यां झच्' (उ० ३. १२६) । 'झोऽन्तः' (७. १. ३) । पल्वलमिति । 'पल गतौ' । 'सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालल्वलपल्वलधिष्ण्यशल्याः' (उ० ४. १०७) इत्यनेन वलप्रत्ययः ॥

**वापी तु दीर्घिका ॥ २७ ॥**

वापीद्वय दीर्घिकायाम् । 'वसिवपियजिराजि *धृजिध्वजिसादिहरिवाशिवादिवारिभ्य इञ्' (उ० ४. १२६) इति इञ् । 'अत उपधायाः' (७. २. ११६) इति वृद्धिः । 'कृदिकारादक्तिनः' (ग० ४. १. ४५) इति ङीषि वापी ॥

१. 'तडाका' क. ख. घ. च. पाठः. २. 'शॄ' क. ख. पाठः. ३. 'सृ' ङ. छ. पाठः. ४. 'धावृ' क. ख. च., 'धाया वृ' घ. पाठः. ५. 'ति वा ङी' ङ. छ. पाठः.

* 'व्राजिमर्दिहनिनाशिवाशिवारिभ्य' इति मुद्रितोणादिपाठ

**खेयं तु परिखा**

खेयद्वयं खयाविति ख्यातायाम् । 'खनु अवदारणे' । कर्मणि 'ई च खनः' (३. १. १११) इति[1] क्यप् ईकारश्चान्तादेशः । खेयम् । परिखेति । खनतेरेव भुजगवद्[2] डः ॥

**आधारस्त्वम्भसां यत्र धारणम् ।**

सेतुना धान्यादिसेचनार्थं बद्धकन्दरादावाधारः । धृञो घञ् ॥

**स्यादालवालमावालमावापः**

आलवालत्रयं तरुसेकार्थं तरुमूलविरचिते स्वल्पजलाधारे । 'लूञ् छेदने' । †'स्थाचतिमृजेरालवालङालीयरः' (उ० १. १२१) इति बहुलवचनाद् आल[3]प्रत्ययः । तथा च प्रयोगः—

"मूलं फणाः फणिपतेर्गहनं च मध्यं शाखा दिशो जलधिमण्डलमालवालम्"
इति ।

"अलवालरोधिषु पयस्सु बिभ्रतः सपलाशराशिमिव मूलसन्ततिम्"
इति *माघे ह्रस्वादिः । अपपाठोऽयमिति केचित् । 'वल वल्ल संवरणे' । आङ्पूर्वात् करणे 'हलश्च' (३. ३. १२१) इति घञ् । आवालम् । वपेरधिकरणे घञि आवापः ॥

**अथ नदी सरित् ॥ २८ ॥**

**तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।**
**स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ॥ २९ ॥**

नद्यादयो द्वादश नद्याम् । 'णद अव्यक्ते शब्दे' । पचादिः । पचादिषु नदट्पाठात् 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप् । सरिदि-

१. 'खा' ख. पाठः. २. 'द् ॥' घ. पाठः. ३. 'लञ्प्र' घ. ङ. छ., 'लङ्प्र' च. पाठः.

† 'स्थाचतिमृजेरालज्वालज्वालीयचः' इति मुद्रितोणादिपाठः । * तत्रेदमर्धं न दृश्यते ।

ति। 'सृ गतौ'। हरिद्वद् इतिः। सरित्। तरङ्गयोगात् तरङ्गिणी। एवं शैवलिन्यादयोऽपि। धुनीति। 'धुञ् कम्पने'। बाहुलको नक्प्रत्ययः। गौरादिङीप्। स्रवन्तीति। 'स्रु गतौ'। दन्त्यादिः। 'तॄभूवसिवहिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च' (उ० ३.१२८) इति झच् बहुलवचनात्, पित्त्वं च। निम्नगेति। 'अन्येभ्योऽपि—' (वा० ३.२.१०१) इति डः। अपां समूह आपः। पम्। (तं तद्) गच्छतीत्यापगा। 'शिखरिणामिव सागरमापगा' (स० ९. श्लो० १७) इति रघुः।

"विपुलपुलिना वेतस्वत्योऽपगाः कति सेविताः"

इति योगेश्वरः॥

**गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा।**
**भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि॥ ३०॥**

गङ्गाष्टकं **गङ्गायाम्**। गमेः 'गन् गम्यदेः'+ (उ० १.१२८) इति गन्। गङ्गा। विष्णुपदात् सम्भूतत्वाद् विष्णुपदी। जह्नुना ऋषिणा यज्ञवाटं प्लावयन्ती पीता उज्झिता सुता च प्रपन्ना इति जह्नुतनया। सुरनिम्नगेति। वाप्रकरणे 'गिरिनद्यादीनामुपसङ्ख्यानम्' (वा० ८.४.१०) इति वा णत्वम्। भगीरथेनावतारितत्वाद् भागीरथी। 'तस्येदम्' (४.३.१२०) इत्यण्। 'टिड्ढाणञ्—' (४.१.१५) इत्यादिना ङीप्। भारते---

"क्षितौ तारयते मर्त्यान् नागांस्तारयतेऽप्यधः।
दिवि तारयते देवान् तेन त्रिपथगा स्मृता॥"

इति। पूर्ववद् डः। त्रिभिः स्रोतोभिर्ब्रह्मलोके प्रभवतीति त्रिस्रोताः। शन्तनोर्महिषी भूत्वा भीष्मं सूतेति भीष्मसूः। 'सत्सूद्विष—' (३.२.६१) इत्यादिना क्विप्॥

**कालिन्दी सूर्यतनया यमुना शमनस्वसा।**

कालिन्दीचतुष्कं **यमुनानद्याम्**। कलिन्दाचलाद् भवतीति कालिन्दी। शेषे अण्। यमुनेति। 'यम उपरमे'। 'अजियमिशीङ्भ्यश्च' (उ० ३.६१) इति उनन्। शमनस्वसा ऋकारान्ता॥

+ 'गम्ययोः' इति मुद्रितोणादिपाठः।

**रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३१ ॥**

रेवाचतुष्कं **रेवायाम्**। 'रेवृ प्लवगतौ'। कर्मणि 'गुरोश्च हलः' (३.३.१०३) इत्यः। नर्म क्रीडा, तद् ददातीति नर्मदा। सोमवंश्येन पुरूरवसा अवतारितत्वात् सोमोद्भवा। मेकलाचलप्रभवत्वाद् मेकलकन्यका। 'केऽणः' (७.४.१३) इति ह्रस्वत्वम्। 'उदीचामातः स्थाने यकपूर्वायाः' (७.३.४६) इतीत्त्वनिषेधः। मेखलकन्यकेति केचित्।

"यन्मेखलाद् भवति मेखलशैलपुत्री"

इति खकारवान् ॥

**करतोया सदानीरा**

करतोयाद्वयं **करतोयानद्याम्**। गौरीविवाहे शङ्करकरगलिततोयजत्वात् करतोया।

"यथासौ कर्कटे देवी त्र्यहं गङ्गा रजस्वला।
अन्या रक्तवहा नद्यः करतोयाम्बुवाहिनी॥"

इत्यागमाद् इयं सदानीरा ॥

**बाहुदा सैतवाहिनी।**

बाहुदाद्वयं **बाहुदानद्याम्**। 'मन्तव्या बाहुदार्जुनी' इति भागुरिः। शङ्खस्य ऋषेश्छिन्नबाहोर्बाहुदानाद् बाहुदा। सितवाही अर्जुनः। तेन निर्वृत्तेति सैतवाहिनी। दन्त्यादिः ॥

**शतद्रुस्तु शितद्रुः स्याद्**

शतद्रुद्वयं **शतद्रुनद्याम्**। पुत्रशोकातुरे वसिष्ठे शिलां बद्ध्वा प्रविष्टे शतधा द्रुतेति शतद्रुः। 'द्रु गतौ'। 'शते च' (उ० १. ३६) इति कुप्रत्ययः डिच्च। शितं तीक्ष्णं द्रुता शितद्रुः। द्वयं स्त्रियाम् ॥

**विपाशा तु विपाट् स्त्रियाम् ॥ ३२ ॥**

विपाशाद्वयं **विपाशायाम्**। पुत्रशोकादेव पाशं बद्ध्वा प्रविष्टस्य पाश-

च्छेदनाद् विपाशा । पाशशब्दात् 'सत्यापपाशरूपवीणा—' (३. १. २५) इत्यादिना 'पाशाद् विमोचने' इति णिच् । ततः पचाद्यच् । विपाडिति पूर्ववद् णिच् । 'अन्येभ्योऽपि—' (३. २. १७८) इति क्विप् । णिलोपः । व्रश्चादिना षत्वम् । जश्त्वचर्त्वे । एवं तालव्यान्तौ ॥

**शोणो हिरण्यबाहुः स्यात्**

शोणद्वयं **शोणनदे** । 'शोणृ वर्णगत्योः' । तालव्यादिः । पचाद्यच् ॥

**कुल्याल्पा कृत्रिमा सरित् ।**

**कृत्रिमा**(न्यं?ल्प)**नद्यां** कुल्या । सरिन्मात्रेऽपि कुल्या ।

"कुल्याल्या जलप्रणालीसरितोः कुल(य?)जेऽस्थ(लि? नि)"

इत्यजयः । 'कुल संस्त्याने' । 'अघ्न्यादयश्च' (उ० ४. ११२) इति यत् ॥

**शरावती वेत्रवती चान्द्रभागा सरस्वती ॥ ३३ ॥**

**कावेरी सरितोऽन्याश्च**

शरावत्यादयः पञ्च प्रत्येकं **स्वनामप्रसिद्धे नदीभेदे**। अन्याश्चेति मुवा-कोङ्कणावतीप्रभृतयः । शरैर्योगात् शरावती । 'शरादीनां च' (६. ३. १२०) इति दीर्घत्वम् । 'संज्ञायाम्' (८. २. ११) इति वत्वम् । चान्द्रभागा दीर्घादिः । अत एव 'अवृद्धाभ्यो नदीमानुषीभ्यः—' (४. १. ११३) इत्यत्रोक्तम् 'अवृद्धाभ्य इति किम् । चान्द्रभागाया अपत्यं चान्द्रभागेय' इति । 'चान्द्रभागी नद्याम्' इति बह्वादिपाठाद् ङीषपि ।

"तापी तु तपती शैत्या चन्द्रभागा तु चन्द्रका ।
चान्द्रभागा शारदा तु कश्मीरेषु सरस्वती ॥"

१. 'थ' ङ. छ. पाठः. २. 'कूटजे' ग., 'कुलडजे' क., 'कूडजे', ३. 'यः प्र', ४ 'राव'. ५. 'शे' ङ. छ. पाठः.

इति शब्दार्णवः। कावेरीति। 'कवृ वर्णे'। णिच्। *'मूलेरादयश्च' (उ० १. ६४) इत्येरक् ॥

**संभेदः सिन्धुसङ्गमः ।**

**नद्योर्नदीसमुद्रयोश्च मेलके** सम्भेदः। नद्यां समुद्रे च सिन्धुशब्दप्रवृत्तेः॥

**द्वयोः प्रणाली पयसः पदव्यां**

**हर्म्यादिजलवर्त्मनि** प्रणाली। 'णल बन्धने'। कर्मणि घञ्। 'उपसर्गाद्—' (८. ४. १४) इत्यादिना णत्वम्। गौरादिङीप्॥

**त्रिषु तूत्तरौ ॥ ३४ ॥**

**देविकायां सरय्वां च भवे दाविकसारवौ ।**

उत्तरौ दाविकसारवौ त्रिष्विति योज्यम्। स्त्रियां दाविकी। 'टिड्ढाणञ्[1]—' (४. १. १५) इत्यादिना ङीप्। देविकानद्युत्पन्ने वस्तुनि दाविकम्। 'तत्र भवः' (४. ३. ५३) इत्यण्। 'देविकाशिंशपा—' (७. ३. १) इत्यादिना अचामादेरात्वम्। सरयूभवे वस्तुनि सारवम्। 'सर्तेरयुः' (उ० ३. २२)। अयूरित्येके। सरयूः। तत्र भवे अण्। 'दाण्डिनायनहास्तिनायन—' (६. ४. १७४) इत्यादिना यलोपो निपात्यते। 'ओर्गुणः' (६. ४. १४६)॥

**सौगन्धिकं तु कह्लारं**

सौगन्धिकद्वयं **सौगन्धी**[3] इति ख्याते पुष्पे। सुगन्धकरणं शीलमस्येति सौगन्धिकम्। 'शीलम्' (४. ४. ६१) इति ठक्। कं वारि ह्लादयतीति कह्लारम्। पृषोदरादि।

"सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यकम्"

१. 'आदि' ङ. छ., 'आ दी' घ. च. पाठः. २. 'वेऽण्' क. ख. ङ. छ. पाठः. ३. न्धि' ख. पाठः.

* 'मूलेरादयः' इति मुद्रितोणादिपाठः।

इति पादनामभेदे अमरमाला ॥

**हल्लकं रक्तसन्ध्यकम् ॥ ३८ ॥**

हल्लकद्वयं **रक्तसौगन्धिके**,[1] यत्र **हला** इत्याख्या । ह्लादत इति हल्लकम् । पृषोदरादिः । सन्ध्यावद् रक्तं रक्तसन्ध्यकम् । इवार्थे कः । 'वाहिताग्न्यादिषु' (२. २. ३७) इति पूर्वनिपातः ॥

**स्यादुत्पलं कुवलयम्**

उत्पलद्वयं सामान्येनो**त्पले** । सामान्यशब्दत्वाद् नीलाब्जेऽपि वृत्तिः ।

"इन्दीवरे मांसशून्ये उत्पलं कुष्ठभूरुहे"

इति रभसोऽपि ।

"(रा 'श्या)मः शितिश्च नीलः कुवलयमिन्दीवरं च नीलाब्जम्"

इति नाममालाकृता अत्रैक्यमेव दर्शितम् । कथं तर्हि केवलं नीलोत्पले उत्पलबुद्धिरिति चेत्, सामान्येऽपि धान्यत्वे धान्यशब्दात् कलमादिषु बुद्धिः, न मुद्गादिषु, एवमिहापि । उद्गच्छतीत्युत्पलम् । 'पल गतौ' । पचाद्यच् । कौ वलत इति कुवलयम् । 'वल वल्ल संवरणे' । 'तनेः कयन्' इति बाहुलकः कयन् ॥

**अथ नीलाम्बुजन्म च ।**

**इन्दीवरं च नीलेऽस्मिन्**

नीलाम्बुजन्मद्वयं[2] **नीलोत्पले** । इन्दतीति इन्दिः लक्ष्मीः । औणादिक इप्रत्ययः । ङीप् । तस्याः वरं प्रियं इन्दीवरम् । इन्द्रियं वृणातीति वा । पृषोदरादिः ॥

**सिते कुमुदकैरवे ॥ ३९ ॥**

**सितोत्पले कुमुदाख्ये** कुमुदद्वयम् । कौ मोदत इति कुमुदम् । मूलविभुजादित्वात् कः । रूपभेदात् क्लीबे ॥

१. 'के । ह्ला' ङ. छ. पाठः. २. 'जद्व' घ. ङ. च. छ. पाठः.

**शालूकमेषां कन्दः स्याद्**

एषां **सौगन्धिकादीनां** कैरवान्तानां कन्दो **मूलं** शालूकम्। 'शल चलनसंवरणयोः'। तालव्यादिः। 'शलिमण्डिभ्यामूकण्' (उ० ४. ४३)॥

**वारिपर्णी तु कुम्भिका।**

वारिपर्णीद्वयं **वाक्षी** इति ख्यातायाम्। वारिणि पर्णमस्याः वारिपर्णी। 'पाककर्ण —' (४. १. ६४) इत्यादिना ङीप्। केन जलेन उभ्यत इति कुम्भी। 'उभ उम्भ पूरणे'। कर्मणि घञ्। शकन्ध्वादिगौरादी॥

**जलनीली तु शेवालं शैवले**

जलनीलीत्रयं **शैवाल** इति ख्याते। 'शीङो धुक्लग्वालन्वलञः' (उ० ४. ३८) इत्यनेन शेतेः वलञ्वालन्प्रत्ययाभ्यां शैवलं शेवालं च। 'सकलशं कलशेवलमालक' इति तु कप्फिणाभ्युदयः॥

**अथ कुमुद्वती॥ ३७॥**

**कुमुदिन्यां**

कुमुद्वतीद्वयं **कुमुदयुक्ते देशे**। कुमुदान्यस्मिन् देशे सन्तीत्यस्मिन्नर्थे 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४. २. ८७)। कुमुद्वती। कुमुदिनीति। मत्वर्थे 'पुष्करादिभ्यो देशे' (५. २. १३५) इतीनिः॥

**नलिन्यां तु बिसिनीपद्मिनीमुख्याः।**

नलिनी(द्व[1])यं **पद्मयुक्ते देशे**। पद्मसमूहे चास्य वृत्तिः। तथा च —

"नलिनी स्यात् पङ्कजिनी बिसिनी च सरोजिनी।
पद्मिनीति च पर्यायाः पद्मषण्डे तदाकरे॥"

इति रत्नमालायां माधवः।

"सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नाम्" (कुमा० स० ३. श्लो० ७६)

१. 'त्र' क. ख. ङ. छ. पाठः  २. 'ति क' ङ. च. छ. पाठः

इति प्रयोगोऽपि । नलं पद्ममुच्यते । तथाहि 'नलमब्जं नले नड' इति रुद्रः । सर्वत्र कुमुदिनीवद् इनिः । मुखशब्द आद्यर्थे । आदिना च मृणालिनीग्रहणम् ॥

**वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३८ ॥**
**सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।**
**पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ३९ ॥**
**बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।**

पद्मादयः षोडश पद्मे । 'पद गतौ' । *'अर्तिस्तुसुहुसृधृक्षिक्षुभायापदियक्षिणीभ्यो मन्' (उ० १. १४५) इति मन् । वा पुंसि पद्मम् इति सम्बन्धः । 'णल बन्धने' । 'कृश्याभ्यामिनन्' इति बाहुलकादितोऽपि इनन् । नलिनम् । अरं वातं विन्दतीत्यरविन्दम् । गोविन्दवत् शप्रत्ययः । 'तुदादिभ्यः शः' (३. १. ७७)(१)। 'शे मुचादीनाम्' (७. १. ५९) इति नुमागमः । कं जलम् अलति भूषयतीति कमलम् । मूलविभुजादित्वात् कः । सहस्रपत्रशतपत्रयोर्भिन्नत्वेऽपि पद्मत्वादेकत्वम् । कुशे जले शेत इति कुशेशयम् । 'शयवासवासिष्वकालात्' (६. ३. १८) इत्यलुक् । 'कुशमप्सु च' इत्यनेकार्थे वक्ष्यति । शयतिश्चात्र स्थितिवचनः, यथा जलाशयः । पङ्केरुहमिति । इगुपधलक्षणः कः । मूलविभुजादित्वाद् वा कः । 'तत्पुरुषे कृति बहुलम्' (६. ३. १४) इत्यलुक् । तामरं जलम् । तथाहि 'तामरं घृतमर्णश्च' इति निगमाख्यमभिधानम् । 'षस स्वप्ने' । अदादिः । तत्र तामरे सस्ति तिष्ठतीति डप्रत्ययः । तामरसम् । 'दुर्जन इव सतामरसो वसन्त' इति वासवदत्ता । सरसि जातं सारसम् । तत्र भवे अण् । बिसं मृणालं जलं वा । तस्य पुष्पं बिसप्रसूनम् । 'षूङ् प्राणिगर्भविमोचने' । निष्ठा क्तः । 'स्वादय ओदितः' इत्योदित्त्वाद् 'ओदितश्च' (८. २. ४५) इति नत्वम् । केसरराजियोगाद् राजीवम् । † 'वप्रकरणेऽन्यत्रापि —' (वा० ५. २. १०९) इति वः[३] ॥

१. 'ले इ' ख. पाठः. २. 'तायाम । स' ङ. छ. पाठः. ३. 'वत्वम्' ॥' ङ. छ, 'वन् ॥' क. ख. पाठः.

* 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इति मुद्रितोणादिपाठः । † 'अन्येभ्योऽपी'ति पाठो दृश्यते ।

**पुण्डरीकं सिताम्भोजम्**

पुण्डरीकद्वयं **शुक्लपद्मे** । 'मडि भूषायाम्' । 'पुडि चे'त्येके । 'पर्फरीकादयश्च' (उ० ४. २०) इत्यरीकन् ॥

**अथ रक्तसरोरुहे ॥ ४० ॥**

**रक्तोत्पलं कोकनदं**

रक्तसरोरुह(द्व? त्र)यं **रक्तपद्मे रक्तकुमुदे**ऽपि । उत्पल च पद्मेऽपि चेति केचित् । कोकान् नादं शब्दं कारयतीति कोकनदम् । 'णद अव्यक्ते शब्दे' । (अन्तर्भावित?)ण्यन्तः । पचाद्यच् । पृषोदरादिह्रस्वत्वम् ॥

**नाला नालम्**

नालाद्वयम् **उत्पलादिदण्डे** । 'णल बन्धने' । 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०) । पक्षे टाप् ॥

**अथास्त्रियाम् ।**

**मृणालं बिसम्**

मृणालद्वयं **मृणाले** । 'मृण हिंसायाम्' । 'तमिविडिमृणिविशिकुलकीलवञ्चिभ्यः कालन्' (उ० १. ११९) । अस्त्रियां मृणालमिति सम्बन्धः । 'बिस प्रेरणे' । इगुपधलक्षणः कः । बिसम् । 'हंसपङ्क्तिरिव बिसंवादिनी' (?) इति वासवदत्तायां दन्त्यान्तः । स्वल्पा मृणालजातिर्मृणाली । गौरादिः ॥

**अब्जादिकदम्बे षण्डमस्त्रियाम् ॥ ४१ ॥**

**पद्मादिसमूहे** षण्डः । 'षणु दाने' । 'अमन्ताड्डः' (उ० १. ११९) । बाहुलकाद् न धात्वादेः (ष? स)त्वं डकारस्येत्संज्ञाभावश्च । तथा च —

१. 'करोती' ङ. छ. पाठः.

"षण्डः स्मृतो बलीवर्दे षण्डं तु कानने भवेद्"

इति मूर्धन्ये अजयः। 'शडि रुजायां सङ्घाते (चे)' त्य(त्रा:तः) घञ्। शण्डः पद्मशण्ड इति तालव्यादौ रक्षितेनोक्तः। शण्डमस्त्रिया(मिति सम्बन्धः॥

**करहाटः शिफाकन्दं**

करहाटद्वयं **शिफासहिते** प्रस्तावात् **पद्ममूले**।

"करहाटः शिफाकन्दे पद्मस्य कुसुमान्तरे"

इति रुद्रः। करान् हस्तान् दीपयतीति करहाटः। 'हट दीप्तौ'। णिच्। 'कर्मण्यण्' (३. २. १)। शिफासहितं कन्दं शिफाकन्दम्। शाकपार्थिवादिः।

"कन्दानि मूलसस्यानि विदुः कन्दांश्च सूरणान्"

इति धरणिः॥

**किञ्जल्कः केसरोऽस्त्रियाम्।**

किञ्जल्कद्वयं **केसरे**। के जले सरतीति केसरः। 'सृ गतौ'। पचाद्यच्। 'हलदन्तात्—' (६. ३. ९) इत्यादिना अलुक्।

"केसरो बकुले सिंहसटायां पुष्पपक्ष्मणि।
नागकेसरपुन्नागौ केसरौ परिकीर्तितौ॥"

इति दन्त्ये धरणिः। 'आन्दोलितकुसुमकेशरे केशरेणुमुषि' इति तु वासवदत्ता। तदा च के शीर्यत इति व्युत्पत्तिः॥

**संवर्तिका नवदलं**

संवर्तिकाद्वयम् **अभिनवे जटिकाकारे पद्मपत्रे**। 'वृतु वर्तने'। वृतः (क्तिन्(इः)। स्वार्थे कः। ततष्टाप्। 'संवर्तिः (सर(नव)पत्रिका' इति बोपालितः॥

**बीजकोषो वराटकः॥ ४२॥**

१. 'च्। शि' क. ख. पाठः. २. 'त्तायाम्। त', ३. 'दा के' ङ. छ. पाठः.
४. 'सु' क. ख. पाठः.

बीजकोषद्वयं पद्मस्थे वरड इति ख्याते। बीजकोषो बीजा(का?क)रः। एवं दीर्घकोषिकायामुक्तम्। वृणातेः 'अन्येभ्योऽपि दृश्यते' (उ० ४. १०६) इत्यौणादिकोऽटच्*। ततः स्वार्थे कः। वराटकः॥

**उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम्।**
**पातालभोगिनरकं वारि चैषां च सङ्गतम्॥ ४३॥**

उक्तं स्वर्व्योमदिक्कालधीत्यादियोजना। उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकं पातालभोगिनरकं वारि च, एषां स्वरादीनां सङ्गतं सम्बद्धं च देवादीति। तद्यथा---स्वर्गसङ्गतं देवादि, व्योमसङ्गतं मेघादि, दिक्सङ्गतं दिग्गजादि, कालसङ्गतम् उपरागादि, धीसङ्गतं विचारादि, शब्दसङ्गतम् उदात्तादि, नाट्यसङ्गतं श्रकुंसादि॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ

टीकासर्वस्वे वारिवर्गः

**प्रथमं काण्डं**

**समाप्तम्।**

१. 'श' क. ख. पाठः. २. 'षण्डव' क. ख. ग. छ. पाठः

विका०. टचादिराद्यत्वात् स्त्रीत्वेऽस्य आटच् वा अन्यथा नियम.।

Kurghimi Vraoa
Masulipatam

॥ श्रीः ॥

रचितं

# नामलिङ्गानुशासनं

क्षीरस्वामिप्रणीतया अमरकोशोद्धाटनाख्यया व्याख्यया
वन्द्यघटीयश्रीसर्वानन्दप्रणीतया टीकासर्वस्वाख्यया
व्याख्यया च समेतम् ।

## द्वितीयं काण्डम् ।

---

**वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।**
**नृब्रह्मक्षत्रविट्छूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥**

(क्षीरस्वामीयम्)

अथ द्वितीयकाण्डे वर्गान् सङ्गृह्णीते —

अङ्गैर्मृगादिभिः उपाङ्गैश्च खिलादिभिः सह वर्तमानैः पृथ्व्यादिभिः सम्पादितवर्गा इह वक्ष्यमाणे काण्डे वदितुमारब्धा उदिताः । 'आदिकर्मणि–'(३. ४. ७१), 'आशंसायां भूतवच्च' (३. ३. १३२) इति वा क्तः ॥

(टीकासर्वस्वम्)

'वर्गाः पृथ्वी'त्यादिसङ्ग्रहश्लोकः सुखग्रहणार्थः । इह भूकाण्डे पृथ्वीप्रभृतिभिः साङ्गोपाङ्गैरङ्गप्रत्यङ्गसहितैर्दशभिर्वर्गा उदिता वक्तुमाशंसिताः । 'आशंसायां भूतवच्च' (३. ३. १३२) इति भूतवद्भावात् क्तः । मृगादिशब्देन सिंह उच्यते । मृगानत्तुं शीलमस्येति णिनिः । तत्र भूमेरङ्गानि मृत्तिकादीनि । उपाङ्गान्यध्वादीनि ॥

भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः ॥ २ ॥

सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ ३ ॥

क्षीर०—भवत्यस्यां सर्वं भूः । रेफान्तमव्ययम् । यथा भूर्भुवः स्वः । रसाः सन्त्यस्यां, रस्यते वा रसा । विश्वं बिभर्ति विश्वम्भरा । 'संज्ञायां भृतॄ—' (३. २. ४६) खच् । क्षौति रूपं क्षोणी । 'टुक्षु शब्दे' । जिनाति सर्वं ज्या । इज्येति मूर्खव्याख्या । यच्छाश्वतः—'ज्या मौर्वी ज्या वसुन्धरे'ति । ज्योति निघण्टुः । कश्यपस्येयं काश्यपी । भार्गवेण जित्वास्मै दत्ता । क्षियन्ति तां क्षितिः । 'क्षि निवासे' । वसु धनं धत्ते वसुधा । उर्वी विस्तीर्णत्वात् । वसु धारयतीति वसुन्धरा । गोत्राः शैलाः सन्त्यस्यां गोत्रा । गाः त्रायते वा । कायति कूयते वा कुः । प्रथते, पृथुना चरिता वा पृथिवी । 'प्रथेः षिवन् सम्प्रसारणं च' (उ० १. १४९) इति षिवन् सम्प्रसारणं किच्च । पृथ्वीति । 'वोतो गुणवचनात्' (४. १. ४४) इति ङीप् । क्षमते भारं क्षमा । अवति प्रजाः अव्यते नृपैर्वा अवनिः । दैत्यमेदोयोगाद् मेदिनी । महती मही ।

"भूतधात्री रत्नगर्भा विपुला सागराम्बरा"

इति च रत्नवतीति च भागुरिः । क्ष्मा इला च नानार्थे ॥

टीका०—तत्र भूरादयः सप्तविंशतिर्भूमौ । भवन्त्यस्यामिति भूः । अधिकरणे सम्पदादित्वात् क्विप् । 'भुवः कित्' (उ० ४. ४६) इति मिः । भूमिः । न चलतीत्यचला । पचादिः । नास्त्यन्तोऽस्या इत्यनन्ता । रसाः अस्यां सन्तीति रसा । अर्शआद्यच्[1] । विश्वम्भरो विष्णावुक्तः । ततष्टाप् । स्थिरेति । 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' (उ० १. ५६) इति स्थिरो निपातितः । ततष्टाप् । धरतीति धरा । पचादिः । धरित्रीति[2] । 'धृञ् धारणे' । 'अशित्रादिभ्य

१. 'नावतारि' ख. पाठः. २. 'त्री ध्' ङ. छ. झ. पाठः.

इत्रोत्रौ' (उ० ४. १७४) इत्यत्र अश्यादिपाठाद् इत्रप्रत्ययः । पिप्पल्यादिङीष् । नगणिवद् धरणिः । 'टुक्षु शब्दे' । *'वहिश्रिश्रुक्षु—' (उ० ४. ५२) इत्यादिना निन्[1] । क्षोणिः । ङीषि क्षोणी च । ज्येति । 'ज्या वयोहानौ' । 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इत्युपसङ्ख्यानात् कः । कित्त्वाद् आकारलोपः । टाप् । काश्यपीति । 'तस्येदम्' (४. ३. १२०) इत्यण् । तथा च — 'Where?

"त्रिः[2]सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां ततः ।
दक्षिणामश्वमेधान्ते काश्यपायाददात् प्रभुः ॥"

निवसन्त्यस्यामिति क्षितिः । 'क्षि निवासगत्योः' । बाहुलकोऽधिकरणे क्तिन् । सर्वसहेति । 'पूःसर्वयोर्दारिसहोः' (३. २. ४१) इति खच् । वसु धनं, तद्योगाद् वसुमती । मतुप् । वसून्येव दधातीति वसुधा । 'आतोऽनुपसर्गे कः' (३. २. ३) । महत्त्वयोगादुर्वी पृथ्वी च । 'ऊर्णुञ् आच्छादने' । 'महति ह्रस्वश्च' (उ० १. ३२) इति महत्यर्थे गम्यमाने ऊर्णोतेः कुप्रत्ययः । (ण?णु)लोपः ह्रस्वश्च । उरु महत् । 'प्रथ प्रख्याने' । 'प्रथिम्रदि —' (उ० १. २८) इत्यादिना कुप्रत्ययः सम्प्रसारणं च । पृथु विस्तीर्णं, तत उभयत्र 'वोतो गुणवचनात्' (४. १. ४४) ङीष् । वसु धारयतीति वसुन्धरा । 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' (३. २. ४६) इति खच् । 'खचि ह्रस्वः' (६. ४. ९४) इत्युपधाह्रस्वत्वम् । गाः[3] त्रायत इति गोत्रा । 'त्रैङ् पालने' । वसुधावत् कः । कायतेर्बाहुलकात् कुप्रत्ययेन कुः । पृथिवीति । 'प्रथ प्रख्याने । 'प्रथेः षिवन् सम्प्रसारणं च' (उ० १. १५६) इति षिवन्प्रत्ययः । षित्त्वान्ङीप् । 'पृथिविशाचीविषूचिरि'ति ह्रस्वान्ते रामदासः । क्ष्मेति । क्षमेः पचाद्यच् । नैरुक्त उपधालोपो वैकल्पिकः । तेन क्षमेत्यपि । अवनिरिति । अवतेस्तरणिवदनिः । मधुकैटभयोर्मेदस्संयोगाद् मेदिनी । नैरुक्तस्ततो मत्वर्थीय इनिः । तेन —

१. 'षू' ङ. छ. झ. पाठः. २. 'त्रिस' ज. पाठः. ३. 'गां' क. ख. घ. ज. झ. पाठः.

* 'वहिश्रिश्रुयु' इति मुद्रितोणादिपाठः.

"मधुकैटभयोस्त्व(?) यन्मेदसा सम्परिप्लुता ।
तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभिः ॥"

महीति । 'मह पूजायाम्' । पचादिगौरादी । 'शुंपि च चुल्लिं महिपाल्लिवल्लीः' इति तु रामदासः ॥

**मृन्मृत्तिका**

**क्षीर०—मृद्यते मृत् । 'मृदस्तिकन्' (५. ४. ३७) स्वार्थे ॥**

**टीका०**—मृद्द्वयं **मृत्तिकायाम्** । 'मृद क्षोदे' सम्पदादिपाठात् कर्मणि क्विप् । साहचर्यात् स्त्रीत्वम् । मृत्तिकेति । 'मृदस्तिकन्' (५. ४. ३९) इति तिकन् ॥

**प्रशस्ता तु मृत्स्ना मृत्सा च मृत्तिका ।**

**क्षीर०**—'सस्नौ प्रशंसायाम्' (५. ४. ४०) ।

"कृष्णभूमः कृष्णमृत् स्यादुदग्भूम उदङ्मृदि ।
पाण्डुभूमः पाण्डुमृच्च कृष्णोदक्पाण्डुभूमिषु ॥
कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ॥"

**टीका०**—मृत्स्नाद्वयं **प्रशस्तमृत्तिकायाम्** । **'सस्नौ प्रशंसायाम्'** (५. ४. ४०) इति मृच्छब्दात् सस्नौ प्रत्ययौ भवतः ॥

**उर्वरा सर्वसस्याढ्या**

**क्षीर०—उर्वति क्षुधम्, उरु इयर्ति वा उर्वरा ॥**

**टीका०—सर्वसस्योत्पत्तिभूमिः अतिसारा उर्वरा** । उरुं महान्तं वृणातीत्युर्वरा । पृषोदरादिः ।

"उर्वरा सर्वसस्याढ्यवसुधायां क्षितावपि"

इति ह्रस्वोकारादावजयः ॥

**स्यादूषः क्षारमृत्तिका ॥ ४ ॥**

१. 'नव म' प. पाठः. २. 'वि' ङ. छ. ज. पाठः.

क्षीर० — 'ऊष रुजायाम्' ॥

टीका० — **क्षारमृत्तिकायाम्** ऊषद्वयम्। 'ऊष रुजायाम्'। दीर्घादिः। इगुपधलक्षणः कः। क्षारमृत्तिकेति कर्मधारयः ॥

**ऊषवानूषरा द्वावप्यन्यालङ्गा**

क्षीर० — 'ऊपसुषि—' (५. २. १०७) इति रः ॥

टीका० — ऊषवद्द्वयं **क्षारमृत्तिकायुक्तभूभागे**। ऊषवान् मत्वन्तः। 'झयः' (८. २. १०) इति वत्वम्। ऊषर इति। मत्वर्थे ऊषसुषिमुष्कमधो रः' (५. २. १०७) इति रप्रत्ययः। अन्यलिङ्गौ वाच्यलिङ्गौ। 'अम्बुदस्य परिहार्यमूषरम्' (स० १४. श्लो० ४६) इति माघः ॥

**स्थलं स्थली।**

क्षीर० — स्थलति स्थली अकृत्रिमा चेत्। 'जानपदकुण्ड—' (४. १. ४२) इति ङीष्। कृत्रिमा तु स्थला ॥

टीका० — स्थलद्वयं **जलशून्याकृत्रिमभूभागे**। 'स्थल स्थाने'। पचादिः। स्थलम्। स्थलीति। 'जानपदकुण्ड—' (४. १. ४२) इत्यादिना अकृत्रिमायां ङीष्। कृत्रिमायां तु स्थला ॥

**समानौ मरुधन्वानौ**

क्षीर० — म्रियन्ते तृपास्मिन्निति मरुः। दधतिधनति (?)[३] वा धन्वा ॥

टीका० — मरुद्वयं **निर्जले देशे**। म्रियतेः 'भृमृ—' (उ० १. ७) इत्यादिना उः। धन्वन्निति। धन्व इति सौत्रो धातुः। 'कनिन् युवृषितक्षिराजिधन्वद्युप्रतिदिवः' (उ० १. १६२) इति कनिन् ॥

**द्वे खिलाप्रहते समे ॥ ५ ॥**

१. 'यां लवणमृत्तिकायाम् ऊ' क. ख. ङ. छ. ज. झ. पाठः. २. 'मभा' ङ. छ. पाठः. ३. 'धनन्ति' इति ङ. पाठः.

‡ 'दधनति' इति पाठ्यं भाति।

त्रिषु

क्षीर० — खं शून्यं लाति खिलम् । न प्रहन्यते हलादिभिः अप्रहतम् । अकृष्टः क्षेत्रादिः ॥

टीका० — खिलद्वयमवटभूभागे । हलेन अलिखितमिति खिलम् । 'लिख अक्षरविन्यासे' । कर्मणि घञर्थे कः । पृषोदरादित्वाद् वर्णव्यत्यासः । हलेनैव न प्रहतम् अप्रहतम् । समे इति क्लीबनिर्देशः । अप्रहतं खिलमित्युक्तमिति नामानुशासने क्लीबकाण्डे पाठात् । मतभेदेन त्रिष्वित्युक्तम् ॥

**अथो जगती लोको विष्टपं भुवनं जगत् ।**

क्षीर०— 'वर्तमाने पृषद् —' (उ० २. ८५) इति साधुः । शतृवत्त्वाद् ङीप् । विशन्त्यस्मिन् विष्टपं विष्टपते । 'ष्टप स्तप प्रतीघाते' (?) ॥

टीका० — जगतीपञ्चकं भुवने । 'द्युतिगमिजुहोतीनां द्वे च' (वा० ३. २. १७८) इति क्विप् । 'गमः क्वौ' (६. ४. ४०) इत्यनुनासिकलोपः । ततो धातुसंज्ञायां शतरि जगत् । स्त्रियाम् 'उगितश्च' (४. १. ६) इति ङीप् । जगती । 'लोकृ दर्शने' । 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ् । लोकः । *'विटपविष्टपमण्टप —' (उ० ३. १४५) इत्यादिना औणादिकः पः । आदिवत्त्वं तुडागमश्च निपात्यते । रत्नकोशे तु 'विष्टपः पुमान्' इत्युक्तम् । भवन्त्यत्रेति भुवनम् । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ० २. ८२) इति बहुलवचनाद् भाषायामपि क्युन् ॥

**लोकोऽयं भारतं वर्षं**

क्षीर० — अयं जम्बूद्वीपनवमांशः । भरतस्य क्षत्रियस्येदं भारतं नाम वर्षं भूम्येकदेशः । वृष्यते सिच्यते वर्षम् । तथा च —

१. 'प' घ. ङ. छ. झ. पाठः.

* 'विटपपिष्टपविशिपोलपाः' इति मुद्रितोणादिपाठः

"हिमवान् हेमकूटश्च निषधो मेरुरन्तरे।
नीलः श्वेतश्च शृङ्गीवान् गन्धमादनमष्टमम्॥"

इति सीमावच्छिन्नान्यन्यानीलावृतादीन्यष्टौ वर्षाणि॥

टीका० — भुवो जम्बुद्वीपादिनवखण्डानि गिरिभिरवच्छिन्नानि वर्षाण्युच्यन्ते। तथा च विष्णुपुराणं —

"जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज!।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः॥
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम्॥
जम्बुद्वीपः समस्तानामेतेषां मध्यमास्थितः
तस्यापि मेरुर्मैत्रेय! मध्ये कनकपर्वतः॥
हिमवान् हेमकूटश्च निषधस्तस्य दक्षिणे।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः॥
भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम्।
हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विज!॥
रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम्।
उत्तराः कुरवश्चैव यथा वै भारतं तथा॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तम!।
इलावृतं तु तन्मध्ये सौवर्णो मेरुरुच्छ्रितः॥
मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम्।
इलावृतं महाभाग! चत्वारश्चात्र पर्वताः॥"

"मेरोः पूर्वेण भद्राश्वं केतुमालं च पश्चिमे"

इति। तत्रायं लोकः समुद्रस्योत्तरे कूले हिमालयस्य दक्षिणे भारत वर्षम्। भरतस्येदं भारतम्। 'तस्येदम्' (४. ३. १२०) इत्यण्। तथा च —

१. 'श्चेति स' क. ख. पाठः. २. 'त्रा' ख. पाठः.

"ततस्तु भारतं वर्षमेतल्लोकेषु गीयते ।
भरताय यतो दत्तं पित्रा प्रव्रजता वनम् ॥"
"लोकोऽयं भारतो वर्षो देवाजीवश्च देवलः ।"

इति पुंस्काण्डेऽमरमाला ।

"व्यासर्षिभाषिते ग्रन्थे जम्बूद्वीपे च भारतम्"

इति रुद्रः ॥

**शरावत्यास्तु योऽवधेः ॥ ६ ॥**

**देशः प्राग्दक्षिणः प्राच्यः**

क्षीर० — **शरावत्या नद्या मर्यादायाः प्राक् सहचरितो दक्षिणो देशः प्राच्यः ॥**

टीका०— एतस्मिंश्च भारते वर्षे शरावती नाम नदी ऐशान्या दिशः सकाशात् पश्चिमसमुद्रगामिनी वहति । तस्या अवधेर्यः प्राग्दक्षिणो देशः, स प्राच्यः ॥

**उदीच्यः पश्चिमोत्तरः ।**

क्षीर० — **शरावत्या अवधेः पश्चिमेन सहचरित उत्तरतो देश उदीच्यः । यदाह —**

**"प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥"**

टीका० — यश्च पश्चिमोत्तरः स उदीच्यः । प्राक्सहचरितो दक्षिणः प्राग्दक्षिणः । एवं पश्चिमोत्तरः । प्राच्योदीच्ययोः 'द्युप्रागवागुदक्प्रतीचो यत्' (४. २. १०१) इति यत् । 'अचः' (६. ४. १३८) इत्यञ्चतेरकारलोपः । 'चौ' (६. ३. १३८) इत्युपसर्गस्य दीर्घः । 'उद ईत्' (६. ४. १३९) इतीत्त्वेनोदीच्यः । शरावत्या इति । 'अन्यारादितरर्ते—' (२. ३. २९) इत्यादिना पञ्चमी । प्रागुदक्छब्दौ च दक्षिणपश्चिमयोरपि यथाक्रमं सामीप्यादुपचारे वर्तेते ॥

१. 'र' क. ख. ङ. ज. झ. पाठः. २. 'घर्त्वम् । उ' ङ. छ. पाठः.

**प्रत्यन्तो म्लेच्छदेशः स्याद्**

**क्षीर०— प्रतिगतोऽन्तं मुक्तावधिर्भूमिप्रदेशः प्रत्यन्तः ॥**

**टीका०**— भारतवर्षस्यान्तदेशः शिष्टाचाररहितः **कामरूपादिः म्लेच्छदेशः** । तथा च —

"चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
म्लेच्छदेशः स विज्ञेय आर्यावर्तस्ततः परम् ॥"

**मध्यदेशस्तु मध्यमः ॥ ७ ॥**

**क्षीर०— यन्मनुः—**

**"हिमवद्विन्ध्ययोरन्तर्यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥"**

**टीका०— मध्यो देशो** मध्यमाख्यः । 'मध्यान्मः' (४. ३. ८) इति मः । तथा च —

"हिमवद्विन्ध्ययोर्मध्ये यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः स उच्यते ॥"

इति मनुः ॥

**आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः ।**

**क्षीर०— आर्या आवर्तन्तेऽस्मिन् आर्यावर्तः । यन्मनुः—**

**"आ समुद्रात् तु वै पूर्वादा समुद्रात् तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥"**

**टीका०**— आर्यावर्तद्वयं **विन्ध्यहिमागयोर्मध्यदेशे** । आर्याः धार्मिकाः अत्र वर्तन्त इत्यार्यावर्तः । 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ् । 'अन्येषामपि —' (६. ३. १३७) इति दीर्घत्वम् । पुण्यभूमिरिति कर्मधारयः । 'पुंवत् कर्मधारये —' (६. ३. ४२) इति पुंवद्भावः । तदुक्तं मनुना —

१. 'लययो' क. ख. ङ. छ. पाठः. २. 'यादिना पुं' ङ. छ. पाठः.

"आ समुद्राच्च वै पूर्वादा समुद्राच्च पश्चिमात् ।
हिमवद्विन्ध्ययोर्मध्यमार्यावर्तं विदुर्बुधाः ॥"

इति ॥

**नावृज्जनपदः**

**क्षीर० — नियतं वर्तन्ते अस्मिन नीवृत् । 'नहिवृतिवृषि—' (६. ३. ११६) इति दीर्घः । जनानां पदं जनपदः । पुंस्त्वं लोकात् । जनैर्भास्यमानो राष्ट्राख्योऽयम् ॥**

टीका० — नीवृद्द्वयं **ग्रामसमूहे**, यस्य पाञ्चालादीनि विशेषनामानि । नियमेनावश्यमत्र वर्तन्ते जनाः इति नीवृत् । निपूर्वाद् वृतः 'अन्येभ्योऽपि दृश्यते' (३. २. १७८) इत्यपिशब्दादधिकरणे क्विप् । संपदादित्वाद् वाधिकरणे क्विप् । 'नहिवृतिवृषि—' (६. ३. ११६) इत्यादिना पूर्वपददीर्घः । साहचर्यात् पुंस्त्वम् । जनाः पद्यन्ते अत्रेति जनपदः । 'खनो घ च' (३. ३. १२५) इत्यधिकरणे घ(च ? :) । एतत् तु घित्करणसामर्थ्यादन्यत्रापि भवति । अधिकरणे घञर्थे कप्रत्ययो वा । पुंसि संज्ञायां घो वा ॥

**देशविषयौ तूपवर्तनम् ॥ ८ ॥**

**क्षीर० — दिश्यते देशः स्थानमात्रम् । विषिणोति[1] विषयः । 'उपवर्तन्ते अस्मिन् उपवर्तनमि'ति कात्यः । पञ्चकार्थानाहुः ॥**

टीका० — देशत्रयं **जनपदसमुदाये** । तथाहि मालवविषयः चोलविषय इति जनपदसमूह एव विषयशब्दप्रवृत्तिः । 'दिश अतिसर्जने' । 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ् । देशः । 'षिञ् बन्धने' । पचादिः । 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' (८. ३. ७०) इति षत्वम् । विषयः । उपवर्तनमिति । ल्युट् । अनुपूर्वः अनूपवर्तनम्* ॥

१. 'ये । मा' ज. पाठः.

† अत्र षत्वं चिन्त्यम् ।　* एवन्तु 'देशो विषयोऽनूपवर्तनम्' इति मूलं पाठ्यम् ।

**त्रिष्वा गोष्ठाद्**

क्षीर० — गोष्ठसंशब्दनात् प्राग् वाच्यलिङ्गाः॥

टीका० — इतः प्रभृति गोष्ठपर्यन्तं विशेषविधिं त्यक्त्वा त्रिषु॥

**नडप्राये नड्वान् नड्वल इत्यपि।**

क्षीर० — 'तदस्मिन्नस्तीति देशे तन्नाम्नि' (४. २. ६७)। 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४. २. ८७)। 'नडशादाद् वलच्' (४. २. ८८)॥

टीका० — नड्वद्द्वयं नडबहुले देशे। प्रायशब्दो बाहुल्ये। नडोऽस्त्यस्मिन्नित्यर्थे 'कुमुदनडवेतसेभ्यो ड्मतुप्' (४. २. ८७)। 'झयः' (८. २. १०) इति वत्वम्। 'नडशादाद् वलच्' (४. २. ८८) नड्वलः। स्त्रियां नड्वली नड्वला च॥

**कुमुद्वान् कुमुदप्राये वेतस्वान् बहुवेतसे॥ ९॥**

**शाद्वलः शादहरिते**

क्षीर० — शादेन शष्पेण नीलः। यच्छाश्वतः — 'शष्पकर्दमयोः शादः'। शीयन्ते अस्मिन् शादः। शादोऽस्त्यस्मिन् शाद्वलः देशः। वलच्। यथा—

"रूपमेव तवाचष्टे भगवन्! वीतरागताम्।
न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाद्वलः॥"

शाद्वलं दूर्वेति च नीलत्वोपचारात्॥

टीका० — कुमुदबहुले कुमुद्वान्। मत्वन्तः। वेतसबहुले देशे वेतस्वान्। पूर्ववद् मतुप्। टिलोपः। 'मादुपधायाश्च —' (८. २. ९) इति वत्वम्। शादो नवतृणं, तेन हरिते देशे शाद्वलः। नड्वलवद् वलच्। 'शादो जम्बालशष्पयोः'। 'पङ्कवाचिनः शादशब्दाद् वलज् न भवति, अनभिधानात्। शष्पवाचिन एव भवति' इति भागवृत्तिः॥

**सजम्बाले तु पङ्किलः।**

क्षीर० — पिच्छादित्वाद् इलच् ॥

टीका० — सजम्बाले सपङ्के पङ्किलः। पिच्छादित्वाद् मत्वर्थे इलच्॥

**जलप्रायमनूपं स्यात्**

क्षीर० — अनुगताः आपोऽस्मिन् अनुगतमपो वा अनूपम्। 'ऊदनोर्देशे' (६. ३. ९८) ॥

टीका० — जलप्राये जलबहुले देशे अनूपम्। अनुगताः आपः अस्मिन् इत्यनूपम्। 'ऊदनोर्देशे' (६. ३. ९८) इत्यूकारः। 'ऋक्पूरब्धूःपथामानक्षे' (५. ४. ७४) इति समासान्तोऽच्। जलप्रायमिति नामेति केचित्॥

**पुंसि कच्छस्तथाविधः ॥ १० ॥**

क्षीर० — कषन्त्यापो यं स कच्छः। तथाविधः अनूपप्रायः। कच्छमिति माला॥

टीका० — सिन्धूनां सरसां च प्रान्तभागे कच्छः। कं पानीयं (छा ? छय)तीति कच्छः। 'छो छेदने'। 'आतोऽनुपसर्गे कः' (३. २. ३)। तथाविध इति। यथाविधः अनूपो जलप्रायः तथाविधोऽयमिति। पुंसीति 'त्रिष्वा गोष्ठादि'त्यस्य बाधकम्। 'पुंस्येवान्धुः प्रहिः' इत्येवकारः क्वचिल्लिङ्गव्यभिचारार्थः। तेन क्लीबेऽपि। तथा चामरमाला —

"कच्छं क्लीबेऽनूपदेशे नाकुर्वल्मीक इत्यपि" ॥

**स्त्री शर्करा शर्करिलः शार्करः शर्करावति।**

क्षीर० — 'देशे लुबिलचौ च' (५. २. १०५)। 'सिकताशर्कराभ्यां च' (५. २. १०४) इत्यण्मतुपावत्र सार्वत्रिकौ। तदाह—

टीका० — शर्कराचतुष्कं शर्करावति देशे। 'शॄ हिंसायाम्'। *'शिरः करन्' (उ० ४. ३) शर्करा घटादेरणीयान् भागः। ताः सन्त्यस्मिन् देश इत्यर्थे

१. 'तुबर्ये' ङ. छ. पाठः.

*'श्रः करन्' इति मुद्रितोणादिपाठः।

अण् । सिकताशर्कराभ्याम् इत्यनुवृत्तौ देशे लुबिलचौ च' (५. २. १०५) इत्यनेन देशे गम्यमाने लुप् इलच्प्रत्ययः । अतो यथाक्रमं शर्कराशर्करिलौ । चकाराद्णमतुपौ च । 'तेन शार्करशर्करावन्तौ । तत्र विशेषानुपादानाद् मतुबादीनामन्यतमस्य लुप्पक्षे 'लुपि युक्तवद् व्यक्तिवचने' (१. २. ५१) इति प्रकृतिलिङ्गं स्त्रीत्वम् ॥

**देश एवादिमौ**

**क्षीर०—'मध्यान्मः' (४. ३. ८) । 'आदे'रित्युपसङ्ख्यानादादिमौ शर्कराशर्करिलौ देशे नियमात् । शर्करात्राश्मप्राया मृत् ॥**

टीका०—तत्र चतुर्णां मध्ये आदिमौ शर्कराशर्करिलौ शब्दौ देश एव वाच्ये भवतः, देश एव लुबिलचोर्विधानात् । शार्करशर्करावन्तौ च शब्दौ देशे चान्यत्र च । तथा च शार्करो देशः, शार्कर ओदन इत्युपपन्नं भवति, अण्मतुपोः सामान्येन विधानात् । आदिमाविति शैषिकेऽर्थे 'आदेश्चेति वक्तव्यम्' इति मः ॥

**एवमुन्नेयाः सिकतावति ॥ ११ ॥**

**क्षीर०—देशे सिकतासिकतिलौ सैकतः सिकतावांश्च ॥**

टीका०—एवमनेन प्रकारेण सिकतावति देशे स्त्री सिकता सिकतिलः सैकतः सिकतावानित्युन्नेयाः । तत्र पूर्ववदेव केवल एव देशे वाच्ये आदिमौ द्वौ शब्दौ । इतरौ देशे चादेशे चेति ॥

**देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः ।**
**स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥**

**क्षीर०—नद्यम्बुजातसस्यवर्धितो नदीमातृकः । वर्षजव्रीहिवर्धितस्तु देशो देवमातृकः । देवो माता अस्येति ॥**

**टीका०—नद्यम्बुसम्पन्नव्रीहिपालिते** देशे नदीमातृकः । **वृष्ट्यम्बुसम्पन्नव्रीहिपालिते** देशे देवमातृकः । मातृशब्दोऽत्रोपचारात् । उभयत्रापि बहुव्रीहौ 'नद्यृतश्च' (५. ४. १५३) इति कप् नित्यः ॥

**सुराज्ञि देशे राजन्वान्**

क्षीर०— बहुव्रीहौ सुराज्ञीति समासान्ताभावः। 'राजन्वान सौराज्ये' (८.२.१४) इति साधुः। देशो विषयोपलक्षणम्। यथा— राजन्वान् लोक इत्युच्यते ॥

टीका०— प्रजापालनपरायणराजयुक्ते सुराज्ञि देशे राजन्वान्। सुराज्ञीति बहुव्रीहौ टचोऽभावः, 'न पूजनात्' (५.४.६९) इति निषेधात्। 'राजन्वान् सौराज्ये' (८.२.१४) इति मतुपो वत्वं नुगागमश्च निपात्यते ॥

**स्यात् ततोऽन्यत्र राजवान्।**

क्षीर०— राजमात्रयुक्ते देशे ॥

टीका०— नृपतियुक्तमात्रे[1] देशे राजवान् ॥

**गोष्ठं गोस्थानकं**

क्षीर०— गावस्तिष्ठन्त्यत्र गोष्ठम्। 'अम्बाम्बगोभूमि—' (८.३.९७) इति षत्वम् ॥

टीका०— गोष्ठद्वयं गोष्ठे। गावस्तिष्ठन्त्यस्मिन् इति गोष्ठम्। 'घञर्थे कविधानम्' (वा० ३.३.५८) इति कः। 'अम्बाम्बगोभूमि—' (८.३.९७) इत्यादिना षत्वम्। गोस्थानकमिति। अधिकरणे ल्युट्। 'कृद्योगा च षष्ठी समस्यत' इति समासा(न्तः? त् कः) ॥

**तत् तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥**

क्षीर०— यत्र गावः प्रागासन्। 'गोष्ठात् खञ् भूतपूर्वे' (५.२.१८) ॥

टीका०— तदेव गोष्ठं भूतपूर्वं पूर्वस्मिन् काले भूतं गौष्ठीनम्। 'गोष्ठात् खञ् भूतपूर्वे' (५.२.१८) इति खञ् ईनादेशः ॥

१. 'त्र' ख. पाठः.

**पर्यन्तभूः परिसरः**

क्षीर०—परितः सरन्ति अस्मिन इति परिसरः। ग्रामादेः परिच्छेदभूः॥

टीका०—पर्वतनगरादेः पर्यन्तभूमिः उपान्तभूमिः परिसरः। परिसरन्त्यत्रेत्यर्थे सर्तेरधिकरणे 'पुंसि संज्ञायां घः प्रायेण' (३. ३. ११८) इति घः॥

**सेतुरालौ स्त्रियां पुमान्।**

क्षीर०—सिन्वन्ति बध्नन्ति तं सेतुः पुलिङ्गः। आलीयते अम्भः अत्र आलिः स्त्रीलिङ्गः। सस्यार्थजलधा(रि? र)णोऽयम्। सङ्क्रमस्तु तरणार्थः। यन्माला—'सङ्क्रमो दुर्गसञ्चरः'॥

टीका०—सेतुद्वयमालौ। स्त्रीलिङ्गायामालौ सेतुः पुमानिति व्याख्या। सेतुरिति। 'षिञ् बन्धने'। 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' (उ० १. ७२)। अर्तेराङ्पूर्वाद् अच इः। रलयोरेकत्वस्मरणम्। आलिः॥

**वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्॥ १४॥**

क्षीर०—वामं लूयते वामैर्वा वामलूरः। न अकति नाकुः। वलन्ते प्राणिनः अत्र वल्मीकम्॥

टीका०—वामलूरत्रयमुपदीकास्तूपे। नाकुरिति। 'णमु प्रह्वत्वे शब्दे'। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ० १. १८) इति उप्रत्ययो नाक्यादेशश्च। इकार उच्चारणार्थः। वल्मीकमिति। 'वल वल्ल धारणे'। 'अलीकादयश्च' (उ० ४. २५) इतीकन्मुडागमौ।

"वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य" (पू० मे० श्लो० ५) इति कालिदासः।

"नद्यां कूपतटे तरौ च विवरे शैले चितौ वल्मिकः"
इति प्राणेश्वरः।

"वल्मीके वाल्मिकः प्रोक्तो वाल्मीकिरपि वाल्मिकिः"
इति तारपालः। तदा च मुनौ 'तस्येदम्' (४. ३. १२०) इत्यण् 'अत इञ्' (४. १. ९४) च।

**अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।**
**सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥**

क्षीर० अयन्ते वर्तन्ते मार्गन्ति अदन्ति पतन्ति पन्थन्ति वा पद्यन्ते सरन्ति चानेनेति वाक्यानि । पद्भ्यां हन्यते पद्धतिः । 'हिमकाषिहतिषु च' (६. ३. ५४) इति पत् । 'पदमास्मिन दृश्यम्' (४. ४. ८७) इति यति पद्या । 'पद्यत्यतदर्थे' (६. ३. ५३) । एकः पादः अस्याम् एकपदी । कुम्भपद्यादौ साधुः ॥

टीका०— अयनद्वादशकं वर्त्मनि । यन्त्यनेनेत्ययनम् । करणे ल्युट् । 'वृतु वर्तने' । 'भूतेऽपि दृश्यन्ते' (३. ३. २) इति मनिन् । वर्त्म । 'मार्ग अन्वेषणे' । कर्मणि घञ् । मार्गः । अध्वेति । 'अद भक्षणे' । 'शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्' (उ० ४. ११५) इति वर्तमाने 'अदेर्ध च' (उ० ४. ११७) इति क्वनिप् धकारश्चान्तादेशः । 'प(तेः स्थश्च?तः स्थ च)' (उ० ४. १२) इति इनिः (ख?थ)कारश्चान्तादेशः । 'पथिमथि—' (७. १. ८५) इत्यादिना आकारः । 'थो न्थः' (७. १. ८७) इति न्थः । पन्थाः । पदमस्यां विद्यते इति पदवी । वप्रकरणे *'अन्यत्रापि दृश्यते' इति वः । गौरादिङीष् । सर्तेः करणे क्तिन् । सृतिः । सर्तेरेव धरणिवत् सरणिः । 'सरणिः श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । पादाभ्यां हन्यत इति पद्धतिः । कर्मणि क्तिन् । 'हिमकाषिहतिषु च' (६. ३.५४) इति पादस्य पद्भावः । बाह्वादिपाठाद् ङीषि पद्धती च । नृणां खुररहितत्वात् पादाय हिता पद्या । हितार्थे 'शरीरावयवाद् यत्' (५. १. ६) । 'पद्यत्यतदर्थे' (६. ३.५३) इति पद्भावः । 'वृतेश्च' (उ० २. १०६) इति (इ?अ)निः । 'कृदिकारात्' (ग०४. १. ४५) इत्यादिना वा ङीप् । वर्तनी । एकः एकाकी असहितः पादः अस्यां अस्या वा इत्येकपदी । 'कुम्भपदीषु च' (५.४.१३९) इति पादस्यांकारलोपः । 'पादोऽन्यतरस्याम्' (४. १. ८) इति ङीब्विकल्पे प्राप्ते 'कुम्भपदीषु च' इति नित्यं ङीब् निपात्यते । 'पादः पत्' (६. ४. १३०) इति पद्भावः ॥

१. 'स्याद्याका' घ. च. पाठः.

* 'वप्रकरणे अन्येभ्योऽपि दृश्यते' इत्येव मुद्रितपुस्तकेषु दृश्यते

**अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि।**

क्षीर०—'न पूजनात्' (५.४.६९) इत्यत्र स्वतिग्रहणाद् 'ऋक्पूरब्धूः—' (५.४.७४) इति समासान्तो नास्ति। सन् पन्थाः सत्पथः। समासान्तोऽकारः॥

टीका०—*अतिपन्थास्त्रयमर्चिते प्रशस्ये वर्त्मनि। स्वती पूजादौ। प्रशस्यः पन्थाः अतिपन्थाः, सुपन्थाः। कुगतिसमासः। 'न पूजनात्' (५. ४. ६९) इति निषेधाद् 'ऋक्पूः—' (५. ४. ७४) इत्यादिना समासान्तो न भवति। संश्चासौ पन्थाश्चेति सत्पथः॥

**व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः॥ १६॥**

क्षीर०—विरुद्धः अध्वा व्यध्वः। दुष्टोऽध्वा दुरध्वः। 'उपसर्गादध्वनः' (५.४.८५) इत्यच्। विरुद्धः पन्थाः विपथः। कुत्सितोऽध्वा पन्थाश्चेति। 'कोः कत् तत्पुरुषेऽचि' (६.३.१०१), 'का पथ्यक्षयोः' (६.३.१०४)। विपथं कापथं च क्लीबे आह। यद्वामनः—'संख्याव्ययपूर्वकश्च पथः'॥

टीका०—व्यध्वपञ्चकं निन्दितवर्त्मनि। विरुद्धोऽध्वा व्यध्वः। एवं दुरध्वः। कुगतिसमासः। 'उपसर्गादध्वनः' (५. ४. ८५) इति समासान्तोऽच्। 'नस्तद्धिते' (६. ४. १४४) इति टिलोपः। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२. ४. २६) इति पुंस्त्वम्। विरुद्धः पन्थाः विपथम्। 'पथः सङ्ख्याव्ययादेः' (वा० २. ४. ३०) इति नपुंसकत्वम्। 'वाटः पथश्च माथश्चे'ति अदन्तोऽपि पथशब्दस्त्रिकाण्डशेषे पठ्यते। तदा च समासे पुल्लिँङ्गपाठोऽपि युक्तः। नपुंसकविधौ समासान्तपथशब्दग्रहणात्। तथा च रभसः—

"सत्पथस्तु सुपन्थाः स्याद् व्यध्वो विपथकापथौ।"

कुत्सितोऽध्वा कदध्वा। नान्तः। 'कोः कत् तत्पुरुषेऽचि' (६. ३. १०१) इति कद्भावः। कुत्सितः पन्थाः कापथः। पूर्ववदच् समासान्तः। 'का पथ्यक्षयोः' (६. ३. १०४) इति नित्यं कोः काभावः। लिङ्गानुशासने वामनेन कापथं क्लीबमुक्तम्। अदन्तपथशब्देन कुपथश्च साधुः॥

---

* 'अयनद्वादशकं' 'व्यध्वपञ्चकम्' इत्यादिवद् 'अतिपथित्रयम्' इति नोक्तम्।

**अपन्थास्त्वपथं**

**क्षीर०—'पथो विभाषा' (५.४.७२) इत्यच्। अपथं नपुंसकम्॥**

टीका०—अपथिद्वयममार्गे। अपथमिति। 'पथो विभाषा' (५.४.७२) इति पक्षेऽकारः समासान्तः। 'अपथं नपुंसकम्' (२.४.३०) इति नपुंसकत्वम्॥

**तुल्य शृङ्गाटकचतुष्पथ।**

**क्षीर०—शृङ्गैरटन्त्यस्मिन् शृङ्गाटकम्। संस्थानं चत्वरं च॥**

टीका०—शृङ्गाटकद्वयं चतुष्पथे। चतुर्णां पथां समाहारः चतुष्पथम्। 'पथः सङ्ख्याव्ययादेः' (वा० २. ४. ३०) इति नपुंसकत्वम्। 'इदुदुपधस्य चाप्रत्ययस्य' (८. ३. ४१) इति षत्वम्॥

**प्रान्तरं दूरशून्योऽध्वा**

**क्षीर०—प्रगता अन्तरे तस्मात् प्रान्तरं दूरशून्यो मार्गः॥**

टीका०—दूरशून्यः पोलवाट[1] इति यत्र प्रसिद्धिः, तत्र प्रान्तरम्। प्रकृष्टमन्तरमवकाशस्तस्येति प्रान्तरम्। 'प्रादिभ्यो धातुजस्य—' (वा० २. २. २४) इति बहुव्रीहिः॥

**कान्तारं वर्त्म दुर्गमम्॥ १७॥**

**क्षीर०—कस्यांभसोऽन्तमृच्छति कान्तारम्। कान्तारप्रान्तरे एकार्थे प्राहुः॥**

टीका०—चोरकण्टकादिना दुर्गमं वर्त्म कान्तारम्[2]। कांश्चिद् न तारयतीति कान्तारम्। पृषोदरादिः। अनेकार्थे पुन्नपुंसकत्वं वक्ष्यति॥

**गव्यूतिः स्त्री क्रोशयुगं**

**क्षीर०—'गोर्यूतौ छन्दोध्वपरिमाणयोः (वा० ६. १. ७९) इत्यवादेशः॥**

१. 'चोमृवा' ह. छ. पाठः. २. 'रम। पृ' ज. झ. पठः.

टीका०—क्रोशद्वये गव्यूतिः।

"चतुष्काधिकविंशत्यङ्गुलैर्हस्तककल्पना।
सहस्रैरष्टभिः ख्यातं हस्तकैः क्रोशनामकम्॥"

गव्यूतिरिति। 'यु मिश्रणे।' 'ऊतियूतिजूतिसाति—' (३. ३. ९७) इत्यादिना क्तिन् दीर्घत्वं च निपात्यते। गोर्यूतिः गव्यूतिरिति षष्ठीसमासः। 'गोर्यूतौ छन्दसि' (वा० ६. १. ७९) इत्यनुवर्तमाने 'अध्वपरिमाणे च' (वा० ६. १. ७९) इति वक्तव्येन भाषायामपि ओकारस्यावादेशः।

"द्वाभ्यां धनुःसहस्राभ्यां गव्यूतिः पुंसि भाषितः"

इति शब्दार्णवः।

"गव्यूतं स्त्रीति (?) गव्यूतिः गोरुतं गोमतं च तत्"

इत्यन्यः॥

**नल्वः किष्कुचतुश्शतम्।**

क्षीर०—'णल गन्धे'। किष्कुर्हस्तः। 'तेषां चतुश्शती नल्वमि'ति माला। कात्यः—'नल्वं विंशं हस्तशतामि'त्याह॥

टीका०—किष्कुः मूर्धन्यषः हस्तवाची। तच्चतुश्शतेन नल्वः। 'णल बन्धने'। 'इण्शीभ्यां वन्' (उ० १. १५८) इति बाहुलको वन्॥

**घण्टापथः संसरणं**

क्षीर०—घण्टोपलक्षितानां हस्तिनां पन्थाः घण्टापथः। चाणक्योक्तोऽष्टदण्डः। सम्यक् सरन्त्यनेनेति संसरणम्। यद् भुग्नः (?)—

"बुधैः संसरणं वर्त्म गजादीनामसङ्कुलम्।
पुरोपनिष्करश्चोक्तम्"॥

१. 'ल' क. ख. घ. ज. झ. पाठः. २. 'भी' क. ख. घ. च. ज. झ. पाठः

टीका० — घण्टापथद्वयं ग्रामादौ प्रधानमार्गे। दशधन्वन्तरो राजमार्गः घण्टापथः। संहताः सरन्त्यनेनेति संसरणम्। सर्तेः करणे ल्युट्॥

**तत् पुरस्योपनिष्करम्।**

क्षीर० — तत् संसरणं, पुरं राजधानी, तस्या उपनिष्कराख्यम्। उपनिष्कीर्यते सैन्यमिति॥

इति भूवर्गः।*

टीका० — घण्टापथ एव पुरस्य दुर्गपुरस्य उपनिष्करम्। मूर्धन्यवत्। पारस्करादित्वात् सुट्॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे

भूवर्गः।

## अथ पुरवर्गः।

**पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्।
स्थानीयं निगमः**

क्षीर० — पक्षे पुरं नगरं च वाशब्दात् पत्तनसाहचर्यात् क्लीबे। पूर्यते पूः। नगाः सन्त्यस्य नगरम्। 'नगपांसुपाण्डुभ्यो रः' (वा० ५. २. १०७)। पतन्त्यस्मिन् पत्तनम्। पुटा भाण्डवसनानि भिद्यन्ते अस्मिन पुटभेदनम्। तिष्ठन्त्यस्मिन् नित्यं शतग्रामीमध्ये स्थानीयम्। नियतं गच्छन्त्यस्मिन् निगमः। 'गोचरसञ्चर—' (३. ३. ११९) इति साधुः। नानार्थेऽधिष्ठानदुर्गं कोट्टो[1] राजधानी च॥

१. 'पो' ख. पाठः.

* 'भूवर्गः' इत्यतः प्राग्
"द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी।
दिवःपृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः॥"
इति श्लोकः पठितो, न तु व्याख्यातः।

टीका० — पूःसप्तकं नगरे । तथा च नाममाला —

"पुटभेदनं पुरं स्यात् स्थानीयं पूः पुरी नगरी"

अन्ये पुनः पूरादित्रयं पुरे, पत्तनद्वयं पत्तने, स्थानीयद्वयं स्थानीय इति मन्यन्ते। तथा च रभसः—

"पूः स्त्री न पुंसि नगरी खपुरं नृद्रसं(?) पुरम् ।
हरिश्चन्द्रपुरं शौभं पत्तनं पुटभेदनम् ॥"

इति । तत्राष्टशतग्रामीयव्यवहारस्थानं तन्मध्यवर्ति नगरम् । राजधानिकान्वितं[1] पत्तनम् । प्राकारादिना दुर्गमं[2] स्थानीयम् । पालयति परचक्रादिति पूः । रेफान्ता । 'पॄ पालनपूरणयोः' । 'अन्येभ्योऽपि —' (३. २. १७८) इति क्विप् । 'उदोष्ठ्यपूर्वस्य' (७. १. १०२) इत्युत्वम् । 'र्वोरुपधायाः —' (८. २. ७६) इति दीर्घः । पुरीति । 'पुर अग्रगमने' । इगुपधलक्षणो वा घञर्थे[3] कविधानाद् वा कः । गौरादिङीष् । नगाः प्रासादादयोऽत्र सन्तीति नगरी । नगशब्दाद् 'नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्' (वा० ५. २. १०७) इति रः । गौरादित्वात् पक्षे ङीप् । पुरीनगर्यौ वा स्त्रियौ । 'कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च' (उ० ४. १४४) इति इप्रत्यये कित्त्वे च पुरिः ह्रस्वान्तापि । पक्षे पत्तनसाहचर्यात् क्लीबे । 'वीपतिभ्यां तनन्' (उ० ३ १५१) । पत्तनम् । पण्यानां[4] पुटाः पुटिकाः भिद्यन्ते अत्रेति पुटभेदनम् । अकुतोभयत्वात् स्थानाय वासाय हितं स्थानीयम् । 'तस्मै हितम्' (५. १. ५) इति छः । निगमः गोचरसञ्चरादौ घप्रत्ययेन निपातितः ॥

**अन्यत् तु यन्मूलनगरात् पुरम् ॥ १ ॥**

**तच्छाखानगर**

**क्षीर० — मूलनगरं राजधानी । ततोऽन्यत् समुदायस्थानम् । शाखेत्युपाङ्गोपलक्षणम् ।**

**"स्यात् साकेतमयोध्यायां विदेहा मिथिलापुरी ।**
**महोदया कन्यकुब्जा कन्याकुब्जं महोदयम् ॥**

---

१. 'जाधिका' क. ख. पाठः. २. 'श्चि' घ. च. पाठः. ३. 'र्गे नगरं स्था', ४. 'ण्य वा' घ. ङ. च. छ. ज. पाठः. ५. 'पु' घ. च. ज. झ. पाठः.

काशी वाराणस्यवन्ती विशाला चोज्जयिन्यपि ।
प्राग्ज्योतिषं कामरूपं द्वारका द्वारवत्यपि ॥"

इति वक्तव्यम् ॥

टीका० — मूलनगरे असम्मातृजनौघस्य सरिदङ्के सरोङ्के वा कल्पितं पुरं (यत्) तद् मूलनगरस्य तरुस्थानीयस्य शाखाप्रायत्वाच्छाखानगरम् ॥

**वेशो वेश्याजनसमाश्रयः ।**

क्षीर० — विशन्त्यस्मिन् कामुकाः वेशः ॥

टीका० — वेश्याजनसमाश्रये स्थाने वेशः । नेपथ्यपर्याये शकारो निरूप्यः ॥

**आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ २ ॥**

क्षीर० — आपणन्ते अस्मिन् इत्यापणः । 'गोचरसञ्चर'— (३. ३. ११९) इति साधुः । निषीदन्त्यस्यां निषद्या । 'संज्ञायां समज—' (३. ३. ९९) इति क्यप् । विपण्यते अस्यां विपणिः । वणिग्वीथी । आद्यो वणिक्स्थाने, अन्त्यो हट्टवर्तन्यामित्याहुः । यच्छाश्वतः—

"आपणिः पण्यवीथी च द्वयं विपणिसंज्ञकम्" ॥

टीका० — आपणचतुष्कं पण्यशालायाम् ।

"आवेशनं शिल्पशाला वाजिशाला तु मन्दुरा ।
पण्यविक्रयशाला स्यादापणो विपणिस्तथा ॥"

इति हलायुधः ।

"फलकं फलमथ चर्मापणं निषद्यां वणिक्पदं विपणिम्"

इति पादेन नामकथनेन नाममालायां संवदन्तोऽपि केचिद् आपणादिद्वयं हट्टमण्डपे विपण्यादिद्वयं पोट्टलीआ[2] (?) वीथ्यां मन्यन्ते । तथा च रत्नकोषे पादनामकथने

"आपणोऽथ निषद्या स्याद् विपणिः पण्यवीथिका"

१. 'त' क. ख ङ छ. ज. पाठः. २. 'पा' घ., 'पोट्टली' ख. ङ. छ. पाठः.

"पर्यापतत्क्रयिकलोकमगण्यपण्य-
पूर्णापणं विपणिनो विपणिं विभेजुः" (स० ५. श्लो० २४)

इत्यत्र माघश्लोके वल्लभेन आपणमावारिका विपणिर्हट्ट इति व्याख्यातम्। अरुणेन तु 'विपणिसरणिवाणिश्रेणिनिश्रेणयश्च' इति स्त्रीत्वमुक्तम्। विपणेरनुशा-(स्याःसनाद)स्मादेव माघप्रयोगात् पुंस्त्वं व्युत्पादितम्। एत्य पणाय(न्ते?न्ति) व्यवहरन्त्यस्मिन्नित्यापणः। गोचरसञ्चरादिसूत्रे निपातितः। निषीदन्त्यस्यामिति निषद्या। 'संज्ञायां समजनिषद—' (३. ३. ९९) इत्यादिना क्यप्[२]। 'सदिरप्रतेः'(८. ३. ६६)इति षत्वम्। विपणिरिति। †'इन्' इति इन् औणादिकः। 'कृदिकारात्—' (ग० ४. १. ४५) इति ङीषि विपणी[३] च॥

**रथ्या प्रतोली विशिखा**

**क्षीर० — रथं वहति रथ्या। 'तद् वहति रथ —'(४. ४. ७६) इति यत्। प्रतोल्यते प्रतोली। विगता शिखा मुण्डितेन समत्वाद्, विशीयते जनसम्मर्देन वा विशिखा। पञ्चैकार्थानाहुः। यत् कौटिल्यः— "विशिखायां सौवर्णिकप्रचारः"॥**

**टीका०** — रथ्यात्रयं **ग्राममार्गे**। लँाच्छ इति यावत्। रथं वहतीति रथ्या। 'तद् वहति रथयुगप्रासङ्गम्' (४. ४. ७६) इति यत्। प्रतोलीति। 'तुल उन्माने'। चुरादिः पचादिः गौरादिश्च। विशिखेति। 'शीङो ह्रस्वश्च' (उ० ५. २४) इति खन्। प्रादिसमासः। केचिद् दुर्गनगरद्वारे अट्टप्रयोजनाश्रयो यः क्रियते तत्रेति। चाणक्ये तु रथ्याप्रतोल्योर्भेदः॥

**स्याच्चयो वप्रमस्त्रियाम्।**

१. 'ति मा' ङ. छ. पाठः. २. 'पि' ज. पाठः. ३. 'णीति च' ज पाठः. ४. 'मारश इ' घ. पाठः. ५. 'ङः किद्ध्रस्व' क. ख. घ. ङ. च. छ. झ. पाठः. ६. 'चा' ज. पाठः. ७. 'ष्ट्र' ङ. छ. पाठः. ८. 'द्व' ज. पाठः.

† 'सूत्रमिदं मुद्रितोणादौ न दृश्यते।

**क्षीर०— चीयते चयः। (प्रा)काराधारः। उप्यते अस्मिन् वप्रः॥**

टीका० — चयद्वयं दुर्गनगरे परिखोद्धृतमृत्तिकया यः स्तूपः क्रियते, तत्र। तथा चार्थशास्त्रं— "परिखोद्धृतया मृत्तिकया वप्रं कारयेत्, तस्योपरि प्राकारम्" इति।

"प्राकारमूलबद्धश्च समूहश्च चयो मतः"

इत्यनेकार्थः। चिनोतेरधिकरणे 'पुंसि संज्ञायां घः—' (३. ३. ११८)। चयः। वपतेः 'वृधिवपिभ्यां रन्' (उ० २. ३०)। वप्रः॥

**प्राकारो वरणः सालः**

**क्षीर०— प्रक्रियते प्राकारः। 'सादकारयोः कृत्रिमे' इति दीर्घः। वृणोति वरणः। स्यति पर्यन्तं करोति सालः॥**

टीका० —प्राकारत्रयं वप्रस्योपरि इष्टकादिरचिते वेष्टने पंगा इति ख्याते। प्रपूर्वात् कृञः कर्मणि घञ्। 'कारसादयोः कृत्रिमे दीर्घ इत्युपसङ्ख्यानम्' इति नित्यं दीर्घः। प्राकारः। वृणोतेः करणे ल्युट्। वरणः। 'सल गतौ'। कर्मणि घञ्। सालः।

"सालः सर्जतरौ वृक्षे प्राकारेऽपि प्रयुज्यते"

इति दन्त्यादावजयः॥

**प्राचीनं प्रान्ततो वृतिः॥ ३॥**

**क्षीर०— प्रागेव प्राचीनम्। 'अञ्चेरदिक् स्त्रियाम्' (५. ४. ८) इति खः। प्राचीरमित्येके। व्रियते अनया वृतिः। वद्धयो(?)वाटिप्रवेष्टकोऽपि॥**

टीका० — दुर्गनगरादेर्वेणुवेत्रमयी वेष्टनिका प्राचीरम्। अन्यत्रोपचारात्। प्राच्युपपदात् 'ईर गतौ' इत्यतः 'कर्मण्यण्' (३. २. १)॥

१. 'न्ध' घ च. झ. पाठः. २. 'राग' छ., 'पाम इ' घ., 'वार इ' च., 'पराग इ' ङ., 'पगार इ' ज. पाठः.

* इदं मुद्रितवार्त्तिकपाठे न दृश्यते।

**भित्तिः स्त्री कुड्यम्**

क्षीर०— **भिद्यते भित्तिः । कुड्यां साधु कुड्यम् । पृषोदरादित्वाद् जश्त्वम् ॥**

टीका० — भित्तिद्वयं मण्डपगृहादौ¹ इष्टकामृत्तिकादिकृते वेष्टने । भिदेः क्तिन् । भित्तिः । 'भिदा विदारणे' (?) इति पाठादङ् न भवति । कुड्यमिति । 'कुङ् शब्दे' । *कुवतेर्यग्डुक्च इति यग् डुगागमश्च । कश्चिद् दकारवत् कुद्यमाह ॥

**एडूकं तदन्तर्न्यस्तकीकसम् ।**

क्षीर०— **तत् कुड्यमन्तर्न्यस्तास्थि एडूकम् ॥**

टीका० — यत् कुड्यमन्तर्गतास्थि तदेडूकम् । 'ईड स्तुतौ' । मल्लूकादित्वाद् ऊकञ्² । आदेर्गुणः । अतो मध्यदीर्घः । 'ईर्वारु(?)चेडूकमलीकशाकम्' इत्यरुणदत्तोऽपि । अमरसिंहस्वरसोऽप्यत्र ।

"उपशल्यं ग्रामान्तिकमेडुकमन्तःकृतास्थि कुड्यं स्यात्"

इति रत्नकोशे तु ह्रस्वमध्योऽपि । तदा च बहुलवचनात् 'शमि कस उक'(ञ्³न्) (उ०२. ३२) इति उक(ञ्³न्) ॥

**गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥**

**निशान्त†वस्त्यसदनं भवनागारमन्दिरम् ।**
**गृहाः पुमांसो भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥**

**वासः कुटी द्वयोः शाला सभा**

क्षीर०— **गृह्णाति गृहम् । 'गेहे कः'(३.१.१४४) इति कः । उदवसिनोति स्मोर्ध्वमवसीयते वा उदवसितम् । विशन्त्यस्मिन् वेश्म । सीदन्त्यस्मिन्**

१ 'इष्टकादिमृत्तिकाकृ' ज. पाठः. २. 'काकु' ख. घ. च. ट. पाठः. ३. 'ञ्' क. ङ. छ. ज. झ. पाठः. ४. 'डिरिवेडू' घ. च. पाठः.

* इदं मुद्रितोणादौ न दृश्यते । † अवस्त्यपाठः क्षीरस्वामिनः, वन्द्यघटीयस्य तु वस्त्यशब्दः । एवमनयोः पाठभेदस्तत्र तत्रोहनीयः ।

सद्म। सदनं च। निकेतन्त्यस्मिन निकेतनम्। निशान्तिः अस्मिन निशान्तम्। निशाया अन्तोऽत्रेत्येके। अवस्त्यायाति सङ्घातीभवत्यवस्त्यम्। भवन्त्यस्मिन् भवनम्। अग्यतेऽस्मिन अगारम्, अगान वृक्षान इयर्ति वा। मन्यते मुच्यतेऽत्र मन्दिरम्। 'मदि स्तुतिमोदमदस्वप्नगतिषु'। भूम्नि बहुत्वे गृहाः। गृहाणीत्यप्याहुः। निचीयते निकाय्यः। 'पाय्यसान्नाय्य—' (३. १. १२९) इति साधुः। निलीयतेऽस्मिन निलयः। आलीयन्तेऽस्मिन आलयः। 'पुंसि संज्ञायां घः —' (३. ३. ११८)। उष्यतेऽस्मिन वासः। कुट्यतेऽस्यां कुटी। शलन्त्यस्यां शाला। शालते वा। सह भान्त्यस्यां सभा। वसतिवासिनयी निवशनमावसथः संस्त्यायोऽपि॥

टीका०—गृहादय ऊनविंशतिर्गृहे। 'ग्रह उपादाने'। 'गेहे कः' (३. १. १४४) इति कर्तरि कः। गृहम्। 'गेहे कः' इति निर्देशादेव गेहम्। उदकं वसित-माच्छादनीकृतमनेनेति उदवसितम्। 'वस आच्छादने'। 'उदकस्योदः संज्ञायाम्' (६. ३. ५७) इत्युदभावः। 'जातिकालसुखादिभ्यः परवचनम्' (वा० २. २. ३६) इति निष्ठान्तस्य परनिपातः। वेश्मेति। विशतेः मनिन्। सीदन्त्यस्मिन्निति सद्म सन्नन्तम्। निकेतनमिति। 'कित निवासे'। अधिकरणे ल्युट्। सदनभवने अपि ल्युडन्ते। अतिशयनातिशायनवद् दीर्घत्वे सादनमपीति हैडुचन्द्रः। अवश्यं निशायाम् अम्यते गम्यत इति निशान्तम्। 'अम गत्यादिषु'। क्तः। 'रुष्यमत्वरस-ङ्घुषास्वनाम' (७. २. २८) इति इडभावः। 'वस्त गन्ध अर्दने'। णिज-न्ताद् 'अचो यत' (३. १. ९७)। अगान् वृक्षान् स्तम्भभूतान् राति गृह्णातीत्य-गारम्। ह्रस्वादि। 'आतोऽनुपसर्गे कः' (३. २. ३)। तथा च 'वेश्म निशान्तम-गारम्' इति नाममालायामार्या। 'वसेश्चतुर्थोऽग्निरिवाग्न्यगारे' (स० ५. श्लो० २५) इति रघुश्च। 'मदिमुदि—' (उ० १. ५४) इत्यादिना मन्देः किरच्। 'मन्दिरं शकटं पीठं क्रोडं रशनं तुम्बं नगरं मन्दिरापुर्यो' इत्यरुणदत्तेन स्त्रीक्लीबयोर्म-न्दिरं पठितम्। तथा चास्यैव प्रयोगः—'व्रजति पथि मनाहं(?) मन्दिरातस्त-

१. 'भट्टच' ङ. छ ज. पाठः.

* स्थलद्वयोपात्तत्वेऽपि गृहपदस्यैकत्वेनैव गणनौचित्यात्।

वारिः' इति। पुल्लिङ्गगृहशब्दो भूम्न्येव नित्यं बहुवचनान्त इत्यर्थः। 'पाय्य-सान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' (३. १. १२९) इति निपातनाद् निकाय्यः। 'लीङ् श्लेषणे'। 'पुंसि संज्ञायां' (३. ३. ११८) इति घः। निलयालयौ। वसेरधिकरणे घञ्। वासः। 'कुट कौटिल्ये'। इगुपधलक्षणः कः। स्त्रियां कुटी गौरादिः। 'कॄगॄशॄपॄकुटि—' (उ० ४. १४४) इत्यादिना इप्रत्ययेन कुटिरपि। तथा च 'भ्रुकुटिर्कुटिकुटी'रिति रामदासः। शालेति। 'शल हुल पत्ल गतौ'। अधिकरणे 'हलश्च' (३. ३. १२१) इति घञ्। ततष्टाप्। सम्यग् भातीति सभा। 'आतोऽनुपसर्गे कः' (३. २. ३)। पृषोदरादित्वाद् वर्णलोपः॥

सञ्जवनं त्विदम्।
चतुश्शालं

क्षीर०—सञ्जवति, जवन्ते वा अस्मिन सञ्जवनम्। चतस्रः शालाः समाहृताः चतुश्शालम्॥

टीका०—सञ्जवनद्वयं चतुश्शालागृहे। संपूर्वाद् 'जू' इति सौत्रधातोर्ल्युट्। चतसृणां शालानां समाहारः चतुश्शालम्। 'ह्रस्वो नपुंसके—' (१. २. ४७) इति ह्रस्वत्वम्। पक्षे चतुश्शालीत्यपि। 'वा टाबन्त' इत्युपसंख्यानात्॥

मुनीनां तु पर्णशालोटजोऽस्त्रियाम्॥ ६॥

क्षीर०— इदं गृहं मुनिसम्बन्धि पर्णशालाख्यम्। उटैः§ देश्यां तृणपर्णैर्जायते उटजम्॥

टीका०—पर्णशालाद्वयं पत्ररचितमुनिकुटिकायाम्। मुनीनां गृहं पर्ण-

१. 'च हू पाल श्रु' ज. पाठः. २. 'क' क. ख. ड. छ. झ. पाठः. ३. 'टांति' घ. ङ. च. छ. ज. झ. पाठः.

'आवन्तो वा' इति मुद्रितवार्त्तिकपाठः। § उट इति देश्यपदमित्यर्थः

शाला स्यादिति सम्बन्धः । पर्णं पत्रं, तत्प्रधाना शाला पर्णशाला । उटजं ह्रस्वादि । 'सोधवास उटजेन विस्मृत' इति रघुश्च[§] । 'निशान्तं भवनोटजम्' इत्यमरमालायां गृहपर्याय एव ॥

## चैत्यमायतनं तुल्ये

**क्षीर०— चित्याया इदं चैत्यम् । देवकुलमहावृक्षाद्युपाशयः (?) । आयतन्ते अस्मिन्नित्यायतनम् ॥**

टीका० — चैत्यद्वयं **मुखरहिते देवकुलसदृशे यज्ञस्थाने** । तथा च —

"स्वल्पावशेषा पृथिवी चैत्यैनासीन्महात्मनः ।
गदस्य यजमानस्य तत्र तत्र विशां पते[3] ! ॥"

इति । 'चिती संज्ञाने' । 'अ(घ्न्या/घ्न्या)दयश्च' (उ० ४. ११२) इति यग् वृद्धिश्च । चैत्यम् । 'यती प्रयत्ने' । अधिकरणे ल्युट् । आयतनम् ॥

## वाजिशाला तु मन्दुरा ।

**क्षीर०— मन्दते अत्र मन्दुरा ॥**

टीका०— वाजिशालाद्वयमश्वशालायाम् । मन्दुरेति । 'मदि स्तुतिमोदादौ' । 'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्' (उ० १. ४०) ॥

## आवेशनं शिल्पिशाला

**क्षीर०— आविशन्त्यत्र आवेशनम् । गृहादन्यत् कारूणां कर्मस्थानम् । तेन शिल्पशालेति सभ्यः पाठः ॥**

टीका०— आवेशनद्वयं **सुवर्णकारादिशिल्पशालायाम्** । आङ्पूर्वाद् विशतेः 'करणाधिकरणयोश्च' (३. ३. ११७) इति ल्युट् ॥

१. 'त्समाप्ती' घ. च. पाठः. २. 'नाम् ।' घ. च. पाठः. ३. 'तेः ॥' ङ. छ. पाठः.

§ इद मुद्रितरघुवंशे न दृश्यते ।

**प्रपा पानीयशालिका ॥ ७ ॥**

क्षीर०— प्रपिबन्त्यस्यां प्रपा । घञर्थे कः ॥

टीका०— प्रपाद्वयं पानीयशालायाम्[1] । प्रपिबन्त्यस्यामिति प्रपा । 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कः ॥

**मठश्छात्रादिनिलयः‡**

क्षीर०— मठ्यतेऽस्मिन् मठः । 'मठ निवासे' । छत्रशीला विद्यार्थिनश्छात्राः । छत्रेण गुरुसेवा लक्ष्यते । छत्रादित्वाणणः ॥

टीका० — छात्रपरिव्राजकादीनां गृहं मठः । 'मठ मदनिवासयोः' । 'पुंसि संज्ञायां—' (३. ३. ११८) इति घः ॥

**गञ्जा तु मदिरागृहम् ।**

क्षीर०— गञ्जन्ति नदन्त्यस्यां क्षीबाः गञ्जा ॥

टीका०—गञ्जाद्वयं मदिरासन्धानगेहे । गञ्जन्ति शब्दायन्त इति गञ्जा । 'गज गजि गृज गृजि मुज मुजि शब्दार्थाः' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः ॥

**गर्भागारं वासगृहम्**

क्षीर०—वासाय वासमध्ये वा गृहं वासगृहम् । अपवरकं कोष्ठकं च ॥

टीका०—गर्भागारद्वयमीश्वराणां वासहरे[2][3] इति ख्याते । देववासस्थान इति केचित् । निर्वातत्वाद् गर्भ इव अगारं गर्भागारम् । वासस्य शयनस्य गृहं वासगृहम् ॥

१. 'ति ॥' ङ. छ. पाठः. २. 'वाह' क. ख. पाठः. ३. 'भ' झ. पाठः.

‡ एतदुत्तरं 'सत्रशाला प्रतिश्रयः । बौद्धानां तु विहारोऽस्त्री' इति पादद्वयमधिकं पठ्यते क्षीरस्वामीये, न तु व्याख्यायते ।

**अरिष्टं सूतिकागृहम् ॥ ८ ॥**

क्षीर०— न रिष्यते हिंस्रैः कृतरक्षत्वाद् अरिष्टम् ॥*

टीका०—अरिष्टद्वयं सूतिकागेहे । मन्त्रादिना निरस्तत्वाद् नास्ति रिष्टमक्षेममस्मिन्नित्यरिष्टम् । 'वा सूतकासूतिकापुत्रकापुत्रिकावृन्दारकावृन्दारिका—' (वा० ७. ३. ४५) इत्युपसंख्यानात् सूतकागृहमित्यपि ॥

**वातायनं गवाक्षः**

क्षीर०— 'इन्द्राक्षयोः समासे' इत्यवङ् । इन्द्रलोको मतङ्गकः ॥

टीका०—वातायनद्वयं जालके । वातस्य अयनं पन्थाः इति वातायनम् । गावो रश्मयः, तैरक्षो व्यवहारोऽस्मिन्निति गवाक्षः । 'सर्वत्र विभाषा गोः' (६. १. १२२) इत्यनुवर्तमाने 'अवङ् स्फोटायनस्य' (६. १. १२३) इति व्यवस्थितविभाषाविज्ञानाद् जालके नित्यमवङ् । प्राणिनि तु गोक्षः । 'वातायनं गवाक्षो ना' इत्यमरमाला ॥

**अथ मण्डपोऽस्त्री जनाश्रयः ।**

क्षीर०—मण्ड्यतेऽनेन लोकैर्वा मण्ड्यते मण्डपम् ॥

टीका०— मण्डपद्वयमास्थानादिमण्डपे । मण्डनं मण्डः भूषा । 'मडि भूषायाम्' । तं पाति रक्षतीति मण्डपः । वेष्ट्यत इति वा मण्डपः । 'वडि वेष्टने' 'मडि च' । 'विटपविष्टपमण्डपविशिपोलपाः' (उ० ३. १४९) इति निपातितः ॥

**हर्म्यादि[1]र्धनिनां वासः**

क्षीर०—हरति मनो हर्म्यम् । आदिशब्दाद् अट्टालादिः ॥

टीका०— इष्टकामयं धवल[2]गृहमिति ख्यातं हर्म्यम् । यकारवत् । हरतेः

१. 'वासगृहादिः' क. ग. पाठः. २. 'ला' ख. घ. ङ. च. छ. झ., 'लमि' ज. पाठः.

मत्तालम्बोऽपाश्रयः स्यात् प्रग्रीवो मत्तवारणः ॥"
इत्यधिकं पठ्यते, न च व्याख्यायते ।

'अघ्न्यादयश्च' (उ० ४. ११३) इति यत् मुडागमः गुणश्च । आदिना अट्टाट्टालिकादिः ॥

**प्रासादो देवभूभुजाम् ॥ ९ ॥**

क्षीर०—वास इत्येव । प्रसीदन्त्यस्मिन् प्रासादः । 'सादकारयोः कृत्रिमे' इति दीर्घः ॥

टीका०— देवानां राज्ञां चेष्टकादिमयः[1] प्रासादः । अन्यत्रोपचारात् । प्रमुदिताः सीदन्त्यस्मिन्निति प्रासादः । 'हलश्च' (३. ३. १२१) इति घञ् । उपसर्गस्य घञि—' (६. ३. १२२) इत्यादिना दीर्घः ॥

**सौधोऽस्त्री राजसदनम्**

क्षीर०— सुधाशुभ्रं सौधम् ॥

टीका०— राज्ञ एव सदने सौधः । तथा च 'सौधो हर्म्यं नृपागारमि'त्यमरमाला । सुधायोगात् सौधः । अण्प्रकरणे 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' (वा० ५. २. १०३) इत्यण् ॥

**उपकार्योपकारिका ।**

क्षीर०— उपक्रियते उपकरोति च पटमण्डपादि राजसदनम् ॥

टीका०— उपकार्याद्वयम् आरीति ख्यातायाम् । उप अधिकं क्रियते इत्युपकार्या । '[3]ऋहलोर्ण्यत्' (३. १. १२४) । उप अधिकं करोतीत्युपकारिका । कर्मण्यणन्तङीबन्तात् स्वार्थे कः । 'केऽणः' (७. ४. १३) इति ह्रस्वत्वम् । राजानमुपकरोतीति वा उपकारिका । केचित् प्रासादद्वयं देवानां राज्ञां च गेहे, राजसदनत्रयमुपकार्यायामित्यभिदधति ॥

**स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥**

१. 'दि तदीयं प्रा' क. पाठः. २. 'यं' ख. घ. ङ. च. छ. झ. पाठः. ३. 'कर्मणि ण्यत् । उ' क. ख. पाठः.

क्षीर०— प्रहन्यते प्रघाणः। 'अगारैकदेशे प्रघणः प्रघाणश्च' (३. ३. ७९)। अल्यते हृष्यते अलिन्दः। द्वारप्रकोष्ठकाद् बहिर्द्वाराग्रवर्तिचतुष्किकान्ते उपालिन्दिकाख्यः॥

टीका०— प्रघाणत्रयं गृहबाह्यपिण्डके विनीति[1] ख्याते। तथा च 'अगारैकदेशे प्रघणः प्रघाणश्च' (३. ३. ७९) इत्यत्र निपातनसूत्रे 'द्वारप्रकोष्ठको बाह्य उच्यते' इति वृत्तिः। अलिन्द इति। 'अल भूषणादौ'। ¶'कलिपुलिभ्यां किन्दच्[2]' (उ० ४. ८६) इति बहुलवचनात् किन्दच्[3]।

"यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि" (स०३. श्लो०४८) इति माघप्रयोगेऽपि ह्रस्वादिः।

"गृहैकदेश आलिन्दः प्रघाणः प्रघणस्तथा"

इत्यमरमालायां दीर्घादिरपि। तथा च आङ्पूर्वेण साधुः॥

गृहावग्रहणी देहली

क्षीर०— द्वाराग्रे स्थले। संवीथ्याख्य इत्येके। बुध्नोदुम्बरमिति तु सभ्योऽर्थः। अवगृह्यते द्वारशाखानया अवग्रहणी। दिह्यते देहली॥

टीका०— गृहावग्रहणीद्वयं देहलीति ख्यातायाम्। गृहमवगृह्यते परिच्छिद्यते इति गृहावग्रहणी। ल्युट्। देहं प्रवेशेन लातीति देहली। 'ला आदाने'। 'आतोऽनुपसर्गे कः' (३. २. ३)। गौरादिः॥

अङ्गनं[4] चत्वराजिरे।

क्षीर०— अङ्गत्यत्राङ्गनम्। चत्यते चत्वरम्। अजन्त्यत्राजिरम्॥

१. 'भि' ङ. छ. ज., 'हीं' घ. च. झ. पाठः. २, ३. 'न्' ङ. छ. पाठः. ४. 'णं', ५. 'ण' क. ग. पाठः.

¶ 'कुणिपुल्योः किन्दच्' इति मुद्रितोणादिपाठः

**टीका०** — अङ्गनत्रयं प्राङ्गणे। 'अगि रगि' इत्यादिना दण्डकादधिकरणे ल्युट्। अङ्गनम्। तथा च नकारान्ते विश्वप्रकाशः—

"अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता"

अतो णकारान्तोऽसाधुः। प्रोपसर्गाद् णत्वम्। यथा प्राङ्गणम्। पृषोदरादिणत्वे अङ्गणमपीति केचित्। 'चते चदे याचने च'। कृगृशृवृञ्चतिभ्यष्ष्वरच्' (उ० २. १२१)। टकारो ङीबर्थः। तेन 'नेड्वशि—' (७. २. ८) इतीडभावः। चत्वरम्। 'अजिरशिशिरशिबिर—' (उ० १. ४६) इत्यादिना निपातनादजिरम्॥

**अधस्ताद्दारुणि शिला**

**क्षीर०** — स्तम्भादीनामधोदारु शिलाख्यम्। स्तम्भोर्ध्वे दार्वन्तरस्थापनार्थं यदासज्ज्यते, सा शिलीति गौडाः॥

**टीका०**—चतुष्किकाद्द्वारादेरधस्तिर्यक्काष्ठं शिलीति ख्यातं शिला। 'शिल उञ्छे'। इगुपधलक्षणः कः॥

**नासा दारूपरि स्थितम्॥ १३॥**

**क्षीर०** — स्तम्भादेरित्यर्थः। द्वारशाखाधऊर्ध्वदारुणि शिलानासे इति माला। यदाह—

"नासा दारूपरिद्वारेऽस्याधोदारु शिला स्त्रियाम्"

"ऊर्ध्वोदुम्बरमुत्तरासङ्गोऽधउदुम्बरं दोहली"

इत्याचार्याः॥

**टीका०** — द्वारोपरिस्थितदारुणि नासा। 'णासृ नासृ शब्दे'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः।

"शिला द्वाराधरस्तम्भदृषदोः शिलमुञ्छके।
नासा द्वारोर्ध्वकाष्ठे स्यान्नासिकायां च कीर्तिता॥"

इत्यजयः॥

**प्रच्छन्नमन्तर्द्वारं स्यात्**

**क्षीर०** — खडकिकाख्यम्॥

टीका० — प्रच्छन्नद्वयं गृहाभ्यन्तरप्रकोष्ठद्वारे । गम्भीरिकाद्वार इति केचित् । 'छद अपवारणे'। क्तः । 'रदाभ्याम्—' (८. २. ४२) इति नत्वम् । प्रच्छन्नम् ॥

पक्षद्वारं तु पक्षकम् ।

क्षीर० — पार्श्वद्वारमेकमेतदिति कात्यः । यदाह —
"प्रच्छन्नमन्तर्द्वारं स्यात् पक्षद्वारं तदुच्यते" ॥

टीका० — पक्षद्वारद्वयं खसंकीति ख्याते द्वारे । गृहस्य पक्षे पार्श्वे क्रियत इति पक्षकम् । करोतेः 'अन्येभ्योऽपि—' (वा० ३. २. १०१) इति कर्मणि डः ॥

वलीकनीव्रे पटलप्रान्ते

क्षीर० — छादनान्तो वलीकाख्यः । वलति संवृणोति कुड्याद् बहिर्वीथी येनच्छाद्यते । नियतामिव्यते नीयते वाम्भोऽनेन नीव्रम् ॥

टीका० — वलीकत्रयम् ओहालीति ख्यातायाम् । वलीनि संवलितानि कानि तोयानि अत्रेति वलीकम् । 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः । निश्चयेन व्रियते संव्रियते अनेनेति नीव्रम् । मूलविभुजादित्वात् कः । पृषोदरादित्वाद् दीर्घः । 'वलीकः पटलप्रान्त' इति पुंस्काण्डे वोपालितः ॥

अथ पटलं छदिः ॥ १४ ॥

क्षीर० — पटं लातीति पटलम् । छाद्यते अनेन छदिः । इसन्तः क्लीबे । 'इस्मन्त्रन्क्विषु च' (६. ४. ९७) इति ह्रस्वः ॥

टीका० — पटलद्वयं चाले इति ख्याते । 'अट पट गतौ' । 'वृषादिभ्यश्चित्' (उ० १. १११) इति कलच् । छदिः सान्तम् । साहचर्यात् क्लीबे च ।

१. 'ड' ङ. छ. ज., 'ण्ड' झ. पाठः. २. 'ला' ङ. छ. पाठः.

'छद अपवारणे'। चुरादिणिच्।*'कृभृविच्छिदिच्छादिभ्य इसिः' (उ०२. १०८)। 'इस्मन्त्रन्क्विषु च' (६.४.९७) इति ह्रस्वः॥

**गोपानसी तु वलभीछादने वक्रदारुणि।**

**क्षीर०**—गोपायति गोपानसी। पटलाधारो वंशपञ्जरो वलभी (सा?)वलभ्याश्छादके संवरणे॥

**टीका०**—वलभी चूडाट्ट इति यस्याख्या, तद्धारणार्थं धरणकं वक्रीकृत्य यत् काष्ठं दीयते सा गोपानसी। दन्त्यसा। 'शिखायां वलभौ चूडे'ति रुद्रः।

"वलभीचन्द्रशाले तु प्रासादोपरिमण्डपे"

इति कोशान्तरमपि॥

**कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्॥ १५॥**

**क्षीर०**—विशिष्टं टङ्क्यते विटङ्कम्। पक्षिविश्रमार्थं बहिर्निर्गतं दारु वक्रदार्वाधारः। पक्षिपङ्क्तिर्हि तत्रोत्कीर्यते॥

**टीका०**—हर्म्यविहारादौ विदग्धपक्षिवासार्थं यद् बहिष्कृत्य काष्ठैकदेशे स्थाप्यते तत्र कपोतपालिकाद्वयम्। कपोतान् पालयतीति कपोतपालिका। कर्मण्यणन्तात् स्वार्थे कः। टाबादिः। वीन् पक्षिणः टङ्कयति बध्नातीति[3] विटङ्कम्। 'टकि बन्धने'। चुरादिः। कर्मण्यण्॥

**स्त्री द्वार्द्वारं प्रतीहारः**

**क्षीर०**—'द्वृ वरणे'। प्रतिह्रियन्ते रुध्यन्ते अनेन प्रतीहारः। नानार्थे बलजम्॥

**टीका०**—द्वास्त्रयं द्वारे। 'द्वृ आवरणे'। चुरादिण्यन्तात् क्विप्। कर्मणि

१, २. 'ड' ख. ज. झ. पाठः. ३. 'तीति' ङ. छ. पाठः.

* 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य' इति मुद्रितोणादिपाठः।

घञि द्वारम् । स्वभावादेव घञन्तोऽपि नपुंसक इति धातुप्रदीपः । हृञः कर्मणि घञ् । 'उपसर्गस्य—' (६. ३. १२२) इत्यादिना वा दीर्घः । प्रतीहारः ॥

**स्याद् वितर्दिस्तु वेदिका ।**

**क्षीर०—दारुपरिष्कृता विश्रान्तिभूः । विगतं तर्दनं यत्रेति वितर्दिः । विदन्त्यस्यां वेदी ॥**

**टीका०**—वितर्दिद्वयमावासिन्यङ्गणमध्यस्थचतुष्किकायाम् । अशुभं वितर्दयतीति वितर्दिः[1] । 'तर्द हिंसायाम्' । 'इन्' (उ० ४.११९) इति इन् । एवं विदेरिति (?) वेदिका ॥

**तोरणोऽस्त्री बहिर्द्वारं**

**क्षीर०—मङ्गलार्थं तुरन्त्यत्र तोरणम् । द्वाराग्रे स्तम्भोपनिबद्धं सिंहद्वाराख्यम् ।**

**"मङ्गल्यस्रक्तोरणार्थे भवेद् वन्दनमालिका" ॥**

**टीका०**—तोरणद्वयं तोरणद्वारे । एतच्च स्तम्भद्वयमुभयतो निखन्य मूलद्वाराद् बाह्यतः क्रियते । 'तुर त्वरणे'[2] । करणे ल्युट् । तोरणम् ॥

**पुरद्वारं तु गोपुरम् ॥ १६ ॥**

**क्षीर०—गोप्यते गोपुरम् । प्रतोली ॥**

**टीका०**—पुरद्वारद्वयं नैगरद्वारे[3] ॥

**कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्**

**क्षीर०—दुर्गद्वारावतरणार्थः क्रमनिम्नो हस्तिनखाख्यो मृत्कूटः[4] रूपसोपानाख्यः । सोपानयुक्तं बहि(रग ? श्व)भ्रमन्तस्सोपानेयुक्तं युक्ताम्[5] (?) इत्येके ।**

१. 'र्दिका । त' क. ख. घ. च. ज. झ. पाठः. २. 'णे ल्यु', ३. 'पुर' क. ख. पाठः. ४. 'टः । अवसो' ख., 'टः । ब' क. ग. पाठः. ५. 'नम् ।' क. पाठः.

टीका० — दुर्गपुरद्वारे यन्मृत्तिकाकूटं[1] क्रियते बहिरवटप्रधानमभ्यन्तरेण सोपानयुक्तं, यस्मिन्नुत्थाय पारकाणां काण्डादिकं दीयते, स हस्तिनखः ॥

अथ त्रिषु।

**कवाटमररं तुल्ये**

क्षीर० — कस्य वायोर्गतागतप्रवर्तकस्य वाटः। अरं कर्षणं राति अररम्। त्रिलिङ्गौ। शिरः पाटयति प्रविशतां कवाटो द्वारपुटः। जपादित्वात् वत्वम्। इयर्ति अररम् अररि(ः) च ॥

टीका० —कवाटद्वयं कवाटे। कं वातं वाटयतीति कवाटम्। 'वट वेष्टने'। 'कर्मण्यण्' (३. २. १)। कैर्वातैः पाटयति भाषते इति कपाटं पकारमध्यं च। 'अट पट लुट तुजि विजि भाषार्थाः'। चुरादिणिच्। पचाद्यच्। स्त्रियां कवाटी। गौरादिः। 'अ(र्तेः ? र्ति)*कमिचमिदेविवासिभ्यश्चित्' (उ० ३. १३२) इति अरः। अररम्। तुल्ये तुल्यार्थे, न तुल्यलिङ्गे। 'प्रेर्यन्तेऽमी परमररयो हर्म्यवातायनानाम्' इति तु कप्फिणाभ्युदयः ॥

**तद्विष्कम्भेऽर्गलं न ना ॥ १७ ॥**

क्षीर०—विष्कम्भो बन्धननिमित्तम्। विष्कभ्नात्यवष्टभ्नात्यवश्यम्। विष्कम्भीत्येके पेठुः। अरेण कर्षणेन गलत्यर्गलं दारुमयो लौहो वा दण्डः। न ना पुमान् न भवति। पराधिश्च ॥

टीका० —तद्विष्कम्भिनि तद्वारके दण्डादौ अर्गलम्। स्त्रियामर्गला। न नेत्यनेन निषिद्धलिङ्गं शेषार्थमिति सूचयति।

"अर्गलं त्रिषु कल्लोले दण्डे चान्तःकवाटयोः"

इति तु रभसः ॥

**आरोहणं स्यात् सोपानं**

1. 'टः' क. ख. घ. च. छ. ज. झ. पाठः.

* 'अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्' इति मुद्रितोणादिपाठः.

**क्षीर०** — आरुह्यते अवरुह्यते चानेनारोहणम् । सह उपानन्त्य-स्मिन् सोपानम् ॥

**टीका०** — आरोहणद्वयं खडखडीति ख्यातायाम् । आङ्पूर्वाद् रुहेः करणे ल्युट् । आरोहणम् ।

"सोपानपथमुत्सृज्य वायुवेगः समुद्धृतः ।
महापथे नाग इव स्तूयमानगुणो जनैः ॥"

इति काव्या(दर्श ? लङ्कारे) (२. १. २२) वामनेनासभ्यार्थत्वे(नायमु ? नो)दा-हृतत्वात् सोपानं दन्त्यादि । स वायुवेगः अपानपथमुत्सृज्येति पदविभागतो-ऽसभ्यार्थत्वम् ॥

**निःश्रेणिस्त्वधिरोहणी ।**

**क्षीर०** — निश्रयति भित्तिं, नियोजिता श्रेणिः सोपानपाङ्क्ति-र्वात्र निश्रेणिः । अतिरोहन्त्यवरोहन्ति च यया दारुमय्या सा अधिरो-हणी ॥

**टीका०** — निःश्रेणिद्वयं निःश्रेणीति ख्यातायाम् । 'श्रिञ् सेवायाम्' । निर्पूर्वः । 'वहिश्रिश्रुयु[१]द्रुग्लाहात्वरिभ्यो निः' (उ० ४. ५२) इति निः । रुहेः करणे ल्युट् । 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप् । अधिपूर्वः अधि-रोहणी ॥

**सम्मार्जनी शोधनी स्यात्**

**क्षीर०** — बहुलाख्या रजोवारणी । मार्जन्या पूतं हि बहुलीकृतं [२]धान्याद्याहुः । समूहनीति[३] तद्बहुकरी वर्धनी च (?) ।

**टीका०** — सम्मार्जनीद्वयं सम्मार्जन्याम् । 'मृजू शुद्धौ' । करणे ल्युट् ।

१. 'नित् इ' क. घ. च. ज. झ. पाठः. २. 'धानाद्या' घ. पाठः. ३. 'ति स्म त बहुं' ग. घ. ङ. पाठः.

? इत्येव मातृकासु दृश्यते ।

'मृजेर्वृद्धिः' (७.२.११४) इति वृद्धिः। शोधनीति। 'शुध शुद्धौ'। पूर्व-वल्ल्युडादि।

"सम्मार्जनी वर्तनी स्यात् सङ्करोऽवकरः स्मृतः"

इति हलायुधः॥

**सङ्कारोऽवकरस्तया॥ १८॥**

**क्षिप्ते**

क्षीर० —**धूल्यादाविति शेषः। अवकीर्यतेऽवकरः॥**

टीका० —तया सम्मार्जन्या क्षिप्ते **मलादिके** सङ्कारद्वयम्। सम: किरतेः घञ्। सङ्कारः। अस्मादेव 'ऋदोरप्' (३.३.५७)। अवकरः॥

**मुखं निस्सरणं**

क्षीर० —**गृहादेर्निस्स्रियते प्रविश्यते येन तन्मुखम्। यत् कौटिल्यः—"मुखसमः संक्रमः मुखानुसारेण निस्सारणविधिर्वा"॥**

टीका० —मुखद्वयं गृहादेर्द्वारप्रदेशे। तथा च पू(र्वा/र्व)मुखा आवासिनीति प्रयोगः। 'खनु अवदारणे'। 'डित्खनेर्मुट् चोदात्तः' (उ० ५ २०) इत्यनेन अलचौ प्रत्ययौ भवतः मुडागमश्च। करणे ल्युट्। निस्सरणम्॥

**सन्निवेशो निकर्षणम्।**

क्षीर० —**समन्ताद् निविशन्तेऽत्र सन्निवेशः। पुरादेर्बहिर्विहरणभूः। निवृत्तं कर्ष(णम्) अत्र निकर्षणम्॥**

टीका० —सन्निवेशद्वयं **पत्तनादिपरिच्छिन्नप्रदेशे**। तथाहि—

"देशं कालं तथा स्थानं सन्निवेशं तथैव च"

इत्यत्र विश्वरूपेण "स्थानं पत्तनादिकं तत्रैव दिग्विभागपरिच्छिन्नानि कियन्त्या गृहाणि सम्यङ् निविष्टानि सन्निवेशः"(इति) उक्तम्। 'विश प्रवेशने'। 'हलश्च' (३.३.१२१) इत्यधिकरणे घञ्। कृषेः ल्युटि निकर्षणम्॥

1. 'णः॥' ग. घ. ङ. पाठः.

**समौ संवसथग्रामौ**

**क्षीर०— संवसन्त्यत्र संवसथः। ग्रस्यते भोगिभिः ग्रामः। दुर्ग ग्रामधानं खेटकं च॥**

**टीका०—** संवसथद्वयं **ग्रामे**। संवसन्त्यत्रेति संवसथः। वसतेः 'उपसर्गे वसेः' (उ० ३. ११६) इत्यथप्रत्ययः। 'ग्रसु ग्लसु अदने'। *'ग्रसतेरा च' (उ० १. १४८) इति मन् सकारे चाकारः ग्रामः॥

**वेश्मभूर्वास्तुरस्त्रियाम्॥ १९॥**

**क्षीर०— वसन्त्यस्मिन् वास्तुः। 'वसेर्णिच्च' (उ० १. ७९) इति तुन्॥**

**टीका० —** वेश्मभूद्वयं **गृहकरणयोग्यभूमौ**।

"निवासात् सर्वभूतानां वास्तुरित्यभिशब्दितः"

'अगारे णिच्च' (उ० १. ७९) इति वसतेस्तुन्। णित्त्वाद् वृद्धिः। वास्तुः अस्त्रियामिति सम्बन्धः॥

**ग्रामान्त उपशल्यं स्यात् सीमसीमे स्त्रियामुभे।**

**क्षीर०— अन्ते चिह्नार्थं शल्यप्रक्षेपादुपशल्यम्। उपशले[1] समीपभ्रमणे साधु वा। सीयते बध्यते। सीमा। 'मनः' (४. १. ११)। 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३)। सीम्न्याघाटार्थगौ सालकोऽस्त्री ग्रामान्तरेऽटवी[3]' (?)॥**

**टीका०—** ग्रामान्तद्वयं **ग्रामसमीपदेशे**।

"अन्तः प्रान्ते समीपे च स्वरूपे च निषेधने"

इत्यजयः। 'ग्रामान्तिकोपशल्यामि'त्यमरमाला। उपगतः शल्यः कीलको यस्येत्युपशल्यम्। प्रादिसमासः। 'शूकशिक्योपशल्यामि'ति शभेदः।

---

१. 'लेन समीपभ्रमणेन सा' ग. घ. ङ. पाठः. २. 'घाटकटौ सा', ३. 'विः।' ख. पाठः.

* 'ग्रसेरा च' इति मुद्रितोणादिपाठः।

सीमद्वयं क्षेत्रादिसीमायाम्। 'षिञ् बन्धने'। नामन्सामन्नादिसूत्रेण (उ० ४. १९२) इमन्प्रत्ययः। 'ऋन्नेभ्यो ङीप्' (४. १. ५) इति प्राप्तस्य ङीपः 'मनः' (४. १. ११) इति प्रतिषेधेन नान्तं रूपम्। 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३) इति डाबन्तं द्वितीयम्। आघाटमर्यादाशब्दावप्यत्र। तथा च—

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते"

इति प्रयोगः।

"सीमानो मर्यादा आघाटे पूरुषे मताः सीमाः"

इति वोपालितोऽपि॥

**घोष आभीरपल्ली स्यात्**

**क्षीर०— घोषन्ति गावोऽत्र घोषः। आबिभ्यति आ भीत ईरयन्ति वा गाः आभीरा गोपाः। पाल्यते पल्ली गृहाली। 'कुटीग्रामकयोः पल्लिः' इति तु शाश्वतः॥**

**टीका०—** घोषद्वयं **गोपालपल्ल्याम्**। 'घुष घुष्टौ'। 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ्। घोषः। आभीरा गोपाः, तेषां पल्ली कुटीसङ्घात इत्याभीरपल्ली॥

**पक्कणः शबरालयः॥ २०॥**

**क्षीर०— पच्यतेऽस्मिन् पक्कणः। शबन्ति भ्रमन्ति शबराः अरण्यचण्डालाः॥**

**इति पुरवर्गः।**

**टीका०—** पक्कणद्वयं **शबरपल्ल्याम्**। 'शबरौकश्च पक्कणमि'ति क्लीबकाण्डे अमरमाला। पचतेः क्विप्। पक्। पचनीयः कणोऽत्रेति पक्कणः। वकाररहितः[1]॥

**इति पुरवर्गः।**

1. 'पकारादिः॥' ङ. छ. पाठः.

## अथ शैलवर्गः

**महीध्रशिखरिक्ष्माभृदहार्यधरपर्वताः।**
**अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥**

क्षीर० — महीं धारयति महीध्रः। मूलविभुजादित्वात् कः। हर्तुमशक्योऽहार्यः। ध्रियते धरः। पर्वाणि सन्त्यस्य पर्वतः। '(तप्) पर्वमरुद्भ्याम्' (वा. ५. २. १२२)। अद्यते अद्रिः। गां त्रायते गोत्रः। गीर्यते गिरिः। शिलानामयं शैलः। मत्वर्थे वाण ॥

टीका० — महीध्रादयस्त्रयोदश पर्वते। महीं कीली[1]भूतो धरति बिभर्तीति महीध्रः। मूलविभुजादित्वात् कः। पचाद्यचि महीधरः। शिखरी नान्तः। क्ष्माभृत् तान्तः। हर्तुं न शक्यत इत्यहार्यः। 'ऋहलोर्ण्यत्' (३. १. १२४)। धरति भुवनमिति धरः। पचादिः। *'पर्वमरुद्भ्यां तः' (वा० ५. २. १२२) इति मत्वर्थीयस्तः। पर्वतः। 'अदिशदिभुशुभिभ्यः क्रिन्' (उ० ४. ६६)। अद्रिः। गां पृथिवीं त्रायत इति गोत्रः। गोपूर्वात् त्रैङः 'आतोऽनुपसर्गे कः' (३. २. ३)। 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्य† इः' (उ०४. १४४)। किच्चासौ। गिरिः। 'ग्रह उपादाने'। 'ग्रहेरा च' इति वनिप् आकारश्चान्तादेशः। ग्रावा नान्तः। शिलाः प्रचुराः अत्र सन्तीति शैलः। ज्योत्स्नादित्वादण्। शिलानामुच्चयः स्तूपः शिलोच्चयः ॥

**लोकालोकश्चक्रवाडः**

क्षीर० — अन्तर्लोक्यतेऽस्य वाह्यं च न लोक्यतेऽनर्कत्वाल्लोकालोकः। चक्राकारेण वलते वाडते वा चक्रवाडः। 'वाडृ आप्लाव्ये'। आवेष्ट्य द्वीपाब्धीन् स्थितो ह्यसौ ॥

१. 'ल' ङ. च. छ. ज. पाठः. २. 'रुदिभि' ङ. छ. पाठः.

* 'तप्पर्वमरुद्भ्याम्' इति मुद्रितवार्त्तिकपाठः। † 'भ्यश्च' इति मुद्रितोणादिपाठः

टीका० — लोकालोकद्वयं सकलभूमण्डलस्य **मण्डलाकारेणावस्थिते प्राकारभूते गिरौ**। अस्याभ्यन्तरं पार्श्वं सूर्यरश्मिभिः प्रकाश्यते न बाह्यमिति प्रकाशाप्रकाशतया लोकालोकः। 'लोकृ दर्शने'। कर्मणि घञ्। मण्डलाकारेण परिवेष्ट्य स्थितत्वात् चक्रवाडः। पृषोदरादित्वाद् डत्वम्[*] ॥

**त्रिकूटस्त्रिककुत् समौ।**

**क्षीर० — '(त्रिककुत्) पर्वते' (५.४.१४७) इति साधुः ॥**

**टीका — त्रिकूटद्वयं त्रिकूटगिरौ**। त्रीणि कूटान्यस्येति त्रिकूटः। त्रीणि ककुदाकाराणि चूडाकाराणि शृङ्गाण्यस्येति त्रिककुद् दान्तः। 'त्रिककुत् पर्वते' (५.४.१४७) इत्यन्तलोपः ॥

**अस्तस्तु चरमक्ष्माभृद्**

**क्षीर० — अस्यत्यर्कादीनस्यते वा अस्तः। चरन्त्यत्र चरमः पश्चिमो मन्दराख्यः ॥**

**टीका० — पश्चिमे अस्तपर्वते** अस्तः। अस्तमनुपलब्धिं ग्रहनक्षत्राणां करोतीत्यस्तः। 'तत् करोति —' (ग० ३.१.२६) इति णिच्। पचाद्यच् ॥

**उदयः पूर्वपर्वतः ॥ २ ॥**

**क्षीर० — उद्यन्त्यस्माद् ग्रहा उदयः ॥**

**टीका० — उदयगिरावुदयः**। उद्यन्त्यस्मादित्युदयः। इणः 'एरच्' (३.३.५६) ॥

१. 'लम' क. ख. पाठः. २. 'दिड' घ. च., 'दिः ॥' ङ. छ. पाठः. ३. 'देत्यस्मा' ङ. छ. पाठः

[*] इदं वलतर्लकारस्य।

**हिमवान् निषधो विन्ध्यो माल्यवान् पारियात्रकः ।**
**गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥**

क्षीर० — नियतं सीदन्त्यस्मिन् निषधः । विध्यति विन्ध्यः । अघ्न्यादिः । माल्याकारता अस्यास्ति माल्यवान् । परितो यात्रायां भवः पारियात्रकः, स्वारोहत्वात् । गन्धेन मादयति गन्धमादनम् । आदिशब्दाद् मलयमन्दराद्याः ॥

"हिमालयोऽद्रिराजः स्यान्मलयश्चन्दनालयः" ॥

टीका० — हिमवदादयः सप्त प्रत्येकं **स्वनामप्रसिद्धे पर्वते**। निषीदन्ति सुरा अत्रेति निषधः। 'गोचरसञ्चर—' (३. ३. ११९) इत्यादिना चकारस्यानुक्तसमुच्चयार्थत्वाद् घः। 'सदिरप्रतेः' (८. ३. ६६) इति षत्वम्। पृषोदरादित्वाद् दकारे धकारः। विन्ध्यः यकारान्तः। पारियात्र एव पारियात्रकः। अन्तस्थावान्। तथा च योगयात्रायां वराहयमकं—

"लब्धे महान् सम्यगवाप्य यात्रां ससह्यविन्ध्याचलपारियात्राम्"

इति। गन्धैर्मादयति तर्पयतीति गन्धमादनम्। 'मदी हर्षग्लपनयोः' इत्यत्र मित्संज्ञा न भवति, माद्यतेस्तर्पणार्थत्वात्। न गच्छतीति नगः। 'अन्येभ्योऽपि—' (वा० ३. २. १०१) इति डः। 'नगोऽप्राणिष्वन्यतरस्याम्' (६. ३. ७७) इति नकारस्य वा प्रकृतिवद्भावः। आदिना मलयदर्दुरादयः ॥

**पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।**

क्षीर० — पिनष्टि, प्रस्तृणाति, गिरति, उपलाति, अश्नाति, शिनोति, दृणाति, इति वाक्यानि ॥

टीका० — पाषाणादयः सप्त **प्रस्तरे**। पाषाणो मूर्धन्यष इति वर्णदेशना। प्रस्तृणातीति प्रस्तरः। पचादिः। उप समीपं लातीत्युपलः। 'आतश्चोपसर्गे' (३. १. १३६) इति कप्रत्ययान्तः। 'अशू व्याप्तौ'। 'अन्येभ्योऽपि—' (३.२.७५) इति मनिन्। अश्मा। नान्तः। शिलेति। 'शिल उञ्छे'। इगुपधलक्षणः कः। दृणातेः

१. 'धः । वि' घ. ङ. च. छ. ज. झ. पाठः. २. 'रा' क. ख. घ. ङ. च. छ. झ. पाठः.

पुग् ह्रस्वश्च' (उ० १. १३६) इति अदिप्रत्ययेन दृषद् दान्ता मूर्धन्यषा। साहचर्यात् स्त्रीत्वम्। चान्द्राणां तु शरद् दरद् दृशद् इति दृशेः तालव्यशा॥

**कूटोऽस्त्री शिखरं शृङ्गं**

**क्षीर० — कूटयति कूटं कूट्यते वा वातदावाभ्याम्। 'कूट दाहे'। शिखा अस्यास्ति शिखरम्। 'शिखाया ह्रस्वश्च' (उ० ५. २) इति रः। शृणाति शृङ्गम्॥**

**टीका०** — कूटत्रयं शृङ्गे। 'कूट परिदाहे'। चुरादिः। पचाद्यच्। शिखायां रोहतीति शिखरः। 'अन्येभ्योऽपि—' (वा०३. २. १०१) इति डः। 'ङ्यापोः—' (६. ३. ६३) इत्यादिना ह्रस्वः। 'शिखरी द्रुमशैलयोः' इति तालव्यादावजयः। अस्त्री शिखरमिति सम्बन्धः।

"धारान्धकारशिखरसहस्राङ्गारतोरणाः"

इति पुन्नपुंसकाधिकारे चन्द्रगोमी। 'शृणातेर्ह्रस्वश्च' (उ० १. १३१) इति गन्। किच्च सः। शृङ्गम्॥

**प्रपातस्त्वतटो भृगुः॥ ४॥**

**क्षीर० — प्रपतन्त्यस्मात् प्रपातः। तटशून्योऽतटः। तटो भृगुरिति पाठे प्रपत्यते यतस्तटात् स भृगुः। बिभर्ति भृज्ज्यते वा भृगुः॥**

**टीका०** — प्रपातत्रयम् **अरड इति ख्याते**। प्रपतन्त्यस्मादिति प्रपातः। 'अकर्तरि च—' (३. ३. १९) इत्यादिना घञ्। न तटः अतटः। 'भ्रस्ज पाके'। 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उ० १. २८) इति कुः। न्यङ्क्वादि कुत्वम्। भृगुः॥

**कटकोऽस्त्री नितम्बोऽद्रेः**

**क्षीर० — कटत्यावृणोति कटकः। मध्यमभागो मेखलाख्यः॥**

**टीका०** — कटकद्वयं **पर्वतकटिप्रदेशे**। 'कटे वर्षावरणयोः'। 'कुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ०२. ३५) इति क्वुन्॥

१. 'स्वत्वम्।' ङ. छ. ज. पाठः.

**स्नुः प्रस्थः सानुरस्त्रियौ ।**

क्षीर० — स्नौत्यम्भस्तस्मात् । प्रतिष्ठन्तेऽस्मिन् समभूभागत्वात् प्रस्थः । घञर्थे कः । सनोति ददाति सुखं सानुः । 'षणु दाने' । द्वित्वात् प्रस्थोऽप्यस्त्री ॥

टीका०—स्नुत्रयं पर्वतैकदेशीयसमभूभागे । 'सानुः समा गिरेः क्षितिः' इति नाममाला । 'ष्णा शौचे' । 'पृभिदिव्याधिगृधिधृषिभ्यः' (उ० १. २३) इति बहुलवचनात् कुः । स्नुः । प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः । 'घञर्थे कविधानं कर्तव्यम्' (वा०३. ३. ५८) इति कः । 'षण सम्भक्तौ' । 'दृसनिजनिचरिचटिभ्यो ञुण्' (उ०१. ३) । सानुः ॥

**उत्सः प्रस्रवणं**

क्षीर०—उ(न्द[1]न)त्त्यम्भसा उत्सः । प्रस्रवन्त्यस्मात् प्रस्रवणम् ॥

टीका० — पर्वतात् स्रुत्वा एकत्र स्थिते जलसङ्घाते उत्सद्वयम् । 'उन्दिगुधिकु*सिभ्यः कित्' (उ० ३. ६६) इति सः । प्रस्रवणं दन्त्यवत् ॥

**वारिप्रपातो निर्झरो झरः ॥ ५ ॥**

क्षीर०—निर्झीर्यते निर्झरः । प्रपाताम्बु । 'निर्झरो झरा' इत्येके ॥

टीका० — निर्झरद्वयं स्रुत्वा स्रुत्वा अन्यथा वा वारिप्रवाहे । 'जॄष् झॄष् वयोहानौ' । 'ऋदोरप्' (३. ३. ५७) । निर्झरः । एवं झरोऽपि । 'स्त्रियां झरीत्यपी'ति धातुप्रदीपादिः ॥

**दरी तु कन्दरो वा स्त्री**

१. 'मभा', २. 'नमिति' ङ. छ. पाठः.

* 'कुषिभ्यः' इति मुद्रितोणादिपाठः

क्षीर०—दीर्यति दरी। पचादिः[1]। कुत्सितं दीर्यति कं दृणाति वा कन्दरा स्त्री। पक्षे रूपात् पुमान्। निर्दरोऽपि॥

टीका०—दरीद्वयं कृत्रिमेऽकृत्रिमे वा पर्वतविवरे। 'दॄ विदारणे'। 'ऋदोरप्' (३. ३. ५७)। गौरादिर्ङीष्। केन जलेन दीर्यत इति कन्दरः। स्त्रियां टाप्॥

देवखातबिले

क्षीर०—समे इत्यर्थः। देवखातमकृतकम्। 'बिल भेदने'॥

गह्वरं गुहा।

क्षीर०—गूहति गुहा। अगे हरति गाहते वा गह्वरम्। अकृतकबिलविषये गुहा गह्वरं चेत्येके पूर्वेण सह सम्बध्नन्ति। यत् कात्यः—'देवखातं बिलं गुहा'। शाश्वतोऽप्याह—'गह्वरं बिलदम्भयोः'॥

टीका०—देवैरेव खाते बिले गुहाद्वयम्। 'गुहू संवरणे'। 'गुहा गिर्योषध्योरि'ति भिदादिपाठादङ्। यद्यपि गिरौ वाच्ये अङ् भवति, तथापि समुदाये प्रवृत्ताः क्वचिदेकदेशेष्वपि वर्तन्ते। 'गाहू विलोडने'। 'छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंय*द्वरोपह्वराः' (उ० ३. १) इति निपातनाद् गह्वरः॥

गण्डशैलास्तु च्युताः स्थूलोपला गिरेः॥ ६॥

क्षीर०—गण्डाः शैला इव स्थूलाश्मानः। च्युताः भूकम्पादिना गलिताः।

"दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः"॥

टीका०—भूकम्पादिना गिरेश्च्युता महोपला गण्डशैलाः॥

खनिः स्त्रियामाकरः स्यात्

१. 'दिर्दरट्। कु' क. ग. घ. ङ. पाठः.

* 'द्वराः' इति मुद्रितोणादिपाठः।

क्षीर० — खन्यन्ते लोहादयोऽस्याः खनिः। खानिश्च। आकीर्यन्ते धातवोऽस्मिन्नाकरः। गञ्जोऽपि। यच्छाश्वतः —

"भाण्डागारे विदुर्गञ्जं खनौ गञ्जां सुरागृहे" ॥

टीका० — खनिद्वयं सुवर्णरत्नाद्युत्पत्तिस्थाने। खन्यते इति खनिः। 'खनि[1]कस्यञ्ज्यसिवसिध्वनिवनिसनिग्रन्थिचरिभ्यश्च' (उ० ४. १४१) इति इः। आकारश्च। 'खनिः खानिरि'ति व्याडिः। किरतेः 'पुंसि संज्ञायां—' (३. ३. ११८) इत्यधिकरणे घः। आकरः॥

पादाः पर्यन्तपर्वताः

क्षीर० — मुख्यशैलान्ते क्षुद्रपर्वताः पादा इवाधःस्थत्वाद् धारणाच्च॥

टीका० — मूलपर्वतस्यान्ते परिवृत्य स्थितेषु पादद्वयम्। 'पद गतौ'। 'पदरुजविशस्पृशो घञ्' (३. ३. १६) पादाः॥

उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका॥ ७॥

क्षीर० — अद्रेर्भूमिरित्येव। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (५. २. ३४)। 'न यासयोः' (७. ३. ४५) इत्यत्र त्यकन उपसंख्यानादित्त्वाभावः॥

टीका० — अद्रेरासन्ना प्रत्यासन्ना भूरुपत्यका। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (५. २. ३४) इति त्यकन्। अद्रेरुपरिभूमावधित्यका। पूर्ववत् त्यकन्नादि। 'न यासयोः' (७. ३. ४५) इति प्रतिषेधे 'त्यकन उपसंख्यानम्' (वा० ७. ३. ४९) इति इत्त्वप्रतिषेधः। भट्टिना तु समीपभूमात्रे प्रयुक्ता। तथाहि —

---

१. 'कञ्च्य' क. ख. च. झ., 'कस्यसि' ज. पाठः.

† 'कष्यज्यसिवसिवनिसनिध्वनिग्र —' इति मुद्रितोणादिपाठः।

"समुद्रोपत्यका हैमी पर्वताधित्यका पुरी।
रत्नपारायणं नाम[1] लङ्केयं[2] मम मैथिलि!॥" (स० ९. श्लो० ८७)

इति। अतोऽद्रेरित्युपलक्षणमात्रम्। उदाहरणं च यं कञ्चिदधिकृत्य कर्तव्यमित्येतावता पर्वतस्य च प्रकृतत्वादद्रेरासन्ना भूमिरित्युक्तम्॥

**धातुर्मनःशिलाद्यद्रेः**

**क्षीर०**—धत्ते धातुः। आदिशब्दाद् हिङ्गु[3]लिकादि। यदाहुः—

"सुवर्णरूप्यताम्राणि हरितालमनःशिलाः॥
गैरिकाञ्जनकांसीयलोहसीसाः सहिङ्गुलाः।
गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः॥"

**टीका०**—मनःशिला हरितालादिः। अश्मविकारो धातुः। 'सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्' (उ० १. ७२)॥

**गैरिकं तु विशेषतः।**

**क्षीर०**—विशेषेणै[4]व धातुः धातुशब्दे[5]नैव प्रसिद्धः। गैरिकमि[6]त्येके। गिरौ भवमिति गिरिणा विग्रहो गिरिकादण्॥

**टीका०**—पूर्वेण सामान्यतो विशेषतश्च सिद्धे वचनं नियमार्थम्। गैरिकमेव विशिष्टं धातुरुच्यते[7] न मनःशिलादिः। गिरौ भवं गैरिकम्। अध्यात्मादित्वात् ठक्॥

**निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे॥ ८॥**

**क्षीर०**—स्थान इति शेषः। कुञ्जिरावरणार्थः लोकात्। व्यधिकरणे सप्तम्यौ॥

**टीका०**—निकुञ्जद्वयं पर्वतादेर्लतापल्लवतृणादिभिः समन्ताच्छादिते

१. 'म्रा', २. 'ति' ङ. छ. पाठः. ३. 'ङ्गलादि' ख. पाठः. ४. 'ण धातुः' ङ. पाठः. ५. 'ब्देन प्र', ६. 'कं हमि' ख. पाठः. ७. 'ते म' क. ख. घ. च. ज. झ. पाठः

गह्वरादिनिम्नभागे। 'कुजि अव्यक्ते शब्दे'। 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ्। 'न क्वादेः' (७. ३. ५९) इति कुत्वाभावः। निकुञ्जकुञ्जावित्यनेनान्योपसर्गनिवृत्तिः। उदरमिवोदरम् उपमानादिति ॥

इति शैलवर्गः।

## अथ वनौषधिवर्गः।

**अटव्यरण्यं विपिनं गहनं**

**क्षीर०** — अटन्त्यस्यामटवी। इयर्ति भ्राम्यत्यत्रेत्यरण्यम्। वेपन्ते भयेनात्र विपिनम्। 'वेपितुह्योर्ह्रस्वश्च' (उ० २. ५५) इतीनच्*। गाह्यते गहनम् ॥

**काननं वनम्।**

**क्षीर०** — कन्यते गम्यतेऽस्मिन् काननम्। वन्यते सेव्यते वनम्। वृक्षबहुलं स्थानम्। पूर्वैः सहानयोरैक्यमाहुः। सत्रं नानार्थे ॥

**टीका०** — अटवीषट्कं वने। अटन्तीत्यटाः। पचादि[1]:। अटाः वयः पक्षिणोऽत्रेत्यटविः। पक्षे 'कृदिकारात्—' (ग० ४.१.४५) इति ङीष्। 'ऋ गतौ'। 'अर्तेर्मित्' (उ० ३. १०२) इत्यन्यप्रत्ययः। 'अट्कुप्वा—' (८. ४. २) दिना[2] णत्वम्। अरण्यम्। 'टुवेपृ कम्पने'। तुहिनवद् विपिनम्। 'गाहू विलोडने'। 'बहुलमन्यत्रापि' (उ० २. ८१) इति युच्। बहुलवचनाद्ध्रस्वत्वम्। गहनम्। 'कनी दीप्त्यादौ'। हेतुमण्ण्यन्ताद् गहनवद् युच्। काननम्। 'वनु याचने'। पचाद्यच्। वनम् ॥

**महारण्यमरण्यानी**

---

१. 'द्यच्। अ' घ. ङ. छ. पाठः. २. 'दिण' क. ख. च. ज. झ. पाठः.

* अन्यत्रायं नित् पठ्यते

क्षीर० —'हिमारण्ययोर्महत्त्वे' (वा० ४. २. ४९) ङीबानुकौ॥

टीका० — महारण्यद्वयं महावने। हिमानीवदरण्यानी॥

**गृहारामास्तु निष्कुटाः॥ १॥**

क्षीर० —कुटाद् गृहान्निष्क्रान्तो[1] निष्कुटाः॥

टीका० —गृहारामद्वयं गृहसमीपरचिते[2] वने। कुटाद् गृहान्निर्गताः निष्कुटाः 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (वा० २. २. १८) इति समासः। 'इदुदुपधस्य चाप्रत्ययस्य' (८. ३. ४१) इति षत्वम्॥

**आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।**

क्षीर० —आरम(न्तेऽन्त्य)स्मिन्नारामः। करणेन निर्वृत्तं[3] कृत्रिमं वनं वृक्षसमूहः। समीपं वनस्योपवनम्। तुल्यत्वेन नैकत्र्यात्॥

टीका० —आरामद्वयं कृत्रिमवने। आरमन्त्यस्मिन्नित्यारामः। 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ्। उपरोपितं वनमुपवनम्॥

**अमात्यगणिकागेहोपवने वृक्षवाटिका॥ २॥**

क्षीर० — अमात्यगणिकयोरुपलक्षणत्वात् सार्थवाहादीनामपि॥

टीका० — अमात्यानां गणिकानां च गृहारामे वृक्षवाटिका। वृक्षसहिता वाटिकेति शाकपार्थिवादिः॥

**पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्।**

क्षीर० —आक्रीडन्त्यस्मिन्नाक्रीडः। उद्यान्त्यस्मिन्नुद्यानम्। साधारणं राज्ञीभिः सह॥

१. 'न्तो निष्कुटः॥' ख. पाठः. २. 'तव' क. ख. च. ज. झ. पाठः. ३ 'त्तः कृत्रिमो वृ' क. ग. ध. ङ. पाठः.

**टीका०** — आक्रीडद्वयं **सर्वोपभोग्ये राज्ञो वने** । आरामवदाक्रीडः । उद्यातीत्युद्यानम् । गहनवद् युच् ॥

**स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥**

**क्षीर० — प्रमदार्थं वनं प्रमदानां वा प्रमदवनम् । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (६. ३. ६३) इति ह्रस्वः । अन्तःपुरं तत्स्था देशाः ॥**

**टीका० — राज्ञो वनं यदन्तःपुरोचितं**, न साधारणं, तत् प्रमदवनम् । 'ङ्यापोः —' (६. ३. ६३) इति ह्रस्वः ।

"प्रमदवनोपकण्ठनलिनीषु लताभवनेषु भूभुजः"

इति ह्रस्वः ।

"रावणे जहिहि द्वेषं जहाहि प्रमदावनम् ।" (स० २०. श्लो० १०)

इति भट्टौ दीर्घवदपि ॥

**वीथ्यालिरावलिः पङ्क्तिः श्रेणी**

**क्षीर० — वियन्त्यनया वीथी । आलाति आवलति पञ्च्यते श्रीयते इति वचनानि ॥**

**टीका०** — वीथीपञ्चकं **पङ्क्तिमात्रे** । वीथीति विपूर्वादिणः 'समीणः' (उ० २. ११) इत्यनेन बाहुलकस्थक् । गौरादिङीष् । 'अल भूषणादौ' । आङ्पूर्वः । 'इन्' (उ० ४. ११९) इति इन् । आलिः । 'वल वल्ल संवरणे' । इन् । आवलिः । 'पचि व्यक्तीकरणे' । 'वसेस्तिः (उ० ९. १८१) इति बाहुलकात् तिप्रत्ययः । 'चोः कुः' (८. २. ३०) इति कुत्वम् । 'इदितो नुम् धातोः' (७. १. ५८) इति नुमागमः । पङ्क्तिः । अथवा पञ्च पदानि परिमाणमस्येत्यर्थे पञ्चन्शब्दात् तिप्रत्ययः । टिलोपः चकारस्य ककारः अकारस्य ङकारः । 'पङ्क्तिविंशति—' (५. १. ५९) इत्यादिना सूत्रेण निपात्यते । 'श्रिञ् सेवायाम्' ।

१. 'क्रोध ज' घ. ङ छ. पाठः. २. 'न् ।' घ. ङ. छ. ज. पाठः.

ह्निवद् निः। श्रेणिः। वीथीवत् पक्षे 'कृदिकारात्—'(ग० ४. १. ४५) इति ङीषि दीर्घान्ता। श्रेणी॥

क्षीर०—सान्तरा पङ्क्तिः। निरन्तरा लेखा। यदाह—

**लेखास्तु राजयः।**

लिख्यन्ते लेखाः। राजन्ते राजयः। पङ्क्त्यपङ्क्तिसाधारणाः॥

टीका०—लेखाद्वयं निरन्तरपङ्क्तौ। लेखेति। 'लिख अक्षरविन्यासे'। भिदादित्वादङ्। टाप्। राजतेर्वापिवदिञ्। राजिः॥

**वन्या वनसमूहे स्याद्**

क्षीर०—पाशादित्वाद् यत्॥

टीका०—वनसङ्घाते वन्या। 'पाशादिभ्यो यः' (४. २. ४९)॥

**अङ्कुरोऽभिनवोद्भिदि॥ ४॥**

क्षीर०—अङ्क्यते अङ्कुरः। 'अकि लक्षणे'। उद्भिद्यते उद्भित्। प्ररोहोऽपि॥

टीका०—अभिनवोत्थिते वृक्षे अङ्कुरः। 'अकि लक्षणे'। मन्दुरावदुरच्। 'अङ्कूरश्चाङ्कुरः प्रोक्त' इति हलायुधः। तथा चाश्वचरिते वसन्तराजः—

"अङ्कूरिते पल्लविते सपुष्पे फलान्विते भूरुहि सारमेये"

इति। उद्भिनत्ति भुवं बीजं चेत्युद्भित्। 'सत्सूद्विष—' (३. २. ६१) इत्यादिना क्विप्॥

**वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।**
**अनोकहः कुठः सालः पलाशी द्रुद्रुमागमाः॥ ५॥**

क्षीर०—वृश्च्यते छिद्यते वृक्षः। वृक्षति वृणोति वा। शाखी। व्रीह्यादौ। पादैर्मूलैः पिबति पादपः। एवमङ्घ्रिपः। चरणपस्त्वप्रसिद्धः। तरन्त्यापदमनेन तरुः। अनसः शकटस्य अकं गतिं हन्त्यनोकहः। निर्वचनाद् द्रुर्वृक्षैकदेशोऽप्यस्ति। द्रुमः। 'द्युद्रुभ्यां मः' (५. २. १०८)

द्रुशब्दोऽपि अवयवेषु हि वृत्ताः शब्दाः समुदायेष्वपि वर्तन्त इति । न गच्छत्यगमः । अगनगौ नानार्थे । कुजशब्दोऽपि ॥

टीका०—वृक्षादयस्त्रयोदश वृक्षे । 'वृक्ष वरणे' । पचादिः । वृक्षः । महीरुह इति । मूलविभुजादित्वात् कर्तरि कः । 'यत्राधिरूढेन महीरुहोच्चैः' इति माघे हलन्तोऽपि । तदा च क्विप् । शाखीति । व्रीह्यादित्वादिनिः । 'अत इनिठनौ' (५.२.११५) इति इनिः । विटपी । पादेन पिबतीति पादपः । 'सुपि' (३.२.४) इति योगविभागात् कः । तरतेः मरुवदुः । तरुः । अनसः शकटस्य अकनं गमनं हन्तीत्यनोकहः । 'अन्येष्वपि—' (३.२.१०१) इति डः । 'कु शब्दे' । 'अन्येभ्योऽपि—' (उ० ४.१०७) इति ठः । बाहुलकात् ठस्येकादेशो न भवति । 'कणेष्ठः' (उ० १.१०८) इति बाहुलकाद्वा ठः । कुठः । 'सल गतौ' । घञ् । सालः ।

"सालं सालं विकलिका सालं सालं न वीक्षितुम्"

इति दण्डियमकम् । द्रुरिति । 'हरिमितयोर्द्रुवः' (उ० १.३९) इति केवलादपि द्रवतेर्बाहुलकात् कुः । तत्र च डित्त्वात् टेर्लोपः । 'द्युद्रुभ्यां मः' (५.२.१०८) द्रुमः । न गच्छतीत्यगमः । पचादिः ॥

**वानस्पत्यः फलैः पुष्पात्**

क्षीर०—वनस्य पतिर्वनस्पतिः । पारस्करादित्वात् सुट् । भवेऽर्थे 'दित्यदित्यादित्य—' (४.१.८५) इति ण्यः । पुष्पेभ्यो जातफलैर्हेतुभिः ॥

टीका०—पुष्पाद् जातैः फलैः लक्षितः आम्रादिर्वानस्पत्यः । भवार्थे पूर्ववद् ण्यः ॥

**तैरपुष्पाद् वनस्पतिः ।**

क्षीर०—पुष्पं विना तैः फलैः ॥

टीका०—तैः फलैरपुष्पाज्जातैर्लक्षित उदुम्बरादिः वनस्पतिः । 'पारस्करप्रभृतीनि च संज्ञायाम्' (६.१.१५७) इति सुट् । केचिद् वृक्षवनस्पत्योरभेदमाहुः । तथा च त्रिकाण्डे—

"विष्टरोऽस्त्री द्रुमः सालो वनस्पतिरनोकहः" ॥

**ओषधिः फलपाकान्ता**

**क्षीर०— ओषं रुजं धयत्योषधिः । फलपाक एवान्तोऽस्याः ॥**

**टीका०— फलपाकेन नश्वरस्वभावे धान्यकदल्यादावोषधिः ।** ओषो दाहो धीयते अत्रेति ओषधिः । 'कर्मण्यधिकरणे च' (३. ३. ९३) इति किः । ङ्यन्तापि ओषधिः । रूपभेदात् स्त्रीत्वम् ॥

**स्यादवन्ध्यः फलेग्रहिः ॥ ६ ॥**

**क्षीर — फलानि गृह्णातीति 'फलेग्रहिरात्मम्भरिश्च' (३. २. २६) इति साधुः ॥**

**टीका०** — अवन्ध्यद्वयम् ऋतुकाले फलधरे वृक्षे । फलानि गृह्णाति धारयतीति फलेग्राहिः । 'फलेग्रहिरात्मम्भरिश्च' (३. २. २६) इति निपातितः ॥

**वन्ध्योऽफलोऽवकेशी च**

**क्षीर० — बध्नाति (अ)[1]फलं वन्ध्यः । अवकं शून्यम् ईष्टे अवकेशी ॥**

**टीका०**— वन्ध्यत्रयम् ऋतुकालप्राप्तावपि **फलहीने** । 'बन्ध बन्धने' । 'अघ्न्यादयश्च' (उ० ४. ११३) इति यत् । वन्ध्यः । फलं यस्य नास्ति, सोऽफलः । केश इव केशः । अवध्वस्तः केशैः[2] अवकेशः । सोऽस्यास्तीत्यवकेशी । इनिः ॥

**फलवान् फलिनः फली ।**

**क्षीर० — फलं बहस्यास्तीति । 'फलबर्हाभ्यामिनच्' (वा० ५. २. १२२) ॥**

**टीका०**— फलवत्त्रयं **वर्तमानफले** । 'फलबर्हाभ्यामिनच्' (वा० ५. २. १२२) । फलिनः । फलीति । अत इनिः ॥

---

१. 'ति बलं' क. ग. घ. ङ. पाठः. २. 'शः सो' क. ख. च. ज. झ. पाठः.

**प्रफुल्लोत्फुल्लसम्फुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥**

**फुल्लश्चैते विकसिते**

क्षीर० — प्रफुल्लति स्म प्रफुल्तः। 'ञिफला विशरणे'। क्तः। 'उत्परस्यातः' (७. ४. ८८) इत्युत्वम्। 'अनुपसर्गात् फुल्लक्षीब —' (८. २. ५५) इति साधुः फुल्लः। उत्फुल्लसम्फुल्लावुपसंख्यानात्। प्रफुल्लेति पाठे 'फुल्ल विकसने'। अच्। विगत आकोशः सङ्कोचोऽस्य व्याकोशः। विशेषेण कचति विकचः। स्फुटति ॥

टीका० — प्रफुल्ताष्टकं विकासितपुष्पे। प्रफुल्तस्तोपधः। 'ञिफला विशरणे'। 'ञीतः क्तः' (३. २. १८७)। 'ति च' (७. ४. ८९) इति उपधाया उकारः। 'आदितश्च' (७. २. १६) इति इडभावः। निष्ठातकारस्य लत्वं नास्ति, सोपसर्गत्वात्। तथा च 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (८. २. ५५) इत्यत्र वृत्तावुक्तम् — 'अनुपसर्गादिति किं, प्रफुल्ताः सुमनसः' इति। यत्तु धातुप्रदीपे 'फुल्ल विकसने। प्रफुल्ल' इति दर्शितं, स विकासवाची घञन्तः। उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानाद् लत्वम्। उत्फुल्लसम्फुल्लौ। व्याकोषो मूर्धन्यषः तालव्यशो वा। 'कच बन्धने'। पचाद्यच्। विकचः। 'स्फुट विकसने'। इगुपधलक्षणः कः। स्फुटः। फुल्ल इति। 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (८. २. ५५) इति लत्वम्। विकासितम्। 'क्षितौ विकसितं सितम्' इति कीचकवधे दन्त्यमध्यम् ॥

**स्युरवन्ध्यादयस्त्रिषु।**

क्षीर० — वाच्यलिङ्गत्वात् ॥

टीका० — अवन्ध्यादयो विकसितान्तास्त्रिषु ॥

**स्थाणुरस्त्री ध्रुवः शङ्कुः**

क्षीर० — तिष्ठति ध्रुवति शङ्कतेऽस्मात् ॥

१. 'प्रा' क. ख. घ. ङ. छ. ज. पाठः.

टीका० — स्थाणुत्रयं मुण्ड इति ख्याते । स्थाणुरुक्तः । पक्षे[1] रूपभेदा[†] नपुंसकम् । ध्रुवशङ्कू तारकयादोभेदपर्याय एवोक्तौ ॥

हृस्वशाखाशिफः क्षुपः ॥ ८ ॥

क्षीर० — सुसूक्ष्मलतादिप्रतानः । क्षौति दह्यमानो वा (?) ॥

टीका० — यस्य शाखाः हृस्वाः शिफाश्च शाखोटकादेः, स क्षुपः ॥

अप्रकाण्डे स्तम्बगुल्मौ

क्षीर० — प्रकाण्डो ग्रन्थिः[2] । तद्रहित उद्भिद्विशेषस्तृणसङ्घो वा स्तम्बः । तिष्ठतीति । 'स्थः स्तोऽम्बजबकौ च' (उ० ४. ९७) । गुडति गुल्मः । नानार्थे विटपः ॥

टीका० — स्तम्बद्वयमपगतप्रकाण्डे बहुपत्रे मल्लीविटपादौ । प्रकाण्डश्च शाखातः पूर्वो भागः । 'स्थः[3] स्तोऽम्बाम्बकौ च' (उ० ४. ९७) इति तिष्ठतेरम्बप्रत्ययः[4] स्तादेशश्च । स्तम्बः ॥

वल्ली तु व्रततिर्लता ।

क्षीर० — वलति वेष्टते वल्ली । गुलूच्यादिर्माधव्यादिश्च । वृक्षशाखापि । यच्छाश्वतः —

"लता प्रतातिराख्याता लता शाखा च शाखिनाम् ।"

प्रकृष्टा तातिरस्याः व्रततिः । जपादि(?)त्वाद् वत्वम् । लाति लता ॥

टीका० — वल्लीत्रयं लतायाम् । 'वल वल्ल संवरणे' । पचादिगौरादी । इप्रत्यये वल्लिरपि । तथा च प्रयोगः —

" गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लिषु "

१. 'क्षे तु रू' क. पाठः. २. 'गण्डः ।' ग. घ. ङ., 'जङ्घः ।' क. पाठः. ३. 'स्थस्तो', ४. 'यस्ता' क. ख. घ. ङ. छ. पाठः. ५. 'इनिप्र' क. ख. घ. ङ. छ. ज. ञ. पाठः.

† 'स्थाणु वा ना ध्रुवः' इति टीकासर्वस्वपाठः स्यात् ।

इति । प्रपूर्वात् तनोतेः क्तिन् । प्रततिः ।

"प्रस्थः सानुनि माने च प्रततिस्तरुवीरुधोः"

इति पकारादावजयः । माघे तु वकारादिङीषन्त[1]प्रयोगोऽव्यु[2]त्पन्नो दृश्यते । प्रपूर्वात् क्तिन्नन्तत्वे ङीष् न स्यात् । तथा च माघः—'धराधरेन्द्रं व्रततीततीरिव' (स० १. श्लो० ५) इति । उणादौ तु 'क्तिभिदिलतिभ्यः कित्' (उ० ३. १४८) इत्यत्र लतिः सौत्रः । तत्र लता ॥

**लताप्रतानिनी वीरुद् गुल्मिन्युलपमित्यपि ॥ ९ ॥**

क्षीर०—लतानां प्रतानोऽस्त्यस्याः प्रतानिनी लता वा वीरुत् । यत् कात्यः—

"वीरुत् सुपर्णजटिला प्रतानशतगामिनी ।"

विरुणद्धि विरोहति वा वीरुत् । 'अन्ये[3]षामपि दृश्यते' (६. ३. १३७) इति दीर्घः । न्यङ्क्वादित्वाद् धत्वम् । उलते उलपम् । उलः सौत्र आवरणार्थः । उल्लुप्यते वा ॥

टीका०—प्रतानः शाखापत्र[4]सञ्चयः । तद्युक्ता गुडूचीचित्रपुष्पादिलता वीरुदादित्रिकवाच्या । विविधं रोहतीति वीरुत् । क्विप् । 'न्यङ्क्वादीनां च' (७. ३. ५३) इति हकारे धकारः । 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः । उच्यते । 'विटपविष्टपा'दिसूत्रेण (उ० ३. १४५) कपन् चकारस्य लकारः । उलपम् । वल्ल्यादिसप्तकेनैव लतोच्यत इति केचित् । तथा च पुनर्लतेत्यनुवादः । तेनायमर्थः—लतैव प्रतानिन्याद्युच्यते ॥

**नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।**

क्षीर०—आरुह्यते आरोहः । औन्नत्यम् । उच्छ्रयणमुच्छ्रायः । 'उदिश्रयतियौति—' (३. ३. ४९) इत्यनित्यो घञ् । यल्लक्ष्यं—'पतनान्ताः समुच्छ्रयाः' । उत्सेध उद्गतिः । यच्छाश्वतः 'उत्सेधौ वपुरुन्नती' ॥

१. 'न्ते' घ. ङ. च. छ. पाठः. २. 'प्युपपन्नो' क. पाठः. ३. 'न्येभ्योऽपि' क. ङ. पाठः. ४. 'त्रचयः' घ. ङ. छ., 'त्रप्रचयः' क. ख. ज. झ. पाठः.

टीका०—नगादीनामारोहे ऊर्ध्वरूपतया दैर्घ्यं उच्छ्रायत्रयम्। आदिना गिरिदेवकुलादेर्ग्रहणम्। 'श्रिञ् सेवायाम्'। 'उदिश्रयतियौति—'(३.३.४९) इत्यादिना भावे घञ्। उच्छ्रायः। 'सिधु गत्याम्'। भावे घञ्। उत्सेधः। श्रयतेः 'एरच्' (३.३.५६)। उच्छ्रयः। यद्यपि 'उदिश्रयति—' इत्यादिना नित्यवद् घञ्, तथापि सिंहावलोकितेन 'विभाषाङि रुप्लुवोः' (३.३.५०) इत्यत्र विभाषाग्रहणमनुवर्तते॥

**अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः॥१०॥**

क्षीर०—प्रकाण्ड्यते प्रकाण्डो वृक्षजङ्घा। स्कन्ध्यते आरुह्यते स्कन्धः॥

टीका०—प्रकाण्डद्वयं वृक्षस्य मूलादारभ्य शाखापर्यन्ते। स्कन्धशब्दोऽदन्तोऽव्युत्पन्नः। तथा च माघे—

"सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्" (स० २. श्लो० २८)

इति। 'स्कन्धः समुदयेऽपि वा' इत्ययमेव वक्ष्यति। उणादौ 'स्कन्देश्च स्वाङ्गे' (उ० ४.२०८) इत्यनेनैव सूत्रेण 'स्कन्दिर् शोषणे' इत्यतो धादेशासुन्भ्यां सकारान्तो नपुंसकश्चोक्तः॥

**समे शाखालते**

क्षीर०—'शाखृ व्याप्तौ'। इर्य(न्ते?तेः) खो वा। शिखापि॥

टीका०—शाखाद्वयं तालें इति ख्याते। 'शाखृ व्याप्तौ'। अच्। शाखा। तालव्यादिः। लता उक्ता। समे इत्यधिकारः शिफाजटे इति यावत्॥

**स्कन्धशाखासाल**

क्षीर०—समे इत्येव। सीयते साला। शालेति शाश्वतः—

१. 'दा' क. ख. पाठः. २. 'श्यन्ते खं वा' क. ग. घ. पाठः. ३. 'लव्य इ' क. पाठः,

"शाला तरुस्कन्धशाखा शाला भवनमिष्यते" ॥

टीका० —स्कन्धशाखाद्वयं तरुप्रकाण्डनिर्गतायां प्रधानशाखायाम्। स्कन्धाद् निर्गता शाखा स्कन्धशाखा । मत्स्ये शाल उक्तः । टापि शाला ॥

**शिफाजटे ।**

क्षीर०— शिनोति शेतेऽधो वा शिफा । जटति जटनं वा जटा। वृक्षादिमूलम् । 'जट सङ्घाते' । भिदाद्यङ् ॥

टीका०— शिफाद्वयं शिहड[1] इति ख्याते । शयात् तिर्यक् स्फायतीति शिफा । पृषोदरादिः । 'शिथिलशिफाशलशेफाः' इति शभेदः । जटेति । 'जट झट सङ्घाते' । पचादिः ॥

क्षीर० —एवं शिफालतयोः पर्ययानुक्त्वा रूपमाह—

**शाखाशिफावरोहः स्याद्**

अवरोहन्ती शाखाशिफा शिफारूपा शाखा (वा) अवरोहोऽश्वत्थादेरित्युपाध्यायः ॥

टीका०— वटादिशाखायाः शिफायामवरोहः । शाखावलम्बिनी शिफा शाखाशिफा । रुहेः पचाद्यचि अवरोहः ॥

क्षीर०— बुध्नादूर्ध्वं गता लता । यदाह—

**मूलाच्चाग्रं गता लता ॥ ११ ॥**

टीका०— तरुमूलात् प्रभृति वृक्षाग्रं यावद् गता गुलूच्यादिलता साप्यवरोहश्च । एतत् तु प्रसङ्गेनोक्तम् ॥

**शिरोऽग्रं शिखरं वा ना**

१. 'शी' ङ. छ. पाठः. २. 'स' घ. ङ. छ., 'श' झ. पाठः.

क्षीर०— वृक्षादेर्मूर्धा अग्राख्यः। शिखरं तु वा ना पक्षे पुमान्। रूपात् पक्षे क्लीबे ॥

टीका०— शिरआदित्रयं वृक्षाग्रे। 'श्रयतेः स्वाङ्गे शिरः किच्च' (उ० ४. १९५) इत्यसुन्शिरादेशौ। शिरः। 'अक अग कुटिलायां गतौ'। उग्रवद् रः। अग्रम्। शिखरं वा नेति सम्बन्धः ॥

**मूलं बुध्नोऽङ्घ्रिनामकः।**

क्षीर०— 'मूल रोहणे'। बुध्यन्तेऽनेन बुध्नः। वृक्षादेः पादपर्यायः॥

टीका०— मूलद्वयं वृक्षमूले। अङ्घ्रिनामकः पादपर्यायनामक इत्यर्थः। 'मूल रोहणे'। चुरादिः। पचाद्यच्। मूलम्। सूर्ये बुध्न उक्तः। उकारवांश्चायम्। तथा च राजशेखरः—

"निवेश्य बुध्ने चरणं स्मिताननना भुजेन काण्डं कलयावलम्ब्य च"

इति। रेफवत्पाठे छन्दोभङ्गः ॥

**सारो मज्जा नरि**

क्षीर० — सरति सारः। 'सृ स्थिरे' (३. ३. १७) घञ्। मज्जति मज्जा। नरि पुंसि ॥

टीका०— सारद्वयं वृक्षस्य सारभागे। कालान्तरं सरतीति सारः। 'सृ स्थिरे' (३. ३. १७) इति घञ्। एवं दन्त्यादिः। मज्जा नान्तः। मघव(व)त्[1] कनिना 'टुमस्जो शुद्धौ' इत्यतो निपातितः।

"अथ मज्जा द्वयोरस्थिस्नेहे[2]शुक्रकरो बली"

इत्युत्पलिन्यां धातौ टाबन्ता। तत्र हि द्वयोरिति पुंक्लीबयोरिति परिभाषितम्। तन्निषेधोऽकारप्रश्लेषात्। 'केलिः प्रदहति मज्जाम्' इत्यार्याकोशश्च ॥

**त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ॥ १२ ॥**

१. 'त् दु' घ. ङ. च. छ. पाठः. २. 'हः शु' घ. ङ. छ. पाठः

क्षीर० — 'त्वच संवरणे'। वल्यते छाद्यतेऽनेनेति वल्कम्। 'वल संवरणे'। वल्कं लाति वल्कलं श्यामलवत्॥

टीका० — त्वक्त्रयं वल्कले। आवृणोति वृक्षमिति त्वक्। 'त्वच संवरणे'। क्विप्। 'वल वल्ल संवरणे'। 'शुकवल्कोल्काः' (उ० ३. ४२) इति कन्। वल्कम्। अस्मादेव 'कलच्' (उ० ४. ९) इत्यनेन कलच्। वल्कलम्। 'मुसलं मूलवल्कलम्' इति पुंस्काण्डाधिकारे चन्द्रगोमी॥

**काष्ठं दारु**

क्षीर० — काशते काष्ठम्। दीर्यते दारु॥ विशेषमाह—

टीका० — काष्ठद्वयं काष्ठमात्रे। दिशि काष्ठोक्ता। 'दॄ विदारणे'। 'दॄसनिजनि —' (उ० १. ३) इत्यादिना ञुण्। दारु। 'पुन्नपुंसकयोर्दारुः' इति त्रिकाण्डशेषः॥

**इन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्।**

क्षीर० — इध्यतेऽनेनाग्निरिन्धनम्। इध्मं च। 'इषियुधीन्धि —' (उ० १. १५०) इति मक्। आद्यमेधेरसुनि दाव्यदार्वर्थे। पर एधः 'अवोदैधौद्म —' (६. ४. २९) इति इन्धेर्घञि साधुः। होमार्थे समिध्यतेऽनया अग्निः समित्॥

टीका० — इन्धनपञ्चकमग्निदीपनमात्रे काष्ठतृणादौ। 'ञिइन्धी दीप्तौ'। करणे ल्युट्। इन्धनम्। 'एध वृद्धौ'। 'असुन्' (उ० ४. १९०) इत्यसुन्। एधः।

"एध इन्धनमिध्मं स्यादेधः पुंसि समित् स्त्रियाम्"

इति क्लीबकाण्डे अमरमाला। होमीये त्विन्धने समिदिध्मयोर्बहुलः प्रयोगः। इध्ममिति। 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' (उ० १. १५०)। कित्त्वादनुनासिकलोपः। 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ्। एधः। अदन्तोऽपि। सम्पूर्वादिन्धेः सम्पदादिक्विप्। समिद् धान्ता॥

**निष्कुहः कोटरं वा ना**

क्षीर० — निष्कुह्यते निष्कुहयते वा निष्कुहः । निष्कुट इत्येके । कुटति कोटरः विष्वग्गर्तः । रूपात् पक्षे क्लीबे ॥

टीका० — निष्कुहद्वयं वृक्षकोटरे । 'कुह विस्मापने' । मूलविभुजादिः । 'इदुदुपधस्य चाप्रत्ययस्य' (८. ३. ४१) इति षत्वम् । निष्कुहः । 'कुट कौटिल्ये' । 'ऋच्छेररन्' (उ० ३. १३१) इति बाहुलकोऽरन् । कोटरम् ॥

**वल्लरी मञ्जरी स्त्रियौ ॥ १३ ॥**

क्षीर० — मन्यते मञ्जरी । लतादेर्नवोद्भित् ॥

टीका० — वल्लरिद्वयं तालवल्ल्यादौ । 'वल वल्ल संवरणे' । 'ऋतन्यञ्जिवनि—' (उ० ४. २) इत्यादिना बाहुलकोऽलिच्प्रत्ययः । रलयोरेकत्वस्मरणम् । वल्लरिः । 'वासिवाल्लिभ्याम्' इति सौत्राद्वा वल्लेर्धातोरालिच्प्रत्ययः । मञ्जं रातीति मञ्जरिः । पृषोदरादिः । पक्षे द्वयं ङीषन्तम् ॥

**पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।**

क्षीर० — पतति पत्रम् । पलं श्यति शात्यते वा पलाशम् पल गतौ वा । छाद्यतेऽनेनेति छदनम् । वाक्यादः (?) 'छादेर्घेऽद्व्युपसर्गस्य' (६. ४. ९६) इति ह्रस्वः । दलति दलम् । पिपर्ति पर्णम् । पटिः पत्रसिरा ॥

टीका० — पत्रादयः षट् पत्रे । 'सर्वधातुभ्यः ष्ट्रन्' (उ० ४. १६०) 'तितुत्रतथसिसुसरकसेषु च' (७. २. ९) इति इट्प्रतिषेधः । पकारो ङीषर्थः । पत्रम् । पलाशं तालव्यान्तम् । 'छद अपवारणे' । 'आधृषाद्वा' इति णिजभावपक्षे 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ल्युट् । छदनम् । 'दल विदारणे' । कर्तरि पचाद्यच् । दलम् । 'पॄ पालनपूरणयोः' । 'धापॄवस्यज्यतिभ्यो नः' (उ० ३. ६) । पर्णम् । छदेरेव ण्यन्तात् पुंसि संज्ञायां घः । 'छादेर्घेऽद्व्युपसर्गस्य' (६. ४. ९६) इति ह्रस्वः । छदः । अदन्तः ॥

१. 'रा' च. पाठः.

**पल्लवोऽस्त्री किसलयं**

क्षीर० — पल्यते पल्लवः। किञ्चित् सलति किसलयं विकसति लीयमानं वा[1]। एतत् पत्रं प्रवालाख्यम्[2]॥

टीका० — पल्लवद्वयं पत्रयुक्ते शाखायाः पर्वणि। 'पुंसि क्लीबे च पल्लवः' इति व्याडिः। 'किसलयैः सलयैरिवे'[3]ति माघयमकात् किसलयो दन्त्यवान्॥

**विस्तारो विटपोऽस्त्रियाम्॥ १४॥**

क्षीर० — शाखादेर्विस्तृतिर्विस्तारः। 'प्रथने वावशब्दे' (३. ३. ३३)। घञ्। विटान् पाति विटपः। यत् कात्यः —

"स्कन्धादूर्ध्वं तरोः शाखा कटपो विटपो मतः।"

विटन्ति उत्क्रोशन्ति अस्माद्वा॥

टीका० — विस्तारद्वयं शाखापल्लवसमुदाये। विस्तारयति तरुमिति विस्तारः। पचादिः। 'वट वेष्टने'। विटपविष्टपादिना (उ० ३. १४५) विटपो निपातितः। केचित् पल्लवादिचतुष्टयमेव एकपर्यायं मन्यन्ते।

"शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्"

इति रभसश्च॥

**वृक्षादीनां फलं सस्यं**

क्षीर० — वृक्षादीनामिति पूर्वेणापि च सम्बध्नन्ति॥

टीका० — वृक्षलतादीनां फले आम्रादौ सस्यम्। 'फल निष्पत्तौ'। अच्। फलम्। 'सस स्वप्ने'। 'माछासासिसूभ्यो यः' (उ० ४. १११)। सस्यं व्रीहिजातिरित्युणादिः। 'शसु हिंसायाम्'। तालव्याद्यपीति वर्णदेशना[4]॥

१. 'वा चैत' ख. ग. घ. ङ. पाठः. २. 'ख्यं चैतत्।' ख. पाठः. ३. 'रिति' घ. ङ. छ. पाठः. ४. 'र्णनिर्देश' घ. ङ. छ. ज. पाठः.

**वृन्तं प्रसवबन्धनम्।**

**क्षीर०— वृणोति वृन्तम्। प्रसवः पुष्पादि। यत् कात्यः— बन्धनं पुष्पफलयोर्वृन्तमाहुः' ॥**

**टीका०** — वृन्तद्वयं **वोण्ठ** इति ख्याते। वृतेर्निष्ठायां पृषोदरादिनत्वम्। [न्तम्। प्रसवः पुष्पफलपत्राणि, तस्य बन्धनम्॥

**आमे फले शलाटुः स्यात्**

**क्षीर०— शं लाति शलाटुः॥**

**टीका०** — **अपक्वे फले** शलाटुः। 'अम गत्यादिषु'। 'अकर्तरि च —' (३. ३. १९) इति घञ्। 'नोदात्तोपदेश—' (७. ३. ३४) इत्यादिना वृद्ध्यभावः। अमः। धातुप्रदीपे तु णिजन्ताद् घञि आमो दीर्घादिः। 'शल[1] चैलनसंवरणयोः'। तालव्यादिः। बहुलवचनाद् आटुः। शलाटुः॥

**शुष्के वानम्**

**क्षीर०— फल इत्येव। 'पै ओवै शोषणे'। 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वम्॥**

**टीका०— फल एव शुष्के बदरादौ** वानम्। 'पै ओवै शोषणे'। क्तः। 'ओदितश्च' (८. २. ४९) इति नत्वम्। वानम्॥

**उभे त्रिषु॥ १७॥**

**क्षीर०— शलाटुवाने अभिधेय[2]लिङ्गे॥**

**टीका०** — उभे शलाटुवाने त्रिषु। शलाटुः कर्कटी[3]। शलाटवो माषाः। शलाटूनि फलानि। एवं वाना हरीतक्य[4]ादिः॥

१. 'व' घ. ङ. छ. पाठः. २. 'यवालिङ्ग' क. ग. घ. ङ. पाठः. ३. [illegible] पाठः. ४. 'क्यादिः'.

**क्षारको जालकं क्लीबे**

क्षीर० — क्षरति प्रसूयते क्षारकम् । जालमिव जालकम् । नवकलिकावृन्दम् ॥

टीका० — क्षारकद्वयं कूश्माण्डादिजालिकायामचिरोद्भूतायाम् । 'क्षर चलने' । घञ् । ततः स्वार्थे कन् । क्षारकः । 'जल धान्ये' । ज्वलादिणः । पूर्ववत् कन् । जालकम् ॥

**कलिका कोरकः पुमान् ।**

क्षीर० — सूक्ष्मा तारिका । कल्यते शब्द्यते कलिका । कुर्यते शब्द्यते कोरकः ॥

टीका० — कलिकाद्वयमविकासितपुष्पे । कलिरेव कलिका । कोरक इति । 'कुर शब्दे' । 'कृञादिभ्यः संज्ञायां वुन्' (उ० ५. ३५) । 'समुपहरन् विचकार कोरकाणि' इति माघे क्लीबम् । अतोऽबहुत्वापेक्षया पुमानित्युक्तम् । केचित् 'कोरकोऽस्त्रियाम्' इत्येव पठन्ति ॥

**स्याद् गुच्छकस्तु स्तबकः**

क्षीर० — पुष्पसङ्घातो रम्यत्वात् स्तूयते इति स्तबकः । गुलुच्छकोऽपि ॥

टीका० — गुत्सकद्वयं पुष्पस्तबके ।

"एकप्ररोहे पुष्पाणि पृथग् यत्र बहूनि तु ।
पुष्पगुत्सः स विज्ञेयो यथा स्यात् करवीरकः ॥"

'गुध पुरीषोत्सर्गे' । उत्सवत् सः । गुत्सः । ततः स्वार्थे क इति वर्णदेशना । रन्तिकोशे चवर्गीय उक्तः । स्तम्बवत् स्तबकः ॥

१. 'कोऽस्त्रियाम्' ख. पाठः. २. 'ते गुच्छ्यते स्त' ग. ङ. पाठः.

**कुड्मलो मुकुलोऽस्त्रियाम् ॥ १६ ॥**

क्षीर०—ईषद्विकसिता कलिका । कुटति कुड्मलः । मुञ्चति कलिकात्वं मुकुलः । भुग्नाद्यास्तु अवान्तरभेदं मन्यन्ते ।

"मुकुलाख्या तु कलिका कुड्मलं जालकं तथा ।
क्षारकं कोरकं चेति" ॥

टीका०—कुड्मलद्वयं विकासोन्मुखकलिकायाम् । 'कुट कौटिल्ये' 'कुटिकुषिभ्यां क्मलन्' (उ० ४. १८८) । कुड्मलम् । वररुचिप्राकृतलक्षणे 'अद् मुकुटादिषु' इत्यत्र सूत्रे आदेरुकारस्याकारो विहितः । अतो द्विरुकारो मुकुलः ॥

**स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।**

क्षीर०—सुष्ठु मन्यन्ते सुमनसः । रूपाद् बहुत्वम् । पुष्यति पुष्पम् । प्रसूयते प्रसूनम् । कुस्यति कुसुमम् ॥

टीका०—सुमनश्चतुष्कं पुष्पे । सुप्रीतं मन एष्विति सुमनसः । प्रादिसमासः ।

"बह्वश्च समाः सिकता वर्षाः सुमनसो जलौकसः"

इति वामनः । 'पुष्पं सुमनाः कुसुममि'ति नाममाला । 'वेश्या श्मशानसुमना इव वर्जनीये'ति शूद्रकोऽपि । द्वयमेव दृश्यते। बहुभिरादृतत्वाद् बहुवचनस्यात्र स्त्रिय इत्युक्तम् । यत्तु 'अप्रत्याख्येये[1] दधिसुमनसी' इति मनोर्नपुंसकप्रयोगः, तच्छान्दसत्वाद् युक्तम् । अत एव 'दधति सुमनसो वनानि बह्वीरि'ति माघप्रयोगः । 'पुष्प विकसने' । पचाद्यच् । पुष्पम् । 'षूङ् प्राणिप्रसवे' । दिवादिः । 'स्वादय ओदित' इत्योदित्त्वान्निष्ठानत्वे[2] प्रसूनम् । कुसेः सौत्रात् 'कुसेरुम्भोमेदेताः' (उ० ४. १०८) इत्यनेन उमप्रत्ययः । कुसुमम् । 'सकुसुमकेसरबाणम्' (स० १३. श्लो० ३०) इति भट्टिभाषासमावेशः ॥

१. 'ख्ये द' क. च. पाठः. २. 'त्त्वे निष्ठा' ख. ङ. छ. पाठः.

**मकरन्दः पुष्परसः**

क्षीर०— मध्वाख्यः । मङ्क्यते मण्ड्यतेऽनेन पुष्पं मकरन्दः ॥

टीका०— मकरन्दद्वयं पुष्पमधुनि ॥

**परागः सुमनोरजः ॥ १७ ॥**

क्षीर०— परागच्छति परागः । पुष्पधूलिः ॥

टीका०— परागद्वयं पुष्परजसि । परागच्छत्युड्डीयत इति परागः। पृषोदरादिः ॥

**द्विहीनं प्रसवे सर्वं**

क्षीर०— वक्ष्यमाणं बदर्यश्वत्थादिवृक्षलतौषधिजातीयं स्त्रीपुंसादिलिङ्गमपि प्रसूयमाने पुष्पे मूले फले च वर्तमानं द्वाभ्यां स्त्रीपुंसाभ्यां हीनं नपुंसकलिङ्गं ज्ञेयमित्यर्थः । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' (४. ३. १३५) इति विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुप्प्रकरणे 'पुष्पफलमूलेषु बहुलम्' (वा० ४. ३. १६६) इति लुप् । क्वचिद् 'अनुदात्तादेश्च' (४. ३. १४०) इत्यञो लुप् । कदम्बस्य विकारः कदम्बं पुष्पम् । अशोकं करवीरम् । बदर्याः फलं बदरम् । तक्कोलम् । नालिकेरम् आम्रं फलम् । आमलकमिति तु वृद्धलक्षणस्य मयटः 'फले लुक्' (४. ३. १६३) । सूरणस्यावयवः सूरणं कन्दः । 'लुपि युक्तवद्व्यक्तिवचने' (१. २. ५१) इति स्त्रीपुंसौ प्राप्तौ ॥

टीका०— प्रसवः फलं पुष्पं च । तत्र वर्तमानं यच्छब्दरूपं, तद् द्विहीनं स्त्रीपुं(स)हीनं नपुंसकमिति शेषः । तद् यथा—आम्रस्य फलमाम्रम् । आम्रस्य पुष्पमाम्रम् । तयोर्विकारावयवयोरर्थयोः 'नित्यं वृद्धशरादिभ्यः' (४. ३. १४४) इति मयट् । तस्य फले विकारावयवविशेषे विवक्षिते 'फले लुक्' (४. ३. १६३) इति लुक् । कुवल्याः फलं कुवलम् । लवल्याः फलं लवलम् । अत्र च ङीषन्तत्वादनुदात्तत्वे 'अनुदात्तादेश्च' (४. ३. १४०) इति विहितस्याञः पूर्ववल्लुक् ॥

हरीतक्यादयः स्त्रियाम्।

क्षीर० — हरीतक्याः फलं हरीतकी। 'अवयवे च प्राणि—' (४. ३. १३५) इत्यणः 'अनुदात्तादेश्च' (४. ३. १४०) इत्यञश्च 'हरीतक्यादिभ्यश्च' (४. ३. १६७) इति लुप्। 'लुपि युक्तवद् व्यक्तिवचने' (१. २. ५१) इत्यत्र हरीतक्यादिषु व्यक्तेर्युक्तवद्भावात् स्त्रीत्वम्। आदिशब्दात् कोशातकीद्राक्षाबदर्यादिः॥

टीका० — हरीतक्यादयः स्त्रियामिति पूर्वस्यापवादः। हरीतक्यादयो वृक्षवाचिनोऽभेदोपचारात् फलवृत्ताः स्त्रियां स्युः। तद् यथा — हरीतक्याः फलं हरीतकी। आदिना विभीतक्यादयः। फले विहितस्याणः 'हरीतक्यादिभ्यश्च' (४. ३. १६७) इति लुपि सति 'लुपि युक्तवद् व्यक्तिवचने' (१. २. ५१) इति प्रकृतिवद्भावात् स्त्रीत्वमेव॥

आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फलम्॥ १८॥
बार्हतं च

क्षीर० — अश्वत्थादिषु 'प्लक्षादिभ्योऽण्' (४. ३. १६४) इति पुनर्विधानात् फले लुग् नास्ति। वेणोः 'बिल्वादिभ्योऽण्' (४ ३. १३६)। नैयग्रोधमिति। 'न्यग्रोधस्य च केवलस्य' (७. ३. ५) इत्यैजागमः। बृहत्याः फलं बार्हतम्। फलति फलम्। 'फल निष्पत्तौ'॥

टीका० — अश्वत्थादीनां फले वाच्ये आश्वत्थषट्कम्। तद् यथा — अश्वत्थस्य फलम् आश्वत्थम्। 'प्लक्षादिभ्योऽण्' (४. ३. १६४) इत्यण्। वैणवमिति। 'बिल्वादिभ्योऽण्' (४. ३. १३) इत्यण्। आश्वत्थवत् प्लाक्षम्। नैयग्रोधमिति। 'न्यग्रोधस्य च केवलस्य' (७. ३. ५) इत्यैजागमः परं विशेषः। बृहत्याः फलं बार्हतम्। पूर्ववत्। 'तद्धितेष्वचामादेः' (७. २. ११७) इति सर्वत्र वृद्धिः। तत्र च 'अनुदात्तादेश्च' (४. ३. १४०) इत्यञि प्राप्ते अण्विधाना-

१. 'तत्र' घ ङ. छ. पाठः.

देव लुग् न भवति । बार्हतं चेत्यनेन चकारस्यानुक्तसमुच्चयार्थत्वात् तेन शैग्रवं बैल्वमित्याद्यपि द्रष्टव्यम् ॥

**फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।**

क्षीर०— 'जम्ब्वा वा' (४. ३. १६५) इत्यणि जाम्बवम् । पक्षे अञ् । तस्य 'फले लुक्' (४. ३. १६३) । जम्बु । 'लुप् च' (४. ३. १६६) इति जम्बूः । लुपि युक्तवत्त्वात् स्त्रीत्वम् ॥

टीका०— जम्बूत्रिकं जम्बूफले । जम्बूरिति । 'ओरञ्' (४. ३. १३९) । तस्य 'लुप् च' (४. ३. १६६) इति लुप् । 'लुपि युक्तवद् व्यक्तिवचने' (१. २. ५१) इति प्रकृतिगतमेव स्त्रीत्वम् । जम्ब्विति । 'जम्ब्वा वा' (४. ३. १६५) इति लुक् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१. २. ४७) इति ह्रस्वत्वम् । एवं फले जम्बुशब्दो ह्रस्वो नपुंसकं च । यत्तु किराते 'परिणतजम्बुफलोपभोगहृष्टा' (स०१०. श्लो०२२) इति वृक्षे ह्रस्वप्रयोगः, ततः 'इको ह्रस्वोऽङ्यो गालवस्य' (६. ३. ६१) इति औत्तरपदिकं ह्रस्वत्वम् । जम्बुरपि प्रकृत्यन्तरमस्तीति हड्डचन्द्रः । 'जम्ब्वा वा' इत्यणि जाम्बवम् ॥

**पुष्पे जातिप्रभृतयः स्वलिङ्गाः**

क्षीर० — पुष्पे विकारे जातेर्लतायाः पुष्पं जातिः । मालती शेफालिका यूथिका । नान्ये, चम्पकं वकुलं शिरीषम् । 'अनुदात्तादेश्च' (४. ३. १४०) इत्यञश्च 'पुष्पफलमूलेषु बहुलम्' (वा० ४. ३. १६६) इति एषां पुष्प एव लुप्, व्रीहीणां फल एव, विदार्यादीनां मूल एव । तदाह —

टीका०— पुष्पे वर्तमाना जातिप्रभृतयोऽभेदोपचारात् स्वलिङ्गाः । तद् यथा—जातेः पुष्पं जाती, मल्लीत्यादि । 'पुष्पमूलेषु बहुलम्' (वा०४. ३. १६६) इत्यञो लुपि सति युक्तवद्भावात् स्वलिङ्गता ॥

**व्रीहयः फले ॥ १९ ॥**

क्षीर०— स्वलिङ्गा इत्येव । व्रीणाति व्रीहिः । 'व्री वरणे' । यवानां

फलानि यवाः। माषाः। मुद्गाः। तिलाः। व्रीहिमुद्गाभ्यां मुद्गादि(?)भ्योऽण्। अन्यत्र 'अवयवे च प्राण्योषधि—' (४. ३. १३५) इत्यण्। तस्य 'फलपाकशुषाम्—' (वा० ४. ३. १६६) इति लुप्। युक्तवद्भावः॥

टीका०— व्रीहयोऽपि फले स्वलिङ्गाः। तद् यथा—माषस्य फलं माषः। मुद्गस्य फलं मुद्गः। 'लुप्प्रकरणे फलपाकशुषामुपसङ्ख्यानम्' (वा० ४. ३. १६६) इति लुपि युक्तवद्भावात् पूर्वप्रकृतिगतं लिङ्गम्॥

**विदार्याद्यास्तु मूलेऽपि**

क्षीर०— स्वलिङ्गा इत्येव। 'मूल प्रतिष्ठायाम्'। विदार्या मूलं विदारी। विदार्याम् 'अनुदात्तादेश्च' (४. ३. १४०) इत्यञ्। पुष्पफलमूलेषु बहुलं लुप्। लुपि युक्तवद्भावः। आद्यशब्दाद् गम्भारीबृहत्यंशुमत्याद्याः॥

टीका०— विदार्याद्या मूलपुष्पयोः, अपिशब्दात् फलेऽपि स्वलिङ्गाः। यथा विदार्या मूलादि विदारी। आदिना अंशुमत्फलग्रहणम्। 'अनुदात्तादेश्च' (४. ३. १४०) इत्यञ्। 'पुष्पमूलेषु बहुलम्' (वा० ४. ३. १६६) इति लुप्॥

**पुष्पे क्लीबेऽपि पाटला।**

क्षीर०— पाटलायाः पुष्पं पाटलम्। अञो बाहुलकाद् लुबभावः। यच्छाश्वतः—

"पाटलं कुसुमे वर्णेऽप्याशुव्रीहिश्च पाटलः"

अपिशब्दात् पाटला स्यात्। बिल्वाद्यणा पाटलीत्यपि। पुष्प इति किम्। पाटलो नाम व्रीहिः॥

टीका०— पाटला पुष्पे नपुंसकम्। रूपभेदात् स्त्रियां च। पाटलायाः पुष्पं पाटलम्। 'पुष्पमूलेषु बहुलम्' (वा० ४. ३. १६६) इति लुब् न भवति। पाटला पुष्पे। विदारीवदञ्लुपौ॥

**बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः॥ २०॥**

अश्वत्थे

क्षीर०—बोधिद्रुमो बोधिसत्त्वाख्यः, सर्वोपकारित्वात्। तनुवृन्तत्वाद् गुरुपर्णत्वात् स्वल्पेऽपि वाते चलदलः।[1] पिप्पलानि देश्यां पत्राणि। तानि सन्त्यस्येति अर्शआदित्वादच्। अपिप्लवत इति नैरुक्ताः। एवमाद्याः प्राकृता अपीति धन्वन्तरिः। यदाह—

"प्रायो जनाः सन्ति वनेचराद्या गोपादयः प्राकृतनामतज्ज्ञाः।
प्रयोजनार्थो वचनप्रवृत्तिर्यतस्ततः प्राकृतमित्यदोषः॥"

किञ्च,

"रसवीर्यविपाकेभ्यो[2] मूलात् पुष्पात् फलाद् दलात्[3]।
आकाराद् देशकालादेर्वनौषध्यर्थमुन्नयेत्॥"

अश्वेषु तिष्ठति अश्वत्थः, अश्वाश्रयत्वात्। पृषोदरादित्वात् सस्य तत्वम्। धन्वन्तरिराह—

"पिप्पलः केशवावासश्चलपत्रः पवित्रकः।
मङ्गल्यः श्यामलोऽश्वत्थो बोधिसत्त्वो गजाशनः॥"

केशवावासमङ्गल्यादयोऽत्राल्पप्रयोगत्वान्नोक्ताः[4]। एवमुत्तरत्रापि॥

टीका०—बोधिद्रुमपञ्चकमश्वत्थतरौ। बोधिनामा द्रुमो बोधिद्रुमः। तथा च—'पिप्पलो बोधिरश्वत्थ' इति रन्तिकोशः। नित्यं चञ्चलपत्रत्वाच्चलदलः। कुञ्जराणामशनं भक्ष्यं कुञ्जराशनः। अश्वोपपदात् तिष्ठतेः 'सुपि स्थः' (३. २. ४) इति कः। पृषोदरादित्वात् सकारे तकारः। अश्वत्थः॥

**अथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः।**
**तस्मिन् दधिफलः पुष्पफलदन्तशठावपि॥ २१॥**

१. 'लः चलानि पत्राणि सन्त्यत्रेति। पिप्पलान्यस्य पिप्पलः। अर्शआदित्वादच्। पिप्पलानि पत्राणि। अपि' ख. पाठः. २. 'कारेभ्यो' क. ख. पाठः. ३. 'द्रुमात्', ४ 'पात्ताः। ए' ग. घ. ङ. पाठः.

क्षीर०— कपिषु तिष्ठतीति कपित्थः, कपिप्रियत्वात् । दध्नि तिष्ठतीति दधित्थः, दधिफलत्वात् । ग्राही, विष्टम्भकारित्वात् । मन्मथो मदनाख्यः पर्यायेणोक्तः । दन्तेषु शठोऽम्लत्वात् । आह च —

"कपित्थोऽथ दधित्थस्तु ग्राही *फलसुगन्धिकः ।
§अक्षिस्पन्दो दधिफलश्चिरपाकी कपिप्रियः ॥"

द्व्यर्थे पुष्पफलः, कूश्माण्डः कपित्थश्च । तथा दन्तशठः, जम्बीरः कपित्थश्च । त्र्यर्थे मदनः, पिण्डीतकः कपित्थः सक्तूरश्च ॥

टीका०—कपित्थसप्तकं कपित्थे । अश्वत्थवत् कपित्थदधित्थौ । ग्राहीति । ग्रहेः ग्रह्यादित्वाद् णिनिः । मदने मन्मथ इत्युक्तम् । दधिस्वादुफलो दधिफलः । पुष्पात् फलमस्येति पुष्पफलः । अम्लत्वाद् दन्तस्य शठोऽपकारको दन्तशठः ॥

**उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।**

क्षीर०— उल्लङ्घिताम्बर उदुम्बरः । उत्वं लक्ष्यात् । मशकगर्भाणि फलान्यस्येति जन्तुफलः कृमिफलः पर्यायेणोक्तः । आह च —

"क्षीरवृक्षे हेमदुग्ध उदुम्बरसदाफलौ ।
†अपुष्पः फलसम्बन्धो यज्ञाङ्गः श्वेतवल्कलः ॥"

आहेन्दुः —

"उदुम्बरस्तु यज्ञाङ्गस्तुचभुः (?) ‡श्वेतवल्कलः ।
हेमदुग्धः कृमिफलः क्षीरवृक्षः स काञ्चनः ॥"

टीका०— उदुम्बरचतुष्कमुदुम्बरे । उदुम्बरो ह्रस्वादिः तवर्गतृतीयवांश्च । जन्तुयुक्तं फलमस्येति जन्तुफलः । हेमवर्णक्षीरत्वाद् हेमदुग्धकः ॥

१. 'निः । दधि' क. ख. च. ज. पाठः. २. 'रशब्दो ह' घ. ङ. छ. पाठः.

* 'गन्धफलश्च सः ।'. § 'अक्षमस्यां', † 'अपुष्पफल', ‡ 'शीत' धन्वन्तरिः ।

**कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥**

क्षीर० — कोर्भूमेर्विदारणात् कोविदारः । अत एवं कुद्दालः । चमरोऽस्यास्ति चमरिकः । आह च—

"कोविदारो[§]ऽथ कुद्दालः कुदालः कुण्डली कुली ।
ताम्रपुष्पश्चामरिको महायमलपत्रकः ॥"

पर्यायेणोक्तः ॥

टीका० — कोविदारचतुष्कं रक्तकाञ्चने ।

"कोविदारोऽप्सरः शम्यः कोविदारश्च काञ्चनः ।
पूर्वः सितोऽपरो रक्तो मुक्तपत्रावुभावपि ॥"

इति रत्नकोशः । हरिवंशे—

"कोऽप्ययं दारुरित्याहुरजानन्तो यतो जनाः ।
कोविदारस्त्विति ख्यातस्ततः स तरुपुङ्गवः ॥"

इति । कोविदारः पृषोदरादिः । कुमुद्दालयतीति कुद्दालः । 'दल विदारणे' । अच् । शकन्ध्वादिः । यमलपत्रत्वाद् युगपत्रकः । 'यावादिभ्यः कन्' (५.४.२९) ॥

**सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।**

क्षीर० — शरदि पुष्यति शारदः । शारदीत्येके । आह च —

"सप्तपर्णः *शुक्तिपर्णस्त्रिपर्णश्च सुपर्णकः ।
सप्तच्छदो †गुच्छपुष्पस्तथा शाल्मलिपत्रकः ॥"

आहुश्च —

१. 'वाह कु', २. 'न्द्रा', ३. 'न्दारः कु' ख. पाठः. ४. 'र' ग. घ. ङ. पाठः.

§ 'रः काञ्चनारः कुद्दालः कुण्ड', * 'शुक्तिपर्णश्छत्रपर्णः सु', † 'गूढपुष्प' इति धन्वन्तरिः ।

"सप्तपर्णो बृहत्त्वकः सप्ताश्वो गुच्छपुष्पकः।
सप्तच्छदः सप्तपत्रोऽयुग्मपत्रो बहुच्छदः॥"

टीका० — सप्तपर्णचतुष्कं [1]चातिपन्न[2] इति ख्याते। प्रतिपर्व सप्त पर्णान्यस्येति सप्तपर्णः। विशाला महती त्वगस्येति विशालत्वक्। साहचर्यादस्य पुंस्त्वम्। शरदि पुष्प्यतीति शारदी। 'कालात् साधुपुष्प्यत्पच्यमानेषु' (४. ३. ४३) इत्यण्। विषमपत्रत्वाद् विषमच्छदः॥

**आरग्वधो राजवृक्षशम्याकचतुरङ्गुलाः॥ २३॥**

**आरेवतव्याधिघातकृतमालसुवर्णकाः।**

क्षीर० — आरुजयन्त्यारजो मालाः, तेषां वधोऽत्रारग्वधः। राजा चासौ वृक्षः, रोगराजं वृश्चति वा राजवृक्षः। शमीं शिम्बीम् अकति शम्याकः। चतुरङ्गुलपर्वा। अरेवती रोगदेवता। अरेवत्यां भव आरेवतः। आरेवते ज्वरोऽनेन वा आरेवतः। 'रेवृ प्लवगतौ'। कृता माला अस्य कृतमालः। [3]उद्ग्रथितं इव सकर्णिकत्वात्। आह च—

"कर्णिकारो राजवृक्षः प्रग्रहः कृतमालकः।
आरो[4]ग्यशिम्बी शम्याको व्याधिघातो[*] पघातकः॥
आरग्वधो दीर्घफलो व्याघातश्चतुरङ्गुलः।
आरेवतस्तथा कर्णी कर्णीवान् स च रैवतः॥"

टीका० — आरग्वधाष्टकं [5]सोनालु[6] इति ख्याते। आरग्वधो दीर्घादिः।

"आरग्वधोऽथ सम्पाकः कृतमालस्तथाग्वधः"

1. 'जातिपर्ण इ' च., 'छातिपत इ' ज. पाठः. 2. 'व' घ. ङ. छ. पाठः. 3. 'इहत' क., 'गुम्फत' ग. घ. ङ. पाठः. 4. 'ग्यं बीजशम्या' क. च. पाठः. 5. 'सेनलु' घ. ङ. छ. पाठः 6. 'बु' झ., 'लुल इ' च. पाठः.

* 'तो व्यथान्तकः॥' इति धन्वन्तरिः।

इति रत्नमालायां त्र्यक्षरोऽपि । सम्यक् पाकोऽस्येति सम्पाकः । दन्त्यादिः । शं कल्याणः पाकोऽस्येति तालव्यादिरपीति केचित् । आरेवतः दीर्घादिः । कर्मण्यणि व्याधिघातः । कृता माला पुष्पैरस्येति कृतमाल इति शृङ्गारप्रकाशः । सुवर्ण इति बहुव्रीहिः ॥

**स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥**

**क्षीर०— जम्भेर्मोहनार्थस्यैतानि रूपाणि । दन्तशठो (मृदु ? ऽम्ल)-त्वात् । आह च—**

**"जम्भीरो जम्भलो जम्भः प्रोक्तो दन्तशठस्तथा ।**
**‡जम्बीरो वक्रशोधी च रोचनो दन्तहर्षणः ॥"**

**टीका०**— जम्बीरपञ्चकं **जम्बीरे** । कपित्थे दन्तशठ उक्तः । 'जभि जृभि गात्रविनामे' । अच् । जम्भः । 'गम्भीरादय—' (उ० ४. ३५) इतीरन् । जम्भीरः । गम्भीरे इति कुत्रापि पाठः । बाहुलक अलः । जम्भलः ॥

**वरुणे वरणः सेतुस्तिक्तशाकः कुमारकः ।**

**क्षीर०— वृणोति वरुणो वरणश्च, पर्णिकावृक्षत्वात् । अत एव पर्यन्ते रक्षाहेतुत्वात् सेतुः । तिक्तरसशाकश्च, शाकमध्ये पाठात् । कुमारको नित्यतरुणः । आह च—**

**"*वरणः श्वेतपुष्पस्तु तिक्तशाकः कुमारकः ।**
**†सेतुद्रुमः सालवृक्षस्तमालो मारुतापहः ॥"**

**टीका०**— वरुणपञ्चकं **वरुणे** । वरुणवरणसेतवस्त्रयो दिक्पतिप्राकारालिषूक्ताः । कार्त्तिकेये कुमार उक्तः । ततः कन् । कुमारकः ॥

१. 'कु', २. 'रादय ईरन् इ' च. पाठः. ३. 'क' ख. पाठः. ४. 'त् । प' क. पाठः. ५. 'धु' ख. पाठः.

‡ 'गम्भीरो', * 'वरुणः', † 'श्वेतद्रुमो गन्धवृक्ष' इति धन्वन्तरिः ।

**पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥**

क्षीर०— पूजितः पुमान् पुन्नागः स इव प्राधान्यात् । प्रशस्ताः केसराः सन्त्यस्य । आह च—

"‡तुङ्गः पुष्पकसंज्ञः स्यात् पुन्नामा रक्तकेसरः ।
पुन्नागः पुरुषाह्वश्च केषाञ्चित् पद्मकेसरः ॥"

टीका०— पुन्नागपञ्चकं पुन्नागे । 'पुरः कुषन्' (उ० ४. ७५) । पुरुषः । किञ्जल्के केसर उक्तः ॥

**पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।**

क्षीर०—पारि, सम्प्राप्तिः पारं, भद्रमस्य पारिभद्रः । निम्बो नियमनात् । आह च—

"निम्बो नियमनो नेता पिचुमन्द*स्तु तिक्तकः ।
†निम्बोऽथ सर्वतोभद्रः प्रभद्रः पारिभद्रकः ॥"

त्र्यर्थे पारिभद्रः, कोलिः पारिजातो देवदारु च ॥

टीका०— पारिभद्रचतुष्कं पारिविद इति ख्याते । तद्विशेषत्वाद् मन्दारेऽपि ।

"अर्कपर्णेऽपि मन्दारो देवद्रौ पारिभद्रकः"

इति रभसः ॥

**तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥**
**वञ्जुलश्चित्रकृच्च**

क्षीर०— अतिक्रान्तो निशास्तिनिशः, चिरकालिकत्वात् । स्य-

‡ 'पुन्नागः पुरुषस्तुङ्गः पुन्नामा पाटलः पुमान् ।
रक्तपुष्पो रक्तरेणुररुणोऽयं नवाह्वयः ॥',
* 'न्दः सुति', † 'अरिष्टः स' इति धन्वन्तरिः ।

न्दनं स्पन्दनं पेठुः। रथोपयोगित्वाद् रथ(द्रुः)। चक्रान्ते नमति नेमिः। अतिमुक्तो विस्तीर्णत्वात्। वन्यतेऽर्थ्यते वञ्जुलः। चित्रकृद् लघुत्वेऽपि दार्ढ्यदैर्घ्याभ्यामाश्चर्यकारी। आहुश्च—

‡"तिनिशो नेमिश्चित्रकृत् स्यन्दनो रथसाधकः।
तैपारण्यो रथद्रुश्चाप्यतिमुक्तः"

इति। त्र्यर्थे वञ्जुलः, वेतसः स्पर्शनो[2]ऽशोकश्चेति॥

टीका०— तिनिशसप्तकं तिनिशे। अयं म(धु?थु)रायां प्रसिद्धः। तिनिशस्तालव्यान्तः। 'स्यन्दू प्रस्रवणे'। युच्। स्यन्दनः। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६. ३. १११) इति दीर्घत्वे नेमी। नेमिरिति तु प्रकृतिः॥

"पुल्लिङ्गस्तिनिशे नेमिश्चक्रान्ते तु स्त्रियां मतः"

इति रभसः। ङीषन्तोऽपीति केचित्। रथोपयोगित्वाद् रथद्रुः। चित्रकृत् तान्तः॥

अथ द्वौ पीतनकपीतनौ।

**आम्रातके**

क्षीर०— पीतीक्रियतेऽनेन पीतनः। कपींस्तनोति कपीतनः। कपिप्रियत्वात्। आम्रमतत्याम्रातकः। कपिचूतत्वात्। आहुश्च—

"आम्रातकः पीतनकः कपिचूतो*ऽम्रवातकः।
शृङ्गी †कपीतैराख्यश्च नडः कीरः कपिप्रियः॥"

त्र्यर्थे कपीतनः, आम्रातकः प्लक्षः शिरीषश्चेति। कपीतरशब्दस्य कपीतनोऽपभ्रंश इत्येके॥

१. 'कर्पार', २. 'न्द' ख. पाठः. ३. 'रभाद्यश्च' ख. पाठः. ४. 'रः' ग. घ. ङ. पाठः.

‡ "तिबिशः स्यन्दनश्चक्री रथाङ्गः शकटो रथः।
रथिका भस्मगर्भश्च मेषी जलचरो दश॥",

* 'ऽम्लवातकः', † 'कपी रसाढ्यश्च तनुक्षीरः कपि' इति धन्वन्तरिः।

टीका०— पीतनत्रयमम्बाड इति ख्याते।

"आम्रातके शिरीषेऽपि गर्दभाण्डे कपीतनः"

इति रुद्रः॥

**मधूके तु गुडपुष्पमधुद्रुमौ॥ २७॥**

**वानप्रस्थमधुष्ठीलौ**

क्षीर०— गुडवद् मधुराणि पुष्पाण्यस्य गुडपुष्पः। मधुप्रधानो द्रुमो मधुद्रुमः। वनप्रस्थे भवो वानप्रस्थः, स्थलजत्वात्। मधु ष्ठीवति मधुष्ठीलः। मधु माधुर्यमष्ठीले गर्भेऽस्येति मध्वष्ठीलो वा। यदाह—

"मधूको मधुवृक्षश्च मधुष्ठीलो मधुऽस्रुवः।
गुडपुष्पो रोध्रपुष्पो वानप्रस्थोऽथ वामनः॥"

टीका०— मधूकपञ्चकं महऔ इति ख्याते। 'मह पूजायाम्'। 'उलूकादयश्च' (उ० ४. ४१) इत्यूकन् धश्चान्तादेशः। गुड इव स्वादु पुष्पमस्येति गुडपुष्पः। मधुनामा द्रुमो मधुद्रुमः। प्रायेण वनप्रस्थे जातो वानप्रस्थः। 'तत्र भवः' (४. ३. ५३) इत्यण्॥

**जलजेऽत्र मधूलकः।**

टीका०— जलभवे मधूके मधूलकः। क्वचिद् गिरिज इति पाठः।

"गौरशाको मधूलोऽन्यो गिरिजः सोऽन्यपत्रकः"

इति माधवः॥

**पीलुर्गुडफलः स्रंसी**

१. 'म्ब' घ. ङ. छ. पाठः.　२. 'मानवः॥' क. ख. ङ. पाठः.　३. 'स्रू' च. पाठः

ऽ 'स्रवः' इति धन्वन्तरिः।

क्षीर०—पीयते माधुर्यात् पीलुः । पीड्यते वा । स्रंसते स्रंसयते वा स्रंसी । आह च—

"पीलुः †शीतफलः स्रंसी धारी गुडफलोऽपि च" ॥

टीका०—पीलुत्रयं कोङ्कणदेशप्रसिद्धे पीलौ । 'पील प्रतिष्टम्भे' । 'मृगय्वादयश्च' (उ० १. ३९) इति कुः । पीलुः । गुडपुष्पवद् गुडफलः । 'स्रन्सु ध्वन्सु अधःपतने' । द्विदन्त्यः । णिच् । आवश्यके णिनिः । स्रंसी ॥

तस्मिंस्तु गिरिसम्भवे ॥ २८ ॥

अक्षोटकन्दरालौ द्वौ

क्षीर०—अक्ष्णोत्यक्षोटः । कन्दरास्यास्ति कन्दरावेष्टनात् कन्दरालः । कर्पराल इत्येके । आह च—

"अक्षोटः पार्वतीयश्च फलस्नेहो गु‡हाशयः ।
कीरेष्टः कन्दरालश्च स्वादुमज्जा *मृदुच्छदः ॥"

टीका०—अक्षोटद्वयं पर्वतजे पीलौ ॥

अङ्कोठे तु निकोचकः ।

क्षीर०—अङ्क्यते कीलकैर्लक्ष्यते अङ्कोठः । अङ्कोलोऽपि । प्राकृते अङ्कोल्लः । निकुच्यतेऽस्मात् कण्टकित्वाद् निकोचकः । आह च—

"अङ्कोठोऽङ्कोलको रेची निर्दिष्टो दीर्घकीलकः ।
पीतसारस्त्वाम्रफलो गन्धपुष्पो निकोचकः ॥"

१. 'आ' घ. च. ज. झ. पाठः. २. 'ड' क. ख. ग. पाठः. ३. 'स्ता' ज. पाठः.

† 'शीतः सहस्रांशी धानी गु', ‡ 'हा', * 'पृथुच्छ' इति धन्वन्तरिः ।

टीका० — अङ्कोठद्वयं मदनकण्टकसदृशैः कण्टकैर्युक्ते अङ्कोड इति ख्याते ।

"पीतसारस्ताम्रफलो गन्धपुष्पोऽलिकोचकः"

इति तन्त्रान्तरम् ॥

**पलाशे किंशुकः पर्णो वातपोथः**

क्षीर० — प्रशस्तानि पलाशानि सन्त्यस्य पलाशः । पलं मांसमश्नुते वा । रक्तपुष्पत्वात् किञ्चित् शुकः नीलः किंशुकः । वातं पोथयति वातपोथः । चर्मात्र । तथा च —

"*पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः ।
क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः ॥"

टीका० — पलाशचतुष्कं किंशुके ।

"पत्रे पलाशं ना रक्षःशटी हरितकिंशुकः"

इति तालव्ये रुद्रः । 'पृण प्रीणने' । अच् । पर्णः । 'पुथ हिंसायाम्' । वातस्य पोथो वातपोथः ॥

**अथ वेतसे ॥ २९ ॥**

**रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।**

क्षीर० — वयत्यम्भोऽनुवर्तते वितस्यते वा वेतसः । रमन्तेऽस्मिन् रथः । अभ्राणीव पुष्पाण्यस्याभ्रपुष्पः । विदोल्यते नदीवेगेन विदुलः ।

---

१. 'द्व' क. ख., 'ल' ज. पाठः. २. 'आङ्कोड' ज., 'आक्षोड' च., 'आङ्कोढ' क. ख. पाठः. ३. 'स्त्वा' क. पाठः.

* "किंशुको वातपोथश्च रक्तपुष्पोऽथ याज्ञिकः ।
त्रिपर्णो रक्तपुष्पश्च पूतद्रुर्ब्रह्मवृक्षकः ॥
क्षारश्रेष्ठः पलाशश्च बीजस्नेहः समिद्वरः ।"

इति धन्वन्तरिः ।

शीतो वीर्येण, लेपाद् दाहशमनात्। वनति भजत्यम्बु वानीरः। —[1]— ॥

टीका०— वेतससप्तकं वेतसवृक्षे[2]। 'वेञस्तुट् च' (उ० ३. ११८) इत्यसच् तुडागमश्च। वेतसः। 'रमु क्रीडायाम्'। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ० २. २)। रथः। 'र(थ? थौ) स्यन्दनवानीरौ' इत्यजयः। अभ्रसमये पुष्पमस्येत्यभ्रपुष्पः। विदेर्बाहुलकादुलच् गुणाभावश्च। विदुलः। शीतः पूर्वमुक्तः।

"शीतं तुषारवानीरबहुवारद्रुमेषु च"

इत्यजयः॥

**द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥**

क्षीर०— परिविध्यतेऽम्भसा परिव्याधः। नद्यां भवा नादेयी। नित्यं स्त्री। वेतसी तु द्वयोः। त्र्यर्थेष्विन्दुः नादेयी, तर्कारी जलवेतसी भूमिजम्बूश्च। चन्द्राद्यास्तु विभागेनाहुः—

"वेतसो[3] विदुलो नम्रो[4] वञ्चुलो दीर्घपत्रकः।
नादेयी गन्धपत्रश्च जलौकाः संवृतस्तथा॥
नदीकूलप्रियस्त्वन्यः सुशीतो घनपुष्पकः।
नालजातस्तोयकामो विदुलो जलवेतसः॥"

निचुलो वेतसादन्यो वक्ष्यते॥

टीका०— परिव्याधचतुष्कं जलवेतसे। 'व्यध ताडने'। 'हलश्च' (३. ३. १२१) इति घञ्। परिव्याधः। नद्यां जाता नादेयी। 'नद्यादिभ्यो ढक्' (४. २. ९७)। एयादेशः। 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप्॥

**सौभञ्जने शिग्रुतीक्ष्णगन्धकाक्षीबमोचकाः।**

१. 'ञ्जु' क. पाठः. २. 'वयस' क. ख. झ., 'वायस' घ. ङ. छ. पाठः. ३ 'सी' ख. पाठः. ४. 'स्यो' ग. पाठः. ५. 'ञ्जु' क. पाठः. ६. 'दीर्घप' ख. पाठः.

क्षीर०—सुष्ठु भनक्ति मुखं सौभञ्जनः । शिनोति तैक्ष्ण्यात् शिग्रुः । न क्षीबन्त्यनेनावृष्यत्वादक्षीबः । मुञ्चति गन्धं मोचकः । आहुश्च—

"शिग्रुः स्याच्छ्वेतमरिचं मुखभञ्जोऽतितीक्ष्णकः[1] ।
शिग्रुर्हरितशाकोऽन्यो मतो मूलकपल्लवः ॥

घनच्छदस्तीक्ष्णगन्धो मरुद्भीदं[2] शरक्षमः(?) ।
तृतीयो मधुशिग्रुः स्यात्"

त्र्यर्थे मोचकः, कदली शल्मलिः सौभञ्जनश्च । चतुरर्थेष्विन्दुः अक्षीबः, सलवणं नीली महानिः सौभञ्जनश्च ॥

टीका०—शोभाञ्जनपञ्चकं सोहण इति ख्याते । शोभां व्यनक्तीति शोभाञ्जनः । 'बहुलमन्यत्रापि' (उ० २. २९) इति युच् । सौभाञ्जनो वृद्धदन्त्यादिरित्यन्यः । शाम्यतेर्जत्वादित्वाद् रुप्रत्यये उपधाया इत्वे अन्त्यस्य च गत्वे शिग्रुः । तीक्ष्णो गन्धोऽस्येति तीक्ष्णगन्धः । ततः 'शेषाद् विभाषा' (५. ४. १५४) इति कप् । आक्षीब इति । आङ्पूर्वात् 'क्षीबृ मदे' इत्यतो णिच् । पचाद्यच् । ह्रस्वादिरप्ययमिति केचित् । काङ्क्षीब[3] इति केचित् । मुचेरपि मोचः । ततः स्वार्थे कः ॥

**रक्तोऽसौ मधुशिग्रुः स्याद्**

क्षीर०—मधुप्रधानः शिग्रुः ॥

टीका०—शोभाञ्जनो रक्तपुष्पो मधुशिग्रुः ॥

**अरिष्टः फेनिलः समौ ॥ ३१ ॥**

क्षीर०—न रिष्यतेऽनेनारिष्टः[4] । रक्षाहेतुः । फेनाः सन्त्यस्य फेनिलः । चन्द्रोऽत्र—

१. 'ह्रि' ख. पाठः. २. 'भी' क. ग घ. ङ. पाठः. ३. 'क्षी' घ. ङ. च. छ. ज. पाठः. ४. 'त्र' ग. ङ. पाठः.

"अरिष्टकस्तु मङ्गल्यः कृष्णबीजोऽर्थसाधनः।
रक्षाबीजः शीतफेनः फेनिलो गर्भपातनः॥"

टीका०—अरिष्टद्वयं हरिठ इति ख्याते। फेनयोगात् फेनिलः। 'फेनादिलच्च' (५.२.९९) इतीलच्॥

**बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि।**

क्षीर०—बिलेति[1] भिनत्ति बिल्वः। शण्डिलगोत्रजः शिलूषज इत्यागमाद्यणौ। शाण्डिल्य इव ब्राह्मणमान्यत्वात्। शैलूष इव[3] नानारूपपरिवर्तनाद् वा। मलते मलान् मालूरः। मां लक्ष्मीं लाति वा। श्रीप्रदानि फलान्यस्य श्रीफलः। आह च—

"बिल्वः शलाटुः शाण्डिल्यो हृद्यगन्धः सदाफलः।
शैलूषः श्रीफलः श्याहः कङ्कटः पूतिमारुतः॥"

टीका०—बिल्वपञ्चकं बिल्वे। 'बिल भेदने'। 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' (उ० १.१५७) बाहुलकः। बिल्वः।

"मुनिप्रभेदे मालूरे शाण्डिल्यः पादपान्तरे"

इति तालव्यादौ रभसः। 'नटे बिल्वे च शैलूष' इति तालव्यादिमूर्धन्यान्ते रभसः। 'मल मल्ल धारणे'। णिच्। 'खर्जिपिञ्जादिभ्य ऊरोलचौ' (उ० ४.९१)। मालूरः। श्रीप्रियं फलमस्येति श्रीफलः॥

**प्लक्षो जटी पर्कटी स्याद्**

क्षीर०—प्ले(क्षो? क्षर)त्यधो गच्छति मूलैः। जटाः सन्त्यस्य जटी। अत एव पृच्यते पर्कटी। नान्तोऽयम्। इदन्तोऽप्यस्ति। यच्छाश्वतः—

"विज्ञेयः पर्कटिः प्लाक्षः प्लक्षः पिप्पलपादपः"॥

---

१. 'शि' ख. पाठः. २. 'ल्व' ग. घ. ङ. पाठः. ३. 'व च ना' ग. ङ. पाठः. ४. 'लु' ग. घ. ङ. पाठः.

टीका०— प्लक्षत्रयं पर्कट्याम् । प्रक्षराति प्लक्षः । 'अन्येष्वपि —' (३. २. १०१) इति डः । रलयोरेकत्वस्मरणम् । 'गर्दभा(ण्ड ? ण्डे) जटीप्लक्षौ' इति रुद्रकोशात् जटिरीदन्तापि । 'पर्कट्यां प्लक्षजटिलौ' इति गङ्गदेवे लान्तः ॥

**न्यग्रोधो बहुपाद् वटः ॥ ३२ ॥**

क्षीर०— न्यक् तिर्यग् रुणाद्धि मार्गं मूलैः, न्यग् रोहति वा न्यग्रोधः । न्यङ्क्कादित्वाद् धत्वम् । बहवः पादा मूलान्यस्य बहुपात् । 'सङ्ख्यासुपूर्वस्य' (५. ४. १४०) इत्यन्तलोपः । वटति वेष्टयति मूलैर्वटः । आह च—

"वटो रक्तफलः शृङ्गी न्यग्रोधः कन्दजो ध्रुवः ।
क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥"

टीका०— न्यग्रोधत्रयं वटे । न्यग् रोहतीति न्यग्रोधः । पचादिः । न्यङ्क्कादित्वाद् धत्वम् । बहवः पादा अवरोहा अस्येति बहुपात् । 'सङ्ख्यासुपूर्वस्य' (५. ४. १४०) इत्यन्तलोपः । 'वट स्थैर्ये' । वटः । पचादिः ॥

**गालवः शाबरो रोध्रस्तिरीटस्तिल्वमार्जनौ ।**

क्षीर०— आद्याः श्वेतरोध्रे । तिरीटाद्या रक्तरोध्रे । गालयति स्रावयत्यक्षि गालवः । शाबरः शबरवृक्षः । रुणाद्धि व्रणं रोध्रः । रलयोरैक्याद् लोध्रोऽपि । तिरयति रोगान् तिरीटः । तिलति स्निह्यत्यङ्गमनेन तिल्वः । मार्ष्टि उद्वर्तयत्यङ्गं मार्जनः । अत एवोत्सादनः । आह च—

"लोध्रो रोध्रः शाबरकाश्चिल्वकस्तिल्वकस्तरः ।
तिरीटः कालहीनश्च चिल्ली शबरपादपः ॥
द्वितीयः पट्टिका रोध्रो गालवः स्थूलवल्कलः ।
जीर्णबुध्नो बृहत्त्वकः पट्टी लाक्षाप्रसादनः ॥"

इन्दुश्च—

---

१. 'कलाही' क. पाठः.

"रोध्रः कषायकृद् वज्रश्लिल्वको मधुपुष्पकः।
व्रणौषधं कालहीनो हिमपुष्पोऽक्षिभेषजम् ॥
द्वितीयः पट्टिका रोध्रो बृहत्पत्रास्तिरीटकः।
उत्तालकस्तिल्वकश्च पट्टी लाक्षाप्रसादनः ॥"

टीका०— गालवषट्कं श्वेतलोध्रे। गालवादृषेः प्रभवतीति गालवः। शेषेऽण्। सावरो दन्त्यादिः। तथा च—

"सावराख्यापराधे च लोध्रे पापे च पठ्यते"

इति दन्त्यादावजयः। रुधेर्भद्रादिरन्। रस्य लत्वम्। लोध्रः। तरतेः 'कृतॄकृपिभ्यः कीटन्' (उ० ४. १८६)। तिरीटः। 'तिल स्नेहने'। बाहुलकः क्वन्। तिल्वः। मार्जयतीति मार्जनः। नन्द्यादिः॥

**आम्रश्चूतो रसालः**

क्षीर०— अम्यते अभिलष्यते आम्रः। 'अमितम्योर्दीर्घश्च' (उ० २. १८) इति रक्। च्योतति रसं चूतः। चूष्यत इति श्रीभोजो निरवोचत्। रसम् अलति रसालः॥

टीका०— आम्रादित्रिकमाम्रे। 'अम रोगे'। 'अमितम्योर्दीर्घश्च' (उ० २. १८) इति रग्दीर्घत्वे आम्रः। रसम् आलातीति मूलविभुजादित्वात् कः। रसालः॥

**असौ सहकारोऽतिसौरभः ॥ ३३ ॥**

क्षीर०— सह कारयति मेलयति स्त्रीपुंसौ सहकारः। सुरासखत्वाद्वा। यदाह—

"आम्रश्चूतो रसालश्च सचेष्टो मादिरासखः।
कामाङ्गः सहकारश्च परपुष्टो मदोद्भवः॥"

१. 'लक्ष्मीं ला' ख. पाठः. २. 'त्स' क. ग. पाठः.

टीका० — अतिशयितसौरभ[1]आम्रे सहकारः ॥

**कुम्भोलूखलकं क्लीबे कौशिको गुल्गुलुः पुरः ।**

क्षीर० — कुम्भोलूखलाकाराद् वृक्षकोशाद् निर्याति कुम्भोलूखलकम् । कोशे भवः कौशिकः । उलूकाख्यो नक्तञ्चरत्वात् । गुडति रक्षति वातरोगाद् गुल्गुलुः। पिपर्ति पुरः । 'इगुपधज्ञा—' (३. १. १३५) इति कः । 'उदोष्ठ्यपूर्वस्य' (७. १. १०२) इत्युत् । आह च —

"गुल्गुलुः कालनियमो जटायुः कौशिकः पुरः ।
नक्तञ्चरः शिवो दुर्गो महिषाक्षः फलङ्कषः ॥"

टीका० — कुम्भपञ्चकं गुल्गुलौ ।

"कामुके वरनार्यां च कुम्भः क्लीबं तु गुल्गुलौ"

इति रभसः ।

"कुम्भोलूखलकं गुल्गुलुः प्रावृषायणी कपिकच्छुः"

इति द्विपर्यायवर्गे महेन्द्रः पठति । तदेकमेव नाम । 'कैशिकाकाशकेशा' इति शभेदात् कैशिकस्तालव्यः ।

"तस्मात् पूज्याश्च मान्याश्च घृतपायसगुल्गुलैः"

इति मौद्गल्यायनः । अतोऽदन्तोऽपि गुल्गुलः । पुरः अदन्तः पूर्वमुक्तः ॥

**शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥**

क्षीर० — शिलति शिनोति रोगान् वा शेलुः । सेलुश्च । श्लेष्माणमतति शीतवीर्यत्वात् श्लेष्मातकः । अत एव शीतः । उद्दालयत्यङ्गमुद्दालः। स्पर्शेन स्फोटकारित्वात् । बहु वृणोति स्रोतांसि बहुवारकः । आहेन्दुः —

"सेलुः श्लेष्मातकः शीतो वसन्तकुसुमस्तथा ।
उद्दालकः कन्दरटः शेलुको भूतवृक्षकः ॥

१. 'भ आम्रे' च. झ. पाठः.

पिच्छिलः शापितः शेलुस्तथा स द्विजकुत्सितः ।
लेखशाटो बहुवारकः"

इति ॥

टीका०— शैलुपञ्चकं बहुवारे । 'शेलृ गतौ' । ताल्व्यादि । 'कृवापाजिमिस्वादि—' (उ० १. १) इत्यादिना बाहुलक उण् । शैलुः । शीत उक्तः उद्दालयतीत्युद्दालः । पचादिः । बहून् देशान् वृणोतीति बहुवारः । 'कर्मण्यण्' (३. २. १) ॥

**राजादनं प्रियालः स्यात् सन्नकद्रुर्धनुष्पटः ।**

क्षीर०— राज्ञामदनं मृष्टत्वात् । प्रियाति(?) सरसत्वात् प्रियालः । '‡प्री गतौ' । पियाल इत्येके । सन्नकः खरः द्रुः स्कन्धोऽस्य सन्नकद्रुः । धनुष इव पटो विस्तारोऽस्य धनुष्पटः । धनुरुकारान्तोऽप्यस्ति इति गौडो भ्रान्तः । यदाह—

"प्रियालः स्यात् खरस्कन्धश्चारो (बहुल)वल्कलः ।
¶सन्नकद्रुश्चापपटो लघनस्तापसप्रियः ॥"

[?]र्थे राजादनं, प्रियालः क्षीरिका च ॥

टीका० — राजादनचतुष्कं प्रियाले । पीयोः सौत्रात् 'पीयुक्कणिभ्य कालन् ह्रस्वः सम्प्रसारणं च' (उ० ३. ७६) । यथाक्रमम् । पियालः । धनुःपः इत्येकं नाम । तथा च तन्त्रान्तरं—

"सन्नकद्रुश्चापपटो लवणस्तापसप्रियः"

इति ।

१. 'श' ङ. छ. पाठः. २. 'टोऽल्पलन' घ. ङ. छ. पाठः.

‡ 'प्रीङ् प्रीतौ' इति पाठ्यं भाति, प्रियतिपदस्थाने च प्रीयत इति । ¶ 'स्नेहबीजश्चापटो ललन' इति धन्वन्तरिः ।

"पटः प्रियालवृक्षे ना सुचेले पुन्नपुंसकम्"

इति रभसेन नामद्वयमुक्तम्। तदा धनुरुदन्तः सान्तश्च। तथा च विश्वप्रकाशः—

"*धनुः प्रियालद्रुमराशिभेदयोः शरासने नापि धनुर्धरे" (?)

इति। "पियालश्च प्रियालकः" इति माधवः॥

**गम्भारी सर्वतोभद्रा का(ष्मे?श्म)री मधुपर्णिका॥३८॥**
**श्रीपर्णी भद्रपर्णी च काश्मर्यश्चापि**

क्षीर०— गमो बिभर्ति सरत्वाद् गम्भारी। कृश्यति तनूकरोति का(ष्मे?श्म)री का(ष्मे?श्म)र्यश्च। मधूनि मृष्टानि पर्णान्यस्या मधुपर्णी। 'पाककर्णपर्ण—' (४. १. ६४) इति ङीप्। आह च—

"†काष्मर्यः काष्मरी हीरा कष्मरी मधुपर्ण्यपि।
श्रीपर्णी सर्वतोभद्रा गम्भारी कृष्णवृन्तिका"॥

टीका०— गम्भारीसप्तकं **गम्भार्याम्**। गम्भारीति। पिप्पल्यादित्वाद् ङीष्। मधु पर्णेऽस्या अस्तीति मधुपर्णी। 'पाककर्णपर्ण—' (४. १. ६४) इत्यादिना ङीष्। कश्मरी काश्मर्यश्च तालव्यशौ॥

**अथ द्वयोः।**
**कर्कन्धुर्बदरी कोलिर्घोण्टा कुवलफेनिले॥३९॥**
**सौवीरं बदरं कोलम्**

क्षीर०— कर्कलोहिता अन्धुः कर्कन्धुः। शकन्ध्वादित्वात् पररूपम्। बदति बदरी। 'बद स्थैर्ये'। कोलिः। 'कुल संस्त्याने'। 'कुड

१. 'काषरी' ग. घ. पाठः.

* "धनुस्संज्ञा प्रियालद्रौ राशिभेदे शरासने" इत्येव तु विश्वप्रकाशे पठ्यते। † 'काश्मर्या काश्मरी हीरा काश्मर्यो म' इति धन्वन्तरिः।

बाल्ये' । अस्माद्वा । घुणति वृत्तत्वाद् भ्रमति घोण्टा । कौ भूमौ वलति भ्रमति कुवलम् । फेनिलं कफवर्धनात् । सुवीरदेशे भवं सौवीरम् । तत्राद्यास्त्रयो वृक्षार्था अन्ये फलार्थाः । घोण्टा तूभयस्पृक् । यदाह —

"बदरी स्निग्धपत्रा च राष्ट्रवृद्धिकरी तथा ।
फलं तस्याः स्मृतं कोलं कोकिलं फेनिलं कुहम् ॥
लोलं सूक्ष्मफलं तत्तु ज्ञेयं कर्कन्धु कन्दुकम् ।
स्वादुकन्दुः सिञ्चतिका कूर्चकोलफलं च तत् ॥"

धन्वन्तरिः सामान्येनाह —

"बदरं * कोकिलं कोलं सौवीरं फेनिलं कुहम् ।
§ कर्कन्धूः कन्दुकः स्वादुकन्दुः सिञ्चतिका गुडा ॥"

द्व्यर्थे कुवलं, नीलाब्जं बदरं च । कोलिफलत्वात् कोलिकमिति सभ्यः पाठः । कोकिलमिति तु वैद्याः । चन्द्रोऽपि —

"बदरी गोपघोण्टा च घोण्टा मुण्डाथ कोलिका ।
स्निग्धच्छदा कोलफला राष्ट्रवृद्धिकरी तथा" ॥

टीका० — कर्कन्धूत्रयं बदरीवृक्षे । 'अन्दूदृम्भूजम्बूकफेलुकर्कन्धूदिधिषूः' (उ० १.९६) इत्यनेन कर्कपूर्वाद् धाञः कूप्रत्ययः (म ?) नुडागमश्च निपातितः । 'बद स्थैर्ये' । 'ऋच्छेररन्' (उ० ३.१३१) इति बाहुलकोऽरन्प्रत्ययः । ङीषि बदरी । 'कुल संस्त्याने' । 'इन्' (उ० ४.११९) इतीन् । कोलिः । †कोलचतुष्कं बदरीफले । कोलेः फलं विकारः कोलम् । 'तस्य विकारः' (४. ३. १३४) इत्यण् ।

१, २. 'हृत् ॥' ङ. छ. पाठः. ३. 'मृ' ख. पाठः. ४. 'दुड्ढाडको' क. पाठः. ५. 'गा' घ, 'मा' ङ. छ. पाठः.

* 'कोलकं को', § 'कर्कन्धुकं गुडफलं बालेष्टं फलशैशिरः' इति मुद्रितकोशपाठः ।
† 'कोलषट्कम्' इति स्यात् ।

'पुष्पमूलेषु बहुलम्' (वा० ४. ३. १६६) इति लुगभावः। संज्ञापूर्वकत्वान्न वृद्धिः। अरिष्टे फेनिल उक्तः।

"स्रोतोञ्जने च सौवीरं बदरे काञ्जिकेऽपि च"

इति दन्त्यादौ रभसः। "सौवीरं बदरं च (न)बिति" तन्त्रान्तरम्।

"सौवीरं बदरं कोलं बदरीणां फलं मतम्"

इति केचित्। बदरं घोण्टापीति। घोण्टाफलेऽपि बदरम्। अपिशब्दाद् बदरीफले च। घोण्टा च सृगालकोलिः। तदुक्तं—

"बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्।
अटव्यामेव सा घोण्टा गोपघोण्टेति सोच्यते"॥

**अथ स्यात् स्वादुकण्टकः।**

**विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि॥ ३७॥**

**क्षीर०— विकङ्कते प्रसरति विकङ्कतः। ककिर्गत्यर्थः। स्रुवा स्रुक्। सा हि वैकङ्कती आम्नाता। आह च—**

**"विकङ्कते[$] पृथुफलो ग्रन्थिलः स्वादुकण्टकः।**
**[‡]गोकण्टकः काकपादो व्याघ्रपादोऽथ *किङ्करी॥"**

टीका०— स्वादुकण्टकपञ्चकं [१]वहेश्चीति ख्याते। स्रुवोपयुक्तो वृक्षः स्रुवावृक्षः। दन्त्यादिः। 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः। ग्रन्थियोगाद् ग्रन्थिलः। पिच्छादि[४]त्वादिलच्। व्याघ्रपादिति। 'पादस्य लोपोऽहस्त्यादिभ्यः' (५. ४. १३८) इत्यन्त्यलोपः॥

१. 'वृद्धफ' क. पाठः. २. 'पघण्टा काकवेदो' ख. पाठः. ३. 'ल' घ. ङ. पाठः
४. 'दील' क. ख. च. ज. झ. पाठः.

$ 'तो मृदुफ', ‡ 'गोपघोटः का', * 'किङ्किणी' इति धन्वन्तरिः।

**ऐरावतो नागरङ्गः**

क्षीर०— इरावत्या विद्युत इवायं रक्तत्वादैरावतः। नागस्य सि-न्दूरस्येव रङ्गोऽस्य नागरङ्गः। न आगच्छाति सहजो रङ्गोऽस्य वा। आह च—

"नारङ्गस्त्वक्सुगन्धश्च नागरङ्गो मुखप्रियः।
स चैराव[1]तकः प्रोक्तः सुरातक्राधिवासनः"॥

**नादेयी भूमिजम्बुका।**

क्षीर०— नादेयी नदीजाता। भूमौ जम्यते अद्यते जम्बूः। च-त्वारो नागरङ्गार्था इति गौडः॥

टीका०— ऐरावतचतुष्कं नागरङ्गे। भूजम्बूनामा च। अग्रतो वक्ष्यति (?)॥

**तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके॥ ३८॥**

क्षीर०— तिम्यति तिन्दुकः। शितिः कालः सारो मज्जास्य शिति-सारः। आह च—

"तिन्दुको नीलसारश्च कालस्कन्धो[*]ऽधि[2]मृत्सरः।
स्फूर्जकः स्फूर्जः" इति॥

टीका०— तिन्दुकचतुष्कं केन्दु[3]वृक्षे। स्फूर्जक इति। 'कृञादिभ्यः संज्ञायां वुन्' (उ० ५. ३९)। शितिः कृष्णः सारोऽस्येति शितिसारः। ता-लव्यादिः॥

१. 'स' क. च. ज. झ. पाठः. २. 'सिमत्सरुः।' ग घ. ङ. पाठः. ३. 'दु' घ. ङ. छ. पाठः.

* 'तिकः प्रोक्तो योगी नक्राधि', ‡ 'तिमुक्तकः। स्फूर्जको रामणश्चैव स्फूर्जनः स्य-न्दनाह्वयः॥' इति धन्वन्तरिः।

**काकेन्दुः कुलकः काकतिन्दुकः काकपील्लुके ।**

क्षीर० — काकवर्णस्तिन्दुः काकेन्दुः काकभक्ष्यो वा । कुत्सितैर्लक्यते कुलकः । 'लक आस्वादने' । अर्थे कुलकः, काकतिन्दुकः पटोलोऽपि । आह च —

*"तिन्दुकोऽन्यो द्वितीयस्तु सैन्धुकः[1] काकतिन्दुकः[2] ।
काकेन्दुकश्च विख्यातः कुपीलुः[3] काकपील्लुकः ॥"

**मर्कटतिन्द्वाख्यः ॥**

टीका० — काकेन्दु(क?)चतुष्कं मर्कटकेन्दौ ॥

**गोलिहो झाटलो घण्टा पाटलिर्मोक्षमुष्ककौ ॥ ३० ॥**

क्षीर० — गोभिर्लिह्यते गोलिहः । गोलीढोऽपि । झाटं सङ्घातं लाति झाटलः । हन्यते घण्टा । पटं विस्तारं राति पाटलिः । मोक्षति सहते मोक्षः । मुष्णाति रोगान् क्षारत्वान्मुष्ककः । आह च —

"मुष्ककोमोक्षको ‡घण्टा मुखको[4] मुञ्जकस्तथा[5] ।
क्षारश्रेष्ठो †गोलिहश्च द्विविधः श्वेत$मुष्ककः[6]" ॥

टीका० — गोलीढपञ्चकं झारलीति ख्यातायाम् । घण्टाकारा पाटलिः घण्टापाटलिः । द्वयोः । 'मुष खण्डने' । §'सृवृहृशुषिमुषिभ्यः कित्'(उ० ३.४१) इति कः । मुष्कः । ततः स्वार्थे कः ॥

**तिलकः क्षुरकः श्रीमान्**

१. 'स्फूर्जकः' ख. घ पाठः. २. 'ळ' क. ङ. च. पाठः. ३. 'क' ग. पाठः. ४ 'मूर्खको', ५. 'ण्ड', ६. 'कृष्णकः' ख., 'मुण्णकः' ग. घ. ङ. पाठः.

* द्वितीयतिन्दुकः काकातिन्दुर्मर्कटति', ‡ 'मुष्टिर्मूषको', † 'गोलकश्च', $ 'कृष्णकः' इति धन्वन्तरिः । § 'संवृभूशुषिमुषिभ्यः कक' इति मुद्रितोणादिपाठः ।

क्षीर० — तिलाभं पुष्पमस्य तिलकः। क्षुरति परुषत्वात् क्षुरकः
आह च—

"तिलकः *पुष्करः श्रीमान् †क्षुरकश्छन्नपुष्पकः" ॥

टीका० — तिलकत्रयं तिल इति ख्याते दीर्घपत्रे। अयं च वसन्ते पुष्प्यति। व्रीहिभेदस्तु न वसन्ते। 'तिल स्नेहने'। 'इगुपधज्ञाप्रीकिरः कः' (३.१.१३५) तिलकः। श्रीमान् मत्वन्तः ॥

**समौ पिचुलझावुकौ।**

क्षीर० — पिचुं तूलं लाति पिचुलः।[1] ध्यायतेर्[2]झा[3]वुकोऽपभ्रष्टः ॥

टीका० — पिचुलद्वयं झार्[4]वुल इति ख्याते ॥

**श्रीपर्णिका कुमुदिका कुम्भी कैडर्यकट्फलौ ॥ ४० ॥**

क्षीर० — श्रीपर्णिका सुपर्णत्वात्। 'पाककर्णपर्ण—' (४.१.६४) इति ङीष्। कुमुदप्रतिकृतिः कुमुदिका कौ मोदते वा। कुम्भी र[5]साधारत्वात्। कं रसम् ईट्टे स्तौति कैडर्यः। अविभावितप्रकृतिप्रत्ययार्थोऽयं वा। कटत्यावृणोति कषायत्वात् फलमस्य कट्फलः। आह च —

"कट्फलः सोमवल्कश्च श्रीपर्णी कुमुदा तथा।
महाकुम्भी च[6] कुम्भी च भद्रा भद्रवतीति च ॥"

द्व्यर्थे कैडर्यः, कट्फलो मदनफलश्च ॥

टीका० — श्रीपर्णिकापञ्चकं काफल इति ख्याते। कटु[7] फलमस्येति कट्फलः। पृषोदरादिः। कुम्भी स्त्री। कैडर्येतिच्छेदः ॥

१. 'लः। आह च— ध्या' क. ग. घ ङ. पाठः २. 'ङ्या' ख. पाठः ३. 'र्धा' ग. घ. ङ. पाठः. ४. 'चु' क. ख, 'चुरी इ' झ., 'वु इ' घ. पाठः. ५. 'आधा' ग. घ. ङ. पाठः. ६. 'व करभी भ' ख. पाठः. ७. 'टुकं फ' घ. ङ. छ. पाठः.

* 'पूर्णकः', † 'क्षुरकश्छत्रपु' इति धन्वन्तरिः।

**क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः ।**

**क्षीर०**— क्रामति क्रमुकः । पट्टोऽस्यास्तीति पट्टी पट्टिका । लोध्रोऽयम् । लाक्षां प्रसादयति । लोध्रप्रस्तावे गतमेतत् ॥

**टीका०** — क्रमुक(पञ्चकं? चतुष्कं) पाटि आख्यलोध्रे । क्रामतेः 'लषपत—' (३. २. १५४) इत्यादिना उकञ् । क्रमुकः । पट्टी इत्याख्या अस्येति पट्टिकाख्यः । पट्टी नान्तः । ङ्यन्तोऽयमिति केचित् । अस्मिन् प्रक्षिप्ते लाक्षा प्रसन्ना भवतीति लाक्षाप्रसादनः । दन्त्यवान् ॥

**नूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥**
**तूलं च**

**क्षीर०** — नूद्यते नूदः । यूपप्रकृतित्वाद् यूपः । ब्रह्मणि वैदिके साधुर्ब्रह्मण्यः । अत एव ब्रह्मदारु । तूल्यते तूलम् । तूलीति गौडः । 'तूल निष्कर्षे' । आह च —

"तूलं नूदं च यूपं च क्रमुकं ब्रह्मकाष्ठकम् ।
ब्रह्मदारु *ब्रह्मनिष्ठं ब्रह्मण्यं ब्रह्मचारि च ॥"

**टीका०** — नूदषट्कमश्वत्थाकारे ब्रह्मदारुवृक्षे । नूदस्तकारादिरिति केचित् । अश्वत्थो हि[1] ब्राह्मणक्षत्रियवैश्यशूद्रभिदाभिन्नो भवति । तत्र ब्राह्मणरूपी ब्रह्मप्रायत्वाद् ब्रह्मदारु इत्युच्यते । अनेनैवारणिः क्रियते । यूपोपयुक्तत्वाद् यूपः । क्रमुक उक्तः । 'तूल निष्कर्षे' । इगुपधलक्षणः कः । तूलः ॥

**नीपप्रियककदम्बास्तु हलिप्रिये ।**

**क्षीर०** — नयति सुखं नीपः । प्रीणातीति प्रियकः । के दाम्य-

१. 'पि' क. ख. पाठः.

* 'ब्राह्मणेष्टं ब्रह्मण्यं' इति धन्वन्तरिः ।

ति कदम्बः। हलिनः प्रियः सुराधिवासनात्। धाराकदम्बो राजकदम्बश्चासौ। धूलीकदम्बोऽन्यः। आह च—

*"पञ्चवकुम्बः प्रावृषेण्यः कदम्बोर्यो[2] हलिप्रियः।
नीपो धूलिकदम्बोऽन्यः सुवासा वृत्तपुष्पकः॥"

टीका०— नीपचतुष्कं हुम्फल इति ख्याते। नयतेः पप्रत्ययेन नीपः। कदेः सौत्रात् †'कदेर्णिद् वा' (उ० ४.८४) इत्यम्बच्[3]। कदम्बः[4]। णित्पक्षे कादम्बः[5]। गोमन्ते गिरौ मेघोज्झितं जलं कदम्बकोटरस्थं मद्यमजायत। तद् बलभद्रेण पीतम्। अतोऽयं हलिप्रियः॥

**वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकस्त्रिषु॥ ४२॥**

क्षीर०—विशेषेणेरयति वीरः वीराणां वा वृक्षो दुस्पर्शत्वात्। अरूंषि स्फोटैर्व्रणान् करोत्यरुष्करः। 'दिवाविभा—' (३.२.२१) इति टः। अग्निवद् मुखमस्या दाहकत्वाद् अग्निमुखी। भल्ल इवातति वृणोति वा भल्लातकः। आह च—

"भल्लातकः स्मृतो ‡रूक्षो दहनस्तपनोऽग्निकः।
अरुष्करो वीरतरुर्भल्ली$ चाग्निमुखी धनुः"॥

टीका०—वीरवृक्षचतुष्कं भल्लातके। अरुर्व्रणं करोतीत्यरुष्करः। विभाकरवत् टः। 'नित्यं समासेऽनुत्तरपदस्थस्य' (८.३.४५) इति षत्वम्। दाहकत्वादग्निमुखी। 'भल्लातः शोभकृत् तथा' इत्यमरमाला। ततः स्वार्थे कः॥

**गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः।**

१. 'चापणः कदम्बः', २. 'म्ब' क. ग. घ. ङ. पाठः. ३, , ४ ५. 'न्य' क. ख. च. ज. झ. पाठः.

* 'धाराकदम्बः प्रावृष्यः क' इति धन्वन्तरिः। † 'कदेर्णित् पक्षिणि' इति मुद्रितोणादिपाठः। ‡ 'ऽरुष्करो द', $ 'ल्लातोऽग्नि' इति धन्वन्तरिः।

प्लक्षश्च

क्षीर०—गर्दभ इवाण्डमस्य गर्दभाण्डः। गर्दं सशब्दं भाण्डमस्येति युक्तम्। कन्दरालत्वात्। कं पीतयति कपीतनः, कपींस्तनोति वा। आह च—

"प्लक्षः कपीतनः शृङ्गी सुपार्श्वश्चारुदर्शनः।
प्लवको गर्दभाण्डश्च कमण्डलुवटप्लवः॥"

टीका०—गर्दभाण्डपञ्चकं गान्धउण्ड इति ख्याते। गन्धपिप्पल इति केचित्। अयं च काण्डपत्रफलादिभिरश्वत्थेन समः। कपीतनप्लक्षावुक्तौ॥

तिन्त्रिडी चिञ्चाम्लिका

क्षीर०—तिम्यति तिन्त्रिडी। चिञ्चिमायतेऽम्लत्वाद् मुखं यया सा चिञ्चा। (फलान्तः?) चुक्रिकाख्यः। आह च—

"अम्लिका चुक्रिका चुक्रा साम्ला शुक्ताथ शुक्तिका।
अम्लिका *चाम्बिका चिञ्चा तिन्त्रिडीकश्च तिन्त्रिडा॥"

टीका०—तिन्तिडीत्रयं तिन्तिलीति ख्यातायाम्। 'तिम ष्टिम आर्द्रभावे'। 'पर्परीकादयश्च' (उ० ४.२०) इत्यनेन उणादौ ईकन्प्रत्ययेन तिन्तिडी निपातिता। पृषोदरादित्वात् ककारलोपः। तथा च—

"चिञ्चाम्लिका तिन्तिडीकं लकुचो लिकुचो डहुः"

इत्यमरमालाप्रयोगदर्शनादव्युत्पन्ना तिन्तिडीति केचित्। अम्लरसयोगादम्लिका। 'अत इनिठनौ' (५.२.११५)।

"अम्लं धात्रीफलाम्लीका मातुलुङ्गोऽम्लवेतसम्"

इति वाहटेन दीर्घमध्योऽप्युक्तः॥

१, २. 'न्ति' ग. ङ. पाठः.

* 'चिञ्चिका' इति धन्वन्तरिः।

अथो पीतसालके ॥ ४३ ॥

**सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।**

क्षीर०—पीतवर्णः सालः । सृजति निर्यासं सर्जकः । अस्यत्यसनः । बन्धूकस्येव रक्तानि पुष्पाण्यस्य बन्धूकपुष्पः । काम्यत्वात् प्रियकः । जीवयति जीवक इति निघण्टुः ।

"संज्ञायां बीजको[1] ज्ञेयो बीजपूरस्तथासनः"

आहुश्च—

"जीवकस्त्वसनः काम्यः शौरिः कृष्णोऽलकप्रियः ।
तिष्यपुष्पः पीतसालः प्रियकः प्रियसालकः ॥
सुगन्धिनीलनिर्यासस्तथा बन्धूकपुष्पकः ।
स स्यात् प्रियकसालश्च प्रियासन्ध्यश्च नामतः" ॥

टीका०— पीतसालषट्कमसनतरौ । 'अर्ज सर्ज अर्जने' । दन्त्यादिः । अच् । सर्जः ।

"प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता" (स० ६. श्लो० ४७)

इति माघे दन्त्ययमकम् । ह्रस्वादिश्च । असनः ।

"विकसितकन्दलदशनैर्यो वमति दरीमुखैश्च कं दलदशनैः"

इति वृन्दावनयमके तालव्योऽपि ।

"पीठेभस्कन्धयोः क्लीबमासनं ना तु जीवके"

इति दीर्घादौ रभसः । बन्धूकपुष्पमिव पुष्पमस्येति बन्धूकपुष्पः । (जीवयतीति) जीवकः । (ण्वुल्) ॥

**साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः ॥ ४४ ॥**

---

१. 'वीजक', २. 'ण्डः', ३. 'महासर्जश्च' ख. पाठः. ४. 'श्च । वि' क. ख. च. ज. झ. पाठः.

क्षीर०— स्यति सालः। कृश्यति कार्श्यः। अश्वकर्णाभपत्रः। सस्यं फलं संवृणोतीति सस्यसंवरः। आह च—

"सर्जकार्श्याश्वकर्णश्च कषायी दीर्घपत्रकः।
सस्यसंवरणः शूरः सर्जकः साल उच्यते" ॥

टीका०— सालपञ्चकं साले। 'सल गतौ'। घञ्। सालः। दन्त्यसः।

"सालकाननयोगेऽपि सालकाननवर्जिता"

इति भिक्षुप्रयोगः।

"शालः सर्जतरौ मत्स्ये शाला स्कन्धलताकुटी"

इति धरणिः। अतस्तालव्यादिरपि। सर्जः असन उक्तः। कार्ष्यो मूर्धन्यषः। 'प्रनिरन्तः —' (८. ४. ५) इत्यादौ नियमसूत्रे कार्ष्यग्रहणात्। सस्यं फलं संवृणोतीति सस्यसंवरः। वृक्षादीनां फलं सस्यमित्यत्र सकार उक्तः ॥

**नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः।**

क्षीर०— वीरतरुरर्जुननामसामान्यात्। ककुभः सन्त्यस्य दिग्व्यापकत्वात् ककुभः। कं कुभ्नातीत्यहृद्या व्याख्या। अर्जुनः शौक्ल्यात्। इन्द्रप्रियत्वादित्येके। आहेन्दुः—

"ककुभस्त्वर्जुनः पार्थो नदीसर्जो धनञ्जयः।
अश्रीफलश्चित्रयोगी वीरो वीरान्तकस्तथा ॥"

ऽयर्थे इन्द्रद्रुः, कुटजोऽर्जुनो देवदारु च ॥

टीका० — नदीसर्जपञ्चकमर्जुने। ककुभो वीणाप्रसेवक उक्तः ॥

**राजादनः फलाध्यक्षः क्षीरिकायाम्**

क्षीर० — क्षीरिका क्षीरस्वादुत्वात्। आद्ये तु मृष्टत्वान्नामनी।

आह च—

"क्षीरिकोक्ता च राजन्यः क्षीरी मृत्सूपको नृपः।
राजादनो नृपस्कन्धः कपीष्टः प्रियदर्शनः" ॥

टीका०— राजादनत्रिकं क्षीरीवृक्षे। क्षीरयोगात् क्षीरिका। 'अत इनिठनौ' (५.२.११५)॥

अथ द्वयोः ॥ ४५ ॥

तापसतरुः

क्षीर०—इङ्गति इङ्गुदः, तापसा अरण्ये यस्याः स्नेहमुपयुञ्जते ॥

टीका०— इङ्गुदीद्वयं पुंताजिआ इति ख्याते। हिङ्गुल्यामिति केचित्। पुंसि इङ्गुदः। तपस्विजनोपयुज्यमानफलतया तापसतरुः॥

भूर्जे चर्मिमृदुत्वचौ।

क्षीर०—भृणाति भूर्जः भूर्जते वा। आहुश्च—

"भूर्जे भुजो बहुवटो बहुत्वक्को मृदुच्छदः॥"

टीका०— भूर्जत्रिकं भूर्जद्रुमे। चर्मीति। 'व्रीह्यादिभ्यश्च' (५.२.११६) इतीनिः। मृदवस्त्वचोऽस्येति मृदुत्वक्॥

पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४६ ॥

क्षीर०—पिच्छा अस्त्यस्याः पिच्छिला। पूरयति पूरणी। मुञ्चति रसं मोचा। स्थिरायुः कालसहत्वात्। शालते दैर्घ्यात्, शलति वा शाल्मलिः। शल्मलिश्च। आह च—

"शल्मली रक्तपुष्पा च कुक्कुटी स्थिरजीविका।
पिच्छिला तूलिनी मोचा कण्टकारी च मोचनी" ॥

१. सु' अ., 'बु' च. पाठः. २. 'ताअट इ' ज. पाठः. ३. ककुरी स्थि', ४. 'ण्ट' ख. पाठः.

टीका० — पिच्छिलापञ्चकं शाल्मलौ। फेनिलवत् पिच्छिलः। टाप्। पिच्छिला। मोचं करोतीति मोचा। 'तत् करोति—' (वा० ३.१.२६) इति मुचेर्णिच्। पचाद्यच्। चिरजीवित्वात् चिरायुः। तथा च —

"षष्टिं वर्षसहस्राणि वने जीवति शाल्मलिः"

इति।

"कदलं शाल्मलिन्यां च व्रणिकायां च दृश्यते"

इत्युत्पलिन्यामिन्नन्तोऽपि॥

**पिच्छा तु शल्मलीवेष्टे**

**क्षीर० — पिच्छेव पिच्छा, आचामवदङ्गुलिषङ्गत्वात्। शल्मल्या वेष्टो निर्यासः। आह च —**

**"शल्मलीवेष्टकः पिच्छा निर्यासः स च शल्मलेः।**
**मोचस्रावो मोचरसो मोचनिर्यासकस्तथा"॥**

टीका० — पिच्छाद्वयं **सङ्गलिआङ्** इति ख्याते। पिच्छा स्त्री। शाल्मलीवेष्टः शाल्मलीनिर्यासः। तथा च —

"कषायो निर्यासो निर्यूषो वेष्टकं तथा"

इति॥

**रोचनः कूटशल्मलिः।**

**क्षीर० — रोचत इति रोचनः शल्मलिविशेषः। कूटेन कुत्सितत्वं द्योत्यते। दुर्गादौ हि परसैन्यदलनार्थं सा क्षिप्यते। आह च —**

**"कुशल्मलिः शाल्मलिको रोचनः कूटशल्मलिः"[1]॥**

टीका० — रोचनद्वयं[2] **कासिम्बहु**[3] इति ख्याते। रोचनो ल्युडन्तः॥

**चिरिबिल्वो नक्तमालः करञ्जश्च करञ्जके॥ ४७॥**

---

१. 'लिः। कूटशल्मलिरिति युक्तः। चि' ख. पाठः. २. 'ना' ङ. छ. पाठः. ३. 'म्ब-लहु' झ., 'म्बल इ' च. छ. ज. पाठः.

क्षीर०— चिरिणं बिलति भिनत्ति चिरिबिल्वः । नक्तं रात्रावालाति अस्माद् नक्तमालः, भूताश्रयत्वात् । रक्तमाल इत्येके । कं रञ्जयति करञ्जः ॥

टीका०— चिरिबिल्वचतुष्कं[1] करञ्जतरौ । नक्तं रात्रिमल(ते ? ति) भूषयतीति नक्तमालः । कं वारि रञ्जयतीति करञ्जः । 'कर्मण्यण्' (३. २. १) । करज इति पृषोदरादित्वादनुनासिकलोपविकल्पः ॥

प्रकीर्णः पूतिकरजः पूतिकः कलिमारकः ।

क्षीर०— प्रकीर्यते प्रकीर्णः । पूतिको दुर्गन्धः । कलेर्मारकः । कलहहृत् । यदिन्दुः—

"करजश्च करञ्जोऽन्यः प्रकीर्णो गौर एव च ।
पूतीकरञ्जः सुमनास्तथा कलहनाशनः ॥"

द्व्यर्थे करजः, करञ्जो नखश्च ॥

टीका०— प्रकीर्यचतुष्कं लोट्टाकरञ्जे[2] । पूतीकः अनीकादित्वाद् दीर्घमध्यः । कलिं करोतीति कलिकारः । ततः स्वार्थे कः । कलिकारकः ॥

करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥

क्षीर०— षड् ग्रन्थयः अस्य हस्तिवारणाख्यः । मन्दतीति मर्कटी[3] वल्लीकरञ्जः । अङ्गार इव वल्लर्योऽस्य अङ्गारवल्लरी । आह च—

"उदकीर्या तृतीयोऽन्यः षड्ग्रन्थो हस्तिवारणी ।
अङ्गारवल्ली शादस्था काकघ्नी[4] करतालिका ॥"

द्व्यर्थे मर्कटी, आत्मगुप्ता अपामार्गः वल्लीकरञ्जश्च ॥

१. 'र' क. ख. ञ. पाठः. २. 'ललाटाक' ज. पाठः. ३. 'ल्लरीक' क. पाठः. ४. 'काकता' क., 'करनाचिका' ग. घ. ङ. पाठः.

टीका०—षड्ग्रन्थादयस्त्रयः प्रत्येकं करञ्जभेदाः पृथक् पृथक् षट्प (बीःवा) षड्ग्रन्थ इत्यर्थः। (मर्कटी ?) वल्लरी(त्वा ? व)द् मर्करी । अङ्गारवर्णा वल्लरी अस्या इत्यङ्गारवल्लरी । द्वयं ङ्यन्तम् ॥

रोही रोहितकः प्लीहशत्रु*र्डाडिमपुष्पकः ।

क्षीर०— रोहयतीति रोही । रोहितकः। रोहतीत्येके, छिन्नप्ररूढत्वात् ।

"रोहीतको रोचनकः प्लीहघ्नो रक्तपुष्पकः ।
रक्तको रोहितो रक्तरोही डाडिमपुष्पकः" ॥

टीका०— रोहिचतुष्कं मगधदेशप्रसिद्धे रोहडतरौ । रोही नान्तः। दाडिमवत् पुष्पमस्येति इवार्थे कः । दाडिमपुष्पकः ॥

गायत्री बालपत्त्रश्च खदिरो दन्तधावनः ॥ ४९ ॥

क्षीर० —गायतः त्रायतेऽवश्यं गायत्री । बालपत्रो युवपलाशः 'बालपत्रः खदिरश्चे'ति ग्रन्थेषु धन्वन्तरिपाठ[1]मदृष्ट्वा गायत्री बालतनय इति बालपुत्रभ्रान्त्या ग्रन्थकृद् बालतनयमाह । सूक्ष्मपर्णो ह्ययम् । खदति खदिरः । 'खद स्थैर्ये' । आह च—

"खदिरो रक्त[2]चीरश्च गायत्री दन्तधावनः ।
कण्[3]टकी बालपत्रश्च जिह्मशल्यः* क्षितिक्षमः" ॥

टीका० — गायत्रीचतुष्कं खदिरे । 'गायत्री खदिरे स्त्री स्यादि'ति रभसः ।

१. 'ठान्तरम' ख. ग. घ. ङ. पाठः. २. 'शी' क. ग. घ. ङ. पाठः. ३. 'ञ्झरी बा' क., 'ञ' ग. घ. ङ. पाठः.

* डकारादिरिह पठ्यते । दकारादिस्तु दाडिमशब्द उपरिष्टाद् व्युत्पाद्यते । पृषोदरादित्वाद्वा डादिरयं भवतु ।

"पारिजातजयानिम्बवाह्निगायत्रिणां पृथक्"

इति तु वैद्यकम्। क्षुद्रपत्रत्वाद् बालपत्रः। बालतनय इति तु लिपिदोषात्। पूर्वपूर्वतन्त्रेषु बाल(प? पु)त्रेति पाठदर्शनादुन्नीतमिति भिक्षुदेवः। बालः सूक्ष्मः तनयः पुष्पात्मकोऽस्येत्यर्थे। शिशिरवत् खदिरः॥

**अरिमेदो विट्खदिरे**

**क्षीर०—अरिर्दुस्सहो मेदः स्रावोऽस्यारिमेदः। विड्गन्धिः खदिरः पूतिखदिराख्यः। आह च—**

**"अरीमेदोऽरिमेदश्च गोधास्कन्धोऽरिमेदकः।**
**अहिमेदोऽरिमारश्चारिमः मत्यरिमेदकः"॥**

**टीका०**—अरिमेदद्वयं स्वल्पखदिरविशेषे। विष्ठावद् दुर्गन्धित्वाद् विट्खदिरः॥

**कदरः खदिरे सिते।**

**सोमवल्कोऽपि**

**क्षीर०**—कं दृणाति कफहरत्वात् कदरः। **सोमवल्कोऽकण्टकित्वात् शुक्लत्वाद्वा। आह च—**

**"†कदरः श्वेतसारोऽन्यः सोमवल्कः पथिद्रुमः।"**

**$[1]र्थे सोमवल्कः, कट्फलः करञ्जश्च॥**

**टीक०**—सिते सितसारे खदिरे कदरद्वयम्। कं जलं दृणातीति कदरः। पचादिः। शुक्लत्वात् सोमवद् वल्कमस्येति सोमवल्कः॥

**अथ व्याघ्रपुच्छगन्धर्वहस्तकौ॥ ८०॥**

१. 'इव वल्क' च. ज., 'वल्क' क. ख. ङ. छ. पाठः.

† 'खदिरः', $ 'त्र्यर्थे सोमवल्कः, श्वेतखदिरः कट्फलः विट्खदिरश्च' इति धन्वन्तरिः।

एरण्ड ऊरुपूकश्च रुचकश्चित्रकश्च सः।
चञ्चुः पञ्चाङ्गुलामण्डवर्धमानव्यडम्बराः ॥ ५१ ॥

क्षीर०— व्याघ्रस्येव पुच्छोऽस्य व्याघ्रपुच्छः। गन्धर्वस्य मृगविशेषस्य भूतविशेषस्येव वा हस्तोऽस्य गन्धर्वहस्तकः। पञ्चाङ्गुलः पञ्चपत्रत्वात्। एरयति वायुम् एरण्डः। ऊरू पुनाति ऊरुपूकः। रोचते रुचकः। चञ्चति चञ्चुः। वञ्चुरित्येके। पञ्च अङ्गुलयोऽस्य पञ्चाङ्गुलः। आमण्डयत्यामण्डः। आदण्ड इत्येके। दीर्घदण्डत्वात्। व्यडम्बयतीति व्यडम्बरः*। 'अड उद्यमे'। व्यडम्बक इत्येके। आह (च)—

"एरण्डस्तरुणः शुक्लश्चित्रो गन्धर्वहस्तकः।
पञ्चाङ्गुलो वर्धमान आमण्डो दीर्घदण्डकः॥
‡नक्तोऽपरो हस्तिकर्णो व्याघ्रो व्याघ्र†तलो रुवुः।
§ऊरुपूको हस्तिपर्णश्चञ्चुरुत्तानपत्त्रकः" ॥

टीका०— व्याघ्रपुच्छैकादशकमेरण्डे। उरु पूगमस्य। आद्यद्वयं ह्रस्वम्। तथा च वैद्यके—

"क्वाथः स्यादुरुपूगतैलसहितः सामे सशूलेऽनिले"

इति। बुक इत्यप्यस्य नाम। तथा च वैद्यकरत्नमाला—

"आमण्डो वर्धमानः स्यादेरण्डो रुबुको बुकः"

इत्यादि। चित्र उक्तः। ततः कन्। चित्रकः।

"चञ्चुरेरण्डके पुंसि पक्षित्रोट्यां स्त्रियां मता"

इति कोशान्तरम्। पत्रात्मके हस्ते पञ्च अङ्गुलयोऽस्येति पञ्चाङ्गुलः। 'मडि भूषायाम्'। मण्डः। पचादिः।

१. 'वं' ख., 'णं' ग. पाठः. २. 'पाति' ख. पाठः.

* 'व्यडम्बनः इति स्वामी' इति तु भानुजिदीक्षितः। ‡ 'रक्तो', † 'दलो', § 'रुवु हस्तिकर्णी च चञ्चुकोता' इति धन्वन्तरिः।

"आमलक्यामनो मण्ड एरण्डे सारपुच्छयोः"

इति रभसः। अमण्डो वा अकारप्रश्लेषात्। दीर्घोऽप्यामण्डः। तथा च—

"गन्धर्वहस्तके दण्ड आमण्डो व्याघ्रपुच्छकः"

इति तारपालः। वर्धमान इति ताच्छील्ये चानश्॥

**अल्पा शमी शमीरः स्यात्**

**क्षीर०— अल्पेऽर्थे 'कुटीशमीशुण्डाभ्यो रः' (५. ३. ८८)॥**

**टीका०— क्षुद्रशम्यां** शमीरः। 'कुटीशमीशुण्डाभ्यो रः' (५. ३. ८८)। स्वार्थिकेऽपि यत् पुलिङ्गता तत्र 'लोकाश्रयत्वाद् लिङ्गस्य' इति युक्तिः॥

**शमी सक्तुफला शिवा।**

क्षीर०— शमयति दोषान् शमी। तच्छीलत्वात्। सक्तव इव फलान्यस्याः। आह च—

"शमी *सक्तुफला तुङ्गकोशा भर्तृफला शिवा"॥

टीका०— शमीत्रिकं **शम्याम्**। 'शमु उपशमे'। पचादिगौरादी।

"न शमी न च पुन्नागा अस्मिन् संसारकानने"

इति श्लेषात् तालव्यादि। सक्तुफला दन्त्यादिः। शिवा उक्ता॥

**पिण्डीतको मरुवकः श्वसनः करहाटकः॥ ५२॥**
**शल्यश्च मदने**

क्षीर०— पिण्डीम् इतः पिण्डीतकः। म्रियन्तेऽनेन विषपुष्पत्वाद् मरुवकः। मरौ वाति वा। श्वसन्त्यनेन श्वसनः। करं हन्ति दुःस्पर्शत्वात् करहाटकः। करं हयति वा करहाटकः। शल्यमस्यास्तीति शल्यः। मदयति मदनः। आह च—

१. 'कं रह' क. घ. ङ. पाठः.

* 'शङ्कुफला तुङ्गा केशहन्त्री शिवाफला' इति धन्वन्तरिः

"मदनः शल्यको $राठः पिण्डी पिण्डीत†कस्तथा।
¶तस्करः करहाटश्च §श्वसनो विषपुष्पकः॥"

त्र्यर्थे मरुवकः, जम्भीरो मदनश्च। शाश्वतश्चाह—

"पिण्डीतके पन्नगन्धे करहाटपदं विदुः"॥

टीका०—पिण्डीतकषट्कं मणहैल इति ख्याते। श्वसनकरहाटा-वुक्तौ। 'शल श्वल्ल आशुगमने'। *'सानसिधर्णसि—' (उ० ४.१०९) इत्यादिना यः। (शल्यः)। 'शल्याख्या मदनतरा'विति तालव्ये अजयः॥

शक्रपादपः पारिभद्रकः।
भद्रदारु द्रुकिलिमः पीतदारु च दारु च॥ ५३॥
पूतिकाष्ठं च सप्त स्युर्देवदारुणि

क्षीर०— परिनिष्ठाप्राप्तं[2] भद्रमस्य पारिभद्रः। द्रौ स्कन्धे किलिमं निर्यासोऽस्य द्रुकिलिमः। पूतिरुग्रगन्धं काष्ठमस्य पूतिकाष्ठम्। सप्तग्रहणं द्रुकिलिमस्यैकत्वाय। आह च—

"देवदारु स्मृतं दारु सुराह्वं किलिमं च तत्।
स्नेहविद्धं महादारु भद्रदार्विन्द्रदारु च॥
देवकाष्ठं भद्रकाष्ठं पूतिकाष्ठं ‡च दारु च।
सुरदार्विन्द्रवृक्षश्च तथैवामरदारु च॥"

त्र्यर्थे पारिभद्रः, %कोलिः पारिजातो देवदारु च। तथा पीतदारु, दारुहरिद्रा देवदारु ¶पूतिकाष्ठम्। किलिमं च[3] (त)दिति पदैकदेशत्वाद्, भीमवत्॥

१. 'हड इ' झ., 'हे इ' ज., 'इह इ' ङ. च. छ. पाठः. २. 'शिष्टप्रा' क. ग. पाठः. ३. 'चेति' ख. पाठः.

$ 'राटः', † 'कः फलः।'. ¶ 'तगरः', § 'छर्दनो' इति धन्वन्तरिः। * 'सानसिवर्णसि' इति मुद्रितोणादिपाठः। ‡ 'सदारु च'. % 'निम्बः पा'. ¶ 'सरलश्च।' इति धन्वन्तरिः।

टीका० — शक्रपादपसप्तकं देवदारुणि । भद्रदारु क्लीबे । 'सुराह्वं भद्रदारु चे'ति रत्नमाला । देवनाम दारु देवदारु । शाकपार्थिवादि । रूपभेदात् क्लीबम् । 'अमुं पुरः पश्यसि देवदारुम्' (स० २. श्लो० ३६) इति रघुकारः । 'पुन्नपुंसकयोर्देवदारु' इति त्रिकाण्डशेषः ॥

अथ द्वयोः ।

**पाटलिः पाटलामोघा काला स्थाली फलेरुहा ॥ ५४ ॥**

**कृष्णवृन्ता कुबेराक्षी**

क्षीर० — पाटला ताम्रपुष्पत्वात् । अमोघा बहुफलत्वात् । काला कालवृन्तत्वात् । स्थाली रसाधारकुम्भीत्वात् । काचस्थालीत्येके । फले रोहति । साङ्कुरफलत्वात् । कुबेराक्षी यक्षाक्षितुल्यपुष्पत्वात् । आह च—

"पाटलोक्ता तु कुम्भीका ताम्रपुष्प्यम्बुवासिनी[1] ।
स्थाली वसन्तदूती स्यादमोघा कालवृन्तिका ॥
द्वितीया पाटला श्वेता निर्दिष्टा काष्ठपाटला ।
सा चैव *श्वेतकुम्भी स्यात् कुबेराक्षी फलेरुहा ॥"

'पाटली कृष्णवृन्ते'ति निमिः । 'पाटला पाटलिर्वा ने'ति माला ॥

टीका० —पाटलिसप्तकं पाटलायाम् । 'अट पट गतौ' । णिच् । ऋतन्यञ्ज्यादिसूत्रेण बहुलवचनादलिच् । पाटलिः । वृषादिकलचि पाटला । काचस्थालीतिच्छेदः । 'मोघा स्त्री पाटलावृक्ष' इति रुद्रः । फले रोहतीति फलेरुहा । इगुपधलक्षणः कः । 'तत्पुरुषे कृति बहुलम्' (६. ३. १४) इत्यलुक् ॥

श्यामा तु महिलाह्वया ।

**लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥**

1. 'ह' ग. घ. ङ. पाठः.

* 'श्वेतकुम्भीका कु' । इति धन्वन्तरिः ।

विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सः।

क्षीर०—श्यामा गौरश्यामवर्णा। महिलाह्वया वनितापर्याया। श्यामत्वात्। गवि भूमौ (विद्य? वन्द्य)ते गोवन्दनी। गुद्यते क्री(ड?ड्य)तेऽनया गुन्द्रा। प्रीणाति प्रियङ्गुः। फलति विशीर्यते फली। विष्वक् सिनोति सर्वतो बध्नाति विष्वक्सेना। ईषद् रम्भाकारा कारम्भा। आह च—

"प्रियङ्गुः प्रियवल्ली च फलिनी *कुङ्कुटी प्रिया।
वृन्ता गोवन्दनी श्यामा कारम्भा वर्णभेदिनी॥"

इन्दुः 'गौर्वन्दनी'ति भिनत्ति। यदाह—

"वन्दनी पुष्पशोभना।
गन्धा[1] प्रियङ्गुः कारम्भा लता गौर्वर्णभेदिनी॥"

त्र्यर्थे $गुन्द्रा, ऐरकः[2] प्रियङ्गुः सेरी[3] च। तथा प्रियकः, असनः प्रियङ्गुः कदम्बश्च। द्व्यर्थे गन्धफलिनी, प्रियङ्गुश्चम्पककलिका च॥

टीका०—श्यामाद्वादशकं प्रियङ्गौ। श्याम उक्तः, ततष्टाप्। महिलाह्वयेति। स्त्रिया यानि नामानि तान्यस्या अपीत्यर्थः। फलिन उक्तः, ततो गौरादिङीष्। फलीति। अर्शआद्यचि ङीष्। गन्धप्रधानं फलमस्या इति गन्धफली। 'पाककर्ण—'(४. १. ६४) इत्यादिना ङीष्॥

मण्डूकपर्णपत्त्रोर्णनटकट्वङ्गटुण्टुकाः॥ ५६॥
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः।
शोनकश्चारलौ

१. 'न्धः' ग. घ. ङ. पाठः. २. 'सारः प्रि', ३. 'सेचरी' ख. पाठः.

---

* 'कङ्गुनी प्रिया। वृत्ता गो', $ 'लता, प्रियङ्गुः सारिवा ज्योतिष्मती च' इति न्वन्तरिः।

क्षीर० — मण्डूका इव पर्णान्यस्य। पत्रैपूर्णोस्य पत्रोर्णः। नटति वातेन नटः। कटून्यङ्गान्यस्य रौक्ष्यात् कट्वङ्गः। डुण्डुभिः शिम्बीभिः कायति डुण्डुकः। स्योनां मुखं कायति स्योनाकः। शुकनासेव पुष्पाण्यस्य। ऋक्ष्णोति हिनस्ति ऋक्षः। अत एव भालूकः। दीर्घो वृन्तोऽस्य। कुटन् वक्रीभवन् नटत्यास्पन्दते कुटन्नटः। शवति शोनकः। गौडाः शोणकमाहुः। 'शोणृ वर्णे'। लूय(त्य?ते ऽ)रमरलुः। आह च—

"स्योनाकः शुकनासश्च कट्वङ्गोऽथ *कैडम्बरः।
मयूर$जङ्घोऽराल्लुकः प्रियजीवः कुटन्नटः।
सं भोक्तः पृथु†शिम्बिश्च ‡डुण्डुको दीर्घवृन्तकः।
§भालूकः सल्लुकः फल्गुवृन्तको जम्बुको नटः"॥

टीका० — मण्डूकपर्णद्वादशकं शोणके। मण्डूकाकृतिपर्णत्वाद् मण्डूकपर्णः। नटतीति नटः। (अति?)कटु तीक्ष्णम् अङ्गम् अस्येति कट्वङ्गः। 'श्यैङ् गतौ'। 'पिनाकादयश्च' (उ० ४. १९) इत्याकन् नुमागमः धात्वन्तस्य चोत्वम्। श्योनाकः।

"भालूके शोणके ऋक्षो नक्षत्रे पुन्नपुंसकम्"

इत्यजयः। कुटन्नट इतिच्छेदः। 'शोण वर्णगत्योः'। 'बहुलमन्यत्रापि' (उ० २. २५) इति कन्। शोणकः। 'ऋ गतौ'। ¶'अर्तिशृभ्यामटुच्'। अरटुः। एवं ह्रस्वादिः टोपधश्च। क्वचिदरलु इति पाठः॥

**तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥**

**अमृता च वयःस्था च**

१. 'उद्धं का' क. पाठः. २. 'खमकति', ३. 'आ (?) इयर्त्यरलु', ४. 'कुटन्दरः', 'सं', ६. 'ल्ल' ख. पाठः.

* 'कटम्भरः, $ 'जङ्घोऽरलुक', † 'शिम्बश्च', ‡ 'टिण्डुको', § शिल्लको फल्गुवृन्ताको जम्बुको मतः॥' इति धन्वन्तरिः। ¶ इदं मुद्रिताणादौ न दृश्यते।

क्षीर० —तिष्यं मङ्गल्यं फलमस्याः तिष्यफला। नित्यमामलके लक्ष्मीरिति। आमलते गुणान् आमलकी आमला वा। अमृता वयःस्था च रसायनत्वात्। धात्री नानार्थे। आह च—

"वयःस्थामलकं ‡तिष्यं जातीफलरसं शिवम्।
धात्रीफलं श्रीफलं च तच्चामृतफलं स्मृतम्"॥

टीका० —तिष्यफलाचतुष्कमामलक्याम्। तिष्ययुक्ते[2] काले फलं करोतीति तिष्यफला। 'तत् करोति—' (वा० ३. १. २६) इति णिच्। पचाद्यच्। टाप्। आमलकीति[3]। 'मल मल्ल धारणे' इत्यत आङ्पूर्वात् 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३५) इति क्वुन्। गौरादिः। एवं धातुप्रदीप उक्तम्। पुंस्यामलकः। क्लीबे त्वामलकम्। वयो यौवनं तिष्ठति स्थिरीभवत्यनयेति वयःस्था। 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कः॥

त्रिलिङ्गस्तु विभीतकः।
नाक्षस्तुषः कर्षफलो भूतवासः कलिद्रुमः॥ ५८॥

क्षीर०— बिभेत्यस्माद् विभीतकः। अक्ष्णोति व्याप्नोति अक्षः। ना पुमान्। तुष्यति, तुष इति निघण्टुषु न संवादी, तेषु तुमुलपाठात्। कर्षफलोऽक्षसामान्यात्। अक्षो विभीतके पलचतुर्भागे च वर्तते। भूतानां वासः। कलेराश्रयो द्रुमः। आह च—

"संवर्तको भूतवासः *कर्षो हार्यो †विभेदकः"

इन्दुश्च—

"अहार्यं बहुवीर्यं च तुमुलं च विभेदकम्"॥

१. 'च नरर', २. 'क्तका' क. पाठः. ३. 'की म', ४. 'न्। ए' घ. ङ. छ पाठः. ५. 'घु सम्पादिते' ग. पाठः.

‡ 'वृष्यं', * 'कल्को हा', † 'विभीतकः' इति धन्वन्तरिः।

टीका०— विभीतकचतुष्कं बेहडीति[1] ख्यातायाम् । 'अशेर्देवने' (उ० ३. ६५) इति सः । अक्षः । 'तुष तुष्टौ' । इगुपधलक्षणः कः । तुषः । नलनृपतिमपहाय कलिर्विभीतकमाश्रितः इति कलिद्रुमः ॥

**अभया त्वव्यथा पथ्या कायस्था पूतनामृता ।**
**हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥**

क्षीर०— नास्ति भयमस्यां[2] अभया । न व्यथयत्यव्यथा । पथि साधुः पथ्या । हितेत्यर्थः । काये तिष्ठति निष्फला न भवति कायस्था । वयःस्थेत्येके । पूतं करोति पूतना । विरेचनीत्वात् । पृतनेत्येके । हरति रोगान् हरीतकी । चेतयत्यनया स्रोतः शुद्धेः चेतकी । आह च—

"हरीतक्यभया पथ्या प्रपथ्या †पूतनामृता ।
जयाव्यथा हैमवती §कायस्था चेतकी तथा ॥"

त्र्यर्थे श्रेयसी, रास्ना हरीतकी हस्तिपिप्पली च । 'शिवाव्यथा पूतने'ति चन्द्रः ॥

टीका०— अभयैकादशकं हरीतक्याम् । उपयुज्यमानायामस्यां नास्ति रोगभयमित्यभया । एवमन्यथापि । हारिणा इतो गतः हरीतः । ततः कन्ङीषौ । हरीतकी । चेतकीति । चेतयतेर्वुन्ङीषौ[3] ॥

**पीतद्रुः सरलः पूतिकाष्ठं च**

क्षीर०—सरलः ऋजुत्वात् । आह च—

"सरलः पूतिकाष्ठं च *पीडा पीतद्रुरुच्छ्रितः[4]" ॥

१. 'वहडी' ङ., 'बेहडी' छ. पाठः. २. 'स्यां', ३. 'वी' ङ. पाठः. ४. 'मःश्रितः' क. पाठः.

† 'पूतना', § 'वयःस्था चेतकी शिवा ।', * 'चिडा पित्तद्रुमो मतः ।' इति धन्वन्तरिः ।

टीका०—पीतद्रुत्रयं सरले। पीतद्रुरिति कर्मधारयः। सर्तेः ‡'मङ्गलाद-यश्च' (उ० ५. ७१) इत्यलच्। सरलः। 'सरलः सरले साहसरागमि'ति भाषा-समावेशे भवभूतिः(?)॥

अथ द्रुमोत्पले।

**कर्णिकारः परिव्याधः**

क्षीर०—उत्पलानीव पुष्पाण्यस्य द्रुमोत्पलः। सुरभिश्चायम् अन्यो निर्गन्धः। कर्णिकामियर्ति कर्णिकारः। द्व्यर्थे परिव्याधः, जलवेतसः कर्णिकारश्च॥

टीका०—द्रुमोत्पलत्रयं कलिआर इति ख्याते। परिव्याधो घञन्तः॥

**लकुचो लिकुचो डहुः॥ ९०॥**

क्षीर०—लक्यते आस्वाद्यते लकुचः। फलं लिह्यते[1] आस्वाद्यते लिकुचः। डह्यते डहुः॥

टीका०—लकुचत्रयं डहुआ इति ख्याते। 'लघुचोऽपी'ति रभसः॥

**पनसः कण्टकिफलः**

क्षीर०—पन्यते स्तूयते पनसः। 'पणस' इति दुर्गः। लोकोक्त्या कण्टकिफलः। महासर्गोऽपि॥

टीका०—पनसद्वयं कण्टभाल[2] इति ख्याते। 'पण व्यवहारे', 'पन च'। §'अत्यमिचमिरभिनभिलभिपतिपदिभ्योऽसच्' (उ० ३. १७) पनसः। दन्त्यवान्। कण्टकयुक्तं फलमस्येति कण्टकिफलः। तथाच 'लक्ष्मीवान् कण्ट-किफलः' इति लटकोशे[3] पुरुषोत्तमः॥

१. 'ते लि' ख. पाठः. २. 'भा इ' घ. ङ. छ. पाठः. ३. 'टलको' च., 'कोशे' छ. पाठः.

‡ 'मङ्गेरलच्', § 'अत्यविचमितमिराभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्' इति मुद्रितोणादिपाठः।

**निचुलो हिज्जलोऽम्बुजः ।**

क्षीर०— निचोल्यते अम्बुना निचुलः । हिमजलस्यापभ्रंशो हिज्जलः जलवेतसविशेषत्वात् । निचुलो लज्जल इति केचित् ॥

टीका० — निचुलत्रयं हिज्जले । जलम् एतीति इज्जलः । एतेः क्विप् । तुक् । राजदन्तादित्वाद् जलशब्दस्य परनिपातः । 'निचुलेज्जलहिज्जला' इति रभसः ॥

**काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ॥ ६१ ॥**

क्षीर० — काकप्रिया उदुम्बरी । फलति फल्गुः । मलं श्वित्रं यवाति मलयूः । 'यु जुगुप्सायाम्' । जघने बुध्ने फलान्यस्या जघनेफला । आह च—

"काकोदुम्बरिका *फल्गुरराजी फल्गुवाटिका ।
फल्गुनः फलहारी च मलयूः श्वित्रभेषजम्" ॥

टीका० —काकोदुम्बरिकाचतुष्कं कोट्टाडम्बर इति ख्याते ।

"काकोदुम्बरिकायां स्त्री फल्गुस्त्रिषु निरर्थके ।"

'फल निष्पत्तौ' । 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधताश्च' (उ० १. १८) इत्यनेन फल्गुर्निपातितः । मलं पुनातीति मलपूः । क्विबन्तः । जघनेफलेति । 'अमूर्धमस्तकात् स्वाङ्गादकामे' (६. ३. १२) इत्यलुक् ॥

**अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।**
**पिचुमन्दश्च निम्बे**

१. 'त' ख. ग. घ. ङ. पाठः.

---

"फल्गू राजिफल्गुः शिवाटिका ।
फल्गुनी फलसम्भारा मलयूश्वित्रभेषजा ॥"
इति धन्वन्तरिः ।

क्षीर० — हिङ्गुगन्धिर्निर्यासोऽस्य । माल्यते वेष्ट्यते काकैर्मालकः। शुक(का?मा)लकैकदेशश्चायम् । पिचुं मन्दयति पिचुमन्दः[3]। *रोमशत्वात् । पिचुम(न्द?र्द) इत्येके । यवनेष्टोऽपीति सौश्रुताः । शाश्वतोऽपि—

"हिङ्गुनिर्यासशब्दोऽयं निम्बे हिङ्गुरसेऽपि च।"

चन्द्रनन्दनस्तु शुकमालकमाह ॥

टीका० — अरिष्टषट्कं निम्बे । हिङ्ग्वाकारो निर्यासोऽस्येति हिङ्गुनिर्यासः । 'मल मल्ल धारणे' । ण्वुल् । मालकः । पिचुं कुष्ठं मृद्नातीति पिचुमर्दः । नयतेः 'उल्बादयश्च' (उ० ४. ९६) इत्यनेन बन् मुम् ह्रस्वश्च । निम्बः ॥

अथ पिच्छिलागुरुशिंशपा ॥ ६२ ॥

क्षीर० — अगुरुतुल्यसारा शिंशपा अगुरुशिंशपा । यदाह—

"शिंशपा तु महाश्यामा §कृष्णसारः स्मृतोऽगुरुः ।"

अगुरुर्हि धूपद्रव्यं शिंशपासारश्च। अर्थे पिच्छिला, शल्मलिः शिंशपा च ॥

कपिला भस्मगर्भा सा

क्षीर० — †रक्ताभा रक्तशिंशपान्या कपिला भस्मगर्भा वसादनी ॥

टीका० — पिच्छिलापञ्चकं शिंशपायाम् । पिच्छिला उक्ता । अगुरु क्लीबम् । शिंशपा द्वितालव्या । कपिल उक्तः । ततष्टाप् । भस्मगर्भा दन्त्यसा ॥

१. 'सा' ख. ग., 'कसाल' घ. ङ. पाठः. २. 'न्दः । अरो' क. ग. घ. ङ. पाठः. ३. 'न' ख. पाठः. ४. 'सा तदाह —रक्त' ख. पाठः. ५ 'र्भ' क. ग. घ. ङ., 'र्भात्व' ख. पाठः.

* 'रोमशः पिचुमन्दश्च' (पृ० ५१. श्लो० ७५) इति यादवः । § 'कृष्णसारा स्मृता गुरुः ।', † 'कुशिंशपान्या कपिला भस्मगर्भा वसादनी ।' इति धन्वन्तरिः ।

शिरीषस्तु कपीतनः ।

तण्डिरोऽपि

क्षीर० — शिरसि इष्यते शिरीषः । शीर्यते वा सौकुमार्यात् । तण्ड्यते तण्डिरः । भण्डीरो[1]ऽपि । आह च —

"शिरीषो मृदुपुष्पश्च †भण्डीरः[2] शिखिनीफलः ।
कपीतनः शुकतरुः श्याम¶वल्कः शुकप्रियः ॥"

भ[3]ण्डिल इत्येके ॥

टीका० — शिरीषत्रयं शिरीषे । 'शॄपॄभ्यां $ कित्' (उ० ४. २७) इति ईषन् । शिरीषः । तालव्यादिः मूर्धन्यान्तश्च । 'भडि कल्याणे' । 'सलिकल्[4]यनि—' (उ० १. ५७) इत्यादिना इलच् । भण्डिलः ॥

अथ चाम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥

क्षीर० — चम्पादेशभवश्चाम्पेयः । चम्यतेऽद्यतेऽलिभिः चम्पकः । चं[5]पकोऽपि । आह च —

"चम्पकः सुकुमारश्च सुरभिः शीतलश्च सः ।
चाम्पेयो हेमपुष्पश्च काञ्चनः षट्पदातिथिः" ॥

टीका० — चाम्पेयत्रयं चम्पके । हेमवर्णं पुष्पमस्येति हेमपुष्पकः ॥

एतस्य कलिका गन्धफली स्याद्

क्षीर० — गन्धः फलमस्या गन्धफली । प्रियङ्गुः चम्पक(नाऽक)लिका चेति द्व्यर्थे[6] (गन्ध)फली ॥

१. २. 'त' ख पाठः. ३. 'ण्डील्ये' क. ग. घ. ङ. पाठः. ४. 'लि' ख. घ. ङ. छ. ज. झ पाठः. ५. 'चाम्पको' ख. पाठः. ६. 'लिनी च ॥' क. ग. घ. ङ. पाठः.

† 'भडिकः शाङ्गर्नी'. ¶ 'वर्णः शु' इति धन्वन्तरिः । $ 'किच्च' इति मुद्रितोणादिपाठः ।

टीका० — चम्पककलिकायां गन्धफली ॥

अथ केसरे।

बकुलः

क्षीर० — के सरति, केसराः सन्त्यस्य वा केसरः। उच्यते बकुलः। आह —

"बकुलः *शीधुगन्धश्च मद्यगन्धो विशारदः।
मधुगन्धो[1] हेमपुष्पः §शिम्बी केसरकस्तथा" ॥

टीका० — केसरद्वयं बकुले। किञ्जल्के केसर उक्तः ॥

वञ्जुलोऽशोके

क्षीर० — अश्नुते अशोकः। शोकनाशकत्वाद् वा। यदाह —

"अशोकः शोकनाशश्च विचित्रः कर्णपूरकः"।

[2]यर्थे वञ्जुलः, वेतसः स्पन्दनः अशोकश्च ॥

टीका० — वञ्जुलद्वयमशोके। अशोकतले तपस्यन्ती गौरी पूर्णमनोरथत्वादशोका जातेत्यतस्तरुरप्यशोकः ॥

समौ करकदाडिमौ ॥ ६४ ॥

क्षीर० — किरति कणान् करकः। दड[3]यते दाडिमः। आह —

"दाडिमो[4] दालिमः सारकुट्टिमः फलषाडवः।
स्वाद्वम्लो रक्तबीजश्च करकः शुकवल्लभः" ॥

टीका० — करकद्वयं दाडिमे। 'दल विदारणे'। भावे घञ्। दालः।

१. 'गूढपु', २. 'त्य' ख. पाठः. ३. 'डा' घ. पाठः. ४. 'डा' ग. क. घ. पाठः.

* 'सीधुग', § 'शीर्षक' इति धन्वन्तरिः।

अनेन निर्वृत्त इति दाडिमः । 'भावप्रत्ययान्तादिमब् वक्तव्यः' (वा० ४. ४. २०) इति इमप् । डलयोरेकत्वस्मरणम् ।

"कान्ताङ्घ्रिदोहदोऽशोको दाडिमे फलषाडवः ।
दाडिम्बसारापिण्डीरस्वाद्वम्लशुकवल्लभाः ॥"

इति रभसः ॥

**चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।**

क्षीर० — नागप्रियाणि केसरवन्ति पुष्पाण्यस्य नागकेसरः । आह च —

"नागपुष्पो मतो नागः केसरो नागकेसरः ।
चाम्पेयो नागकिञ्जल्कः करकं हेम काञ्चनम्" ॥

टीका० — चाम्पेयचतुष्कं नागकेसरे । नागो हस्ती तन्नामा केसरो नागकेसरः । काञ्चनाह्वयः सुवर्णपर्यायनामकः ॥

**जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६८ ॥**
**श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका ।**
**जयः**

क्षीर० — जयति जया । अन्त्यो जय इति पुंसि । तर्कमियर्ति तर्कारी । वैजयन्ती केतुत्वात् । अग्निं मथ्नाति दीप्यमानत्वाद् अग्निमन्थः । अत एवाराणिकणाः सन्त्यस्याः कणिका । समूहमियर्ति गणिकारी । गणिं तर्कं करोति वा । स्वार्थे कः । [1]यर्थे नादेयी, जलजम्बूः जलवेतसः तर्कारी च । लिङ्गसाङ्कर्येण जयेत्यर्थे जयन्तं श्रीपर्णमिति चापपाठेन श्रीवर्णमाहुः । तद् न, वनौषधिवर्गे तस्यानादृतत्वात् । यदिन्दुः —

"अग्निमन्थोऽग्निमथनस्तर्कार्यरणिको जयः ।
अरणिः कणिकश्चैव तपनो वैजयन्तिकः ॥"

१. 'न्यादृशत्व' ग. घ. ङ. पाठः.

चन्द्रनन्दनश्चाह —

"अग्निमन्थोऽग्निमथनस्तर्कारी वैजयन्तिकः।
वह्निमन्थोऽरणिः केतुर्जयः पावकमन्थनः॥
तर्कार्या वैजयन्ती च वह्निनिर्मथनी ज(या? यः)।
अरणिका जयन्ती च जया च विजयावहा"॥

टीका॰ — जयापञ्चकं जयन्त्याम्। जयेति पचादिः[1]। जयन्त उक्तः। ङीषि[2] जयन्ती। श्रीपर्णपञ्चकमग्निमन्थे। अग्नये मथ्यत इति अग्निमन्थः। कर्मणि घञ्। यतोऽस्मिन् घृष्यमाणे शीघ्रमग्निरुत्पद्यते॥

**अथ कुटजः शक्रो वत्सको गिरिमल्लिका॥ ६६॥**

क्षीर॰ — कुटि[3]लो[4] जायते कुटजः। शक्रः इन्द्रवृक्षः। वस्ते त्वचं वत्सकः। आह च —

*"कूटजः कुटजः को[5]टी वत्सको गिरिमल्लिका।
कलिङ्गो मल्लिकापुष्प इन्द्रवृक्षोऽथ वृक्षकः"॥

टीका॰ — कुटजचतुष्कं कुटिर्ज इति ख्याते॥

**एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले।**

क्षीर॰ — कलिङ्गयाति कलिङ्गम्। कलिङ्गदेशजं वा। अत एव कालिङ्गः कालिङ्गी च। इन्द्रयवं कुटजफलम्। भद्रयवं कुटजबीजम्। यदाह —

†"फलानि तस्येन्द्रयवा बीजं भद्रयवास्तथा"॥

१. 'दिः। ङी' घ. ङ. छ. पाठः. २. 'पि' घ. ङ. छ. पाठः. ३. 'टो जा' घ. पाठः. ४. 'ले' ग. ङ. पाठः. ५. 'का' ख. पाठः. ६ 'च' च. ज. पाठः.

* 'कुटजः कौटजः कौटो वा',

† "फलानि तस्येन्द्रयवाः शक्राह्वाः स्युः कलिङ्गकाः।
तथा वत्सकबीजानि प्रोक्ता भद्रयवास्तथा॥"
इति धन्वन्तरिः।

टीका० — कुटजफले कलिङ्गत्रयम् ।

"पूतीकरजधूम्याटदेशभेदे पुमान् भवेत् ।
कुटजस्य फले क्लीबं कलिङ्गं स्त्री तु योषिति ॥"

इति रभसः । अपरेणापि रूपभेदेन क्लीबमुक्तम् । 'कलिङ्गेन्द्रयवः पुमान्' इति तु स्त्रीकाण्डेऽमरमाला ॥

**कृष्णपाकफलाविग्रसुषेणाः करमर्दके ॥ ६७ ॥**

क्षीर० — करि[2]मुखाभः करेण मृद्यते करमर्दः । कराम्लोऽपि ॥

टीका० — कृष्णपाकफलचतुष्कं करै[3]न्द इति ख्याते । कृष्णपाकं फलमस्येति ।

"कृष्णपाकफलः कृष्णफलपाकोऽवनालकः ।
कृष्णपाकः पाककृष्णः फलकृष्णो वरालकः ॥
पाककृष्णफलः पाकफलकृष्णः कराम्बुकः ।
फलपाकः पाकफलः पोलः कृष्णफलोऽवशः ॥"

इति शब्दार्णवः । अविग्रो ह्रस्वादिः । सुष्ठु सिनोतीति सुषेणः । 'एति संज्ञायामगात्' (८. ३. ९९) इत्ये[4]कारपरस्य सकारस्य षत्वम् ॥

**कालस्कन्धस्तमालः स्यात् तापिञ्छोऽपि**

क्षीर० — प्राहुः —

"कालस्कन्धस्तिन्दुकः श्यामखदिरस्तमालश्च ।"

ताम्यतीति तमालः । तापिनं छादयतीति तापिञ्छः ॥

टीका० — कालस्कन्धत्रयं तमाले । 'तमु काङ्क्षायाम्' । त*मिबिडिमृणि — (उ० १. १२३) इत्यादिना कालन् । तमालः ॥

१. 'ति' क. ख. झ. पाठः. २. 'पि' ग. घ. ङ., 'लि' ख. पाठः. ३. 'रमन्द' घ ङ. च. छ. झ. पाठः. ४. 'ति प' क. ख. झ. पाठः.

* 'मिविशिवि' इति मुद्रितोणादिपाठः ।

अथ सिन्दुकः।

**सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥**

क्षीर० — स्यन्दते सिन्दुकः। स्यन्दं वृणोति सिन्दुवारः। इन्द्रस्य सुरसः, दिव्य इत्यर्थः। अत एवेन्द्राणी। निष्क्रान्ता गुण्डाद् वेष्टनाद् निर्गुण्डी। आह च —

"सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः।
नीलपुष्पः शीतसहो निर्गुण्डी तिलसन्धिकः" ॥

टीका० — सिन्दुवारपञ्चकं निसुन्दार इति ख्याते। इन्द्राणिकेति स्वार्थे कन् ॥

**वेणी गरागरी देवताडो जीमूत इत्यपि।**

क्षीर० — वेणीव वेणी। गरमागिरति गरागरी। मूषिकाविषघ्नीत्वात्। ताडयति कर्णं ताडः मुख्यत्वाद् देवताडो राजताडवत्। जीमूतो ह्लादकत्वात्। आह च —

"जीमूतको देवताडो वृत्तकोशो गरागरी।
प्रोक्ताखुविषहा वेणी देव*ताडी च ताडकः" ॥

टीका० — वेणीपञ्चकं शिरीषपत्राकारपत्रे देवता इति ख्याते।

"देवताडे खरा तीक्ष्णे त्रिषु स्याद् गर्दभे पुमान्"

इति रभसः। केचित् खरागरीत्येकं नाम वर्णयन्ति। जीमूत उक्तः ॥

**श्रीहस्तिनी तु भूरुण्डी**

क्षीर० — भुवि रोहति भूरुण्डी हस्तिकर्णपत्रः शाकविशेषः। इतो धत्तूरान्तानि पुष्पाणि ॥

---

१. 'रितः।' ग. घ. ङ. पाठः. २. 'नी' ख. पाठः. ३. 'डी' क. पाठः. ४ 'व इ' ज., 'वन इ' च., 'वत इ' क. ख. झ. पाठः.

---

*'दाली च ताडका' इति धन्वन्तरिः।

टीका० — श्रीहस्तिनीद्वयं बकुलसंस्थानलोहितपुष्पे माषक्षेत्रादिजे सिरिहण्डीति ख्याते। भूरुण्डी दीर्घादिः ॥

तृणशूल्यं तु मल्लिका ॥ ६९ ॥
भूपदी शीतभीरुश्च

क्षीर० — तृणशूले गुल्मे साधु तृणशूल्यम्। मल्यते मूर्ध्नि मल्लिका। भुवि पदमस्या भूपदी। शीतभीरुर्ग्रैष्मिकत्वात्। आह च —

"मल्लिका शीतभीरुश्च मदयन्ती प्रमोदिनी।
मदनीया गवाक्षी च भूपद्यष्टापदी तथा" ॥

टीका० — तृणशूल्यादिचतुष्कं मल्लिकायाम्। सर्वैर्धार्यत इति मल्लिका। 'मल मल्ल धारणे'। क्वुन् ॥

सैवास्फोता वनोद्भवा।

क्षीर० — आस्फोटत्यास्फोता। गिरिमल्लिका ॥

टीका० — वनोद्भूतायां मल्लिकायामास्फोता।
"आस्फोता विष्णुकान्तायां वनमल्ल्यर्कपर्णयोः"
इति दीर्घादौ रभसः ॥

शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥ ७० ॥

क्षीर० — शेरते शेफाः अलयः अस्यां शेफालिका। सुष्ठु वहत्यामोदं सुवहा। नीलवर्णा। आह च —

"शेफालिका तु निर्गुण्डी *यमको नीलमञ्जरी।"

१. 'हि' ङ. छ. पाठः. २ 'था सोऽपि विचिकिलं। सै' ख. घ. ङ. पाठः. ३. 'ल्य च' घ. ङ. छ.. 'न्याच' क. ख. ग. पाठः. ४. 'टा', ५. 'स्फु', ६. 'टा' ख. पाठः. ७. 'का च।' क. पाठः.

† 'कान्या नि', * 'वनजा नी' इति धन्वन्तरिः।

त्र्यर्थे सुवहा, रास्ना शेफालिका गन्धनाकुली च ॥

टीका०—शेफालिकाचतुष्कं कृष्णवर्णपुष्पायां शेफालिकायाम्। शेतेः बाहुलकः फालन्। ततो गौरादिङीष्। कनादिः। शेफालिका ॥

**सितासौ श्वेतसुरसा भूतवेशी**

क्षीर०—भूतानि विशत्याह्लादयति भूतवेशी ॥

टीका०—श्वेतसुरसादिद्वयं श्वेतपुष्पायां शेफालिकायाम् ॥

**अथ मागधी।**

**गणिका यूथिकाम्बष्ठा**

क्षीर०—मगधदेशे भवा मागधी। गणिका चित्ताकर्षणात्। यूथो जालकमस्त्यस्या[1] यूथिका। अम्बे शब्दे तिष्ठत्यम्बष्ठा। आह च—

"यूथिका *चालिपुष्पा च पुण्यगन्धा गुणोज्ज्वला।
गणिका चारु‡मोटा च शिखण्डी §च" ॥

टीका०—मागधीचतुष्कं यूथिकायाम्[2]। प्रायो मगधे भवतीति मागधी। यूथिकेति। 'यूथादयः' इति यौतेः थग्दीर्घत्वे। ततो गौरादिङीषादिः। अम्बष्ठेति। 'अम्बाम्बगोभूमि—' (८. ३. ९७) इत्यादिना षत्वम् ॥

**सा पीना हेमपुष्पिका ॥ ७१ ॥**

क्षीर०—आह च—

"सुवर्णयूथी हरिणी पीतिका पीतयूथिका।"

त्र्यर्थे हेमपुष्पी, बिम्बी[3] दुःस्पर्शा $हेमयूथिका च ॥

१. 'तोऽस्त्य' क. ग. घ. ङ. पाठः. २ 'मागधिका' घ. ङ. छ. पाठः. ३. 'शि' क. ग. घ. ङ. पाठः.

* 'बालपुष्पा तु पुष्पगन्धा', ‡ 'मोदा च', § 'स्व', $ 'पीतयू' इति धन्वन्तरिः।

टीका०—यूथिकैव पीता हेमपुष्पिका ॥

**अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवी लता।**

क्षीर०—अतिक्रान्तो मुक्तान् विरक्तान् अतिमुक्तः। पुण्ड्रदेशे भवः पुण्ड्रकः। मण्डकोऽयं निघण्टुषु। मधौ वसन्ते भवा माधवी। आह च—

"*अतिमुक्तो माधवी च सुवसन्तधराश्रयः।
अधियुक्तः कामुकश्च मण्डको भ्रमरोत्सवः" ॥

टीका०—अतिमुक्तपञ्चकम् अद्मङ्ग इति ख्याते। 'माडि भूषायाम्'। 'पुडि चे'त्येके। 'स्फायितञ्चिवञ्चि—' (उ० २. १३) इत्यादिना बाहुलको रक्। पुण्ड्रकः। वसन्ते पुष्प्यति वासन्ती। 'कालात् साधुपुष्प्यत्पच्यमानेषु' (४. ३. ४३) इत्यण्। एवं मधौ चैत्रे माधवे वैशाखे वा पुष्प्यतीति माधवी। लता उक्ता। नाम च पृथगेव। अत एवातिमुक्तकच्छन्नो मण्डपो लतामण्डप इति प्रसिद्धिः ॥

**सुमना मालती जातिः**

क्षीर०—सुष्ठु मन्यते सुमनाः, मनोज्ञत्वात्। मालयत्यामोदैर्मालती। जायते जातिः। आह च—

"जातिर्मनोज्ञा सुमना राजपुत्री प्रियंवदा।
मालती हृद्यगन्धा च पौरिका कोलभाविनी" ॥

१. 'वासन्ती धारकाश्रयः' ख. घ. ङ. पाठः. २. 'दक इ' ज. पाठः. ३. 'नार', ४. 'म पृ' घ. ङ. छ. पाठः. ५. 'तेऽनया जा' ग. झ. पाठः ६. 'धौतिका' ख. ग. घ. ज. पाठः.

"अतिमुक्तः कार्मुकश्च मण्डनो भ्रमरोत्सवः।
अविमुक्तो याधवी च सुवसन्तः पराश्रयः ॥"

इति [illegible]।

टीका० — सुमनात्रयं जात्याम्। सुमनाः सान्ता स्त्रीलिङ्गा च ॥

**सप्तला नवमालिका ॥ ७२ ॥**

क्षीर०—सप्त मनोबुद्ध्यन्तानीन्द्रियाणि लाति सप्तला, सप्तदलेति वा। नवा स्तुत्या मालास्याः नवमालिका ॥

टीका० — सप्तलाद्वयं नेवालीति ख्यातायाम् ॥

**माध्यं कुन्दं**

क्षीर०— माघे मासि भवं माध्यम्। कुं द्यति कुन्दम्। 'कुन्द' इति माला ॥

टीका० — माध्यद्वयं कुन्दे। माघे भवो माध्यः। दिगादियत्। 'कु शब्दे'। 'अब्दादयश्च' (उ० ४.९९) इति दन्नुमागमगुणाभावाः। कुन्दः। 'कुन्दो माध्यः प्रकीर्तित' इति पुंस्काण्डे अमरमाला। 'कुन्दं वा ना स्मृतम्' इति तु व्याडिः ॥

**रक्तकस्तु बन्धूको बन्धुजीवकः।**

क्षीर० — बध्नाति चित्तं बन्धूकः। बन्धुजीवकः ॥

टीका० — रक्तकत्रयं बाम्बुलीति ख्याते। रक्तपुष्पतया रक्तकः। 'बन्ध बन्धने'। 'उलूकादयश्च' (उ० ४. ४१) इत्यूकन्। बन्धूकः। क्वचिद् बन्धुल इति पाठः। तथा च — 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४.९१) ॥

**सहा कुमारी तरणिः**

क्षीर० — सहते परिमलं सहा। कुं भूमिष्ठान् मारयति कुमारी। कुत्सितो मारोऽस्यामिति वा कुमारी। (जनान् नयति वा। कुमारयन्त्यस्यां कुमारी?)। तरन्त्यनया दुःखं तरणिः। आह च—

"कुप्यर्कस्तरणिर्वल्ली[२] कुमार्यलिकुलप्रिया"

१. 'त' ज. पाठः.　२. 'क' ख. ग. ङ. पाठः

ऽयर्थे सहा, मुद्गपर्णी वचा तरुणिश्च ॥

टीका० — सहात्रयं कुमार्याम्। सहा दन्त्यसा।

"द्युमणौ तरणिः पुंसि कुमारीनौकयोः स्त्रियाम्" ॥

**अम्लानस्तु महासहा ॥ ७३ ॥**

क्षीर० — कुरण्डो हि म्लानिं न गच्छत्यम्लानः। वात्स्यायनोऽत एव कूर्चकस्थाने कुरण्डकमालश्चेत्याह। महती विमर्दसहा महासहा। यद् माला — 'अम्लानस्तु कुरण्डकः' ॥

टीका० — अम्लानद्वयम् आमिरोल इति ख्याते। न म्लानं पुष्पमस्येत्यम्लानः। महासहेतिच्छेदः ॥

**तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः।**

क्षीर०—तत्र अम्लाने। कौ रूयते (इ)त्यर्थे कुरवकः। कौ रूयते कुरण्टकः। करञ्जकोऽपि। आह च —

"अम्बितानोऽपरिम्लानस्तथैवाम्रातकः स्मृतः।
रक्तपुष्पः कुरवकः पीतपुष्पः कुरण्टकः॥"

**किङ्किरातोऽसौ ॥**

टीका०— लोहितपुष्पे अम्लाने कुरुवकः। कुरुवकरेफो न निरुकारः। कथं 'कुरवकारवका रणतां दधुः' इति रघुः। कुरवकास्तिलक इति ख्याते पुष्पवृक्षभेदे निरुकारः। एतत्पुष्पविषयमेव यमकमिदम्। तथा च रत्नमाला —

"कुरवकः शुक्लपुष्पस्तिलकः कुलकोऽपि च"

इति। तस्मिन्नेवाम्लाने पीतपुष्पे कुरण्टकः ॥

**नीला झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ॥७४॥**

१. 'रा इ' ज. पाठः. २. 'कुरण्टको' क. ख. पाठः.

क्षीर०—नीलपुष्पा। झिण्टी[2] शुष्का (झि? शृ)णाति। बाणा द्विलिङ्गः। 'बण शब्दे'। दस्यति क्षीयते दासी। आर्तः क्षीणः गलः इत्यार्तगलः॥

टीका०—बाणात्रयं कृष्णझिण्टिकायाम्। दासी दन्त्यसा। अर्तगलो ह्रस्वादिः॥

**सैरेयकस्तु झिण्टी स्यात् तस्मिन् कुरवकोऽरुणे।**

क्षीर०—सैरेयभवा सैरेयाख्या झिण्टी। अरुणपुष्पा चेत् कुरवकोऽसौ॥

टीका०—सैरीयकद्वयं सामान्यझिण्टिकायाम्। लोहितझिण्ट्यां कुरुवकः।

"शोणाम्लानः कुरुवकोऽरुणा। पीता च झिण्डिका"

इति रुद्रः॥

**पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः॥ ७८॥**

क्षीर०—सहचराख्या झिण्टी पीतपुष्पा। झिण्टी पीतपुष्पा चेत्[3] कुरवकोऽसौ। आह च—

"सैरेयकः सहचरः सैरेयश्च महाचरः।
पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत्॥

पीतः कुरण्टको ज्ञेयो रक्तः कुरवकः स्मृतः।
नीलश्चार्तगलो दासी बाण ओदनपाक्यपि"॥

टीका०—पीतझिण्ट्यां कुरण्टकद्वयम्॥

*भद्रपुष्पं जपा

१. 'ण्टी ज्ञायतीति' क. घ. ङ. पाठः. २. 'ज्ञ याति' ग. पाठः. ३. 'दः कु' क. ग. घ. पाठः. ४. 'ह' क. ख. पाठः.

* 'ओड्रपुष्प जपा' इत्येव पाठ भानुजिदीक्षितोऽप्युपादत्ते।

क्षीर० — भद्रदेशे भवं पुष्पम् । जपतीव जपा ॥

टीका० — ओड्र[1]पुष्पद्वयम् ओड्रे[2] । जुः सौत्रः । अच्टापौ । जवा चवर्गादिः । 'जवायां तु जपा स्त्रियामि'ति धर्मः । काश्मीरवल्लभदेवरचितसुभाषितावल्यामपि पकारान्तश्लेषः । तथा च —

"मदनमवलोक्य निष्फलमनित्यतामपि बन्धुजीवानाम् ।
वनमुपगम्य भ्रमरः सम्प्रति जातो जपासक्तः ॥"

इति ॥

वज्रपुष्पं पुष्पं तिलस्य यत् ।

क्षीर० — वज्रमिव विदारकं वज्रपुष्पम् ॥

टीका० — वज्रपुष्पं तिलपुष्पे । 'तिलपुष्पे वज्रमस्त्री' । अतो वज्रनाम पुष्पं वज्रपुष्पम् ॥

प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥

करवीरे

क्षीर० — प्रतीपोऽश्वघ्नत्वाद् हासो विकासोऽस्य प्रतिहासकः । शतं बहूनि प्रासाः कुन्ता इव पुष्पाण्यस्य शतप्रासः । श्वेतश्चासौ । चण्डमतति तीक्ष्णत्वात् चण्डातः । रक्तोऽसौ । (करवीर इव?) मारकत्वात् कराः कान्तारा(?)वीरा अत्रेति । आह च —

"शतकुन्तः श्वेतपुष्पः प्रतीहासोऽश्वमारकः ।
द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥
चण्डातको गुल्मकश्च प्रचण्डः करवीरकः" ॥

टीका० — प्रतिहासपञ्चकं करवीरे । 'उपसर्गस्य घञि —'(६. ३. १२२) इति दीर्घत्वे प्रतीहासोऽपि ॥

१. 'रुद्रपु' घ. पाठः  २. 'ड्रू' ङ. छ. पाठः.

**करीरे तु क्रकरग्रन्थिलावुभौ।**

क्षीर०—करिणमीरयति कण्टकैः करीरो मरुवृक्षः। क्रैति करोति क्रकरः। तीक्ष्णत्वात्। आह च—

"करीरं गूढपत्रं च शाकपत्रं मृदूफलम्।
ग्रन्थिलं तीक्ष्णसारं च क्रकरं तीक्ष्णकण्टकम्"॥

टीका०—मरुदेशजे उष्ट्रभक्ष्ये करीरत्रयम्। 'कॄ विक्षेपे'। '¶कॄशॄशौटिभ्य ईरन्' (उ० ४.३०)। करीरः। सिध्मादिलचि ग्रन्थिलः॥

**उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः॥ ७७॥**

**मातुलो मदनश्च**

क्षीर०—उन्मत्त उन्मादकरत्वात्। धूर्वति हिनस्ति धूर्तः। अत एव कितवः। धयति धत्तूरः। धात्तूरमिति प्राच्याः। काञ्चनाह्वयः भुक्तेऽस्मिन् हेमवर्णपृथ्वीदर्शनात्। आह चेन्दुः—'स ज्ञेया हेमनामभिः'। नास्ति तुलाऽस्येति मातुलः। मा प्रतिषेधे। मदयति मदनः। आह च—

"धत्तू*रकः स्मृतो धूर्तो †देवता कितवः शठः।
उन्मत्तको मदनकः †सुनीलः कनकस्तथा"

टीका०—उन्मत्तसप्तकं धूस्तूरे। उन्मत्त इति। 'तत् करोति—' (वा० ३.१.२६) इति णिच्। पचाद्यच्।

१ 'ह' ख. ग. घ. ङ. पाठः. २. 'गृ' घ. ङ च. छ. ज. पाठः. ३. 'कं' क. पाठः. ४. 'धरय' ख. पाठः. ५. 'तूं' ग. घ. ङ. पाठः. ६. 'तूं' क. ग. घ. ङ. पाठः. ७. 'प्रतिप्रद' ख. ङ. पाठः. ८. 'नत्वात्' क. ङ. पाठः. ९. 'त्यो' क. ग. घ. पाठः.

¶ 'कॄशॄपॄकटिपटिशौटिभ्यः' इति मुद्रितोणादिपाठः। * 'रः कनको धू', † 'देवता'. † 'कालिश्च हरवल्लभः॥' इति धन्वन्तरिः।

"धूस्तुरस्तु §पुरीसोहा (?) धूस्तूरः कनकाह्वयः ।
धुस्तूरो मातुलश्चास्य फले मातुलपुत्रकः ॥"

इति शब्दार्णवः । कनकाह्वयः सुवर्णपर्यायनामा । मदयतीति मदनः ॥

**अस्य फले मातुलपुत्रकः ।**

क्षीर० — यतो धन्वन्तरिः मातुलं धत्तूरं मातुलपुत्रकं च तत्फलमाह ॥

टीका० — धुस्तूरफले मातुलपुत्रकः ॥

**फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥**

क्षीर० — रोचते रुचकः । आह च —

"फलपूरो बीजपूरः केसरी बीजपूरकः ।
बीजकः केसराम्लश्च मातुलु¶ङ्गस्तु पूरकः ॥"

अनेकार्थे —

"सौवर्चलं मातुलुङ्गं शिला चन्दनपेषणी ।
ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम्" ॥

टीका० — फलपूरद्वयं बीजपूर इति ख्याते । फलं पूरयतीति फलपूरः 'कर्मण्यण्' (३. २. १) । रुचकद्वयं मातुलुङ्गके । रुचकः क्वुन्नन्तः ॥

**समीरणो मरुवकः प्रस्थपुष्पः फणिर्जकः ।**
**जम्बीरोऽपि**

क्षीर० — समीरयत्यामोदं समीरणः । मरौ वङ्कति मरुवकः प्रस्थे सानौ पुष्प्यति जाङ्गलत्वात् प्रस्थपुष्पः । खरत्वेन फणाभपत्रत्वा[२]देश्यः फणिर्जकः । जम्भ्यते जम्बीरः । जम्भीरोऽपि । आह च —

---

१. 'त्यम्लं स' क. ग. पाठः. २. 'त्वात् फ' ग. पाठः.

§ 'पुरीमोहा' इति पाठ्यं भाति । अस्य पदस्य स्थाने 'पुण्डरीक्षो' (?) इति पदं धुत्तूरशब्दव्युत्पादने भानुजिदीक्षितीये पठ्यते । ¶ 'ङ्गः सुपूरकः' इति धन्वन्तरिः ।

"जम्बीरः खरपत्रश्च फणी चोक्तः *फणिर्जकः।
‡मरूवको मरुवको †मरुन्मरुवकस्तथा" ॥

टीका० — समीरणपञ्चकं स्वल्पपत्रे पर्णासे। तदुक्तं — 'स्वल्पपत्रः फणिर्जकः' इति ॥

**अथ पर्णासे कठिञ्जरकुठेरकौ ॥ ७०.॥**

क्षीर० — पर्णान्यस्यति पर्णासः। कठिनं जरयति कठिञ्जरः। कुठति कुठेरः कृष्णार्जकाख्यः ॥

टीका० — पर्णासत्रयं सामान्यपर्णासे। पर्णमस्यतीति पर्णासो दन्त्यसः ॥

**सितेऽर्जकोऽत्र**

क्षीर० — शुक्लकुठेरोऽर्जकः, अर्जयतीति। आह च —

"कुठेरकस्तु वैकुण्ठः क्षुद्रपत्रोऽर्जकः सितः।
वटपत्रः कुठेरोऽन्यः पर्णासो बिल्वगन्धकः" ॥

टीका० — श्वेतपर्णासे अर्जकः। 'अर्जकः श्वेतपर्णासे' इत्यमरमाला ॥

**पाठी तु चित्रको वह्निसंज्ञकः।**

क्षीर० — पाठोऽस्यास्तीति पाठी। चेतश्चित् चितो ज(तू? न्तू)न् त्रायते चित्रकः। नानारूपो वा। वह्निपर्यायो दीपनत्वात्। आह च —

"चित्रको दहनो व्यालः पाठीनो दारुणोऽग्निकः।
ज्योतिष्कवल्लरी वह्निः पाठी"

इति ॥

१. 'तौ जाय' क. ग. घ. पाठः. २. 'गः' क. ग ङ. पाठः.

* 'फणिज्जकः', ‡ 'मरुत्तको', † 'मर्मरु', § 'जकस्तथा।' इति धन्वन्तरिः।

टीका० — पाठित्रयं चित्रके। पाठी नान्तः। वह्निसंज्ञको वह्निपर्याय-नामकः॥

**अर्काह्ववसुकास्फोटगणरूपविकीरणाः॥ ८०॥**

**मन्दारश्चार्कपर्णे**

क्षीर० — अर्काह्वोऽर्कपर्यायः। वसत्यस्मिंस्तेजो वसुकः। आस्फुटत्यास्फोटः। गणो बहवो रूपाण्यस्य गणरूपः। विकिरति पुष्पाणि विकीरणः। मन्दमियर्तीति मन्दारः। मन्दा अरा अस्य वा। अर्कनिभानि पर्णान्यस्यार्कपर्णः॥

टीका० — अर्काह्वसप्तकमर्कपर्णे। अर्काह्वः सूर्यनामकः। आस्फोतो दीर्घादिः। 'गणरूपो द्वावि'ति जातरूपः॥

**अत्र शुक्लेऽलर्कप्रतापसौ।**

क्षीर० — शुक्लोऽर्कोऽलर्कः, अलयति भूषयतीति। प्रतापं स्यति प्रतापसः, प्रकृष्टास्तापसा येन वा। आह च —

"अर्कः सूर्याह्वयः पुष्पी *विच्छूर[1]श्च विकीरणः।
जम्भलः क्षीरपर्णः स्यादास्फोटो भास्करो रविः॥
राजार्को वसुकोऽ†प्यर्को मन्दारो गणरूपकः।
एकाष्ठीलः सदापुष्पी स चालर्कः प्रता॥पसः" ॥

टीका० — अलर्कद्विकं[2] श्वेतार्कपर्णे॥

**शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः॥ ८१॥**

क्षीर० — शिवप्रिया मल्लिका शिवमल्ली। उक्तं च —

१. 'ञ्जू' क., 'जू' घ. पाठः. २. 'द्वयं श्व' ङ. छ. पाठः

* 'विक्षारश्च', † 'त्यर्को', ‖ 'पनः' इति धन्वन्तरिः।

"बुकं वेणं सधत्तूरं सुमनाः पाटला तथा।
पद्ममुत्पल(गो?कं) सूर्यमष्टौ पुष्पाणि शङ्करे ॥"

पशुपतेः प्रियोऽयमिति पाशुपतः। एकाष्ठीला मज्जा अस्त्यस्य। बाँति बुकः। बक इति प्राच्याः। वस्ते छादयति वसुः। आह (च)—

*"वसो वसुक इत्युक्तः शिवाङ्कः शिवशेखरः।
महापाशुपतश्चैव सुव्रतः शिवमल्लिका" ॥

टीका०—शिवमल्लिकापञ्चकं बुकपुष्पे। शिवेन मल्ल्यते धार्यत इति शिवमल्ली। 'अकर्तरि च—'(३. ३. १९) इति घञ्। 'पिप्पल्यादयश्च' (ग० ४. १. ४१) इति ङीष्। पशुपतेरयं प्रियः पाशुपतः। 'अश्वपत्यादिभ्यश्च' (४. १. ८४) इत्यण् ॥

वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि।

क्षीर०—जन्म मत्ति नाशयति वृक्षादनी। वृक्षे रोहति वृक्षरुहति वनेचराः। आह —

‡"वन्दाका स्याद् वृक्षरुहा शेखरी †कामवृक्षकः।
वृक्षा §नगरुहा कामन्यङ्घ्रिपरोहिणी" ॥

ऽयर्थे जीवन्ती, वृक्षरुहा गुडूची शाकविशेषश्च ॥

टीका०—वन्दाचतुष्कं वृक्षोपरि जाते विजातीये पल्लवे। वन्देति। 'वदि अभिवादनस्तुत्योः'। अच्। इयं जायमाना वृक्षम् अर्दयतीति वृक्षादनी।

१. 'णु', २. ' क. ग. ङ. पाठः. ३. 'धू' क. पाठः. ४ 'वे' क. ग. ङ. पाठः. ५. 'ब' क. ख. घ. ज. पाठः. ६. 'पि त्र्' ख. पाठः. ७. 'म' क. ख. घ., 'आदय' ङ. छ. पाठः.

* "वसुकोऽथ वसुः शैवो बसोऽथ शिवमल्लिका।
पाशुपतः शिवमतः सुरेष्टः शिवशेखरः ॥",

‡ 'वन्दका', † 'मरूपका', § 'तरुरुहा कामिनी पद्मरूपिणी' इति धन्वन्तरिः

वृक्षरुहेति । मूलविभुजादित्वात् कः । जीवन्तीति । जीवतेः 'रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि' (उ० ३. १२७) इति झच् । 'षिद्गौरादिभ्यश्च' (४. १. ४१) इति ङीष् ॥

**वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता ॥ ८२ ॥**

**जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ।**

क्षीर०—वत्सानामदनं वत्सादनी । छिन्ना रोहति छिन्नरुहा । गुडति रक्षति गुडूची । तन्त्रयते धारयत्यायुस्तन्त्रिका । जीवयति जीवन्तिका । सोमवल्ली अमृतत्वात् । मधूनि पर्णान्यस्या मधुपर्णी । आह च—

"गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता ।
छिन्नोद्भवामृतलता धारा वत्सादनी स्मृता ॥
सैवोक्ता सोमवल्ली तु कुण्डली चक्रलक्षणा ।
जीवन्ती मधुपर्णी तु तन्त्रिका देवनिर्मिता ॥"

न्यर्थे विशल्या, मङ्गली दन्ती गुडूची च ॥

टीका०—इतः प्रभृति पिप्पलीपर्यन्तं श्लोकेन नाम । वत्सादनीनवकं गुडूच्याम् । छिन्नापि रोहतीति छिन्नरुहा । इगुपधलक्षणः कः । 'ङ्यापोः—'(६. ३. ६३) इत्यादिना ह्रस्वत्वम् । न म्रियत इत्यमृता । मधुवत् पर्णमस्या इति मधुपर्णी ॥

**मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥**

**मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।**

क्षीर०—मूर्वति बध्नाति मूर्वा । अत एवास्या विकारो मौर्वी । मधुनो रसोऽस्या मधुरसा । मुरति संवेष्टयति मोरटा । तेजयत्यग्निं तेजनी । स्रवति रसं स्रवा । स्रुवेत्येके । मधूलिका मधूयतीति । मधुनः श्रेणी[2] पङ्क्तिः मधुश्रेणी । गोकर्णी गोकर्णाभपत्रा । 'पाककर्ण—' (४.

---

१. 'रसा धारा', २. 'णीव म' क. ग. घ. ङ. पाठः.

१. ६४) इति ङीष्। पीलोरिव पर्णान्यस्याः पीलुपर्णी। आह च—

"मूर्वा मधुरसा देवी पृ[1]थुत्वक् पीलुपर्ण्यपि।
रेवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा॥"

ज्यर्थे तेजनी, तेजोवती मूर्वा च। आहेन्दुः—

"स्निग्धच्छदा मधुश्रेणी पृ[2]थुत्वग् रसवाहिनी।
रेवश्रेणी मधुमती सुरङ्गी द्विजमेखला॥
आतोलनी योगवहा मोरटी च मधुस्रवा।
सु[3]घोषिका स्निग्धपर्णी गोकर्णी सा मधूलिका॥
पीलुपर्णी कर्मकरी तथा मधुमतीति च।"॥

टीका०—मूर्वादशकं धनुर्गुणोपयुक्तायां मूर्वायाम्। मूर्वेति। 'मुर्वी बन्धने'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। 'उपधायां च' (८. २. ७८) इति दीर्घः। यद्वा 'मृ हिंसायाम्'। 'अशूपुषिलटिकणिखटिविशिभ्यः क्वन्' (उ० १. १५७) इति बाहुलकः कन्। 'उदोष्ठ्यपूर्वस्य' (७. १. १०२) इत्युः, रपरः। 'र्वोरुपधाया दीर्घ इकः' (८. २. ७६) इति वर्तमाने 'हलि च'(८. २. ७७) इति दीर्घः। टाप्। मूर्वाविकारतयैव ज्या मौर्वीत्युच्यते। 'मुर संवेष्टने' इत्यतो वा मौर्वी। देवी गौरादिः। मोरटेति। 'मुर संवेष्टने'। 'शकादिभ्योऽटन्' (उ० ४. ८२) स्रुवतीति स्रुवा। कन्। धनुःश्रेणीत्येकं नाम॥

**पाठाम्बष्ठा विद्धकर्णी स्थापनी [4]श्रेयसी रसा॥ ८४॥**
**एकाष्ठीला पापचेली प्राचीना वनतिक्तका।**

क्षीर०—पठ्यते पाठा। विद्धौ कर्णौ यया विद्धकर्णी। शास्त्रे श्रूयमाणत्वात्। स्थापनी वास्तिकर्मोपयोग्या। रस्यते रसा। पापचेली प्रै-

१. 'थक्त्वक्' क. ख. घ. पाठः. २. 'थकूत्व', ३. 'खोपिता स्नि' ख. पाठः. ४. 'वृकत्वा' ख. घ. पाठः., 'प्रतीक' क. पाठः.

§ 'थक्पर्णा त्रिपर्ण्यपि। देवश्रेणी' इति धन्वन्तरिः।

कीर्णत्वात् । प्राचि भवा प्राचीना । वने तिक्तरसा वनतिक्तका । आह च—

"पाठाम्बष्ठाम्बष्ठकी च प्राचीना पापचेलिका ।
*प्रतीका[1] वनतिक्ता[2] वा पापिका स्थापनी वृकी[3] ॥"

त्र्यर्थे रसा, रास्ना सल्लकी पाठा च ॥

टीका०—पाठादशकं कर्णविद्धयाम् । पाठा घञन्ता ॥

**कटुः कटुम्भराशोका रोहिणी कटुरोहिणी ॥ ८५ ॥**

**मत्स्यपित्ता कृष्णभेदा चक्राङ्गी शकुलादनी ।**

क्षीर०—कटत्यावृणोति नलं कटुः कटुम्भरा । अशोका शोकहर्त्री । †रोहयत्यङ्गानि वाशोका रोहिणी (?) । मत्स्यपित्ता आस्वादात् । मत्स्यानां पित्तं जीवितं वा । कृष्णो भेदः छेदोऽस्याः कृष्णभेदा । शकुलाना(म)दनं शकुलादनी । आह च—

"कटुका ‡मत्स्यशकुला मत्स्यपित्ता च रोहिणी ।
कृष्णभेदा ¶दण्डरुहा रास्ना कटुकरोहिणी ॥
अशोकरोहिणी तिक्ता §वक्राङ्गी शकुलादनी ।
कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी[4] ॥"

द्व्यर्थे कटुम्भरा, कट्वङ्गः कटुका च ॥

टीका०—कट्वाद्यनवकं कटुरोहिण्याम् । कटुः स्त्री । अशोका ।

१. 'वृकती व' ख. पाठः. २. 'ता' ग. घ. ङ. पाठः. ३. 'प्र' क. ग. ङ. पाठः. ४. 'का' ख. पाठः.

* 'वरतिक्ता वृहत्तिक्ता पाठिका स्था' इति धन्वन्तरिः । † 'रोहयत्यङ्गानि रोहिणी । अशोकरोहिणी वा' इति स्यात् । ‡ 'मत्स्यशकला', ¶ 'काण्डरुहा नाम्ना क', § 'चक्राङ्गी' इति

"अशोका कटुरोहिण्यामशोको वञ्जुलद्रुमे ।
रोहिणी कटुरोहिण्यां तद्भेदे लोहितागरोः ॥"

इति रभसः ॥

**आत्मगुप्ताजहाऽव्यण्डा कण्डुरा प्रावृषायणी ॥ ८६ ॥**
**ऋश्यप्रोक्ता शूकशिम्बी कपिकच्छूश्च मर्कटी ।**

क्षीर०—आत्मगुप्ता स्पर्शविषमत्वात् । न जहाति शूकानजहा । न विगताण्डा । कण्डुं राति कण्डुरा । प्रावृषि भवा प्रावृषायणी । ऋश्यैर्मृगैः प्रोक्ता दर्शिता ऋश्यप्रोक्ता । ऋषिभिरप्रोक्ता हेयत्वादित्येके । शूकप्रधाना सकण्टका शिम्बी यस्याः सा । कपीन् कशति कपिकच्छूः । मर्कटी कपिरोमफलत्वात् । आहेन्दुः—

"ऋश्यप्रोक्ता स्वयंगुप्ता कपिकच्छूश्च कण्डुरा ।
आत्मगुप्ता दुरालम्भा लाङ्गली दुरभिग्रहा ॥
अव्यण्डा पृषती गुप्ता कण्डूरा शूकशिम्बिका ।
कपिरोमफला चैव समाश्वादवृपायणी(?) ॥
ज्ञेया जाङ्गलिका सैव साजहा प्रावृषायणी ।" ॥

टीका०—आत्मगुप्तानवकं शूकशिम्ब्याम् । इयं स्पर्शात् कण्डूं जनयति । अतो लोकैः परिह्रियते । तेनात्मगुप्ता[1] । जटा अव्यण्डा एते द्वे नामनी । कण्डूं राति ददातीति कण्डुरा । 'इको ह्रस्वोऽङ्यो गालवस्य' (६. ३. ६१) इति ह्रस्वत्वम् । प्रावृषि जायत इति प्रावृषायणी । शूकसहिता शिम्बिः शूकाशिम्बिः[3] । दीर्घादि । "शश्वच्छशाङ्कशिशिरा अपि शूकशिम्बिः" इति शभेदः । कपिकच्छूः ॥

**चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥**
**प्रत्यक्छ्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।**

१. 'सा । आत्मरक्षितेत्यात्मगुप्ता । ज' क. ख. ज. पाठः. २. ३. 'म्बी' क. ख. ज. झ. पाठः.

क्षीर०—चित्रा नैकवर्णपत्रा। न्यग् रोहति रुणद्धि वा बहुमूलत्वाद् न्यग्रोधी। द्रवतीति द्रवन्ती। शं वृणोति शम्बरी। वर्षति वृणोति वा वृषा। प्रतीची श्रेण्यस्याः प्रत्यक्श्रेणी। सुतानां मूलादीनां श्रेण्यस्याः सुतश्रेणी। रम्यते रण्डा। मूषिकपर्णी आखुकर्णाभपत्रा। आह च—

"द्रवन्ती शम्बरी चित्रा न्यग्रोधी मूषिकाह्वया।
प्रत्यक्श्रेणी ‡वृषा रण्डा पुत्रश्रेण्याखुपर्णिका॥"

द्व्यर्थे उपचित्रा, द्रवन्ती पृश्निपर्णी चेति। ङीचि द्रवन्ती। ग्रन्थकृदुपाचित्रामत्राह॥

टीका०—चित्रादशकं मूषिकपर्ण्याम्। न्यग्रोधी गौरादिः। सम्बरी दन्त्यादिः, तालव्यादिर्वा। रण्डेति। 'रमु क्रीडायाम्'। 'जमन्ताड्डः' (उ० १. ११०)॥

अपामार्गः शैखरिकोऽधामार्गवमयूरकौ ॥८८॥
प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी।

क्षीर०—अपकृष्टः समन्ताद् मार्गोऽस्य अपामार्गः, अधःशल्याख्यत्वात्। शिखरे भवः शैखरिकः। अधमं धाम वाति, अथवा अधाम अर्जति वा अधामार्गवः। मयूरप्रतिकृतिर्मयूरकः। प्रत्यञ्चि पर्णान्यस्याः प्रत्यक्पर्णी। कीशपर्णी कपिरोमत्वात्। अत एव केशपर्णीत्येके। किणिनो जिहीते याति किणिही। स्पर्शात् किणोत्पादकत्वात्। आह च—

"अपामार्गस्तु शिखरी प्रत्यक्पुष्पी मयूरकः।
अधः श(ख्या[1]ल्या)थ किणिही दुर्ग्रहः खरमञ्जरी॥
स एवोक्तः शैखरिको मर्कटी दुरभिग्रहः।
§ पत्रपुष्पी एव शिरःकूटो मर्कटपिप्पली॥"

द्व्यर्थेऽधामार्गवः, अपामार्गः कोशातकी च॥

१. 'दन्त्या द्' क. ग. पाठः. २. 'थवा मञ्जर्याः खरत्वा' क. ग. घ. ङ. पाठः. ३. 'क्' ख. पाठः.

‡ 'विषा चण्डा'. § 'पराक्पुष्पी वशीरश्च कण्टी म'

टीका०—अपामार्गाष्टकमपामार्गे । अपपूर्वान्मृजेः घञ् । अपामार्गः । 'उपसर्गस्य घञि–' (६. ३. १२२) इति दीर्घः। प्रायः शिखरे भवतीति शैखरिकः। अध्यात्मादित्वात् ठञ्। प्रत्यग् विमुखं पुष्पमस्या इति प्रत्यक्पुष्पी§। 'पाककर्ण—' (४. १. ६४) इत्यादिना ङीष् । क्वचित् प्रत्यक्पर्णीति पाठः । कीशपर्णी तालव्यशा । †धामार्गवेत्येकं नाम ॥

**हञ्जिका ब्राह्मणी पद्मा भार्ङ्गी ब्राह्मणयष्टिका ॥ ८९ ॥**
**अङ्गारवल्लीबालेयशाकबर्बरबर्बकाः ।**

क्षीर०—हन्ति रोगं हञ्जिका । ब्राह्मणी पवित्रत्वात् । पद्मा पद्मपुष्पा । [1]भञ्जति भार्ङ्गी । भृज्जतीत्येके । अत एव ब्राह्मणी । अङ्गाराभा वल्लयस्याः अङ्गारवल्ली । बालेयशाको गर्दभयोग्यत्वात् । वृणोति बर्बरो बर्बकश्च बर्बराकृतिपत्रो वा । आह च—

"‡भार्ङ्गी गर्दभशाकश्च पद्मा ब्राह्मणयष्टिका ।
अङ्गारवल्ली $भङ्गी च बर्बो बर्बरकस्तथा ॥"

द्व्यर्थे ब्राह्मणी, स्पृक्का भार्ङ्गी च । आहेन्दुः—

"ब्रह्मरीतिस्तथा स्पृक्का *भार्ङ्गी च ब्राह्मणी मता" ॥

टीका०—हञ्जिकानवकं बाभंणिआठीति ख्यातायाम् । 'भार्गी गर्दभशाकश्च' इति कोशान्तरपाठाद् बालेयशाकेति गर्दभपर्यायपूर्वा पठिता ॥

**मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेशिका ॥ ९० ॥**
**मण्डूकपर्णी भण्डीरी भाण्डी योजनवल्ल्यपि ।**

क्षीर०—मञ्जे मनोज्ञे वर्णे तिष्ठतीति माञ्जिष्ठा। 'अम्बाम्बगोभूमि–' (८. ३. ९७) इति षत्वम् । विकसति दूरं विकसा । जिङ्गति प्रसरति

१. 'भ्रञ्जति भार्ङ्गी' ग. पाठः. २ 'ह्यी । अ' क. ग. घ. ङ. पाठः. ३. 'म्भ' च. पाठः.

§ टाबन्तं युक्तम् । † 'प्रातिपदिकनिर्देशः' । ‡ 'भार्गी', $ 'फञ्जी च सैव ब्रह्मसुवर्चसा ॥', * 'भार्ङ्गी' इति धन्वन्तरिः ।

जिङ्गी । समन्ततोऽङ्गति समङ्गा । काले मिश्यते शब्यते कालमेशिका । भण्ड्यते भण्डीरी [‡]भाण्डी च । योजनवल्ली दूरप्रसरात् । आह च—

"मञ्जिष्ठा कालमेशी च समङ्गा विकसारणा ।
मञ्जूका[1] रक्तयष्टिश्च भाण्डी योजनवल्ल्यपि ॥"

आहेन्दुः—

"विकसा कालमेशी तु कालकोष्ठी[2] तु जिङ्गिका ।
रक्ता भाण्डी करा च"

इति ॥

टीका०— मञ्जिष्ठानवकं मञ्जिष्ठायाम् । समङ्कतीति[3] समङ्गा । 'गम्भीरादयः' इति भण्डेरीरच् । गौरादिः । भण्डीरी ह्रस्वमध्यापीति रभसः । योजनं वल्ली अस्या इति योजनवल्ली ॥

**यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥**
**रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा ।**

क्षीर०— याति प्रसरति यासः । यौति यवासः । दुःस्पर्शः कण्टकित्वात् । धन्वयासो मरूद्भवत्वात् । कुं नाशयति कण्टकित्वात् कुनाशकः । रोदयति रोदनी । चोदनीति सभ्याः । कच्छूरोगं राति कच्छुरा । अनन्ता समुद्रान्ता च दूरव्याप्तेः । कृच्छ्रेण लभ्यते स्पृश्यते दुरालभा । आह च—

"यासो यवासकोऽनन्ता बालपत्रो [†]विकञ्चकः ।
[*]वीरमूलः समुद्रान्तो दीर्घमूलो मरूद्भवः ॥

१. 'ञ्जु' ग., 'ञ्जू' घ., 'जरा र' क. पाठः. २. 'ष्ठी' ख. पाठः. ३. 'मग-ङ्क' क. ख. च. ज. पाठः.

‡ 'भण्डी' इति भानुजिदीक्षितः । † 'विकण्टकः', * 'दूरमूलः' इति धन्वन्तरिः

धन्वयाषो दुरालम्भा §ताम्रपर्णी च कच्छुरा।
दुरालभा च दुःस्पर्शा यासो धन्वयवाषकः"॥

टीका०— यासदशकं **दुरालभायाम्**। यवास इति। 'यु मिश्रणे'। 'ऋतन्यञ्जि—' (उ० ४. २) इत्यादिना आसच्। यवासो दन्त्यसः। कण्टकाचितत्वाद् दुःखेन स्पृश्यत इति दुःस्पर्शः। धन्वा मरुः तद्भवो यासो धन्वयासः। यासे इत्यस्यैव नाम। अत एव वैद्यके धन्वयवासोऽपि, 'बन्धच्छिन्नोद्भवाम्बुधरधन्वयवा(सि? स)विश्वैः' इति। कुणाशकः तालव्यशः। कण्डुरावत् कच्छुरा। दीर्घमूलत्वादनन्ता। तथा हि तन्त्रान्तरे 'दीर्घमूलो मरुभवः' इति। समुद्रस्यैवान्तो दूरतोऽस्याः इति समुद्रान्ता। दुःखेनालभ्यत इति दुरालभा। कर्मणि घञ्। आगमशासनस्यानित्यत्वाद् 'उपसर्गात् खल्घञोः' (७. १. ६७) इति नुम् न भवति। आङ्पूर्वो हि लभिः स्पर्शे। तथा च 'गावश्चालेभिरे भटैः' (स० १४. श्लो० ९१) इति भट्टिः॥

**पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका॥ ९२॥**
**क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनी गुहा।**

क्षीर०— पृश्निश्चित्रगवीव पर्णान्यस्याः पृश्निपर्णी सूक्ष्मपर्णा वा। यदाह—'पृश्निरल्पतनौ'। अङ्घ्रेर्बुध्नादारभ्य पर्णान्यस्या अङ्घ्रिपर्णी। क्रोष्टुभिर्विन्ना दत्तेव क्रोष्टुपुच्छत्वात्। सिंहस्येव पुच्छोऽस्याः सिंहपुच्छी। लोकोक्त्यासिंगुच्छकः। कलशिः गह्वरीव हृतिलत्वात्(?)। धावति प्रसरति धावनी। गूहति रसं गुहा। आह च—

"पृश्निपर्णी पृथक्पर्णी कलशिर्धावनिर्गुहा।
सृगालविन्ना †हृतिला पर्णी क्रोष्टुकपुच्छिका"॥

१. 'सस्यै' च. ज. पाठः. २. 'रूद्भवः' ज. पाठः. ३. 'सिंहगु' क. पाठः. ४. 'नात्रतिकत्वा' ख., 'घृ' ग. घ. ङ. पाठः. ५. 'घृ' ख. ग. ङ., 'त्र' घ. पाठः. ६. 'क' क. पाठः.

§ 'ताम्रमूली च', † 'ङ्घ्रिबला' इति धन्वन्तरिः।

टीका०— पृश्निपर्णीनवकं पीठावनीति ख्यातायाम्। केचित् पृश्निपर्णीचतुष्कं पीठावन्यां क्रोष्टुविन्नापञ्चकं काटारासिभुव इति ख्याते वदन्ति। पृश्निरल्पं तनु पर्णमस्या इति पृश्निपर्णी। पृथग् असंश्लिष्टं पर्णमस्या इति पृथक्पर्णी। क्रोष्टुभिर्विन्ना क्रोष्टुविन्ना। 'कर्तृकरणे कृता बहुलम्' (२. १. ३२) इति समासः। सिंहपुच्छाकृतिः पुष्पमञ्जरी अस्या इति सिंहपुच्छी। गौरादिः॥

निदिग्धिका[2] स्पृशी व्याघ्री बृहती कण्टकारिका॥ ९३॥
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि।

क्षीर०—निदिह्यते[3] निदिग्धिका[4]। स्पृशति कण्टकैरुपतपति स्पृशी। व्याघ्री हिंसकत्वात्। कण्टकबाहुल्याद् बृंहति बृहती[5]। कण्टकानियर्ति कण्टकारिका। प्रचोदयति कण्टकैः प्रेरयति प्रचोदनी। कोलति[6] कुली। क्षुणत्ति क्षुद्रा हिंस्रा क्षुद्रवार्ताक्येकदेशा वा। दुःखेन स्पृश्यते दुःस्पर्शा। राष्ट्रमस्त्यस्या राष्ट्रिका। बृहती निदिग्धिकेति भागुरिवाक्याद् ग्रन्थकृद् भ्रान्तः। यतोऽनयोर्महान् भेदः। यदाह—

"कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका।
‡कण्टकाली कण्टकारी धावनी दुष्प्रधर्षिणी॥
बृहती *सिंहना क्रान्ता वार्ताकी राष्ट्रिका कुली।
विषदा स्थूलगा§ण्डाकी महती तु महोटिका॥"

भागुरिर्हि द्वयोर्बृहतीत्वं मन्यते। यच्छाश्वतः—

"क्षुद्रायां क्षुद्रवार्ताक्यां बृहती छन्दसि क्वचित्।"

अर्थे प्रचोदनी, कण्टकारिका दुरालभा च॥

१. 'ती' ञ. पाठः. २, ३, ४. 'द' क. पाठः. ५. 'दबृहति बृ' ख. पाठः. ६ 'कौ लयति' ख. पाठः.

‡ 'कण्टालिका कण्टकिनी धा', * 'सिंहिका का', § 'कण्टाकी' इति धन्वन्तरिः।

टीका० — निदिग्धिकादशकं कण्टकारिकायाम् । 'स्पृशी प्रचोदनी राष्ट्री' इति रभसः । अतो हलादिः । स्पृशी । कण्टकान् (इयर्ति) करोतीति कण्टकारी । कण्टकित्वादेव दुःस्पर्शा ॥

**नीलि काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥**

**रञ्जनी श्रीफली[1] तुत्था[2] द्रोणि दोला च नीलिनी ।**

क्षीर० — नीली काला च वर्णे नीलात् प्राण्योषध्योर्ङीप् । क्लीतकं विनिमयोऽस्त्यस्याः क्लीतकिका । ग्रामे भवा ग्रामीणा । रञ्जयति नीलीकरोति रञ्जनी । श्रीफली[3] रम्यफला । तुत्थ(य)ते तुत्था[4] । द्रवत्यस्याः स्पर्शाज्जनो द्रोणी । तूणीत्येके । दोल्यते दोला । मेलेत्येके । नीलोऽस्त्यस्या नीलिनी । आह च —

"नीलिनी नीलिका काला ग्राम्या तूणी ‡च शोधनी ।
तुत्था[5] श्रीफलिका *मेला सारवाही च †रञ्जिका[6] ॥"

ऽयर्थे मधुपर्णी, गुडूची काश्मरी $नीलिका च । त्र्यर्थे क्लीतकिका, मधुयष्टी नीलिका च ॥

टीका० — नील्येकादशकं नील्याम् । 'नीलादोषधौ' 'प्राणिनि च' (वा० ४. १. ४२) इति ङीप् । नीली । कृष्णत्वात् काला । ग्रामे भवा ग्रामीणा । 'ग्रामाद् यखञौ' (४. २. ९४) इति खञ् । तुत्थेति । 'तुद व्यथने' । 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ० २. ७) ॥

१. 'ला' ख. पाठः. २. 'च्छा' घ. ङ. पाठः. ३. 'ला' ख. पाठः. ४. 'च्छ' ग. घ. ङ. पाठः. ५. 'च्छा' ङ. पाठः. ६. 'च्छा' ख. ग. घ. ङ. पाठः.

‡ 'वि', * 'मोचा भार', † 'ञनी', $ 'नलि' इति धन्वन्तरिः ।

अवल्गुजः सोमराजी *सुवल्ली सोमवल्लिका ॥ ९५ ॥
कालमेषी कृष्णफला वाकुचिः[1] पूतिफल्यपि ।

क्षीर० — अवल्गोररम्याज्जातोऽवल्गुजः । सोमेनाह्लादेन राजते सोमराजी । कालेन मिष्यते शब्द्यते कालमेषी । कृष्णफलत्वात् । वाति कुचति सङ्कोचयतीति निर्वचनाद् वाकुचिः[2] । पूतिः फलेष्वस्याः पूतिफली । 'पाककर्ण —'(४. १. ६४) (इति) ङीष् । त्र्यर्थे कालमेषी, मञ्जिष्ठा †बृहती वाकुचिका च ॥

टीका० — अवल्गुजाष्टकमवल्गुच[3] इति ख्याते । शोभना वल्लिरस्येति सुवल्लिः । अस्याः फलमशोभनगन्धीत्यतः पूतिफली ॥

कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥
ऊषणा पिप्पली शौण्डी कोला

क्षीर० — कर्षति कृष्णा श्यामत्वाद् वा । उपकोलति संस्त्यायति उपकुल्या । विदेहदेशभवा वैदेही । मगधभवत्वाद् मागधी । चपला सरा । कणाः सन्त्यस्याः कणा । ऊपत्यूषणा । 'ऊष रुजायाम्' । उषणापि । 'उष दाहे' । तीक्ष्णतण्डुलत्वात् । पिपर्ति पिप्पली । शौण्डी शक्तत्वात् । कोला । 'कुल संस्त्याने' । आह च —

"पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला ।
उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा ॥"

इन्दुश्च —

"पिप्पली तण्डुलफला वैदेही कृष्णतण्डुला" ॥

१. 'ची' ख. घ. पाठः. २. 'र्ची' ख. पाठः. ३. 'गु' क. ख. पाठः

* 'सुवल्लिः' इति भानुजिदीक्षितः । † 'स्योनाकः' इति धन्वन्तरिः ।

टीका०—कृष्णादशकं पिप्पल्याम् । प्रायेण कुल्यासमीपे भवतीत्युपकुल्या । प्रायो विदेहायां तीरभुक्तौ भवतीति वैदेही । मगधायामियं मागधी । चपल उष्णो रसः, तद्योगाच्चपला । ऊषणेति । 'ऊष रुजायाम्' । 'बहुलमन्यत्रापि' (उ० २. ९१) इति युच् । एवं दीर्घादिः । 'अयस्तिलत्र्यूषणकोलभागै'रिति वैद्यके । पिप्पलीति 'पिप्पल्यादयश्च' (ग० ४. १. ४१) इति ङीप् ॥

अथ करिपिप्पली ।

**कपिवल्ली कोलवल्ली श्रेयसी वसिरः पुमान् ॥ ९७ ॥**

क्षीर०—करिपिप्पली बृहत्त्वात् । गजयोग्या वा । कपिवल्ली मर्कटरोम[1]त्वात् । एवं कोलवल्ली । वस्यते छाद्यते वसिरः । चव्यफलं चैतत् ॥

टीका०—करिपिप्पलीपञ्चकं हस्तिपिप्पल्याम् । वसिरो दन्त्यसः । तालव्यश इत्यन्यः ॥

**चव्यं तु चविका**

क्षीर०—चव्यते चव्यं च्यवते वा । आह च—

"चविका कोलवल्ली तु चव्यं §च्यवनमेव च ।
तस्याः फलं विनिर्दिष्टं श्रेयसी हस्तिपिप्पली ॥"

चन्द्रनन्दनः सामान्येनाह—

"चव्या कोलाथ चविका श्रेयसी गजपिप्पली ।
च्यवना कोलवल्ली तु चव्यं कुञ्जरपिप्पली ॥"

त्र्यर्थे मर्क†टवल्ली, अपामार्गो हस्तिपिप्पली स्वयंगुप्ता च । तथा वसिरः, अपामार्गः समुद्रलवणं* हस्तिपिप्पली चेति ॥

१. 'मवत्त्वात्' ख. पाठः.

§ 'चविकमे', † 'टी अ', 'वल्लीकरञ्जः स्व', * 'णं पि' इति धन्वन्तरिः ।

टीका०—चवीद्विकं चव्याम् ।

"चव्यां तेजोवती कोला नाकुली च विकोषणे"

इति रत्नमालायां स्त्रीलिङ्गः ॥

**काकचिञ्चीगुञ्जे तु कृष्णला ।**

क्षीर०—काकवर्णा चिञ्चा प्रान्तोऽस्याः काकचिञ्ची । गुञ्जति शिम्बां गुञ्जा । कृष्णं प्रान्तं लाति कृष्णला । रक्तकापि ॥

टीका०—काकचिञ्चीत्रयं काकचिञ्चीति ख्यातायाम् । 'दुर्मेषा रक्तफला चूडामणिश्च सा' इति तन्त्रान्तरम् ॥

**पलङ्कषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥**

**गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।**

क्षीर०—पलं मांसं कषति पलङ्कषा । इक्षोर्गन्ध इवास्याः स्वादुकण्टकित्वादिक्षुगन्धा । शुनो दंष्ट्रेव हिंस्रत्वात् श्वदंष्ट्रा । गवां कण्टको बाधको गोकण्टकः । गोक्षुरकत्वात् । गोर्मही ति युक्तम् । अत एव वनशृङ्गाटो भूक्षुरश्चायम् । आह च—

"गोक्षुरः स्याद् गोक्षुरको ¶भूक्षुरः स्वादुकण्टकः ।
गोकण्टको *भूक्षुरकः षडन्तः क्षुरकः क्षुरः ॥
गोकण्टो †गोखुरः कण्ठी षडङ्गस्त्रिकटस्त्रिकः ।
त्रिकण्टकः कण्टफलः श्वदंष्ट्रो व्यालदंष्ट्रकः ॥"

१. 'मिंव' ख., 'म्व्यां' ग. पाठः. २. 'काहर्ची' च. ज. झ., 'काची' क. ख. पाठः.

---

¶ 'भक्षकः स्वा', * 'भक्षटकः षडङ्गः कण्टकत्रिकः', † 'गोक्षुरः कण्टी षडङ्गः क्षुरकः क्षुरः । त्रि' इति धन्वन्तरिः ।

ऽयर्थे पलङ्कषः, लाक्षा गुग्गुलुः गोक्षुरश्च। तथा इक्षुगन्धा, विदारी कोकिला गोक्षुरश्च[1] ॥

टीका० — पलङ्कषासप्तकं गोक्षुरके। 'पलङ्कषा गोक्षुरक' इति मूर्धन्ये रभसः। शुन इव दंष्ट्रा कर्णिकात्मा अस्या इति श्वदंष्ट्रा ॥

**विश्वा विषा प्रतिविषातिविषोपविषारुणा ॥ ९९ ॥**
**शृङ्गी महौषधं च**

क्षीर० — विशत्यन्तर्विश्वा। वेवेष्टि विषा। प्रतीपा विषस्य प्रतिविषा अगदत्वात्। शृङ्गयुक्तत्वाच्छृङ्गी। आह च—

"अतिविषा †शुक्लगन्धा (?) ज्ञेया विश्वा च भङ्गुराः।
श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥
महौषधं तु विषमो"

ऽयर्थे महौषधं, *विषं शुण्ठी ‡लशुनं चेति। विषाशब्दं बुद्ध्वा भ्रान्तोऽयम् ॥

टीका० — विश्वाष्टकमतिविषेति ख्यातायाम्। विश्वाशृङ्गयौ तालव्यशे। अन्ये षकारा मूर्धन्याः। प्रत्याद्युपसर्गो नियमार्थः ॥

**अथ क्षीरावी दुग्धिका समे।**

क्षीर० — क्षीरमवति क्षीरावी। दुग्धमस्त्यस्या दुग्धिका। क्षीरकाकोलीयम्। आह च—

१. 'श्वदंष्ट्रा च' २. 'णा' घ., 'णातिविषा' क. ग. पाठः.

† 'शुक्लकन्दा', * 'अतिविषं', ‡ 'रसोनश्च' इति धन्वन्तरिः।

"द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी।
वयःस्था क्षीरमधुरा वीरा $क्षीराविका निका॥"

निकेति ग्रन्थकृद् मन्यते। निकारिकेति तु वैद्याः॥

टीका०—क्षीरावीद्वयं क्षीरावीलतायाम्[1]। क्षीरमवति रक्षतीति क्षीरावी। 'कर्मण्यण्' (३. २. १)॥

**शतमूली बहुसुता भीरुरिन्दीवरी वरी॥ १००॥**
**ऋश्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी।**
**अहेरुः**

क्षीर०—शतं बहूनि मूलान्यस्याः शतमूली। बहुधा सुवति बहुसुता। न भीरुरभीरुः स्थिरपत्रा रसायनत्वाद् वा। इन्दीवर्युत्पल-पुष्पा। वृणोति वरी। ऋश्यैः प्रोक्ता श्रिता द्वीपिशत्रुत्वात्। नारायणी विष्णुजाता। शतेनावृणोति शतावरी। न हिनोत्यहेरुः, अभीरोरपभ्रंशोऽयं वा हरमेखलानिघण्टौ दृष्टः। यदाह—सअमूली सआवरी अहेरु इति। आह च—

§"शतवीर्या शतपदी पीवरीन्दीवरी वरी।
सहस्रवीर्याभीरुश्च *तुङ्गिनी बहुपुत्रिका॥
ऋश्यप्रोक्ता द्वीपिशत्रुर्द्वीपिका |खरकण्टका।
¶मता परुपवृन्ता च शतावर्यूर्ध्वकण्टका"॥

टीका०—शतमूलीदशकं शतावर्याम्[2]। शतं मूलान्यस्या इति शत-मूली। बहुप्रतानतया[3] बहुसुता। अभीर्वभीरुपल्ल्यहेरवो ह्रस्वाद्याः। ऋष्यप्रोक्ता मूर्धन्यषा॥

१. 'व' ज. पाठः. २. 'प' क. ख. ङ. च. पाठः. ३. 'तनया' ङ. छ. पाठः.

$ 'क्षीरविषाणिका', § 'शतावरी श', * 'रङ्गिणी ब', | 'चोर्ध्वक', ¶ 'महा-पुरुषदन्ता' इति धन्वन्तरिः।

अथ पीतद्रुकालेयकहरिद्रवः ॥ १०१ ॥

दार्वी पचम्पचा दारुहरिद्रा पर्जनीत्यपि।

क्षीर०—पीतो द्रुः स्कन्धोऽस्य पीतद्रुः। कालयति दोषान् कालेयकः कालीयको वा। हरिः पीतो द्रुः स्कन्धोऽस्य हरिद्रुः। दार्वी दारुहरिद्रा पिण्डहरिद्रातोऽन्या। अत्यर्थं पचति पचम्पचा। पिपर्ति रोगेभ्यः पर्जनी। आह च—

"हरिद्रा पीतिका[1] *पिण्डा रजनी §रजना निशा।
गौरी वर्णवती पीता हरिता वरवर्णिनी॥
अन्या दारुहरिद्रापि हरिद्रुः पीतचन्दनः।
निर्दिष्टा[2] $सा खेटकिनी स च कालेयकः स्मृतः॥
‡कालीयको दारुनिशा दार्वी †पीतद्रुपीतके।
कटङ्कटेरी पर्जन्या पीतदारु पचम्पचा"॥

टीका०—पीतद्रुसप्तकं[3] दारुहरिद्रायाम्। 'हरिमितयोर्द्रुवः' (उ० १. ३९)। हरिद्रुः॥

वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका॥ १०२॥

शुक्ला हैमवती

क्षीर०—वक्त्यनया वचा वाक्पाटवकृत्। षड् ग्रन्थयः पर्वाण्यस्याः षड्ग्रन्था। गोरिव लोमान्यस्याः रोमशत्वाद् गोलोमी। शुक्ला कृष्णा च द्वेधाऽसौ। यदाह—

१. 'तकी पि' क. ग., 'त' घ. पाठः. २. 'ष्टा खे कट' ख. पाठः. ३. 'कं ह' घ. ङ. छ. पाठः.

* 'पिञ्जा', § 'रञ्जिनी', $ 'काष्ठरजनी सा च', ‡ 'कालायकं दा', † 'पीताद्रुपीतकम्' इति धन्वन्तरिः।

"वचोग्रगन्धा गोलोमी जटिलोग्रा च रोमशा ।
अन्या श्वेतवचा मेध्या षड्ग्रन्था हैमवत्यपि ॥"

व्यर्थे शतपर्वा, दूर्वा †पाशा वचा च ॥

टीका० — वचापञ्चकं वचायाम् । 'वचं परिभाषणे' । अचि[2] वचा वचैव शुक्ला हैमवती । प्रायो हिमवति प्रभवतीति हैमवती ॥

**वैद्यमातृसिंह्यौ तु वाशिका ।**
**वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥**

क्षीर० — वैद्यानां मातेव रोगजित्त्वात् । हिनस्ति रोगान् सिंही उश्यते काम्यते वाशिका । वर्षति मधु वृषः । अ(ङ्गाद् ? टान्) गच्छ(ति/तो) रूषत्यटरूषः । सिंहास्याकारपुष्पत्वात् सिंहास्यः । वाजिदन्ता इव केसराण्यस्य वाजिदन्तकः । आह च —

*"वाशकः सिंहपर्णी च वृषो †वर्षोऽथ सिंहिका ।
§अटरूषः सिंहमुखी भिषङ्मातारूषकः"॥

टीका० — वैद्यमात्रष्टकं वासके । 'दशा कशा वाशा पेशी' इत्यादि[4] लिङ्गकारिकायां वाशा तालव्यशा । 'वासायां विद्यमानायामि'ति वर्णविधौ दन्त्य सकारेऽप्युदाहृता । 'मुस्ताटरूषकमहौषधिधन्वयासैः' इति वैद्यकप्रयोगाद् अट रूषो दीर्घोकारवान् मूर्धन्यषश्चायम् । 'अटरुषकुसुमेषु भुजंगमुखचाकित' इति कस्यापि प्रयोगः प्रमाणाभावाद् न प्रामाणिक इति केचित् । पुष्पं सिंहस्येवास्यम स्येति सिंहास्यः । वाजिन इव दन्तः कुसुमलक्षणोऽस्येति वाजिदन्तकः ॥

१. 'च भा' क. ख. ज. पाठः. २. 'च्' क. ख. च. ज. झ. पाठः. ३. 'गा' क 'हं रु' ख. पाठः. ४ 'दिनागीलि' घ. ङ. छ. पाठः. ५. 'जमु' क. ख. पाठः.

+ '[illegible]' * 'वासकः' + 'वासाथ' § 'आटरूषः' इति धन्वन्तरिः

आस्फोटा गिरिकर्णी स्याद् विष्णुक्रान्तापराजिता।

क्षीर०— आस्फुटत्यास्फोटा। गिरिरश्मेव[2] कर्णिका अस्याः गिरिकर्णी। विष्णुक्रान्ता। अत एव रक्षाहेतुत्वादपराजिता अप्रतिहता। आह च—

"अश्वक्षुरः श्वेतपुष्पी श्वेता च गिरिकर्णिका।
कटभी $श्वेतसारा च ‡श्वेतस्यन्दापराजिता॥"

द्वर्थे आस्फोटा[3], शारिबा गिरिकर्णिका च॥

टीका०— आस्फोताचतुष्कमपराजितायाम्।
"पुमानर्काह्व आस्फोता वनमल्ल्यपराजिता"॥

इक्षुगन्धा तु काण्डेक्षुः कोकिलाक्षेक्षुरक्षुराः॥ १०४॥

क्षीर०— इक्षोर्गन्ध इवास्याः। स्वाद्वीत्यर्थः। इक्षुसदृशकाण्डत्वाद् वा। कोकिलस्येवाक्षिण्यस्य कोकिलाक्षः। इक्षुं रातीक्षुरः। स एव लोकोक्त्या क्षुरः, पारुष्याद् वा। आह च—

"तथान्य इक्षुगन्धः स्यादिक्षुरः कोकिलाक्षकः।
काशः काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुकः॥
क्षुरश्च"

इति॥

टीका०— इक्षुगन्धापञ्चकं कोइलखा इति ख्याते। इक्षुरो ह्रस्वादिः।
"नापितस्योपकरणे कोकिलाक्षेऽपि च क्षुरः।"
'पृथुको मेमे चक्षुरस्ये'ति कीचकवधयमकम्॥

१. 'ता' ख. ङ. छ. पाठः. २. 'श्मै' ख पाठः. ३. 'ता' ङ. छ. पाठः. ४. 'म च' क. ख. घ. झ. पाठः. ५. 'र' छ. पाठः.

$ 'श्वेतनामा च', ‡ 'श्वेतस्पन्दा' इति धन्वन्तरिः।

**शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः।**
**मिश्रेयोऽपि**

क्षीर०— शालायां भवः शालेयो गुप्तत्वात्। अत एव शालीनः। शीतः शिवश्च शीतशिवः। छत्राभं पत्रमस्याः छत्रा। मस्यति परिणमते मिसिः। आह च—

"मिश्रेया तालपत्री च तालपर्णी मिसिस्तथा।
शालेयः स च शालीनो नाम्ना शीतशिवो मतः"॥

टीका०— शालेयषट्कं हुरीति[1] ख्यातायां। 'शालेयो मधुरिकायां त्रिषु शाल्युद्भव[2]' इति तालव्ये रुद्रः।

"माधुर्यं ना शीतशिवः क्लीबं शैलेयसैन्धवे"

इति तालव्ये रभसः। छत्रेति। 'छद अपवारणे'। त्रन्। मिसिरिति। 'जिषु मिषु सेचने'। 'इगुपधात् किः' (उ०४. १२१)। मिसिः। पक्षे ङीष्। 'मिसिस्तु मधुरीमांस्योः' इति दन्त्यान्ते विश्वप्रकाशः॥

**अथ सिंहुण्डो वज्रश्च स्नुक् स्नुही गुडा॥ १०५॥**
**सामन्तदुग्धा**

क्षीर०— सिंहुण्डः सिंहतुण्डापभ्रंशः। यद् मेखला— 'कुलीशतरुः सिंहुण्डः'। वज्रो भेदकत्वाद्। स्नौति क्षीरं स्नुक् स्नुही च। स्नुहेति वैद्याः। गुडो वृत्तत्वात्। गुहेत्यपपाठः। यच्छाश्वतः—

"गुडौ गोलेक्षुविकृती स्नुहीगुडिकयोर्गुडा"।

। आह च—

"स्नुक् *सुधा च महावृक्षो गुडा निस्त्रिंशपत्रकः।

१. 'र्वी' ख., 'ह' च., 'हू' घ., 'हुवरी' ज. पाठः. २. 'ङेति वृ' ख. पाठः

* 'स्नुही च' इति धन्वन्तरिः

समन्तदुग्धा ‡षण्डेरा सी[1]हुण्डो ¶वक्रकण्टकः ॥"
'वज्रद्रुः स्नुक् स्नुही' इत्येके पेठुः ॥

टीका०—सिंहुण्डषट्कं सिज्य इति ख्याते । 'वज्रद्रुमसि[2]हुण्डौ चे' ति ह्रस्वादौ रभसः । 'ष्णुह उद्गिरणे' । 'वा द्रुहमुहष्णुहष्णिहाम्' (८. २. ३३) इति वा घत्वम् । स्नुक् । हान्ता । स्नुहीति । इगुपधलक्षणः कः । गौरादिः । 'गुड रक्षायाम्' । इगुपधलक्षणः कः ।

"गुडा स्नुहीगुडकयोर्गुड ऐक्षवगोलयोः"

इत्यजयः ॥

**अथो वेल्लममोघा चित्रतण्डुला ।**
**तण्डुलश्च कृमिघ्नश्च विडङ्गं पुन्नपुंसकम् ॥ १०६ ॥**

क्षीर०—वेल्लति वेल्लम् । विडति भिनत्ति विडङ्गं विडङ्ग इति वा । आह च—

"विडङ्गा जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला ।
*तण्डुलः कृमिहामोघा कैरला मृगगामिनी" ॥

टीका०— वेल्लषट्कं विडङ्गे । 'वेल्ल [3]चलने' । अच् । वेल्लम् ।

"तण्डुलाख्या विडङ्गे स्याद् धान्यादिनिकरेऽपि च"

इति विश्वप्रकाशः । 'विड आक्रोशे' । '†त्रादिभ्यश्च' (उ० १. १२५) इत्यङ्गच् । विडङ्गः । बाहुलको गुणाभावः ॥

**बला वाट्यालकः**

१. 'सिं' ख. पाठः. २. 'सिं' घ. ङ. च. छ. ज. पाठः. ३. 'धा ोः अ' क. ज. पाठः.

‡ 'गण्डीरः सी', ¶ 'वज्रकण्टकः', * 'तण्डुली कृ' इति धन्वन्तरिः । † 'तरत्यादिभ्यश्च' इति मुद्रितोणादिपाठः.

क्षीर०—बलत्यनया बला । बलकृद् वा । वटति वाट्यालकः । चन्द्रनन्दनो 'बलाभद्रौ नदीहृद्या तथा वाट्यालक' इत्याह ॥

टीका०—[1]वलाद्वयं वालिओंड इति ख्याते । वाटीमलतीति वाट्यालकः । स्वार्थे कः ॥

**घण्टारवा तु शणपुष्पिका ।**

क्षीर०—घण्टेव रौति घण्टारवा । शणस्येव पुष्पाण्यस्याः शणपुष्पी । 'पाककर्ण—' (४. १. ६४) इति ङीष् । आह च—

"शणपुष्पी बृहत्पुष्पी †स चोक्तः श[3]र्मकण्टकः" ॥

टीका०—घण्टारवाद्वयं घण्टारवायाम् । 'शणु दा[4]ने' । तालव्यादिः । अच् । शणस्येव पुष्पमस्या इति शणपुष्पिका । इवार्थे कः ॥

**मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥**

क्षीर०—मृद्वीका सौकुमार्यात् । गोस्तनाभा गोस्तनीति विशेषोऽपि सामान्यवृत्तिः । द्राति रसवत्त्वाद् द्राक्षा । आह च—

"द्राक्षा चारुफला कृष्णा *विलोला कालमेषिका ।
‡स्वाद्वी गुडा मधुरसा मृद्वीका गोस्तनी स्मृता" ॥

टीका०—मृद्वीकापञ्चकं द्राक्षायाम् । मृद्वीकेति । 'मृद क्षोदे' । §'पर्परीकादयश्च' (उ० ४. २०) इतीकन्वुगागमौ । स्वाद्वीति । 'वोतो गुणवचनात्' (४. १. ४४) इति ङीष् ॥

१. 'वे' घ. ङ. छ., 'वा' ज. पाठः २. 'आ इ' घ. ङ. छ. पाठः. ३. 'मैं' ख. पाठः. ४. 'ने । अच् । तालव्यादिः श । ' घ. ङ. छ. पाठः. ५. 'म' ख. पाठः.

† 'सा चोक्ता शणघण्टिका', * 'प्रियाला तापसप्रिया', ‡ 'स्वादुपाका म' इति धन्वन्तरिः ।
§ 'पर्फरी' इति मुद्रितोणादिपाठः ।

**सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।**
**त्रिभण्डी रोचनी**

क्षीर०—सर्वास्त्वनुभूतयो यस्यां सा सर्वानुभूतिः, नानारसेत्यर्थः । सरति सरला, विरेचनीत्वात् । सरहेत्येके । त्रयः पुटाः छादका[१] अस्याः त्रिपुटा । त्रिपुटो वा । त्र्यश्रेत्येके । त्रिभिर्वर्तते वर्त्यते[२] छाद्यते वा त्रिवृता । त्रिवृच्च त्रिपुटात्वात् । त्रिभि[३]र्भण्ड्यते उत्पाद्यते त्रिभण्डी । रोचयति रुचिकर्त्री रोचनी । रेचनीत्येके§ ॥

टीका०—सर्वानुभूतिसप्तकं शुक्[४]लतेवडीति ख्यातायाम् । त्रिवृत् तान्ता । रो[५]चनीति । करणे ल्युट् ॥

**श्यामापालिन्यौ तु सुषेणिका ॥ १०८ ॥**
**काला मसूरविदलार्धचन्द्रा कालमेषिका ।**

क्षीर०— पालयति[६] पालिनी । सुषिणोति सुषेणी । आह च—

"श्यामा त्रिवृन्मालविका मसूरविदला च सा ।
कालार्धचन्द्रा ‡पालिन्दी सुषेणा कालमेष्यपि ॥
*शुक्ला चापि त्रिभण्डी स्यात् का[७]काक्षी सरला त्रिवृत् ।
सर्वानुभूतिस्त्रिपुटा ¶त्रि[८]यन्ता कूटवाहिनी ॥
रो[९]चनी रेचनी चैव कण्ठविक्षोभणी तथा" ॥

१. 'चटिकाः', २. 'व्रियते', ३. 'त्रिभं' क. ग. घ. ङ. पाठः. ४. 'कु' क. ख. च. झ., 'क' ज. पाठः. ५. 'रे' क. ख. च. ज. झ. पाठः. ६. 'न्ती' क. ग. पाठः. ७. 'तार्क्ष्यी-क्षी' क. ग. घ. ङ. पाठः. ८. 'त्र्यश्री कूटनाशिनी' क. पाठः. ९. 'अहसी रे' क. ग. घ. ङ. पाठः.

§ अतः परं 'कृष्णामाह' इत्यधिकं ख. पुस्तके परमवतारिकात्वेन दृश्यते । ‡ 'कालिन्दी', 'शुक्लभाण्डी त्रि', ¶ 'त्र्यस्रा कुमुदगन्धिनी' इति धन्वन्तरिः ।

टीका० — कृष्णायामेवास्यां श्यामासप्तकम् ।

"कृष्णात्रिवृति काला स्त्री नीलीमञ्जिष्ठयोरपि" ॥

**मधुकं क्लीतकं यष्टीमधुकं मधुयष्टिका ॥ १०९ ॥**

क्षीर० — यष्टीरूपं मधुकं यष्टीमधुकम् एकदेशाद् मधुकम् । क्लीबत्वं तकतीति प्रतीपवृत्तिवचनत्वात् क्लीतकं क्रीतसंज्ञं वा । आह च —

"मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा ।
* यष्टीमधुकं मधुकं यष्ट्याह्वं मधुयष्टिका ॥
तल्लक्षणं §क्लीतकं च"

इति ॥

टीका० — मधुकचतुष्कं यष्टिमधुकायाम् । मधुकं ह्रस्वमध्यम् ॥

**विदारी क्षीरशुक्लेक्षुगन्धा**

क्षीर० — विदार्य भक्ष्यते विदारी । क्षीरेण शुक्ला । इक्षुसमगन्धा । माधुर्यात् क्षीरविदारीयं कृष्णा । भूकूश्माण्डोऽयं प्राक्षु ॥

**क्रोष्ट्री तु या सिता ।**

क्षीर० — कृष्णा[1] च भूतकूश्माण्डा[3] मण्डली न[4] सृजतीति (?) । क्रोष्ट्री तु लक्षणया । आह च —

"¶ विदारी क्षीरशुक्ला तु स्वादुकन्दा सृगालिका ।
‡ ऋष्यकर्मा विदारी च $ क्रोष्ट्री ऋष्यविदारिका ॥"

ऽयर्थे इक्षुगन्धा, विदारी कालाक्षको गोक्षुरश्च ॥

१. 'तिवृ' क. ग. घ. छ. पाठः. २. 'ष्णो भूकू', ३. 'ण्डः', ४. 'न संसृ' ख. पाठः.

* 'ष्टीकं मधुकं चैव य', § 'तनक' राजनिघण्टुः. ¶ 'विदारिका मता शुक्ला स्वा', ‡ 'वृष्यकन्दा वि', $ वृष्यवल्ली विडालिका' इति धन्वन्तरिः ।

टीका० — या सिता शुक्ला विदारी तत्र विदारीचतुष्कम्। विदारी च भूकूश्माण्डः। क्षीरशुक्लेतिच्छेदः॥

**अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका॥ ११०॥**

क्षीर० — ऋक्षान् गन्धयत्यर्दयति ऋक्षगन्धा। आह च —

"अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्ल्यपि।
क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पयस्विनी॥"

त्र्यर्थे महाश्वेता, नीलस्यन्दा यवशर्करा क्षीरविदारी च। तथा ऋक्षगन्धा मूलकं रक्तवालुकं क्षीरविदारी च। तथा क्षीरशुक्ला, क्षीरविदारी क्षीरकाकोली नीलस्यन्दा चेति॥

टीका० — अन्येति शुक्लेतरविदारी तत्र क्षीरविदारीत्रयम्। महत्यश्वेता महाश्वेता। ऋक्षगन्धेतिच्छेदः॥

**लाङ्गली शारदी तोयपिप्पली शकुलादनी।**

क्षीर० — लाङ्गली हलाकारा। शकुलादनी मत्स्यभक्षणी आह च —

"जलपिप्पल्यभिहिता शारदी तोयपिप्पली।
मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी"॥

टीका० — लाङ्गलीचतुष्कं काञ्चद इति ख्याते। सप्तपर्णे शारद्युक्ता

**खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः॥ १११॥**

क्षीर० — खरमश्नुते खराश्वा। कारोरियं कारवी, कर्मण्येत्यर्थः दीप्योऽग्निदीपनः। मीनात्यग्निमान्द्यं मयूरः। लोच्यते लुच्यते वा मस्त

---

१. 'चाभ्रकू' घ. ङ. छ., 'चकू' क. ख. पाठः. २. 'इ' ख. पाठः. ३. 'कु' ग. घ. पाठः. ४. 'होली' क. ग. घ. पाठः. ५. 'णात्।' ख. पाठः. ६. 'क्रौ' ख. पाठ

कोऽस्य बर्बराकारत्वाल्लोचमस्तकः । लोचमर्कट इत्येके । आह च—

"अजमोदा वस्तमोदा दी(प्ये ? प्य)को लोचमर्कटः ।
*खराश्वा कारवल्ली च मोचा हस्तिमयूरकः ॥"

र्य्यर्थे मयूरः, अपामार्गोऽजमोदा तुत्थकश्च ॥

टीका० — खराश्वांपञ्चकं मयूरशिखेति ख्यातायाम् ॥

**गोपी श्यामा शारिवा स्याच्चन्दनोत्पलशारिवा ।**

क्षीर० —गोपायति गोपी । श्यामा श्यामवर्णा । यच्छाश्वतः—

"शारिवायां निशि श्यामा श्यामा च हरिता सिता" ।

शीर्यन्तेऽनया दोषाः शारिवा । चन्दना आह्लादनत्वात् । अनन्तेत्येके । उत्पलाभपुष्पा उत्पलशारिवा । आह च—

§"शारिवा फणिजिह्वा च गोप्यास्फोताथ चन्दना" ॥

टीका० — गोपीपञ्चकं श्यामालतायाम् । नागजिह्वाप्येभिरुच्यत इति केचित् । अनन्ताद्वयमनन्तमूल इत्यन्यः । गां पाति रक्षतीति गोपी । शारिवा तालव्यादिः ॥

**योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वयो इम ॥ ११२ ॥**

क्षीर० — योजनीयं योगे साधु वा योग्यम् । ऋध्नोति ऋद्धिः सिध्य(त ? ती)ति सिद्धिः । वृद्धेरप्याह्वया इमे वृद्धेरोषधिविशेषस्यापि योग्यादीनि नामानि । आह च—

१. 'ख्या' घ. ङ. छ. पाठः. २. 'म' क ख. घ. च. ज. पाठः. ३. 'च ल' ख. पाठः.

* 'खराह्वा कारवी वल्लिर्मोदा ह', § 'सारिवा शारदा गोपा गोपवल्ली प्रतानिका' इति धन्वन्तरिः ।

"ऋद्धिर्वृद्धिः सुखं सिद्धी रथाङ्गं मङ्गलं वसु ।
*शिवं भद्रं युगं योग्यं लक्ष्मीः सर्वजनप्रिया ॥"

लक्ष्यते लक्ष्मीः ॥

टीका०—योग्यचतुष्कमष्टवर्गपठितायामृद्ध्याख्यायामोषधौ वृद्ध्याख्यायां च । वृद्धिनाम्नोऽप्यौषधस्याह्वया इमे इति, योग्यमृद्धिः सिद्धिलक्ष्म्यौ च । जीवकर्षभकमेदा महामेदा काकोली क्षीरकाकोली ऋद्धिर्वृद्धिरित्यष्टवर्गः ॥

**कदली वारणा बुद्धा रम्भा मोचांशुमत्फला ।**
**काष्ठीला**

क्षीर०— केन वायुना दल्यते कदली । वारणा[1]: पुष्यन्ते यया वारणपुषेत्येके । रमन्तेऽस्यां रम्भा । मुञ्चति त्वचं मोचा । अंशुमन्ति फलान्यस्या अंशुमत्फला भानुफलाख्या[2]। ईषद[3] अष्ठीलमस्याः काष्ठीला । निस्सारेत्येके । आह च—

"कदली सुकुमारा च रम्भा भानुफलेत्यपि ।
§निस्सारा वारणा बुद्धा मोचा हस्तिपुषा तथा" ॥

टीका०— कदलीषट्कं कदल्याम् । शीतवीर्यत्वात् कं वातं दलयतीति कदली । पचादिगौरादी । बुषं जलं वृणोतीति वारणबुषा । मूर्धन्यषा । दन्त्यसेति[4] केचि[5]त् । पृषोदरादित्वात् तद्विपर्यासः ॥

**मुद्गपर्णी तु काकपर्णी सहेत्यपि ॥ ११३ ॥**

क्षीर०— सहा क्षुद्रसहाख्यात्र । त्र्यर्थे हि सहा, मुद्गपर्णी बला †नाकुली च । यतो महासहा माषपर्ण्युच्यते ॥

१. 'णा। बुध्यन्ते' क. ग. घ. पाठः. २. 'च' क. ग. घ. पाठः. ३. 'त् छी' क. ग. पाठः. ४. 'सा चेति' क. ख. च. ज. झ. पाठः. ५. 'केचित्' घ. ङ. छ. ज. पाठः.

* 'ऋषिसृष्टा यु', § 'दीर्घपत्त्रा च निःसारा मोचा हस्तिविषाणिका ॥', † 'तरणी च' इति धन्वन्तरिः ।

टीका॰— मुद्गपर्णीत्रयं मुद्गवनीति ख्यातायाम् । मुद्गस्येव पर्णमस्या इति मुद्गपर्णी ॥

**वार्ताकी हिङ्गुली सिंही भण्डाकी दुष्प्रधर्षिणी ।**

क्षीर॰— वार्ताकं देश्यां भण्डाकम् । कण्टकार्या अन्येयमित्ययं मन्यते । वैद्यास्त्वभिन्नामाहुः । यदाह—'हिङ्गुली बृहती'ति ॥

टीका॰— वार्ताकीपञ्चकं वातिङ्गणे । वार्ताकीति । 'वृतु वर्तने' । 'बलाकादयश्च' (उ॰४. १४) इत्याकः वृद्धिश्च । 'पिप्पल्यादयश्च' (ग॰४. १. ४१) इति ङीष् ।

"वातिङ्गणस्तु वार्ताकुर्वार्ताकः शाकबिल्वकः ।
भण्डाकी राजकूश्माण्डो वार्ताकी दुष्प्रधर्षिणी ॥ "

इति रभसः । 'वार्ताकुरेषा गुणसप्तयुक्ता' इति वैद्यके स्त्रियां वार्ताकुः ॥

**नाकुली सुरसा नागसुगन्धा गन्धनाकुली ॥११४॥**
**नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा ।**

क्षीर॰— नकुलानां प्रिया नाकुली । नागसुगन्धा सर्पसुगन्धत्वात्[1] । छत्राकी छत्राभपत्त्रा । सुष्ठु वहत्यामोदं सुवहा । अर्धेन रास्ना अर्धेन सर्पाक्षीति गौडः । वैद्यास्तु नाकुलीगन्धनाकुल्यौ विदारीक्षीरविदारीवद् भिन्ने मन्यन्ते । आह च—

"नाकुली सर्पगन्धा च सुगन्धा भोगिगन्धिका ।
सैव सर्पसुगन्धेति तथा *चानीतिपत्रिका ॥
अन्या †सहा सुगन्धा तु सुवहा गन्धनाकुली ।
सर्पाक्षी नकुलेष्टा च छत्राकी विषमर्दिनी" ॥

टीका॰— नाकुलीनवकं §रास्नायाम् । नकुलस्य हृद्या नाकुली । अत

१. 'त्रत्वात् । सु' ख. ग. च. पाठः.

* 'विरिजप', † 'महाऊ' इति धन्वन्तरिः । § नवकमिति नागस्थाने रास्नापाठेन ।

एव नकुलेष्टा । 'राक्षासा[illegible]रपूणापाणा:' (उ० ३. १५) इत्यत्र राक्षा निपातिता ॥

**विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११८ ॥**

क्षीर० — विदार्या गन्धोऽस्त्यस्या विदारिगन्धा । अंशवः सन्त्यस्यामंशुमती । दीर्घमूलत्वात् । सालस्येव पर्णान्यस्याः सालपर्णी । आह च —

"*सालपर्णी स्थिरा सौम्या †त्रिपण्या त्रिगुहा[1] ध्रुवा ।
विदारिगन्धांशुमती दीर्घमूला §च पीतनी[2]" ॥

टीका० — विदारिगन्धापञ्चकं सालपर्ण्याम् । सालस्येव पर्णमस्या इति सालपर्णी दन्त्यसा । तालव्यशापीति कश्चित् ॥

**तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ।**

क्षीर० — तुण्डिकान् गवादीनीरयति कण्टकित्वात् तुण्डिकेरी । समुद्रः कण्टकैः कृतरक्षोऽन्तोऽस्यां समुद्रान्ता । दूरप्रसराद् वा । कल्पते कार्पासी । बदराणीव फलानि सन्त्यस्या बदरा । यद् माला — 'कार्पासो बदरः प्रोक्तो बादरोऽपि च' । चव्यश्च । द्व्यर्थे तुण्डिकेरी, बिम्बा कार्पासी च । त्र्यर्थे समुद्रान्ता, कार्पासी यवासकः स्पृक्का च ॥

टीका० — तुण्डिकेरीचतुष्कं कार्पास्याम् । यत्फलं कार्पासः । [illegible] पासः' (उ० ५. ४५) कार्पासी । ह्रस्वादिरपि दृश्यते ॥

**भारद्वाजी तु सा वन्या**

क्षीर० — वने भवा सा कार्पासी भारद्वाजी भरद्वाजसृष्टेत्यागमः । भद्रापि ॥

1. 'तिपश्यन्ती गु' क. ग. घ. पाठः. 2. 'ति' ख. ङ. पाठः.

* 'शालिप', † 'त्रिपर्ण्यतिगु', § 'सुपत्रिका' इति धन्वन्तरिः ।

टीका०— कार्पास्येव वनभवा भारद्वाजी । भरद्वाजेन निर्वृत्तेत्यण् ॥

**शृङ्गी तु वृषभो वृषः ॥ ११६ ॥**

क्षीर०— शृङ्गाणि सन्त्यस्याः शृङ्गी । अत एव वृषाख्यः । आह च—

"ऋषभो *धूर्वहो धीरो मातृको वृषभो वृषः ।
विषाणी ¶ककुदीन्द्राक्षो बन्धुरो गोपतिः स्मृतः" ॥

टीका०— शृङ्गीत्रयमष्टवर्गपठिते ऋषभाख्यौषधे । ऋषभवृषौ मुद्ग-वर्ग एवोक्तौ ॥

**गाङ्गेरुकी नागबला झषा ह्रस्वगवधुका ।**

क्षीर०—गाङ्गमीरयति पवित्रत्वाद् गाङ्गेरुकी । नागानां बल-कृन्नागबला । झषति हिनस्ति गन्धेन झषा । गवि जले इन्धे गवेधुका । आह च—

"गाङ्गेरुकी नागबला खर†वन्धनिका झषा ।
विश्वदेवा तथारिष्टा खण्डा ह्रस्वगवेधुका" ॥

टीका०—गाङ्गेरुकीचतुष्कं गोरक्षचाउल इति ख्याते ।

"गाङ्गेरुकी नागबला भषा गोरक्षतण्डुला"

इति कोशान्तरम् ।

"झषा नागबलायां स्याज्झषो मत्स्ये झषं बिले" ॥

**धामार्गवो घोषकः स्याद्**

क्षीर०— धाम अर्जति धामार्गवः । घोषति शब्दायते घोषकः ॥

१. 'क' क. ख. च. ज. झ. पाठः. २. 'पाड इ' झ. पाठः. ३. 'खि' क. ज. झ. पाठः.

* 'दुर्धरो धी', ¶ 'ककुभीन्द्रा', † 'गन्धिनि' इति धन्वन्तरिः ।

टीका०—धामार्गवद्वयं घोष इति ख्याते । 'घुष घुष्टौ'। घञ्। घोषः। ततः स्वार्थे कः ॥

महाजाली स पीतकः ॥ ११७ ॥

क्षीर०—स धामार्गवः पीतपुष्पो महाजाली। जालं वितानम्। आह च—

"धामार्गवः कोशफलो राजकोशातकी[1] तथा।
कार्कोटकी[2] पीतपुष्पा महाजाली तथोच्यते" ॥

टीका०—स एव घोषकः पीतपुष्पो महाजाली। ङयन्ता ॥

ज्यौत्स्नी पटोलिका जाली

क्षीर०—ज्यौत्स्नी रात्रौ भासनात्। पटति विस्तीर्यते पटोली। जाली सविताना ॥

टीका०—ज्यौत्स्नीत्रयं पटोलीति ख्यातायाम् ॥

नादेयी भूमिजम्बुका।

क्षीर०—भूमेर्जम्बूः।

"ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका"

इत्युक्तापि भ्रान्त्यात्रोपात्ता ॥

टीका०—नादेयीद्वयं भूजम्ब्वाम् ॥

स्याल्लाङ्गली त्वग्निशिखा

क्षीर०—लाङ्गलवद् भेदनाल्लाङ्गली। अग्निशिखा स्प्रष्टुमशक्यत्वात्। अग्निमुखीत्येके। आह च—

१. 'कस्तथा', २, 'कर्णाट' ख. पाठः.

"कलिकारी तु *फलिनी विशल्या गर्भपातिनी ।
लाङ्गल्यग्निमुखी सैरी दीप्ता§नन्तेन्दुपुष्प्यपि ॥"

द्व्यर्थे अग्निमुखी, भल्लातकी लाङ्गली च ॥

टीका०—लाङ्गलीद्वयं लाङ्गलिआ इति ख्याते विषे ॥

**काकाङ्गी काकनासिका ॥ ११८**

क्षीर०— काकस्येवाङ्गं नासारूपं फलमस्याः काकाङ्गी । काक
ङ्गीत्येके । आह (च)—

"काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा" ॥

टीका०—काकाङ्गीद्वयं काकजिह्वीति ख्यातायाम् । काउआरो[1]टीति ख्
तायामिति केचित् ॥

**गोधापदी तु सुवहा**

क्षीर० —गोधाया इव पादा अस्या गोधापदी । कुम्भपद्यादि
हंसपदी च ॥

टीका० —गोधापदीद्वयं हंसपादिकायाम् । यत्र गोहालिआया इ
नीचोक्तिः । गोधाया इव पादोऽस्या इति गोधापदी । 'कुम्भपदीषु च' (
४. १३९) इत्यकारलोपो ङीप् च नित्यमनेनैव । 'पादः पत्' (६. ४. १३
इति पद्भावः ॥

**मुसली तालमूलिका ।**

क्षीर० —मुस्यति खण्डयति दोषान् मुसली । द्व्यर्थे तालपत्री, सु
ली मिश्रेया च ॥

१. 'ठो' क. ख. घ. पाठः.

* 'हलिनी', § 'नक्तन्दुपुष्पिका' ॥ इति धन्वन्तरिः

टीका० — मुसलीद्वयं तालमूलिकायाम्। एतत्पत्रं गैवाकस्येव ॥

**अजशृङ्गी विषाणी स्याद्**

क्षीर० — अजस्येव शृङ्गाण्यस्या अजशृङ्गी कर्कटशृङ्गी
"शृङ्गी कर्कटशृङ्गी च [+]कु[2]लिङ्गा कर्कटाह्वया" ॥

टीका० — अजशृङ्गीद्वयमेण[3]शृङ्गीति ख्यातायाम्। इयमजशृङ्गाकारा नेत्रौषधिः बहुक्षीरा सकण्टका ॥

**गोजिह्वादार्विके समे ॥ ११९ ॥**

क्षीर० — गोजिह्वाभपत्रा। दारयति रोगान् दार्विका। ओषधिविशेषः ॥

टीका० — गोजिह्वाद्वयं दर्विशाके। एतत् क्षेत्र एवोत्पद्यते। गोरिव जिह्वा गोजिह्वा। दर्विः तर्डुः। तदाकारत्वाद् दर्विका ॥

**ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि**

क्षीर० — नागवल्ली फणिलता [4]पातालानीतत्वात् ॥

टीका० — ताम्बूलवल्लीत्रयं पर्णे। ताम्बूलीति। [§]'तमेर्णिद् बुक् च' इति ऊलजूबुगागमौ। णित्त्वाद् वृद्धिः। नागलोकस्येव वल्ली नागवल्ली ॥

**अथ द्विजा।**

**हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥**

क्षीर० — द्विर्जायते द्विजा। हरति हरेणुः। रेणुका भस्मयोगात्।

१. 'गु' क. ख. पाठः. २. 'कु' ख. ग. पाठः. ३. 'णर्सिंहीति' घ. ङ. छ. ज. पाठः. ४. 'वाताभिहितत्वा' ग. घ. ह. पाठः.

+ 'कुलीरा क' इति धन्वन्तरिः। § इदं 'खर्जिपिञ्जादिभ्यः—'(उ० ४ ९१) इति सूत्रे वाक्यरूपेण दृश्यते। 'तमेर्बुग् वृद्धिश्च' इति च तदानुपूर्वी।

कुन्त्या दुर्वाससा दत्ता कौन्ती। भस्मना धूल्या गन्धयति भस्मगन्धिनी आह च—

"रेणुका राजपुत्री च नन्दिनी कपिला द्विजा।
भस्मग†र्भा पाण्डुपत्री स्मृता कौन्ती हरेणुका॥"

गन्धद्रव्यं चैतत्॥

टीका०—द्विजाषट्कं रे[1]णुकायाम्। 'हृक्रुभ्यामेणुः' (उ० २.१) हरेणुः।

"कलायेऽपि हरेणुर्ना रेणुकायां स्त्रियां भवेत्"

इति रुद्रः॥

एलावालुकमैलेयं सुगन्धि हरिवालुकम्।
वालुकं च

क्षीर०—एलावद् वलते एलावालुकम्। हरि पिङ्गं वालुकम् ऽयर्थे सुर[2]भिगन्धि, सल्लकी सु[3]रसा एलावालुका च॥

टीका०—एलावालुकपञ्चकमेलावालुके सुगन्धिद्रव्ये॥

अथ पालङ्कया मुकुन्दः कुन्दकुन्दुरू॥१२१॥

क्षीर०—पाल्यते पालङ्कया। मुखात् कुन्द इव मुकुन्दः, मुश्चा रसं वा। कुं द्यतीति कुन्दः। आह च—

"कुन्दुरुः स्यात् कुन्दुरुकः ‡कुन्दश्चासौ विलक्ष्यपि।
मुकुन्दस्तीक्ष्णगन्धश्च ॥पालङ्क्यो भीषणो वलिः"॥

१. 'करेणु' घ. ङ. च. छ. ज. पाठः. २. 'भिः स', ३. 'रा ए' ग. घ. पाठः. ४. 'न्ध' घ. ङ. छ. पाठः. ५, ६. 'न्दु' ख. पाठः.

† 'न्धा', ‡ 'शिखरी कुन्दगोपुरः। मुकुन्द', ॥ 'पालिन्दो भी' इति धन्वन्तरिः।

टीका०—पालङ्क्याचतुष्कं कुन्दुरिति ख्याते सुगन्धिद्रव्ये। पालङ्क्या डाबन्ता ॥

**बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च।**

क्षीर०—वलते वालम्। जिहेतीव ह्रीबेरम्। वर्धते बर्हते बर्हिष्ठम्। उदीचीभवमुदीच्यम्। केशपर्यायं वालत्वात्। अम्बुनाम तृड्घ्नत्वात्। आह च—

"वालकं वारि तोयं च ह्रीबेरं जलजम्बु च।
केशं व[3]ज्रमुदीच्यं च *पिङ्गमागसनं रुचम्" ॥

टीका०—बालपञ्चकं बालके। बर्हिषि तिष्ठतीति बर्हिष्ठः। अम्बष्ठवत् षत्वम्। उदग्देशे भवमुदीच्यम्। 'द्युप्रागपागुदक्प्रतीचो यत्' (४. २. १०१)। केशस्य अम्बुनश्च यानि नामानि तान्यस्यापीति केशाम्बुनाम च ॥

**कालानुसार्य[4]वृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२ ॥**
**शैलेयं**

क्षीर०—कालमनुसरति शीतोष्णाभ्यां कालानुसार्यम्। वृद्धं कालस्थायि। अश्मनः पुष्पमश्मानं पुष्णाति वा तदूर्ध्वजत्वात्। शीतत्वेन शिवं शीतशिवम्। शिलायां भवं शैलेयम्। आह च—

"शैलेयं पलितं वृद्धं जीर्णं कालानुसार्यकम्।
स्थविरं च शिलादद्रुः‡ शिलापुष्पं शिलाभवम्" ॥

टीका०—कालानुसार्यपञ्चकं शैलजे। वृद्ध इतिच्छेदः। अश्मनः पुष्पमश्मपुष्पम्। अत एव शैलेयम्। शीतशिवं समस्तं नाम ॥

१. 'कम्बुरि' घ. ङ. छ. पाठः. २. 'न्धौ। पा' क. ख. च. ज. झ. पाठः. ३. 'क्र' ख. पाठः. ४. 'वम्। द्यर्थे शीतशिवं सैन्धवं मिश्रेयो वेद्याहुः न तु(?) शि' क. ग. घ. ङ. पाठः. ५. 'ष्ठं' ख. पाठः.

* 'पिङ्गमाचमनं कच', ‡ 'क' इति धन्वन्तरिः।

**तालपर्णी तु दैत्या गन्धकुटी मुरा ।**
**गन्धिनी**

क्षीर० — दैत्या मुराख्या[1] दैत्यनामत्वात् । 'मुर संवेष्टने' । आह च—

"मुरा गन्धवती दैत्या गन्धाढ्या गन्धमालिनी ।
सुरभि‡र्भूसुगन्धा च कुटी गन्धकुटी स्मृता" ॥

टीका०— तालपर्णीपञ्चकं मुरायाम् । मुरो नाम दैत्यः तन्नामधेयतय दैत्या ॥

**गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥**
**महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।**

क्षीर०— गजैर्भक्ष्यते गजभक्ष्या । सुष्ठु वहति स्रवति सुवहा सुस्रवेति वैद्याः । महदीरणमस्या महेरणा । सत्कृत्य लक्ष्यते* आ स्वाद्यते गजैः सल्लकी । ह्लादोऽस्त्यस्या ह्लादिनी । आह च—

"सल्लकी वल्लकी ह्लादा सुरभिः सुस्रवा रसा ।
अश्वमूत्री कुन्दुरुकी गजभक्ष्या महेरणा" ॥

टीका० — गजभक्ष्याष्टकं सल्लक्याम् । स्वादुत्वाद् गजानां भक्ष्या गज भक्ष्या[2] योपधा । सुरभिः पक्षे ङ्यन्ता । 'सल गतौ' । क्वुन् । सल्लकी । दन्त्य सा । गौरादिपाठान्निपातनाल्लकारद्वित्वम् । ह्लादते[3] इति ह्लादिनी ॥

**अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥ १२४ ॥**

क्षीर०— अग्नेर्ज्वालेव रक्ता । मद्यपाचनीत्वाद् वा । सुभिक्ष सुलभा । धातुरक्ता धातकी । धातुपुष्पीत्वात् । आह च—

१ 'ख्याया दै' घ. ङ. छ. पाठः. २. 'भ्यां' क. ख. घ. ङ. छ. पाठः. ३. 'क क. ख. पाठः.

‡ [illegible] इति धन्वन्तरिः । * 'लायते' इति स्यात् । लातेराल्लोपः क्वुनः कित्त्वात्

"धातकी ताम्रपुष्पी च कुञ्जरा मद्य*पाचनी।
पार्वतीया सुभिक्षा च वह्निपुष्पा च शब्दिता" ॥

टीका०— अग्निज्वालाचतुष्कं धातक्याम् ॥

**पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुला**

क्षीर० — पृथ्वीका बहुफला पत्त्रैलात्वाद्[1] वा। एवं बहुला। चन्द्रस्य कर्पूरस्य बाला पुत्रीव[2] चमत्कारात्। मुखे दौर्गन्ध्यं विनयत्येला। निष्क्रान्ता कुटेः कोशान्निष्कुटिः। आह[3] च—

"†पत्त्रैला बृहदेला च §त्रिदिवा त्रिदिवोद्भवा।
¶स्थलैला त्वक्सुगन्धा च पृथ्वीका कन्यका पुटा॥"

इति। इन्दुः त्र्यर्थे तु पृथ्वीका, हिङ्गुपत्रिका उपकुञ्चिका सूक्ष्मैला चेत्याह[4]। द्व्यर्थे त्रिपुटा, त्रिवृत् सूक्ष्मैला चेति। लक्ष्यश्चाग्रे रूपनिश्चयः॥

टीका० — पृथ्वीकापञ्चकमेलायाम्। इल धातोरच्। एला। पक्षे ङीषि निष्कुटी॥

अथ सा।

**सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः॥ १२५॥**

क्षीर० — सा एला सूक्ष्मा। उपकुञ्चत्युपकुञ्चा। तुत्था अल्पत्वात्। कुरति शब्दायते कोरङ्गी। त्रिपुटा त्र्यश्रीः। त्रुट्यति त्रुटिः सूक्ष्मत्वैकत्वात्[5]। आह च—

१. 'टी बहु', २. 'टी।' क. घ. ङ. छ. पाठः. ३. 'अत्र च' ग. घ. ङ. पाठः. ४. 'हुः', ५. 'त्वात्' क. च. पाठः.

* 'वासिनी', † 'भद्रैला', § 'त्रिपुटा त्रिपुटोद्भवा', ¶ 'स्थूलैला' इति धन्वन्तरिः।

"सूक्ष्मैला द्रामिली तुत्था कोरङ्गी बहुला त्रुटिः।
एला कपोतवर्णा च चन्द्रबाला च निष्कुटी ॥"

अर्थे त्रिपुटा, त्रिवृत् सूक्ष्मैला च ॥

टीका० — उपकुञ्चिकापञ्चकं सूक्ष्मैलायाम्। तुत्थोक्ता ॥

**व्याधिः कुष्ठं वारिभव्यं वाप्यं पाकलमुत्पलम्।**

क्षीर० — व्याधिः पर्यायार्थः कुष्ठत्वात्। कौ तिष्ठति कुष्ठम्। 'अम्बाम्बगोभूमि—' (८.३.९७) इति षत्वम्। कुष्णाति रोगं वा। वारिषु तोयाशयेषु भवति वारिभव्यम्। 'भव्यगेय—' (३.४.६८) इति साधुः। वाप्यां भवं वाप्यम्। व्याप्यमित्येके। पाकलं व्याधित्वात्। पाकं लाति वा। उत्पलं दाहहृत्वात्। उत्पलपुष्पत्वाद् वा। आह च—

"कुष्ठं रोगो गदो व्याधिरुत्पलं पाकलं रुजा।
वाप्यं वानीरजं रामं *कौवीरं वारिभव्यकम्" ॥

टीका० — व्याधिषट्कं रूड इति ख्याते। व्याधिनामतया व्याधिः। तथा च रभसः—

" रं भासुरं कुष्ठं पारिभाव्यं गदाह्वयम्"

इति। 'कुष निष्कर्षे'। 'हनिकुषि—' (उ०. २. २) इत्यादिना क्थन्। कुष्ठम्।

**शङ्खिनी चोरपुष्पी स्यात् केशिनी**

क्षीर० — शङ्खिनी शौक्ल्यात्। चोरपुष्पी धनहरीत्वात्। रात्रौ विकासाद् वा। केशाः सन्त्यस्याः केशिनी। चन्द्रनन्दनोऽत्र—

१. 'त्रिपुटा त्रु' ख. घ. ङ. पाठः. २. 'व्यमिति' क. पाठः. ३. 'व्या' ग. घ. ङ पाठः. ४. 'तिरुजं' क. ग. घ. ङ. पाठः. ५. 'वे' ज., 'श्व' घ. ङ. छ., 'श्वे' क. ख. ङ पाठः. ६. 'र' क. ख. पाठः.

* 'कौबेरं' इति धन्वन्तरिः।

"चण्डा धनहरी चोरपुष्पी सैव च तस्करी ।
तथा निशाचरी च स्यात् केशिनी ग्रन्थिकेत्यपि" ॥

टीका० — शङ्खिनीत्रयं चोरवल्लीति ख्यातायाम् ॥

अथ वितुन्नकः ॥ १२६ ॥

**झटामलाज्झटा ताडी शिवा तामलकीति च ।**

क्षीर० — वितुद्यते वितुन्नकः । झटा सङ्घातोऽस्त्यस्या झटा । अमला आमलकीत्वात् । अज्झटा आश्चर्यकारिसङ्घाता । अदाश्चर्येऽद्भुतवत् । ताडयति मलं ताडी । आमलकीत्वाच्छिवा । ताम्यतीति तामलकी । आह च —

"तामल*क्युत्तमा ताडी तमालं ‡तुमुलाकिनी ।
§वितुन्नकस्त्वज्झटा च झटा चामलकीति च" ॥

टीका० — वितुन्नषट्कं भूम्यामलक्याम् । विपूर्वात् तुदेः क्तः । ततः कन् । वितुन्नकम् । अज्झटा अकारादिः । तामलकी तकारादिः ।

"तामलक्यज्झटा सूक्ष्मफला क्षेत्रामलक्यपि"

इति रत्नमाला ॥

**प्रपौण्डरीकं पौण्डर्यम्**

क्षीर० — प्रकर्षेण पुण्डरीकस्येव दाहहृत्त्वात् प्रपौण्डरीकम् । अस्यैकदेशानुकाराल्लोके पौण्डर्यम् । आह च —

"प्रपौण्डरीकं चक्षुष्यं †पौण्डर्यं पौण्डरीयकम्" ।

स्थलपद्ममिति गौडः ॥

* 'क्यजटा ता', ‡ 'तु तमालिनी', § 'वितुन्नभूता तमकं भूधात्री भ्वामलक्यपि',
† 'पुण्डर्यः पुण्ड' इति धन्वन्तरिः ।

टीका०—प्रपौण्डरीकद्वयं पुण्डरीकवृक्षे।

"सालपुष्पं स्थलपद्मं दृष्टिकृत् पुण्डरीयकम्"

इति रभसः

अथ तुन्नः कुबेरकः॥ १२७॥

कुणिः कच्छः काकुलको नन्दीवृक्षः

क्षीर०—तुद्यते तुन्नः। कुबेरः कुत्सितदेहः। अत एव कुणिः। णि-स्थाने निं पेठुः। कष्यते कच्छः। आह च—

"*कुनिस्तुन्नक आपीतस्तुनिकः कच्छकस्तथा।
§कुबेरकः §काकुलको नन्दीवृक्षोऽथ ¶नन्दकः॥"

अश्वत्थाकारोऽयम्॥

टीका०—तुन्नषट्कं क्षीरवति नन्दीवृक्षे। अ(प्र?श्वत्थ)वृक्ष इति केचित्। तदुक्तम्—

"अश्वत्थसदृशाकारो नन्दीवृक्ष उदाहृतः"

इति॥

अथ राक्षसी।

चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः॥ १२८॥

क्षीर०—रक्ष्यन्तेऽस्या राक्षसी। क्षियति वसत्यस्मिन् गन्धः क्षेमः। दुष्पत्रश्चौरकत्वात्। गणं हासयति गणहासकः। कोहनत्वात्। आह च—

१. 'तु' क. ख. पाठः. २. 'नः' ख. पाठः. ३. 'गू' क. ख., 'गलवृ' च. झ. पाठः. ४, ५. 'च्पु' ग. घ. पाठः.

* 'तूणिस्तूणीकमापीतस्तूणिकः कनक', § 'कुठेरकः', § 'कान्तल', ¶ 'नन्दिकः' इति धन्वन्तरिः।

"चौरकः शङ्कितश्चण्डा दुष्पत्रः क्षेमको रिपुः।
गणहासः †कोहनकः कितवः $कुलकोरकः॥"

गन्धद्रव्यं चैतत्॥

टीका०— राक्षसीषट्कं चोरनाम्नि गन्धद्रव्ये॥

व्यालायुधं व्याघ्रनखं करजं चक्रकारकम्।

क्षीर०— व्यालायुधं व्याघ्रनखत्वात्। चक्रं मेलं धूपद्रव्यैः करोति चक्रकारकम्। आह च—

"नखमन्यद् व्याघ्रनखं पुटं व्याघ्रायुधं मतम्।
‡त्र्यश्रं व्याघ्रतलं पादं कूटस्थं *चक्रकारकम्"॥

टीका०— व्याघ्रायुधचतुष्कं व्याघ्रनखाख्ये गन्धद्रव्ये॥

सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली॥ १२९॥
धमन्यञ्जनकेशी च

क्षीर०— नली इयं विद्रुमलताभा। कपोताङ्घ्रिर्नलिकत्वात्। नटति वायुना नर्तकीत्वात्। धमनी सौषिर्यात्। अञ्जनाभकेशा अञ्जनकेशी। आह च—

"नलिका विद्रुमलता कपोतचरणा नली।
सुषिरा धमनी शून्या §निर्मन्थ्या नर्तकी नटी"॥

टीका०— शुषिरापञ्चकं नालीनाम्नि गन्धद्रव्ये॥

हनुर्हट्टविलासिनी।

१. 'ष्पु' ग. घ. पाठः. २. 'न्ध्या नर्तकिनी न' क. ग. घ. ङ. पाठः.

† 'कोपनकः', $ 'फलचोर' ‡ 'अस्त्रं व्या', × 'वज्रका'. § 'निर्मथ्या' इति धन्वन्तरिः।

शुक्तिः शङ्खः खुरः कोलदलं नखम्

क्षीर०— हन्ति हनुः तीक्ष्णाग्रत्वात् । हट्टे विलसति हट्टविलासिनी वेश्येव । नखयोगाच्छुक्त्याकृतिः । अत एव शङ्खः । खुरिति विलिखति खुरः । प्राणिशफत्वाद् वा । कोलदलं बदरीपत्राख्ययेन्दुनोक्तत्वात् । न खनति नखम् । आह च—

"नखः कररुहः शिल्पी करजोऽथ खुरः †शिफः ।
शुक्तिः शङ्खश्चलः कोशी हनुर्नागहनुः सहः" ॥

टीका० — धमनीचतुष्कं हट्टविलासिन्याम् । तरणिवद् धमनिः । 'कृदिकारादक्तिनः' (ग० ४. १. ४५) इति ङीषपि ।

"हनुर्हट्टविलासिन्यां कपोलावयवेऽपि च"

इति । शुक्तिपञ्चकं नखाख्ये गन्धद्रव्ये । कोलदलं बदरीपत्रकमित्यर्थः ॥

अथाढकी ॥ १३० ॥

काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ।

क्षीर०— आढकी सङ्ख्याधान्याख्या । तुवरीत्वात् तुवरो हि कषायो रसः । कषति काक्षी । प्रशस्ता मृद् मृत्स्ना । 'सस्नौ प्रशंसायाम्' (५. ४. ४०) । म्रियतेऽनेन मृता हेम(?) मृतालकम् । सुराष्ट्रदेशे जाता । आह च—

१. 'च ॥ अ' क. ख. पाठः २. 'लि' घ. ङ. छ., 'ला' झ. पाठः. ३. 'त्रमि' पाठः. ४. 'न हे' ख. पाठः.

† 'शफः' इति धन्वन्तरिः । * इदं 'मृत्स्ना' इत्यस्मादनन्तरं पाठ्यं भाति ।

"सौराष्ट्री चामृता *मङ्गः काक्षी काच्छी सुराष्ट्रजा।
अजिता[1] तुवरी §स्तुल्या मृत्सा मृत्स्ना मृतालकम्" ॥

टीका०— आढकीषट्कं[2] डुमरीति ख्यातायाम्। तुवररसयोगात् तुवरिका। मृताल(क)मित्येकं नाम। तथा च—

"अजाता तुवरी स्तुल्या मृत्सा मृत्स्ना मृतालकम्[3]"

इति। द्वितकारं मृत्तालकमित्यन्यः। नामद्वयमिति केचित्॥

कुटन्नटं दाशपुरं वानेयं परिपेलवम्॥ १३१॥
प्लवगोपुरगोनन्दकैवर्तीमुस्तकानि च।

क्षीर०— कुटन् नटति कुटन्नटं[4], कुटन्नटापि। दशपुरे भवं दाशपुरम्। दाशान् पिपर्ति वा कैवर्तीमुस्तकत्वात्। प्लवते लघुत्वात् प्लवम्। अत एव गोनन्दम्। आह च—

"परिप्लवं प्लवं वन्यं †गोपुरं स्यात् कुटन्नटम्।
‡शतपुष्पं दाशपुरं ¶गोनन्दं जीर्णबुध्नकम्" ॥

टीका०— कुटन्नटाष्टकं कैवर्तीमुस्तके[5]। यत्र नालुकीति प्रसिद्धिः। तदुक्तं—

"परिप्लवं प्लवं वन्यं (स्यात्) कुटन्नटसंज्ञकम्।
जायते मुस्तकाकारं शैवालयवसञ्चये॥"

वने पानीये जातं वानेयम्।

१. 'ताला परिस्तु' ख. पाठः. २. 'तु' ङ. छ. पाठः. ३. 'म्। द्वि' झ. पाठः. ४. 'टम्। द' ख. पाठः. ५. 'क इति ख्याते। य' घ. ङ. छ. पाठः.

* 'सङ्गाकाङ्क्षी', § 'तुल्या मृ', † 'गोपुटं स्या', ‡ 'सित', ¶ 'गोनर्दं जीर्णपुष्पकम्।' इति धन्वन्तरिः।

"कैवर्तीमुस्तके क्लीबं शोणके ना कुटन्नटम्

इति ॥

**ग्रन्थिपर्णं शुकबर्हं पुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥**

क्षीर०— ग्रन्थिप्रधानानि पर्णान्यस्य ग्रन्थिपर्णम् । ग्रन्थीन् पिपर्ति वा ग्रन्थिमत्त्वात् । शुकस्येव बर्हाणि पर्णान्यस्य शुकबर्हम् । शुकं बर्हमिति पदैकदेशत्वाद् वा द्वे संज्ञे । पुष्प्यति पुष्पम् । विकचाख्यम् । स्थूणाया इदं रूपं स्थौणेयम् । कुक्कुरं श्वाकृति । आह च—

"स्थौणेयकं †वह्निचूडं शुकपुच्छं शुकच्छदम् ।
‡ विकचं शुकबर्हं च हरितं शीर्णरोमकम्" ॥

टीका०— ग्रन्थिपर्णषट्कं ग्रन्थिपर्णे । ग्रन्थिषु पर्णान्यस्येति ग्रन्थिपर्णम् । 'शुच शोके' । 'शुकवल्कोल्काः' (उ० ३. ४२) इत्यनेन शुको निपातितः । बर्हिःपुष्पं नामैकमिति केचित् ॥

**मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।**
**समुद्रान्ता वधूः कोटिवर्षा लङ्कोयिकेत्यपि ॥ १३३ ॥**

क्षीर०— मरुन्मालेति स्रङ्मारुताख्ये द्वे एव संज्ञे एते । अयं तु तुशब्दादेकं मन्यते । मरुत्सहिता माला वा । पिशुना गन्धसूचना । स्पृशति गन्धैः स्पृक्का । देवी देवपुत्रीत्वात् । वधूः आशावधूत्वात् । कोटिभिर्वर्षति मधु कोटिवर्षा । लङ्कायामूयते लङ्कोयिका, समुद्रान्तत्वात् । अन्यः—

"स्पृक्का माला पङ्कमुष्टिर्नीली देवी लता गुरुः ।
देवपुत्री च लङ्कोयी शीता पङ्कजमुष्टिका ॥

१. 'गु' ग. घ. पाठः.

† 'बर्हिचू', ‡ 'विकर्ण शु' इति धन्वन्तरिः ।

स्रङ्मारुता कोटिवर्षा निर्माल्याशावधूः स्मृता ॥"

धन्वन्तरिश्च—

"§ स्पृक्का स्पृग् ब्राह्मणी देवी ‡लता लङ्कोयिकेत्यपि ।
पङ्कमुष्टिर्देवपुत्री निर्माल्या पिशुना वधूः ॥"

त्यर्थे समुद्रान्ता, कार्पासी यवासकः स्पृक्का च ॥

टीका०—मरुद्दशकं पिडीक इति ख्याते । मरुन्मालेत्येकवचनेनद्वि-वचनान्तपाठभेदात् सङ्घातविगृहीतम् ।

"स्पृक्का स्रग् ब्राह्मणी देवी माला लङ्कोयिका मरुत् ।
पङ्कमुस्तिर्देवपुत्री निर्माल्या पिशुना वधूः ॥"

इति कोशान्तरम् । 'पिश अवयवे' । ¶'क्षिपिपिपिशिमिथिभ्यः कित्' (उ० ३.५५) इत्युनन् । पिशुना । लघुशब्द उक्तः । देवी कोटिवर्षेति च पदम् । वर्षेति नामो-दधौ पृथगपि ॥

तपस्विनी जटा मांसी जटिला लोमशामिषी ।

क्षीर०—जटाः सन्त्यस्या जटा जटिला च । अत एव तपस्वि-नी । समांसत्वान्मांसी । अत एवामिषी । आह च—

"जटा च पिशिती पेशी क्रव्यादी च तपस्विनी ।
द्वितीया गन्ध*मांस्यन्या भूतकेशी जटा स्मृता ॥
पिशाची पूतना केशी भूतकेशी च लोमशा" ॥

१. 'नान्त' घ. ङ. छ. पाठः.　२. 'पृक्का स्र' क. ख. झ. पाठः.

§ 'स्पृक्कासृग्', ‡ 'मालाली कोटिका मता । पङ्कमुष्टि' इति मुद्रितधन्वन्तरिपाठः ।
¶ 'क्षुधिपिशि' इति मुद्रितोणादिपाठः । * 'मांसी स्यात् केशी भूतजटा' इति धन्वन्तरिः ।

टीका० — तपस्विनीषट्कं मांसीनाम्नि गन्धद्रव्ये । मधुरिकायां मिसीशब्द उक्तः । जटा अर्शआदिः । जटिला पिच्छादिः । लोमशा लोमादिः ॥

**त्वक् पत्त्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥ १३४ ॥**

क्षीर०—त्वग् वृक्षशकलत्वात् । पत्त्राकृति पत्त्रम् । उत्कटं चमत्कारात् । भृङ्गं काष्ण्र्यतैक्ष्ण्याभ्याम् । चोचमग्निचोदकम् । वराङ्गं त्वग्रूपम् । आह च—

"त्वचं वराङ्गं भृङ्गं त्वक् चोचं *शकटमुत्कटम्" ॥

टीका० — त्वक्पत्त्रषट्कं गुडत्वचि । रभसकोशे त्वगपि पृथगस्य नाम । तथा च — 'त्वचि वराङ्गकमि'त्यादि ॥

**कच्छूरको द्राविडकः काल्यको वेधमुख्यकः ।**

क्षीर० — कृन्तति त्वग्दोषं कच्छूरकः हरिद्राभः । द्रावयति द्राविडकः । कल्यकारी काल्य(क)ः । आह च —

†"कच्छूरो गन्धमूलं च द्राविडः §काल्य एव च ।
वेधमुख्यो दुर्लभश्च कस्यचित् ‡सम्मता शटी" ॥

टीका० — कर्बुरचतुष्कं[1] हरिद्राभे । कचोलभलतीति[2] ख्यातायाम् । प्रायो द्रविडदेशे भवतीति द्राविडकः ॥

**ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ १३५ ॥**

१. 'ष्कं क', २. 'ति द्रा' घ. ङ. छ. पाठः.

* 'शकलमु', † 'कर्चूरो', § कार्श्य एव', ‡ 'सम्मतः सढी ॥' इति धन्वन्तरिः ।

क्षीर०—ओषं धयत्योषधिः फलपाकान्ता जातिः। सैवेष्टा[1] रोगहृत्। सर्वमिति क्षौद्रघृततैलाद्यमप्यौषधम्। 'ओषधेरजातौ' (५. ४. ३७) इत्यण्॥

टीका०—ओषध्यो जातिमात्रे स्युरित्यस्यार्थः—लतादिजातय ओषध्यः, न तु त्रिफलाकल्कादयः। 'उष दाहे'। घञ्। ओषो (धी)यते अस्य ओषधिः। पक्षे ङीषपि। 'जात्याख्यायामेकस्मिन्—' (१. २. ५८) इति बहुवचनम्। अजातावित्यादि। लतादिजातेरन्यत्र यत्किमपि रोगापनयनकरं तदौषधम्। 'ओषधेरजातौ' (५. ४. ३७) इत्यण्॥

तद्विशेषान् शाकादीनाह—

**शाकाख्यं पत्त्रपुष्पादि**

क्षीर०—शक्यतेऽनेन भोक्तुं शाकम्। श्यति देहं वा। पत्त्रं निम्बादेः। पुष्पं कोविदारादेः। आदिशब्दात् फलं वार्ताकादेः। मूलं मूलकबिसादेः। कन्दं सूरणादेः। अङ्कुरो वंशादेः। आह च—

"मूलपत्त्रकरीराग्रफलकाण्डा[2]विरूढकाः।
त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम्[3]"॥

अविरूढकं तालास्थिमज्जेति गौडाः। वयं तु क्षेत्रोद्भृतस्य फलमूलादेः (सँदा[4]?) नवोद्भिन्नानङ्कुरान् विरूढाख्यान् बुध्यामहे। कवकं छत्रिका॥

टीका०—पत्त्रपुष्पादि च शाकाख्यं शाकनामकम्। आदिना अग्रमध्यादीनां ग्रहणम्। तदुक्तम्—

"मूलपत्त्रकरीराग्रफलकाण्डाधिरूढकम्।
त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम्॥"

१. 'वौषधं रो', २. 'ण्डास्थिरू', ३. 'तम्॥ 'अस्थिरू', ४. 'स्वेदस्रवद्धि' ख. पाठः.

मूलं मूलकादिः । करीरं वंशस्य । अग्रं वेत्रादि । फलं कर्कटी[1]कूश्माण्डादि । काण्डं ताडोपलादि । अधिरूढं तालबीजाङ्कुरादि । त्वक् कदल्यादि । पुष्पं वङ्गासनादि । कबकं कोण्डूकम् । 'शो तनूकरणे' । 'इणूभीकापाशल्यतिमर्चिभ्यः कन्' (उ० ३. ४३) इति बाहुलकः कन् । शाकम् ॥

शाकविशेषमाह —

**तण्डुलीयोऽपमारिषः ।**

क्षीर० — ताडयति दोषांस्तण्डुलीयः । लघुतण्डुलाभबीजो वा । अपमृषत्यपमारिषः । आह च —

"तण्डुलीयक उद्दिष्ट*श्चण्डालो[2] तण्डुलेरकः ।
भण्डीरस्तण्डुलीबीजो मेघनादो घन§स्वरः" ॥

टीका० — तण्डुलीयद्वयं खोडिआशाक इति ख्याते ॥

**विशल्याग्निशिखानन्ता फलिनी शक्रपुष्प्यपि ॥ १३६ ॥**

क्षीर० — लाङ्गली इयं पूर्वोक्तापि शाकत्वादिहोपात्ता ॥

टीका० — विशल्यापञ्चकमग्निशिखायाम् ।

"तिन्दुकाकारपत्रस्तु विटपोऽग्निशिखा मता"

इत्यस्या रूपम् ॥

**स्याद् वृ[3]ष्यगन्धा छगलाण्ड्यावेगी वृद्धदारकः ।
जुङ्गः**

क्षीर० — वृ[4]ष्यवद् गन्धयति वृष्यगन्धा । ऋक्षगन्धेति च पाठभेदः छगलस्येवाण्डान्यस्थीन्यस्याः, छगलाण्डी । आवेगी वृष्यत्वात् । उद्वे

१. 'र्तं' क. ख. पाठः. २. 'ता' ख. पाठः. ३. 'ऋक्षग', ४. 'ऋक्षव' क ग. घ. पाठः. ५. 'वृष्यग' ग. घ. ङ. पाठः.

* 'स्तण्डुलस्तण्डुलीयकः । ', § 'स्वनः' इति धन्वन्तरिः ।

जको वा। वृद्धं वृद्धत्वं दारयति वृद्धदारकः। वृद्धं दारकीकुरुते वा। जुङ्गति वृद्धत्के दोषान् जुङ्गः। 'जुगि वर्जने'। आह च—

"वृद्धदारक आवेगी जुङ्गको जीर्णवालुकः।
*अन्तःकोरकपुष्पी स्या†दजाण्डीछगलाण्ड्यपि॥"

त्र्यर्थे वृष्यगन्धा, वृद्धदारकः पिण्डालकं विदारी च॥

टीका०—ऋक्षगन्धापञ्चकं वृद्धदारके। छगलान्त्री आवेगीति च-च्छेदः। जुङ्गश्चवर्गादिः॥

**ब्राह्मी तु मत्स्याक्षी वयःस्था सोमवल्लरी॥ १३७॥**

क्षीर०—ब्राह्मी पावनीत्वात्। मत्स्याक्षी मत्स्याक्षिपुष्पा। वयसः स्थैर्यकृत्। त्र्यर्थे सोमवल्ली, वाकुची गुडुची ब्राह्मी च॥

टीका०—ब्राह्मीचतुष्कं सोमलतायाम्। ब्राह्मीशाक इति केचित्।

"ब्राह्मी वयःस्था मत्स्याक्षी ब्रह्मी तत् सोमवल्लरी"

इति शब्दार्णवः। अतो ह्रस्वादिरपि। ब्रह्मी॥

**पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती।**

क्षीर०—हिमावती हिमवज्जातत्वात्। आह च—

"क्षीरिणी काञ्चनक्षीरी ¶पटुपर्णी च ‡कर्शनी।
तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती।
§स्वर्णक्षीरा स्वर्णवती सुवर्णक्षीरिकापि च॥"

१. 'र्शि'

* 'वृद्धः कोटरपु', † दजान्त्री छगलान्त्र्यपि', ¶ 'कटु', ‡ 'घर्षिणी', 'सर्वक्षीरी स्वर्णदुग्धा सु' इति धन्वन्तरिः।

ऽयर्थे हैमवती, *हिमावती हरीतकी श्वेतवचा च ॥

टीका० — पटुपर्णीचतुष्कं स्वर्णक्षीरिकायाम् । अमरावतीवद्धिमावती ।

"हेमपीतं पयस्तस्या हिमवद्भूमिसम्भवा"

इत्यस्या रूपम् ॥

**हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥ १३८ ॥**

क्षीर० — हयपुच्छाकृतिः । कम्बोजदेशे भवा काम्बोजी । महासहेति मुद्गपर्यायः । सहाया भिन्नेयम् । आह च —

"माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा ।
आर्द्रमाषा सिंह†वृन्ता मांसमाषाश्वपुच्छिका" ॥

टीका० — हयपुच्छीचतुष्कं माषपर्ण्याम् । अम्लानेऽपि महासहोक्ता ॥

**तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।**

क्षीर० — तुण्डिकेरी ओष्ठोपमफलत्वाद् बिम्बामिव बिम्बी । आह च —

"बिम्बी रक्तफला तुण्डी तुण्डिकेरफला च सा ।
ओष्ठोपमफला §गोह्ला पीलुपर्णी च तुण्डिका ॥"

द्व्यर्थे तुण्डिकेरी, बिम्बी कार्पासी च ॥

टीका० — तुण्डिकेरीचतुष्कं तेलाकोच इति ख्याते ॥

**बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका ॥ १३९ ॥**

१. 'गोष्ठा पी' ख., 'गोणा पी' ग. घ. पाठः. २. 'ल' झ. ञ. पाठः.

* 'सीहुण्डः ह', † 'विम्रा मांस माषाश्व', § 'गोह्ला पी' इति धन्वन्तरिः ।

क्षीर० — बर्बरा कुटिलह्रस्वकेशाभा। अत एव कबरी। आह च—

"अजगन्धा खरपुष्पा बस्तगन्धा*मगन्धिका।
†कबरी बर्बरा गन्धा तुङ्गी ‡पीतमयूरकः॥"

टीका० — [1]बर्बरापञ्चकं बार्बरीति ख्याते शाके॥

एलापर्णी तु सुवहा रास्ना युक्तरसा च सा।

क्षीर० — रस्यते रास्ना। आह च—

"रास्ना युक्तरसा रस्या श्रेयसी रसनी रसा"
ऽयर्थे सुवहा, रास्ना शेफालिका नाकुली च॥

टीका० — एलापर्णीचतुष्कमेलापर्णीति ख्यातायाम्। इयं क्षुद्राम्लफला। नाकुल्यां रास्नोक्ता॥

चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका॥ १४०॥

क्षीर० — चाङ्गं दन्तपटुत्वमीरयति चाङ्गेरी। चुकन्ते व्यथन्तेऽस्याश्चुक्रिका। अम्बे तिष्ठत्यम्बष्ठा। अम्लेन लुनात्यम्ललोणिका। अपभ्रष्टोऽयम्। आह च—

"क्षुद्राम्लिका तु चाङ्गेरी लोणिका चाम्ललोणिका"।
ऽयर्थे अम्बष्ठा, पाठा माचिका चाङ्गेरी च। तथा चुक्रिका, अम्लिका चाङ्गेरी षण्डाकी चेति॥

टीका० — [2]चाङ्गेरीपञ्चकं वि[3]रोलीति ख्यातायाम्॥

१. 'वार्वारप' घ. ङ. छ. पाठः. २. 'ला' घ. ङ. छ. पाठः. ३. 'रेराली' ङ. छ. पाठः.

* 'विगन्धिका', † 'कारवी व', ‡ 'पूतिमयूरिका।' इति धन्वन्तरिः।

**सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि।**

क्षीर० — आह च —

"*चुक्रोऽम्लवेतसो भीमो रसालो§ऽम्बिलवेतसः।
रक्त+स्रावो वेत¶सालः शतवेधी च §वेधकः॥"

त्र्यर्थे चुक्रकः, वृक्षाम्लोऽम्लवेतसश्चुक्रश्च। तथा सहस्रवेधी, अम्लवेतसो हिङ्गुः कस्तूरी च॥

टीका० — सहस्रवेधीचतुष्कमम्लवेतसे शुक्र इति ख्याते। सहस्रं वेधितुं शीलमस्येति सहस्रवेधी। ताच्छीलिको णिनिः एवं शतवेधी॥

**नमस्कारी गण्डकाली समङ्गा खदिरीत्यपि॥ १४१॥**

क्षीर० — नमस्कारी अञ्जलिरूपपत्रत्वात्। गण्डेषु ग्रन्थिषु कृष्णा गण्डकाली। समान्यङ्गान्यस्याः समङ्गा। खदिरी कृष्णसूक्ष्मपत्रत्वात्। आह च —

"रक्तपादी शमीपत्रा समङ्गाञ्जलिकारिका।
नमस्कारी †गण्डकाली रास्ना खदिरिकेत्यपि"॥

टीका० — नमस्कारीचतुष्कं खइरीति ख्याते शाके॥

**जीवन्ती जीवनी जीवा जीवनीया मधुःस्रवा।**

क्षीर० — जीवन्त्यनया जीवन्ती। आह च —

"जीवन्ती जीवनीया च ‡जीवा जीवनवर्धनी।
मङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी॥"

१. 'क' ग. पाठः. २. 'काकसूची च' क.ग., ३, ४. 'बदरी', ५. 'बदरि' ख. पाठ

* 'अम्लोऽम्ल', § 'म्लो वीरवे', + 'स्रावी', ¶ 'साम्लः', § 'भेदकः
† 'गन्धकारी स्पर्शसंकोचपर्णिका॥', ‡ 'जीवनी जवव' इति धन्वन्तरिः।

टीका०— जीवन्ती(पञ्चकं ? षट्कं) जीवन्तीति[1] ख्यातायाम्। इयं च पवनालप्रख्यच्छविः। मधुः स्त्रीलिङ्गा ॥

**कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥**

क्षीर०— कूर्चं शीर्षोऽस्य कूर्चशीर्षः। शृङ्गः शृङ्गाभः। जीवयति जीवकः। जीवतीति वा दीर्घायुष्ट्वात्। आह च—

"जीवकः शृङ्गकः †सर्जो[2] दीर्घायुः कूर्चशीर्षकः।
ह्रस्वाङ्गो मधुरः स्वादुः प्राणदश्चिरजीव्यपि" ॥

टीका०— कूर्चशीर्षपञ्चकमष्टवर्गपठिते जीवके। ह्रस्वाङ्गेतिच्छेदः ॥

**किराततिक्तो भूनिम्बोऽनार्यतिक्तः**

क्षीर०— किरातदेशे भवस्तिक्तरसः किराततिक्तः। अनार्यः किरातः। आह च—

"किराततिक्तको हैमः $काण्डतिक्तः किरातकः।
भूनिम्बोऽनार्यतिक्तश्च कैरातो रामसेनकः" ॥

टीका०— किराततिक्तत्रयं चिरायित[3] इति ख्याते। किरातदेशजस्तिक्तः किराततिक्तः। अनार्या म्लेच्छाः, तेषां तिक्तोऽनार्यतिक्तः ॥

**अथ ससला।**

**विमला सातला भूरिफेना चर्मकसेत्यपि ॥ १४३ ॥**

क्षीर०— सपति समवैति ससला। सातं सुखं लाति सातला। भूरयः फेनाभा बिन्दवोऽस्या भूरिफेना। चर्मेव कसति वर्धते चर्मकसा।

१. 'त्येव ख्या' क. ख. ब. पाठः. २. 'र्गो' ख. पाठः. ३. 'चरायित इ' ग. पाठः.

† 'क्ष्वेडो दी', $ 'काण्डास्तिक्तः', इति बन्ग्रागः।

चर्मकषेत्येके । आह च—

"सातला सप्तला सारी *बिन्दुला विमलामला ।
बहुफेना चर्मकसा फेनादीप्ता $सनालिका ॥"

टीका०— सप्तलापञ्चकं पाश्चात्ये सप्तलाख्ये गन्धद्रव्ये । चर्मघासस्य नामेत्यन्यः । चर्मकषा मूर्धन्यषा ॥

**वायसोली स्वादुरसा कायस्था**

क्षीर०— वायसवद्वलीयते वायसोली काकोल्याख्या । काये तिष्ठतीति कायस्था विज्ञाने । आह च—

"काकोली मधुरा शुक्ला क्षीरा ध्वाङ्क्षोडिका मता ।
†कायस्था स्वादुमांसी च वायसोली च ‡कायिका ॥"

त्र्यर्थे स्वादुरसा, **पृथ्वीका शतावरी काकोली च ॥

टीका०— वायसोलीत्रयमष्टवर्गपठितकाकोल्याम् ॥

अथ मकूलकः ।

**निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥**

क्षीर०— मङ्क्यते चित्रत्वान्मकूलकः । नियतः कुम्भो निकुम्भः दन्ताभा दाम्यन्त्यनया दोषा वा दन्ती । आह च—

"¶दन्तशीघ्रा निकुम्भा स्यादुपचित्रा मकूलकः ।
तथोदुम्बरपर्णी च विशल्या च §घुणप्रिया ॥"

त्र्यर्थे प्रत्यक्श्रेणी, द्रवन्ती दन्ती च ॥

* 'विदुला', $ 'मरालि', † 'वयःस्था', ‡ 'कार्णिका', ** 'मृद्वीका', ¶ 'दन्ती', § 'गुण' इति धन्वन्तरिः ।

टीका०— मुकूलकपञ्चकं दन्तिमूले ॥

**अजमोदा तूग्रगन्धा ब्रह्मदर्भा यमानिका।**

क्षीर०— अजवन्मोदो गन्धो यस्या अजमोदा। ब्रह्मदर्भा। यच्छत्यग्निमान्द्यं[1] यमानिका। इयमशाके[2] पूर्वोक्तापीह शाकत्वात् पुनरुक्ता। यवानीं मत्वा ग्रन्थकृद् भ्रान्तः। आह च—

"यवानी दीप्यको दीप्यो यवासाह्वयनामकः।
यमानिकोग्रगन्धा च दीपनीया च दीपनी"॥

पूर्वोक्ता हि खराश्वैवाजमोदा ब्रह्मकुशा च। तथाच वैद्याः—

"अजमोदा ब्रह्मकुशा खराश्वा चोलमर्कटः।
पल्लीमोदा बस्तमोदा सैव हस्तिमयूरकः"॥

टीका०— अजमोदाचतुष्कं यवानिकायां। द्विविधा यवानी। एका गन्धद्रव्यम्। अपरा क्षेत्रयवानी च। अविशेषादुभयोरिदमिष्यते। दुष्टो यवो यवानी। 'इन्द्रवरुण—' (४. १. ४९) इत्यादिना 'यवाद् दोषे' (वा० ४. १. ४९) इति वचनाद् ङीषानुकौ॥

**मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे॥ १४५॥**

क्षीर०— पुष्करमूले त्रीणि नामानि। पद्मपत्रमिति ग्रन्थकृद् भ्रान्तः। यतः पद्मवर्ण लिपिभ्रान्त्या पद्मपर्णमिति बुद्धवान्। यदाह—

"मूलं पुष्करमूलं च पौष्करं पुष्कराह्वयम्।
काश्मीरं पुष्करजटाचीरं तत् ‡पद्मवर्णकम्"॥

1. 'धू' घ. च. पाठः. 2. 'यमतिशाके पू' ग. घ. ङ. पाठः.

‡ 'फलपत्रकम्' इति धन्वन्तरिः।

टीका० — पौष्करे मूले पुष्करमूल इति वणिजां ख्याते पौष्करत्रयम् ॥

**अव्यथातिचरा पद्मा चारटी पद्मचारिणी ।**

क्षीर० — अत्यर्थं[1] चरति व्याप्नोतीत्यतिचरा । पद्माभा च । चरति चारटी । आह च —

"पद्मचारिण्यतिचरा पद्मा पद्मवतीति[2] च ।
चारटी[3] गन्धमूला च लक्ष्मीः श्रेष्ठा*सुपुष्पिका ॥"

व्यर्थे अव्यथा, हरीतकी महाश्रमणी पद्मचारिणी च ॥

टीका० — अव्यथापञ्चकं पद्मचारिण्यामुत्तरापथख्यातायाम् । चारटीति । चरेर्ण्यन्तात् 'शकादिभ्योऽटन्' (उ० ४.८२) । 'पिप्पल्यादयश्च' (ग० ४.१.४१) इति ङीष् ॥

**काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनी[4]त्यपि ॥ १४६ ।**

क्षीर० — कम्पिल्यदेशे भवः काम्पिल्यः । चन्द्रो ह्लादनात्, क्षैण्याद्वा । रे[5]चनीति सभ्यः पाठः । यदाह —

"†काम्पिल्यकोऽथ रक्ताङ्गो रेची रेचनकस्तथा ।
¶चरको लोहिताङ्गश्च §कर्कशो रक्तचूर्णकः ॥"

इन्दुः—

"कर्कशाख्यः करम्भः स्यात् स काम्पिल्यः पटोदकः" ॥

टीका० — काम्पिल्यपञ्चकं शुण्डारोषणीति ख्यातायाम् । अस्याः वल्कलचूर्णं सिन्दूरवद् रक्तम् । अतोऽसौ रक्ताङ्गो रक्तचूर्णश्च । काम्पिल्लशब्दा

१. 'न्तं' ख. पाठः. २. 'चरा ।' ३. 'णी' ग, घ, ङ, पाठः. ४. 'रे' ख. पाठः. ५. 'चकनी' ख. पाठः. ६. 'गु' ज. पाठः.

* 'सुपुष्पिका ।', † 'कम्पिल्लकः', ¶ 'रञ्जनो लो', § 'कम्पिल्ली इति धन्वन्तरिः ।

'वुञ्छणा'दिना सङ्काशादिपाठाद् ण्यः। काम्पिल्यः॥

**प्रपुन्नाटस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः।**

**पद्माट उरणाक्षश्च**

क्षीर०—प्रपुनाति, पुनरटति वा प्रपुन्नाटः। एडवन्मेषाक्षत्वाद् गज्यते शब्द्यते एडगजः। चक्राणि दद्रुमण्डलानि मृद्नाति चक्रमर्दकः। पद्मवदटति पद्माटः। उरणवन्मेषवदक्षीण्यस्य उरणाक्षः। यद् वैद्याः[1]—

"चक्रमर्दः स्मृतश्चक्री प्रपुन्नाटश्च नामतः।
एकरेणो दद्रुहरो मेषाक्ष्येडगजश्च सः"॥

टीका०—प्रपुन्नाटषट्कमेडच्याम्[2]। प्रपुन्नाट एकनकार इति केचित्। कृमिघ्नवद् दद्रुघ्नः। इको ह्रस्वादिसूत्रेण पूर्वपदह्रस्वत्वम्। चक्राकारतया चक्रं[4] दद्रूः। तन्मर्दनाच्चक्रमर्दकः। उरणाख्यो मेषनामा॥

**पलाण्डुस्तु सुकन्दकः॥ १४७॥**

क्षीर०—पिपर्ति धातून् पलाण्डुः॥

टीका०—पलाण्डुद्वयं पलाण्डौ। बाहुलकात् पलेराण्डुः। पलाण्डुः। शोभनं कन्दं मूलमस्येति सुकन्दः। ततः कन्॥

**लतार्कदुर्द्रुमौ तत्र हरिते**

क्षीर०—तत्र नीले पलाण्डौ। लतार्को लतार्काख्यः। दुष्टो-ऽपवित्रत्वाद् दुर्द्रुमः। धन्वन्तरिस्त्वभेदेनाह—

"पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषणः।
हरिणोऽन्यः पलाण्डुश्च लतार्को दुर्द्रुमश्च सः॥"

यत् सुश्रुतः—

---

१. 'इव मेषा' ख. पाठः. २. 'इन्दाद्या.' ख. पाठः ३. 'व्याम्।' ज. पाठः. ४. 'क्रम्। त' क. ख. पाठः.

"लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम् ।
हिरण्यश्च पलाण्डुश्च लतार्का चापवारिता ॥
गृञ्जनो लवणेष्टश्च पलाण्डोर्दश जातयः ॥"

टीका० — [1]लतार्कद्वयं हरितपलाण्डौ ॥

अथ महौषधम् ।

लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥

क्षीर०— महदौषधं सर्वरोगजित्त्वात् । लसतिच्छिनत्ति रोगान् लशुनम् । गृज्यते कुत्सितं शब्द्यते गृञ्जनः । न रिष्यत्यरिष्टः । रसोनः पञ्चरसत्वात् । आह च —

"रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ।
महाकन्दो रसोनोऽन्यो गृञ्जनो दीर्घपत्रकः ॥"

महौषधगृञ्जनादीनामाकृतिभेदेऽपि रसाद्यैक्यादभेदं मन्यन्ते ॥

टीका०—महौषधषट्कं [2]रेसाउण इति ख्याते । 'अश भोजने' । अशेर्लश च' (उ० ३. ५७) इत्युनन् लशादेशः । लशुनम् । तालव्यवत् । अम्लरसेनोनो रसोनः । ततः स्वार्थिकः कः । गृञ्जनारिष्टे द्वे [3]नामनी ॥

पुनर्नवा तु शोफघ्नी

क्षीर०— पुनर्नवो विशाखत्वात् । आह च —

"पुनर्नवो विशाखश्च कठिल्लः ‡सशिलाटकः ।
वृश्चिकः क्षुद्रवर्षाभूर्दीर्घपत्रः [4]कठिल्लकः ॥"

१. 'पताकद्व' घ. ङ. च. छ. पाठः. २. 'सुराउ' ङ. छ., 'सराउ' घ., 'रत्सा' ख. पाठः. ३. 'म्नी ॥' ज पाठः. ४. 'ठि' ख. पाठः. ५. 'कुटिल्ल' ग. घ. ङ. पाठः.

‡ 'शशिवाटिका' इति धन्वन्तरिः

टीका० — पुनर्नवाद्वयं पुलिनैव इति ख्याते । पुनर्नवेति क्षुभ्नादित्वाण्णत्वाभावः ॥

**वितुन्नं सुनिषण्णकम् ।**

क्षीर० — वितुद्यते वितुन्नं नाम शाकम् । निषीदन्त्यस्मिन् गुणाः सुनिषण्णकम् । आह च —

"शितिवार स्तनवकः शल्या च सुनिषण्णकः ।"

शाकभेदोऽयम् । यदाहुः —

"पाठा शूका शटी शाकं वास्तुकः सुनिषण्णकम् ।
विबन्धघ्नमविस्रंसि बन्धोद्भेदि तु वास्तुकम्" ॥

टीका० — वितुन्नद्वयं सुरमुनीति ख्याते । भूम्यामलक्यां वितुन्नमुक्तम् । सुनिषण्णकमिति । 'सदिरप्रतेः' (८. ३. ६६) इति धातुसकारे षत्वम् ॥

**स्याद् धातकः शीतलोऽपराजितासनपर्ण्यपि ॥ १४९॥**

क्षीर० — शीतलधातक इत्येका संज्ञा । यद् धन्वन्तरिः — 'गुणवर्णकः शीतलधातक' इत्याह । अपराजिता शीतलधातकः । द्व्यर्थेषु च अपराजिता, ¶शीतलधातको गिरिकर्णिका च इति ॥

टीका० — धातकचतुष्कमसनपर्णिकायाम् । इयं चासनपत्रसमाना ॥

**पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।**

क्षीर० — कटत्यावृणोति कटभी । पण्या स्तुत्या । ज्योतिष्मत्यग्न्याभत्वात् । लता दूरप्रसारात् । आह च—

१. 'न इ' च. पाठः. २. 'नुपत्रः श' ग. ङ., 'त' घ. पाठः. ३. 'शु' ङ पाठः. ४. 'दकवा' घ. पाठः. ५. 'गुणप' घ. पाठः. ६. 'पर्णा शी' घ, 'पर्णशी' क. ङ. पाठः. ७. 'प' घ. पाठः. ८ 'रणा ।' ख. पाठः.

* 'रः मूचिपत्रः सूच्याह्वः सु'. ¶ 'श्वेतवल्ला गि' इति धन्वन्तरिः ।

रणीति युक्तः पाठः। कटं बिभर्ति कटम्भरा। राजरूपा मुख्या बला बलकृत्। आह च—

"प्रसारणी सुप्रसरा सरणी सारणी च सा।
चारुपर्णी राजबला भद्रपर्णी प्रतानिका" ॥

टीका०— सरणापञ्चकं [1]भादालीति ख्यातायाम् ॥

जनी जनूका जननी जन्तुकृच्चक्रवर्तिनी ॥ १८३ ॥
संस्पर्शा

क्षीर०— जायतेऽस्या जन्तुः जनी। जनूं करोति जनूका, जननी च। सम्यक् स्पर्शोऽस्याः संस्पर्शा। आह च—

"*जनूकारा च जनुकृज्जननी जन्तुकारिका।
संस्पर्शा च जनी चैव जनूका चक्रवर्तिनी" ॥

टीका०— जनीषट्कं जनीत्येव ख्याते सुगन्धिद्रव्ये ॥

अथ षटी गन्धमूली षड्ग्रन्थिकेत्यपि।

कच्छूरोऽपि पलाशोऽपि

क्षीर०— षड्ग्रन्थिकैकदेशः षटीति मूर्धन्यादिमाहुः। पलाशाः सन्त्यस्य पलाशः। आह च—

"‡षटी षडी पलाशश्च ज्ञेया पृथुपलाशिका।
सुगन्धमूला गन्धाली §सुगन्धा सुव्रता वधूः ॥"

कस्यचित् सम्मतः शठीति। कच्छूरस्य षटीत्वं, षट्याः कच्छूरत्वं चेतीह कच्छूरोपादानम्। द्व्यर्थे षटी, गन्धपलाशः कच्छूर इति ॥

१. 'भ' ङ. छ., 'भादायी' घ. पाठः

* जन्तुकारी जन्तुकृष्णा जतुका रञ्जनी स्मृता। जननी चैव संहर्षा जन्तुका च',
‡ 'सटी सडी प', § 'षड्ग्रन्था' इति धन्वन्तरिः।

टीका० — शटीपञ्चकं शठ्याम्। 'सती गन्धशटी शटी' इति रभसः। गुणीशटीशरदशोक'[1] इति शभेदः। कच्चूरो दीर्घवचवर्गीयमध्यः॥

कारवेल्लः कटिल्लकः॥ १५४॥
सुषवी च

क्षीर० — कारेण वेल्लति कारवेल्लः। कटिं लाति कटिल्लकः। कटत्याद्वणोति वा। सुष्ठु सूयते सुषवी॥

टीका० — कारवेल्लत्रयं करवेल[2] इति ख्याते। सुशवीति[3]। 'शर्व गतौ'। तालव्यादिः। अच्। एतच्चोपाध्यायसर्वस्वे दामोदरेणोक्तम्॥

अथ कुलकः पटोलस्तिक्तकः पटुः।

क्षीर० — कोलति संस्त्यायति कुलकः। कुत्सितं लक्यते* स्वाद्यते वा। पटति सरत्वात् पटोलः। तिक्तो रसेन। पटुर्देहपटुत्वकृत्। लवणानुसर इत्येके। आह च —

"पटोलः कुल†कस्तिक्तः पटुकः कर्कशच्छदः"॥

टीका० — कुलकचतुष्कं पटोले। 'अट पट गतौ'। '$कपिकलिग[5]डिगण्डिकटिपटिभ्य ओलच्' (उ० १. ६९)। पटोलः॥

कूष्माण्डकस्तु कर्कारुः

क्षीर० — कौ ऊष्माणमण्डयति, कुत्सित ऊष्मा अण्डे[6] बीजेऽस्य वा पित्तकारित्वात् कूश्माण्डः। कुष्यते वा करोति वा तृप्तिं कर्कश्चासावियर्ति आरुः वस्तिशोधन(स?क)रत्वात् कर्कारुः॥

---

१. 'कोश' इ' घ. ङ. छ. पाठः. २. 'वि' ख. झ., 'विल्ल इ' घ., 'फल' ज. पाठः. ३. 'वी' ज. पाठः. ४. 'च' ख. ज. पाठः. ५. 'न्धि' क. ज. झ. पाठः. ६. 'ण्डेषु बीजेष्वस्य' ख. पाठः.

---

* सल्लकशब्देऽपि लकधातुरुक्तः। स तु मृग्यः। † 'कः प्रोक्तः पाण्डुकः' इति धन्वन्तरिः। $ 'कपिगडि' इति मुद्रितोणादिपाठः।

टीका० — कश्माण्डद्वयं कूष्माण्डे ॥

एर्वारुः कर्कटी स्त्रियौ ॥ १५९ ॥

क्षीर० — आ ईर्यते एर्वारुः । कटुचिर्भिटी । 'उर्वारुकमिव ब-न्धनाद्' इति श्रुतेरुर्वारुः । स्वादुचिर्भिटीमाहुः । ह्रस्वः कर्कः कर्कटी । ग्रामटीवल्लौकिकष्टप्रत्ययः ॥

टीका० — उर्वारुद्वयं कर्कट्याम् ।

"उर्वारुरिति ह्रस्वोऽयमु(रं ? रु) बीजं प्रचक्षते ।
आरुश्चारुरिति स्मृत्या उर्वारुरिति कथ्यते ॥"

इति धातुपारायणम् । 'उन्मत्तो धुत्तूरः उर्वारुः कर्कटी स्याद्' इति पुंस्काण्डे रत्नकोशः ॥

इक्ष्वाकुः कटुतुम्बी स्यात्

क्षीर० — इष्यते इक्ष्वाकुः । क्षत्रियधनत्वात् । कटुका तुम्बी 'तुबि अर्दने' । आह च —

"कटुका *फलिनी तुम्बी लम्बा पिण्डफला तथा ।
इक्ष्वाकुः क्षत्रिय†धनास्तिक्तबीजो महा‡बलः" ॥

टीका० — इक्ष्वाकुद्वयं तितिलाबू इति ख्यातायाम् ॥

तुम्ब्यलाबूरुभे समे ।

क्षीर० — न लम्ब्यतेऽलाबूः । काका नञ् । न लाति वान्तर्जलम् इति स्त्रीत्वेनार्थतोऽपि समे । अत्रेन्द्राद्याः —

१. 'द्र', २. 'द्र' ख. पाठः. ३. 'यं गुर' घ. ङ. छ., 'यामेरं' क. ख. ज. पाठः. ४. 'गु', ५. 'स्तू' क. ख. पाठः. ६. 'तिलबू' च., 'तिलम्बू इ' घ. पाठः. ७. 'अल्पार्थे न' ख. पाठः. ८. 'नापि' ख. पाठः.

* 'लाम्बुनी', † 'वरा तिक्त', ‡ 'फला' इति धन्वन्तरिः ।

"अलाबूस्तुम्बुकः प्रोक्तो लेजालाबूरलाबुनी।
भक्षालाबुर्महातुम्बूः" ॥

टीका० — तुम्बीद्वयमलाब्वाम्। तुम्बी। 'तुबि तुबि अर्दने'। पचादि-गौरादी। 'नञि लम्बेर्नलोपश्च' (उ० १. ९०) इति ऊः। अलाबूः। ह्रस्वादिदी-र्घान्ता। आङ्पूर्वा दीर्घादिरिति कलापाः ॥

**चित्रा गवाक्षी गोतुम्बी**

क्षीर०— गोतुम्बापभ्रंशोऽयम्। गवाक्षीत्वात्। आह च—

"ऐन्द्रीन्द्रवारुणी ‡द्राक्षा इन्द्रेर्वारुर्विषादिनी।
गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥"

द्व्यर्थे चित्रा, *विशाला द्रवन्ती चेति। विशालायाश्चित्रात्वाद् भ्रान्तोऽत्र ग्रन्थकृत्। गवाक्षीविशेषोऽपि वा विशालेति न दोषः ॥

टीका० — चित्रात्रयं गोतुम्बायाम् ॥

**विशाला त्विन्द्रवारुणी ॥ १५६ ॥**

क्षीर०— विशाला महाफलत्वात्। इन्द्रवदक्षैर्वृणोति इन्द्रवा-रुणी। आह च—

"अन्येन्द्रवारुणी प्रोक्ता विशाला तु महाफला।
आत्मरक्षा चित्रफला †थबुसी त्रपुसी च सा" ॥

१ 'जलला' ख. पाठः. २. 'बू', ३. 'र्म्बा' ख. पाठः. ४. 'वींद् दी' क. ख. घ. ङ. छ. ज. पाठः. ५. 'षो वा' ख., 'षोऽपि न वा वि' ग. घ. पाठः. ६. 'तुम्बि-नी त्र' ख. पाठः.

‡ 'न्द्राह्वाथेन्द्रवारुर्मृगादनी', 'इन्द्रवारुणी बृहद्दन्ती', † 'त्रपुसी त्रपुसा च सा' इति धन्वन्तरिः।

टीका० — विशालाद्वयं गोरक्षककर्कट्याम् ॥

**अर्शोघ्नः सूरणः कन्दः**

क्षीर० — सु ऊर्यते प्रेर्यते सूरणः। कन्दाति त्विष्यते कन्दो मूलविशेषः ॥

टीका० — अर्शोघ्नत्रय मोल्ल इति ख्याते ॥

**गण्डीरो[2] ना समष्ठिला।**

क्षीर० — गण्डी सृक्कणी ईरयति गण्डीरः। पुंसि। सम्यगस्थीनि लाति समष्ठिला। साण्डत्वात्। समष्ठिला च शाकम्। यन्माला — 'गण्डीरो ना समष्ठीला' ॥

टीका० — गण्डीरद्वयं शुण्ठीआ इति ख्याते शाके ॥

**कलम्ब्यपोदका स्त्री तु मूलकं हिलमोचिका ॥ १८७ ॥**

**वास्तुकं शाकभेदाः स्युः**

क्षीर० — कं[3] लम्बतेऽस्याः कलम्बी। अपगतोदका जाङ्गलत्वाद् अपोदका। मत्स्यकालीति धन्वन्तरिसंज्ञितम्। मूलकत्वादुपदंशत्वे ह्यस्य शाकत्वम्। 'यो ह्युभयोर्भवति, लभते सोऽन्यतरव्यपदेश'मिति। हिलाद् वीर्यान्मोचयति हिलमोचिका। वसन्त्यस्मिन् गुणा वास्तुकं *(शाकभेदाः स्युः?) क्षारपत्राख्यम्। कलम्ब्याद्याः पञ्चैते शाकप्रकाराः। 'शाकाख्यं पत्रपुष्पादि' इत्यत आरभ्य वा। यन्माला —

१. 'मौ' ख. घ. ङ. छ. पाठः. २. 'रस्तु स' ग. घ. ङ. पाठः. ३. 'क' ग. घ ङ. पाठः. ४. 'मनुप, ५. 'प्य' क. ग. घ. ङ. पाठः.

* धनूरेखान्तर्गतं 'पञ्चैते' इत्यतः परं पाठ्यम् इति भाति

"मण्डूकपर्णी पालङ्क्या चिल्लिका चाप्यपोदका ।
चाङ्गेरी हिममोचा च कलम्बी शाकजातयः" ॥

टीका० — कलम्ब्यादयः पञ्च प्रत्येकं स्वनामप्रसिद्धाः शाकविशेषाः । के जले लम्बत इति कलम्बी । पचादिगौरादी । उपशब्दोऽधिकार्थः । अधिकमुदकमस्या इत्युपोदिका । चोव[1] इति ख्याता । 'उदकस्योदः संज्ञायाम्' (६. ३. ५७) । वुन् । *हि[2]लमोचा । हि[3]लमञ्चीति ख्याता । मूलकं प्रसिद्धम् । 'मूल रोहणे' । चुरादिः । पचाद्यच् । ततः 'स्थूलादिभ्यः प्रकारवचने कन्' (५. ४. ३) । वास्तुप्रभवत्वाद् वास्तुकम् । 'रम्या वास्तुकवास्तवस्तर्बैकिका' इति प्रयोगोऽपि । वस्तेरुल्कादित्वाद् ऊकञि वास्तूको दीर्घमध्योऽपीत्युणादिः ।

"पटोलपत्रवास्तूकं काकमाचीयवर्जनात्"

इति वैद्यकप्रयोगः ॥

**दूर्वा तु शतपर्विका ।**
**सहस्रवीर्याभार्गव्यौ रुहानन्ता**

क्षीर०— दूरं वाति, दूर्व्यते पशुभिर्वा दूर्वा । *भृगोरियं भार्गवी । सहस्रवीर्या बहुपर्वा महाप्रभावा वा । रोहति मूले रुहा । अनन्ता दूरप्रसरणात् । नीलदूर्वेयम् । यदाह —

"नीलदूर्वा स्मृता शष्पं शाद्वलं हरिता तथा ।
शतपर्वा $शातवीर्या शतवल्ल्य‡सिता लता ।
सहस्रवीर्यानन्ता च §दुर्द[6]ना भार्गवी रुहा" ॥

१. 'पो' ज., 'वो' ख., 'चोन्' क., 'वोप इ' च., 'अपोथ इ' झ. पाठः. २, ३. 'भि' क. ख. ङ. छ. पाठः. ४. 'यमिता इ' क., 'यकिता इ' ङ. छ. ज. पाठः. ५. 'पर्व्यसि' ख. पाठः. ६. 'र्व' ख. पाठः.

'पदद्वयमिदं व्युत्क्रमेण व्याख्यातम् । $ 'शीत', ‡ 'पि शीतला ।' § 'दुर्मना' इति धन्वन्तरिः ।

टीका०— दूर्वाषट्कं दूर्वायाम् । दूर्वेति । 'उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । 'उपधायां च' (८. २. ७८) इति दीर्घः । शतं पर्वाण्यस्या इति शतपर्विका । 'शेषाद् विभाषा' (५. ४. १५४) इति कप् ।

"सहस्रवीर्यानन्ता च दुर्मरा भार्गवी रुहा"

इति तन्त्रान्तरम् ॥

**अथ सा सिता ॥ १५८ ॥**

**गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ।**

क्षीर०— गोरिव लोमान्यस्य गोलोमी । आह च—

"श्वेतदूर्वा च गोलोमी श्वेत*गर्भा सिता लता"[1] ।

नीलश्वेतयोः पर्यायविपर्ययोऽद्वेष्यः[2] ॥

**कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥ १५९ ॥**

क्षीर०— कुरून् देशं विन्दति कुरुविन्दः । मेघपर्यायोऽम्बुधरत्वात् । मुस्यति खण्डयति रोगान् मुस्ता । लक्ष्ये त्रिलिङ्गः ॥

टीका० — गोलोमीचतुष्कं श्वेतदूर्वायाम् । कुरुविन्दचतुष्कं मुस्तके । मेघनामा मेघपर्यायसंज्ञकः ॥

**स्याद् भद्रमुस्तको गुन्द्रा**

क्षीर० — गुणैर्द्रान्ति रोगा अस्या गुन्द्रा । धन्वन्तरिरभेदेनाह—

"मुस्तमम्बुधरो मेघो घनो राजकशेरुकः ।

भद्रमुस्ता वराहोऽब्दो गाङ्गेयः कुरुविन्दकः" ॥

१. 'भर्गा सि' ख. पाठः. २. 'न्वे' क. ग. घ. ङ. पाठः.

* 'दण्डा सि' इति धन्वन्तरिः ।

टीका०—भद्रमुस्तकद्वयं नागरमुस्तके॥

चूडाला चक्रलोच्चटा।

क्षीर०— उच्चटत्युपलमुच्चटा। चक्राङ्कोऽयम्॥

टीका०— मृडालत्रयं उच्चडे[1] इति ख्याते। अयमल्पपत्रस्तृणविशेषः[3]॥

वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः॥ १६०॥
शतपर्वा यवफलो वेणुमस्करतेजनाः।

क्षीर०— वन्यते वंशः। त्वचि सारत्वात् त्वक्सारः। 'सृ स्थिरे' (३.३.१७)। घञ्। 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इति सप्तम्या वा अलुक्। कर्म इयर्ति कर्मारः। तृणानां ध्वज इव मुख्यः। यवाभं फलमस्य यवफलः। वेणते, वयाति (वा) वातेन वेणुः। मा क्रियतेऽनेन मस्करः। 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६.१.१५४)। तेजयति तेजनः। द्व्यर्थे तेजनः, शरो वेणुश्च॥

टीका०—वंशदशकं वंशे। 'वृक्‌भृवमिकुभ्यः शन्[4]'। वंशः। त्वगेव सारोऽस्येति त्वक्सारः। 'हलदन्तात् सप्तम्याः संज्ञायाम्' (६.३.९) इत्यलुकि[5] त्वचिसारः। शतपर्वा नान्तः। यव इव फलमस्येति यवफलः। 'अज गतिक्षेपणयोः'। 'अजिवृजिरीभ्यो निच्च*' (उ० ३.३८) इति करणे नुः। 'अजेर्व्यघञपोः' (२.४.५६) इति वीभावः[6]। गुणः। (वेणुः)। 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६.१.१५४) इति सुटा मस्करः। अपरं पातालवर्ग उक्तम्। 'तिज निशाने'। ल्युट्। तेजनः॥

१. 'मृ' ज., 'मृटाल' च., 'मृढाल' झ. पाठः. २. 'ट' झ., 'ल' ज. पाठः. ३. 'अम' घ. ङ. छ., 'अयम' ज. पाठः. ४. 'शकन्' ज. 'शक्' च. झ. पाठः. ५. 'क्' क. पाठः. ६. 'वि' ङ. छ. पाठः.

* 'अजिवृरीभ्यो निच्च' इति मुद्रितोणादिपाठः

**कीचका वेणवस्ते स्युर्ये स्वनन्त्यानिलोद्धुताः ॥ १६१ ॥**

क्षीर०— कीति चकति कीचकः । कीचेति कायति वा ॥

टीका०— ये कीटादिभिः कृतरन्ध्रपङ्क्यो वेणवः शब्दं कुर्वन्ति, ते कीचकाः ॥

**ग्रन्थिर्ना पर्वपरुषी**

क्षीर०— ग्रथ्यते ग्रन्थिः । पर्वति पर्व । पिपर्ति परुः ॥

टीका०— ग्रन्थित्रयं ग्रन्थौ । एतच्च क्रमादागतम् । 'ग्रथ ग्रन्थ सन्दर्भे' । इः । ग्रन्थिः । पर्व नान्तम् । परुः सान्तम् । यस्तु रत्नकोशे पुंस्काण्डे पठ्यते —'मज्जा सारो ग्रन्थिः परुः परागः कुसुमरेणुः' इति स उदन्तः ॥

**गुन्द्रस्तेजनकः शरः ।**

क्षीर०— गुन्द्रो दर्भविशेषे रूढः । यदाहुः— 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' । तेजयति निशिनोति तेजनः । शृणाति पारुष्याच्छरः ॥

टीका०— गुम्फत्रयं शरे । शृणातेः पचाद्यच् । शरः ॥

**नडस्तु धमनः पोटगलः**

क्षीर०— नडत्यर्दति नडः । 'नल गन्धे' । धमनोऽन्तःसुषिरत्वात् । धमिः सौत्रः । यथा—'धाम्नो धातं काञ्चनस्येव राशिः'[1] । पोटेन संश्लेषेण गलति पोटगलः । आह च—

"नलो नटो नडश्चैव स च पोटगलः स्मृतः ।
धमनो नर्त*कश्चेति" ॥

१. 'ध्म' क. घ. ज्ञ. पाठः.

* 'को रन्ध्री' इति धन्वन्तरिः

टीका०— नडत्रयं नले ॥

अथो काशमस्त्रियाम् ॥ १६२ ॥

इक्षुगन्धा पोटगलः

क्षीर०— काशते काशः कोकिलाक्षपर्यायः। इक्षुगन्धेत्येके। व्यर्थे पोटगलः, काशो नडश्च ॥

टीका०— काशत्रयं काशे। 'काशृ दीप्तौ'। तालव्यान्तः। पचाद्यच्। अपचयविवक्षायां गौरादित्वान्ङीष् काशीति च ॥

पुंभूम्नि तु बल्वजाः।

क्षीर०— बलन्ते बल्वजाः। तृणविशेषाः ॥

टीका०— बाँल्व इति ख्याते बल्वजाः ॥

रसाल इक्षुः

क्षीर०— रस्यते रसालः। इष्यते इक्षुः ॥

टीका०— रसालद्वयमिक्षौ। आम्रे रसाल उक्तः। इष्यते सर्वैरिति इक्षुः। 'इषेः क्सुः' (उ० ३. १५८) ॥

तद्भेदाः पुण्ड्रकान्तारकादयः ॥ १६३ ॥

क्षीर०— पुण्ड्रदेशजत्वात्, पौण्ड्रोऽपि। कान्तमूषमियर्ति[४] कान्तारकः। कान्तारका भोगा अस्य वा। आदिशब्दात् कोशकराद्याः। आह च—

१. 'वैयववि' च., 'पिच' ज. पाठः. २. 'र्श्मा' क. ख. घ. ङ. छ. पाठः. ३. 'बाष्प इ' क., 'बाल्ल इ' ख., 'बब्ब इ' झ., 'बाल्व इ' ज. पाठः. ४. 'मीरयति का' क. ग. घ. ङ. पाठः.

"इक्षुः कर्कटको वंशः कान्तारो वेणु[†]निस्मृतिः ।
इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः ॥
अन्यः [§]कोशकरादिः स्यादिक्षुयोनीक्षु[*]पालिका ।
तथान्य इक्षुगन्धा स्यादिक्षुरः कोकिलाक्षकः" ॥

टीका॰— इक्षुविशेषे प्रत्येकं पुण्ड्र(क?)द्वयम् । आदिना कोशकारग्रहणम् ॥

**स्याद् वीरणं वीरतरं**

क्षीर॰— वीरयते[१] वीरणम् । तृणभेदः ॥

टीका॰— वीरणद्वयं वीयण इति ख्याते ॥

**मूलेऽस्योशीरमस्त्रियाम् ।**

**अभयं**

क्षीर॰— अस्य वीरणस्य मूलम् । उश्यते काम्यते उशीरम् । अभयं रोगहृत्त्वात् । आह च —

"उशी[$]रममृणालं स्यादभयं समगन्धिकम् ।
रणप्रियं वीरतरं वीरं वीरण[¶]मूलिका" ॥

**नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥**

**लामज्जकं लघुलयमवदाहेष्टकापथे ।**

क्षीर॰— न द्यति नडदम् । अपारुष्यात् । नलति वा । अत एवामृणालमहिंस्रम् । जले आशेते जलाशयम् । शीतवीर्यत्वात् । लाति दो-

१. 'ति', २. 'द्वा ।' ख. पाठः.

† 'निस्वनः', § 'करकशाली स्या', * 'वालिका' $ 'रं च मृ', ¶ 'मूलकम्' इति धन्वन्तरिः ।

षान् ला मज्जा सारोऽस्य लामज्जकम्। लघुगुणेन लीयते लघुलयम्। अवलीयते दाहोऽनेनावदाहम्। इष्टं कापथमस्याधोवातकृत्त्वादिष्टकापथम्। आह च—

"लामज्जकं *सरालं स्यादमृणालं लयं लघु।
इष्टकापथकं शीघ्रं दीर्घमूलं जलाशयम्" ॥

द्व्यर्थेऽमृणालं, लामज्जकमुशीरं च। तथा सेव्यं, लामज्जकमुशीरं चेति। अवदाहमवदत्तमाहुः। तच्चोशीरं नलदम्। यदिन्दुः—'अवदत्तं रणप्रियम्'। ग्रन्थकृत्तु सेव्यामृणालयोर्नलदोशीरैकार्थत्वाद् भ्रान्तः ॥

टीका०— उशीरदशकं वीरणमूले। 'वश कान्तौ'। 'वशः कित्' (उ० ४. ३१)। ईरन्। सम्प्रसारणम्। उशीरम्। 'बहुलवचनात् षत्वे मूर्धन्यषमपी'ति काचिदुणादिवृत्तिः। लघुलयं नामद्वयमिति केचित्। अवदाहमिष्टकापथमितिच्छेदः ॥

नलादयस्तृण।

क्षीर०— तृणजातीया इत्यर्थः। तृण्यतेऽद्यते पशुभिस्तृणम् ॥

टीका०— नलादयो नलकाशादिस्तृणजातिप्रभेदः ॥

गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६८ ॥

क्षीर०— गर्मुच्छ्यामाकौ तृणधान्यविशेषौ। गीर्यते गर्मुत्। श्यामं वर्णमकति श्यामाकः। प्रमुखशब्दान्नीवाराद्याः। तृणगर्मुती एकार्थे इत्येके ॥

---

१. 'सु' ख. पाठः. २. 'द्व' घ. पाठः.

* 'सनालं' इति धन्वन्तरिः।

टीका० — न केवलमेते, गर्मुच्छ्यामाकप्रमुखा अपि तृणम्। गिरतेः 'ग्रो मुट् च' (उ० १. १००) इति उतिप्रत्ययमुडागमाभ्यां गर्मुत्। कानासिडा इत्यस्य प्रसिद्धिः। मयण इति केचित्। 'श्यैङ् गतौ'। 'बलाकादयश्च' (उ० ३. १७५) इत्याकन्मुडागमौ। श्यामाकः।

"तृणधान्यं तु नीवारः श्यामाकं श्यामको भवेत्"

इति शाश्वतः। प्रमुखशब्देन कोद्रवादीनां ग्रहणम्॥

**अस्त्री कुशः कुथो दर्भः पवित्रम्**

क्षीर० — कौ शेते कुशः। कोथति कुथः। दृणाति पारुष्याद् दर्भः। दृभ्यते वा। पूयतेऽनेन पवित्रम्। 'सग्रन्थि पवित्रकम्' इति स्मृतिः॥

टीका० — कुशचतुष्कं कुशे। वंशवत् कुशः। * 'दृदलिभ्यां भः' (उ० ३. १५२)। दर्भः। 'पुवः संज्ञायाम्' (३. २. १८५) इतीत्रः। पवित्रम्॥

अथ कत्तृणम्।

**पौरं सौगन्धिकं ध्यामदेवजग्धकरौहिषम्॥ १६६॥**

क्षीर० — कुत्सितं तृणं कत्तृणम्। 'तृणे च जातौ' (६. ३. १०३) इति कोः कत्। पुरे भवं पौरम्। सुग(न्धि ?न्धः) प्रयोज(नं सुरभिः ? न-मस्य)। ध्यायते पशुभिर्ध्यामम्। धूसरवर्णं वा। देवैर्जग्धमिव जर्जरत्वात्। यत्र तत्र रोहति रौहिषम्। 'रुहेर्वृद्धिश्च †दीचाम्' (उ० १. ५०)। आह च—

"कत्तृणं §शकलिर्भूरिर्भूतिकं रौहिषं नलम्।

१. 'न्थिक पवित्रम् इ' ख. पाठः.

* 'दृदलिभ्यां दः', † 'श्च' इति मुद्रितोणादिपाठः। § 'सकलं भूतिर्भूतिदं रोहिषं तृणम्। ध्यामकं श्यामकं पौरं पाटलं देवदंशकम्॥' इति धन्वन्तरिः।

व्यापकं क्रामकं पौरं पुद्गलं देवजग्धकम् ॥'

त्र्यर्थे सौगन्धिकं, नीलपद्मं कत्तृणं गन्धपाषाणं च ॥

टीका०—कत्तृणषट्कं रामकर्पूराख्यतृणे । कुत्सितं तृणं कत्तृणम् 'तृणे च जातौ' (६. ३. १०३) इति कोः कद्भावः । 'रुहेर्वृद्धिश्च' (उ० १ ५०) इति टिषच् । रौहिषम् ।

"कत्तृणे रौहिषं क्लीबं पुल्लिङ्गो हरिणान्तरे"

इति मूर्धन्ये रभसः ॥

छत्रातिच्छत्रवालघ्नौ मालातृणकभूस्तृणौ ।

क्षीर०—छत्राकारस्तृणविशेषश्छत्रा । अतिक्रान्तश्छत्रमतिच्छत्रः । छत्रातिच्छत्रमित्येके । पारुष्याद् वालं हन्ति वालघ्नः । मालारूपाणि तृणान्यत्र मालातृणकः । भुवस्तृणं भूस्तृणम् । पारस्करादित्वात् सुट्, भूरव्ययं वा । आह च—

*"भूस्तृणे रौहिणे भूतिर्भूतिकोऽथ कुटुम्बकाः ।
मालातृ‡णश्च वालघ्नश्छत्रातिच्छत्रकस्तथा" ॥

टीका०— छत्रातिच्छत्रद्वयं छत्राकारे सुगन्धाख्ये द्रव्ये । तदुक्तं—

"सुगन्धाख्यं च कटुकं छत्रातिच्छत्रकं तथा ।
छत्रकार इति ख्यातो मूले छत्रेव चाकृतिः ॥"

इति ।

"आतपत्रं मतं छत्रं छत्रा मधुरिका मता ।
अतिच्छत्रोऽपिच्छत्रा स्याच्छत्रा धान्याकमप्यथ ॥"

---

१. 'रिकंथ' ग. घ. पाठः.

---

* 'भूतृणो रौहिषो भूतिर्भूतिकोऽथ कुटुम्बकः', ‡ 'णः प्रलम्बश्चच्छत्रोऽतिच्छ' इति धन्वन्तरिः ।

इति रुद्रः । अतिच्छत्रेति पृथगपि । वालं केशं हन्तीति वालघ्नः । कृमिघ्नवत् । पृषोदरादित्वाद् घत्वम् । मालातृणकद्वयं गाडथेढ[1] इति ख्याते इकेतडपत्रस[2]-माने । रामकर्पूरं बहुपर्वकाण्डं कर्पूरगन्धि च । अतो भेदः । भूस्तृणमिति पारस्करादिः ॥

**शष्पं बालतृणं घासो यवसं**

**क्षीर०— शस्यते शष्पम् । 'शसु हिंसायाम्' । बालं नवम् । घस्यतेऽद्यते घासः । यूयते यवसम् ॥**

**टीका०** — शष्पद्वयं **नवतृणे** । शष्पमिति । 'शसु हिंसायाम्' । *'खष्पशिष्पशष्पबाष्पपुष्पपर्परूपकूर्पशिल्पतल्पाः' (उ० ३. २८) इति पप्रत्ययः । अन्त्यस्य च षत्वम् । एवं[3] तालव्यादिरोष्ठ्योपधश्च । अमरमालायां तु पुंस्युक्तः । घासद्वयं **गवादीनामदनीये** । अदेः कर्मणि 'घञपोश्च' (२. ४. ३८) इति घस्लादेशः । घासः । यौतेर्वेतसवदसुच् । यवसः । द्वौ दन्त्यसौ । उणादौ यावसो वृद्धोऽपि दर्शितः ॥

**तृणमर्जुनम् ॥ १६७ ॥**

**क्षीर०— अर्ज्यतेऽर्जुनम् । 'यवसं च तृणमर्जुनम्' इति भागुरिः ॥**

**टीका०** — तृणद्वयं **सामान्यतृणे** । तिण इति ख्याते इति केचित् । 'तृण अदने' । 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कर्मणि कः । तृणम् । 'अर्ज सर्ज अर्जने' । 'तृणाख्यायां †णित्' (उ० ३. ५९) इत्युनन् । अर्जुनम् ॥

**तृणानां संहतिस्तृण्या**

**क्षीर०— पाशादित्वाद् यः ॥**

१. 'गन्धथेढ इ' ज., 'गान्धथेथ इ' घ., 'गान्धिघ्ने इ' ज. पाठः. २. 'ककड' ख., 'क्कड' ज. पाठः. ३. 'अयं ता' घ. ङ. छ. पाठः.

* 'खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः', † 'चिद्' इति मुद्रितोणादिपाठः ।

टीका०—तृणमेलके तृण्या। पाशादित्वाद् यः॥

नड्या तु नडसंहतिः।

क्षीर०— प्राग्वद् यः॥

टीका०— नडसंहतौ नड्या॥

तृणराजाह्वयस्तालः

क्षीर०— तृणराजस्तृणद्रुममध्ये मुख्यत्वात्। तलति प्रतिष्ठति बहुमूलत्वात् तालः। भूमिपिशाचो देश्याम्॥

टीका०—तृणराजद्वयं ताले। तृणराजनामेत्यर्थः। 'तल प्रतिष्ठाकरणयोः'। घञ्। तालः॥

नालिकेरस्तु लाङ्गली॥ १३८॥

क्षीर०—नालिकान् नालयुक्तान् पुष्पादीन् ईरयति नालिकेरः। हलाकारपत्रशाखत्वाल्लाङ्गली। तत्फलं वा॥

टीका०—नालिकेरद्वयं नालिकेरे। 'नालिकेरजा जारकेलिना' इति विदग्धे गतप्रत्यागतम्। वासवदत्तायां तु—महावीरैरिव नारिकेलिधरैरुपवनपादपैः' उपशोभितम् इति सम्बन्धः। अथवा प्रथमो डकारः, द्वितीयो लकारः, तृतीयो रेफः। तथा च द्विरूपकोशः—'नारिकेलादिषु त्रैधम्' इति। लाङ्गली नान्तः॥

घोण्टा तु पूगः क्रमुको गुवाकः[2] खपुरः

क्षीर०—घुणन्ति भ्रमन्त्यनया घोण्टा। पवनेन पूगः। क्रामति क्रमुकः। गुवन्त्यनेन स्रंसकत्वाद् गुवाकः। खानि प्रीणाति खपुरः॥

---

१. 'ड्यः।', २., ३. 'कुः' क. ङ. घ. ज. झ. पाठः. ४. 'णयति' ख. पाठः.

टीका० — घोण्टापञ्चकं गुवाके। *'छापूञ्खलिभ्यः कित्' (उ० १. १२९) इति पुनातेर्गन्प्रत्ययः। पूगः। 'गुपू रक्षणे'। 'बलाकादयश्च' (उ० ३. १७९) इत्याकः, अन्तस्य च वत्वं गुणाभावश्च निपात्यते। '¹गुवागोऽपि च गूवाक' इति तारपालः॥

अस्य तु।

फलमुद्वेगम्

क्षीर० — अस्य पूगस्य फलम्। उद्गतो वेगोऽस्योद्वेगम्। †स्रंसकत्वात्॥

टीका० — उद्वेगं फलमेव, न तरुः। 'द्विहीनं प्रसवे सर्वम्' इति क्लीबत्वम्॥

एते च

क्षीर० — पूगादयः शब्दाः फलवृत्तयोऽपि क्लीबे। 'फले लुक्' (४. ३. १६३)। घोण्टा तु 'हरीतक्यादिभ्यश्च' (४. ३. १६७) इति लुक्। 'लुपि युक्तवद् व्यक्तिवचने' (१. २. ५१) इति वृक्षे फले च स्त्रियाम्॥

हिन्तालसहितास्त्रयः॥ १६०॥

खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः॥ १६०½॥

क्षीर० — एते तालनालिकेरपूगास्त्रयो हिन्तालेन चतुर्थेन सहिताः खर्जूराद्याश्चत्वारस्तृणप्रधाना वृक्षाः। ताली जात्यन्तरम्। एवं खर्जूरी

१. 'गूवाकोऽपि' ञ. पाठः.

* 'छापूखडिभ्यः कित्' इति मुद्रितोणादिपाठः। † 'पदादस्मादनन्तरं 'पूगादयः' इत्यादिव्याख्यावाक्यानि योजयित्वा 'एते च हिन्ताल' इति पठनीयं भाति।

भूमिखर्जूरः। हिनोति वर्धते हिन्तालः। ख(र्जुरी?र्जती)ति खर्जूरः। 'खर्ज व्यथने'। [1]केत्यते ज्ञायते गन्धेन केतकी। ताडयति ताडी॥

इति वनौषधिवर्गः॥

टीका०—एते तालनालिकेरगुवाकादयस्त्रयो हिन्तालसहिताश्चत्वारः। खर्जूरादयश्चत्वारः। एवमष्टौ तृणद्रुमा इत्युच्यन्ते। 'खर्ज मार्जने'। खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४. ९१)। खर्जूरः। तेडश्चौरादिकादच्। गौरादि ङीष्। ताली। स्वल्पः खर्जूरः खर्जूरी। गौरादिः। इयं प्रसिद्धैव॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे

वनौषधिवर्गः॥

## अथ सिंहादिवर्गः।

**सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।**

क्षीर०—हिनस्ति सिंहः। मृगाणां द्वीप्यादिशशान्तानामिन्द्रः। पञ्चास्यो विस्तृतास्यः। 'पाचि विस्तारवचने'। कर्मणि घञर्थे कः। मुखपादैर्योद्धृत्वाद्वा। हर्यक्षः कपिलाक्षः। अत एव हरिः। हरत्याकर्षति वा। कण्ठीरवो देश्याम्॥

टीका०—सिंहषट्कं सिंहे। हिनस्ति मृगानिति सिंहः। 'तृह हिंसि हिंसायाम्'। पचादिः। पृषोदरादित्वाद् वर्णविपर्यासः। मृगाः पशवः, तेषामिन्द्रो राजा मृगेन्द्रः। विस्तृतमुखत्वात् पञ्चास्यः। 'पाचि विस्तारवचने'।

---

१. 'कम्यते' ख. पाठः. २. 'न', ३. 'ना' ङ. छ. पाठः. ४. 'इयः' घ. ङ. पाठः.

घञर्थे कः। हरिणी पिङ्गले अक्षिणी अस्येति हर्यक्षः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (५. ४. ११३) इति समासान्तः षच्। के शिरसि सरतीति केसरः, सटा। तद्योगात् केसरी। अत इनिः। 'आपिङ्गललोलकेसरं रामबलम्' (स०१३. श्लो० ३१) इति भाषासमावेशे भाट्टिः। हरति मृगानिति हरिः। §इः (उ० ४. १४०) इति इः॥

## शार्दूलद्वीपिनौ व्याघ्रे

**क्षीर० — शृणाति शार्दूलः। द्वौ वर्णा[2]वीयते, द्वीपोऽस्त्यस्य[1] तन्निवासित्वाद् द्वीपी। व्याजिघ्रति व्याघ्रः। चित्रकायः पञ्चशेखरश्च॥**

**टीका०** — शार्दूलत्रयं **व्याघ्रे**। शृणातीति शार्दूलः। 'शृ हिंसायाम्'। 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४. ९१)। 'कमेर्दुक् चे'त्यनुवर्तमाने शृणातेर्दीर्घश्च' इत्युलच् दुगागमो दीर्घश्च। द्वीपं चर्म, तद्योगाद् द्वीपी। अत इनिः। क्वचिद् व्याघ्रद्वीपिनोर्भेद उक्तः। व्याजिघ्रतीति व्याघ्रः। 'आतश्चोपसर्गे' (३. १. १३६) इति कः। 'द्वीपिव्याघ्रयोरल्पमहत्तया भेदः' इति चाणक्यटीकाकृतोक्तम्॥

## तरक्षुस्तु मृगादनः॥ १॥

**क्षीर०— तरं क्षिणोति मार्गं रुणद्धि तरक्षुः। अरण्यश्वा तरक्षुरित्येके। वृकोऽपि॥**

**टीका०** —तरक्षुद्वयं **स्वल्पव्याघ्रे**। अयं कुक्कुरप्रायो व्याघ्रपुच्छश्च। तरन् प्लवन् क्षिणोति हिनस्तीति तरक्षुः। 'तरिनम्योर्डुवः' इति बाहुलको डुः। मृगादनो नन्द्यादिः॥

१. 'णो' ख. ग. पाठः. २. 'र्णौ पीय' ख. पाठः.

§ 'अच इः' इति मुद्रितोणादिपाठः।

**वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः ।**
**दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥**

क्षीर०— वरमाहन्ति वराहः । सूयतेऽत्यर्थं सूकरः । घर्षति घृष्टिः । पीनत्वात् कोलः । 'कुल संस्त्याने' । पोत्रं मुखाग्रमस्य पोत्री । किरति क्ष्मां किरः । 'इगुपध—' (३. १. १३५) इति कः । केटति किटिः । 'किट गतौ' । 'क्रुड घनत्वे' । अस्मात् क्रोडः ।

"कुद्दालः (पुंसि) मुस्तादो दंष्ट्रास्त्रो मुखलाङ्गलः"

इति भुग्नः ॥

टीका०— वराहद्वादशकं सूकरे । वरमाहन्तीति वराहः । 'अन्येभ्योऽपि—' (वा० ३. २. १०१) इति डः । 'शुचः करः शूकरः' इति पृषोदरादित्वाद् धातुप्रदीपे तालव्य उक्तः । 'नारायण इव सौकर्यसमासादितधरणीमण्डलः' इति वासवदत्तायां दन्त्यः ।

"तालव्या अपि दन्त्याः स्युः शम्बशूकरपांशवः"

इति पुरुषोत्तमः । घर्षतीति घृष्टिः । 'क्तिच्क्तौ च संज्ञायाम्' (३. ३. १७४) इति कर्तरि क्तिच् । बदर्यां कोल उक्तः । पोत्रं सूकरमुखम् । तद्योगात् पोत्री । किरतीति किरः । 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५) । गिरिवत् किरिः । क्वचित् किटिरिति पाठः । सोऽपि 'इगुपधात् §किः' (उ० ४. १२१) इत्यनेन साधुरिति चान्द्राः । दंष्ट्रिघोणिनौ व्रीह्यादी । क्रोशतीति क्रोडः । पृषोदरादिः । कर्मण्यणि भूदारः ॥

**कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।**
**मर्कटो वानरः कीशो वनौकाः**

§ 'कित्' इति मुद्रितोणादिपाठः ।

क्षीर०— कम्पते चलति कपिः। प्लवैर्गच्छति प्लवङ्गः। 'गमेः सुपि खश्च डित्'। डे प्लवगः। 'गमश्च' (३. २. ४७) इति खचि प्लवङ्गमोऽपि। शाखासञ्चारी मृगः शाखामृगः। वलयो मुखेऽस्य वलीमुखः मृगयते मृगः। म्रियते मर्कटः, कुम्भकर्णनिगीर्यत्वात्। वा न रमते वानरः। पक्षे नरो वेति वा। चिकेति जानाति कीशः। कीशब्दमीष्टे वा। वने ओकोऽस्य वनौकाः। हरिर्नानार्थे। कृष्णमुखो गोलाङ्गूलः। कापेयं चापलादिकम् ॥

टीका०— कपिनवकं मर्कटे। चलस्वभावात् कपिः। '*अभिकम्प्योर्नलोपश्च' (उ० ४. १४५) इति किः। प्रवप्लवौ गतिविशेषौ। ताभ्यां गच्छतीति प्लवङ्गः प्लवगः। प्रवङ्गः प्रवगश्च भुजङ्गभुजगवद् व्युतपद्यौ। शाखाप्रसक्तो मृगः शाखामृगः। शाकपार्थिवादिः। श्लथं चर्म वली। सा मुखेऽस्येति वलीमुखः। मर्केः सौत्राद् गत्यर्थात् 'शकादिभ्योऽटन्' (उ० ४. ८२) मर्कटः। नर इव वानरः। वाशब्द इवार्थे। मयूरव्यंसकादित्वात् समासः। को वातः। तदपत्यं किः। स एवेशोऽस्येति कीशः। दिवौकोवद् वनौकाः ॥

अथ भल्लुके ॥ ३ ॥

**ऋक्षाच्छभल्लभालूकाः**

क्षीर०— भल्लति हिनस्ति भल्लुकः। दीर्घमध्योऽपि। लक्ष्यं त्वत्र —'दधति कुहरभाजामत्र भल्लूकयूनाम्'। ऋक्ष्णोति ऋक्षः। अच्छ आभिमुख्येन भल्लति अच्छभल्लः। अच्छेत्याभिमुख्यार्थोऽव्ययम्। भलति भालूकः। भाल्लूकोऽपि ॥

टीका० —भल्लूकचतुष्कं भाल्लूके। 'भल भल्ल परिभाषणहिंसादानेषु'।

१. 'ङ्गमः प्रवङ्गमः। प्र' क. ख. पाठः. २. 'ङ्गमभुजङ्गव' क. ख. पाठः. ३. 'च-द' ख. पाठः. ४. 'ल्ल' क. ख. घ. ङ. च. छ. पाठः.

'कुडिक.........' इति मुद्रितोणादिपाठः।

'उलूकादयश्च' (उ० ४. ४१) इत्यूकञ् । 'उपधोपधत्वाद् वृद्ध्यभावः' इति धातुप्रदीपे भल्लूकोऽत्र(द्वौ ? द्वो)दीर्घमध्यो व्युत्पादितः । केचिच्छन्दोभङ्गभिया ह्रस्वमध्यमव्युत्पन्नं भल्लुकं पठन्ति । 'ऋषि गतौ' । 'ऋषेर्जातौ' (उ० ३. ६७) इति सः, किच्च । ऋक्षः । अच्छभल्लेति सङ्घातविगृहीतम् । तथा च हर्षचरिते—'अच्छभल्लचर्मनिर्मितेन भल्लीप्रायप्रभूते'त्यादि । 'अच्छौ निर्मलभल्लूकावि'त्यन्यः । 'भल्लौ भाल्लूकबाणौ स्तः' इति धरणिश्च । भालूक इति । पूर्ववदूकञ् । 'अत उपधायाः' (७. २. ११६) इति वृद्धिः ।

"खड्गी गण्डी गण्डकः स्याद् ऋक्षभाल्लूकभल्लुकाः"

इति विक्रमादित्यः ॥

**गण्डके खड्गखड्गिनौ ।**

**क्षीर०—गण्डति संहन्यते गण्डकः । खेडति भिनत्ति खड्गः । खड्गं शृङ्गमस्यास्ति खड्गी । वाध्रीणसोऽपि ॥**

**टीका०**—गण्डकत्रयं गण्डके । 'गडि वदनैकदेशे' । क्वुन् । गण्डकः । अर्शआद्यचि खड्गः । अस्य शृङ्गं खड्गः । तद्योगात् खड्गी ॥

**लुलापो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥**

**क्षीर०—लुडति पङ्के लुलापः । महति मह्यां शेते वा महिषः । महोऽपि । वाहं हयसमूहं द्वेष्टि वाहद्विषत् । 'द्विषोऽमित्रे' (३. २. १३१) इति शतृप्रत्ययः । वाहं द्विषन्नित्येके । घर्मार्तः कं जलमासरति कासारः । ईषत् सरति वा महाकायत्वात् । सीरिभिर्दान्तैर्भाति सीरिभः कुटुम्बी, तस्यायं सैरिभः । रजस्वलोऽपि ॥**

**टीका०**—लुलापपञ्चकं **महिषे** । अप्सु लुलतीति लुलापः । 'लुठ संश्लेषणे' । लुड इत्येके । वर्णदेशनायां पवर्गान्त उदाहृतः । इगुपधलक्षणः कः ।

१. 'लू' घ. ङ. छ. झ. पाठः. २ 'भल्लूक' झ. पाठः. ३. 'लू' ङ. छ. पाठः. ४. 'बाध्रण' ख., 'वाध्रीण' घ. ङ. पाठः. ५. 'यो' ग. ङ. पाठः. ६. 'यः' ग. घ. ङ. पाठः.

रुडयोरेकत्वस्मरणम् । पृषोदरादित्वादत्वं । राजदन्तादित्वात् परनिपातः । 'मह पूजायाम्'। 'अविमह्योष्टिषच्' (उ० १.४८)। महिषः। मूर्धन्यषः। वाहोऽश्वः। तस्य द्विषन् अरिः। वाहद्विषन्। के जले सरतीति कासरः। 'अन्येषामपि —' (६.३.१३७) इति दीर्घः। वर्णदेशनायां सैरिभो दन्त्यादौ पठितः॥

**स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः।**
**सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः॥ ५॥**

क्षीर० — शिनोति शिवा। शकुनावेदनी वा। सृगालेऽपि स्त्रीलिङ्गः। यच्छाश्वतः —

"शिवः कीलं शिवा क्रोष्टा भवेदामलकी शिवा"।

गां मिनोति मीनाति वा गोमायुः। मृगान् धुर्वति मृगधूर्तकः। असृगालाति सृगालः। सरति सृजति वा। क्रोशति क्रोष्टा। फे इत्यव्यक्तं राति फेरुः। फेरवश्च। जमति जम्बुकः। †जम्बवश्च सर्वभक्षत्वात्। 'जमु अदने'। फेरुण्डोऽपि॥

टीका० — शिवादशकं सृगाले। चतुष्पदजातीनां द्विलिङ्गतेति वक्ष्यति। तदपवादोऽयम्। शिवेति। सृगाल्यां सृगाले च शिवाशब्दः स्त्रियामित्यर्थः। भूरि अनन्ता मायास्येति भूरिमायः। गां मिनोतीति गोमायुः। गोः पूर्वा मायुर्गोमायुरित्यन्ये। 'कृवापा —' (उ० १.१) इत्यादिना उण्। 'मीनातिमिनोतिदीङां ल्यपि च' (६.१.५०) इत्यात्वम्। आतो युक्। मृगेषु वन्यपशुषु धूर्तकः मृगधूर्तकः।

"शृगालो वञ्चके दैत्यविशेषे ‡म + लुँ? स्त्रियाम्"

इति तालव्यादौ रभसः। "रणं सृगालीपरिगतमप्यसृगालीशोभितम्" इति कुमार

१. 'प्' क. ख. पाठः. २. कः। 'स' ख. पाठः. ३. 'यू' च. पाठः. ४. 'री' घ. ङ. छ. पाठः.

† 'जम्बूकश्च' इति भानुजिदीक्षितः। ‡ 'शृगालो वञ्चके दैत्यभेदे ना डमरे स्त्रियाम्' इति मेदिनी।

चरिते दन्त्यादिः । 'वञ्चु[1] कौटिल्ये' । ण्वुल् । वञ्चकः । क्रोष्टेति । 'क्रुश आह्वाने रोदने च' । सेतुवत् तुन् । तृज्वद्भावः । अनङादेशः । फे इति रवोऽस्य फेरवः ॥

**ओतुर्बिलालो मार्जारो वृषदंशक आखुभुक् ।**

**क्षीर०**—विशन् आलात्याखून् बिलालः । बिलान्यलति पर्याप्नोति वा, बिलति भिनत्त्याखून्[2] वा । विट आलमस्य । अशुचित्वाद्वा । 'बिड आक्रोशे' अस्माद्वा । आखुभ्यो गृहं मार्ष्टि मार्जारः । वृषानाखून् दशति वृषदंशः । आखुभोजी ॥

**टीका०**—ओतुपञ्चकं बिडाले । 'अव रक्षणे' । सेतुवत् तुन् । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (६. ४. २०) इति वकारस्योपधायाश्च ऊठ् आदेशः । गुणः । स्त्रियामप्योतुः । 'बिड आक्रोशे' । *'तमिबिडिमृणिविशिकुलकीलपञ्चिभ्यः' (उ० १. ११५) इति कालन् । 'मृजू शुद्धौ' । 'कजिमृजिभ्यां[3] चित्' (उ० ३. १३७) इत्यारन् । 'मृजेर्वृद्धिः' (७. २. ११४) इति वृद्धिः । मार्जारः । वृ[4]षमाखुं दशतीति वृषदंशकः । कर्मण्यणन्तात् स्वार्थे कः । आखुभुग् । जान्तः ॥

**त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥**

**क्षीर०**—जलेशयादन्ये बिलेशया गौधेयाः । अहेर्गोधायां जातो जात्यन्तरमित्येके । 'गोधाया ढ्रक्' (४. १. १२९) । 'आरगुदीचाम्' (४. १. १३०) । शुभ्रादित्वाद् ढक् ॥

**टीका०**—गौधेरत्रयं स्थूलगोधिकात्मजे । 'गोधाया ढ्रक्' (४. १. १२९) इति ढ्रक् । ढस्य एयः । 'लोपो व्योर्वलि' (६. १. ६६) इति यकारलोपः ।

---

१. 'ञ्च' ज., 'चु' क. पाठः. २. 'हिनस्त्याखू' ख. पाठः. ३. 'ञ्जि' ङ. झ, 'ञ्जि' छ. पाठः. ४. 'वृ' घ. च. पाठः.

* 'तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्' इति मुद्रितोणादिपाठः ।

'यस्येति च' (६. ४. १४८) इत्याकारलोपः। गौधेरः। 'आरगुदीचाम्'(४. १. १३०) इत्यारक्। गौधारः। शुभ्रादित्वाद् ढक्। गौधेयः॥

**श्वावित् तु शल्यः**

क्षीर—श्वानं विध्यति श्वावित्। 'नहिवृतिवृषि—' (६. ३. ११६) इति दीर्घः। शलति शल्यानि किरति वा शल्यको बिलेशयः॥

टीका०—श्वाविद्द्वयं सेज्जके[1]। श्वानं विध्यतीति श्वावित्। धान्तः। तालव्यादिश्च[2]। व्यधेः क्विप्। नहिवृति—' (६. ३. ११६) इत्यादिना दीर्घः। 'शल शल्ल आशुगमने'। सानसिधर्णस्यादिना यप्रत्ययेन[3] शल्यो निपातितः॥

**तल्लोम्नि शलली शललं शलम्।**

क्षीर०—तस्य लोम्नि शलल्याद्याख्या। यन्माला—'श्वाविच्छलाका शलली'। 'शल गतौ'॥

टीका०—शललीत्रयं श्वाविल्लोम्नि। यत्र सोऽ[4]ज्जकाठि इति प्रसिद्धिः। 'शल हल पत्ल गतौ'। वृषादिकलच्। गौरादिङीष्। शलली। स्त्रीत्वाभावे शललम्। पचाद्यचि शलम्॥

**वातप्रमीर्[5]वातमृगः**

क्षीर०— वातं प्रमिमीते वाताभिमुखवर्धनात्॥

टीका०—वातप्रमीद्वयं वावटहरिण इति ख्याते। 'वातप्रमीः' (उ० ४. १) इत्यनेनैव सूत्रेण वातोपपदात् प्रपूर्वान्माङो निपातितः। 'वातप्रमी-

१. 'सै' ख. पाठः. २. 'श्च। व्यायः व्य' ङ छ. पाठः. ३. 'न नि' ङ. छ पाठः. ४. 'ज्जाकाशी इ' ज. 'पाठः. ५ 'र इ' ख., 'र' क. ख. घ. ङ. च. छ. झ. पाठः.

वातमृगः' इति पुंस्काण्डेऽमरमाला । 'वातप्रमीः स्त्रियां लक्ष्मीवद्' इति पुरुषोत्तमः ।

"अमा वातप्रमीं विद्याच्छसा वातप्रमीरिति ।
डौ तु वातप्रमी शेषं ग्रामण्या सदृशं स्मृतम्" ॥

**कोक ईहामृगो वृकः ॥ ७ ॥**

**क्षीर० — कोकते गृह्णाति, कवते वा[1] कोकः । ईहा[2] मृगस्येवास्य ईहामृगः । ईहां मृगयते वा । इडां वर्कते इडावृकः । एतदेवैकदेशेन वृक इत्युक्तः । आरण्यश्वेत्येके । 'कुक वृक आदाने' ॥**

**टीका० —** कोकत्रयं **कोके** । अयं कुक्कुरप्रमाण[3]ः । कपिलवर्णः । 'कुक वृक आदाने' । अचि कोकः । ईहते काङ्क्षते मृगानिति ईहामृगः । कर्मण्यण् (३. २. १) । राजदन्तादित्वात् परनिपातः । 'अन्येषामपि' (६. ३. १३७) इति दीर्घः । वृणातेः 'सृवृसि*भृशुषिमुषिभ्यः †कित्' (उ० ३. ४१) इति कः । वृकः ॥

**मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।**

**क्षीर० — मृग्यते व्याधैर्मृगः । कौ रङ्गति कुरङ्गः । वातमयते वातायुः । 'वानं शुष्कमयते वानायु'रित्येके । ह्रियते गीतेन हरिणः । अजिनस्य योनिः अजिनयोनिः ॥**

**टीका० —** मृगपञ्चकं **हरिणे** । व्याधैर्मृग्यत इति मृगः । 'मृग अन्वेषणे'[4] । चुरादिणिचि कर्मणि घञ् । अथवा 'एरच्' (३. ३. ५६) । अदन्तत्वानिगुपधत्वाल्लघूपधगुणाभावः । 'कुरच्छेदने' । 'त्रादिभ्यश्च' (उ० १. १२९) इत्यङ्गच् । कुरङ्गः । वातमेतीति वातायुः । बाहुलको ञुण् । पाण्डौ हरिण

१. 'वा याति वा को' क. ग. घ. ङ. पाठः. २. 'ईहस्पृहस्ये' ख. पाठः. ३. 'णपिङ्गल' घ. ङ. छ. पाठः. ४. 'दिः । णि' ङ. छ. पाठः.

*, † 'कक् इ' इति मुद्रितोणादिपाठः ।

उक्तः । हरिणस्य चर्मण उपयुज्यमानस्य योनिः अजिनयोनिः । 'जिनो बुद्धो रुरुरूप उत्पत्तिस्थानमेषामिति (अ ?) जिनयोनयः' इत्यन्यः ॥

**ऐणेयमेण्याश्चर्माद्यम्**

क्षीर०— विकारेऽवयवे च ('एण्याढञ्') (४. ३. १५९) इति ढञ् ॥

टीका० — एणो हरिणविशेषो वक्ष्यते । स्त्रियामेणी । तस्याश्चर्मादि ऐणेयम् । विकारार्थे 'एण्या ढञ्' (४. ३. १५९) इति ढञ ॥

**एणस्यैणम्**

क्षीर०— विकारादौ 'प्राणिरजतादिभ्योऽञ्' (४. ३. १५४) ॥

टीका० — एणस्य पुरुषस्य मांसादिकं विकार ऐणम् । 'प्राणिरजतादिभ्योऽञ्' (४. ३. १५४) ॥

**उभे त्रिषु ॥ ८ ॥**

क्षीर०— ऐणेयमैणं च वाच्यलिङ्गे ॥

टीका० — उभे ऐणेयैणे त्रिषु । ऐणेयं चर्म । ऐणेयी त्वक् । ऐणेयः पादः ॥

**कदली कन्दली चीनश्चमूरुप्रियकावपि ।**
**समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥**

क्षीर०— के दलति कदली । कन्दे लीयते कन्दली । ई(ञ ?न्न)न्तौ । चिनोति चीनः । चामति चमूरुः । प्रीयते प्रियकः । समूयते समूरुः । चित्रवर्णः । एते चर्मण्युपयुक्ताः ॥

टीका०— कदल्यादयः षड् मृगजातयः । यथा मृगशब्दः सामान्यपशौ हरिणे च वर्तते, यथावा लोहशब्दः सुवर्णादौ लोहे च, तथाजिनयोनिश-

१. 'च कर्म' ङ. छ. पाठः. २. 'लीङ् गतौ । चि' क. ग. घ. ङ. पाठः. ३. ते, त' घ. ङ. छ. पाठः.

ब्दोऽपि मृगसामान्ये मृगविशेषे च। अभक्ष्यत्वाद् अजिनार्थमेवोत्पत्तिरस्य। कद-ल्युक्ता। कन्दलीति। 'कन्दि क्रन्दि क्लन्दि आह्वाने रोदने च'। वृषादिकलच्। गौरादिङीष्।

"त्रिलिङ्गं कन्दलं चीनं समूरुः प्रियकस्तथा।
चमूरुः कन्दली नारी षडिमेऽजिनजन्तवः ॥"

इत्यमरमाला। 'चिञ् चयने'। 'मुञो दीर्घश्च' (उ० ३. १३) इति बाहुल-को नः[1] दीर्घश्च[2]। चीनः ॥

**कृष्णशाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः।**
**गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥**

**क्षीर०— अमी मृगविशेषाः। कृष्णेन शारः शबलः। रौतीति[3] रुरुः। न्यञ्चति न्यङ्कुः। न्यङ्क्वादित्वात् कुत्वम्। रमते रज्यते वा रङ्कुः। शं वृणोति शम्बरः। रोहिषाख्ये तृणे भवः रौहिषः। पृषतो बिन्दुभिश्चित्रः। मत्वर्थीयोऽच्। एत्येणः। इयर्त्यृश्यः। 'ऋष गतौ' इत्यस्मान्मूर्धन्यः षः स्यात्। रोहितो रक्तत्वात्। चामति चमरः ॥**

**टीका०**— कृष्णशाराद(यस्त्रयो ? यो द्वा)दश प्रत्येकं स्वनामप्रसिद्धा हरिणविशेषाः। कृष्णः शारो वर्णोऽस्येति कृष्णशारः। वर्णवाची शारशब्दस्तालव्यादिः। स च शर्णोतेर्घञा साध्यः। न्यङ्कुः। नाडॅण[4] इति ख्यातः। 'नावञ्चेः' (उ० १. १७) इत्युः। 'न्यङ्क्वादीनां च' (७. ३. ५३) इति कुत्वम्। 'रञ्ज रागे'। न्यङ्कुवद् रङ्कुः[5]। सम्बरो दन्त्यादिस्तालव्यादिश्चेति कामदेवनाम्नि व्युत्पादितः। एतस्य ककुदि[6] लम्बमानं रोम भवति। 'रुहेर्वृद्धिश्च' (उ० १. ५०) इति टिषच्। रौहिषः। मूर्धन्यषः। गोरिव कर्णोऽस्य गोकर्णः। गोन इति ख्यातः। 'पृषिरञ्जिभ्यां कित्' (उ० ३. १११) इत्यतच्। पृषतः। 'पृषतो बिन्दुचित्रितः' इति माधवः।

१. 'ङ्नः' ङ. छ. पाठः. २. 'श्चेति ची' क. पाठः. ३. 'रौति' क. ग. घ. ङ. पाठः. ४. 'णं' क. ख. पाठः. ५. 'उनाद इ' ज. पाठः. ६. 'द्रि' क. ख. पाठः.

"पृषन्मृगे †(++) क्लीबं पृषतोऽप्यनयोर्नरि"

इति रभसः। एणः सुनयनः स्वल्पमृगः। ऋश्यो नीलवर्णो घोटकप्रमाणः त्रिशृङ्गः। अस्य मृगी रोहिन्नामधेया। तथा च 'पुमान् स्त्रिया' (१. २. ६७) इत्यत्र भाष्यम्— 'हंसस्य वेरटा, कच्छपस्य डुलिः, ऋश्यस्य रोहिद्' इति।

"गतो रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा"

इति महिम्नः स्तोत्रं च। 'बलवदृश्यादृश्ये' इति बृन्दावने पादान्तयमकात् तालव्यवानृश्यः। रोहितो घोटकरूपोऽश्वमृगः। तथा च 'रोहितोऽश्वमृग' इति कोष्ठाध्यक्षप्रधानटीका। महिषाकृतिश्चमरः। यत्पुच्छं चामरम्। 'अर्तिक*मिचमिभ्रमिदेविवाशिवंसिभ्यश्चित्' (उ० ३. १३२) इत्यरन्॥

**गन्धर्वः शरभो रामः सृमरो गवयः शशः।**
**इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः॥ ११॥**

**क्षीर०— गन्धयत्यर्दयति गन्धर्वः। शृणाति शरभः। रमन्तेऽस्मिन् रामः। सरति सृमरः। गुवति गवते वा गवयः। शशति प्लुत्या गच्छति शशः। आदिशब्दाद् धुक्रयादयः। गवाद्या वक्ष्यमाणाः। पाश्यन्ते पाशैः पशवः॥**

**टीका०—** गन्धर्वादयः षड्, मृगेन्द्राद्याः सिंहाद्याश्चमरान्ता अतिक्रान्ता ये, ये च वैश्यवर्गोक्ता गवोष्ट्रादयः, ते पशुशब्दवाच्याः। गन्धर्व उक्तः। शृणातेः 'कृशृशलिगर्दिभ्योऽभच्' (उ० ३. १२२)। शरभः।

"अष्टपादूर्ध्वनयनः शरभो वनगोचरः"

इति महाभारतेऽस्य रूपम्।

"उत्पादका न बहवः कवयः शरभा इव"

१. 'टप्र', २. 'क', ३. 'भिः' ङ. छ. पाठः. ४. 'तं' क. ख. पाठः. ५. 'ता' घ. ङ. छ. पाठः. ६. 'धुलुक' क. ग. ड. पाठः. ७. 'ते च प' घ. ङ. छ. पाठः.

† 'पृषन्मृगे पुमान् विन्दौ न द्वयोः पृषतोऽपि ना' इति मेदिनी। * 'मिभ्रमिचमिदेविवासिभ्यश्चित्' इति मुद्रितोणादिपाठः।

इति बाणप्रयोगाद् ऊर्ध्वं पादचतुष्टयमस्येति। राम उक्तः। सर्तेः 'सृघस्यदः क्मरच्' (३. २. १६०)। सृमरः। यथा गौः, गवयस्तथा। 'शश प्लुतगतौ'। अच्। शशः। द्वितालव्यः॥

**उन्दुरुर्मूषिकोऽप्याखुः**

क्षीर०—उन्दयत्युन्दुरुः। अदन्तोऽपि। मूषति मूषिकः। आ खनत्याखुः। पुंध्वजोऽपि स्त्रियाम्। खनको गुहाशयो गर्तांटश्च।

"चुच्छुन्दरी गन्धमूषी दीर्घा चेति तु मूषिका।"

पृषो नानार्थे॥

टीका०—उन्दुरुत्रयमुन्दुरौ। 'उन्दुरुरुन्दूरुरुन्दरः[3]' इति शब्दार्णवः। मुष्णातीति मूषिकः। 'मूषेर्दीर्घश्च' (उ० २. ४४) इति किकन्[4] दीर्घत्वं च। 'खनु अवदारणे'। आङ्परयोः 'खनिशॄभ्यां डिच्च' (उ० १. ३४) इत्युः। आखुः॥

**गिरिका बालमूषिका।**

क्षीर०—गिरति गिरिका। 'खटाखुर्बालमूषिका' इति भुग्नः॥

टीका०—गिरिकाद्वयं लिङ्गलीति ख्यातायाम्। मूषिकेति। अजादिषु चटका मूषिका इति ज्ञापकात् टाप्॥

**सरटः कृकलासः[5] स्यात्**

क्षीर०—सरति सरटः। कृकं शिरोग्रीवं लासयति[6] कृकलासः। कृकिलास इत्यपपाठः। प्रतिसूर्यः शयानकश्च जाहको गात्रसङ्कोची हलौ[7] लाङ्गलिकेति च वाच्यम्॥

१. 'पदम' ङ. छ., 'पादम' घ. पाठः. २. 'उदुरुरूदरुरुदरः' घ. पाठः. ३. 'रूदू: दुरुरुदरः' ङ. छ. पाठः. ४. 'ति' च. पाठः. ५. 'सोऽथ मु' ख. ङ. पाठः. ६. 'ल' क. ग. पाठः. ७. 'ला लाञ्जलिकेति वा' क. ग. घ. ङ. पाठः.

टीका०—सरटद्वयं कृकलासे। *'सर्तेरटन्' (उ० ४. ८१)। सरटः। कृकेण कण्ठेन[1] लसति क्रीडतीति कृकलासः। घञन्तः॥

**मुसली गृहगोधिका॥ १२॥**

क्षीर०—मुस्यति भिनत्ति मुसली। 'मुस खण्डने'। मुशलीति गौडः। शिखी कलाङ्गश्च। गृहगोलिकेति सभ्यः पाठः। यस्या[2] घरघोलीति प्रसिद्धिः॥

टीका०—मुसलीद्वयं जेठि इति ख्यातायाम्। 'ज्येष्ठा स्याद् गृहगोधिका' इति वोपालितः। मुसली दन्त्यसा। ङचन्ता। वर्णदेशनायां 'मूर्धन्यमध्योऽपि मुषलो दृश्यत' इत्युक्तम्॥

**लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः।**

क्षीर०—लूयते लूता। तन्तून् वयति तन्तुवायः। ऊर्णा नाभावस्योर्णनाभः। मर्कट इवारोहावरोहणान्मर्कटकः। जालिको[3] जालकारश्च॥

टीका०—लूताचतुष्कं कीटमर्कटे। लूतेति। 'हसिमृग्रिण[4]वामिदमिल्लूपूधूर्विभ्यस्तन्' (उ० ३. ८६)। तन्तून् वयत इति तन्तुवायः। 'ह्वावामश्च' (३. २. २) इति वेञः कर्मण्युपपदेऽण्। 'आतो युक्—' (७. ३. ३३)। ऊर्णाकृतिस्तन्तुरूर्णा। सा नाभावस्येत्यूर्णनाभः। 'ङ्यापोः—' (६. ३. ६३) इत्यादिना ह्रस्वत्वम्। समासान्तः 'अच्' (५. ४. ७५) इति योगविभागादच्। एतदुक्तं भाष्ये। तथा च माघः—'प्रजा इवाङ्गादरविन्दनाभेः[5]†' (स० ३. श्लो० ६५) इति। मर्कटक इत्यल्पार्थे कन्॥

१. 'न क्री' क. छ. पाठः. २. 'स्स' क. ग. घ. पाठः. ३. 'लिका जा' ख. पाठः. ४ 'विन्न्रि' छ. पाठः. ५. 'भेः इ' घ. ङ. च. छ. झ. पाठः.

* 'सर्तेरटिः' इति मुद्रितोणादिपाठः। † 'नाभेरिति' माघे पाठो दृश्यते

**नीलङ्गुस्तु क्रिमिः**

क्षीर०—नीलतीति नीलङ्गुः । क्रामति क्रिमिः । 'क्रमितमि-*स्तमिस्तम्बामत इच्च' । (उ० ४. १२३) । कर्णजलूकोऽपि ॥

टीका०—नीलङ्गुद्वयमतिक्षुद्रे जन्तुमात्रे । ‡ 'खरुशङ्कुपीसुनीलङ्गु-लिगुहिङ्गुः'[1] (उ० १. ३७) इत्यनेन लगेर्धातोर्ह्स्वमध्यो नीलङ्गुः कुप्रत्ययेन निपातितः । 'क्रमिगमिनमितमिस्तम्भामत इच्च' (उ० ४. १२३) इत्यनेन क्रमतेः किः । धात्वकारस्येकारः । क्रिमिः । साहचर्यात् पुल्लिँङ्गौ । 'संसारपङ्क[2]क्रिमेः' इति नारकस्तुतौ प्रयोगः ।

"द्रुमामये भवेत् पुंसि कीटं च कृमि च क्रिमिः"

इति रभसः । तथा च

"लुम्पन्ति कीटकृमयः परितस्तथैते"

इति शिष्टप्रयोगश्च ॥

**कर्णजलौका शतपद्युभे ॥ १३ ॥**

क्षीर०—शतं पादा अस्याः शतपदी । 'कुम्भपदीषु च' (५. ४. १३९) इति साधुः । उभे द्वे स्त्रियाम् ॥

टीका०—कर्णजलौकाद्वयं कानाजु[3]न्तीति ख्यातायाम् । जलौकाशब्देन टाबन्तेन सकारान्तेन वा समासः । † शतपादिति । गोधापदीतिवत् कुम्भपद्यादि-ष्वभावाद् न ङीप् । 'शतपात् कर्णजलौके'ति भागुरिः ॥

**वृश्चिकः शूककीटः स्याद्**

---

१. 'ही' घ. ङ. च. छ. पाठः. २. 'ङ्कः' ङ. छ. पाठः. ३. 'जी' ज. पाठः.

* 'शतिस्तम्भामत', ‡ 'खरुशङ्कुपीयुनीलङ्गुलिगु' इति मुद्रितोणादिपाठः । † अयं शब्दः कुम्भपद्यादिषु परिगणितः । अनुसरति च परिगणनं भानुजिदीक्षितः ।

क्षीर० — वृश्चति वृश्चिकः । 'ओव्रश्चू छेदने'। शूकः कण्टकः, तत्प्रधानः कीटः । भ्रमरभेदोऽयम् ॥

टीका० — वृश्चिकद्वयं शुआंउड इति ख्याते । 'ओ व्रश्चू छेदने'। 'वृश्चिकृषोः किकन्' (उ० २. ४२)। 'स्तोःश्चुना श्चुः' (८. ४. ४०) इति श्चुत्वम् । ग्रहिज्यादिना सम्प्रसारणम् । वृश्चिकः । शूकाकारं लोम शूकः । तालव्यादिः । अभेदोपचारात् । शूकश्चासौ कीटश्चेति शूककीटः ॥

आलिद्रूणौ तु वृश्चिके ।

क्षीर० — आलमनर्थोऽस्त्यत्राली । द्रूणति द्रूणः । 'द्रूण हिंसायाम्' । द्रुण इत्येके । विषकीटोऽयम् ॥

टीका० — अलित्रयं वृश्चिके ।

"अलं वृश्चिकलाङ्गूलं द्रुण आडी तु वृश्चिकः"

इति हलायुधः । 'भृङ्गवृश्चिकयोरली' ति ह्रस्वादौ रभसः । अलयोगादली । इन्नन्तः । 'द्रुण हिंसागतिकौटिल्येषु' । इगुपधलक्षणः कः। द्रुणः ॥

**पारावतः कलरवः कपोतः**

क्षीर० — परापतोऽयं पारावतः । 'जपादित्वाद् वत्वम्(?)। रञ्जकश्च । केन पवते कपोतः । 'कस्य वायोः पोतः' इत्यागमः । आरण्योऽयम् । आद्यस्तु गृहकपोतः । अयं त्वभेदं मन्यते ॥

टीका० — पारापतत्रयं पारापते । पारादप्यापततीति पचाद्यच् । पारापतः । 'खगे द्वौ प्रथमे नर्ले' इत्युत्पलिनी(?) । तदा पृषोदरादित्वात्

१. 'आड' ङ. च. छ. ज. पाठः. २. 'याम् । कद्रु' क. ग. घ. ङ. पाठः. ३. 'व' क. घ, च. झ. पाठः, ४. 'ग' क. ख. घ. च. पाठः,

वत्वम्। कलरव इति बहुव्रीहिः। 'कबृ वर्णे'। 'कबेरोतच् पश्च' (उ० १. १५) इत्योतच् पश्चान्तादेशः। कपोतः॥

अथ शशादनः॥ १४॥

पत्त्री श्येनः

क्षीर०—पत्त्री, सामान्यमपि विशेषे वर्तते। यच्छाश्वतः—

"श्येनाख्यो विहगः पत्त्री पत्त्रिणौ शरपक्षिणौ"।

माला च—'श्येनः पत्त्री शशादनः'। श्यायते श्येनः॥

टीका०—शशादनत्रयं श्येने। श्येनशब्दश्च सञ्चारणसामलादौ प्रसिद्धः। तन्मध्ये कोऽपि शशमप्यत्तीति शशादनः। साहचर्यादन्येऽपि। पत्त्रं पक्षोऽस्यास्तीति पत्त्री। प्रशंसायामिनिः। 'श्यैङ् गतौ'। 'श्यास्त्याहृञविभ्य इनच्' (उ० २. ४८)। श्येनः॥

उलूकस्तु वायसारातिपेचकौ।

क्षीर०—उलति नेत्राभ्यां वहत्युलूकः। 'ऊर्ध्वोल्लोकनादि'ति निरुक्तम्। पेचयति पीयते वा पेचकः॥

टीका०—उलूकत्रयं पेचके। 'उच समवाये'। 'उलूकादयश्च' (उ० ४. ४१)। इत्यूकः चकारस्य च लकारः। उलूकः। पचतेश्छन्दस्यमिपच्योरलिट्येत्वं वक्तव्यम्[1]। पेचकः॥

व्याघ्राटस्तु भरद्वाजः

क्षीर०—व्याजिघ्रन्नटति व्याघ्राटः। भरद्वाजस्यापत्यं, भरद्वाजोऽस्य वा भरद्वाजः। चाटकेराख्यः॥

टीका०—व्याघ्राटद्वयं कर्णचटके। क्वचित् करटाख्यः। व्याघ्रमटतीति 'कर्मण्यण्' (३. २. १)॥

१. 'व्यम्॥' ङ. छ. पाठः.

खञ्जरीटस्तु खञ्जनः ॥ १९ ॥

क्षीर० — खं जनयति ॥

टीका० — खञ्जरीटद्वयं खञ्जने । खञ्जनो नन्द्यादिः ॥

लोहपृष्ठस्तु कङ्कः स्याद्

क्षीर० — लोहवर्णं पृष्ठमस्य । कङ्कते कङ्कः ॥

टीका० — लोहपृष्ठद्वयं कङ्के । दृढत्वाल्लोहमिव पृष्ठमस्ये लोहपृष्ठः । 'ककि वकि गत्यर्थे' दण्डकः । पचादिः । कङ्कः ॥

अथ चाषः किकीदिविः ।

क्षीर० — चषति चाषः । किकीति दीव्यति वाशते किकीदिविः । द्वे नामनी इत्येके । किकिदिविरित्यन्ये ॥

टीका० — चाषद्वयं सुवर्णचटके । 'चष भक्षणे' । मूर्धन्यान्तः । कर्मणि घञ् । चाषः । 'इक्षुपक्षिभिदोश्चासः' इति तु दन्त्यान्ते रभसः । *'कृपिसृपिच्छविकिकिदीविः' (उ०४. ५७) इत्यनेन किकिदीविर्निपातितः । अत्र दीकार एव दीर्घः । तथा च रत्नकोशे आर्या— 'किकिदीविश्चासः स्याद्' इति । अन्यथार्याभङ्गः । 'किकिदिविसंज्ञश्चासः' इति वोपालितेन सर्वं ह्रस्वमुक्तम् । 'चाषः किकीदिविः स्मृतः' इति व्याडिना द्वितीयो दीर्घ उक्तः ॥

कलिङ्गभृङ्गधूम्याटाः

क्षीर० — के लिङ्गं चूडास्य कलिङ्गः । भृङ्गवत् कृष्णः । धूम्येवाटति धूम्याटः । धूम्य आटश्च पदैकदेशत्वात् ॥

१. 'रीति' ख. पाठः. २. 'स्येति लो' क. ख. च. झ. पाठः. ३. 'कीदीवि' ख. ग. ङ. पाठः. ४. 'ञ् । इ' घ. ङ. छ. पाठः. ५. 'षः' क. ख. झ. पाठः.

* 'कृविघृष्विच्छविस्थविकिकीदिविः' इति मुद्रितोणादिपाठः ।

टीका० — पिच्छेति ख्याते कलिङ्गत्रयम्। कलिं गहनं गच्छतीति कलिङ्गः। पृषोदरादिः। '‡भृञो नुम् च' (उ० १. १३०) इति नुम्। भृङ्गः। धूमसंहतिर्धूम्या। तामटतीति धूम्याटः। 'कर्मण्यण्' (३. २. १)॥

अथ स्याच्छतपत्रकः॥ १६॥
दार्वाघाटः

क्षीर० — शतं बहवः पत्राणि पक्षा अस्य शतपत्रकः। दार्वा-हन्ति दार्वाघाटः। 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' (वा० ३. २. ४९)॥

टीका० — काष्टकोकेति[1] ख्याते शतपत्रकद्वयम्। उत्पतनसाधनं शतं पत्राण्यस्येति शतपत्रः। दारु आहन्तीति दार्वाघाटः। हन्तेराङ्पूर्वाद् दारूपपदे 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' (वा० ३. २. ४९) इत्युपसङ्ख्यानाद‍ण् नकारस्य च टकारः॥

अथ सारङ्गः स्तोककश्चातकः समाः।

क्षीर० — सरति, सरणमङ्गति वा सारङ्गः। सह आरङ्गति वा। यूथचारित्वात्। स्तोकं कायति वाशते याचते वा स्तोककः। चतते याचते चातकः॥

टीका० — शारङ्गत्रयं चातके। 'शॄ हिंसायाम्'। '†शॄस्वृञां वृद्धिश्च' (उ० १. १२७) इत्यङ्गच्। एवमुणादौ तालव्यादिः शारङ्गः।

"वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालम्" (स० १३. श्लो० ३८) इति भट्टिभाषासमावेशे दन्त्यादिः। स्तोकमेव कं शिरोऽस्येति स्तोककः। धातुप्रदीपे तु — 'ष्टुच[2] प्रसादे'। कर्मणि घञ्। इत्येवं स्तोकः साधितः। ततः स्वार्थे कः।

१. 'भुटोके' क., 'उटोके' छ., 'ढेटके' ज., 'टोखेति' च. पाठः. २. 'ष' क. घ. ज. झ. पाठः.

‡ 'भृञः किन्नुट् च', † 'स्वृञोर्वृद्धिश्च' इति मुद्रितोणादिपाठः।

"सारङ्गः स्तोककः स्तोकोऽहिवर्णो वाग्ग्रहोऽम्बुपः"

इति केसरमालापि। 'चदे चते याचने'। ण्वुल्। चातकः॥

**कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः॥ १७॥**

क्षीर०— कृकेण शिरोग्रीवेण वक्ति कृकवाकुः। कुगुच्चारणेन कुटति कुक्कुटः। शिखी कालश्च॥

टीका०— कृकवाकुचतुष्कं कुक्कुटे। कृकेन गलेन वक्तीति कृकवाकुः। 'कृके वचः कश्च' (उ०१. ६) इति ञुण्, कश्चान्तादेशः। ताम्रवच्चूडा अस्येति ताम्रचूडः। 'कुक वृक आदाने'। क्विप्। कुक्। 'कुट कौटिल्ये'। कुटतीति कुटः। पचाद्यच्। तस्य 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (१. २. १) इति ङिद्वद्भावान्न लघूपधगुणः। कुक् चासौ कुटश्चेति कुक्कुटः॥

**चटकः कलविङ्कः स्यात्**

क्षीर०— चटति भिनत्त्याहारं चटकः। कं शिरो लुनाति चलति [३]:॥

टीका०— गमडेति ख्याते चैटकद्वयम्। चटेः कुन्। चटकः॥

**तस्य स्त्री चटका**

क्षीर०— 'अजाद्यतष्टाप्' (४. १. ४)। क्षिपकादित्वादित्त्वाभावः॥

टीका०— तस्य चटकस्य स्त्री चटका। 'अजाद्यतष्टाप्' (४. १. ४)॥

**पुमपत्ये चाटकैरः तयोः।**

क्षीर०— चटकस्य चटकाया वा अपत्यं पुमान्। 'चटकाया ऐरक्' (४. १. १२८)। 'चटकाच्च' इत्युपसङ्ख्यानात्॥

१., २. 'पि' ग. क. पाठः. ३. 'चा' ड. छ. पाठः.

टीका० — तयोश्चटकाचटकयोः पुमपत्ये चाटकैरः । 'चटकाया ऐरक्' (४. १. १२८) ॥

**स्त्र्यपत्ये चटकैव हि ॥ १८ ॥**

क्षीर० — स्त्री च तदपत्यं च तत् । 'स्त्रियामपत्ये लुग्वक्तव्यः । (वा० ४. १. १२८) । 'लुक् तद्धितलुकि' (१. २. ४९) इति टापो लुक्यपि स्त्रीत्वाट्टाप् ॥

टीका० — चटकाचटकयोः स्त्र्यपत्ये चटकेत्येव स्यात् । 'स्त्रियामपत्ये लुग् वक्तव्यः' (वा० ४. १. १२८) इत्यैरक्प्रत्ययस्य लुक् । ततष्टाप् ॥

**कर्करेटुः करेटुः स्यात्**

क्षीर० — कर्केति रेटते, केति रेटते वाशते ॥

टीका० — काङ्करेटु इति ख्याते कर्करेटुद्वयम् । कर्कः सिताश्व इव रेटतीति कर्करेटुः । वृक्षादीनां शिरासि रेटतीति करेटुः । 'रेट परिभाषणे' 'कृपावा —' (उ० १. १) इत्यादिना बाहुलक उण् ।

"कर्करेटुः करेटुः स्यात् खद्योतो ज्योतिरिङ्गणः"

इति पुंस्काण्डेऽमरमाला ।

"स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगा"

इति स्त्रीपुंसत्वमपि केचिन्मन्यन्ते ॥

**कृकणक्रकरौ समौ ।**

क्षीर० — कृकं नयति कृकणः । कृ इति कणति वा कृकणः क्रेति करोति वाशते क्रकरः ॥

टीका० — कयरेति ख्याते कृकणद्वयम् । कृकेण गलेन अणतीति कृकणः । पचादिः । 'अण शब्दार्थः' ॥

**वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥**

क्षीर० — परभृतः काकीपुष्टत्वात् । कोकते चित्तं गृह्णाति कोकिलः । अपि कायति पिकः । जलकण्ठस्ताम्राक्षश्च ॥

टीका० — वनप्रियचतुष्कं कोकिले । 'वा प्रियस्य' (वा० २. २. ३५) इत्यनेन प्रियवण इत्यपि । विजातीयेन भृतः पुष्टः परभृतः । 'कुक अदने' । सलिलवद् बाहुलक इलच् । कोकिलः । अपिहितः कायतीति पिकः । कप्रत्ययान्तः । अपिरन्तर्धौ ॥

**काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।**
**ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥**

क्षीर० — काशब्दं कायति, ककते वा लौल्यात् काकः । केति रटति करटः । नास्ति रिष्टं हिंसास्य मृतभुक्त्वाद् वा अरिष्टः । बलिभिः पुष्टो वैश्वदेवभागभुक्त्वाद् बलिपुष्टः । सकृत् प्रजायते सकृत्प्रजः । एकाण्डप्रसवात् । ध्वाङ्क्षति काङ्क्षति ध्वाङ्क्षः । आत्मानं स्वं नाम घोषयत्यात्मघोषः । काकेति वाशनात् । परान् पिकान् बिभर्ति परभृत् । वय एव वायसः । प्रज्ञादित्वादण् वयते वा । एकदृष्टिश्चिरजीवी मौकलिकश्च ॥

टीका० — काकदशकं काके । का इति शब्दं कायतीति काकः । 'आतोऽनुपसर्गे कः' (३. २. ३) । कम् आत्मानं रटतीति करटः । अत एवात्मानं घोषयतीत्यात्मघोषोऽपि । 'कर्मण्यण्' (३. २. १) । रिष्टं मरणलक्षणम् । तदस्य नास्तीत्यरिष्टः । बलिना पुष्टो बलिपुष्टः । सकृदेकवारं प्रजा सन्ततिरस्येति सकृत्प्रजः । 'ध्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते' । पचाद्यच् । ध्वाङ्क्षः । परं कोकिलं बिभर्ति पुष्णातीति परभृत् । 'अन्येभ्योऽपि दृश्यते' (वा० ३. २. १०१) इति क्विप् । वय एव वायसः । प्रज्ञादित्वादण् ॥

१. 'गार्हत्वाद्' ख. पाठः.

द्रोणकाकस्तु काकोलः

क्षीर० — वृद्धकाकोऽद्रिकाको वा। यदाहुः —

"द्रोणकाको वृद्धकाकोऽप्यद्रिकाको वनाश्रयः"।

'द्रुण हिंसायाम्'। द्रोणोऽपि॥

टीका० — डाढकाकेति ख्याते द्रोणकाकद्वयम्। विषपर्याये काकोल उक्तः॥

दात्यूहः कालकण्ठकः।

क्षीर० — द्वितीयं तृतीयं वा रूपं वहति दित्यवाट्। तस्यापत्यं दात्यूहः। 'देविकाशिंशपा—' (७. ३. १) इत्यात्वम्। कालः कण्ठोऽस्य कालकण्ठकः। कालाः कण्टका रोमोद्भेदा अस्य वा कालकण्टकः। जलरङ्कोऽपि॥

टीका० —डाँऊकेति ख्याते दात्यूहद्वयम्। कल एव कालः। स्वार्थेऽण्। कालोऽव्यक्तध्वनिः कण्ठेऽस्येति कालकण्ठः॥

आतापिचिल्लौ

क्षीर० — आतापिचिल्लौ सिंहावलोकितेन समावित्येव। आतापयत्यातापिः। चिल्लति चिल्लः। 'चिल्ल शैथिल्ये'॥

टीका० — आतापिद्वयं चिल्ले। 'तायृ पूजादौ'। आवश्यके णिनिः आतायी। 'चिल्ल शैथिल्ये'। अच्। चिल्लः॥

दाक्षाय्यगृध्रौ

१. 'सा' च. ज., 'ढका' ङ. छ. पाटः. २. 'जो' क. ग. ङ. पाठः. ३. 'ढाके' ङ. छ., 'धातुके' ज. पाटः. ४. 'ण्ठो' ङ छ. पाठः. ५. 'तपत्या' ख पाठः

क्षीर० — समावित्येव। दक्षते दाक्षाय्यः। †'हृदयदक्षिस्पृहिभ्य आय्यः' (उ०३. ९६)। ततोऽपत्येऽण्। गृध्यति मांसे गृध्रः॥

टीका० — दाक्षाय्यद्वयं गृध्रे॥

कीरशुकौ समौ॥ २१॥

क्षीर० — कीशब्दमीरयति कीरः। शुको नीलत्वात्। शुवतीत्येके। प्रियदर्शनोऽपि॥

टीका० — कीरद्वयं शुके। कीति शब्दं [1]रायतीति कीरः। 'रै शब्दे'। 'आतोऽनुपसर्गे कः' (३. २. ३)। 'शुक गतौ'। तालव्यादिः। इगुपधलक्षणः कः। शुकः॥

क्रुङ् क्रौञ्चः

क्षीर० — क्रुञ्चति क्रुङ्। प्रज्ञादित्वाद् वा अण्। स्त्रियामजादित्वात् क्रुञ्चा॥

टीका० — क्रौञ्चे क्रुङ्द्वयम्। क्वचिद् [2]ढेंकेति ख्यातः। क्रुङ् इति। 'क्रुञ्चु कौटिल्याल्पीभावयोः'। ऋत्विगादिना [3]क्विन्। निपातनान्न नकारलोपः। संयोगान्तलोपः 'क्विन्प्रत्ययस्य कुः' (८. २. ६२) इति कुत्वं ङकारः। स्त्रियां क्रुञ्चा। हलन्तादप्यजादिगणपाठाट्टाप्। क्रुञ्चाया अपत्यं क्रौञ्चः। 'स्त्रीभ्यो ढक्' (४. १. १२०) इति ढकि प्राप्ते

"वडवाया वृषे वाच्ये अण् क्रुञ्चाकोकिलात् स्मृतः"

इत्यण्॥

अथ बकः कह्वः

क्षीर० — वक्ति बकः। न्यङ्क्वादि। बकोटोऽपि। के जले, केन वा ह्वयते कह्वः॥

१. 'द' क. ख. घ. ङ. छ. पाठः. २. 'करोति' ङ. छ., 'कारयती' च. ज. पाठः. ३. 'क्वे' क. ख. च. पाठः. ४. 'त्वात् क्वि' क. ख. पाठः.

† 'श्रुदक्षिस्पृहिगृहिभ्य.' इति मुद्रितोणादिपाठः।

टीका० — बकद्वयं बके । 'बक कौटिल्ये' । अच् । क इति शब्दं ह्वयत इति कह्वः । 'ह्वेञ् स्पर्धायामाह्वाने च' । 'सर्वत्र सम्प्रसारणिभ्यो डो वक्तव्यः' इति डः ॥

**पुष्कराह्वस्तु सारसः ।**

क्षीर०—सरसिभवोनाह्वयते सरसि(१) भवः सारसः । लक्ष्मणाख्यौ, विलीनाङ्गो, दीर्घजङ्घश्च ॥

टीका० — पुष्कराह्वद्वयं सारसे । पुष्कराह्वः पद्मनामा । 'सारसवत्ता विहता' इति वासवदत्ता । अतो द्विदन्त्यः सारसः ॥

**कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥**

क्षीर० — कवते वाशते कोकः । चकते चक्रः । चक्रेति वाक आख्या अस्य चक्रवाकः । रथाङ्गश्चक्रमाह्वयो नामास्य रथाङ्गाह्वयः, रथाङ्गनामा च ॥

टीका० — चक्रवाके कोकचतुष्कम् । पूर्ववत् कोकचक्रौ । चक्रेण चक्रशब्देनोच्यत इति चक्रवाकः । 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति घञ् । चक्रं रथाङ्गमुच्यते । तस्याह्वयो रथाङ्गाह्वयः, स नामास्येति रथाङ्गाह्वयनामकः ॥

**कादम्बः कलहंसः स्याद्**

क्षीर० — कदम्बस्यायं सङ्घचारित्वात् कादम्बः । कलो मधुरवाग् हंसः ॥

टीका० — कायम्बेति ख्याते कादम्बद्वयम् । नीपे कादम्ब उक्तः ॥

१. 'यां शब्दे च' क. ख. च., 'यां वाचि । स' ज. पाठः.  २. 'वः सा' ख. पाठः.
३. 'ख्यो ली' ख. पाठः.  ४. 'न्त्यः ॥' क. ख. झ. पाठः.

उत्क्रोशकुररौ समौ ।

क्षीर०— उच्चैः क्रोशत्युत्क्रोशः । कुरति कुररः । 'कुर शब्दे' । कुरेति शब्दं राति वा ॥

टीका०— कुंरलेति ख्याते उत्क्रोशद्वयम् । उच्चैः शब्दायत इत्युत्क्रोशः । पचादिः । 'कु शब्दे' । 'कुवः क्ररन्' (उ० ३. १३३) कुररः ॥

हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥

क्षीर०— हन्ति तमो[2]ऽच्छत्वाद् हंसः । अत एव श्वेतगरुतः । श्वेता गरुतः पक्षा अस्य श्वेतगरुत् । सा[3]मान्येनावयवान्तरस्य नानात्वात् । तद् वक्ष्यते राजहंसा इत्यादि । चक्रमिवाङ्गमेषां, चक्रवन्मण्डलीकृतपक्षा आसत इति । वक्राङ्ग इत्येके । मानसाख्ये देवसरसि ओकोऽस्य मानसौकाः ॥

टीका०— हंसचतुष्कं हंसे । हन्तेः 'वृतॄवदिहनिकमि§कषियुमुचिभ्यः सः[4]' (उ० ३.६२) । हंसः । दन्त्यसः । श्वेतगरुतः श्वेतपक्षाः । चक्रवाकस्येवाङ्गमस्येति चक्राङ्गः ॥

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।

क्षीर०— चञ्चुसहितैश्चरणैरिति लक्षणे तृतीया ॥

टीका०— ये लोहितैश्चञ्चुचरणैर्लक्षिताः, सिताश्च शरीरेण, ते राजहंसाः । चञ्चुचरणैरिति । प्राण्यङ्गत्वाद् बहुवचनस्याप्राप्तिः । अतः कृतद्वन्द्वैकवद्भावस्यैकशेषः । यथा—

१. 'क' झ. पाठः. २. 'गच्छति हंसः । श्वे', ३. 'चक्राङ्गो वृत्तत्वात् । वक्रा' ख. घ. पाठः. ४. 'सः । द' ङ. छ. पाठः.

§ 'कशिभ्यः सः' इति मुद्रितोणादिपाठः

"ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते"

इति ॥

**मलिनैर्मल्लिकाक्षास्ते**

**क्षीर०— मलिनैश्चञ्चुचरणैस्ते सिता मल्लिकाकाराक्षाः शुक्लापाङ्गत्वात् ॥**

**टीका०—** ते हंसाः मलिनैः किञ्चिद् धूम्रैश्चञ्चुचरणैर्लक्षिता मल्लिकनामानः । 'मल मल्ल धारणे' । 'इन्' (उ० ४. ११९) इतीन् । ततः कन् ।

"मल्लिको हंसभेदे ना तृणशूल्यां तु मल्लिका"

इत्यर्धनारीश्वरः । मल्लिकाक्षः क्षान्त इति केचित् ।

"भूषिते परितो यस्य लोचने कृष्णराजिभिः ।
कृष्णं च तारकामात्रं मल्लिकाक्षः स उच्यते ॥"

इत्यश्वभेदो हंसभेदश्च । एतच्छब्दार्णव उक्तम् ।

"एतस्मिन् मदकलमल्लिकाक्षपक्ष"

इति भवभूत्यनुप्रासोऽपि ॥

**धार्तराष्ट्राः सितेतरैः ॥ २४ ॥**

**क्षीर०— ते कृष्णैश्चञ्चुचरणैः । धृतराष्ट्रे अमात्ये भवाः धार्तराष्ट्राः । राजहंसेभ्यो न्यूनत्वात् ॥**

**टीका०—** सितेतरैः कृष्णैश्चञ्चुचरणैर्लक्षिता हंसा धार्तराष्ट्राः । शिवादित्वादण् ॥

**शरारिराटिरातिश्च**

**क्षीर०— शृणात्येनां शरारिः । अटत्याटिः । अतत्यातिः । एताः स्त्रियाम् ॥**

---

१. 'न्यं' ज. पाठः. २. 'णो' ग. पाठः. ३. 'त्यनेन वा श' ख. पाठः. ४. 'नादातिः' क. छ. पाठः.

टीका० — शरारित्रयं शरारौ । श्रृणोतेर्बाहुलक आरिः । शरारिः । 'सरमिव शरालिकम्पितमच्छोदं नाम सर' इति कादम्बरी । अटतेराङ्पूर्वाद् 'इन्' (उ० ४. ११९) इतीन् । आटिः । 'अत सातत्यगमने' । 'अज्यतिभ्यां च' (उ० ४. १३२) इतीण् । आतिः । स्त्रियां ङ्यन्तापीति केचित् ॥

बलाका बिसकण्ठिका ।

क्षीर० — बलाहकान् कायति, बलेन अकति याति वा बलाका । बिसमिव कण्ठोऽस्या बिसकण्ठिका । बिसकामुकेत्येके । शेरारिका[1] गौरा पीतपदेति वाच्यम् ॥

टीका० — स्वल्पबकजातौ बलाकाद्वयम् । 'वल वल्ल संवरणे' । 'बलाकादयश्च' (उ०४. १४) इत्याकः । मृणालवत् कण्ठोऽस्या इति बिसकण्ठिका । दन्त्यसा ॥

हंसस्य योषिद् वरटा

क्षीर० — व्रियते वरटा । स्त्रीविषयत्वाज्जातेर्ङीष् नास्ति । वरलापि ॥

टीका० — हंस्यां वरटा । वृणातेः 'शकादिभ्योऽटन्' (उ०४. ८२)
"वरला हंसकान्ता स्याद् वारला वरटा मता" ॥
इति हलायुधे त्रैरूप्यम् ॥

सारसस्य तु लक्ष्मणा ॥ २५ ॥

क्षीर० — योषिदित्येव । लक्ष्मणीत्येके । अत एव लक्ष्मणाख्यासौ ॥

टीका० — सारसयोषिति[2] लक्ष्मणा ।
"वाल्मीकेररहितरामलक्ष्मणानाम्"

१. 'शारिका गौरादि पिकप' ख. पाठः. २. 'स्य तु ल' ग. छ. पाठः.

इति माघे मकारवान् । कादम्बर्यां तु – 'महापुरुषमिव प्रकटमीनमकरशङ्खल-क्षणम्' इत्यच्छोदवर्णनायां मकाररहितोऽपि ॥

**जतुकाजिनपत्त्रा स्यात्**

**क्षीर० — जातेव कृष्णपिङ्गत्वाद् जतुका । अजिनं पत्त्राणि पक्षा अस्या अजिनपत्त्रा । चर्मचटकत्वात् ॥**

टीका० — जतूकाद्वयं चर्मचटके ।

"रामठे जतुकं चर्मपत्राजतुकृतोः स्त्रियाम्"

इति चवर्गादौ रभसः

"निशाशश्वद्व्याप्तिस्थितघनजतूकापटलजम्"

इति विभाकरवर्मा । चर्मैव पक्षोऽस्या अजिनपत्त्रा ॥

**परोष्णी तैलपायिका ।**

**क्षीर० — परमुष्णमस्याः परोष्णी । शीतासहत्वात् । परं विरुद्धं वा तेजसान्धकार(चर)त्वात् । तैलं पिबतीव तैलपायिका । नित्यमा-स्यविकासात् । चतुःसंज्ञेत्येके । मुखविष्ठा विगुलिका निशाटनी च ॥**

टीका० — परोष्णीद्वयं तैलाम्बू इति ख्यातायाम् । नासाच्छिन्निकाया वाजगुडीति ख्यातायां तैलाम्बूसदृशायां वेति केचित् ॥

**वर्वणा मक्षिका नीला**

**क्षीर० — वृणोति वर्वणा । मक्ष्यन्ते रुष्यन्तेऽस्यै मक्षिका ॥**

टीका० — नीलकाचवर्णा गोमयादिमक्षिका वर्वणाख्या । 'जानपद —' (४. १. ४२) इत्यादिना प्राणिवृत्तेर्ङीष्विधानान्नीलीति पाठः । नीलेति लेख-

१. 'ति तै', २. 'क । तैलस्यांजिनपक्षत्वाद् मुखविष्ठात्वद् गुलिका' क पाठः

कदोषः । 'वर्वणा नीलमक्षिका' इत्यमरमाला । अतो नीलमक्षिकेति सविशेषणं नाम ॥

**सरघा मधुमक्षिका ॥ २६ ॥**

क्षीर० — सरति घातयति सरघा ॥

टीका० — सरघाद्वयं मधुमक्षिकायाम् । सरघा दन्त्यादिः ॥

**पतङ्गिका पुत्तिका स्याद्**

क्षीर० — पतति पतनमङ्गति वा पतङ्गिका । पुत् कुत्सितं तनोति पुत्तिका । मधुमक्षिकाभेदोऽयम् । यन्निमिः —

"माक्षिकं तैलवर्णं स्याद् घृतवर्णं तु पौत्तिकम् ।
भ्रामरं तु भवेच्छुक्लं क्षौद्रं तु कपिलं भवेत्" ॥

टीका० — पतङ्गिकाद्वयं पुत्तिकाख्यमधुमक्षिकाविशेषे । तथा च वैद्यके — 'पौत्तिकं भ्रामरं क्षौद्रं मधु' इत्युक्तम् ॥

**दंशस्तु वनमक्षिका ।**

क्षीर० — दशति दंशः ॥

टीका० — डाश इति ख्याते दंशद्वयम् । दशतीति दंशः । पचादिः ॥

**दंशी तज्जातिरल्पा स्याद्**

क्षीर० — दंशी दंशजातीया । जातेर्ङीष् ॥

टीका० — तज्जातिः क्षुद्रा कुजीति ख्याता दंशी ॥

**गन्धोली वरटा द्वयोः ॥ २७ ॥**

1. 'क' इ. ठ. पाठः.

क्षीर० — गन्धयत्यर्दयति गन्धोली। गन्धालीत्येके। वृणोति वरटा। तैलाटाख्या ॥

टीका० — गन्धोलीद्वयं वरलीति ख्यातायाम्।

"वरटा वरटीदंश्योस्तत्पतौ वरटः स्मृतः"

इति तारपालः ॥

**भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः।**

क्षीर० — आकृत्या भृङ्गमियर्ति भृङ्गारी। चीति रौति चीरुका। चीति रिणाति चीरी। झिल्ल्याद्यभेदात् तत्तुल्यशब्दा झिल्लिका। 'केऽणः' (७.४.१३) इति ह्रस्वः। 'झिल्लिकाझङ्कृतीनाम्' इति तु लक्ष्यम् ॥

टीका० — भृङ्गारीचतुष्कं चिल्लीति ख्यातायाम्। 'चिरुका ह्रस्वादि-दीर्घादिश्च' इति वर्णविवेकः। †'शुगिचिमिञां दीर्घश्च' (उ० २.२८) इति चिञो रक्, दीर्घश्च, ङीर् च। चीरी ॥

**समौ पतङ्गशलभौ**

क्षीर० — शलति शमं लभतेऽग्नौ वा शलभः ॥

टीका० — पतङ्गद्वयं फेडिङ्ग इति ख्याते। 'पतेरङ्गच् पक्षिणि' (उ० १.१२४) इत्यङ्गच्। पतङ्गः। 'शल गतौ'। तालव्यादिः। शरभवच्छलभः ॥

**खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥**

क्षीर० — खे द्योतते खद्योतः। ज्योतिरियङ्गते चलतीति ज्योति-रिङ्गणः। इन्द्रगोपको ज्योतिर्माली कीटमणिश्च ॥

१. 'चीरिकाद्य' क. ग. घ. ङ. पाठः. २. 'का। चकाख्या घोरयण इन्दिन्दिरो लङ्का-दरयाम्। के' क. ग. घ. ङ. पाठः. ३. 'पलिङ्ग' च. पाठः.

† 'शुसिचिमीनां दीर्घश्च' इति मुद्रितोणादिपाठः।

टीका०—खद्योतद्वयं ज्योतिरिङ्गणाविति ख्याते। खे द्योतत इति खद्योतः। पचादिः। ज्योतिस्तारका, तद्वद् इङ्गति गच्छतीति ज्योतिरिङ्गणः। 'चलनशब्दार्थादकर्मकाद् युच्' (३.२.१४८)। 'पूर्वपदात् संज्ञायामगः' (८.४.३) इति णत्वम् ॥

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥

क्षीर०—मधु व्रतयति भुङ्क्ते मधुव्रतः। अलत्यली, अलिश्च। द्वौ रेफौ स्तोऽस्य द्विरेफः। †भृजति, बिभर्ति वा भृङ्गः। 'भृजी भर्जने'। षट् पदानि चरणान्यस्य षट्पदः। भ्रमति भ्रमरः। चञ्चलीकभसलेन्दिन्दरलोलम्बा देश्याम् ॥

टीका० मधुव्रताद्येकादशकं भ्रमरे। मधु करोतीति मधुकरः। तथाच वैद्यके – 'पौत्तिकं भ्रामरं क्षौद्रं मधु' इति। मधु व्रतयति भुङ्क्ते इति मधुव्रतः। 'व्रताद् भोजने तन्निवृत्तौ वा (वा० ३.१.२१) 'मुण्डमिश्र—' (३.१.२१) इति णिजन्तात् 'कर्मण्यण्' (३.२.१)। मधुलिट्पुष्पलिहौ हकारान्तौ. क्विबन्तौ च। अलति अवश्यं भूषयतीत्यली। नान्तः। ह्रस्वादिः। भ्रमर इति नाम्नि द्वौ रेफावस्येति द्विरेफः। भृजो गन्प्रत्ययेन भृङ्गः। 'अर्तिकमिचमि भ्रमिदेविवाशिवासिभ्यश्चित्' (उ० ३.१३२) इत्यरन्। भ्रमरः। अलिगिति ह्रस्वादिः। 'इन्' (उ० ४.११८) इतीन्। स्वरार्थो नः ॥

मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३० ॥

१. 'ज्योतिरिङ्गणौ' क.ङ.छ पाठः. 'अर्ङ्गहणौ' ज पाठः.

† 'भर्जत' इति स्यात्। * व्युत्क्रमेण व्याचष्टे। ※ 'व्रताद् भोजनतन्निवृत्त्योः' इति मुद्रितवार्त्तिकपाठः।

क्षीर० — मीनात्यहिं मयूरः । बर्हमस्यास्ति । 'फलबर्हाभ्यामिनच्' (वा० ५. २. १२२) । इनिश्च । शिखा अस्यास्ति शिखावलः । 'दन्तशिखात् संज्ञायाम्' (५. २. ११३) । शिखी । व्रीह्यादित्वादिनिः । मेघनादमनुलसति नृत्यत्यवश्यं मेघनादानुलासी । चन्द्रकी शुक्लापाङ्गश्च ॥

टीका० — मयूरनवकं मयूरे । 'मय गतौ' । 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४.९१) । मयूरः । बर्हयोगाद् बर्हिणः । फलिनवदिनच् । वाधिकारादिनिः । बर्ही । नान्तः । 'दन्तशिखात् संज्ञायाम्' (५. २. ११३) वलच् । शिखावलः । शिखिकेकिनोर्व्रीह्यादित्वादिनिः । मेघनादानन्तरं नर्तितु शीलमस्येति मेघनादानुलासी । नान्तः ॥

केका वाणी मयूरस्य

क्षीर० — के मूर्ध्नि कायति केका ॥

टीका० — मयूरध्वनौ केका ॥

समौ चन्द्रकमेचकौ ।

क्षीर० — चन्द्रप्रतिकृतिश्चन्द्रकः[1] । मेचको मिश्रवर्णत्वात् । यत् कात्यः —

"बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः" ॥

टीका० — मेचकद्वयं मयूरपिच्छस्थेऽक्षिसंस्थाने ॥

शिखा चूडा

क्षीर० — मयूरस्येत्येव । अन्यत्रोपचारात्

टीका० — शिखाद्वयं मयूरशिरस्थचूडायाम् । ज्वालायां शिखोक्ता ॥

1. 'प्रकृतिराह्लादकत्वाच्चन्द्र' क. ग. घ ङ. पाठः.

शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३१ ॥

क्षीर० — शिखाभिर्डयते शिखण्डः । पिच्छति पिच्छम् । बर्हते नृत्तेनोर्ध्वीभवति बर्हम् । मचलाकोऽपि । कलापो नानार्थे ॥

टीका० — शिखण्डत्रयं मयूरपिच्छे ।

"मारुतयोगाद् गुणवन्नवशशिखण्डानां
शुक्लापाङ्गविलम्बिनवशशिखण्डानाम्"

इति वृन्दावनयमकम् । 'बर्ह बल्ह परिभाषणादौ' । घञ् । बर्हः ।

"सति कुसुमसनाथे कं हरेदेष बर्हः"

इति कालिदासः । अतः पुल्लिङ्गोऽपि ॥

खगे विहङ्गविहगविहङ्गमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥
पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः ।

क्षीर० — खे गच्छति खगः । 'अन्यत्रापि दृश्यते' (वा० ३. २. ४८) इति डः । विहायसा गच्छति । 'गमेः सुपि खज् वक्तव्यः' (वा० ३. २. ३८) 'विहायसो विह च' । 'ड च' । ख(श्च ? च्च) डित्' । विजिहीते विहायाः । यच्छाश्वतः—

"विदुर्विहायसं व्योम पक्षिणश्च विहायसः" ।

शक्नोतीति । 'शकेरुनोन्तोन्त्युनयः' (उ० ३. ४९) । पतत्यनेन पतत्रं पत्रं पक्षः । 'पुंसि संज्ञायां घः' (३. ३. ११८) पतैर्गच्छति पतगः । पततीति पतत् । पत्राणि पक्षा रथोऽस्य पत्ररथः । नग ओकोऽस्य नगौकाः । वाजो वेगोऽस्यास्ति वाजी । विकिरति पर्णं विकिरः । 'विष्किरः शकुनिर्विकिरो वा' (६. १. १५०) । वाति, वयति वा विः । 'वेञो —*

१. 'ड' क. ख पाठः. २ 'तं' ख झ. पाठः. ३. 'नाथः इ' ड छ. पाठः. ४. 'डिः ।' क. ग. घ. पाठः.

'डिच्' इति मुद्रितोणादिपाठः ।

(उ० ४. ७३) । पतत्राणि सन्त्यस्य पतति वा पतत्री । * 'पतेरत्रिनिः' (उ० ४. ७०) । पतेरात्रिरिति भ्रान्त्या ग्रन्थकृदिदन्तं मन्यते । पतितुमिच्छन् पित्सन् । 'सनि मीमा —' (७. ४. ५४) इतीसभ्यासलोपौ । नभसा गच्छति नभसङ्गमः । गमेः सुप्युपसङ्ख्यानात् खच् । 'वाचंयमपुरन्दरौ च' (६. ३. ६९) इति चकारान्मुमागमः । 'अत्यमिचमितमिराभिलभिनभिपनिपणिभ्योऽसच्' (उ० ३. ११७) इति नभसशब्दोऽस्तीत्येके । पतङ्गो नानार्थे ॥

टीका० — खगादयः सप्तविंशतिः सामान्यपक्षिणि । खे गच्छतीति खगः । डप्रकरणे 'अन्यत्रापि—' (वा० ३. २. ४८) इति डः । 'विहायसो विह च' (वा० ३. २. ३८) इति खच् । 'खच्च डिच्च¶ भवतीति वक्तव्यम्' (वा० ३. २. ३८) इति खचो डित्त्वम् । विहङ्गः । 'डे च विहायसो विहादेशो वक्तव्यः' (वा० ३. २. ३८) इति विहादेशः । विहगः । 'विहायसो विह च' इति खच् । विहङ्गमः । विहायाः सान्तः । विपूर्वाज्जहातेः 'वहिहाधाञ्भ्यश्छन्दसि णिच्च' (उ० ४. २२२) इत्यसुन् । णित्त्वाद् युगागमः । 'शकॢ शक्तौ' । 'शकेरुनोन्तोन्त्युनयः' (उ० ३. ४९) इति उन, उन्त, उन्ति, उनिप्रत्ययाः कर्तव्याः । अतः शकुनशकुन्तशकुन्तिशकुनयः । प्रथममण्डेन जायते, ततः शावकेन । अतो द्विजः । (पतत्र)पत्रयोगात् पतत्रिपत्रिणौ । अत इनिः । पतन् उड्डयमानो गच्छति पतगः । पृषोदरादिः । पतन् शत्रन्तः । पत्रमेव रथ इवास्येति पत्ररथः । नगाः वृक्षाः, तदोकसो नगौकसः । व्रजत्यनेनेति वाजः । 'वज व्रज गतौ' । घञ् । वाजः । तद्योगाद् वाजी । किरतेः इगुपधलक्षणः कः । विकिरः । विरिति । 'वेञो डिः'‡ (उ० ४. ७३) 'विष्किरः शकुनि$र्विकिरो वा' (६. १. १५०) इति पक्षे सुट् । 'परिनिविभ्यः सेवसित —' (८. ३. ७०) इति षत्वम् । विष्किरः । 'पतेरत्रिन्' (उ० ४. ७०) । पतत्रिः । इदन्तः । गरुत्मान् उक्तः । पित्सन्त इति । पतेः सन् शतृप्रत्ययश्च । 'सनिमीमाघुरभलभशकपतपदामच इस्' (७. ४. ५४) इतीस् । अभ्यासलोपश्च ।

* 'पतेरात्रिन्', § 'भितपिपातिपनिपणिमहिभ्य' इति मुद्रितोणादिपाठः । ¶ 'डिद्वाच्यः' इति मुद्रितवार्त्तिकपाठः । ‡ 'डिच्च' इति मुद्रितोणादिपाठः । $ 'नौ वा' इति मुद्रिताष्टाध्यायीपाठः ।

नभसोऽकारान्तोऽप्युणादावुक्तः । तस्माद् 'गमेः सुप्युपसङ्ख्यानम्' (वा० ३. २. ३७) इति खच् । नभसङ्गमः ॥

**तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥**
**तित्तिरिः कुक्कुटो लावो जीवञ्जीवश्चकोरकः ।**
**कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥**

क्षीर०— पक्षिविशेषाः । हारिणं वर्णमितो हारीतः । मज्जति मद्गुः । जलकाकः । न्यङ्क्वादिः । करण्डे भवं कारण्डं पञ्जरवनं वाति कारण्डवः । प्लवते प्लवः । तित्तिशब्दं राति तित्तिरिः । कुक्शब्दं कोटति कुक्कुटः । लाति लूयते वा लावः । जीवेन सहचरेण जीवति जीवञ्जीवः । बाहुलकत्वात् खच् । चकते ज्योत्स्नया तृप्यति चकोरः । को यजते कोयष्टिकः । पक्षिविशेषः । टिट्टिशब्दं भाषते टिट्टिभकः । वर्तते इति वर्तकः । ‡'शकुने साधुः (?) प्राचाम्' (७. ३. ४५) इति । पक्षे वर्तिका । आदिशब्दात् कपिञ्जलादयः ॥

टीका०— हारीतत्रयोदशकं प्रत्येकं स्वनामप्रसिद्धेषु पक्षिषु । हारीतो हरिआल इति ख्यातः । मज्जतीति मद्गुः । पानीयका*(रि ? कि)का । 'टुमस्जो शुद्धौ' । तरुवद्गुः । कारण्डवः । प्लवः पिल इति ख्यातः । तित्तिरिरिति । 'तरतेः सन्वत् तुक् चाभ्यासस्य' इति किः । तित्तिराचित्रपक्षकपिञ्जला अप्यस्य नामानि । कुगिति कुभति शब्दायत इति कुक्कुभः । कुभिः सौत्रो[2] धातुः । लावः प्रसिद्धः । 'जीवन् जीवो जीवजीवः' इति शुभाङ्गकोषः । 'कठिचकिभ्यामोरन्' (उ० १. ६७) । चकोरः । कोयष्टिकः कोण्डेति ख्यातः । टिट्टीति शब्देन भातीति टिट्टिभः । 'आतोऽनुपसर्गे कः' (३. २. ३) ततः स्वार्थे कः । वर्तिकाद्वयं वाटहीति ख्यातायाम् । 'वृतेस्तिकन्' (उ० ३.

१. 'शिखरिग्निट्टि' क. ग. घ. ङ. पाठः. २. 'त्र' क. ख. च. ज. पाठः.

‡ 'वर्तका शकुनौ प्राचाम्' इति मुद्रितवार्त्तिकपाठः । * 'मद्गुः सलिलवायसे' 'मद्गुस्तु जलकाकः स्यात्' इति केशवयादवौ ।

१४७) इति तिकन् । वर्तिका । 'वर्तिका शकुनौ प्राचाम्' (वा० ७. ३. ४५) इति विभाषा इत्त्वनिषेधेन वर्तका । उभयोरुपादानं रूपभेदेन प्रदर्शनार्थमात्रम् । आदिना शारिकादयः ॥

**गरुत् पक्षश्छदः पत्रं पतत्रं च तनूरुहम् ।**

**क्षीर०— गिरति खं गरुत् । 'मृग्रोरुतिः' (उ० १. ९९) । 'पक्ष परिग्रहे' । छाद्यतेऽनेनाङ्गं छदः । 'छादेर्घे—' (६. ४. ९६) इति ह्रस्वः । पतत्यनेन पत्रम् । पतन्तं त्रायते पतत्रम् ॥**

टीका०— गरुदादिषट्कं पक्षे । मरुद्वद् गरुत् । छाद्यतेऽनेनेतिच्छदः । घः । 'छादेर्घेऽद्व्युपसर्गस्य' (६. ४. ९६) इति ह्रस्वः । 'गरुत्पक्षौ नरौ छदे' इति क्लीबकाण्डे वोपालितः । 'दाम्नीशस—' (३. २. १८२) इत्यादिना ष्ट्रन् । पत्रम् । 'अमिनक्षियजिवधिपतिभ्योऽत्रन्' (उ० ३. १०५) । पतत्रम् । तन्वा रोहते जायत इति तनूरुहम् ॥

**स्त्री पक्षतिः पक्षमूलं**

**क्षीर०— मूले 'पक्षात् तिः' (५. २. २५) ॥**

टीका०— पक्षतिद्वयं पक्षमूले । 'पक्षात् तिः' (५. २. २५) पक्षतिः ॥

**चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥**

**क्षीर०— चञ्चति चलति चञ्चुः । त्रोटयति त्रोटिः । तुण्डं च ॥**

टीका०— चञ्चुद्वयं खोट इति ख्यातायाम् । 'चञ्चु तञ्चु चञ्चु गत्यर्थाः' । राहुवदुण् । 'स्फुरति शुकचञ्चूपुटः' इत्यतो दीर्घोऽपि । 'त्रुटच्छेदने' । इन् । त्रोटिः । ङीपि त्रोटी ॥

**प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।**

**क्षीर०— प्रकृष्टमूर्ध्वं संहतं च डयनम् । 'स्वादय ओदितः' इति निष्ठानत्वम् । एता इति विडीनाद्युपलक्षणार्थम् ॥**

**टीका०**— प्रडीनत्रयं **पक्षिणामेकैकं गमनविशेषे** । प्रथममुड्डयनाय क्रमः प्रडीनम् । वियद्गमनमुड्डीनम् । वृक्षादिषु पतनं संडीनम् । प्रादिपूर्वाद् डीङो भावे क्तः । 'ओदितश्च' (८. २. ४५) इति नत्वम् । ओदितां मध्ये पाठसामर्थ्यादनिट् ॥

**पेशीकोषौ द्विहीनऽण्ड**

**क्षीर०— पेशीनां मांसखण्डानां कोषः । अमति निःसरत्यस्माद् अण्डम् । तिस्रः संज्ञा इति गौडः ॥**

**टीका०**— पेशीत्रयं **पक्षिडिम्बेति** ख्याते । 'पिश अवयवे' । घञ् । गौरादिङीष् । एवं तालव्यवती । 'कुष निष्कर्षे' । कर्मणि घञ् । एवं मूर्धन्यपः । कोषः ।

"भावानुरक्तवनितासुरभौ शपेय-
माळभ्य चाम्बु तृषितः करकोशपेयम् ॥"

इति तु तालव्यानुप्रासे घटकर्परः । 'अण रण गतौ' । 'ञमन्ताड्डः' (उ० १. ११९) अण्डम् ॥

**कुलायो नीडमस्त्रियाम् ॥ ३७ ॥**

**क्षीर०— कौ लीयते, कुलमेति वा कुलायः । नीयतेऽस्मिन् नीडम् ॥**

**टीका०— पक्षिवासे** कुलायद्वयम् । कुलान्यायन्तेऽत्रेति कुलायः । 'ईड स्तुतौ' । निपूर्वाद् घञ् । नीडः ॥

१. 'डिहान' ज. पाठः. २. 'लंभयति कु', ३. 'निडाय' क. ग. घ. ङ. पाठः

**पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।**

**क्षीर०**— पुनाति पोतः[1] । पात्येनं स्तनौ[2] पिबति वा पाकः । ऋभ्यतेऽर्भकः । डयते[3] डिम्भः[4] । प्रथते वर्धते, पृथु कायति वा पृथुकः । (श्ये ? श्य)ति शवति वा शावः । शेतेऽत्यर्थं शिशुः ॥

**टीका०**— पोतसप्तकं सामान्यशिशौ । पोत उक्तः । पिबतीति पाकः । भेकवत् कन् । 'ऋ गतौ' । 'अर्तिगृभ्यां भन्' (उ० ३. १५२) । ततः कन् । अर्भकः । शाव एव शावकः । 'शव गतौ' । घञ् ।

''नवनमेरुफलावलिराबभौ शुकपिशा कपिशावमुखादपि''

इति कप्फिणाभ्युदयः । 'शो तनूकरणे' । 'शः कित् सन्वच्च' (उ० १. २०) इति उः । द्वितालव्यः शिशुः ॥

**स्त्रीपुंसौ मिथुनं द्वन्द्वं**

**क्षीर०**— स्त्री च पुमांश्च तौ स्त्रीपुंसौ । 'अचतुरविचतुर—' (५. ४. ७७) इति साधुः । मेथते सङ्गच्छते मिथुनम् । द्वौ द्वौ इति द्वन्द्वम् । 'द्वन्द्वं रहस्य—' (८. १. १५) इति साधुः । यत् कालिदासः—'द्वन्द्वानि भावं क्रियया विवव्रुः' (कुमा० स० ३. श्लो० ३५) ॥

**टीका०**— स्त्रीपुंसयोर्युग्मे मिथुनम् । मिथिः सौत्रो धातुर्हिंसार्थः । 'क्षुधिपिशिमिथिभ्यः[5]† उनन्' (उ०३. ५५) ॥

**युग्मं तु युगलं युगम् ॥ ३८ ॥**

**क्षीर०**— युज्यते धर्मिवृत्त्या युग्मम् । धर्मवृत्तौ तु युगम्[6] । 'तल्लाति युगलम् । मत्वर्थीयो वा लच् ॥

१. 'तः । पचत्यस्मिन नमति तन्मात्रं वा स्त' क. पाठः. २. 'ने पिबति स स्त' ख. पाठः. ३. 'ति' ख. पाठः. ४. 'म्भः अन्त्योऽन्त्वात् । प्र' क. ग. घ. ङ. पाठः. ५. 'भ्यः क्युन्' ङ. छ. पाठः. ६. 'गः । ध' ख. पाठः.

† 'भ्यः कित्' इति मुद्रितोणादिपाठः ।

टीका०— द्वन्द्वचतुष्कं सामान्येन युग्ममात्रे । द्वौ द्वौ[1] इति द्वन्द्वम् । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' (८. १. १५) इत्यनेन द्वन्द्वमन्तःस्थोपधं निपात्यते । 'द्वन्द्वं द्वन्दं युगलं युग्मं युगं मिथुनं मिथः' इति व्याडिः । तथा च पृषोदरादित्वाद् वकारविकल्पः । तिग्मवद् युग्मम् । युगलमिति । पृषोदरादित्वात् कलच् । युजेः इगुपधलक्षणः कः । युगम् ॥

**समूहनिवहव्यूहसन्दोहविसरव्रजाः ।**
**स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः ॥ ३९ ॥**
**समुदायः समुदयः समवायश्चयो गणः ।**
**स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥**

क्षीर०— समूह्यते ढौकते समूहः । निवहति निवहः । व्यूह्यते व्यूहः । सन्दुह्यते सम्पूर्यते सन्दोहः । विस्रियते विसरः । व्रज्यते व्रजः । 'गोचरसञ्चर—' (३. ३. ११९) इति साधुः । स्तूयते स्तोमः । उह्यते ओघः । न्यङ्क्वादिः । निकीर्यते निकरः । व्रियते व्रातः । वारः । सञ्चीयते सञ्चयः । समुदयनं समुदायः । अयतेर्घञ् । समुदय इति । इणोऽच् । सम(वय?वाय्य)ते समवायः । चीयते चयः । गण्यते गणः । वृणोति वृन्दम् । निकुरति निकुरम्बम् । कदम्बप्रतिकृतिकेसरसञ्चयात्मकत्वात् कदम्बकम् । कुत्सितमम्बते वा ॥

टीका०— समूहादयो द्वाविंशतिः समूहे[2] । समूहव्यूहयोः कर्मणि घञ् । निवहसन्दोहविसराः पचाद्यजन्ताः । गोचरसञ्चरादिना व्रजो निपातितः । स्तोम इति । 'ष्टुञ् स्तुतौ' । स्तोमवन्मन् । 'उच समवाये' । घँञ् । 'चजोः कु घिण्यतोः' (७. ३. ५२) इति कुत्वम् । 'यथासङ्ख्यमत्र नेष्यते' इति वचनाद् घकारः । ओघः । किरतेः[3] निकरः । 'ऋदोरप्' (३. ३. ५७) । निपूर्वः । 'व्रातेन जीवति' (५. २. २१) इत्यत्र व्रातः साधुः । दुहेर्वृणातेरयतेश्च गत्यर्थाद् घञि[4] सन्दोहवारसमुदायाः । सङ्घात इति । 'हन्त्यर्थाश्च'

१. 'द्वौ द्व' ङ. छ. पाठः. २ 'ह', ३. 'तः' क. ग. घ. ङ. पाठः. ४. 'घः ।' क. ख. च. ज. पाठः.

इत्यस्माद् हनश्चौरादिकात् पचाद्यच्। 'हनस्तोऽचिण्णलोः' (७. ३. ३२) इति तत्वम्। 'हो हन्तेः—' (७. ३. ५४) इति घत्वम्। हन्तेः क्तिन्। संहतिः। तुशब्दः स्त्रीलिङ्गं निवर्तयति, न नाम। वृन्दम् इति। 'अब्दादयश्च' (उ० ४. ९८) इत्यनेन दन् नुमागमगुणाभावौ च निपात्येते। 'कदिकडिभ्योऽम्बच्' कदम्बः। ततः कन्॥

**वृन्दभेदाः**

क्षीर०—समूहविशेषाः। वक्ष्यन्त इति शेषः॥

टीका०—इदानीं वर्गादयो वृन्दभेदाः॥

**समैर्वर्गः**

क्षीर०—सजातीयैः प्राणिभिरप्राणिभिश्च समूहो वर्गः। वृज्यते विजातीयेभ्य इति वर्गः॥

टीका०—तत्र समानैः प्राणिभिरप्राणिभिर्वा वृन्दं वर्गः। यथा कवर्गः[1]। 'वृजी वर्जने'। घः॥

**सङ्घसार्थौ तु जन्तुभिः।**

क्षीर०—प्राणिभिः समूहः। संहन्यते सङ्घः। 'सङ्घोद्घौ गणप्रशंसयोः' (३. ३. ८६) इति साधुः। यथा गोसङ्घः। मेघसङ्घाद्युपचारात्। सरति सार्थोऽध्वगवृन्दम्॥

टीका०—सङ्घद्वयं प्राणिसमूहे। यथा भिक्षुसङ्घः। वणिक्सार्थः। अन्यत्रोपचारात्। 'सङ्घोद्घौ गणप्रशंसयोः' (३. ३. ८६) इत्यप्, टिलोपघत्वे च। सङ्घः। 'सर्तेर्णित्[2]' (उ० २. ५) इति थक्। सार्थः॥

**सजातीयैः कुलं**

१. 'र्गीयः। त्र', २. 'दथन्। सा' ङ. छ. पाठः.

क्षीर० — जन्तुभिरित्येव । कुलं बन्धुषु विप्रकुलम् ॥

टीका० — सजातीयैरेव जन्तुभिर्बृन्दं कुलम् । यथा ब्राह्मणकुलम् । 'कुल संस्त्याने' । इगुपधलक्षणः कः । अन्यत्रोपचारात् ॥

**यूथं तिरश्चां पुन्नपुंसकम् ॥ ४१ ॥**

क्षीर० — वृन्दमित्येव । यथा मृगयूथः । 'यु मिश्रणे' ॥

टीका० — तिरश्चामेव बृन्दं यूथम् । यथा हस्तियूथम् । 'यु मिश्रणे' । 'तिथपृष्ठगूथयूथप्रोथाः' (उ० २. १२) इत्यनेन थक् दीर्घत्वं च निपात्यते । 'रथयूथेन महता' इत्यादिप्रयोगो गौणः ॥

**पशूनां समजः**

क्षीर० — संवीयते समजः । 'समुदोरजः पशुषु' (३. ३. ६९) इत्यप् ॥

टीका० — गवादिपशूनां वृन्दे समजः । 'समुदोरजः पशुषु' (३. ३. ६९) इत्यजेरप् । 'अजिव्रज्योश्च' (७. ३. ६०) इति कुत्वनिषेधः । अघञपोरिति प्रतिनिषेधान्न वीभावः ॥

**अन्येषां समाजः**

क्षीर० — पशुभ्योऽन्येषां वृन्दम् । यथा श्रोत्रियसमाजः ॥

टीका० — पशुभ्योऽन्येषां वृन्दं समाजः । यथा नृपसमाजः । घञ् । अन्यत्रोपचारात् ॥

**अथ सधर्मणाम् ।**

**स्यान्निकायः**

क्षीर० — समूह इत्येव । यथा श्रमणनिकायः । निचीयते निकायः । 'निवासो*पचिति—' (३. ३. ४१) इति घञ् । कत्वं च ॥

१. 'मूलव' क. ग. घ. पाठः.

* 'साचिति' इति मुद्रिताष्टाध्यायीपाठः ।

टीका० — समानधर्मणामेव प्राणिनां वृन्दं निकायः। यथा भिक्षुनिकायः। 'सङ्घे चानौत्तराधर्ये' (३. ३. ४२) इति चिनोतेर्घञ्। आदेश्च कादेशः॥

पुञ्जराशी तूत्करः कूटमस्त्रियाम्॥ ४२॥

क्षीर० — धान्यादेरुच्छ्रितं वृन्दम्। पुञ्ज्यते पुञ्जः। राश्यते राशिः। राशिः सौत्रो दीप्त्यर्थः। उत्कीर्यते उत्करः। कूट्यते कूटः॥

टीका० — पुञ्जचतुष्कं धान्यादिकूटे। पुंसो जातः पुञ्जः। राशिरिति। 'अशिपणा*य्यो रुडायलुकौ च' (उ० ४. १३४) इति इण् रुडागमश्च। राशिर्द्वयोरिति त्रिकाण्डे पठ्यते। किरतेः 'ऋदोरप्' (३. ३. ५७)। उत्करः। कूट उक्तः॥

कापोतशौकमायूरतैत्तिरादीनि तद्गणे।

क्षीर० — कपोतादीनां समूह एतानि वर्तन्ते। 'अनुदात्तादेरञ्' (४. २. ४४)। आदिशब्दात् काकादिः॥

टीका० — कपोतशुकतित्तिरीणां गणे यथायोगं कापोतादयः स्युः। 'अनुदात्तादेरञ्' (४. २. ४४)। कापोतम्। अन्यत्र 'तस्य समूहः' (४. २. ३७) इत्यण्॥

गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते॥ ४३॥

क्षीर० — छो(दय? द्य)न्ते छेकाः। पञ्जरादौ स्थाप्यन्ते। गृह्यन्ते गृह्यकाः। 'पदास्वैरि - -' (३. १. ११९) इति क्यप्। स्वार्थे कन्॥

इति सिंहादिवर्गः॥

१. 'र्मी' ङ. छ. पाठः. २. 'छाय' क. ग. घ. ङ. पाठः. ३. 'प्॥' ख., 'प्। सिं' क. ङ. पाठः.

* 'अशिपणाय्यो रुडायलुकौ च' इति मुद्रितोणादिपाठः।

टीका० — क्रीडार्थं योषितां मृगपक्षिणो गृहासक्ता गृहसंलग्नाः। तत्र छेकद्वयम्। 'स्थेका' इति पाठे तिष्ठतेः 'क्रिय इकन्' (उ० २. ४६) इति बाहुलक इकन्। गृह्यका इति। 'पदास्वैरिबाह्यापक्ष्येषु च' (३. १. ११९) इति क्यप्। अनुकम्पायां कन्॥

इति वन्द्यघटीयसर्वानन्दकृतौ टीकासर्वस्वे

सिंहादिवर्गः॥

## अथ मनुष्यवर्गः।

**मनुष्या मानुषा मर्त्या मनुजा मानवा नराः।**
**स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः॥ १॥**

क्षीर० — मनोरपत्यं मानुषो मनुष्यश्च। 'मनोर्जातावञ्यतौ षुक् च' (४. १. १६१)। म्रियते मर्त्यः। स्वार्थे यत्। मानव इतीदमर्थेऽण्। अपत्यार्थेऽञ्यद्भ्यां बाधितत्वात्। नृणाति नरः। 'नृ नये'। पाति पुमान्। पञ्चभिर्भूतैर्जायते पञ्चजनः। पुरि शयनात्, पूरणाद्वा पुरुषः। 'अन्येषामपि—' (६. ३. १३७) इति वा दीर्घः। नयति ना। 'नयतेर्डिच्च' (उ० २. १००) इत्यृन्॥

टीका० — मनुष्यैकादशकं मानुषे। मनोरपत्यानि मनुष्याः। मानुषाश्च 'मनोर्जातावञ्यतौ षुक् च' (४. १. १६१)। मर्तो भूलोकः, तत्र भूता मर्त्याः दिगादित्वाद् यत्। दितिजा इव मनुजाः। मनोरिमे मानवाः। 'तस्येदम्' (४. ३. १२०) इत्यण्। 'नृ नयने'। पचाद्यच्। नराः। पुमांस इति। पुनातेः 'पूञः सुन्[१]मुग्घ्रस्वश्च'। पञ्चाभिः पृथिव्यादिभिर्महाभूतैर्जायन्त इति पञ्चजनाः। 'जन-

१. 'ंदय' क. ख. ज. अ., 'दिस्यो य' न. पाठः. २. 'सः पु' ट. छ. पाठः. 'ण्म' क. ख. पाठः.

जनने'। पचाद्यच्। 'पॄ पालनपूरणयोः'। 'पुरः कुषन्' (उ० ४.७५)। पुरुषाः। बाहुलकाद् 'हलि च' (८.२.७७) इति दीर्घाभावः। 'र्वोरुपधाया दीर्घ इकः' (८.२.७६) इति वर्तमाने 'हलि च' इति दीर्घत्वे पूरुषाः। 'नयतेर्डिच्च' (उ० २.१००) इति ऋन्। डित्त्वाट्टिलोपः। ना नरौ नरः॥

**स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः।**
**प्रतीपदर्शिनी वामा वनिता महिला तथा॥ २॥**

क्षीर० — स्त्यायत्यस्यां गर्भः स्त्री। योषति पुमांसं योषित्। 'हसृरुहियुषिभ्य इ(ती? तिः)' (उ० १.१०२) (नञ् तन्यञ्जीति?) योषा। नारीति। 'नृनरयोर्वृद्धिश्च' (ग० ४.१.७३) इति वृद्धिः। शार्ङ्गरवादिपाठाद् ङीन्। केशपक्षयोः सीमाप्रदेशः सीमन्तः। तद्वत्त्वात् सीमन्तिनी। उह्यतेऽसौ, बध्यतेऽनया भर्ता वा वधूः। प्रतीपं वक्रं पश्यत्यपाङ्गनिरीक्षणात् प्रतीपदर्शिनी। वामाद् विपरीतलक्षणया, शृङ्गारवेदनत्वाद् वा पुंसां वामो भागोऽस्या इति वा। वन्यते दीयते प्रार्थ्यते वा वनिता। मह्यते महिला। महती ईडा स्तुतिरस्या महेला महिला च। मही भूः, तत्स्वभावं बीजधारणवर्धनकरत्वं लाति वा महिला। तथाशब्दान्महेलापि। यल्लक्ष्यम् —

"अजयद् द्विषतः पूज्यनयः परमहेलया।
स्वप्नेऽपि मनसि स्पृष्टो न यः परमहेलया॥"

टीका० — स्त्र्येकादशकं स्त्रियाम्। 'स्त्यै ष्ट्यै सङ्घातशब्दयोः'। सस्थाने 'स्त्यायतेर्ड्रट्' (उ० ४.१६६)। टिलोपः। ङीप्। स्त्री। युषेः सौत्राद् 'हसृरुहियुषिभ्य इतिः' (उ० १.१०२) इतीतिः। योषित्। अन्तःस्थादिः।

१. 'न्युतन्यञ्जीति' ख. ग. घ. ङ. पाठः. २. 'न। सीमन्तः केशरचनास्त्यस्याः सीमन्ति' ख. पाठः. ३ 'वर्ध्यते' ग. ङ. पाठः. ४ 'प इवं शीलमस्याः प्र', ५. 'नी। वक्रं पश्यत्यपाङ्गनिरीक्षणात्। पुंसां वामो भागोऽस्या इति वामा। विपरीतलक्षणया शृङ्गारखेदनाद् वा। वनते' क. ग. घ. ङ. पाठः. ६. 'त प्रार्थ्यते व' ख. पाठः. ७. 'युसदः पू', ८. 'स्तया प', ९. 'नरः प' ग. घ. ङ. पाठः. १० 'दिति इति यो' ङ. छ., 'दिति यो' च. पाठः.

टापि योषितेति केचित् । 'स्त्री वधूर्योषिता रामा' इति त्रिकाण्डशेषश्च । अल्पबलत्वादबला । अल्पार्थे नञ् । 'जुष परितर्कणे' । घञ् । जोषा चवर्गादिः । यौतेर्बाहुलकात् सप्रत्ययेनान्तःस्थादिरपि । उभयमेवेति वर्णदेशना । नृशब्दान्नरशब्दाच्च 'नृनरयोर्वृद्धिश्च' (ग०४. १. ७३) । ङीन्वृद्धी । नारी । सीमन्तः केशरचना, तद्योगात् सीमन्तिनी । '*वहेर्धश्च' (उ०१. ८६) इत्यूः, धश्चान्तादेशः । वधूः । प्रतीपमसम्मुखं द्रष्टुं शीलमस्या इति प्रतीपदर्शिनी । ताच्छील्ये णिनिः । वमतेः, 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०) । वामा । 'वन ध्वन शब्दे' । कर्तरि क्तः । वनिता । 'मह पूजायाम्' । सलिलवदिलच् । महिला ॥

**विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।**
**प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥**

क्षीर० — प्रकृष्टान्यङ्गान्यस्या[1] अङ्गना । 'अङ्गात् कल्याणे' (ग०५. २. १००) इति[2] पामादित्वात् नः । बिभेति तच्छीला भीरुः । 'भियः क्रुक्लुकनौ' (३. २. १७४) । कामयते कामिनी । वामे पुंबाधके लोचने अस्या वामलोचना । प्रकृष्टो मदः कामवेगोऽस्त्यस्याः[3] प्रमदा । मानः प्रणयकोपोऽस्त्यस्या मानिनी । काम्यते कान्ता । ललति, लाल्यते[4] वा ललना । 'लल विलासे' । 'लल ईप्सायाम्' । नितम्बिनी गुरुनितम्बा ॥

**सुन्दरी रमणी रामा**

क्षीर० — विशेषा इत्येव । सुष्ठु द्रियते सुन्दरी । रमन्तेऽस्यां रमणी । रमते रामा । ज्वलादित्वाण्णः ॥

टीका० — अङ्गनाद्वादशकं प्रत्येकं स्त्रीविशेषे । प्रशस्ताङ्गयोगादङ्गना । 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' (५. २. १००) इति वर्तमाने, 'अङ्गात्

१. 'न्यस्याः' ख. पाठः. २. 'ति लोमादीति नः' ग. घ. ङ. पाठः. ३. 'गोऽस्याः' ग. घ. ङ. पाठः. ४. 'ल' ख. पाठः.

'वहो धश्च' इति मुद्रितोणादिपाठः ।

कल्याणे' (ग०९. २. १००) इति पामादिगणसूत्रेण नप्रत्ययः । भयशीला भीरुः । बिभेतेः 'भियः क्रुक्लुकनौ' (३. २. १७४) इति ताच्छीलिकः क्रुः । तत 'ऊङुतः' (४. १. ६६) इत्यूङ् । एवं दीर्घान्तः । तथाच— 'त्वं रक्षसा भीरु! यतोऽपनीता' इति प्रयोगः । ह्रस्वान्तोऽपि भट इति श्रीकण्ठादयः । बहुकामा कामिनी । 'संज्ञायां मन्माभ्याम्' (५. २. १३७) इति इनिः । चारुनेत्रा वामलोचना । प्रकृष्टो रूपादिमदो यस्याः सा प्रमदा । भावः शृङ्गारचेष्टा, तद्युक्ता भाविनी । प्रशंसायामिनिः । कमनीयमूर्तिः कान्ता । 'कमु कान्तौ' । 'मतिबुद्धिपूजार्थेभ्यश्च' (३. २. १८८) इति वर्तमाने क्तः । सुकुमाराङ्गी ललना । 'लल ईप्सायाम्' । ण्यन्ताद् युच् । पृथुनितम्बा नितम्बिनी । रूपलावण्ययुक्ता सुन्दरी । गौरादिः । या वपुर्गुणोपचारेण कान्तं रमयति, सा रमणी । 'रमु क्रीडायाम्' । नन्द्यादिल्युः । या गीतकलाभी रमते, सा रामा । 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०) ॥

**कोपना सैव भामिनी ।**

**क्षीर०— 'भाम क्रोधे' ॥**

**टीका०**— कोपनाद्वयं क्रोधवत्याम् । 'कुप क्रोधे' । 'क्रुधमण्डार्थेभ्यश्च' (३. २. १५१) इति ताच्छीलिको युच् । 'भाम क्रोधे' । आवश्यके णिनिः ॥

**वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥**

**क्षीर०**— उत्तमस्त्रीपर्यायाः[1] । व्रियते वरः, आरुह्यतेऽस्मिन् आरोहो नितम्बः[2] । वर आरोहोऽस्या वरारोहा । मत्ता क्षीबेव काशते भाति मत्तकाशिनी । 'कर्तर्युपमाने[3] च' (३. २. ७९) इति णिनिः । वरो वर्णोऽस्त्यस्या वरवर्णिनी ॥

**टीका०**— वरारोहाचतुष्कमुत्तमायाम् । वर आरोहः कटिर्यस्याः सा वरारोहा । श्रोणीगौरवान्मत्तगजवन्मन्थरगामिनी मत्तकासिनी । 'कस गतौ' ।

१. 'पि' च. पाठः. २. 'याः आ'. ३. 'म्बः । स वरोऽस्या' ख. पाठः. ४. 'ने णि' ख. पाठः.

दन्त्यान्तः। 'कर्तर्युपमाने' (३. २. ७९) इति णिनिः। उत्तमेति। उच्छब्दादतिशायने तमप्। उत्कृष्टवर्णा वरवर्णिनी ॥

'शीते सुखोष्णसंहिता ग्रीष्मे या सुखशीतला।
भर्तृभक्ता च या नारी नीचा च वरवर्णिनी ॥'

इति रुद्रः ॥

**कृताभिषेका महिषी**

क्षीर०— नृपस्त्रीत्येव। श्रीमहादेवीत्वे कृताभिषेका। यथा वासदत्ता। मह्यते पूज्यते महिषी ॥

टीका०— कृताभिषेका बद्धपट्टा नृपस्त्री महिषी ॥

**भोगिन्योऽन्या नृपस्त्रियः।**

क्षीर०— पद्मावत्याद्याः। भोगोऽस्त्यस्यां भोगिनी। ता महिषीत इतराः ॥

टीका०— महिषीतोऽन्याः नृपस्त्रियो भोगिन्यः। भोगयोगादिनिः ॥

**पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥**
**भार्या जायाथ पुंभूम्नि दाराः**

क्षीर०— 'पत्युर्नो यज्ञसंयोगे' (४. १. ३३) इति पत्नी। पाणिगृहीतोऽस्याः। 'बहुव्रीहेश्चान्तोदात्तात्' (४. १. ५२) इत्यत्र *'पाणिगृहीतादीनां विशेषे' (वा० ४. १. ५२) इति ङीप्। द्वितीया धर्मसहाया। सह

१. 'सर्वाङ्गी' क. ख. ग. ज. झ. पाठः. २. 'वा' ख. पाठः. ३. 'त्वेन कृ' क. ग. घ. ङ. पाठः. ४. 'नी। प' ख. पाठः.

* 'पाणिगृहीती भार्यायाम्' इति मुद्रितवार्तिकपाठः। पाणिगृहीत्यादीनामर्थविशेषे इति तु काशिका।

धर्मोऽस्त्यस्याः सहधर्मिणी । यज्ञादौ सहाधिकारात् । भरणाद् भार्या । "संज्ञायां भृतृवृजीत्यादेः" 'ऋहलोर्ण्यत्' (३. १. १२४) । जायतेऽस्यां पतिः जाया । यन्मनुः—

"जायायास्तद्धि जायात्वं यदस्यां जायते पुनः" ।

दारयन्ति दाराः । 'दारजारौ कर्तरि णिलुक्' (वा०३. ३. २०) । अथशब्दात् पुम्भूम्नोर्न पूर्वभाक्त्वम् । सहचरी च ॥

टीका० — पत्नीसप्तकमग्निसाक्षिकं कृतपाणिग्रहणायाम् । 'पत्युर्नो यज्ञसंयोगे' (४. १. ३३) इति पतिशब्दस्य नकारः । नकारान्तत्वाद् ङीप् । पत्नी । शूद्रपत्नीत्युपचारात् । 'गृह्णामि ते सौभगत्वाय —' (अथर्व० का० १४. अ०१. सू० ५०) इत्यादिमन्त्रे(ण) विवाहे पाणिर्गृहीतोऽस्या इति पाणिगृहीती । 'पाणिगृहीत्यादीनां विशेषे ङीप् वक्तव्य' (वा०४. १. ५२) इति ङीप् । द्वयोः पूरणीति द्वितीया । 'द्वेस्तीयः' (५. २. ५४) । टाप् । सहधर्मयोगात् सहधर्मिणी । 'समानस्य' (६. ३. ८४) इति योगविभागात् सभावे सधर्मिणी च । 'धर्मशीलवर्णान्ताच्च' (५. २. १३२) इतीनिः । भार्येति । 'ऋहलोर्ण्यत्' (३. १. १२४) । पतिरस्यां पुनर्जायत इति जाया । 'जनेर्यक्' (उ०४. ११२) इति यक् । 'ये विभाषा' (६. ४. ४३) इत्यात्वम् । 'दॄ विदारणे' । 'दारजारौ कर्तरि णिलुक् च' (वा०३. ३. २०) इति घञ् । टाबन्तोऽपीति हट्टचन्द्रः । तथा च शुभाङ्गः—

"क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् ।
क्रोडे हारेषु दारेषु शब्दाः प्रोक्ता मनीषिभिः" ॥

स्यात्तु कुटुम्बिनी ।

पुरन्ध्री

क्षीर० — कुटुम्बं पुत्रभृत्याद्यस्त्यस्याः कुटुम्बिनी । पुरं धत्ते पुरन्ध्री ॥

१. 'ति स' ङ. छ. पाठः. २. 'त्र' क. ख. ङ. छ. ज. झ पाठः. ३., ४., ५. 'टु' ग. घ. ङ. पाठः.

† संज्ञायां भृञः इति स्वामीति तु भानुजिद्दीक्षितः ।

टीका० — कुटुम्बिनीद्वयं पुत्रादिमत्याम् । पुरं गृहं धरतीति । 'इक् कृष्यादिभ्यः' (वा०३. १. ३०८) इतीक् । पृषोदरादित्वान्नुमि पुरन्ध्रिः । पक्षे ङीष् । पुरन्ध्री ॥

**सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥**

**क्षीर० — पतिसेवैव व्रतं यस्याः सा पतिव्रता । यत् स्मृतिः — 'नास्ति स्त्रीणां पृथग् यज्ञो न व्रतम्' इति । सैव सुचरित्रत्वात् सती साध्वी च ॥**

टीका० — सुचरित्राचतुष्कमखण्डितचारित्रायाम् । सतीति । 'अस भुवि' । शतृ । 'उगितश्च' (४. १. ६) इति ङीप् । साध्वीति 'वोतो गुणवचनाद्' (४. १. ४४) इति ङीप् । ङीषभावे साधुः । पतिः व्रतमिव कमनीयोऽस्या इति पतिव्रता ॥

**कृतसापत्निकाध्यूढाधिविन्ना**

**क्षीर० — कृतं सापत्नकं सपत्नीभावोऽस्याः । अधि उपर्युह्यते द्वितीयास्या अध्यूढा । अधिविन्दत्यस्यामधिविन्ना ॥**

टीका० — कृतसापत्निकात्रयं प्रथमपरिणीतायाम् । कृतमुत्पादितं सापत्न्यं नाम आत्मनो यस्याः सा कृतसापत्निका । षिद्गौरादिङीष् । केऽणो ह्रस्वादि । 'हलस्तद्धितस्य' (६. ४. १५०) इति यलोपः । अधिशब्दः प्रागर्थः । प्रागूढा अध्यूढा । 'विदि्[1]र्लाभे' । निष्ठानत्वादधिविन्ना । 'अधिपूर्वो विन्दतिः प्रागूढत्वापवादने वर्तते' इति केचित् । तन्मते कनिष्ठानामधिविदेः कर्तृत्वम् । तथा च रघुः —

"अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः" ।

(स० १८. श्लो० ५३)

१. 'द्लृ लाभे' ञ. पाठः.

अथ स्वयंवरा ।

**पतिंवरा च वर्या(च?)**

क्षीर० — स्वयं वृणीते स्वयंवरा । 'संज्ञायां भृतृवृजी'—(३. २. ४६) ति खच् । पतिं वृणीते पतिंवरा । खच् । व्रियतेऽनया वर्या । 'अवद्यपण्य—' (३. १. १०१) इति साधुः । वरमर्हति वा ॥

टीका० — स्वयंवरात्रयं स्वेच्छया पत्यन्वेषिण्याम् । स्वयं वृणीते पतिमिति स्वयंवरा । पचाद्यच् । विश्वम्भरावत् खच् । पतिंवरा । पतिवरणेऽनिरुद्धा वर्या । 'अवद्यपण्य—' (३. १. १०१) इत्यादिना यत् ।

**अथ कुलस्त्री कुलपालिका ॥ ७ ॥**

क्षीर० — कुलस्य सम्पादयित्री स्त्री ॥

टीका० — कुलस्त्रीद्वयमव्यभिचारेण कुलरक्षिकायाम् । कुलं पालयतीति कुलपालिका । कर्मण्यणन्तात् स्वार्थे कः ॥

**कन्या कुमारी**

क्षीर० — कनति कन्या । 'कन दीप्तौ' । अघ्न्यादिः । 'कन्यायाः कनीन च' (४. १. ११६) इति लिङ्गाद् ङीप् नास्ति । कुमारयति क्रीडति कुमारी । कुत्सितो मारोऽस्या वा । अनूढत्वात् ॥

टीका० — प्रथमे वयसि वर्तमानायां कन्याद्वयम् ।

"अष्टवर्षा भवेद् गौरी दशवर्षा तु कन्यका ।
सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते ॥"

इह त्वभेदोपचारादेकत्वम् । 'कन दीप्तिकान्तिगतिषु' । 'अघ्न्यादयश्च' (उ० ४. १२३) इति यत् । 'कन्यायाः कनीन च' (४. १. ११६) इति निपातनान्न

---

१. 'ष्टवर्षा गर्भार्पणन्त्यामिरोमेषु इति च' क. ख. ग. ज. झ. पाठः.

'वयसि प्रथमे' (४. १. २०) इति ङीप्। कुमार उक्तः। 'वयसि प्रथमे' इति ङीपि कुमारी ॥

**गौरी तु नग्निकानागतार्तवा।**
**स्यान्मध्यमा दृष्टरजाः**

क्षीर० —

"अष्टवर्षा भवेद् गौरी दशमे नग्निका भवेद्"

इति स्मार्तो विशेषो नाश्रितः। गौरते(?)र्गौरी। न लज्जते नग्निका। 'ओ-लस्जी व्रीलने'। ऋतौ भवमार्तवम् रजः। ‡'अजाद्यतष्टाप्' (४. १. ४)। 'वयसि प्रथमे' (४. १. २०) ङीप् स्यात् ॥

टीका० — गौरीत्रयमष्टवर्षायाम्। 'ओलस्जी व्रीडे'। निष्ठा। 'श्वीदितो निष्ठायाम्' (७. २. १४) इतीडभावः। 'ओदितश्च' (८. २. ४५) इति नत्वम्। पृषोदरादित्वादादेर्नत्वम्। अल्पार्थे कः। टावादि। अन्तरनागतमार्तवमस्या इत्यनागतार्तवा। मध्यमाद्वयं प्रथमं दृष्टरजसि। भवार्थे 'मध्यान्मः' (४. ३. ८) मध्यमा। दृष्टरजाः सान्तः ॥

**तरुणी युवतिः समे ॥ ८ ॥**

क्षीर० — 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानाम्' (वा० ४. १. १५) इति ङीप। 'यूनस्तिः' (४. १. ७७) ॥

टीका० — तरुणीद्वयं त्रिंशद्वर्षाणि यावत् प्राप्तयौवनायाम्। तरति। 'कॄवृदारिभ्य उनन्' (उ० ३. ५३) इति वर्तमाने 'त्रो रश्च लो वा' (उ० ३. ५४) इत्युनन्। पक्षे तरुणी च। 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्' (वा० ४. १. १५) इति ङीप्। युवन्शब्दाद् 'यूनस्तिः' (४. १. ७७)। ङीपि युवती च। युवतिशब्दः स्त्रीमात्रेऽपि। तथाच वात्स्यायनः — 'धर्मार्थविद्यानां कालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत; प्राग् यौवनाद् युवतिः' ॥

१. 'रुणीद्व' च. पाठः.

‡ अत्र 'स्यान्मध्यमा' इति पाठ्यम्। ... 'ओलजी व्रीडायाम्' इति ... धातुपाठः।

**समाः स्नुषाजनीवध्वः**[1]

क्षीर० — स्नौति स्नुषा । जायतेऽस्यां जनी । वधूटी च । ग्रामटिकावत् ॥

टीका० — स्नुषात्रयं पुत्रादिभार्यायाम् । 'ष्णु प्रस्रवणे' । 'ष्णुव्रश्चिकृत्यृषिभ्यः कित्' (उ० ३. ६६) इति सः । स्नुषा । मूर्धन्यान्ता । जनी गौरादिः । भार्यापर्यायोऽपि जनीशब्दः । तथाच हर्षचरिते — 'परागपिञ्जमञ्जरीसंयुज्यमानमधुपजनीजनितमुद' इति ॥

**चिरण्टी तु सुवासिनी ।**

क्षीर० — चिरिणोति चिरण्टी । चरति चरण्टीत्येके । 'वयस्यचरमे' (वा० ४. १. २०) इति ङीप् । सुष्ठु वसति सुवासिनीति द्रमिडः ॥[2]

टीका० — चिरण्टीद्वयं परिणीतायामपरिणीतायां वा पितृगेहस्थायां दुहितरि । चिरण्टी । 'वयस्यचरम इति वक्तव्यम्' (वा० ४. १. २०) इति ङीप् । स्वा ज्ञातयः, तत्र वस्तुं शीलमस्या इति स्ववासिनी । ताच्छीलिको णिनिः । सुपूर्वात् सुवासिनीत्यपि सोमनन्दी ॥

**इच्छावती कामुका स्याद्**

क्षीर० — 'लषपतपद—' (३. २. १५४) इत्युकञ् ॥

टीका० — इच्छावतीद्वयं धनगीतनृत्तादीच्छायुक्तायाम् । कामयत इति कामुका[3] । 'कमु कान्तौ' । लषपतादिना उकञ् । 'अत उपधायाः' (७. २. ११६) इति वृद्धिः । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (७. ३. ३४) इति वृद्ध्यभावस्य 'अवमिकम्याचमीनामिति वक्तव्यम्' (वा० ७. ३. ३४) इति निषेधः ॥

**वृषस्यन्ती तु कामुकी ॥ ९ ॥**

क्षीर० — वृषमिच्छत्यात्मनः । क्यच् । 'अश्वक्षीरवृषलवणाना-

१. 'धूः । वधूटी', २. 'ला: ।' ग. घ. ङ. पाठः. ३. 'का । ल' ङ. छ. झ. पाठः.

मात्मप्रीतौ क्यचि' (७. १. ५१) इत्यत्र 'अश्ववृषयोर्मैथुनेच्छायाम्' (वा० ७. १. ५१) इत्यसु(न्? क्) । 'जानपदकुण्ड—' (४. १. ४२) इति मैथुनेच्छायां ङीषि कामुकी ॥

टीका० — वृषस्यन्तीद्वयं मैथुनेच्छायुक्तायाम् ।

"शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः"

इत्यमरः । बीजधातृवचनो वा वृषशब्दः । तथाच 'वृषो यो गर्भमाधत्त' इति न्यासः । 'बन्धौ वा बीजधातरि बीजघोटके वृष' इति शालिहोत्रेऽपि[1] ।

"वृषो न देयो गर्भिण्या अश्वाया नापि नर्दनम्"

इति कामशास्त्रेऽप्यसकृद्बीजनिषेकसमर्थो वृष उच्यते । अतश्च शुक्लं बीजधातारं वा पुरुषमिच्छन्ती वृषस्यन्ती । क्यच् । 'अश्ववृषयोर्मैथुनेच्छायाम्' (वा० १. ५१) इत्यसुक् । ततः शतृङीब्नुगागमाः । जानपदादिङीषि कामुकी ॥

**कान्तार्थिनी तु या याति सङ्केतं साभिसारिका ।**

क्षीर० — यद् भरतः—

"हित्वा लज्जाभये श्लिष्टा मदनेन मदेन या ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥"

ण्वुलन्तोऽयम् । वासकसज्जा विरहोत्कण्ठिता विप्रलब्धा कलहान्तरिता प्रोषितभर्तृका स्वाधीनपतिकेत्येता[2] नायिका अन्वर्थत्वान्न लक्षिताः ॥

टीका० — सङ्केते या प्रियार्थं व्रजति साभिसारिका । तथाच भारतीये—

"हित्वा लज्जां समाकृष्टा मदन[3] मदनेन वा ।
याभिसारयते कान्तं सा भवेदभिसारिका ॥"

सर्तेर्ण्वुल् ॥

१. 'त्रे' क. ख. च. ज. पाठः. २. 'त्यन्या नायिकाः समान्व' क. ग. घ. ङ. पाठः.
३. 'दनेन मदेन च ।' ङ. छ. पाठः.

**पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥**
**स्वैरिणी पांसुला च स्याद्**

क्षीर० —पुमांसं चलति पुंश्चली । धर्षति धर्षणी । बध्नाति बन्धकी । कुलान्यटति कुलटा । पचाद्यच् । शकन्ध्वादिः । कुत्सितं लटतीत्येके । एति तच्छीला इत्वरी चपला । 'इण्नशिजिसर्तिभ्यः करप्' (३. २. १६३)। स्वेन ईर्ते तच्छीला स्वैरिणी । स्वस्येरेरिणोर्वृद्धिः। पांसुर्मालिन्यहेतुरस्त्यस्याः पांसुला ॥ Pumschali? V D. I 535

टीका० —पुंश्चल्यष्टकमसत्याम् । परिणेतृपुंसश्चलतीति पुंश्चली । पचादिषु टिदयं पठ्यते । अतः 'टिड्ढाणञ् —' (४. १. १५) इत्यादिना ङीप् । 'पुमः खय्यम्परे' (८. ३. ६) इति सकारः । 'ञिधृषा प्रागल्भ्ये' । *'ग्रहेरणिः' (उ० ५. ६८) इति बाहुलकोऽणिः । ङीप् । धर्षणी । बन्धमनुबन्धं कारयतीति बन्धकी । 'आतोऽनुपसर्गे कः' (३. २. ३) । गौरादिः । सती उक्ता नञा असती । कुलान्यटतीति कुलटा । पचादिः । शकन्ध्वादिः । स्वेच्छाप्रसरणशीलत्वाद् इत्वरी । 'इण् गतौ' । 'इण्नशिजिसर्तिभ्यः करप्' (३. २. १६३) स्वेनेरितुं शीलमस्या इति स्वैरिणी । 'स्वादीरेरिणोर्वृद्धिर्वक्तव्या' (वा० ६. १. ८९) इति वृद्धिः । 'पंसि नाशे' । 'अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुग्§धुगदीर्घहकाराश्च' (उ० १. २७) इति कुप्रत्ययः । षण्णां धातूनां यथासङ्ख्यमृज्यादयः षड् भवन्ति । ततश्च पंसेर्दीर्घः । पांसुः, पापम् । दन्त्यसः । तथाच

"कणिकाभिरपां सुखरा वृन्दावनमारुताश्च ववुरपांसुखराः"

इति वृन्दावनयमकम् । ततः सिध्मादिलच् । पांसुला ।

"तालव्या अपि दन्त्याः स्युः शम्बशूकरपांशवः"

इति शभेदः ॥

१. 'री । इ' ग. घ. ङ. पाठः. २. 'तट्टित्त्वान्ङीप्' ङ. छ. पाठः. ३. 'आदि' ज. पाठः. ४. 'दिङ्ङी' च. पाठः. ५. 'णिः धर्षणिः री' क. ख. झ. पाठः. ६. 'श' क. ख. च. झ. पाठः.

* 'ग्रहेरनिः', § 'धुग' इति मुद्रितोणादिपाठः ।

**अशिश्वी शिशुना विना ।**

क्षीर० — 'सख्यशिश्वीति भाषायाम्' (४. १. ६२) इति साधुः ॥

टीका० — अनपत्यायामशिश्वी । 'सख्यशिश्वीति भाषायाम्' (४. १. ६२) इति ङीष् ॥

**अवीरा निष्पतिसुता**

क्षीर० — न विद्येते वीरौ पतिपुत्रौ यस्याः सा अवीरा ॥

टीका० — पतिपुत्ररहितायामवीरा । 'वीरा पतिपुत्रवती' इति नाममाला । नञा अवीरा । निष्पतिसुता नामेति केचित् ॥

**विश्वस्ताविधवे समे ॥ ११ ॥**

क्षीर० — विश्वसिति स्म विश्वस्ता । विगतो धवो भर्तास्या विधवा ॥

टीका० — विश्वस्ताद्वयं विधवायाम् । 'श्वस प्राणने' । 'निष्ठा' (३. २. १०२) इति कर्तरि क्तः । विगतभर्तृका विधवा ॥

**आलिः सखी वयस्या च**

क्षीर० — अलत्यालिः । यच्छाश्वतः —

"आलिः सखी सेतुरालिरालिरावलिरिष्यते" ।

समानं ख्याति सखी । वयसा तुल्या वयस्या । 'नौवयोधर्म—' (४. ४. ९१) इति यत् । सध्रीची च ॥

टीका० — आलित्रयं सख्याम् । 'अल भूषणादौ' । आङ्पूर्वाद् 'इन्' (उ० ४. ११९) इति इन् । 'निवार्यतामालि ! किमप्यसौ वटुः' (कु० स० ५ श्लो० ८३) इति कालिदासोऽपि । अशिश्वीवद् ङीषि सखी । वयसा तुल्य वयस्या । 'नौवयोधर्म—' (४. ४. ९१) इत्यादिना यत ॥

पतिवत्नी सभर्तृका।

० — 'अन्तर्वत्पतिवतोर्नुक्' (४. १. ३२)। ङीप् च॥

टीका० — पतिवत्नीद्वयं जीवद्भर्तृकायाम्। पतियोगान्मतुप्। 'अन्तर्वत्पतिवतोर्नुक्' (४. १. ३२) इति नुक्। नान्तत्वाद् ङीप्। पतिवत्नी। सभर्तृकेति। 'शेषाद् विभाषा' (५. ४. १५४) इति कप्। पतिभर्तृशब्दाभ्यामग्निसाक्षिकपाणिग्रहणकर्तोच्यते, न तु प्रभुमात्रम्॥

वृद्धा पलिक्नी

क्षीर० — असितपलितयोः 'छन्दसि क्नमेके', 'भाषायामपीष्यते' (वा० ४. १. ३९) इति ङीप्॥

टीका० — वृद्धाद्वयं वृद्धायाम्। पलिक्नीति। पलितशब्दाद् असितपलितयोः 'छन्दसि क्नमेके', 'भाषायामपीष्यते' (वा० ४. १. ३९) इति तकारस्य क्नादेशः, ङीप् च॥

प्राज्ञी तु प्रज्ञा

क्षीर० — प्रजानातीति प्रज्ञा। 'इगुपधज्ञा—' (३. १. १३५) इति कः। प्रज्ञादिभ्यः स्वार्थे वाण्॥

टीका० — प्राज्ञीद्वयं, या किमपि सम्प्रकर्षं जानाति, तत्र। प्रज्ञादित्वात् स्वार्थेऽण्। प्राज्ञी। प्रज्ञेति। 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५)॥

प्राज्ञा तु धीमती॥ १२॥

क्षीर० — प्रज्ञास्त्यस्याः प्राज्ञा। *'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५. २. १०१)॥

टीका० — प्रज्ञाद्वयमतिशयितबुद्धियुक्तायाम्। *'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५. २. १०१)। टाप्। प्राज्ञा॥

---

* 'प्रज्ञाश्रद्धार्चाभ्यो णः' इति मुद्रिताष्टाध्यायीपाठः।

**शूद्री शूद्रस्य भार्या स्यात्**

क्षीर० — 'पुंयोगादाख्यायाम्' (४. १. ४८) ङीष् ॥

टीका० — भिन्नजातिरपि या शूद्रभार्या, सा शूद्री । 'पुंयोगादाख्यायाम्' (४. १. ४८) इति ङीष् ॥

**शूद्रा तज्जातिरङ्गना ।**

क्षीर० — शूद्रजातीया स्त्री शूद्रा । 'शूद्रा चामहत्पूर्वा जातिः' (वा० ४. १. ४) इत्यजादित्वात् टाप् ॥

टीका० — या पुनः शूद्रस्य सुता द्विजातेरपि भार्या, सा शूद्रा । 'शूद्रा चामहत्पूर्वा जातिः' (वा० ४. १. ४) इति जातिविवक्षायां टाप् ॥

**आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥**

क्षीर० — आभीरजातीया, महाशूद्रस्य स्त्री च, जातिलक्षणे पुंयोगे च ङीष् । (शूद्रा तज्जाति[1]) वैश्यभेद एवाभीरो गवाद्युपजीवी । अन्यत्र महती चासौ शूद्रेति महाशूद्री ॥

टीका० — आभीरी गवाम्बूपजीविनी वैश्यजातिप्रभेदः । तत्र आभीरीद्वयम् । जातौ पुयोगे च समा समानरूपेत्यर्थः । पुंयोगविवक्षायां, 'पुंयोगादाख्यायाम्' (४. १. ४८) इति ङीप् । जातिविवक्षायां, 'जातेरस्त्रीविषयादयोपधात्' (४. १. ६३) इति ङीप् ॥

**आर्याणी स्वयमार्या स्यात्**

क्षीर० — स्वयं पुंयोगेन विना । †'आर्यक्षत्रियाभ्यां स्वार्थे वा

१. 'तिरङ्गना वै' ख. पाठः.　२. 'विपु । अ' क. ग. घ. ङ. पाठः.

† 'अर्य' इति मुद्रितवार्तिकपाठः।

(वा० ४. १. ४९) इति ङीषानुकौ। पक्षे टाप्। योपधत्वाज्जातिलक्षणो ङीप् नास्ति ॥

टीका० — या स्वयमार्या वैश्यजातिर्यस्यकस्यचिद् भार्या, तत्रार्याणी-द्वयम। †'आर्यक्षत्रियाभ्यां वा' (वा०४. १. ४९) इति ङीषानुकौ। आर्याणी। पक्षे टाप्। योपधत्वाद् 'जातेरस्त्री—' (४. १. ६३) इत्यादिना ङीष् न भवति। स्वयमिति जातिद्वारेण, न पुंयोगेन। अन्यथा शूद्रापि वैश्यभार्या आर्याणी स्यात् ॥

क्षत्रिया क्षत्रियाण्यपि।

क्षीर० — स्वयमित्येव ॥

टीका० — या स्वयं क्षत्रियजातिर्यस्यकस्यचिद् भार्या, तत्र क्षत्रि-याद्वयम्। पूर्ववद् ङीषादि ॥

उपाध्यायाप्युपाध्यायी

क्षीर० — उपेत्याधीयतेऽस्याः। अपादाने स्त्रियामुपसङ्ख्यानाद् घञ् वा च ङीप् ॥

टीका० — उपाध्यायाद्वयं स्वतो विद्योपदेशिन्याम्। 'इङश्च' (३. ३. २१) इत्यत्र 'अपादाने स्त्रियामुपसङ्ख्यानम्' इति घञ्। 'तदन्ताच्च वा ङीप्' (वा० ३. ३. २१) इति पक्षे ङीप् च ॥

स्यादाचार्यापि च स्वतः ॥ १४ ॥

क्षीर० — स्वयमत्र व्याख्याकृदाचार्या। (स्वत? स्वतो) जाता-वित्यर्थः। योपधत्वाद् जातेः ङीप् नास्ति ॥

टीका० — स्वतो या मन्त्रव्याख्याकृत्, सा आचार्या। 'चरेराङि चागुरौ' (वा०३. १. १००) इति ण्यत्। स्वत इति क्रियाद्वारेण, न पुंयोगेन ॥

१. 'म', २. 'अ' च. पाठः. ३. 'याद्विद्व' ङ. छ. पाठः. ४. 'स्वत इतरयं जा' ख. पाठः.

† 'अर्यक्षत्रियाभ्यां स्वार्थे वा' इति मुद्रितवार्त्तिकपाठः।

**आचार्यानी तु पुंयोगे**

क्षीर०— 'इन्द्रवरुण —' (४. १. ४९) इति ङीषानुकौ। अत्र 'आचार्यादणत्वं च इति वक्तव्यम्' ॥

टीका०— आचार्यस्य भार्या मूर्खाप्याचार्यानी। 'आचार्यादणत्वं चेति वक्तव्यम्' (वा० ४. १. ४९) इति ङीषानुकौ णत्वाभावश्च। एतत्तु पुंयोगेन, न क्रियाद्वारेण ॥

**स्यादार्यी क्षत्रियी तथा।**

**उपाध्यायान्युपाध्यायी**

क्षीर०— पुंयोग इत्येव। †'उपाध्यायमातुलाभ्यां वा' (वा० ४. १. ४९) इति पक्षे ङीषानुकौ ॥

टीका०— आर्यस्य वैश्यस्य भार्या शूद्रापि आर्यी। क्षत्रियस्य भार्या वैश्यापि क्षत्रियी। उपाध्यायानीद्वयं मूर्खायामप्युपाध्यायभार्यायाम्। 'मातुलोपाध्यायाभ्यां वा' (वा० ४. १. ४९) इति ङीषानुकौ। पक्षे 'पुंयोगादाख्यायाम्' (४. १. ४८) इति ङीप् ॥

**पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥**

क्षीर०— 'पुट संश्लेषणे'। उभयव्यञ्जना पोटा नपुंसकाख्या।

टीका०— पुंसः स्त्रियाश्च चिह्नं वहति स्त्री पोटा। 'पोटायुवतिस्तोक —' (२. १. ६५) इत्यत्र साधुः ॥

**वीरपत्नी वीरभार्या**

क्षीर०— 'नित्यं सपत्न्यादिषु' (४. १. ३५) इति नान्तत्वाद् 'ऋन्नेभ्यो ङीप्' (४. १. ५) इति ङीप् ॥

१, २. 'अ' च. पाठः.

† 'मातुलोपाध्याययोरानुग्' इति मुद्रितवार्तिकपाठः

टीका० — वीरपत्नीद्वयं वीरभार्यायाम्। वीरः पतिरस्या इति वीरपत्नी। नित्यं सपत्न्यादिषु' (४. १. ३५) इति नुक्। 'ऋन्नेभ्यो ङीप्' (४. १. ५)॥

वीरमाता तु वीरसूः।

क्षीर० — 'सत्सूद्विष—' (३. २. ६१) इति क्विप्। 'वीरप्रसूर्जगति भार्गव! रेणुकेव' (अङ्क० २. श्लो० २०) इति बालरामायणे। वीरस्य प्रसूर्मातेत्यर्थः॥

टीका० — वीरमातृद्वयं वीरजनन्याम्। वीरसूरिति। 'सत्सूद्विष—' (३. २. ६१) इत्यादिना क्विप्॥

जातापत्या प्रजाता च प्रसूता च प्रसूतिका॥ १६॥

क्षीर० — जनयितुं प्रवृत्ता प्रजाता। प्रसूतिका। 'सूतकापुत्रकावृन्दारकाणाम्—' (वा० ७. ३. ४५) इति पक्षे इत्वम्। आख्याग्रहणात् पुंयोगेऽपि ङीप् नास्ति॥

टीका० — जातापत्याचतुष्कं प्रसूतायाम्। प्रपूर्वो जनिर्गर्भविमोचने। 'गत्यर्थाकर्मक—' (३. ४. ७२) इत्यादिना कर्तरि क्तः। प्रजाता। प्रसूतैव कना प्रसूतिका। 'वा सूतकापुत्रकावृन्दारकाणामुपसङ्ख्यानम्' (वा० ७. ३. ४५) इति इत्वविकल्पः। तेन प्रसूतका च॥

स्त्री नग्निका कोट्टवी स्याद्

क्षीर० — 'विवस्त्रा याऽपिमुक्तकेशी' इत्यागमः। कोट्टेन लज्जावेशात् कुटिलत्वेन वेति याति कोट्टवी॥

टीका० — नग्नस्त्रीसामान्ये कोट्टवी। गौरादिः॥

दूती सञ्चारिका समे।

क्षीर० — दूयन्तेऽस्यां मौख्र्यधिया दूती। सञ्चारयति सन्देशं प्रापयति सञ्चारिका॥

टीका० — दूतीद्वयं दूत्याम्। 'दुतनिभ्यां दीर्घश्च' (उ० ३. ९०) इति क्तः। दूती। सञ्चारयति यथाभिलषितमिति सञ्चारिका। ण्वुल्॥

१ 'हात्वात्' ख. ग. घ. ङ. पाठः. २. 'नाग्निका' क. पाठः.

**कात्यायन्यर्धवृद्धा या काषायवसनाधवा ॥ १७ ॥**

क्षीर०— कात्यस्यापत्यमिव कात्यायनी । ऋषिपत्न्याकारत्वात् । त्रिलक्षणेयम् । कषायेण रक्तं वस्त्रं शुद्धत्वादस्याः काषायवसना अधवा । पुंस्काण्डः(१) ॥

टीका०— या अर्धजरती काषायवसना विधवा चेति विशेषणत्रयापता सा कात्यायनी ।

"कात्यायनी भवेद् गौर्यां भिक्षुकाधवयोषिति"

इत्यजयः ॥

**सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।**

क्षीर०— शिल्पं प्रसाधनादि । तेन या परवेश्मान्युपजीवति । स्ववशा स्वायत्ता । एकायत्ता भवतीत्यर्थः । सहच(रं १र)सैरणं धरते सैरन्ध्री ।

"चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी ।
प्रसाधनोपचारज्ञा सैरन्ध्री"

इति कात्यः ॥

टीका०— या परगृहस्था स्वतन्त्रा प्रसाधनतर्पणादिशिल्पिका चेति विशेषणोपेता, सा सैरन्ध्री ।

"सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशास्त्रियाम्"

इति दन्त्यादौ रभसः ॥

**असिक्नी स्यादवृद्धा या प्रैष्यान्तःपुरचारिणी ॥ १८ ॥**

क्षीर०— असितपलितयोः क्नः ङीप् वा । प्रस्यैषैष्ययोर्वृद्धिः । द्वं वाक्ये इत्येके । तन्न । यन्मुनिः—

"असिक्नी स्यादवृद्धा सा प्रेष्या यान्तःपुरोचिता" ॥

टीका०—या अवृद्धा, महादेवीभिश्च कार्यार्थं प्रेष्यते, अन्तःपुरे च स्थितेत्युपाधित्रयोपेता, सा असिक्नी । पलिक्नीवत् ॥

---

१, २. 'र्या' क ख. छ. पाठः. ३. 'प्रेणं' क. ग. घ. ङ. पाठः. ४. 'द', ५. 'भजा चं' ज. पाठः. ६. 'क्न च ङी' ख. पाठः.

**वारस्त्री गणिका वेश्या रूपाजीवी**

क्षीर० —वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री । गणः पेटको-ऽस्त्यस्याः, गणयतीश्वरानीश्वरौ वा गणिका । वेशे वेश्यावाटे भवा वेश्या । पण्यस्त्री पणस्त्री च ॥

टीका० —वारस्त्रीचतुष्कं वेश्यायाम् । वारो गणिकाध्यक्षः, तत्प्रति-बद्धा स्त्री वारस्त्री । 'गण सङ्ख्याने' । ण्वुल् । उपधोपधत्वान्न वृद्धिः । वेशो नैप-थ्यम् । तेन शोभत इति वेश्या तालव्यशा, मूर्धन्यषा च । 'कर्मवेषाद्यत्' (५. १. १००) इति यत् । रूपमेवाजीव्यमस्या इति रूपाजीवी ॥

**अथ सा जनैः ।**

**सत्कृता वारमुख्या स्यात्**

क्षीर० —वारे सेवाक्रमे मुख्या ॥

टीका० —वेश्यागणातिरेकान् सा जनैः सत्कृता वारमुख्या ।

"स्त्रीवारः स्त्रीगणो वेश्यावारो वेश्यागणः स्मृतः
वेश्या वारस्य मुख्या स्याद् वारमुख्येति शब्दिता ॥"

इति निगमाभिधानम् ॥

**कुट्टनी शम्भली समे ॥ १० ॥**

क्षीर० —कुट्टयति कुट्टनी । शं श्रेयो भालयति, शम्भं श्रेयोयुक्तं लाति वा शम्भली । चुन्दी देश्याम् ॥

टीका० —कुट्टनीद्वयं कुट्टन्याम् । कुट्टयति वाक्प्रपञ्चेनेति कुट्टनी । 'कुट्टच्छेदनकुत्सनयोः' । ल्युट् । 'भल भल्ल परिभाषणे' । सम्भलनात् सम्भली । पचादिः । शं कल्याणं भलत इति तालव्यादिरित्यजयः ॥

**विप्रश्निका त्वीक्षणिका दैवज्ञा**

---

१. 'प' क. ग. घ. ङ. पाठः. २. 'शा' क. ख. च. ञ. पाठः. ३. 'व' ख. पाठः.

क्षीर० — विप्रश्नो दैवमृच्छनम्, शुभाशुभेक्षणं वास्त्यस्याः। दैवं शुभाशुभं कर्म जानाति दैवज्ञा। अन्तःपुरस्यापुंस्प्रवेश्यत्वात्॥

टीका० — विप्रश्निकात्रयं शुभाशुभनिरूपिकायां शबरिकायाम्। विविधः प्रश्नो विप्रश्नः। ईक्षणं शुभाशुभदर्शनम्। उभयत्रैव मत्वर्थे ठन्। दैवं शुभाशुभं जानातीति दैवज्ञा। 'आतोऽनुपसर्गे कः' (३.२.३)॥

अथ रजस्वला।

**स्त्रीधर्मिण्यपि चात्रेयी मलिनी पुष्पवत्यपि॥ २०॥**
**ऋतुमत्यप्युदक्यापि**

क्षीर० — रजोऽस्त्यस्या रजस्वला। 'रजःकृष्यासुति—' (५.२.११२) इति वलच्। स्त्रीधर्मो रजोऽस्त्यस्याः स्त्रीधर्मिणी। अत्र्यपत्यमात्रेयी। मलिनाद् रजसि ङीप्। मलादिनन्ताद् वा ङीप्। ऋतुः रजोऽस्त्यस्याः ऋतुमती। उदकात् संज्ञायां यति उदक्या। 'उदकमर्हति पुष्पिता' इति माला। 'पुष्पवत्यवीः' इति प्राच्याः पेठुः। अव्यते रक्षोभ्योऽवीः। 'अवितृस्तृतन्त्रिभ्य ईः' (उ० ३. १५९) 'अविरात्रेयी' इत्येके[1]। यत् कात्यः— 'अविं स्त्रीधर्मिणीं विद्यात्'॥

टीका० — रजस्वलाष्टकं रजस्वलायाम्। 'रजःकृष्यासुतिपरिषदो[2] वलच्' (५. २. ११२)। रजस्वला। स्त्रीधर्मः ऋतुः, तद्योगादिनिः। स्त्रीधर्मिणी। अवीरिति। 'अवितृस्तृतन्त्रिभ्य ईः (उ० ३. १५९)। शुभ्रादित्वाद् ढक्। आत्रेयी। दिगादिषु 'उदकात् संज्ञायाम्' (ग० ४. ३. ५४) इति पाठाद् यत्। उदक्या॥

**स्याद् रजः पुष्पमार्तवम्।**

क्षीर० — पुष्पं सुतफले हेतुत्वात्। रजः। ऋतुरेवार्तवम्। ऋतुः स्त्रीरजः। ऋतौ गर्भग्रहणकाले भवं वा। ऋतुः प्राप्तोऽस्य वा॥

टीका० — रजस्त्रयं स्त्रीरजसि। ऋतुरेवार्तवम्। प्रज्ञाद्यण्॥

---

१. 'व्युस्तस्वैरन्योऽविः।' क. ग. घ. ङ. पाठः. २. 'षदो' क. ख. ङ. छ. पाठः.

**श्रद्धालुर्दोहदवती**

क्षीर० — 'निद्रातन्द्राश्रद्धाभ्य आलुच्' (३. २. १५८) । दोहदं गर्भिण्यभिलाषोऽस्त्यस्या दोहदवती ॥

टीका० — श्रद्धालुद्वयं गर्भवशादन्नपानाद्यभिलाषिण्याम् । श्रद्धा स्पृहोच्यते । 'स्पृहिगृहि—' (३. २. १५८) इत्यादिना ताच्छीलिक आलुच् ॥

**निष्कला विगतार्तवा ॥ २१ ॥**

क्षीर० — निष्क्रान्ता कलाभ्योऽशुद्धिभ्यो निष्कला । क्षीणर्तुः ॥

टीका० — निष्कलाद्वयं हीनरजस्कायाम् । कलो रजः । 'गौरादिङीपि निष्कली' इति धातुप्रदीपादिः । 'विकली चास्या नाम' इति गोवर्धनः ॥

**आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।**

क्षीर० — आपन्नं गृहीतं सत्त्वं गर्भोऽनया आपन्नसत्त्वा । गुरुगर्भोऽस्त्यस्या गुर्विणी । व्रीह्यादित्वादिनिः । गुर्वीति च भागुरिः । अन्तर्विद्यतेऽस्या अन्तर्वत्नी । 'अन्तर्वत्पतिवतोर्नुक्' (४. १. ३२) ॥

टीका० — आपन्नसत्त्वाचतुष्कं गर्भवत्याम् । आपन्ना सत्त्वं गर्भम् आपन्नसत्त्वा । 'प्राप्तापन्ने च द्वितीयया' (२. २. ४) इति समासः । गुरुः इनोऽस्या इति गुर्विणी । चान्द्राणां पिप्पल्यादिः । 'पूर्वपदात्—' (८. ४. ३) इत्यादिना णत्वं केचिदाहुः । आपन्नसत्त्वा गुर्वी स्यादिति पाठः । पुरुषोत्तमदेवेन† गुर्विणीत्यस्य दुर्घटेऽसाधुत्वमुक्तम् । तन्त्रान्तरेषु च गुर्वीत्येव पाठो दृश्यते । पतिवत्नीवदन्तर्वत्नी । मतुब्[1] निपातनादिति तु विशेषः ॥

**गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥**

१ 'नु' न. पाठः

† दुर्घटवृत्तिकारस्तु सा१०५५. ।

क्षीर०—गणिकानां समूहो गाणिक्यम्। 'गणिकाया†श्च वक्तव्यम्' (वा० ४. २. ४०) इति यञ्। गर्भिणीनां समूहो गार्भिणम्। 'इनण्यनपत्ये' (६. ४. १६४) इति प्रकृतिभावः। 'नस्तद्धिते' (६. ४. १४४) इति टिलोपः प्राप्तः। युवतीनां समूहो यौवतम्। 'युवत्या अ(णि?)पुंवद्' इति गणपाठाद् 'भ(स्य टेस्त? स्याढे त)द्धिते' (वा० ६. ३. ३५) इति पुंवद्भावो नास्ति॥

टीका०—गणिकागर्भिणीयुवतीनां समूहो गाणिक्यादिः। 'गणिकाया†श्च यञ् वक्तव्यः' (वा० ४. २. ४०) इति यञ्। गाणिक्यम्। गार्भिणमिति। 'भिक्षादिभ्योऽण्' (४. २. ३८)। 'भस्याढे तद्धिते' (वा० ६. ३. ३५) इति पुंवद्भावो वक्तव्यः। 'सिद्धश्च प्रत्ययविधौ' इति वचनात् पुंवद्भावे ई-कारनिवृत्तिः। 'इनण्यनपत्ये' (६. ४. १६४) इति प्रकृतिभावाद् 'नस्तद्धिते' (६. ४. १४४) इति न टिलोपः। यौवतमिति। युवतिशब्दस्य प्रत्ययान्तत्वादा-द्युदात्ते कृते णित्त्वात् शेषमनुदात्तमिति 'अनुदात्तादेरञ्' (४. २. ४४) इत्यञ्-बाधनार्थं भिक्षादिषु युवतिपाठादण्। भिक्षादिषु युवतिपाठसामर्थ्यादेवात्र पुंवद्भावो न भवतीति जयादित्यः। तेन यौवतमेव भवति। भाष्ये तु भिक्षादिपाठोऽस्य प्रत्याख्यातः। तदा च यौवनमिति पाठः। तथा च प्रयोगः—

"स्वरूपमिति नेपथ्यं कलाकुशलयौवनम् (?)।
यस्य पुण्यकृतः प्रेष्यं[1] सफलं तस्य यौवनम्॥"

इति॥

**पुनर्भूर्दिधिषूरूढा द्विः**

क्षीर०—पुनर्भवति पुनर्भूः। दधेष्टि वाच्या भवति दिधिषूः। द्वौ वारौ द्विः ऊढा संस्कृता। यदाह—

"अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः"

मनुस्त्वन्यथाह—

१. 'प्रे' ङ. च. छ. पाठः.

† 'या यञ्' इति मुद्रितवार्त्तिकपाठः।

"ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥"

टीका० — पुनर्भूद्वयं वारद्वयं विवाहितायाम् । पुनः परिणेतारं भूता प्राप्तेति पुनर्भूः । 'भू प्राप्तावात्मनेपदी' इति क्विप् । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः (उ० १.९६) इत्यनेन दिधिपूर्वात् स्यतेः ऊप्रत्ययषत्वाभ्यां दिधिषूर्निपातिता ॥

तस्या दिधिषुः पतिः ।

क्षीर० — तस्याः पुनर्भ्वाः पतिर्दिधिषुः । किञ्च,
"पुनर्भूपतिरुक्तश्च पुनर्भूर्दिधिषूस्तथा"
इत्येषोऽप्यूदन्तः । दिधि(षु ? षू)मिच्छत्यात्मन इति क्यच् । क्विप् ॥

टीका० — दिधिष्वाः स्वामी दिधिषुः । पृषोदरादित्वाद्ध्रस्वत्वम् ॥

स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥

क्षीर० — अग्रे अनन्यभार्यत्वात् प्रधाना दिधिषूर्यस्य सोऽग्रेदिधिषूः । समासान्तविधिरनित्यः ॥

टीका० — पुनर्भूरेव यस्य कुटुम्बिनी पुत्रपौत्रप्रतिष्ठिता सः अग्रेदिधिषुः पृषोदरादिः । द्विजस्यैव पुनर्विवाहोपदेशात् । तेन द्विज इत्युक्तम् । 'परपूर्वा स्त्री दिधिषूरग्रेदिधिषु (स्त ? स्तु त )त्पुरन्ध्रीकः' इति नाममालायां सामान्यनिर्देशः ॥

कानीनः कन्यकाजातः सुतः

क्षीर० — 'कन्यायाः कनीन च' (४. १. ११६) अण् च कानीनः ॥

टीका० — कानीनोऽनूढायां जातपुत्रे । 'कन्यायाः कनीन च' (४. १. ११६) इत्यण् कनीनादेशश्च ॥

अथ सुभगासुतः ।

---

१. 'तु सुतेस्य' ख. पाठः. २. 'ये षत्वात्वाभ्यां' ङ. छ. पाठः.

**सौभागिनेयः स्यात्**

क्षीर० — 'कल्याण्यादीनामिनङ्' (४. १. १२६) इति ढगिनङौ। सौभागिनेयः। एवं दौर्भागिनेयाद्युन्नेयम्। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (७. ३. १९) इत्युभयपदवृद्धिः। उत्तरत्र 'अनुशतिकादीनां च' (७. ३. २०) इति ॥

टीका० — सुभगासुतद्वयं सुभगासुते। सौभागिनेय इति। 'कल्याण्यादीनामिनङ्' (४. १. १२६) इति ढक् इनङ् चान्तादेशः। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (७. ३. १९) इत्युभयपदवृद्धिः ॥

**पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥**

क्षीर० — सुत इत्येव। परस्त्री कल्याण्यादि ॥

टीका० — कस्यचित् परस्त्रिया जातः पारस्त्रैणेयः। पूर्ववद् ढक् इनङ् च। अनुशतिकादिपाठादुभयपदवृद्धिः ॥

**पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः। सुतः**

क्षीर० — 'पितृष्वसुश्छण्' (४. १. १३२), 'ढकि लोपः' (४. १. १३३) इति ज्ञापकाद् ढक् अन्तलोपश्च ॥

टीका० — पितृष्वसुः सुते पैतृष्वसेयद्वयम्। 'ढकि लोपः' (४. १. १३३) इत्यनेन ऋकारलोपः। 'ढकि लोपः' (४. १. १३३) इत्यस्मादेव ज्ञापकाद् ढक्प्रत्ययश्च। पैतृष्वस्रीय इति। 'पितृष्वसुश्छण्' (४. १. १३२) इति छण्। 'मातृपितृभ्यां स्वसा' (८. ३. ८४) इति प्रथमसकारे षत्वम् ॥

**मातृष्वसुश्चैवं**

क्षीर० — सुत इत्येव। 'मातृष्वसुश्च' (४. १. १३४) इति छणि मातृष्वस्रीयः। 'ढकि लोपः' (४. १. १३३) इति मातृष्वसेयः ॥

---

१ 'ढि। अपत्यार्थे ३' क. ग. घ. ङ. पाठः. २ 'श्च इति छण्' ख. ज. झ. पाठः.

टीका० — मातृष्वसुश्चैवमिति । पूर्ववड्ढगादि । 'मातृष्वसुश्च' (४. १. १३४) इति छणपि । मातृष्वसेयो मातृष्वस्रीयश्चेति मातृष्वसुः सुते ॥

**वैमात्रेयो विमातृजः ॥ २५ ॥**

क्षीर० — विरुद्धाया मातुरपत्यं वैमात्रेयः । असोदर्यो भ्राता । मातुः शुभ्रादित्वाड्ढक् । 'स्त्रीभ्यो ढक्' (४. १. १२०) इत्यत्र स्त्रीप्रत्ययग्रहणात् । द्वैमातुरस्तूभयमातृकः ॥

टीका० — वैमात्रेयद्वयं मातुः सपत्नीसुते । विरुद्धा विभिन्ना माता विमाता, तस्या अपत्यं 'शुभ्रादिभ्यश्च' (४. १. १२३) इति ढक् ॥

**अथ बान्धकिनेयः स्याद् बन्धुलश्चासतीसुतः ।**
**कौलटेयः कौलटेरः**

क्षीर० — बन्धक्या अपत्यं बान्धकिनेयः । 'कल्याण्यादीनामिनङ्' (४. १. १२६) इति ढकि इनङादेशः । बन्धून् लाति बन्धुलः । कुलटाया अपत्यम् । 'स्त्रीभ्यो ढक्' (४. १. १२०) 'क्षुद्रा(या? भ्यो) वा' (४. १. १३३) इति ढ्रक् च ॥

टीका० — बान्धकिनेयपञ्चकमसतीसुते । कल्याण्यादित्वाड्ढगिनङौ । बान्धकिनेयः । बन्धून् लातीति बन्धुलः । कौलटेय इति । 'स्त्रीभ्यो ढक्' (४. १. १२०) । कौलटेर इति । 'कुलटाया वा' (४. १. १२७) इत्यस्य कुलाटनयोगात् प्रयुक्तः कुलटाशब्दोऽवकाशः । 'क्षुद्राभ्यो वा' (४. १. १३१) इत्यस्य दासीप्रभृतयः शीलरहिता अङ्गहीनाश्च । अतः कुलाटनात् प्रयुक्तकुलटाशब्दात् असतीवचनस्य कुलटाशब्दस्य परत्वादस्मात् 'क्षुद्राभ्यो वा' (४. १. १३१) इति ढ्रक् । तेन मुक्ते 'स्त्रीभ्यो ढक्' (४. १. १२०) इति ढक् । तेन कौलटेरकौलटेयौ । क्षुद्रा अङ्गहीनाः शीलहीनाश्च । अङ्गहीनाभ्यो यथा, काणेरकाणेयौ । शीलहीनाभ्यो यथा, दासेरदासेयौ ॥

**भिक्षुकी तु सती यदि ॥ २६ ॥**

१. 'तु । स्यान् राङ्गयावशनो द्वै' क. ग. घ. ङ. पाठः. २. 'द्रा भि' ङ. छ. पाठः.

**तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ।**

क्षीर० — सा हि यदि भिक्षार्थिनी कुलान्यटति । 'कुलटाया वा' (४. १. १२७) इति ढगिनङौ । पक्षे ढगेव क्षुद्रात्वाभावात् । अङ्गशील-हीना हि क्षुद्राः ॥

टीका० — सती या भिक्षार्थिनी कुलान्यटति, न तु जारार्थं, सापि कुलटा । तत्सुते कौलटिनेयद्वयम् । 'कुलटाया वा' (४. १. १२७) इति ढकि[1] बान्धकिनेयवत् कौलटिनेयः ॥

**आत्मजस्तनयः सूनुः सुतः पुत्रः**

क्षीर० — तनोति कुलं तनयः । सूयते सूनुः । सुवति सुतः । पुतो नरकात् त्रायते पुत्रः । पुनाति वा । 'पुवो ह्रस्वश्च' (उ० ४. १६६) इति क्रन् । दारकदायादौ च ॥

टीका० — आत्मजपञ्चकं पुत्रे । आत्मनो[2] जायते पुत्र इत्यात्मजः । 'अन्येष्वपि दृश्यते'(३. २. १०१) इति डः । तनोति मुदमिति तनयः । 'बलि-मलितनिभ्यः कयन्' (उ० ४. १०१) । 'सुवः कित' (उ० ३. ३५) इति नुः । सूनुः । 'षु प्रसवैश्वर्ययोः' । कर्मणि क्तः । सुतः । 'पुवो ह्रस्वश्च' (उ० ४. १६६) इति क्रः । पुत्रः । पुन्नाम्नो नरकाद् घोरात् त्रायत इति वा ॥

**स्त्रियां त्वमी ॥ २७ ॥**

**आहुर्दुहितरं सर्वे**

क्षीर० — आत्मजादयः स्त्रियां वृत्ताः सर्वे दुहितृवाचकाः । गौरादि । पुत्री । दोग्धि पितरौ दुहिता ॥

१. 'क् । वा' क. ख. ज. झ. पाठः. २. 'त्मेव जा' क. ख., 'त्मैव जा' च., 'त्मा वै जा' ज पाठः.

टीका० — आत्मजाद्याः पञ्च स्त्रीलिङ्गे वर्तमाना दुहितरमाहुः । तत्रात्म जसुततनयानाम् अजादिटाप् । सूनोर्लक्षणाभावान्न स्त्रीविधिः । पुत्रीति 'गौरादिः' केचिच्छार्ङ्गरवादिषु पुत्रं पठन्ति । तदा ङीन् । अन्यस्त्वाह 'पुत्राद् वे'ति पुत्रा पुत्री चेति ॥

अपत्यं तोकं तयोः समे ।

क्षीर० — पुत्रे दुहितरि च सामान्ये वर्तते । अपतनमपत् । अपति साधु अपत्यम् । तूयते तोकम् । सन्ततिः सन्तानः प्रजा च ॥

टीका० — तयोरिति । दुहितरि पुत्रे चापत्यद्वयम् । समे क्लीबे । नरके अपतनादपत्यम् । अघ्न्यादियत् । 'तु' इति सौत्राद् बाहुलकः कन् । तोकम् ॥

स्वजाते त्वौरसोरस्यौ

क्षीर० — उरसा निर्मित 'उरसोऽण् च' (४.४.९४) इत्यण्यतौ ॥

टीका० — औरसद्वयं स्ववर्णोढायां स्वयं जनिते पुत्रे । उरसा निर्मित इत्यर्थे 'उरसोऽण् च' (४. ४. ९४) इत्यण्यतौ । संज्ञाधिकारनियमादात्मनैव पुत्रे जाते भवति, न तूरसा निर्मितं मुखमिति ॥

तातस्तु जनकः पिता ॥ २८ ॥

क्षीर० — तनोति कुलं तातः । स्वार्थेऽण् । जनयति जनकः । पाति पिता । वप्ता च ॥

टीका० — तातत्रयं पितरि । '† द्रुतनिभ्यां दीर्घश्च' (उ० ३. ९०) इति क्तः । तातः । पातीति पिता । पातेः नप्तृनेष्टृत्वष्टृक्षत्तृहोत्रादिना निपातितः ॥

१. 'धर्मपत्न्यां स्व' ङ. छ. पाठः. २. 'र्णायामूढा' झ., र्णायां स्व' ज. पाठः.

† 'द्रुत—', § 'ष्टृहो' इति मुद्रितोणादिपाठः ।

**जनयित्री प्रसूर्माता जननी**

**क्षीर०—'या जनित्री त्रिलोक्याः' इत्यन्तर्भावितण्यर्थत्वात्। प्रसूयते प्रसूः। मात्यस्यां गर्भो माता॥**

**टीका०**—जनयित्रीचतुष्कं **मातरि**। ऋन्नेभ्यो ङीपि जनयित्री। 'सत्सूद्विषं—' (३. २. ६१) इत्यादिना क्विप्। प्रसूः। 'माङ् माने'। 'तृन्-तृचौ *शंसिशसिशासिक्षदादिभ्यः संज्ञायां चानिटौ' (उ० २. ९४) इति तृच्। 'न षट्स्वस्रादिभ्यः' (४. १. १०) इति निषेधाद् ङीब् न भवति। जनेनीति कर्तरि ल्युट्॥

**भगिनी स्वसा।**

**क्षीर०—भगं कल्याणमस्त्यस्या भगिनी। सुष्ठु अस्यते स्वसा। ‡'सुञ्यसेर्ऋन' (उ० २. ९६) 'न षट्स्वस्रादिभ्यः' (४. १. १०) इति ङीब् नास्ति॥**

**टीका०**—भगिनीद्वयं **भगिन्याम्**। भगो यत्नः तद्योगाद् भगिनी। सुपूर्वाद् 'असु क्षेपणे' इत्यतः 'सावसेर्ऋन्' (उ० २. ९६) इति ऋन्। स्वसा द्विदन्त्या। तथा च—'

"स्वसारमवलम्ब्याशु स्वसारमुपजप्यताम्"

इति कीचकवधः। एकत्र स्वं सारं बलमित्यर्थः॥

**ननान्दा तु स्वसा पत्युः**

**क्षीर०—न नन्दति भ्रातृजायया ननान्दा। नन्दिनी च। नन्देर्ऋन्॥**

**टीका०**—पत्युः **स्वामिनः स्वसा** ननान्दा। नञ्युपपदे 'नञि च नन्देः' (उ० २. ९८) इति ऋन्। वृद्धिश्च धातोः। बहुलवचनान्न नञो नलोपः।

१. 'पादिकि' ख. च. ज. पाठः. २. 'नयतीति क' ङ. छ. पाठः.

* 'शंसिक्ष—', ‡ 'सावसे' इति मुद्रितोणादिपाठः।

"न(ना? न)न्दा तु स्वसा पत्युर्ननान्दा नन्दिनी च सा"
इति शब्दार्णवः ॥

**नप्त्री पौत्री सुतात्मजा ॥ २९ ॥**

क्षीर० — न पतत्यनया कुलम्। पुत्रस्यापत्यं पौत्री। सुतात्मजा ॥

टीका० — सुतस्य सुतायाश्चात्मजायां नप्त्रीद्वयम्। 'णमु प्रह्वत्वे शब्दे'। पितृवन्नप्तृ। 'ऋन्नेभ्यो ङीप्' (४. १. ५)। केचित् स्वस्रादिषु नप्तृशब्दं पठन्ति। तदा नप्तेति पाठः। तथा च रभसः—'नप्ता नप्त्री च पौत्रिका' इति। पौत्रीति। बिदादित्वादनन्तरापत्येऽञ् ॥

**भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्।**

क्षीर० — यतते स्पर्धया याता। 'यतेर्वृद्धिश्च' (उ० २. ९७) इति ऋन् ॥

टीका० — भ्रातृवर्गस्येति। रूढिवशात् पतिभ्रातृवर्गस्य भार्या यातर उच्यन्ते, जाव इति यासां प्रसिद्धिः। 'यती प्रयत्ने'। 'यतेर्वृद्धिश्च' (उ० २. ९७) इति ऋन् वृद्धिश्च ॥

**प्रजावती भ्रातृजाया**

क्षीर० — 'ऋतो विद्यायोनिसम्बन्धेभ्यः' (६. ३. २३) इति षष्ठ्या अलुङ् नास्ति सप्तमीसमासात्। यथा 'द्रक्ष्यसि भ्रातृजायाम्' ॥

टीका० — प्रजावतीद्वयं भ्रातृभार्यायाम्। जायाशब्दस्यायोनिसम्बन्धवाचित्वाद् भ्रातृजायेत्यत्र 'ऋतो विद्यायोनिसम्बन्धेभ्यः' (६. ३. २३) इति षष्ठ्या अलुङ् न भवति। भ्रातृभुक्ता जाया भ्रातृजाया। शाकपार्थिवादिः इति केचित् ॥

**मातुलानी तु मातुली ॥ ३० ॥**

क्षीर० — 'इन्द्रवरुण—' (४. १. ४९) इति ङीषानुकौ। *'उपा-

*'मातुलोपाध्याययोरानुग् वा' इति मुद्रितवार्त्तिकपाठः

ध्यायमातुलाभ्यां वा' (वा० ४. १. ४९) इति पक्षे ङीष् ॥

टीका०—मातुलानीद्वयं मातुलजायायाम्। उपाध्यायान्युपाध्यायी-वन्मातुलानी मातुली च ॥

**पतिपत्न्योः प्रसूः श्वश्रूः**

क्षीर०—पत्युर्माता पत्न्याः श्वश्रूः। पत्न्या माता पत्युः श्वश्रूः। 'श्वशुरस्योकाराकारयोर्लोपश्च' (वा० ४. १. ६८) इत्यूङ् ॥

टीका०—पत्युः स्वामिनः पत्न्या भार्यायाश्च प्रसूर्माता श्वश्रूः। द्वितालव्याच्छ्वशुरशब्दात् 'श्वशुरस्योकाराकारयोर्लोपश्चेति वक्तव्यम्' (वा० ४. १. ६८) इत्यूङ् ॥

**श्वशुरस्तु पिता तयोः।**

क्षीर०—तयोः पतिपत्न्योरन्योन्यं पिता श्वशुरः। शु पूजितं कृत्वा अश्नुते ॥

टीका०—पतिपत्न्योः पिता श्वशुरः। शुपूर्वात् 'अशू व्याप्तावि'त्यतः ¶'शावशेराप्तौ' (उ० १. ४७) इत्युरन। 'श्वश्रूस्तथा श्वशुरशाश्वतशिंशपाश्च' इति द्वितालव्ये शभेदः ॥

**पितुर्भ्राता पितृव्यः स्याद्**

क्षीर०—'पितृव्यमातुल—' (४. २. ३६) इति साधुः ॥

टीका०—पितुर्भ्राता पितृव्यः। पितृशब्दात् 'पितृव्यमातुलमातामहपितामहाः' (४. २. ३६) इति व्यन् निपात्यते ॥

**मातुर्भ्राता तु मातुलः ॥ ३१ ॥**

१. 'माता च श्वश्रूः। श्वश्रु' ख. पाठः.

¶ 'से' इति मुद्रितोणादिपाठः।

टीका०—मातुर्भ्रातरि मातुलः। पितृव्यादिसूत्रेण मातृशब्दाद् लच् ॥

**स्यालाः स्युर्भ्रातरः पत्न्याः**

क्षीर०—* स्यायति स्यालः। 'स्यमु वितर्के'। अस्माद् वा। पत्युः स्याला इत्यर्थः ॥

टीका०—पत्न्याः भ्रातरः स्यालाः। 'स्याल वितर्के'। दन्त्यादिः चौरादिकश्च। ण्यन्तात् पचाद्यच्। 'स्यालसालसमसूरसूरयः' इति सभेदः। श्यां मधुपर्कं लातीति श्यालस्तालव्यादिरपीति केचित् ॥

**स्वामिनो देवृदेवरौ।**

क्षीर०—स्वामिनः पत्युर्भ्राता कनिष्ठः पत्न्याः। दीव्यति देवा। 'दिवेर्ऋन्' (उ० २. ९०)। 'अर्तिकमिभ्रमिदेविवासिभ्यश्च' (उ० ३. १३२) इति देवरः ॥

टीका०—भर्तुः स्वामिनः कनिष्ठभ्रातरि देवृद्वयम्। ज्येष्ठस्तु श्वशुर एव। 'दिवेर्ऋन्' (उ० २. ९९) इति ऋन्। देवृ। भ्रमरवद् देवरः। 'देवृदेवरदेवना' इति शब्दार्णवः ॥

**स्वस्रीयो भागिनेयः स्याद्**

क्षीर०—स्वसुरपत्यं स्वस्रीयः ॥

टीका०—स्वस्रीयद्वयं भागिनेये। 'स्वसुश्छः' (४. १. १४३)। स्वस्रीयः। ढकि भागिनेयः ॥

**जामाता दुहितुः पतिः ॥ ३२ ॥**

क्षीर०—जायां मिमीते जामाता ॥

*'स्यै' इति 'स्त्यै' इति वा कश्चन धातुं स्थितं मन्यते। ततः कालन् स्यात्।

टीका०— जामातृद्वयं जामातरि। 'माङ् माने'। जापूर्वः। जामाता 'नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृजामातृपितृदुहितृ—' (उ० २. ९९) इति निपातितः। दुहितुःपतिरिति समासोऽयम्। 'विभाषा स्वसृपत्योः' (६. ३. २४) इति षष्ठ्या अलुक् ॥

**पितामहः पितृपिता**

क्षीर०— 'पितृव्य—' (४. २. ३६) इत्यादिना साधुः ॥

टीका०— पितुः पिता पितामहः। ब्रह्मपर्याये उक्तः ॥

**तत्पिता प्रपितामहः।**

क्षीर०— प्रगतः पितामहात् ॥

टीका०— पितामहस्य पिता प्रपितामहः। प्रकृष्टः पितामहः। प्रादिसमासः ॥

**मातुर्मातामहाद्येवं**

क्षीर० — मातुः पिता मातामहः। तत्पिता प्रमातामहः ॥

टीका० — एवमिति। यथा पितुः पिता पितामहः, तथा मातुः पिता मातामहः, तत्पिता च प्रमातामहः। पूर्ववद् डामहच् ॥

**सपिण्डास्तु सनाभयः ॥ ३३ ॥**

क्षीर० — समानः पिण्डो येषां ते सपिण्डाः। यत् स्मृतिः—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते"।

सप्तमादूर्ध्वं सगोत्राः। समाना नाभिर्मूलमेषां सनाभयः। 'ज्योतिर्जनपद— ' (६. ३. ८५) इति सत्वम् ॥

टीका० —सपिण्डद्वयं सप्तपुरुषावधिकेषु निकटज्ञातिषु। समानः

१. 'पिण्डात' ङ. पाठः.

विण्डो येषां ते सपिण्डाः। 'वान्यस्मिन् सपिण्डे—' (४. १. १६५) इति निपातनात् समानस्य सभावः। नाभिः सप्तपुरुषावधिकं कुलम्। समाना नाभिर्येषामिति सनाभयः। 'ज्योतिर्जनपदरात्रिनाभि—' (६. ३. ८५) इत्यादिना समावः॥

**समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।**

**क्षीर०—समाने उदरे शयितः समानोदर्यः। 'समानोदरे शयित—'(४. ४. १०८) इति यत्। सोदरशब्दात् 'सोदराद् यः' (४. ४. १०९) 'विभाषोदरे' (६. ३. ८८) इति सत्वं च। समाने गर्भे भवः सगर्भ्यः। 'सगर्भसयूथसनुताद् यत्' (४.४.११४) छान्दसोऽपि लोकेऽप्यभिधानात्। सह जायते सहजो भ्राता॥**

**टीका०**—समानोदर्यचतुष्कमेकोदरभ्रातरि। 'समानोदरे शयित ओ चोदात्तः' (४. ४. १०८) इति यत्। समानोदर्यः। अस्मिन्नेवार्थे 'सोदराद् यः' (४. ४. १०९)। सोदर्यः। समाने गर्भे भवः सगर्भ्यः। 'सगर्भसयूथसनुताद् यत्' (४.४.११४)। 'समानस्यच्छन्दसि—' (६. ३. ८४) इत्यादिना सः। संज्ञाशब्दत्वाद् भाषायामप्यस्य प्रयोगः। समाने उदरे जातः सहजः। 'अन्येष्वपि—' (३.२.१०१) इति डः। सहशब्दोऽत्र समानार्थे। सोदरशब्दोऽप्यत्र। तथा च भट्टिः—'त्वं सोदरस्यातिमदोद्धतस्य' (स० १२. श्लो० २) इति॥

**सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः॥ ३४॥**

**क्षीर०—समानं गोत्रमस्य सगोत्रः। 'ज्योतिर्जनपद—'(६. ३. ८५) इति सत्वम्। ज्ञायते ज्ञातिः। बध्नाति बन्धुः। स्वार्थेऽण्। बान्धवः। एकः स्वो ज्ञातिवचनोऽन्य आत्मीयार्थः॥**

**टीका०**—सगोत्रषट्कं ज्ञातिसामान्ये। सनाभिवत् सगोत्रः। बन्धुरेव बान्धवः। प्रज्ञाद्यण्। जानातेः क्तिच्। ज्ञातिः। 'बन्ध बन्धने'। स्वरुवदुः।

१. 'राद् यति वि' क. ग. घ. पाठः. २. 'द् ब' क. पाठः.

बन्धुः । स्वशब्दो दन्त्यसः । 'स्वमज्ञातिधनाख्यायाम्' (१. १. ३५) इत्यत्र साधुः । स्वजन इति कर्मधारयः ॥

**ज्ञातेयं बन्धुता तेषां क्रमाद् भावसमूहयोः ।**

क्षीर० — ज्ञातेर्भावो ज्ञातेयम् । 'कपिज्ञात्योर्ढक्' (५. १. १२७) । बन्धूनां समूहो बन्धुता । 'ग्रामजनबन्धुसहायेभ्यस्तल्' (४. २. ४३) । तलि स्त्रीलिङ्गवचनम् ॥

टीका० — ज्ञातीनां भावे ज्ञातेयम् । 'कपिज्ञात्योर्ढक्' (५. १. १२७) । बन्धुसमूहे बन्धुता । 'ग्रामजनबन्धुसहायेभ्यस्तल्' ( ४. २. ४३) ॥

**धवः प्रियः पतिर्भर्ता**

क्षीर०— धुनोति धवः । प्रीणाति प्रियः । 'इगुपधज्ञा —' (३. १. १३५) इति कः । पाति पतिः । 'पातेर्डतिः' (उ० ४. ५८) सेक्ता वरयिता वरश्च ॥

टीका० — धवचतुष्कं पत्यौ । 'धूञ् कम्पने' । पचादिः । धवः । 'कृतादयश्च' इति वा अच्प्रत्ययः । प्रीणाति प्रियः । 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५) । 'पा रक्षणे' । 'पातेर्डतिः' (उ० ४. ५८) इति डतिः । पतिः । बिभर्तीति भर्ता तृजन्तः ॥

**जारस्तूपपतिः समौ ॥ ३७ ॥**

क्षीर० — जरयति जारः । 'दारजारौ कर्तरि णिलुक् च' (वा० ३. ३. २०) । उपजातः पतिरुपपतिः ॥

टीका० — जारद्वयं जारभर्तरि । जीर्यतेः 'दारजारौ कर्तरि णिलुक् च' (वा० ३. ३. २०) इति घञ् । 'या जारवती तीवरजाये'ति गतप्रत्यागताच्चवर्गादः । पत्या उपमित उपपतिः । 'अवादयः क्रुष्टाद्यर्थे तृतीयया' (वा० २. २. १८) इति समासः ॥

**अमृते जारजः कुण्डः**

क्षीर०—भर्तरीत्येव। कुण्ड्यते दह्यतेऽनेन कुलमिति कुण्डः। 'कुडि दाहे'॥

टीका०—जीवति भर्तरि जारजातः पुत्रः कुण्डः। 'कुण शब्दोपकरणयोः'। 'कुणादिभ्यः कित्' इति डः॥

मृते भर्तरि गोलकः।

क्षीर०—जारज इत्येव। गुड्यते लज्जाकरत्वाद् गोप्यते गोलः।

"परनार्यां प्रजायेते द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः॥"

इति स्मृतिः॥

टीका०—मृते भर्तरि जारजः पुत्रो गोलकः॥

भ्रात्रीयो भ्रातृजः

क्षीर०—भ्रातुरपत्यं भ्रात्रीयः। 'भ्रातुर्व्यच्च' (४. १. १४४) इति वा छः। भ्रातृव्यस्तु नानार्थे॥

टीका०—भ्रात्रीयद्वयं भ्रातुष्पुत्रे। 'भ्रातुर्व्यच्च' (४. १. १४४) इति चकाराच्छः। भ्रातृज इति पूर्ववड्डः॥

भ्रातृभगिन्यौ भ्रातरावुभौ॥ ३६॥

क्षीर०—भ्राता च भगिनी चेति। 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (१. २. ६८) इत्येकशेषः। एवं पुत्रौ॥

टीका०—भ्रातृभगिन्यौ द्वे भ्रातरावित्युच्येते। 'भ्रातृपुत्रौ स्वसृदुहितृ[१]भ्यामन्यतरस्याम्' (१. २. ६८) इत्येकशेषः॥

मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ।

क्षीर०—'आनङृतो द्वन्द्वे' (६. ३. २५)। 'पिता मात्रा' (१. २. ७०) इत्येकशेषो वा। 'मातरपितरावुदीचाम्' (६. ३. ३२)

[१] 'भ्याम्' इति मुद्रितपाठ्यपुस्तकपाठः।

इत्यदन्तपूर्वपदः साधुः । प्रसूर्माता जनयिता पिता चेति द्वौ त्रिसंज्ञौ ॥

टीका० — मातापितरौत्रयं मातापित्रोरेकवाच्यत्वे । माता च पिता च मातापितरौ । 'आनङृतो द्वन्द्वे' (६. ३. २५) इत्यानङ् । पितराविति 'पिता मात्रा' (१. २. ७०) इत्येकशेषः । 'मातरपितराविति । 'मातरपितरावुदीचाम्' (६. ३.३२) इति पूर्वोत्तरपदयोररङ् ॥

**श्वश्रूश्वशुरौ श्वशुरौ**

क्षीर० — 'श्वशुरः श्वश्र्वा' (१. २. ७१) इत्येकशेषो वा ॥

टीका० — श्वश्रूश्वशुरौ द्वौ श्वशुरावुच्येते । श्वशुराविति 'श्वशुरः श्वश्र्वा' (१. २. ७१) इत्येकशेषविकल्पः ॥

**पुत्रौ पुत्रश्च दुहिता च ॥ ३७॥**

टीका० — पुत्रश्च दुहिता च पुत्रावित्युच्येते । भ्रातराविवैकशेषविकल्पः ॥

**दम्पती जम्पती जायापती भार्यापती च तौ ।**

क्षीर० — राजदन्तादौ जायायाः पत्यौ दंभावो जम्भावश्च निपात्येते । 'दं भार्या' इति निघण्टुः ॥

टीका० — दम्पतीचतुष्क पतिपत्न्योर्युग्मे, जम्पती दम्पती भार्यापती जायापती इति राजदन्तादिगणपाठात् पक्षे जायाशब्दस्य जम्भावो दम्भावश्च निपात्येते परनिपातश्च ॥

**गर्भाशयो जरायुः पुंस्युल्बं च**

क्षीर० — गर्भ आशेतेऽत्र गर्भाशयः । जरामेति जरायुः । उल्वत्यावृणोत्युल्बम् ॥

**कललोऽस्त्रियाम् ॥ ३८॥**

क्षीर० — कलयति के ललति वा कललः शुक्रशोणितसमवायः । प्रसिद्ध्यास्य पर्यायो नोक्तः । अस्त्रीत्वविधानार्थे विधिः । उल्बपर्यायः कलल इत्येके । यन्मुनिः "तदुल्वं कललं च तत्" ॥

टीका०—गर्भाशयचतुष्कं मलं इति ख्याते । गर्भ आशेतेऽस्मिन्निति गर्भाशयः । 'पुंसि संज्ञायाम्—' (३. ३. ११८) इति घः । 'किजरयोः श्रिणः' (उ० १. ४) इति जुण् । जरायुः ।

"वाद्यभेदे गृहे कुक्षौ सम्भवेऽग्नौ जरायुषि"

इति केसरमालायां सान्तोऽपि । 'उच समवाये' । 'उल्बादयश्च' (उ० ४. ९६) इति बन्प्रत्ययः चकारस्य लकारः गुणाभावश्च निपात्यते । चकारादुल्वं चास्त्रियाम् । तथा च "कललो जरायुरुल्व" इति पुंस्काण्डे रत्नकोशः । 'कड मदे' । वृषादिकलच् । लडयोरेकत्वस्मरणम् । कललः । कलयतेर्वा कललः । कलतिः कामधेनुः ।

"लोक एष तिमिरोल्बवेष्टितो गर्भवास इव वर्तते निशि"

(कुमा० स० ८. श्लो० ९६) इति कालिदासः । अत उल्बोऽपि गर्भाशय एव । उल्बद्वयं गर्भप्रकृतिभूते द्रवात्मके कलल इत्यन्यः । तथा च "कललघनाङ्कुरास्थिचर्माङ्गजचेतनर्ता" इत्यादि निषेके वराहः । प्रयुक्तं च—

"मेरुरुल्बमभूत् तस्य जरायुश्च महीधराः" ॥

**सूतिमासो वैजननः**

**क्षीर०—'दशमे मासि सूतवे' इति श्रुतेः**

**"नवमे दशमे वापि प्रबलैः सूतिमारुतैः ।**
**निस्सार्यते बाण इव यन्त्राच्छिद्रेण सज्वरः ॥"**

**इति स्मृतेश्च नवमो दशमो वा मासो विजनने भवो वैजननः ॥**

टीका०—सूतिमासद्वयं नवमे दशमे वा प्रसवमासे । विजननं गर्भविमोचनं तदस्मिन्नस्तीति वैजननो मासः । ज्योत्स्नादित्वादण् ॥

**गर्भो भ्रूण इमौ समौ ।**

**क्षीर०—गीर्यते गर्भः । भ्रियते भ्रूणः । कुक्षिस्थः ॥**

१. 'र्तां' ज. पाठः. २. 'दा' ख. पाठः.

टीका० — कुक्षिगतसत्त्वे गर्भद्वयम्। 'गॄ निगरणे।' 'अर्तिगॄभ्यां भन्' (उ० ३. १५३) गर्भः। 'भ्रूण †आशायाम्।' चुरादिः। पचाद्यच्। कृतादित्वाद् वाच्। भ्रूणः॥

**तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम्॥ ३९॥**

**क्षीर० — स्त्रीपुंभ्यां तृतीया प्रकृतिर्लिङ्गम्। शाम्यति शण्ढः[1] पण्डोऽपि। क्लीबते क्लीबः। पण्डाति पण्डः पण्डुश्च। न स्त्रीपुंसौ नपुंसकम्। 'नभ्राण्नपाद्—' (६. ३. ७५) इति साधुः। 'नपुंसको भवेदि'ति भाष्यात् पुंस्यपि॥**

टीका० — तृतीयाप्रकृतिपञ्चकं **नपुंसके**। तृतीयाप्रकृतिः तृतीय. प्रकार इत्यर्थः। समानजातीयौ स्त्रीपुंसावपेक्ष्य प्रथमा प्रकृतिः स्त्री। द्वितीया प्रकृतिः पुमान्। तथा च वररुचिप्रयोगः

"घटाजटासटानां प्रथमा प्रकृतिः शिफानां च"

इति। कर्मधारयस्य पाक्षिकत्वाद् वाक्यमपि। तथा च

"प्रकृतेश्च तृतीयायाः स्त्रियाश्चैवोपरिष्टके"

इति वाक्यप्रयोगश्च स्त्रीत्वं व्यनक्ति। पुंवद्भावपक्षे स्त्रीत्वं न गम्येत[2]। 'न कोपधायाः' (६. ३. ३७) इत्यत्र नेति योगविभागान्न पुंवद्भाव इति केचित्। तथा च वररुचिलिङ्गसूत्रं — "शैलायुधमङ्गलनगरबिम्ब-मुकुटानि विद्धि तृतीयाप्रकृतौ" इति। शाम्यति लिङ्गाभावादिति शण्डः। 'शमु उपशमे।' 'शमेर्डः' (उ० १. १०४)। अथवा 'वन षण सम्भक्तौ'। 'अमन्ताड्डः' (उ० १. ११९)। बहुलवचनात् सत्वाभावः। षण्डः। बहुलवचनादेव डकारस्य 'चुटू' (१. ३. ७) इतीत्संज्ञापि न भवति। 'क्लीबृ अधार्ष्ट्ये'।

१. 'ण्ढः। शण्डोऽपि' ग. ङ. पाठः २. 'म्यते। न' ङ. छ. ज. पाठः. ३. 'ल्या' ख. ङ. छ. पाठः. ४. 'य' ख. ज. पाठः.

† 'आशांविशङ्कयोः' इति मुद्रितधातुपाठः।

इगुपधलक्षणः कः। क्लीबः। नपुंसकं 'नभ्राड्'—(६. ३. ७५) इत्यादिसूत्रेण निपातितम्॥

**शिशुत्वं शैशवं बाल्यं**

**क्षीर०**—शिशोर्भावः शैशवम्। 'प्राणभृज्जाति—' (५. १. १२९) इत्य(ण्? ञ्)॥

**टीका०**—शिशुत्वत्रयं बालभावे शिशुकर्मणि च। शिशोर्भावः शिशुत्वम्। 'तस्य भावस्त्वतलौ' (५. १. ११९)। 'इगन्ताच्च लघुपूर्वात्' (५. १. १३१) इत्यणि शैशवम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५. १. १२४) इति ष्यञ्। बाल्यम्॥

**तारुण्यं यौवनं समे।**

**क्षीर०**—यूनो भावो यौवनम्। 'हायनान्तयुवादिभ्योऽण्' (५. १. १३०)॥

**टीका०**—तारुण्यद्वयं यौवने। पूर्ववत् ष्यञ्। तारुण्यम्। 'हायनान्तयुवादिभ्योऽण्' (५. १. १३०)। यौवनम॥

**स्यात् स्थाविरं तु वृद्धत्वं**

**क्षीर०**—स्थविरस्य भावः स्थाविरम्। 'हायनान्त—' (५. १. १३०) इत्यण्॥

**टीका०**—स्थाविरद्वयं वृद्धभावे। युवाद्यणि स्थाविरम्। शिशुत्ववद् वृद्धत्वम्॥

**वृद्धसङ्घेऽपि[1] वार्द्धकम्॥ ४०॥**

**क्षीर०**—'गोत्रोक्षोष्ट्र—' (४.२.३९) इत्यत्र 'वृद्धाच्च' इति वक्तव्याद् वुञ्। मनोज्ञादित्वाद् भावकर्मणोरप्याहुः। यथा—"वार्द्धके मुनिवृत्तीनाम्" (रघु० स० १. श्लो० ८)॥

1. 'तु' ख. पाठः.

टीका० — वृद्धमेलककर्मभावेषु वार्द्धकम् । सङ्घेऽपीत्यपिशब्देन कर्मभावौ समुच्चीयेते ।

"भावे कर्मणि वृद्धस्य वार्द्धकं निकुरुम्बके"

इति वोपालितः। तत्र भावकर्मणोः 'द्वन्द्वमनोज्ञादिभ्यश्च' (५. १. १३३) इति वुञ्। समूहे तु 'वृद्धाच्चेति वक्तव्यम्' (वा० ४. २. ३९) इति वुञ्।

"वार्द्धक्यं श्लथसन्धिबन्धनतया निःस्थाननिर्धाम च"

इति शिष्टप्रयोगो ब्राह्मणादेराकृतिगणत्वात् कुत्साकप्रत्ययान्तात् ष्यञि यथाकथञ्चिद् व्युत्पादनीयः ॥

**पलितं जरसा शौक्ल्यं केशादौ**

**क्षीर० — पलति शोभानेन पलितम् । 'पल गतौ' । आदिशब्दाद् रोमादौ च ॥**

टीका० — केशे लोम्नि च यज्जरसा शौक्ल्यं, तत् पलितम् । 'फल निष्पत्तौ'। 'लोष्टपलितौ' (उ० ३. ९२) इति क्तप्रत्ययः फकारस्य पकारः इडागमश्च निपात्यते ॥

**विस्रसा जरा ।**

**क्षीर० — विस्रंसतेऽनया रुजा अङ्गं विस्रसा । जीर्यन्त्यनया जरा । 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) ॥**

टीका० — विस्रसाद्वयं जरायाम् । 'स्रन्सु अधःपतने' । भिदाद्यङ्। 'गुरोश्च हलः' (३. ३. १०३) इत्यकारप्रत्ययो वा । विस्रसा द्विदन्त्या । 'जॄष् वयोहानौ । षित्त्वादङ् । 'ऋदृशोऽङि गुणः' (७. ४. १६) । जरा ॥

**स्यादुत्तानशया डिम्भा स्तनपा च स्तनन्धयी ॥ ४१ ॥**

**क्षीर० — उत्ताना शेते उत्तानशया । 'अधिकरणे शेतेः' (३. २. १५) इत्यत्र 'उत्तानादिषु कर्तृषु' इत्युक्तम् । डिम्भेति । प्राक् पक्षिक्रमे-**

---

१. 'षृ क्षृष् व' क. ख. च झ. पाठः. २. 'त्वच् । डि' ख. पाठः.

णोक्तम् इह तु मानुषक्रमात् । स्तनं पिबति स्तनपा । 'सुपि' (३. २. ४) इति योगविभागात् कः । स्तनं धयति स्तनन्धयी । 'नासिकास्तनयोर्ध्माधेटोः' (३. २. २९) । खश् । धेटष्टित्त्वाद् ङीप् । स्त्रीलिङ्गेन[1] निर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः ॥

टीका० — उत्तानशयाचतुष्कमतिबालायाम् । 'त्रिषु जरावराः' इति वक्ष्यमाणवचनात् त्रिलिङ्गत्वम् । स्त्रीलिङ्गनिर्देशस्तु कामचारात् । उत्ताना शेत इत्युत्तानशया । 'उत्तानादिषु कर्तृषूपसङ्ख्यानम्' (वा०३. २. १५) इत्यच् । 'पुंवत् कर्मधारय—' (६. ३. ४२) इति पुंवद्भावः । डिम्भेति । 'डभि डिभि सङ्घाते' । डम्भ डिम्भ इत्येके । चुरादिपचादी । सिंहादिवर्गे पोतसामान्यपठितस्यापि डिम्भशब्दस्य पुनर्मनुष्यवर्गेऽभिधानमुत्तानशय एव मनुष्यशिशावस्य प्रवृत्तिः अन्यत्र प्रौढे मा भूदिति, अण्डजादीनां तूत्तानशयेऽनुत्तानशयेऽपि वृत्तिरिति सूचनार्थम् । स्तनपेति । 'आतोऽनुपसर्गे कः' (३. २. ३)। स्तनौ धयति पिबतीति स्तनन्धयी । 'नासिकास्तनयोर्ध्माधेटोः' (३. २. २९) इति खश् । धेटष्टित्त्वात् 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप् ॥

**बालस्तु स्यान्माणवकः**

क्षीर० — बलति प्राणिति बालः । ज्वलादित्वाण्णः । 'बाड़ आप्लाव्ये' । अस्माद्वा ।

"अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः" ॥

स्वार्थे कन् ॥

टीका० — बालद्वयं षोडशवर्षपर्यन्ते । तथा च मनुः —
"आ षोडशाद् भवेद् बालस्ततस्तरुण उच्यते" ।

1. 'ङ्गेन' ख. पाठः.

'वल वल्ल संवरणे'। 'अकर्तरि च—' (३.३.१९) इति घञ्। वबयोरेकत्व-स्मरणम्। बालः। 'बल भृताविति' चौरादिकाद् वा पचाद्यजन्तः।

"अज्ञाते कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य तु मूर्धन्यस्तेन सिध्यति माणवः" ॥

माणव एव माणवकः। स्त्रियां माणविका।

"हारभेदे माणवको बाले कुपुरुषेऽपि च"

इति रभसः॥

**वयःस्थस्तरुणो युवा।**

**क्षीर०—वयसि प्रत्यग्रे तिष्ठति वयःस्थः। तरति तरुणः। यौति मिश्रीभवति स्त्रिया युवा॥**

**टीका०—** वयःस्थत्रयं **तरुणे**।

"वयो बाल्यादि पक्षी च यौवनं च क्वचिद् वयः"

इति रुद्रः। अतो वयसि यौवने तिष्ठतीति वयःस्थः। 'सुपि स्थः' (३.२.४) इति कः। 'स्थे च भाषायाम्' (६.३.२०) इति सप्तम्या अलुङ् न भवति। तरतेः 'त्रो रश्च लो वा' (उ०३.५४) इत्युनन्। रेफस्य वा लत्वम्। तरुणः। यौतेः वृषन्शब्दवत् कनिन्। युवा नान्तः॥

**प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि॥ ४२॥**

**क्षीर०— प्रगतं वयोऽस्य प्रवयाः। तिष्ठति स्थविरः। वर्धते स्म वृद्धः। एवमादौ गड्डरिकाप्रवाहेण भूते क्तः। वर्तमाने तु युक्तः। शीलितादिवत्। जिनाति स्म जीनः। ग्रहिज्यादिना सम्प्रसारणम्। ल्वादित्वान्निष्ठानत्वम्। जीर्यते स्म जीर्णः। 'श्र्युकः किति' (७.२.११) इत्यनिट्। 'जीर्यतेरतृन्' (३.२.१०४)। जरन्॥**

**टीका०—** प्रवयष्षट्कं **वृद्धे**। प्रगतं वयो यौवनमस्येति प्रवयाः सान्तः। तिष्ठतेः शिशिरवन्निपातनात् स्थविरः। 'वृधु वृद्धौ'। क्तः। वृद्धः। 'ज्या वयोहा-

१. 'च। अ', २. 'का' ङ. छ. पाठः. ३. 'श्रयति', ४. 'ठसारिका' क. ग. घ. ङ. पाठः.

नौ'। 'ल्वादि‡भ्यश्च' (८.२.४४) इति निष्ठानत्वम्। ग्रह्यादिसम्प्रसारणम्। 'हलः' (६. ४. २) इति दीर्घः। जीनः। 'जॄष् झॄष् वयोहानौ'। गत्यर्थादिना क्तः। 'ॠत इद्धातोः' (७. १. १००) इतीकारः। रपरत्वम्। 'हलि च' (८. २. ७७) इति दीर्घः। जीर्णः। 'जीर्यतेरतृन्' (३. २. १०४) जरन्। स्त्रियां जरती॥

**वर्षीयान् दशमी ज्यायान्**

क्षीर०—अतिशयेन वृद्धो वर्षीयान्। ईयसुनि 'प्रियस्थिर—'(६. ४. १५७) इति वर्षिआदेशः। दशमोऽवस्थाविशेषोऽस्यास्ति दशमी। 'वयसि पूरणात्' (५. २. १३०) इतीनिः।

"इष्टो वयोदशोपेतः पञ्चमी सप्तमीति च"।

अतिशयेन वृद्धो ज्यायान्। 'ज्य च' (५. ३. ६१) 'वृद्धस्य च' (५. ३. ६२) इति ज्यादेशः। 'ज्यादादीयसः' (६. ४. १६०) इत्यात्वम्॥

टीका०— वर्षीयस्त्रयमतिवृद्धे। 'प्रियस्थिर—' (६. ४. १५७) इत्यादिना वृद्धस्य वर्षिआदेशः ईयसुन्प्रत्ययोऽपि। नवतेरूर्ध्वं दशमोऽवस्थाविशेषोऽस्यास्तीति दशमी नान्तः। 'वयसि पूरणात्' (५. २. १३०) इतीनिः। ज्यायानिति। 'वृद्धस्य च' (५. ३. ६२) इति वृद्धशब्दस्य ज्यादेशः ईयसुन् च[१]। 'ज्यादादीयसः' (६. ४. १६०) इत्यात्वम्। स्त्रियां दशमिनी ज्यायसी च॥

**पूर्वजस्त्वग्रियोऽग्रजः।**

क्षीर०—अग्रे जातोऽग्रियः। 'अग्राद् यत्' (४.४. ११६)। 'घच्छौ च' (४.४. ११७) इति घः। अग्रयाग्रीयौ च। अग्रिमपाठे '*अग्रपश्चाड्डिमच्' (वा० ४. ३. २३)॥

१. 'प्रत्ययोऽपि। ज्या' ङ. च. छ. पाठः.

‡ 'भ्यः' इति मुद्रिताष्टाध्यायीपाठः। * 'अग्रादिप' इति मुद्रितवार्त्तिकपाठः

टीका०— पूर्वजत्रयं ज्येष्ठभ्रातरि । पूर्वस्मिन् काले जातः पूर्वजः । 'सप्तम्यां जनेर्डः' (३. २. ९७)। अग्रे भवोऽग्रियः । अग्रादित्यनुवर्तमाने 'घच्छौ च' (४. ४. ११७) इति घः । छान्दसोऽप्ययं कविभिर्नियुक्तत्वाद् भाषायां निबद्धः ॥

**जघन्यजे स्युः कनिष्ठयवीयोवरजानुजाः ॥ ४३ ॥**

क्षीर० — जघन्यजः पश्चाज्जातः । अत्यर्थं युवा कनिष्ठः यवीयांश्च । 'युवाल्पयोः कनन्यतरस्याम्' (५. ३. ६४)। 'स्थूलदूर —' (६. ४. १५६) इति यणादिलोपः पूर्वस्य च गुणः । एवं कनीयान् यविष्ठश्च । अवरे जायतेऽवरजः ॥

टीका० — जघन्यजपञ्चकं कनिष्ठे । जघन्ये अर्वाचीने काले जातो जघन्यजः । कनिष्ठ इति । अतिशयार्थे युवशब्दस्य इष्ठनि परतः 'युवाल्पयोः कनन्यतरस्याम्' (५. ३. ६४) इति कनादेशः । यवीय इति युवन्शब्दस्य ईयसुन् । 'स्थूलदूरयुव—' (६. ४. १५६) इत्यादिना वन्शब्दलोपः पूर्वस्य च गुणः । अवरस्मिन् काले जातोऽवरजः । अनु पश्चाज्जातोऽनुजः । 'अन्येष्वपि दृश्यते' (३. २. १०१) इति डः ॥

**अमांसो दुर्बलश्छातः**

क्षीर० — छ्यति स्म छातः । 'छो छेदने' ॥

टीका० — अमांसत्रयं दुर्बले । अल्पमांसोऽमांसः । अल्पार्थे नञ् । दुः निन्दितं बलमस्येति दुर्बलः । 'छो छेदने' । बहुलवचनात् हसिमृग्रिण्वादिना तन् । छातः । शात इति क्वचित् पाठः । तदा श्यतेः क्तः । तथा च—

"दुर्बले निशिते स्यातां शितशाताविमौ त्रिषु"

इति तालव्यादौ रभसः ॥

१. 'रो जातोऽव' ख. पाठः.

**बलवान् मासलोऽसलः ।**

क्षीर० — सिध्मादित्वाल्लच् । अंसावस्य स्तोंऽसलः । 'वत्सांसाभ्यां कामबले' (५. २. ९८) इति लच् ॥

टीका० — बलवत्त्रयं स्थूले । बलं स्थौल्यं तद्योगान्मतुप् । मांसयोगान्मांसलः । सिध्मादिलच् । 'वत्सांसाभ्यां कामबले' (५. २. ९८) इति मत्वर्थे लच् । अंसलः दन्त्यवान् ॥

**तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥ ४४ ॥**

क्षीर० — तुन्दं पिचण्डोऽस्यास्ति । 'तुन्दादिभ्य इलच्च' (५. २. ११७) इति चादिनिठनौ । उदरिलोऽपि । तुन्दिरस्यास्ति तुन्दिभः । 'तुन्दिवलिवटेर्भः' (५. २. १३९) ॥

टीका० — तुन्दिलपञ्चकं बृहत्कुक्षौ । तुन्दयोगात् 'तुन्दादिभ्य इलच्च' (५. २. ११७) । तुन्दिलः । चकारादिनिठनौ मतुप् च । तेन तुन्दिकः तुन्दी च । प्रसिद्धत्वान्मतुपा न दर्शितः वृत्तावुक्त एव । पिचण्डमुदरं तद्योगात् तुन्दादिपाठादिलच् । पिचण्डिलः ॥

**अवटीटोऽवनाटश्चावभ्रटो नतनासिके ।**

क्षीर० — 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (५. २. ३१) नतनासिकश्चिपिटघोणः । नतायां नासायां नासानमनेऽप्येते[1] वर्तन्ते ॥

टीका० — अवटीटत्रयं नासिकासम्बन्धिनि नमने । तद्योगान्नासिकाप्येभिरुच्यते । तथा च — "अवनाटनासिकम्" इति बाणः । तद्योगान्नतनासिकेऽपि पुरुषेऽमी । 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (५. २. ३१) । अवटीटः अवनाटः अवभ्रटः । नतनासिक इति बहुव्रीहिः ॥

**केशवः केशिकः केशी**

---

१. 'चै' ख. पाठः.

क्षीर०—प्रशस्ताः केशाः सन्त्यस्य केशवः। 'केशाद् वोऽन्यतरस्याम्' (५.२.१०९)॥

टीका०—केशवत्रयं बहुकेशे। 'केशाद् वोऽन्यतरस्याम्' (५.२.१०९) इति मत्वर्थीयो वः। केशवः। पक्षे इनिठनौ। केशी केशिकः॥

**वलिनो वलिभः समौ ॥ ४८ ॥**

क्षीर०—वलिस्त्वक्सङ्कोचोऽस्यास्ति। पामादित्वान्नः। 'तुन्दिवलिवटेर्भः' (५.२.१३९)॥

टीका०—वलिनद्वयं जराश्लथचर्मयुक्ते। पामादित्वान्मत्वर्थीयो नः। 'तुन्दिवलिवटेर्भः' (५.२.१३९)। वलिभः॥

**विकलाङ्गस्तु पोगण्डः**

क्षीर०—पूयते अपसार्यते पोगण्डः॥

टीका०—विकलाङ्गद्वयं न्यूनाधिकाङ्गे। "पोगण्डो विकलाङ्गः स्यात्" इति हलायुधः। "पोगण्डो विकलाङ्गकः" इति रत्नकोशश्च। अतः पकारादिः

"अपोगण्डस्तु वलिभिर्व्याप्तदेह उदीरितः।
शिशुर्दश समा यावदपोगण्डः स्मृतो बुधैः॥"

इति तु धरणिः। अपकृष्टं गण्यत इत्यपोगण्डः। 'गण गणने'। 'अमन्ताड्डः' (उ० १.११९)। पक्षे पृषोदरादित्वादवर्णलोपः ओत्वं च॥

**खर्वो ह्रस्वश्च वामनः।**

क्षीर०—खर्वति खर्वः। ह्रसति ह्रस्वः। वामोऽस्यास्ति वामनः 'निखर्वः खर्दनः खर्वा' इति नाममाला॥

टीका०—खर्वत्रयं वामने पुरुषे। विशेष्यनिघ्ने खर्वत्रिकं ह्रस्वमात्र इति न पुनरुक्तिः। 'कर्व खर्व गर्व दर्पे'। 'अकर्तरि च—' (३.३.१९) इति घञ्

खर्वः । 'तुस ह्रस ह्लस रस शब्दार्थाः' । 'अशूप्रुषि'—(उ० १. १५७) इत्यादिना बाहुलकः कन् ह्रस्वः । मन इव वामनः वाशब्द उपमार्थः । पृषोदरादित्वात् सकारस्य अकारः ॥

**खरणाः स्यात् खरणसः**

क्षीर०—**खरा तीक्ष्णा खरस्येव वा नासिकास्य खरणाः** *'**खरखुराभ्यां नस् वा वक्तव्यः**' (वा० ५. ४. ११८) । पक्षे '**अच् नासिकायाः संज्ञायां नसं चास्थूलात्**' (५. ४. ११८) । '**पूर्वपदात् संज्ञायाम्**—'(८. ४. ३) **णत्वम्** । **क्षुद्रः क्षुद्रनासिकः** ॥

**टीका०**— खरणोद्वयं **गर्दभसमाननासिके** । *'खरखुराभ्यां नस् वक्तव्यः' (वा० ५. ४. ११८) इति नासिकाया नस्भावः । 'पूर्वपदात् संज्ञायामगः' (८. ४. ३) इति णत्वम् । खरणाः सान्तः । पक्षे 'अच्प्रत्ययोऽपीष्यते' इत्यच् ॥

**विग्रो विगतनासिकः ॥ ४६ ॥**

**क्षीर०**—'**वेर्ग्रो वक्तव्यः**' (वा० ५. ४. ११९) ॥

**टीका०**—छेदनादिना **गतनासिके** विग्रद्वयम् । 'वेर्ग्रो वक्तव्यः' (वा० ५. ४. ११९) इति नासिकाया ग्रभावः । कवर्गद्वितीयादिरित्यन्यः ।

" खरणाः स्यात् खरणसो विग्रो विख्रो विनासिकः"

इति रभसश्च । कवर्गद्वितीयादिरुदन्तश्चेति शाकटायनः । कातन्त्रटीकायां च दुर्गसिंहेनोक्तं—

"विशब्दादपि खुखूग्राः स्युर्मतान्तरचोदिताः ।
विखुर्विखूस्तथा विग्रो नासाया विगमादिति ॥"

यत्तु "विनसा हतबान्धवा" (स०५. श्लो०८) इति भट्टिः । 'णस कौटिल्ये' विपूर्वात् पचाद्यचि साधुः । अपरे तु नासिकापर्यायो नसाशब्दोऽस्तीति वर्णयन्ति ॥

* 'खरखुराभ्यां वा नस्' इति मुद्रितवार्तिकपाठः ।

**खुरणाः स्यात् खुरणसः**

क्षीर०—खुराकारा नासिका अस्य खुरणाः विकटघोणः ॥

टीका०—खुरणआदिद्वयं तीक्ष्णनासिके । पूर्ववन्नसादेशादि ॥

**प्रज्ञुः प्रगतजानुकः ।**

**ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात् संज्ञुः संहतजानुकः ॥ ४७ ॥**

क्षीर०—प्रगते विरले वातादिदोषात्, तथा ऊर्ध्वे संहते च जानुनी अस्य । 'प्रसंभ्यां जानुनो ज्ञुः' (५. ४. १२९) । 'ऊर्ध्वाद् विभाषा' (५. ४. १३०) ॥

टीका०—यस्य नित्यं कादाचित्कं वा जानुनोर्मध्ये महदन्तरालं स प्रज्ञुः । प्रगते परिणाहेन गते जानुनी अस्येति प्रज्ञुः । 'प्रसंभ्यां जानुनो ज्ञुः' (५. ४. १२९) इति ज्ञुः । अदन्तोऽयमित्येके । तथाच शाकटायनसूत्रं—'संप्राज्जानुनो ज्ञुज्ञौ' इति ।

"संप्राभ्यां जानुनो ज्ञुज्ञावूर्ध्वं तु स्याद् विभाषया ।
संहते जानुनी यस्य संज्ञुः संज्ञः स उच्यते" ॥

कातन्त्रटीकापि । ऊर्ध्वं तिष्ठतो यस्य दूरमुखे जानुनी भवतः, असावूर्ध्वज्ञुः । विभाषा' (५. ४. १३०) इति ज्ञुः । संघाडाआं इति ख्याते संज्ञुद्वयम् । प्रज्ञुवद् रूपम् ॥

**स्यादेडे बधिरः**

क्षीर०—एडः पशुरिव एडः । बद्धौ कर्णावस्य बधिरः ॥

टीका०—एडद्वयं बधिरे । शब्दमगृह्णन् कर्णो बधिरः । 'बध बन्धने' । किरच् । तथा महाभारते—"कर्णौ मे बधिरीकृतौ" । तद्योगात् पुरुषोऽपि

अथ ह्री. क. ख. ज. झ. पाठः.

बधिरः। 'स्वाङ्गाद्धीनात्' (ग० ५. २. १२७) इत्यर्शआदिगणसूत्रेण अच्।

**कुब्जे गडुलः**

**क्षीर०—कुत्सित उब्जः कुब्जः। पृषोदरादिः। गडुरस्यास्ति गडुलः। सिध्मादित्वाल्लच्॥**

टीका०—कुब्जद्वयं कुब्जे। 'उब्ज आर्जवे'। कुत्सितमुब्जतीति कुब्जः। शकन्ध्वादिः। पृष्ठगुडको गडुः तद्योगात् सिध्मादिलच्। गडुलः॥

**कुकरे कुणिः।**

**क्षीर०— 'कुण शब्दे'। 'कुपाणिः कुणिरि'ति नैरुक्ताः।**
**"कलम्बकस्त्ववाक्कर्णः खलतिस्त्वैन्द्रलुप्तिकः"॥**

टीका०—कुकरद्वयं कुम्प इति ख्याते। कुत्सितः करः कुकरः अर्शआद्यच्। 'कुण शब्दोपकरणयोः'। 'इगुपधात् किः' (उ० ४. १२१) इति किः। कुणिर्ह्रस्वादिरिति गोवर्धनीयोणादिवृत्तिः।

"नन्दीवृक्षे कुणिः पुंसि कुकरेऽप्यन्यलिङ्गकः"

इति कोशान्तरम्। 'कूण सङ्कोचने'। चुरादिर्दीर्घादिरिति धातुप्रदीपः तथा च—"कूणं बाहुयुगमि"ति भासकविः॥

**पृश्निरल्पतनौ**

**क्षीर०—स्पृश्यते पृच्छ्यते वा पृश्निः॥**

टीका०—पृश्निद्वयमल्पदेहे। 'स्पृश संस्पर्शे'। 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि' (उ० ४. ५३) इत्यनेन निप्रत्ययगुणाभावसलोपा निपात्यन्ते। 'पृषु सेचने'। पृश्निरिति गोवर्धनः। षकारस्य शकारः। शेषं समानम्॥

१. 'यः', २. 'पौ', ३. 'ते' ङ. छ. पाठः.

१ 'कित्', * 'चूर्णिभूर्णि' [illegible]पाठः

**श्रोणः पङ्गौ**

क्षीर०—'श्रोणृ सङ्घाते'। कुटिलजङ्घापादः॥

टीका०— श्रोणद्वयं जङ्घाविकले। 'श्रु श्रवणे'। 'धापॄवस्यज्यतिभ्यो नः' (उ० ३. ६) इति बाहुलको नः। श्रोणः। 'स्पदि किञ्चिच्चलने'। 'बहुलमन्यत्रापि' (उ० १. ११६) इति कुप्रत्ययः सकारलोपः दकारस्य च गकारः। पङ्गुः। स्त्रियां 'पङ्गोश्च' (४. १. ६८) इत्यूङि पङ्गूरिति रूपम्॥

**मुण्डस्तु मुण्डिते॥४८॥**

क्षीर०—मुण्ड्यते मुण्डः॥

टीका०—मुण्डद्वयं मुण्डितमस्तके। 'मुडि मार्जने'। पचाद्यच्। मुण्डः। स्त्रियां मुण्डा। क्तप्रत्ययेन मुण्डितः॥

**वलिरः केकरे**

क्षीर०—वलते वेष्टते[1] वलिरं नेत्रं तद्योगाद् वलिरः। के मूर्ध्नि करोत्यक्षिणी[2] चलत्तारकत्वात् केकरः। एनमुपाध्यायः काचर[3] इत्याख्यत्॥

टीका०—वलिरः केकरे[4]। वर्तत इति शेषः। वलते स्वरश्मिभिः स्वविषयं चेष्टत इति वलिरशब्देन चक्षुरभिधीयते, अत्र तु नेत्रतारकमपाङ्गं प्रत्याकृष्यावेक्षके पुरुषे मत्वर्थलक्षणया वलियोगाद् वर्तते। के शिरोन्तिके कर्णाभ्यर्णभागे करोत्यक्षिरश्मिसञ्चारमिति केकरः। 'डुकृञ् करणे' इति धातुः॥

**खोडे खञ्जः**

क्षीर०—'खुड प्रतिघाते'। 'खञ्ज गतिवै[5]कल्ये'। खञ्जः। दुश्चर्मा दुरश्मोऽपि॥

१. 'ते वलिरः। व' क. ग. घ. ङ. पाठः. २. 'त्यत्राक्षीणि च' ख. पाठः. ३. 'खचर इ' ख. पाठः. ४. 'रे। वलिरद्वयं टेरे। 'टेरे वलिरकेकरौ' इति रभसः। व' क. ख. ग. पाठः. ५. 'द्वि' क. ग. घ. ङ. पाठः.

टीका० — खोडद्वयं खोडे । 'खुडि गतिवैकल्ये' । 'खजि गतिवैकल्ये' । कृतादित्वादुभयत्राच्प्रत्ययः । बहुलवचनात् खुडेर्नुमागमाभावो गुणश्च । खोडः खञ्जः तद्योगादुभयत्र बधिरवदच् । "अथ खञ्जके । खोडखोरौ" इति रभसः ॥

त्रिषु जरावराः ।

क्षीर० — जराशब्दादुत्तरा उत्तानशयादयः खञ्जान्तास्त्रिलिङ्गाः ॥

टीका० — जराशब्दादवरा अर्वाचीना उत्तानशयाद्याः खञ्जान्ता- स्त्रिषु ॥

जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥

क्षीर० — जडति जडुलः ज(न्तुलोमज?डुलो लोमश)त्वाद् वा । काल एव कालकः । देहे कृष्णं लक्ष्म ॥

टीका० — जटुलत्रयं जरुड इति ख्याते । पञ्चापीत्यन्ये । 'जट झट सङ्घाते' । 'हृषेरुलच्' (उ० १. १०१) इति बाहुलक उलच् । जटुलः । काल इव कालकः । इवार्थे कः । पिप्लुः खरुशङ्कादौ द्रष्टव्य इति कलिङ्गः । साह- चर्याच्च पुंस्त्वम् । तिलकद्वयं तिलकाकृतौ देहकालके । तथा च—

"कृष्णानि तिलमात्राणि नीरुजानि समानि च ।
वातपित्तमलोत्सेकात् तान् विद्यात् तिलकालकान् ॥"

इति । तिलवत् कालकास्तिलकालकः । तदुक्तं — 'न हि गौरपिप्लुना तिलका- लकेन वा कुष्ठं भवति' ॥

अनामयं स्यादारोग्यं

क्षीर० — आमयस्याभावोऽनामयम् । 'अव्ययं विभक्ति—' (२ १. ६) इत्यर्थाभावेऽव्ययीभावः ॥

---

१. 'तु', २. 'तुलो जतुमस्त्वा' ग. घ. पाठः. ३. 'नापि वा' ङ. छ. पाठः.

टीका० — अनामयद्वयं रोगाभावे। न विद्यते आमयोऽस्मिन्निति बहुव्रीहिः। अरोगभाव आरोग्यम् ॥

**चिकित्सा रुक्प्रतिक्रिया।**

क्षीर० — कितेर्व्याधिप्रतीकारे सन् ॥

टीका० — रुजो व्याधेः प्रतिक्रिया चिकित्सा। 'कित निवासे'। 'गुप्तिज्किद्भ्यः सन्' (३. १. ५) इति व्याधिप्रतीकारे सन्। 'अ प्रत्ययात्' (३. ३. १०२) इत्यकारप्रत्ययः। टाप् च ॥

**भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥**

क्षीर०— भिषज्यन्त्यनेन भिषज इति भेषजम्। भिषज् कण्ड्वादिः। 'अनन्तावसथेतिहभेषजाञ्ञ्यः' (५. ४. २३) इति ञ्याभावे भेषजम्। भेषं रोगं जयतीति दुर्गः। 'ओषधेरजातौ' (५. ४. ३७) स्वार्थेऽण्। 'अनन्तावसथेतिहभेषजाञ्ञ्यः' (५. ४. २३) स्वार्थे। भैषज्यम्। अविद्यमानो गदोऽस्यागदः। जयति रोगान जायुः ॥

टीका० — भेषजपञ्चकमौषधे। भिषग् वैद्यः, 'तस्येदम्' (४. ३. १२०) इत्यण्। पृषोदरादित्वादेत्वम्। भेषजम्। औषधमिति। ओषधेरजातौ' (५. ४. ३७) इत्यण्। 'अनन्तावसथेतिहभेषजाञ्ञ्यः' (५. ४. २३)। भैषज्यम्। नास्ति गदोऽस्मिन्नित्यगदः। जयति रोगानिति जायुः। 'कृवापाजि —' (उ० १. १) इत्यादिना उण् ॥

**स्त्री रुग् रुजा चोपतापरोगव्याधिगदामयाः।**

क्षीर० — रुज्यन्तेऽनया रुक्। क्विप्। रुजा। भिदाद्यङ्। व्याधीयतेऽपथ्यैर्व्याधिः। गदति व्यथां गदः। आमिनोत्यामयः। 'अम रोगे' अस्माद् वा। आमोऽपि ॥

टीका० — रुक्सप्तकं रोगसामान्ये। 'रुजो भङ्गे'। सम्पदादिपाठाद् अकर्तरि च कारके क्विप्। रुजेति। भिदादिपाठाद् अकर्तरि च कारके

अङ्। उपतापयति मानसमित्युपतापः। पचादिः। अकर्तरि च कारके घञि वा पचाद्यचि वा रोगः। विविधा आधयो मनसः पीडा अत इति व्याधिः। गद इति। 'गद व्यक्तायां वाचि'। 'खनो घ च' (३. ३. १२५) इति घित्करणाद(न्य)त्रापि घः। 'स्तन गदी देवशब्दे' इत्यतः कृताद्यकारप्रत्ययान्तो वा। 'अम रोगे'। चुरादिः। पचाद्यच्। आमयो दीर्घादिः। अनित्यत्वाद् 'णेरनिटि' (६. ४. ५१) इति न णिलोपः। तथा(च) "पीते यूषिण निरामयः" इति॥

**पुमान् यक्ष्मा क्षयः शोषः**

**क्षीर०— यक्ष्यते पूज्यते रोगराजत्वाद् यक्ष्मा। राजयक्ष्मापि। क्षीयतेऽनेन क्षयः। शुष्यन्त्यनेन शोषः॥**

टीका०— क्षयत्रयं क्षयरोगे। 'क्षीष् हिंसायाम्'। पचादिः। क्षयः। शुषेः पचाद्यच्। शोषः। 'यक्ष पूजायाम्'। चुरादिः। *'मनिन्' (उ० ४.१४६) इति मनिन्। यक्ष्मा॥

**प्रतिश्यायस्तु पीनसः॥ ५१॥**

**क्षीर०— प्रतिश्यायते स्रवति प्रतिश्यायः। 'श्याद्व्यधा—' (३. १. १४१) इति णः। पीनं स्यति अन्तं नयति पीनसः॥**

टीका०— प्रतिश्यायद्वयं पडिस इति ख्याते। 'श्यैङ् गतौ' रुजत्यर्थः। 'श्याद्व्यधा—' (३. १. १४१) इत्यादिना णः। आतो युक्। प्रतिश्यायः। पीनमवसाययति श्यति तनूकरोति वा पीनसो दन्त्यसस्तालव्यशो वा। वैद्यके तु पृथगेवेदं नामद्वयम्॥

**स्त्री क्षुत् क्षुतं क्षवः पुंसि**

**क्षीर०— क्षवणं क्षुत्। क्विप्। क्तः। अप्॥**

टीका०— क्षुत्त्रयं भाञ्जि इति ख्यातायाम्। 'टु क्षु शब्दे'। सम्पदादिक्विप्। क्षुत्। 'नपुंसके भावे क्तः' (३, ३. ११४)। क्षुतम्। 'ऋदोरप्' (३. ३. ५७)। क्षवः॥

*सर्वधातुभ्यो मनिन् इति मुद्रितोणादिपाठः।

**कासस्तु क्षवथुः पुमान् ।**

क्षीर०— कासतेऽनेन कासः । क्षौत्यनेन क्षवथुः ॥

टीका०— कासद्वयं कासे । 'कासृ शब्दकुत्सायाम्' । दन्त्यान्तः । भावे घञ् । कासः । पचाद्यचि वा । क्षवथुरिति । 'टु क्षु शब्दे' । 'ट्वितोऽथुच्' (३. ३. ८९) ॥

**शोफस्तु श्वयथुः शोथः**

क्षीर०— शवति विसर्पति शोफः शोथश्च । शूयतेऽनेन श्वयथुः ॥

टीका०— शोफत्रयं शोफे । 'शुष शुन्फ ग्रन्थे' । तालव्यशः । 'अकर्तरि च—' (३. ३. १९) इति घञ् । शोफः । 'टुओश्वि गतिवृद्ध्योः' । 'ट्वितोऽथुच्' (३. ३. ८९) । श्वयथुः । 'शु गतौ' । बाहुलकस्थन् । शोथः ॥

**पादस्फोटो विपादिका ॥ ५२ ॥**

क्षीर०— 'पादशतस्ये त्यन्यत्रापि' (वा०५. ४. १) इति वक्तव्याद् वुन्लोपौ वा ॥

टीका०— पादस्फोटद्वयं पावाभट्ट इति ख्याते । विपूर्वात् पदेः 'रोगाख्यायां ण्वुल् बहुलम्' (३. ३. १०८) इति ण्वुल् । विपादिका ॥

**किलाससिध्मे**

क्षीर०— सर्म इति शपः । के लसति किलासम् । सिध्यति सिध्मम् । श्वित्राख्यम् । सिध्मेति नान्तोऽपि ॥

टीका०— किलासद्वयं सिहुळीति ख्याते । कुत्सितं लस्यते श्लिष्य-

१. 'थं', २. 'थे' ङ. छ. पाठः. ३. 'गु' ङ. छ, 'भु' क. ख. च, 'हुल्मीति' ज. पाठः

तेऽनेनेति किलासम् । पृषोदरादिः । *'षिधू हिंसासंराध्योः' । मनिन् । सिध्म नान्तम् । "सिध्मं शुष्मं कुट्टिमं युग्मम्" इत्यदन्तेऽप्यरुणः । सद्वयं दन्त्यम् ॥

**कच्छूर्ना तु पाम पामा विचर्चिका ।**

**क्षीर०— कषति कच्छूः । पिबन्त्यङ्गं पाम । पामा । 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३) । विचर्चयति विचर्चिका । गुल्फादिसन्धिषु सूक्ष्मपिटकः ॥**

टीका०—कच्छूचतुष्कं **खसुरोगे** । 'कष शिष जष झष हिंसार्थाः' । 'कषेश्छश्च' (उ०१. ८७) इत्यूप्रत्ययः छश्चान्तादेशः । कच्छूर्दीर्घान्ता । 'पा पाने' । मनिनि पामा नान्ता । पक्षे 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३) इति पामा डाबन्ता । 'चर्च सङ्ख्याने' । चुरादिः । 'रोगाख्यायां ण्वुल् बहुलम्[१]' (३. ३. १०८) इति ण्वुल् । विचर्चिका ॥

**कण्डूः खर्जूश्च कण्डूया**

**क्षीर०— कण्डूतिः कण्डूः । भावे क्विप् । 'अ प्रत्ययात्' (३. ३. १०२) । खर्जयति खर्जूः ॥**

टीका०—कण्डूत्रयं **कण्डूयायाम्** । 'कड मदे' । 'कडेर्नुम् च' इत्यूप्रत्ययः । कण्डूर्दीर्घान्ता । कण्ड्वौ कण्ड्वः इति रूपम् । 'खर्ज मार्जने' । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (उ०१. ८४) । खर्जूर्दीर्घान्ता । कण्डूयेति । कण्डूर्नामधातुः । 'कण्ड्वादिभ्यो यक्' (३. १. २७) । 'अ प्रत्ययात्' (३. ३. १०२) इति भावे अकर्तरि कारके वा अप्रत्ययः । कण्डूतिरसाधुरिति भागवृत्तिः । बहुलवचनात् क्तिना साधुरिति रक्षितः । तथा च—"कण्डूतिर्वपनादपैति शिरसः" इति माधुराजः ॥

**विस्फोटः पिटकास्त्रिषु ॥ ५३ ॥**

१. 'मा सड।' ख. २. 'ण्डूः कण्डूया भा' ख. ३. 'ण्ड्वादिर्नाम' क. ख. च. झ.

* 'षिधु संराद्धौ' इत्येव मुद्रितधातुपाठे दृश्यते ।

क्षीर० — विस्फोटति विस्फोटा। पिटति संश्लिष्यति पिटकः।

टीका० — विस्फोटद्वयं स्फोटा इति ख्याते। स्फुट 'विकसने'। घञ्। स्फोटः। 'पिट शब्दसङ्घातयोः'। वुन्। पिटकः पवर्गप्रथमादिः। "विस्फोटे विटिका स्त्रियाम्" इत्यमरमालायां वकारादिरपि॥

**व्रणोऽस्त्रियामीर्ममरुः क्लीबे**

क्षीर० — व्रणयति व्रणः। ईरयत्यङ्गमीर्मम्। इयर्त्यरुः। उस्॥

टीका० — व्रणत्रिकं व्रणमात्रे। 'व्रण गात्रविचूर्णने'। पचादिः कृतादिर्वा। व्रणोऽस्त्रियामिति सम्बन्धः। 'ईर प्रेरणे'। बाहुलको मन्। ईर्ममस्त्रियामिति केचित्। 'ऋ गतौ'। 'अर्तिपृवपियजितनिधनि†त्रपिभ्यो नित्' (उ०२. ११७) अरुः सान्तं क्लीबे॥

**नाडिव्रणः पुमान्।**

क्षीर० — नाड्या व्रणम्। नाड्याः समासे पुंस्त्वम्॥

टीका० — यो व्रणः सदा गलति, स नाडीव्रणः॥

**कोठो मण्डलकं**

क्षीर० — कूयते शब्द्यते कोठः। मण्डलाकृतिमण्डलकम्॥

टीका० — कोठद्वयं मण्डलाकोड्ढे इति ख्याते। 'कुठ आलस्ये'। अच्। कोठः। मण्डलमुक्तं प्राक्। ततः 'कुत्सिते' (५. ३. ७४) इति कन्। मण्डलकम्॥

**कुष्ठश्वित्रे**

क्षीर० — समे इति शेषः। कुष्णात्यङ्गं कुष्ठम्। कुत्सिते तिष्ठति वा। 'अम्बाम्बगोभूमि —' (८. ३. ९७) इति षत्वम्। श्वेतते श्वित्रम्॥

---

१. 'फोड इ' क. ख. च. ज. झ. पाठः. २. 'ट्ट' ज. पाठः.

† 'तपि' इति मुद्रितो

टीका० — कुष्ठद्वयं श्वेतकुष्ठे । 'कुष निष्कर्षे' । 'हनिकुषि*नीरमिकाशिभ्यः क्थन्' (उ० २. २.) । सामान्यत्वग्विकारेऽपि कुष्ठम् । तथाच 'श्वित्रिकुष्ठकुलानि च' इति मनुः । 'श्विता वर्णे' । 'स्फायितञ्चिवञ्चिशकिक्षिपि†क्षुदिसृपितृपिदृपिवन्दुन्दिश्विति—' (उ० २. १३) इत्यादिना रक् । श्वित्रम् ॥

**दुर्नामकार्शसी ॥ ५४ ॥**

**क्षीर० — पापरोगत्वाद् दुर्नाम । इयर्त्यर्शः । गुदजं गुदकीलकं च ॥**

टीका० — दुर्नामकद्वयमर्शोरोगे । अमङ्गलतया दुः निन्दितं नाम अस्येति दुर्नामकम् ।

"स्याद् दीर्घकोषिकायां स्त्री दुर्नाम क्लीबमर्शसि ।"

'ऋ गतौ' । 'व्याधौ शुट् च' (उ. ४. १९७) इत्यसुन् शुडागमश्च । अर्शः । एवमुणादौ तालव्यवत् सान्तम् ॥

**आनाहस्तु विबन्धः स्याद्**

**क्षीर० — आनहनं विण्मूत्रविरोधः ॥**

टीका० — आनाहद्वयं मूत्रपुरीषयोर्विबन्धने । 'णह बन्धने' । आङ्पूर्वः । 'अकर्तरि च—' (३. ३. १९) इति घञ् । आनाहः । 'बन्ध बन्धने' । पूर्ववद् घञ् । विबन्धः ॥

**ग्रहणीरुक् प्रवाहिका ।**

**क्षीर० — गृह्णाति ग्रहणी जाठरोऽग्निः । तच्छैथिल्याद् रुग् रोगः । मलप्रवहणं प्रवाहिका । 'रोगाख्यायां ण्वुल्—' (३. ३. १०८) ॥**

टीका० — ग्रहणीद्वयं ग्रहणीरोगे । 'ग्रहेरणिः'‡ (उ० ९. ६८)

१. 'ग्निः । रु' ग. पाठः.

* 'नरिका', † 'क्षुदिसृपितृपिदृपिवन्द्युन्दि', ‡ 'ग्रहे' इति मुद्रितोणादिपाठः

ग्रहणिः । ङीषि ग्रहणी च । रुगिति स्पष्टार्थम् । प्रवाहिकेति । 'रोगाख्यायां ण्वुल् बहुलम्' (३. ३. १०८) इति ण्वुल् ॥

**प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥**

क्षीर० — प्रच्छर्दनं प्रच्छर्दिका । 'रोगाख्यायां ण्वुल्—' (३. ३. १०८) । वमनं वमिः । छर्दी च ॥

टीका० — प्रच्छर्दिकाचतुष्टयं वान्तौ । 'छर्द वमने' पूर्ववद् ण्वुल् । टुवम उद्गिरणे' । कृष्यादित्वादिक् । वमिः । छर्दिश्च । ट्वितोऽथुचि वमथुः ॥

**व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः ।**

क्षीर० — विद्रात्यनया विद्रधिः विद्रो धीयतेऽस्यां वा । मेहति मूत्रयतेऽनेन मेहः । प्रमेहोऽपि । दीपप्रदीपवत् । भगं दारयति भगंदर स्फिक्सन्धौ पिटकम् । 'पूःसर्वयोर्दारिसहोः' (३. २. ४१) इत्यत्र 'भ च दारेः' (वा० ३. २. ४१) इति वक्तव्यात् खश् ।

"श्लीपदं पादवल्मीकं केशघ्नं त्विन्द्रलुप्तकम्" ॥

टीका० — विद्रध्यादयश्चत्वारः प्रत्येकं व्याधिभेदाः । विद्रधिरुदरान्तगतगण्डविशेषः । विद्रो द्रवो धीयतेऽ(स्मिन्नि/स्यामि)ति विद्रधिः । 'कर्मण्यधिकर च' (३. ३. ९३) इति किः । ज्वरः प्रसिद्धः । 'ज्वर रोगे' । कृतादिः । मेहो व मूत्रता । 'मिह सेचने' । घञ् । 'भगे च दारेरिति वक्तव्यम्' (वा० ३. २. ४ इति खच् । 'खचि ह्रस्वः' (६. ४. ९४) इति ह्रस्वः । भगन्दरः । अ गुदसन्निधौ भवति ॥

**अश्मरी मूत्रकृच्छ्रं स्यात्**

क्षीर० — व्याधिभेद इत्येव । अश्माभं शुक्रं राति ददात्यश्मरी

टीका० — अश्मरीद्वयं मूत्रकृच्छ्रे । अ(श्म/श्मानं) शिलां राति द दातीत्यश्मरी । 'आतोऽनुपसर्गे कः' (३. १. ३) । गौरादिङीष् । मूत्रकृच्छ्रं म विबन्धमात्रम् । इह तु मूत्रविबन्धाविशेषादेकत्वम् ॥

पूर्वे शुक्रावधेस्त्रिषु ॥ ८६ ॥

क्षीर० — इत ऊर्ध्वं शुक्रात् पूर्वे मूर्च्छितान्ता वाच्यलिङ्गाः ॥

टीका० — अतःपरं शुक्रावधेः पूर्वे शब्दास्त्रिषु ॥

रोगहार्यगदङ्कारो भिषग् वैद्यश्चिकित्सके ।

क्षीर० — अगदः क्रियतेऽनेन अगदङ्कारः । 'कारे सत्यागदस्य' (६. ३. ७०) इति मुम् । भिषज्यति भिषक् । विद्यामधीते वेद वा वैद्यः । आद्यौ सामान्येनौषधादावपीत्येके ॥

टीका० — रोगहारिपञ्चकं वैद्ये । रोगहारीति ताच्छील्ये णिनिः । 'कारे सत्यागदस्य' (६. ३. ७०) इति मुम् । अगदङ्कारः । भिषक्छब्दः कण्ड्वादिः चिकित्सावचनो मूर्धन्यवान् । भिषज्यति चिकित्सत इति भिषक् । 'अन्येभ्योऽपि —' (३. २. १७८) इति क्विप् । 'यस्य हलः' (६. ४. ४९) इति यशब्दस्य लोपः । अकारसहितस्य यकारस्य लोपात् 'ह्रस्वस्य पिति कृति तुक्' (६. १. ७१) इति तुगभावः । आयुर्वेदात्मिकां विद्यां वेत्ति तदधीत इति वा वैद्यः । 'तदधीते तद् वेद' (४. २. ५९) इत्यण् । स्त्रियां वैद्यी । ङीप् । योपधा । चिकित्सा उक्ता । ततो ण्वुल् ॥

वान्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ८७ ॥

क्षीर० — वमति वान्तः । वार्त इति तु युक्तं, यद् वक्ष्यति 'वार्तं फल्गुन्यरोगे (तु ? च) त्रिषु' । वृत्तिरस्यास्ति वार्तः । 'प्रज्ञाश्रद्धा†र्चावृत्तिभ्यो णः' (५. २. १०१) । कलासु साधुः कल्यः । उल्लङ्घते स्मोल्लाघः । क्तः । 'अनुपसर्गात् फुल्लक्षीब—' (८. २. ५५) इति साधुः ॥

---

१. 'लिको णि' ङ. छ. पाठः.

---

† 'र्चाभ्यो णः' इत्येवाष्टाध्यायीपाठः.

टीका० — रोगादनन्तरनिर्गते नीरुजे वार्तचतुष्कम् । वृत्तिः जीवितं प्रशस्तमस्येति वार्तः । 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५. २. १०१) । कलतिः कामधेनुः । 'अघ्न्यादयश्च' (उ० ४. ११३) इति यः । कल्यः । ('वा?रा)घृ लाघृ सामर्थ्ये' । 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (८. २. ५५) इति निष्ठायां उल्लाघः साधुः ॥

**ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ।**
**आतुरोऽभ्यमितोऽभ्यान्तः**

क्षीर० — ग्लायति स्म ग्लानः । 'संयोगादेरातो धातोः—' (८. २. ४३) इति निष्ठानत्वम् । ग्लायति तच्छीलो ग्लास्नुः । 'ग्लाजिस्थश्च * क्स्नुः' (३. २. १३९) । आमयोऽस्त्यस्यामयावी । सर्वत्र आमयस्योपसङ्ख्यानाद् विनिर्दीर्घश्च । व्याधिः सञ्जातोऽस्य व्याधितः । अपटुर्मन्दः । आतोरत्यातुरः आतर(न्ति? ति) रोगं वा । अभितोऽम्यतेऽस्मादभ्यमितः अभ्यान्तः । 'रुष्यमत्वर—' (७. २. २८) इति वेट् ।

"सञ्जातमृत्युर्मरको मरिर्मारी च देवता ।"

इति श्रीहर्षः ॥

टीका० — ग्लानद्वयं क्षीणदेहे । 'ग्लै हर्षक्षये' । 'संयोगादेरातो धातोर्यण्वतः' (८. २. ४३) इति निष्ठानत्वम् । ग्लानः । 'ग्लाजिस्थश्च क्स्नुः' (३. २. १३९) । ग्लास्नुः । आमयाविसप्तकं रोगिणि । 'सर्वत्रामयस्योपसङ्ख्यानम्' (वा० ५. २. १२२) इति विनिः दीर्घश्च । आमयावी नान्तः । विकृत इति व्याधिसंयोगवृत्तेः कृञो हिंसार्थात् कर्मणि क्तः । 'तदस्य सञ्जातं तारकादिभ्य इतच्' (५. २. ३६) । व्याधितः । पटुर्न भवतीत्यपटुः । आतुर इति 'अत सातत्यगमने' । मद्गुरादित्वादुरच् दीर्घश्च । तथाच 'अभ्यमितोऽपटुरातुरः' इति रभसः । 'अम गत्यादिषु' । 'रुष्यमत्वरसङ्घुषास्वनाम्' (७. २. २८) इतीड्विकल्पः । अभ्यमितः । इडभावे 'अनुनासिकस्य—' (६. ४. १५) इत्यादिना दीर्घत्वेन अभ्यान्तः ॥

* 'ग्स्नुः' इति मुद्रिताष्टाध्यायीपाठः ।

समौ पामनकच्छुरौ ॥ ५८ ॥

क्षीर० — पामास्यास्ति पामनः। पामर इत्येके। द्वावपीति श्रीभोजः। कच्छूरस्यास्ति कच्छुरः। 'कच्छ्वा ह्रस्वत्वं च' (वा० ५. २. १०७) इति रः ॥

टीका० — पामनद्वयं पट्टरोगयुते। 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' (५. २. १००) इति यथाक्रमं नः। पामनः। 'कच्छ्वा ह्रस्वत्वं च' (वा० ५. २. १०७) इति मत्वर्थे रः। ह्रस्वत्वम्। कच्छुरः ॥

दद्रुणो दद्रुरोगी स्याद्

क्षीर० — पामादित्वात् 'शाकी*पलाकीदद्रूणां ह्रस्वश्च' (वा० ५. २. १००) इति नः। दीर्यतेऽनया दद्रुः ॥

टीका० — दर्द्रुणद्वयं दर्द्रुयुक्ते। †'दरिद्रायालोपश्च' (उ० १. ९३) इत्यूप्रत्ययः धातोरिकाराकारयोर्लोपश्च। दर्द्रूः रेफयुक्तो दीर्घान्तश्च। ततो ‡'दर्द्रो ह्रस्वश्च' (ग० ५. २. १००) इति मत्वर्थीयो नः। दर्द्रुणः। 'द्वन्द्वोपतापगर्ह्याद्—' (५. २. १२८) इति मत्वर्थीय इनौ 'इको ह्रस्वोऽङ्यो गालवस्य' (६. ३. ६१) इति ऊकारस्य ह्रस्वत्वे दर्द्रुरोगी ॥

अर्शोरोगयुतोऽर्शसः।

क्षीर० — अर्शांसि सन्त्यस्यार्शसः। 'अर्शआदिभ्योऽच्' (५. २. १२७) ॥

टीका० — अर्शोरोगयुते अर्शसः। मत्वर्थे अर्शआद्यच् ॥

वातकी वातरोगी स्यात्

* 'पलाली' इति मुद्रितगणपाठः। † 'दरिद्रातेर्यालोपश्च' इति मुद्रितोणादिपाठः। ‡ 'शाकीपलालीदर्द्रूणां ह्रस्वत्वं च' इति मुद्रितगणपाठः।

क्षीर० — वातो विद्यतेऽस्य वातकी । 'वातातिसाराभ्यां कुक् च' (५. २. १२९) इतीनिः ॥

टीका० — वातकिद्वयं वातरोगिणि । 'वातूलो वातकी' इति त्रिकाण्डशेषः । 'वरतनुर्वातूलतां लङ्घिता' इति राजशेखरश्च । 'वातातिसाराभ्यां कुक च' (५. २. १२९) इति मत्वर्थे इनिः, कुक् च । वातकी ॥

सातिसारोऽतिसारकी ॥ ५९ ॥

क्षीर० — एकदेशविकृतत्वादतीसारक्यपि ॥

टीका० — सातिसारद्वयमतिसारयुक्ते । अतिसारेण युक्तः सातिसारः । वातकीवदतिसारकी । 'उपसर्गस्य घञि—' (६. ३. १२२) इति दीर्घत्वे सति अतीसारकीत्यपि ॥

स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः

क्षीर० — 'क्लिन्नस्य ‡ चुलचिलपिलो लश्च' (वा० ५. २. ३३) इति वक्तव्यात् साधवः ॥

टीका० — क्लिन्नाक्षे रोगादिना गलिताक्षे[1] चिलत्रयम् । 'क्लिन्नस्य चिल्पिल् लश्चास्य चक्षुषी' (वा० ५. २. ३३) इति वक्तव्येन क्लिन्नस्य चिल्पिलावित्येतावादेशौ भवतः । लश्च प्रत्ययः । चिल्लः पिल्लः । 'चुलादेशश्च वक्तव्य' (वा० ५. २. ३३) इति क्लिन्नस्य चुल् आदेशः लश्च प्रत्ययः । चुल्लः । उपचारेण पुरुषेऽप्येतेषां वृत्तिः ॥

क्लिन्नेऽक्षिण चाप्यमी ।

क्षीर० — चक्षुःक्लेदेऽपि । तेन चक्षुर्गतः क्लेदश्चुल्लो नाम रोगः तद्योगाच्चुल्लं चक्षुः । चुल्लचक्षुष्ट्वाच्चुल्लः पुमान् ॥

१. 'क्षे पुरुषे चि' क. ख. ड. छ. ज. पाठः.

‡ 'चिल्पिल् लश्चास्य चक्षुषी', इति मुद्रितवार्तिकपाठः ।

टीका०—अमी चिल्लादयो न केवलं तद्युक्ते, किन्तु क्लिन्नेऽप्यक्षिण ॥

उन्मत्त उन्मादवति

क्षीर०—उन्मादो वातभूतातिदोषाच्चित्तविभ्रमः ॥

टीका०—उन्मत्तद्वयमुन्मादयुक्ते। 'न ध्याख्यापृमूर्छिमदाम्' (८. २. ५७) इति निष्ठातकारे नत्वाभावः। उन्मत्तः ॥

श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥

क्षीर०—श्लेष्मास्यास्ति सिध्मादित्वाल्लच्। पामादित्वान्नः ॥

टीका०—श्लेष्मलत्रिकं श्लेष्मयुक्ते। सिध्मादिलच्। श्लेष्मलः। पामादित्वान्नः। श्लेष्मणः। कफीति 'द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः' (५. २. १२८) ॥

न्युब्जो भुग्ने रुजा[1]

क्षीर०—न्युब्जनान्न्युब्जः। घञ्। 'भुजन्युब्जौ पाण्युपतापयोः' (७. ३. ६१) इति साधुः। भुग्नः कुब्जः। न्युब्जेन भुग्नत्वेन योगान्न्युब्जः पुमान्। यच्छाश्वतः—

"विद्यादधोगतं न्युब्जं न्युब्जः कुब्ज उदाहृतः" ॥

टीका०—रुजा व्याधिना वक्रे न्युब्जः 'उब्ज आर्जवे'। पचादिः। 'भुजन्युब्जौ पाण्युपतापयोः' (७. ३. ६१) इति कुत्वाभावनिपातः ॥

वृद्धनाभौ तुन्दिलतुन्दिभौ[2]।

क्षीर०—तुन्दिरुन्नता नाभिः। तुन्दस्तु जठरम्। इत्थं लच्। 'तुन्दिवलि—' (५. २. १३९) इति भः। तच्चैकदेशविकृतस्यानन्यत्वात् (?) ॥

१. 'जा भु' ख. पाठः. २. 'न्द' ङ. पाठः

टीका० — वृद्धनाभित्रयं गोण्डनाभौ । सिध्मादित्वाल्लच् । तुन्दिलः । 'तुन्दिवलिवटेर्भः' (५. २. १३९)। तुन्दिभः ॥

**किलासी सिध्मलः**

क्षीर० — सिध्मादित्वाल्लच् ॥

टीका० — किलासिद्वयं सिध्मयुक्ते । कफिवत् किलासी । सिध्मादित्वाल्लच् । सिध्मलः ॥

**अन्धोऽदृक्**

क्षीर० — 'अन्ध दृष्टयुपसंहारे' । नास्ति दृगस्यादृक् ॥

टीका० — अन्धद्वयमन्धे । 'अन्ध दृष्ट्युपघाते' । चुरादिः । पचाद्यच् । अन्धं चक्षुरस्यास्ति अन्धः । खञ्जवदर्शआद्यच् । अदृक् शान्तः । 'दृशिर् प्रेक्षणे' करणे सम्पदादिक्विप् । नञ्समासः ॥

**मूर्छाले मूर्तमूर्छितौ ॥ ६१ ॥**

क्षीर० — मूर्छास्त्यस्येति 'प्राणिस्थादातो लच् —' (५. २. ९६)। 'क्षुद्रजन्तूपतापाच्चेष्यते' । मूर्छतीति मूर्तः । 'राल्लोपः' (६. ४. २१) इति छलोपः । 'न ध्याख्या'—(८. २. ५७) इति नत्वाभावः । मूर्छा सञ्जातास्य मूर्छितः । चुरादित्वान्मूर्छेः क्तो वा ॥

टीका० — मूर्छालत्रयं मूर्छायुक्ते । 'क्षुद्रजन्तूपतापाच्च' इति सिध्मादिगणसूत्रेण लच् । मुर्छालः । 'मुर्छा मोहसमुच्छ्राययोः' । क्तः । 'राल्लोपः' (६. ४ २१) इति छलोपः । उन्मत्तवन्नत्वाभावः । मूर्तः । व्याधितवन्मूर्छितः । त्रिष्वित्यधिकारो गतः ॥

**शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।**

क्षीर० — शोकति स्रवति शुक्रम्। तेजयति तेजः। असुन्। रीयते रेतः। 'रीङ् स्रवणे'। वीज्यते वीजम्। वीजिवल्लौकिकः। वीरे अक्लीबे साधु वीर्यम्। 'वीरवीर्यौ च' इति गणपाठाद् वा भावे यः। इन्द्रस्यात्मनो लिङ्गमिन्द्रियम्। 'इन्द्रियमिन्द्रलिङ्गम् —' (५. २. ९३) इति साधुः॥

टीका० — शुक्रषट्कं रेतसि। शुक्र उक्तः। 'तिज निशाने'। असुन्। तेजः। 'री गतिरेषणयोः'। 'स्रुरीभ्यां तुट् च' (उ० ४. २०३) इत्यसुन् प्रत्ययस्य तुडागमश्च। रेतः। हेतौ बीजमुक्तम्। 'शूर वीर विक्रान्तौ'। चुरादिः। 'अचो यत्' (३. १. ९७)। वीर्यम्।

"नृबीजमिन्द्रदैवत्यं[2] तस्मादिन्द्रियमुच्यते"

इति मोक्षधर्मे। 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' (५. २. ९३) इतीन्द्रियं निपातितम्। तत्रेतिकरणस्य प्रकारार्थत्वादिन्द्रदैवत्य-मिन्द्रियमित्यपि सिध्यति॥

**मायुः पित्तं**

क्षीर० — मिनोति मलान् स्रंसकत्वान्मायुः। पतति स्रंसति पित्तम्॥

टीका० — मायुद्वयं पित्ते। मिनोतेर्वायुवन्मायुः। अपिददातीति पित्तम्। 'डुदाञ् दाने'। क्तः। स च 'आदिकर्मणि क्तः कर्तरि च' (३. ४. ७१) इति कर्तरि। 'अच उपसर्गात् तः' (७. ४. ४७) इत्याकारस्य तकारः।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"

इत्यकारलोपः॥

**कफः श्लेष्मा**

क्षीर० — कात् फलति कफः। श्लिष्यति श्लेष्मा॥

---

१. 'ते वेति वा वा' क. ग. घ. ङ. पाठः. २. 'वीर्यमि' क. पाठः

टीका० — कफद्वयं **श्लेष्मणि**। केन तोयेन स्फातिर्वृद्धिरस्येति कफः। पृषोदरादिः। 'श्लिष आलिङ्गने'। मनिन्। श्लेष्मा॥

**स्त्रियां तु त्वगसृग्धरा॥ ६२॥**

क्षीर० — 'त्वच संवरणे'। असृजो धरा॥

टीका० — त्वगादिद्वयं **चर्मणि**। वल्कले त्वगुक्ता।

"त्वचवेष्टितमस्थिपञ्जरं यदि कायं समवैषि[1] योषिताम्[2]"

इत्यदन्तोऽप्यश्वघोषेणोक्तः। असृजं वृणातीत्यसृग्वरा। पचादिः। केचिद् (वृ?धृ)ञ् धारणे साधयन्ति॥

**पिशितं तरसं मांसं पललं क्रव्यमामिषम्।**

क्षीर० — 'पिश अवयवे'। तरो बलमस्त्यत्र तरसं, तरत्यनेन कार्श्यं वा। मन्यते मांसम्। 'मां स भक्षयितामुत्र' इति नैरुक्ताः। पल्यतेऽनेन पललम्। यच्छाश्वतः—

"पललं तिलमिश्रं स्यात् पललं पिशितेऽपि च"।

क्रव्यते क्रव्यम्। 'क्रुड् गतौ'। आमिष्यते आमिषम्। जाङ्गलं च। पलं नानार्थे॥

टीका० — पिशितषट्कं **मांसे**। 'पिश अवयवे'। तालव्यान्तः। क्तः। पिशितम्। तरतेः 'अत्य[!]मिचमि—'(उ० ३. ११७) इत्यादिना बाहुलकोऽसच्। तरसम्। 'मन ज्ञाने'। 'मनेर्दीर्घश्च' (उ० ३. ६४) इति सः। मांसम्। 'पल गतौ'। वृषादिकलच्[3]। पललम्। 'क्रव्ये च' (३. २. ६९) इति प्रतिषेधदर्शनान्मांसशब्दस्य पृषोदरादित्वात् क्रव्यभावः। क्रव्यम्। 'अम रोगे'। 'अमेर्दीर्घश्च' इति टिषच् दीर्घत्वं च। आमिषं मूर्धन्यवत्। चान्द्रलिङ्गानुशासने मांसामिषे

१. 'वेषयो' ह. छ. पाठः. २. 'ति' क. पाठः. ३. 'पृषोदरादि' ङ. छ. पाठः

! 'वि' इति मुद्रितोणादिपाठः।

पुन्नपुंसकयोरुक्तौ ।

"अमिषाशनं प्रयत्नात् प्रमदां परिवर्जयेत् ततःप्रभृति"

इति ज्योतिषे ह्रस्वादिरपि ॥

**उत्तप्तं शुष्कमांसं यत् तद् वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥**

०— उत्तप्यते शोष्यते उत्तप्तम् । वलं लुनाति वल्लूरम् । वलिः सौत्रो वा ॥

टीका० — उत्तप्तत्रयं शुष्कमांसे । ऊर्ध्वं तप्तं उत्तप्तम् । 'वल वल्ल संवरणे'। 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४.९१)। वल्लूरं दीर्घमध्यम् ॥

**रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।**

क्षीर० — रुणद्धि स्रोतांसि रुधिरम् । अस्यतेऽनेन सृज्यते वासृक् । लोहितं रक्तं च वर्णतः । अस्यतेऽस्त्रम् । शोणति शोणितम् । 'शोणृ वर्णे' ॥

टीका० — रुधिरसप्तकं रक्ते। मिहिरवद् रुधिरम् । असृग् जान्तम् । सृगालीपर्याये सकारो निरूपितः । 'असु क्षेपणे'। 'स्फायितञ्चिवञ्चि—'(उ० २. १३) इत्यादिना रक् । अस्त्रम् । क्षताज्जातं क्षतजम् । पूर्ववद् डः । 'शोणृ वर्णगत्योः' । क्तः । शोणितम् ॥

**बुक्काग्रमास**

क्षीर० — बुक्यते स्वादुत्वान्मृग्यते बुक्का। नान्तः । पुंस्ययम् । स्त्रीत्येके। वृक्कापीति वैद्याः। अग्रं मुख्यम् ॥

टीका० — वृक्कद्वयं बुक्क इति ख्याते । वृक्क नान्तं क्लीबं च ।

"अग्रमांसं मतं वृक्कं मण्डल(कोऽग्रे ? के) मलाशये"

इत्यन्ये ।

"शोणितान्त्रे स्त्रियां वृक्का वृक्कं तु (समर ?) द्वयोः"

इति रभसः । 'बुक्क परिभाषणे' । पचाद्यचि बुक्कमित्यन्ये । 'बुक्को नरेऽग्रमांसे स्याद्' इति वोपालितः ॥

---

१. 'मादात् प' क. छ., 'यतां प' ज. पाठः. २. 'वृत्तिरिति' च. ज. पाठः.

**हृदयं हृद्**

क्षीर०— ह्रियते हृत् । जीवाधारपद्मम् । दान्तं प्रकृत्यन्तरम् ॥

टीका०— हृदयद्वयं हृदये । चित्ते हृदयमुक्तम् । हरतीति हृत् । क्विप् । केचित्तु वृक्कादिचतुष्कमपि हृदये मन्यन्ते ॥

**मेदस्तु वपा वसा ॥६४॥**

क्षीर०— मेद्यति स्निह्यति मेदः । असन्तत्वात् क्लीबे । उप्यते वपा । वस्ते मांसं वसा । शुद्धस्य मांसस्य यः स्नेहः सा वसेति वैद्याः[1] ॥

टीका०— मेदस्त्रिकं मेदसि । 'त्रिमिदा स्नेहने' । 'असुन्' इत्यसुन् । मेदः । शुषौ वपोक्ता । वसन्त्यत्र क्रिमय इति वसा । भिदादिपाठादङ् । 'जव-सादनं वसादनम्' (स० १९. श्लो० ७८) इति माघयमकम् ॥

**पश्चाद्ग्रीवासिरा मन्या**

क्षीर०— पश्चाद्भागे ग्रीवायां कृकाटिकायां सिरा मन्यते मन्या । 'संज्ञायां समज—' (३. ३. ९९) इति क्यप् ॥

टीका०— ग्रीवायाः पश्चाद्भूता सिरा मन्या । 'मन ज्ञाने' । 'संज्ञायां समजनिषद—' (३. ३. ९९) इत्यादिना क्यप् । अझलादित्वान्नानुना-सिकलोपः ॥

**नाडी तु धमनिः सिरा ।**

क्षीर०— नडस्येयं नाडी, सौषिर्यात् । धम्यते धमनिः । धमिः सौत्रः । सिनोति कायं सिरा । 'षिञ् बन्धने' ॥

टीका०— नाडीत्रयं सामान्यसिरायाम् । नह्यतेऽनयेति नाडी ।

१. 'द्याः । यच्छाश्वतः —पललं तिलमिश्रं स्यात् पललं पिशितेऽपि च ॥ प' ख. पाठः.

पृषोदरादिः । 'धम' इति सौत्रो धातुः । 'अर्तिमृभृधम्यश्यवि+तरिभ्यो निः' (उ० २. १०२) धमनिः । ङीषि धमनी । 'षिञ् बन्धने' । बाहुलको रक् । सिरा । दन्त्यसा । तथा च भारविः—

"निशितासिरतोऽभीको ह्येजतेऽमरणा रुचा" (?) (स० १५. श्लो० २२) इति ।

"शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति"

इति तालव्यादौ रभसः ॥

**तिलकं क्लोम**

**क्षीर०— तिलति तिलकम् । क्लाम्यति क्लोम । उदर्यो जलाधारः । हृदयस्य दक्षिणे यकृत् क्लोम च, वामे प्लीहा पुष्कर[1]सश्रुतिरिति(?) वैद्याः ॥**

**टीका०—** तिलकद्वयं **फफुस** इति ख्याते वृक्कप्राये । क्लोम नान्तम् । तथा च—'विगलत्क्लोम्नामरीणामसृग्' इति प्रयोगः । अदन्तमपि सिध्मनामन्युक्तम् ॥

**मस्तिष्कं गोर्दं**

**क्षीर०— मस्तं मज्जा, मस्तमिष्यति मस्तिष्कम् । 'इष गतौ' । गुद्यते गोर्दम् । 'गुद परिवेष्टने' ॥**

**टीका०—** मस्तिष्कद्वयं **घिवीति** ख्याते ॥

**किट्टं मलोऽस्त्रियाम् ॥ ६७ ॥**

**क्षीर०— (कि?के)[2]टति किट्टम् । 'किट गतौ[3]' । निःस्नेहत्वाद् गच्छति रसात् किट्टम् । 'मल धारणे' । मलते धा[4]रयते कायं मलः ॥**

१. 'ष्पस' क. ग. घ. ङ. पाठः. २. 'ट्टे'; ३. 'तौ । मलयते' ख. पाठः. ४. 'ध्रियते' क. ग. घ. पाठः.

+ 'तृभ्यो' इति मुद्रितोणादिपाठः ।

टीका० — किट्टद्वयं मले। तदुक्तं—

"वसा शुक्रमसृङ् मज्जा कर्णविण्मूत्रविण्णखाः।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते मला नृणाम्" ॥

'मल मल्ल धारणे'। अच्। मलम् ॥

**अन्त्रं पुरीतद्**

क्षीर० — अमत्यनेनान्त्रम्। पूर्यते पुरीतत्। तान्तोऽयम् ॥

टीका० — अन्त्रद्वयमन्त्रे। 'अम रोगे'। 'अमिचिमिदिशसिभ्यः कित्' (उ० ४. १६९) इति त्रन्प्रत्ययः। अन्त्रम्। पुरीं शरीरं तनोतीति पुरीतत्। तान्तम्। पुर्युपपदात् तनोतेः क्विप्। 'गमः क्वौ' (६. ४. ४०) इत्यत्र 'गमादीनामिति वक्तव्यम्' (वा० ६. ४. ४०) इति वक्तव्येनानुनासिकलोपः। तस्य च 'अचः परस्मिन् पूर्वविधौ' (१. १. ५७) इति सूत्रे अच इति विशेषणेन हलः पर्युदासात् स्थानिवद्भावाभावात् 'ह्रस्वस्य पिति कृति तुक्' (६. १. ७१) इति तुगागमः। 'अन्त्रं पुरीतदस्त्रियाम्' इति शब्दार्णवः ॥

**गुल्मस्तु प्लीहा पुंसि**

क्षीर० — गुल्यते[1] रक्ष्यते मांबाधिष्ठेति[2] गुल्मः। प्लेहति प्लीहा नान्तः ॥

टीका० — गुल्मद्वयं प्लीहनि। 'प्लीह गतौ'। श्वन्नुक्षन्नादिसूत्रे प्लीहा नान्तो निपातितः ॥

**अथ वस्नसा।**

**स्नायुः स्त्रियां**

क्षीर० — वस्ते छादयति कायं वस्नसा। स्नावा नभाकुश्च। स्नाय-

१. 'त् इ' ङ. छ. पाठः. २. 'ध्य' क. ग. घ. ङ. पाठः. ३. 'मधिष्वधि गु' क. ग. ङ., 'मधुष्वधि' घ. पाठः.

त्यङ्ग स्नायुः। 'स्नै वेष्टने'। महास्नायुस्तु कण्डुरा स्नायुसङ्घात इति वैद्याः॥

टीका०—वस्नसाद्वयं नहर इति ख्याते। वसां न्यस्यति स्वीकरोतीति वस्नसा। पृषोदरादिः। द्विदन्त्यसा। 'स्नसा स्नायुश्च कथिता' इत्यमरमालायां द्यक्षरः। तदा 'ष्णसु अदने'। पचादिः। स्नातेर्बाहुलक उण्। 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युक्। स्नायुः॥

कालखण्डयकृती तु समे इमे॥ ६६॥

क्षीर०—दक्षिणपार्श्वे कृष्णमांसांशः कालखण्डः। कालखञ्ज-मित्येके। यमं करोति यकृत्॥

टीका०—कालखण्डद्वयमुदरदक्षिणपार्श्वस्थे कालजेति ख्याते। 'कालेजं कालखण्डम्' इति रभसः। कृष्णत्वात् कालखण्डम्। यकृत् तान्तम् अन्तस्थादि॥

सृणिका स्यन्दिनी लाला

क्षीर०—सरति सृणिका। स्यन्दते स्यन्दिनी। ललति लाला।

टीका०—सृणिकात्रयं लालायाम्। 'सर्तेर्नुट् च' (उ० ४. २३) इति इकन् किच्च नुडागमश्च प्रत्ययस्य। सृणिका। दीर्घमध्येति केचित्। 'स्यन्दू प्रस्रवणे'। आवश्यके णिनिः। स्यन्दिनी। 'लल ईप्सायाम्'। चुरादिः। 'एरच्' (३. ३. ५६)। लाला॥

दूषिका नेत्रयोर्मलम्।

क्षीर०—दूषयत्याक्षि दूषिका। दूषीकापि॥

टीका०—पिच्छोर्ढ इति ख्याते दूषिका। 'दुष वैकृत्ये'। हेतुमण्णिच्। 'दोषो णौ' (६. ४. ९०) इत्युपधाया ऊत्वं, ततः 'कषिदूषिभ्यामिकन्' (उ०

१. 'म्बुका स्ना' क. घ. ङ. पाठः. २. 'साशयः का' ख. पाठः. ३. 'ले' ख. पाठः. ४. 'डि' क. ख. ग. च. पाठः.

४. ११)। दूषिका। केचिदीकन्प्रत्ययान्तं मन्यन्ते। तथा च—

"दूषीकापटलनिरुद्धलोचनान्ता दुर्गन्धा बहलमलोपलिप्तगात्रा"

इति गोपदत्तः। अत्र पक्षे अलीकादिरिति द्रष्टव्यम्। 'आः कीदृगत्रि मुनिलोचनदूषिकायाम्' इति मुरारिः।

"अत्र पिञ्छोडकं नेत्रमलं दूषी च दूषिका"

इति शब्दार्णवः। 'पञ्चडी दूषिका' इति संसारावर्तः॥

**मूत्रं प्रस्रावः**

क्षीर०—'प्रे द्रुस्तुस्रुवः (३. ३. २७) घञ्'॥

टीका०—मूत्रद्वयं मूत्रे। 'मूत्र प्रस्रवणे'। पचादिः। मूत्रम्। 'सु स्रु' गतौ। 'प्रे द्रुस्तुस्रुवः' (३. ३. २७) इति अकर्तरि च कारके घञ्। प्रस्रावः॥

**उच्चारावस्करौ शमलं शकृत्॥ ६७**
**पुरीषं गूढवर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ।**

क्षीर०—उच्चार्यते प्रेर्यते उच्चारः। अव अधः क्रियत इ[ति] 'वर्चस्केऽवस्करः' (६. १. १४८) इति साधुः। शाम्यति शमलम्। शक्नोत्यनेन शकृत्। पिपर्त्यन्त्रं पुरीषम्। गूयते उत्सृज्यते गूढम्। वर्च एव वर्चस्कम्। विष्यतेऽनया विष्ठा। वेवेष्टि विट्। विशतीं[ति] सभ्याः॥

टीका०—उच्चारनवकं विष्ठायाम्। 'चरतेः घञ्' उच्चारः। किरतेः 'ऋदोरप्' (३. ३. ५७)। 'वर्चस्केऽवस्करः' (६. १. १४८) इति नि[पातनात्] पातनात् सुट्। अवकीर्यत इत्यवस्करः। 'शमु उपशमे'। 'शकिशम्योर्नि[त्]' (उ० १. ११७) इति कलः। शमलम्। तालव्यादि। 'शक्लृ शक्तौ'। 'शकेर्ऋ†तन्' (उ० ४. ५९) इति ऋतन्। शकृत्। 'पॄ पालनपूरणयोः'। 'शॄपॄभ[ृ]'

१. 'चुरादिः। आंच मू' ख. पाठः. २. 'विपृच्यते वि' क. ग. घ. ङ. पाठः.

† 'तिन्' इति मुद्रितोणादिपाठः।

कित्' § (उ० ४. २७) इति ईषन्। 'उदोष्ठ्यपूर्वस्य' (७. १. १०२) इत्युत्त्वम्। पुरीषम्। मूर्धन्यवत्। 'गु पुरीषोत्सर्गे'। 'ति*थयूथगूढ—' (उ० २. १२) इत्यादिना ढग्दीर्घत्वे। गूढम्। वर्च एव वर्चस्कः। कुत्सायां कन्। गूढवर्चस्कमस्त्रीति सम्बन्धः। 'विष विप्रयोगे'। बाहुलकः क्थन्। विष्ठा। तिष्ठतेर्विपूर्वात् 'आतश्चोपसर्गे' (३. १. १३६) इत्यङि वा विष्ठा। विषेरेव क्विपि विट्। षान्ता॥

**स्यात् कर्परः कपालोऽस्त्री**

क्षीर०— कल्प्यते कर्परः। कृपो रो लो नास्ति, बाहुलकात्। कं पालयति कपालः। मूर्धोर्ध्वास्थि। घटादिखण्डोऽप्युपचारात्॥

टीका०— कर्परद्वयं शिरोस्थिखण्डे। 'कृपू सामर्थ्ये'। शीकरवद् बाहुलको रन्। कर्परः। कं वायुं पालयतीति कपालः। 'कर्मण्यण्' (३. २. १)॥

**कीकसं कुल्यमस्थि च॥ ६८॥**

क्षीर०—कीति कसति कीकसम्। कुले शरीरे साधु कुल्यम्। कोलति संस्त्यायति वा। अस्यते अस्थि॥

टीका०— कीकसत्रयमस्थनि। किं नाम न कसति गच्छतीति कीकसम्। पृषोदरादि। दन्त्यवत्। 'कुल संस्त्याने'। अघ्न्यादि। कुल्यम्। 'असु क्षेपणे'। 'असिसञ्जिभ्यां क्थिन्' (उ० ३. १५५)। अस्थि॥

**स्याच्छरीरास्थि कङ्कालः**

क्षीर०—कङ्कानलति कं कालयति वा कङ्कालः। देहारम्भोऽस्थिपञ्जरः करङ्कोऽपि॥

टीका०— समुदितशरीरास्थिसङ्घातस्त्वङ्मांसरहितः कङ्कालः। कं शिरः को वायुः तावालाति बध्नातीति कङ्कालः॥

§ 'किच', * 'थपृष्ठयूथ' इति मुद्रितोणादिपाठः.

**पृष्ठास्थि तु कशेरुका ।**

क्षीर० — कशारुकेति मुनिः । कश्यत इति । पृष्ठग्रन्थौ गडुः पुमान् ॥

टीका० — कङ्कालोपरि पृष्ठस्यास्थि कशेरुका । के शरीरे शेत इति कशेरुका ॥

**शिरोस्थनि करोटिः स्त्री**

क्षीर० — के रटति करोटिः करोटी[1] च ॥

टीका० — समुदितशिरोस्थि करोटिः । ङीपि दीर्घान्तापि ॥

**पार्श्वास्थनि तु पर्शुका ॥ ६०. ।**

क्षीर० — पूर्यते पर्शुः ॥

टीका० — पाशोलीति ख्याते पर्शुका । 'स्पृश संस्पर्शने' । स्पृशेश्वणशुनौ पृ च' (उ० ५. २७) इति सूत्रम् । अकारानुबन्धरहितं द्वितीयप्रत्ययमप्यनुमन्यन्ते 'स्पृशेः श्वण्शुनौ पृ च' इति । तेन शुन्प्रत्ययः । धातोश्च इत्यादेशः । ततः स्वार्थे कः । पर्शुका । एवं तालव्यशः ॥

**अङ्गं प्रतीकोऽवयवोऽपघनः**

क्षीर० — अङ्गत्यङ्गम् । प्रत्येति प्रतीकः । अवयौत्यवयवः । अ[2] हन्यतेऽपघनः । 'अपघनोऽङ्गम्' (३. ३. ८१) इति साधुः ॥

टीका० — अङ्गचतुष्कं हस्ताद्यवयवे । 'अगि गतौ' । अच् । अङ्गम् प्रतिपूर्वादिणो बाहुलकात् किकन् । प्रतीकः । अवपूर्वाद् यौतेरचि अवयवः हन्तेः, 'अपघनोऽङ्गम्' (३. ३. ८१) इति करणे अप्प्रत्ययान्तो निपातितः अपघनः ॥

**अथ कलेबरम् ।**

१. 'टीति वा ॥' घ. ङ., 'टश' ख. पाठः. २. 'ते' क. ख. ग. च. पाठः.

**गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥**

**कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।**

क्षीर० — काल्यते कलेबरम्। गाते गच्छति गात्रम्। उप्यते वपुः। संहन्यन्ते सङ्घध्यन्तेऽङ्गान्यस्मिन् संहननम्। शीर्यते शरीरम्। वृष्यते सिच्यते, वर्षति मलान् वा वर्ष्म। विगृह्यते विग्रहः। 'ग्रहवृद्दनिश्चि—' (३. ३. ५८) इत्यप्। चीयते कायः। 'निवासोपचितिशरीरसमाधानेष्वादेश्च कः' (३. ३. ४१)। दिह्यते देहः। मूर्छति वर्धते मूर्तिः। तन्यते तनुः। तनूश्च ॥

टीका० — कलेबरद्वादशकं शरीरे। कले रेतसि बरः कलेबरः। 'गमेरा च' (उ० ४. १७०) इति त्रन्। गात्रम्। 'अर्तिपृवपि—' (उ० २. ११७) इत्यादिना उसि वपुः। पृथिव्यादिपञ्चमहाभूतानि संघ्नन्ति संहतान्यत्र भवन्तीति संहननम्। अधिकरणे ल्युट्। 'कॄपॄशॄकटिपटिशौटिभ्य ईरन्' (उ० ४. ३०)। शरीरम्। 'वृषु सेचने'। मनिन्। वर्ष्म। 'ग्रहवृद्दनिश्चिगमश्च' (३. ३. ५८) इत्यप्। विग्रहः। चिनोतेः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' (३. ३. ४१) इति घञ्। कायः। 'दिह उपचये'। कर्मणि घञ्। देहः। मूर्छेः क्तिन्। 'राल्लोपः' (६. ४. २१) इति छलोपः। मूर्तिः। तनोतेः 'भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १. ७)। तनुः। 'तनुपे तनुषे कम्' इति वासवदत्तायां सकारान्तापि। कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (उ० १. ८४)। तनूः। मूर्त्यादयस्त्रयः स्त्रिय इति सम्बन्धः ॥

**पादाग्रं प्रपदं**

**क्षीर० — प्रारम्भः पदस्य प्रपदम्। पदशब्दः पादपर्यायोऽस्ति ॥**

**टीका० — पादाग्रे** प्रपदम्। 'अङ्घ्रेः पूर्वं प्रपदम्' इति नाममाला ॥

**पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥**

क्षीर०— पद्यतेऽनेन पादः । पदिति लक्ष्यलक्षणयोर्नास्ति । यस्तु — 'गौः पदा न स्प्रष्टव्या' 'पद्भ्यामेव यथा तथा' इत्यादौ, स 'पद्दन्नोमास्हृद्—' (६. १. ६३) इति पदादेशः। अतः पदोऽङ्घ्रिश्चरणोऽस्त्रियाम् इति पाठ्यम् । क्रमणे तु पदम् । अंहत्यनेनाङ्घ्रिः । चरन्त्यनेन चरणः ॥

टीका० — पादचतुष्कं पादे । पद्यतेऽनेनेति पादः । करणे घञ् । †पन्नपुंसकमिति । तथा च शाश्वतः—

"व्यवसाये परित्राणे पादतच्चिह्नयोरपि ।
वस्तुस्थानापदेशेषु पदं स्याद् वाक्यशब्दयोः ॥"

इति । 'अन्येभ्योऽपि—' (३. २. १७८) इति क्विपि पत् । 'अघिरघिमघि गत्यर्थाः' । 'घृञः क्रिः' इति बाहुलकः क्रिः । अङ्घ्रिः । 'अहि गतौ' हकारवा इति हड्डचन्द्रः । 'चर गतिभक्षणयोः' ल्युट् । चरणः ॥

तद्ग्रन्थी घुटिके गुल्फौ

क्षीर०— पादग्रन्थी पार्श्वे निस्सृतौ । घोटते घुटिका । परिवर्तने' । गुप्यते गुल्फः ॥

टीका० — पादग्रन्थौ घुटिकाद्वयम् । 'घुट परिवर्तने' कुन् । घुटिका घुट एव वा घुटिका । तथा च रत्नमाला— 'पादग्रन्थिर्घुटो गुल्फः' इति 'गळु अदने' । 'गलेश्च' इति फक् अकारस्य उकारः । गुल्फः ॥

पुमान् पार्ष्णिरधस्तयोः ।

क्षीर० — गुल्फादधः पश्चाद्भागे पार्ष्णिः । पुमानिति प्रायिकः स्त्रीत्वेऽपि । पर्ष्यते स्नेह्यते विपादिकाचिकित्सार्थं पार्ष्णिः ॥

१, २. 'र्ष्णि' ३. 'ष्य', ४. 'र्ष्णिः' ख. पाठः.

† पादपर्यायप्रसङ्गात् पदशब्द इह स्मर्यत इति प्रतिभाति ।

टीका०—गुल्फयोरधो गाडिर इति ख्यातः पार्ष्णिः। 'पार तीर कर्मपरिसमाप्तौ'। घृणिवद् निः, षुगागमश्च।

"प्रत्यासारे पुमान् पार्ष्णिः पादग्रन्थ्यधरेऽपि च"

इति रभसः।

"पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीघटौ"

इति च।

"पार्ष्ण्यैव प्रोषितासुं सुररिपुमवतात् कुर्वती पार्वती वः"

इति स्त्रीप्रयोगोऽपि। अतः पुमानिति पाठो मतभेदात्॥

**जङ्घा तु प्रसृता**

क्षीर०—जङ्घन्यते कुटिलं गच्छति जङ्घा। प्रसरति प्रसृता।

टीका०—जङ्घाद्वयं जङ्घायाम्। 'जनी प्रादुर्भावे' 'तस्याच् जङ्घश्च' (उ० ५. ३१) इति तस्य जनेरच् जङ्घादेशश्च धातोः। 'सृ गतौ'। क्तः। प्रसृता॥

**जानूरुपर्वाष्ठीवदस्त्रियाम्॥ ७२॥**

क्षीर०—जायते जानु (:१)। ऊर्वोः पर्व ग्रन्थिः। अस्थि विद्यतेऽत्र अष्ठीवत्। 'आसन्दीवदष्ठीवत्—' (८. २. १२) इति साधुः॥

टीका०—जानुत्रयमण्ड्र इति ख्याते। जनेः 'दृसनिजनिचरिचटिभ्यो ञुण्' (उ० १. ३)। जानु जानुनी जानूनि। 'जानुमस्य मृद्नीयात्' इति सुश्रुतः। ऊरोः पर्व ऊरुपर्व। अतिशयितास्थियोगादष्ठीवत्। अस्थिशब्दात् मतुप्। 'आसन्दीवदष्ठीवद्—' (८. २. १२) इत्यादिना वत्वं, अष्ठीभावनिपातश्च। पक्षे अष्ठीवान् अष्ठीवन्तौ॥

**सक्थि क्लीबे पुमानूरुः**

क्षीर०—सजति सक्थि। ऊर्वत्यूरुः॥

टीका—सक्थिद्वयमूरौ। 'सञ्ज सङ्गे'। दन्त्यादिः। अस्थिवत् क्थिन्। सक्थि। 'ऊर्णुञ् आच्छादने'। 'ऊर्णोतेर्णुलोपश्च' (उ० १. ३१) इत्युः। ऊरुः। दीर्घादिः॥

[वं]क्षणः ।

क्षीर० — वस्त्यर्धः[1] ऊरुसन्धिः । वङ्क्त इति वङ्क्षणः ॥

टीका० — वाडोशीति ख्याते वङ्क्षणः ॥

**गुदं त्वपानं पायुर्ना**

क्षीर० — गवते गूयते वा अनेन गुदम् । 'गुद परिवेष्टने' वा [अ]पानित्यनेनापानम् । पाति मलोत्सर्गात् पायुः । पिबति वा स्नेहम् ॥

टीका० — गुदत्रयं गुदे । 'गुद पुरीषोत्सर्गे' । इगुपधलक्षणः क[ः] । अपानवायुयोगादपानम् । पातेर्वायुवद् उण् । पायुः ॥

**वस्तिर्नाभेरधो द्वयोः ॥ ७३**

क्षीर० — वसत्यास्मिन् मूत्रं वस्तिः । मूत्रपु[3]टकम् ॥

टीका० — मूत्रपुटके नाभेरधोभागे वस्तिः । 'वसेस्तिः' (उ० ४८१) इति तिः ॥

**कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।**

क्षीर० — कट्यते आव्रियते कटः ॥

"शवे श्रोणौ किलिञ्जे च गजगण्डे भृशे कटः"

[इति] शाश्वतः । कटीरोऽपि । श्रोण्यते संहन्यते श्रोणिः फलकमिव । क[कु]-(बात् स्वा ? द् मांसा)न्निस्सृतोंऽशोऽस्त्यस्याः ककुद्मती ॥

टीका० — एकं श्रोणिफलकं कटः, न तु कटिरेव । तथा च भागुरिः-

"कटो नितम्बफलकमपानं पायुरुच्यते"

इति । कट्यते आ(द्रि ? व्रि)यत इति कटः । 'कटे वर्षावरणयोः' । घः । श्रोण[िः] फलकाकृतित्वाच्छ्रोणिफलकम् । अन्ये कटषट्कमेव कट्यां मन्यन्ते । कटिः

१. 'धि' क. ग. घ. ङ. पाठः. २. 'दः।' ङ. छ. पाठः. ३. 'प' क. ग. घ. पाठः. ४. 'टि' ख. पाठः.

कट्याम् । 'इन्' इति इन् । ङीषि कटी च ।
ङीषि श्रोणी ॥

"कटिः श्रोणिर्नितम्बो ना जघनं तु नपुंसकम्"

इति क्लीबकाण्डेऽमरमाला । वृषाङ्कः ककुद्, तदाकारत्वान्मांसपिण्डोऽपि
गाद् मतुप् ककुद्मती । यवादिपाठाद् वत्वं न भवति ॥

**पश्चान्नितम्बः स्त्रीकट्याः**

**तु जघनं पुरः ॥ ७४ ।**

**क्षीर०—स्त्रीकट्याः पुरोभागः । जङ्घन्यते जघनम् ॥**

**टीका०**—स्त्रीकट्या अग्रभागो जघनम् । 'हन्तेः शरीरावयवे द्वे च
(उ० ५. ३२) इति हन्तेरच् द्विर्वचनम् अभ्यासस्य चुत्वं जश्त्वं च । 'अभ्य
साच' (७. ३. ५५) इति धातुहकारस्य कुत्वम् ॥

**कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।**

**क्षीर०—कुत्सितं कुं दृणाति कुकुन्दरम् । द्वयेन हीने क्लीबे ॥**

**टीका०**—नितम्बे यौ कूपकौ पृष्ठवंशादधोगतौ, ते कुकुन्दरे द्वयही
क्लीबे । कुकुन्दरे इति प्रथमाद्विवचनम् ॥

**स्त्रियां स्फिचौ कटिप्रोथौ**

**क्षीर०—स्फायते स्फिक् । प्रथते उद्भिद्यते प्रोथः । पूतोऽपि ॥**

**टीका०**—स्फिग्द्वयं पूलके ।

"स्त्रियां स्फिचौ कटीप्रोथौ कटिप्रोथौ च पूलके"

इति रभसः । स्फिक् चान्ता । जान्तेत्यरुणः । कट्याः प्रोथो मांसपिण्ड कटिप्रोथः ॥

**उपस्थो वक्ष्यमाणयोः ॥ ७५ ॥**

**क्षीर० — उपतिष्ठते सङ्गच्छते उपस्थः । वक्ष्यमाणौ भगशिश्नौ**

टीका० — वक्ष्यमाणयोर्भगशिश्नयोरुपस्थशब्दो वर्तते । उपतिष्ठन्ति जना अनेन अस्मिन् वेत्युपस्थः । क्लीबेऽप्ययम् । तथा हि — 'वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि' इति ईश्वरकृष्णः ॥

**भगं योनिर्द्वयोः**

**क्षीर० — भज्यते भगम् । 'खलो भगः पदं च' (वा० ३. १२५) इति वक्तव्याद् घः । यौति योनिः । स्त्रीचिह्नं गुह्यं च ॥**

टीका० — भगद्वयं वनितोपस्थे । भजेः 'खनो घ च' (३. १२५) इति घित्करणादितोऽपि घः । भगः । यौतेः श्रोणिवद् निः । योनिः स्त्रियां योनी च ॥

**शिश्नमेढ्रौ मेहनशेफसी ।**

**क्षीर० — शिनोति वर्षति भगं शिश्नः । शेफश्च । मेहत्यनेन मेढ्रः ॥**

टीका० — शिश्नचतुष्कं पुरुषलिङ्गे । 'शिषॢ विसरणे' । बाहुलकान्नक् वर्णविपर्ययश्च । शिश्नो द्वितालव्यो वर्णदेशनायाम् । 'मिह सेचने' 'दाम्नी—' (३.२.१८२) इत्यादिना करणे ष्ट्रन् । 'हो ढः' (८.२.३१) मेढ्रः । ल्युटि मेहनम् । 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः फुट् च' (उ० ४.२०२) इत्यसुन् फुटागमश्च प्रत्ययस्य । शेफः सान्तम् । पकारवच्चेत्युणादिः । अकारान्तोऽपीति न्यासः । 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' (वा० ६. ३. २१) इत्यप्यदन्ततोक्ता । असुन्नन्ते हि सत्यन्यपदार्थसमासे शुनश्शेपा इति स्यात

१. 'फ' ख. पाठः.

शुनश्शेप इति च नामधेयम् । चान्द्रैरप्येतदुक्तम् । उणादौ तु 'इण्शीङ्भ्यां वन्' (उ० १. १५८) इत्यत्र शेपो[2] मेढ्र इत्युक्तम् ।

"भगस्मराद् गेहकूपौ शेफो मेहनलिङ्गलः ।
शेफो मेढ्रशिश्नाः कामलतापि च" (?)

इति रभसः । शेपः शेफः सान्ते । शेवशेपशेफा अदन्ता इति पञ्च रूपाणि ॥

**मुष्कोऽण्डकोशो वृषणः**

**क्षीर० — मुष्णाति गोपा[3]यति शुक्रं मुष्कः । अण्डयोः कोशोऽण्डकोशः । वर्षति शुक्रं वृषणः । फलं[4] च ॥**

टीका० — मुष्कत्रयमण्डकोपे । 'मुष खण्डने' । 'सृवृ*भृशुषिमुषिभ्यः †कित्' (उ० ३. ३१) इति कः । मुष्कः । 'वृष सेचने' । कृपृवृजिम$निनिधाञ्भ्यः क्युः' (उ० २. ८३) इति बाहुलकः क्युः । वृषणः ॥

**पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥**

**क्षीर० — पृष्ठास्थ्नोऽध ऊर्वोः सन्धौ त्रिसङ्घट्टस्त्रिकम् ॥**

टीका० — पृष्ठवंशस्याधरस्त्रिकम् । 'सङ्ख्याया अतिशदन्तायाः कन्' (५. १. २२) ॥

**पिचण्डकुक्षी जठरोदरतुन्दं**

**क्षीर० — पचत्यन्नं पिचण्डः अपिचामत्याहारं वा । कुष्यते कुक्षिः । जमत्याहारं जठरः । उदियर्त्याहारमुदरम् । तुन्दति तुन्दम् तुन्दिश्च ॥**

१. 'फ', २. 'वो' ख., 'फो' च. पाठः. ३ 'प' क. ख. ग. पाठः ४. 'लश्च ॥ ख. पाठः.

* 'भृ', † 'कक्', $ 'न्दिनिधाञः' इति मुद्रितोणादिपाठः ।

टीका०—पिचण्डपञ्चकमुदरे। अपिचिनोतीति पिचण्डः। 'अमन्ताड्डः' (उ० १. ११९) इति बाहुलको डः। पृषोदरादित्वाद् वर्णागमलोपौ। 'कुप निष्कर्षे'। 'प्लुषिशुषिकुषिभ्यः क्सिः' (उ० ३. १५६) कुक्षिः। द्वौ पुल्लिङ्गौ। 'जनी प्रादुर्भावे'। 'जनेररन् ठश्च' (उ० ५. ३८) इत्यरन् ठश्चान्तादेशः। जठरम् उदि दृणातेरजलौ पूर्वपदान्तलोपश्च' (उ० ५. ३९)। उदरम्॥

**स्तनौ कुचौ।**

क्षीर०—स्तन्यते बालैः स्तनौ। कुच्यते कुचौ, कुञ्च्यते वा। वक्षोरुहावुरसिजौ च॥

टीका०—स्तनद्वयं स्तने। 'स्तनगदी देवशब्दे'। अच्। स्तनः। कुचे इगुपधलक्षणः कः। कुचः॥

**चूचुकं तु कुचाग्रं स्यात्**

क्षीर०—चूचू इत्यव्यक्तं कायति पीयमानं चूचुकम्।

टीका०—कुचाग्रे चूचुकम्। 'चूचुको ना कुचाननम्' इ रत्नकोशः॥

**न ना क्रोडं भुजान्तरम्॥ ७७॥**

क्षीर०—क्रुड घनत्वे। न ना पुल्लिङ्गं न भवति। वक्षोमध्योर्ध्वास्थि क्रोडम्॥

**उरो वत्सं च वक्षश्च**

क्षीर०—उरस्यति वि(सं?प)हते उरः। कण्ड्वादि। वेरु छाद्यते वत्सम्। वक्ष सङ्घाते। असुन। पञ्चैकार्था इत्येके॥

टीका०—क्रोडपञ्चकं वक्षसि। स्त्रियां क्रोडा। भुजयोरन्तरं मध्यं भुजान्तरम्। 'अर्तेरुच्च' (उ० ४. १९६) इत्यसुन्। उरः। 'वृ

१. 'चि' ख. ञ. पाठः. २. 'चि' ञ. पाठः ३. 'स' ख. पाठः.

वदि—' (उ० ३. ६२) इत्यादिना वदेः सः । वत्सम् । 'वक्ष रोषे' । असुन् । वक्षः ।

पृष्ठं तु चरमं तनोः ।

क्षीर०—पृष्यते सिच्यते पृष्ठम् । देहस्य चरमं पश्चाद्भागः । पश्चान्मात्रे तूपचारात् ॥

टीका०— शरीरपश्चाद्भागे पृष्ठम् । 'पृषु सेचने' । 'तिथपृष्ठ—' (उ० २. १२) इत्यादिना थक् । पृष्ठम् ॥

स्कन्धो भुजशिरोंऽसोऽस्त्री

क्षीर०—स्कन्द्यते भारेण स्कन्धः । अम्यते भारेण अंसः ॥

टीका०—स्कन्धत्रयं स्कन्धे । कं मस्तकं दधातीति स्कन्धः । पारस्करादिः । भुजशिरः सान्तम् । 'अंस समाघाते' । दन्त्यान्तः । चुरादिपचादी । 'कंसमंसमधीतसम्' (?) इति दन्त्ये चन्द्रगोमी च । 'वृभूर्वमिकुभ्यः शः' इति तालव्यशमंशमिति काचिदुणादिवृत्तिः ॥

सन्धी तस्यैव जत्रुणी ॥ ७८ ॥

क्षीर०—अंसकक्षयोः सन्धिः । उद्भिन्नास्थि जायते इति जत्रु ॥

टीका०—अंसवक्षसोः सन्धिर्मध्यं जत्रु । 'जनी प्रादुर्भावे' । 'जन्वादयश्च' (उ० ४. १०४) इति रुः तश्चान्तादेशः ॥

बाहुमूले उभे कक्षौ

क्षीर०— कष्यते कक्षा ॥

टीका०—बाहुमूलद्वयं कक्षे । 'कष हिंसार्थः' । 'वृतॄवदि—' (उ० ३. ६२) इत्यादिना सः । कक्षः ॥

---

१. 'त स्क' क, २. 'णाहारेण अ' क. पाठः. ३. 'वर्याम' ज. ञ. पाठः. ४. 'नाद् जा' क. ग. घ. ङ. पाठः.

**पार्श्वमस्त्री तयोरधः ।**

क्षीर० — पर्शूनां समूहो पार्श्वे इति द्विवचनं न्याय्यम् । जातौ चैकत्वम् ॥

टीका० — कक्षयोरधः पार्श्वम् । 'स्पृश संस्पर्शे' । 'स्पृशेः श्वण् शुनौ पृ च' (उ० ५. २७) इति श्वण् पृ च धातोरादेशः । पार्श्वं ताल व्यान्तम् ॥

**मध्यमं चावलग्नं च मध्योऽस्त्री**

क्षीर० — मध्ये भवं मध्यमम् । मध्यान्मः (४. ३. ८) । अव॰ गत्यवलग्नम् । अतिकृशत्वात् । वलग्नं च । मद्यते (?) मध्यम् । मध्यो वा अस्त्रीत्वात् ॥

टीका० — मध्यमत्रय तनुमध्ये माझा इति ख्याते । चकाराभ्म मध्यमावलग्ने चास्त्रियौ । अवपूर्वाद् ओलस्जीतः क्तः । अवलग्नम् ॥

**द्वौ परौ द्वयोः ॥ ७९ ॥**

**भुजबाहू प्रवेष्टो दोः**

क्षीर०— परौ भुजो बाहुश्च । भुज्यतेऽनया भुजा । 'भुजन्युब्जौ- (७. ३. ६१) इति साधुः । वहति वाहते प्रयतते वा बाहुः । 'व प्रयत्ने' । प्रवेष्टते प्रवेष्टः । द्यति ददाति वा दोः । सान्तः । बाहापि ॥

टीका० —द्वौ परौ भुजबाहू द्वयोः । भुजचतुष्कं बाहौ । भुज्यतेऽ नेति भुजः । 'हलश्च' (३. ३. १२१) इति घञ् । 'भुजन्युब्जौ पाण्युपतापयः (७. ३. ६१) इति कुत्वगुणाभावौ निपात्येते । 'अर्जिदृशिकम्यमिपसिबा मृजिपाशितुग्धुगृदीर्घहकाराश्च' (उ० १. २७) इति बाधतेः उः हश्चाः देशः । बाहुः । 'वेष्ट वेष्टने' । अच् । प्रवेष्टः । 'दमु उपशमे' । 'दमेर्डोस्

१. 'ध्यान्मः ।' क., २. 'ध्य' क. पाठः. ३. 'त्सा' ज. पाठः.

§ 'सिः' मुद्रितोणादिपाठः ।

(उ० २. ७२) इति डोः। दोः । सान्तः। 'आदेशप्रत्यययोः' (८. ३. ५९) इति षत्वे दोषौ दोषः। 'दोर्दोषा च भुजो बाहुः' इति धनञ्जयः। 'बहुदोषो गुरुध्वंसी' इति विदग्धमुखमण्डनम् ॥

**स्यात् कपोणिस्तु कूर्परः।**

क्षीर०—कं *पुणोति कपोणिः। कुरति कूर्परः, बाहूपबाहुसन्धे[1]-ररत्निसंज्ञ[2]स्य पश्चाद्भागः । तथा च—'कपोणिः कूर्परोऽरत्नेः पृष्ठम्' इति नाममाला ॥

टीका०—कपो[3]णिद्वयं भुजमध्यग्रन्थौ। 'कपो[4]णिः कूर्परः, पुमान्' इति त्रिकाण्डेऽमरमाला।

"†कफो[5]णिस्तु बाहुमध्ये कट्मरः कफणिर्द्वयोः"

इति शब्दार्णवः ॥

**अस्योपरि प्रगण्डः स्यात्**

क्षीर०—अस्य कूर्परस्योर्ध्वे। प्रगण्यते प्रगण्ड्यते वा प्रगण्डः। उपबाहुः ॥

टीका०—कपो[6]णेरूर्ध्वमाकक्षं प्रगण्डः। गमेः 'अमन्ताड्डः' (उ० १. ११९) ॥

**प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥**

क्षीर०—कूर्पराधः प्रकुष्यते प्रकोष्ठः, उपबाहुः। यत् कात्यः—

"प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः" ॥

१. 'न्धि' क. पाठः. २. 'ज्ञो' क. ग. घ. ङ. पाठः. ३. 'फो' ग. ञ. पाठः. ४. 'फो' ञ. पाठः. ५. 'पो' ङ. छ. ञ. पाठः. ६. 'फो' क. ख. ग. च. ञ. पाठः.

* अस्य तनादित्वं मन्यते। † 'कफोणिः कफणिर्द्वयोः' इति शब्दार्णव इति भानुजिदीक्षितः।

टीका० — आमणिबन्धं कर्पोणेरधः[1] प्रकोष्ठः । 'उषिकुषि—' (उ० २. ४) इत्यादिना थन् । ष्टुत्वम् ॥

**मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।**

क्षीर० — मणेर्बन्धोऽत्र मणिबन्धः, भुजपाण्योः सन्धिः । तस्मादारभ्य आ कनिष्ठायाः करभः । करे भातीति करभः । आङभिविधौ ॥

टीका० — मणिबन्धो हस्तग्रन्थिः । तमारभ्य कनिष्ठापर्यन्तं हस्तबहिर्भागः करभः । शरभवत् ॥

**पञ्चशाखः शयः पाणिः**

क्षीर० — शेतेऽस्मिन सर्वं शयः । शस इत्येके । नाममाला तूभयं पपाठ 'पाणिः शसः शयो हस्त' इति । पणन्तेऽनेन पाणिः । हस्तकरौ नानार्थे । मणिबन्धः पाणिमूले ॥

टीका० — पञ्चशाखत्रयं हस्ते । पञ्च अङ्गुल्यः शाखा इवास्येति पञ्चशाखः । शेतेः 'एरच्' (३. ३. ५६) । शयः । 'पण व्यवहारे स्तुतौ च' । करणे †'इञजादिभ्यः' (३. ३. १०८) । पाणिः ॥

**तर्जनी स्यात् प्रदेशिनी ॥ ८१ ॥**

क्षीर० — तर्जन्त्यनया तर्जनी । प्रदिशत्यवश्यं प्रदेशिनी ॥

टीका० — तर्जनीद्वयमङ्गुष्ठपार्श्वस्थाङ्गुल्याम् । 'तर्ज भर्त्सने' । करणे ल्युट् । तर्जनी । 'दिश अतिसर्जने' । णिनि । प्रदेशिनी ॥

**अङ्गुल्यः करशाखाः स्युः**

१. 'फो' क. ख. ग. च. ञ. पाठः.

† 'इणजादिभ्यः' इति मुद्रितवार्तिकपाठः ।

क्षीर० — अङ्गं पाणिपादं लाति अङ्गुली ॥

टीका० — अङ्गुलीद्वयं सामान्येनाङ्गुल्याम् । अगिर्गत्यर्थः । 'ऋतन्यञ्जि—' (उ० ४. २) इत्यादिना उलिः । अङ्गुलिः । 'कृदिकारादू—' (ग० ४. १. ४५) इति ङीपि अङ्गुली च । 'वा नाङ्गुलोऽङ्गुलीमानम्' इत्यमरमालाया-मङ्गुलीमाने पुन्नपुंसकलिङ्गोऽप्युक्तः । तथा च — 'भूमेरप्यर्धमङ्गुलम्' इति प्रयोगः ॥

**पुंस्यङ्गुष्ठः प्रदेशिनी ।**

**मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥८२॥**

क्षीर० — अङ्गे[1] तिष्ठत्यङ्गुष्ठः । 'सुपि स्थः' (३. २. ४) इति कः । 'अम्बाम्ब —' (८. ३. ९७) इति षत्वम् । नामग्रहणायोग्या अनामिका, ब्रह्मणोऽनया शिरश्छेदनात् । अत एवास्यां पवित्रकं क्रियते । कनिष्ठा अत्यल्पा । ताः अङ्गुष्ठाद्याः पञ्चाङ्गुल्यः ॥

टीका० — अङ्गुष्ठपञ्चकं वृद्धाङ्गुष्ठादारभ्य प्रत्येकं यथाक्रममङ्गुली-पञ्चके । अङ्गे तिष्ठतीत्यङ्गुष्ठः । गोष्ठवत् षत्वम् । पृषोदरादिह्रस्वत्वम् । प्रदिश्यतेऽनयेति प्रदेशिनी । प्राक् पर्यायत्वेनोक्ता सम्प्रति स्वरूपप्रतिपादनार्थमित्य-पौनरुक्त्यम् । मध्ये जाता मध्यमा । नास्ति नामास्येत्यनामिका ॥

**पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।**

क्षीर० — नास्ति खमस्य नखः । 'न भ्राण्नपात्—' (६. ३. ७५) इति साधुः[2] । नखं राति नखरः । न खन्यते वा । 'डडरे कवकाः*' (वा० ३. ३. १२५) । 'पुनर्नवः कररुह' इत्येके पेठुः । त्रिभुवनवणत्वा-भावः । कामाङ्कुशोऽपि ॥

१. 'ङ्गे' ग. घ. ङ. पाठः. २. 'धुः । नखति याति वा नखः । नख रा' क. ख. ग. घ. ङ. पाठः.

* 'केकवकाः' मुद्रितवार्तिकपाठः

टीका० — पुनर्भवचतुष्कं नखे। लूनोऽपि पुनर्भवतीति पुनर्भवः। नास्ति खमिन्द्रियमस्येति नखः। नाकवत् प्रकृतिवद्भावः। *'नखनगकुञ्जेभ्यो रो वक्तव्यः' (वा० ५. २. १०७) इति मत्वर्थीयो रः। नखरः। नखशब्दो नखैकदेशे[1] वर्तते। 'समुदायेषु प्रवृत्ताः शब्दाः क्वचिदवयवेऽपि वर्तन्त' इति वचनात्। अरुणेन नखरं त्रिषूक्तम्॥

**प्रादेशतालगोकर्णास्तर्जन्यादियुते तते॥ ८३॥**

क्षीर० — तर्जन्या युक्ते तते प्रसारितेऽङ्गुष्ठे मध्यं प्रादिश्यते प्रादेशः। मध्यमया युतेऽङ्गुष्ठे तते तालः। 'तल प्रतिष्ठायाम्'। अनामिकया युते ततेऽङ्गुष्ठे गोकर्णः। गोकर्णाकृतिर्गोकर्णः॥

टीका० — प्रादेशत्रयं तर्जन्यादियुते तते विस्तृतेऽङ्गुष्ठे। (तर्जनीयुते विस्तृते) प्रादेशः। मध्यमायुते विस्तृते तालः। अनामिकायुते विस्तृते गोकर्णः। तथा च —

"प्रादेशस्तर्जन्या वितते तालोऽथ मध्यमया"

इति नाममाला। दिशेः घञ् प्रपूर्वः। 'उपसर्गस्य—' (६. ३. १२२) इत्यादिना दीर्घः। प्रादेशः। ताल उक्तः॥

**सकनिष्ठे स्याद् वितस्तिर्द्वादशाङ्गुलः।**

क्षीर० — सह कनिष्ठया ततेऽङ्गुष्ठे वितस्तिः। वितस्यतीति। दिष्टिश्च। द्वादशाङ्गुल इति सिद्धस्यानुवादः॥

टीका० — वितस्तिद्वयं सकनिष्ठे विस्तृतेऽङ्गुष्ठे। 'तसु क्षेपणे'। 'वौ तसेः' (उ० ४. १८३) इति तिप्रत्ययः। 'वितस्तिः स्त्री कनिष्ठया' इत्यमर-

१. 'शेऽपि। स' ख. पाठः.

*'रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्, 'नगपांसुपाण्डुभ्यश्च' इति मुद्रितवार्तिकपाठः।

माला । द्वादश अङ्गुलयः प्रमाणमस्या इति द्वादशाङ्गुला । 'तद्धितार्थोत्तरपद-समाहारे च' (२. १. ५१) इति समासः । 'प्रमाणे द्वयसज्—' (५. २. ३७) इत्यादिना मात्रच् । 'द्विगोर्नित्यम्' इति मात्रचो लुक् । ततः 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः' (५. ४. ८६) इत्यच् ॥

**पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥**

**क्षीर० —चप्यतेऽनेन चपेटः चपेटापि । प्रसृतं तलमस्य प्रतलः । प्रसृतो हस्तोऽस्य प्रहस्तः ॥**

टीका० —चपेटत्रिकं विस्तृताङ्गुलिहस्ते । प्रकृष्टं तलं प्रतलः । एवं प्रहस्तः ॥

**द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ ।**

**क्षीर० —द्वौ प्रसृततलौ संहतौ सिंहतलाख्यौ । सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति । संहतलाख्य इत्येके । संहतं सङ्घट्टं लातीति ॥**

टीका० —द्वौ वामदक्षिणौ प्रतलौ चपेटौ संहतौ संहतलः ।

"स च ।

संहतलः प्रतलयुक् प्रसृतावञ्जलिः पुमान् ॥"

इति रभसः । संहतं लातीति संहतलः । 'आतोऽनुपसर्गे कः' (३. २. ३) ॥

**पाणिर्निकुब्जः प्रसृतः**

**क्षीर० —सङ्कुचितो हस्तस्तालादिना प्रस्रियते प्रसृतः । प्रसृतिश्च । प्रकुब्ज इत्यपपाठः । कुब्जस्त्वर्धप्रसृतिः ॥**

टीका० — निश्शेषेण कुब्जीकृतः पाणिः प्रसृतः । सर्तेः क्तः ॥

**तौ युतावञ्जलिः पुमान् ॥ ८५ ॥**

१. 'हतलप्रत' ख. पाठः.

क्षीर० — तौ प्रसृतौ युतौ पार्श्वश्लिष्टौ लौकिकोऽञ्जलिः। अज्यतेऽनेनेति। अम्यते जलमनेनेति नैरुक्ताः। नाट्ये तु—

"पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः" ॥

टीका० — तौ पाणी युतौ मिलितौ अञ्जलिः। 'ऋतन्यञ्जि—' (उ० ४. २) इत्यादिना अलिः ॥

**प्रकोष्ठे विस्तृतकरे हस्तः**

क्षीर० — बाहौ प्रसारितपाणौ हस्तः, चतुर्विंशत्यङ्गुलं प्रमाणम् ॥

टीका० — कफोणेरधः प्रकोष्ठः। तत्र विस्तृतकरे हस्तः। हसेः गर्तवत् तन् ॥

**मुष्ट्या तु बद्धया।**
**स रत्निः स्याद्**

क्षीर० — सः हस्तः। रमन्तेऽस्मिन् मल्ला रत्निः। सह रत्न्या मुष्ट्या वर्तत इत्येके ॥

टीका० — स हस्तो बद्धया मुष्ट्या लक्षितो रत्निः ॥

**अरत्निः स निष्कनिष्ठेन मुष्टिना ॥८६॥**

क्षीर० — नास्ति रत्निर्मुष्टिरस्या अरत्निः। निष्क्रान्ता कनिष्ठा अस्मिन् निष्कनिष्ठो मुष्टिः, तेनोपलक्षितः स हस्तः अरत्न्याख्यः ॥

टीका० — निर्गता कनिष्ठा यस्मात्, तेन मुष्टिना विस्तृतकनिष्ठेनेत्यर्थः। स हस्तः अरत्निः।

"रत्न्यरत्नी स्त्रियौ हस्तौ बद्धमुष्टितलाङ्गुलौ"

इत्यमरमाला।

---

१. 'का' क. ग. घ. ङ. पाठः. २. 'पो' ङ. छ. पाठः.

"नारत्निः कफणौ हस्ते सप्रकोष्ठे* तलौ"

इति रुद्रः। मुष्ट्या मुष्टिनेति रूपभेदाद् द्वयोः॥

**व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्।**

**क्षीर०—व्यामीयते रज्ज्वाद्यनेन, व्यमेति वा व्यामः। स्वे स्वे पार्श्वे प्रसारितयोर्बाह्वोरन्तरं मध्यम्॥**

टीका०—तिर्यक् पार्श्वविस्तृतयोर्बाह्वोरन्तरं व्यामः। 'माङ् माने'। घञर्थे कः।

"परिश्रमार्थे व्यायामो व्यायामं पौरुषं विदुः"

इति शाश्वतेन त्र्यक्षर उक्तः॥

**ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु॥८७॥**

**क्षीर०—ऊर्ध्वविस्तृतो दोः पाणिश्च नुः पुंसो यत्र, तद् मानं[2] पौरुषं नाम मानम्। ऊर्ध्वं विस्तृतदोःपाणिनृमानं पुरुषमानं तत् पौरुषमित्येके। 'पुरुषहस्तिभ्यामण् च' (५. २. ३८)। द्वादशाङ्गुलं तु पौरुषं छायामानम्॥**

टीका०—ऊर्ध्वं यद् विस्तृतबाहुपाणिपुरुषप्रमाणं, तत् पौरुषम्। पुरुषः प्रमाणमस्येति 'पुरुषहस्तिभ्यामण् च' (५. २. ३८) इत्यण्। पौरुषं जलं, पौरुषी यष्टिः, पौरुषः सेतुः॥

**कण्ठो गलः**

**क्षीर०—कणति कण्ठते वा कण्ठः। गिरति गलः। ग्रीवाग्रभागः॥**

१. 'य' ख. पाठः. २. 'नमध्ये पौ' क. ग. घ. ङ. पाठः.

* 'ष्ठे चाङ्गुलौ इति रुद्रः' इति भानुजिदीक्षितः।

टीका० — कण्ठद्वयं कण्ठे । 'कणेष्ठः' (उ० १. १०८) इति ठः । बहुलवचनादिर्कत्वं न भवति । गिरन्त्यनेनेति गलः । 'पुंसि संज्ञायां घः—' (३. ३. ११८) इति व्यवस्थितविभाषया प्राण्यङ्गे लत्वम् । अन्यत्र गर एव ॥

**अथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।**

क्षीर० — गृणाति गिरति वा ग्रीवा । शिरो धीयतेऽस्यां शिरोधिः । कं धारयति कन्धरा । 'संज्ञायां भृतॄवृजि—' (३. २. ४६) इति खच् ॥

टीका० — ग्रीवात्रयं ग्रीवायाम् । 'शेवयह्वजिह्वाग्रीवाप्वामीवाः' (उ० १. १६०) इत्यनेन गिरतेर्वन् ग्रीभावश्च निपात्यते । शिरो धीयतेऽस्यामिति शिरोधिः । 'कर्मण्यधिकरणे च' (३. ३. ९३) इति किः ।

"बिभ्राणमायतिमतीमवृथा शिरोधिम्" (स० ५. श्लो० ६५)

इति माघप्रयोगात् स्त्रियाम् । कं शिरो धरतीति कन्धरा । पचादिः ॥

**कम्बुग्रीवा त्रिरेखा सा**

क्षीर० — शङ्खाकृतिग्रीवा कम्बुग्रीवाख्या असौ त्रिवलि[1](या) चेत्[2] ॥

टीका० — सा कन्धरा तिसृभी रेखाभिर्युक्ता कम्बुग्रीवा । इदं महापुरुषलक्षणम् ॥

**अवटुर्घाटा कृकाटिका ॥ ८८ ॥**

क्षीर० — न वटत्यवति वा अवटुः । घटयति घाटा । कृकं शिरोग्रीवमटति कृकाटिका । ग्रीवापश्चाद्भागः ॥

टीका० — अवटुत्रयं घाटु[3] इति ख्याते । 'अवटुः पुरुषे कृकाटिका घाटा' इति वोपालितः । घाटेश्चौरादिकाद् अच् । घाटा । कृकं कण्ठमटतीति कृकाटिका । अथवा कृकस्य अटिका कृकाटिका ण्वुलादिः । अन्यत्र 'कर्मणि—'

---

१. 'को न' ग. पाठः. २. 'लयाख्या चे' क. ग. घ. ङ. पाठः. ३. 'टु' क. ख. पाठः.

(३.२.१) इत्यण्। ङीप्। गलपृष्ठप्रदेशत्वेन कुत्सितत्वात् कन्। स्वार्थिको वा कः। 'केऽणः' (७.४.१३) इति ह्रस्वत्वम्। 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३५) इति क्वुन् वा ॥

**वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्।**

क्षीर० — उच्यतेऽनेन वक्त्रम्। अस्यतेऽस्मिन् आस्यम्। 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ण्यत्।

"मुखं मुखान्तरालं च द्वयमास्यमिति स्मृतम्"

इति शाश्वतः। उद्यतेऽनेन वदनम्। तुण्ड्यतेऽनेन तुण्डम्। 'तुडि तोडने'। आ अनिति श्वसित्यनेन आननम्। लप्यतेऽनेन लपनम्। मुत् खन्यते मुखम्। 'डित् खनेर्मुट् स चोदात्तः' (उ० ५. २०)। मुदितानि खान्यत्र इत्येके ॥

टीका० — वक्त्रसप्तकं मुखे। मुखं च विवरम्। समुदाये चोपचारात् कवयः प्रयुञ्जते। उच्यतेऽनेनेति वक्त्रम्। 'गुधृवीपचिवचियमिसदिक्षादिभ्यश्च†' (उ० ४. १६८) इति त्रन्। वक्त्रम्। अस्यते क्षिप्यते भक्ष्यमनेनास्मिन् इति वा आस्यम्। 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ण्यत्। आङ्पूर्वादस्यतेः 'अघ्न्यादयश्च' (उ० ४. ११३) इति यत्प्रत्ययो वा। वदनलपने करणे ल्युडन्ते। 'तुडि तोडने'। चुरादिः। 'अकर्तरि च—'(३. ३. १९) इति घञ्। 'एरच्' (३. ३. ५६) वा। 'खनो घ च' (३. ३. १२५) इति घित्करणसामर्थ्याद् घो वा। तुण्डम्। मुखं निस्सरणमित्यत्रोक्तम् ॥

**क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥**

क्षीर० — जिघ्रत्यनेन घ्राणम्। घुणति भ्रमति[२] गन्धार्थं घोणा।

१. 'खम्। मु' ख. पाठः. २. 'ति घोणा वहति गन्धं वा ग' क. ग. घ. ङ. पाठः.

† 'त्रः' इति मुद्रितोणादिपाठः।

नासते नासिका ।

"कुल्या गन्धवहा घोणा घ्राणा नासा च नासिका"

इति मुनिः कुल्यामप्याह । ‡शिङ्खिनी[1] च ॥

टीका० — घ्राणपञ्चकं नासायाम् । घ्रातेः करणे ल्युट् । घ्राणम् । गन्धं वहति प्राप्नोतीति गन्धवहा । पचादिः । 'घुण घूर्ण भ्रमणे' । अच् । घोणा । 'णासृ नासृ शब्दे' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः, पचादिर्वा । नासा । 'णस कौटिल्ये' । अच् । नसा । ण्वुलि नासिका । 'नसा नासा च नासिका' इति बृहदुत्पलिनी ॥

## ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।

क्षीर० — उष्यते तीक्ष्णाहारेणौष्ठः । ओष्ठ इत्युभयार्थोऽपि अधरसान्निध्यादुत्तरोष्ठेऽत्र वर्तते । अधो भवोऽधरः । ओष्ठाभ्यां सहितावधरौ वा । अधरोऽप्योष्ठमात्रे वर्तते । दन्ताश्छाद्यन्ते ताभ्याम् । तद्वद् दशनानां वाससी च तावेव ॥

टीका० — ओष्ठचतुष्कमोष्ठे । तत्रोपरितनोऽधोवर्ती च ओष्ठः । अधरस्त्वधर एव ।

"अधरोष्ठेऽधरः पुमानधस्ताद्धीनयोस्त्रिषु"

इति बलशर्मा । इह तु गोबलीवर्दन्यायेनाधरशब्दसन्नियोगादुपरितनौष्ठ एव ओष्ठशब्दो वर्तते । अर्थस्य च द्वित्वाद् द्विवचनम् । यथा — 'तिथयो द्वयोः' इति बहुत्वाद् बहुवचनम् । 'प्रवेपमानाधरलक्ष्यकोपया' (स० ५. श्लो० ७४) इति कुमारसंभवे प्रवेपमानाभ्यामधराभ्यां लक्ष्यः कोपो यस्या इति वल्लभेन विवृतम् । ओष्ठेन सहितोऽधर ओष्ठाधर इति केचित् । द्वन्द्वे तु नपुंसकं स्यात् । 'उष दाहे' । 'उषिकुषिगार्तिभ्यस्थन्' (उ० २. ४) ओष्ठः ॥

## अधस्ताच्चिबुकं

१. 'शिम्बिनी' ख. पाठः.

‡ 'शिङ्घाणी नासिका चाथ' इति यादवः

क्षीर० — अस्मिन्नोष्ठाधश्चीयते चिबुकं हन्वग्रसन्धिः ॥

टीका० — अधरादधश्चिबुकम् ॥

गण्डौ कपोलौ

क्षीर० — गण्डति संहन्यते गण्डः । कम्पते कपोलः ॥

टीका० — गण्डद्वयं कपोले । 'गडि वदनैकदेशे' । अच् । गण्डः । कपोल इति । *'कपिकल्लिकण्डिगडिगण्डिकटिपटिभ्य ओलच्' (उ० १.६९) । अस्मादेव निर्देशान्नुमभावः ॥

तत्परा हनुः ॥ ९० ॥

क्षीर० — तत्परा तत्पश्चाद्भागे कपोलाधः । हन्त्याहारं हनुः । पुंस्यपि ॥

टीका० — तत्परा कपोलोपरिभागो हनुः, यत्र जम्भाख्या दन्ता जायन्ते । हन्तेः 'शृस्वृष्णिहितृप्यासिवसिहनिक्लिदि‡खण्डिमनिभ्यश्च' (उ० १. १०) इति उप्रत्ययः । हनुः । तत्परेति रूपभेदात् स्त्रीत्वम् । 'पुंयोगे कर्णहनू' इति वररुचिः ॥

रदना दशना दन्ता रदाः

क्षीर० — रद्यते विलिख्यतेऽमीभिः रदनाः । दश्यते दम्यते वामीभिः दशना दन्ताश्च । रदन्ति विलिखन्ति रदाः ॥

टीका० — रदनचतुष्कं दन्ते । 'रद विलेखने' । करणे ल्युट् । रदनः । 'दंश दंशने' । ल्युट् । संज्ञावशादनुनासिकलोपः । दशनः । 'दमु उपशमे' । गर्तवत् तन् । दन्तः । 'वयसि दन्तस्य दतृ' (५. ४. १४१) इति निर्दे-

१. 'कृहनुभ्यां क्नुः । हनुः' ङ. छ., 'शरुवद्रुः हनुः' क. ख. ग. च. पाठः

* 'कपिगडि', ‡ 'बन्धिम' इति च मुद्रितोणादिपाठः

शात् पुंसि सुदन् । 'सुदती दतो धावती'ति प्रयोगाद् दच्छब्दोऽपि । रदः पचादिः ॥

**तालु तु काकुदम् ।**

**क्षीर०— तलत्याहारोऽस्मिंस्तालु । ईषत् कवते काकु, तद् ददाति काकुदम् ॥**

**टीका०** — तालुद्वयं **तालुके** । 'त्रोरश्च लः' (उ० १.५) इति ञुण् रेफस्य च लः । तालुः । नान्तोऽपि (?) तालु । काकुर्जिह्वा सास्मिन् विद्यते इति काकुदम् । नैरुक्तोऽत्र शब्दलोप इति भाष्य उक्तम् ॥

**रसज्ञा रसना जिह्वा**

**क्षीर०— रस्यतेऽनया रसना । लेढि ह्वयते वानया जिह्वा । लोला च । घण्टिका तु गलशुण्डिका ॥**

**टीका०** — रसज्ञात्रयं **जिह्वायाम्** । रसं जानातीति रसज्ञा । रसनेति । 'रस आस्वादने' । नन्द्यादिल्युः । एवं दन्त्यमध्या । जयतेः[1] ग्रीवाव-जिह्वा निपातिता ॥

**प्रान्तावोष्ठस्य सृक्कणी ॥ ९१ ॥**

**क्षीर० — ओष्ठस्येति जातावेकत्वम् । सृजति लालां सृक्क । सृक्कणी इत्यपि, कन्नन्तत्वात् ॥**

**टीका०** — ओष्ठस्य वामदक्षिणौ पर्यन्तौ सृक्कणी क्लीबे ।

"वामं लिहन् सृक्क *वरास्यपूर्णे महानसेऽप्यावरणं ददाति"

इति वसन्तराजे अन्नन्तक्लीबे । 'सक्थ्यस्थिदधिसृक्क्यक्षि' इत्यादिना इदन्तमपि शबरस्वामी पठति । द्वयमपीति रामदासः ॥

१. 'जि जये ग्री' ङ. छ. पाठः.

* 'वराश्यपूर्णे' इति स्यात् ।

ललाटमलिकं गोधिः

क्षीर० — ललत्यत्रालङ्करोति, ललश्चटुलस्तिलकोऽटत्यत्र वा ललाटम्। अल्यते भूष्यते अलिकमलीकं च। गुध्यते पटादिना वेष्ट्यते गोधिः। फालं च॥

टीका० — ललाटत्रयं ललाटे। 'लल ईप्सायाम्'। बहुलवचनाद् आटन्। 'अल भूषणादौ'। बाहुलक इकन्। अलिकम्। मृषार्थे तु दीर्घमध्यम्। गावौ ने(त्रौ ? त्रे) धीयेते अस्मिन्निति गोधिः। त्रिकाण्डशेषे गोधिर्ना॥

ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियाम्।

क्षीर० — भ्रमति भ्रूः। नेत्रोर्ध्वे रोमराजिः॥

टीका० — लोचनयोरूर्ध्वभागौ भ्रुवौ। 'भ्रमेश्च डूः' (उ० २. ७१)॥

कूर्चमस्त्री भ्रुवोर्मध्यं

क्षीर० — कूर्पमिति भागुरिः। तन्न, लक्ष्यादर्शनात्। एवं कूर्चम्[1]॥

टीका० — नासिकाया उपरि भ्रुवोर्मध्यं कूर्चम्॥

तारकाक्ष्णः कनीनिका॥ ९२॥

क्षीर० — तारयति तमस्तारका। कन्। 'तारका ज्योतिषि'(वा० ७. ३. २४९) इतीत्त्वाभावः। अक्ष्णं इति खे तारकाव्यवच्छेदः। 'कन दीप्तौ'॥

टीका० — अक्षिपुत्तलिका तारका नक्षत्रे प्रागुक्ता॥

१. 'र्मम्' क. ग. घ. ङ. पाठः. २. 'क्ष्णः कनीनिकेति ख(द?च)रीव्य' ग. पाठः.

**लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी।**
**दृग्दृष्टी च**

क्षीर० — लोच्यतेऽनेन लोचनं विलोचनं च। नीयतेऽनेन दृश्यं नयनं नेत्रं च। ईक्षतेऽनेनेक्षणम्। चष्टे वक्ति चक्षुः। अक्ष्णोत्यक्षि। द्वन्द्वाच्चक्षुः क्लीबे। दृश्यतेऽनया दृक्। द्वन्द्वात् स्त्रियाम्॥

टीका० —लोचनाष्टकं नेत्रे। 'लोचृ दर्शने'। करणे ल्युट्। लोचनम्। नयतेर्ल्युटि नयनम्। 'दाम्नी—' (३. २. १८२) इत्यादिना ष्ट्रन्। नेत्रम्। 'ईक्ष दर्शने'। ल्युट्। ईक्षणम्। 'चक्षेः शिच्च' (उ० २. ११९) इत्युसिः। चक्षुः। शित्त्वादार्धधातुकाश्रयः ख्याञादेशो न भवति। 'अशू व्याप्तौ'। 'अशेर्नित्' (उ० ३. १५७) इति क्सिः। अक्षि। दृशेः सम्पदादिक्विप्। 'क्विन्प्रत्ययस्य कुः' (८. २. ६२) इति कुत्वम्। दृक्। दृशेः करणे क्तिन्। दृष्टिः॥

**अस्रु नेत्राम्बु रोदनं चास्रमश्रु च॥ ९३॥**

क्षीर० — अस्यतेऽस्रु अस्रं च। अश्नुते आकण्ठमश्रु। बाष्पो नानार्थे॥

टीका० —अश्रुपञ्चकं लोचनतोये। अस्रु अश्रु इति 'असु क्षेपणे', 'अशू व्याप्तौ' *'अस्र्वादयश्च' (उ० ५. २९) इति रुन्प्रत्ययान्तौ निपातितौ। एवं यथाक्रम दन्त्यतालव्यावित्युणादिः।

"प्रावर्तयन्नदीरस्रैर्द्विषां तद्योषितां च सः"
(स० १९. श्लो० ११५)

इति माघे शोणितवाचिना श्लेषाद् दन्त्यसम्।

"उपशान्तौ शमः शीरोऽजगरे वाश्रमश्रुणि"

इति तालव्ये शभेदः॥

१. 'श्रु' क. ङ. च. छ. पाठः. २. 'त्रुप्र' ङ. छ., 'क्विप्र' च., 'क्विन्' क. ग., 'क्रन्' ख. पाठः.

* 'अश्रु' इति मुद्रितोणादिपाठः।

**अपाङ्गौ नेत्रयोरन्तौ**

क्षीर० — बाह्याविति शेषः। अपकृष्टावङ्गादपाङ्गौ ॥

टीका० — वामदक्षिणौ नेत्रान्तावपाङ्गौ। अगिर्गत्यर्थः। अच्। अपाङ्गः। अपकृष्टमङ्गति गच्छतीत्यपाङ्गः ॥

**कटाक्षोऽपाङ्गदर्शने।**

क्षीर० — कटे क्षीयते कटाक्षः। अपाङ्गेन दर्शनं नेत्रत्रिभागाख्यम् ॥

टीका० — अपाङ्गदर्शने कटाक्षः। कटमसदृशमक्षि यत्र स कटाक्षः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्—' (५. ४. ११३) इति षच् समासान्तः ॥

**कर्णशब्दग्रहौ पुंसि श्रुतिः स्त्री श्रवणं श्रवः ॥ ९३ ॥**

क्षीर० — शब्दस्य ग्रहोऽनेन शब्दग्रहः। श्रूयतेऽनया श्रुतिः। शृणोति श्रवोऽसन्तः, क्लीबे। श्रोत्रं च ॥

टीका० — कर्णषट्कं कर्णे। किरतेः 'कृवृजृ*सिद्रुपन्यनिस्वपिभ्यो नित्' (उ० ३. १०) इति नः। कर्णः। 'ग्रहवृदृनिश्चि—' (३. ३. ५८) इत्यादिना करणे अप्। ग्रहः। शब्दस्य ग्रहः शब्दग्रहः। 'हुयामा$श्रुभसिभ्यस्त्रन्' (उ० ४. १६९) श्रोत्रम्। 'श्रुयजीषिस्तुभ्यः करणे' (वा० ३. ३. ९९) इति क्तिन्। श्रुतिः। करणे ल्युटि श्रवणम्। करणेऽसुन्। श्रवः ॥

**उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्।**

क्षीर० — शीर्यते जरया शिरः[1]। 'कुमारशीर्षयोः—' (३. २. ५१) इति लिङ्गाच्छीर्षं प्रकृत्यन्तरम्। मूर्छति मूर्धा पुमान्। मस्यते परिणमते मस्तकम्। कं वराङ्गं च नानार्थे ॥

१. 'केशनाडीभिः शिरः। एव कु' ग. घ., 'केशनार्ज्ञाति शिर.। एवं कु' क. पाठः.

* 'जृसिद्रुपन्यविस्वपि', $ 'श्रुसिभ्य' इति मुद्रितोणादिपाठः।

टीका० — उत्तमाङ्गपञ्चकं शिरसि । 'श्रयतेः स्वाङ्गे शिरः किच्च' (उ० ४. १९९) इत्यसुन् शिरादेशश्च धातोः । शिरः । 'कुमारशीर्षयोः—' (३. २. ५१) इति निपाताच्छिरसः शीर्षभावः ।

"शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा ।
विचकर्त शिरान् द्रौणी रथोत्पादरजोपमान् ॥"

इति कण्ठभूषणालङ्कार उक्तम् । 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्—' (उ० १. १६५) इत्यादिना मूर्पूर्वाद् दधातेर्मूर्धा निपातितः । 'मसी परिमाणे' । बाहुलकस्तन् । ततः स्वार्थे कः । मस्तकोऽस्त्रियामिति सम्बन्धः ॥

**चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९८ ॥**

क्षीर० — चीयते चिकुरः । चिहुरः, प्राकृते कस्य हादेशात् । संस्कृतमपीति भुजः(?) —

"कुन्तला मूर्धजास्तूग्राश्चिकुराश्चिहुराः कचाः"

इति । कुन्ताकारं लाति कुणति वा कुन्तलः । वल्यते वालः । (ज्वा[1]ज्व) लादिणो वा । कचति कचः । के शेते केशः । शिरसिजश्च ॥

टीका० — चिकुरषट्कं केशे । 'चिञ् चयने' । 'कुरच्छेदने' । चिन्वन् वर्धमानः छिद्यत इति चिकुरः । पृषोदरादिः । बल्यते संव्रियत इति बालः । कर्मणि घञ् । 'कच बन्धने' । 'घञर्थे कः' (वा० ३. ३. ५८) । कचः । 'क्लिशू विबाधने' । 'क्लिशेरन् ललोपश्च' (उ० ५. ३३) इत्यन्ललोपौ ॥

**तद्वृन्दे कैशिकं कैश्यम्**

क्षीर० — केशानां समूहे 'अचित्तहस्तिधेनोष्ठक' (४. २. ४७) । कैशिकम् । केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४. २. ४८) ॥

1. 'स्नवाश्चि' क. ग. ङ. पाठः.

टीका०—कैशिकद्वयं केशसमूहे। 'अचित्तहस्तिधेनोष्ठक्' (४. २. ४७) 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४. २. ४८) इति यञ्। कैश्यम्॥

**अलकाश्चूर्णकुन्तलाः।**

**क्षीर०—चूर्णाकाराः केशाः खर्जूराख्याः कुरु[3]लाश्च॥**

टीका०—अलकद्वयमलके। 'अल भूषणादौ'। 'बहुलमन्यत्रापि' (उ० २. ५१) इति क्वुन्। अलकः। 'स्वभाववक्राण्यलकानि तासाम्' इति कस्यचित् प्रयोगः। अतः क्लीबे च। चूर्णः कुटिलः कुन्तलश्चूर्णकुन्तलः॥

**ते ललाटे भ्रमरकाः**

**क्षीर०—भ्राम्यन्ति भ्रमरप्रकृतयो वा॥**

टीका०—अलका एव लम्बतया ललाटान्तगता भ्रमरकाः। इवार्थे कः॥

**काकपक्षः शिखण्डकः॥ ९६॥**

**क्षीर०—काकस्येव पक्षः। शिखेव डय[4]ते शिरसि खण्ड्यते वा शिखण्डः। क्षत्रियाणां चूडा काकपक्ष इति गौडः॥**

टीका०—काकपक्षद्वयं घोटाचूड इति ख्याते। क्षत्रियकुमाराणामुपनयनकृते शिखापञ्चक इत्यन्यः। 'शिखण्डौ तु शिखा बर्हः' इति तालव्यादौ रभसः॥

**कबरी केशवेशः**

**क्षीर०—कृष्णवर्णकं वृणोति कबरी। 'जानपदकुण्ड—' (४. १. ४२) इति ङीष्। वे[5]शो रचना॥**

---

१. 'बर्बरा' क. ग. घ. ङ. पाठः. २. 'कुला' ग. ङ. पाठः. ३. 'न्त' घ. पाठः. ४. 'ते अस्र आस्रं च पुल्लिङ्गो केशे च रुधिरेऽश्रुणि। इति वै शि' (?) ख. पाठः. ५. 'षो' ख. घ. पाठः.

टीका० — केशवेशे केशरचनामात्रे खोप्यकादौ कबरी। 'जानपद—' ४. १. ४२) इत्यादिना ङीष् ॥

**अथ धम्मिल्लः संयताः कचाः।**

क्षीर० — संयता बद्धाः। ऊर्ध्वं मिलन्ति धम्मिल्लो जूटाख्यः। [1]धम्मिः सौत्रो[2] वा[3]। धम्मर्ले इति सभ्याः।

टीका० — कुसुमगर्भेषु बहिर्मौक्तिकलतिकादिना संयतेषु केशेषु धम्मिल्लः ॥

**शिखा चूडा केशपाशी**

क्षीर० — शेते मूर्ध्नि शीयते वा शिखा। †'शीङः खनिग्रस्वश्च' (उ० ५. २४) चो[5]द्यते चूडा। प्रशस्ताः केशाः केशपाशी ॥

टीका० — शिखात्रयं चूडायाम्। शिखोक्ता। केशपाशी गौरादिः।

**व्रतिनस्तु सटा जटा ॥ १७ ॥**

क्षीर० — शिखेत्येव। 'सट अवयवे' 'जट सङ्घाते' ॥

टीका० — व्रतिनां चूडाविशेषे जटाद्वयम्। 'जट सट सङ्घाते'। 'सट अवयवे'। दन्त्यादि। उभयत्र भिदाद्यङ् ॥

**वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे।**

क्षीर० — 'वेण गतौ'। शिरसि भवः शीर्षण्यः। शरीरावयवाद् यत्। 'ये च तद्धिते' (६. १. ६१) इत्यत्र 'वा केशेषु शिरसः शीर्षन्

१. 'मि सौ' ख. पाठः. २. 'त्रः पाठः। ध' क. ग. पाठः. ३. 'वा पाठः। ध' ग. क. पाठः. ४. 'ल्ल', ५. 'चू' ख. पाठः.

† 'शीङो ह्रस्वश्च' इति मुद्रितोणादिपाठः

वक्तव्यः' (वा० ६. १. ६१) । विशदेऽन्योन्यासम्पृक्ते विकृते स्नानादिनिर्मले वा । 'शद्लृ शातने' ॥

टीका० — प्रोषितभर्तृकादिभिर्या बध्यते तत्र वेणिद्वयम् । 'वेणृ गतिज्ञानादौ' । 'इन्' इतीन् । वेणिः । प्रवेणीत्यन्योपसर्गनिवृत्तिः । विशदे परस्परासंसक्ते कचे शीर्षण्यद्वयम् । शिरसि भवाः शीर्षण्याः शिरस्याः । 'शरीरावयवाच्च' (४. ३. ५९) इति यत् । 'ये च तद्धिते' (६. १. ६१) इति शीर्षन्नादेशविकल्पः । 'ये चाभावकर्मणोः' (६. ४. १६८) इति प्रकृतिवद्भावः ॥

**पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे ॥ ९८ ॥**

क्षीर० — कचादित्यर्थनिर्देशः । केशपाशः केशपक्षः केशहस्तः । 'प्रशंसावचनैश्च' (२. १. ६६) इति समासः ॥

टीका० — केशपर्यायात् परतः पाशादयस्त्रयः प्रयुज्यमानाः कलापार्थाः समूहवाचकाः । यथा केशपाशः केशपक्षः केशहस्त इत्यादि ॥

**तनूरुहं रोम लोम**

क्षीर० — शिरसोऽन्यत्र रोहति रोम । रलयोरैक्याल्लोम । लूयते वा ॥

टीका० — तनूरुहत्रयं शरीरभवे रोमाणि । मूलविभुजादित्वात् कः । तनूरुहम् । 'व्यानशे तनुरुहाण्यपि हर्षः' इति ह्रस्वान्तेऽपि । रोमलोमनी *'दामन्सीमन्लोमन्—' (उ० ४. १५२) इत्यादौ नकारान्ते निपातिते ॥

**तद्वृद्धौ श्मश्रु पुम्मुखे ।**

क्षीर० — रोमवृद्धिः श्मश्रु । शमश्नुते श्मश्रु । द्राडिकापि । व्यञ्जनं नानार्थे ॥

टीका० — चोड इति ख्याते श्मश्रु । 'श्मनि श्रयतेर्डुन्' (उ० ५.

---

*'नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन्' इति मुद्रितोणादिपाठः ।

२८) इति श्मनूशब्द उपपदे श्रयतेर्डुन्। डकारष्टिलोपार्थः। 'श्मश्मनशि-श्वीति' शभेदः॥

आकल्पवेषौ नेपथ्ये

क्षीर०—आकल्प्यते आकल्पः। वेवेष्टयङ्गं वेषः। विशति चेत इत्येके तालव्यं शमाहुः। 'कर्मवेशाद्यत्' (५. १. १००) इत्यत्र तथा विचारात्। नेत्रयोः पथ्यं नेपथ्यम्। वस्त्रादिशोभा॥

प्रतिकर्म प्रसाधनम्॥ ९९॥

क्षीर०—प्रत्यङ्गं कर्म प्रतिकर्म। प्रसाध्यतेऽनेनाङ्गं प्रसाधनम्। पञ्चैकार्था इत्येके। तच्चासत्। वेषो हि वस्त्रालङ्कारमाल्यप्रसाधनैरङ्गशोभा। प्रसाधनं तु समालम्भनं तिलकपत्रभङ्गादिना॥

टीका०—आकल्पपञ्चकं सुवर्णादिकृतशोभायाम्। 'कृपू सामर्थ्ये'। घञ्। आङ्पूर्वः। आकल्पः। 'विष्लृ व्याप्तौ'। 'हलश्च' (३. ३. १२१) इति करणे घञ्। वेषः। 'वेषतुषाररोषा' इति षभेदः।

"नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि च"

इति तालव्यान्ते रभसः। तदा च 'विश प्रवेशने' साध्यः। नाथीयधातुवृत्तावपि कोषवन्मूर्धन्यषत्वं तालव्यशत्वं चोक्तम्। प्रकृष्टं कर्म प्रतिकर्म, नान्तम्। करणे ल्युटि प्रसाधनम्॥

दशैते त्रिषु

क्षीर०—एते वक्ष्यमाणा रोचिष्णवन्ताः॥

अलङ्कर्तालङ्करिष्णुश्च

क्षीर०—'अलंकृञ्—' (३. २. १३६) इतीष्णुच्॥

मण्डितः।

१. 'पाठात्। ने' ख. पाठः.

**प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृते ॥ १०० ॥**

क्षीर०— परिष्क्रियते 'संपर्युपेभ्य' (६. १. १३७) इति सुट् ॥

**विभ्राड् भ्राजिष्णुरोचिष्णू**

क्षीर०— भ्राजते तच्छीलो भ्राजिष्णुः । 'भुवश्च' (३. २. १३८) इति वा इष्णुच् ॥

**भूषणं स्यादलंक्रिया ।**

क्षीर० — अलङ्कारसाध्या शोभा ॥

टीका० — दशैते त्रिष्वलङ्कर्तालङ्करिष्णुश्च मण्डनः ।
प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ॥
विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलङ्क्रिया ।
इति पाठः सुगम एव ॥

**अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥**
**मण्डनं च**

क्षीर० — करणे घञ्ल्युटौ ॥

टीका० — अलङ्कारपञ्चकं हाराद्याभरणे । अलङ्क्रियत इत्यलङ्कारः । 'अकर्तरि च—' (३. ३. १९) इति घञ् । आभ्रियत इत्याभरणम् । ल्युट् । 'संपर्युपेभ्यः करोतौ भूषणे' (६. १. १३७) इति सुट् । परिष्कारः । 'परिनिविभ्यः सेवासित —' (८. ३. ७०) इत्यादिना षत्वम् । भूषेर्ल्युटि भूषणम् । 'मडि भूषायाम्' । 'करणाधिकरणयोश्च' (३. ३. ११७) इति ल्युट् । मण्डनम् ॥

**अथ मुकुटं किरीटं पुन्नपुंसकम् ।**

क्षीर० — मौलिर्नानार्थे । मुखे कुट्यते मुकुटम् । मङ्क्यतेऽनेन वा । कीर्यते किरीटम् ॥

टीका० — मकुटद्वयं मउड इति ख्याते । 'मकि मण्डने' 'मङ्केः उटन् नलोपश्च' । एवमकारादिर्मकुटः । 'अन् मुकुटादिषु' (परिच्छे० १. सू० २२) इत्यत्र प्राकृतशास्त्रे वररुचिना उकारश्च मकारवान् । किरतेः कॄ*पृकपिभ्यः कीटन्' (उ० ४. १८६) । किरीटः ॥

---

'तॄ' इति मुद्रितोणादिपाठः ।

**चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥**

क्षीर० — मणिरिति शेषः। तरतीव तरलः। नायको नानार्थे ॥

टीका० —चूडामणिद्वयं शिरोमणौ। हारमध्यगो विशिष्टमणिस्तरलः। तारं लातीति पृषोदरादिः ॥

**वालपाश्या पारितथ्या**

क्षीर० — वालपाशे साधुर्वालपाश्या । वालवन्धनार्थं मुक्ताव-लयं पुल्लतलकादि । वालेषु पाशसमूहो वा । परितस्तथा भवा पारितथ्या ॥

टीका० — मस्तकसीमन्तीतोऽन्या वाले स्थिता या सुवर्णादिरचिता हंस-पादिकादिः। तत्र वालपाश्याद्वयम् । वालपाशाय हिता वालपाश्या । 'तस्मै हि-तम्' (५. १. ५) इति यत् ॥

**पत्रपाश्या ललाटिका।**

क्षीर० — सीमन्तादिकः[1]। पत्रपाशानां समूहः पत्रपाश्या। अल-ङ्कारो ललाटिका। 'कर्णललाटात् कनलङ्कारे' (४. ३. ६५) ॥

टीका० — पत्रपाश्याद्वयं सुवर्णादिरचितललाटाभरणे। ललाटिकेति। 'कर्णललाटात् कनलङ्कारे' (४. ३. ६५) इति कन् ॥

**कर्णिका तालपत्रं स्यात्**

क्षीर० — कर्णालङ्कारस्तालपत्रवत् सौवर्णोऽपि ॥

टीका० — कर्णिकाद्वयं ताडङ्काख्ये कर्णाभरणे । एतत् सौवर्णं च तालपत्राख्यं च। ललाटिकावत् कर्णिका ॥

**कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥**

क्षीर० — कुण्डं लाति वृत्तत्वात् कुण्डलम्। कर्णो वेष्ट्यते कर्ण-वेष्टनम्। भिन्नरूपास्त्रयः कर्णालङ्कारा इत्येके ॥

---

1. 'दि।' ख. पाठः.

टीका०—देवविद्याधरादीनां कर्णाभरणे मध्यपूर्णे कुण्डलद्वयम् । 'कुडि दाहे' । 'कलस्तृपश्च' (उ० १. १०९) इति बाहुलकः कलः । कुण्डलम् ॥

ग्रैवेयकं कण्ठभूषा

क्षीर०—ग्रीवाया अलङ्कारो ग्रैवेयकः । 'कुलकुक्षि—'(४. २. ९६) इति ढकञ् ॥

टीका०—कण्ठाभरणमात्रे ग्रैवेयकद्वयम् । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' (४. २. ९६) इति ढकञ् । ग्रैवेयकः । 'ग्रैवेयस्फुरितत्विषः' (स० ४. श्लो० ७९) इति रघुः ॥

लम्बनं स्याल्ललन्तिका ।

क्षीर०—ललत्यलङ्कारान्तरे ललन्ती ॥

टीका०—लम्बमानग्रीवाभरणे लम्बनद्वयम् । लम्बमाने आभरणमात्रे लम्बिकादावेतद् द्वयमिति केचित् । लम्बतेः ल्युट् । लम्बनम् । ललन्त्येव ललन्तिका । शतृङीप् । कन् । 'केऽणः' (७. ४. १३) इति ह्रस्वत्वम् ॥

स्वर्णैः प्रालम्बिका

क्षीर०—सिंहावलोकितेन कृतेत्येव । स्वर्णमयी कण्ठभूषा ॥

टीका०—सैव ललन्तिका स्वर्णकृता प्रालम्बिकाख्या । ण्वुल् । अकः । 'प्रत्ययस्थाद्—' (७. ३ ४४) इत्यादिना इत् ॥

अथोरस्सूत्रिका मौक्तिकैः कृता ॥ १०४ ॥

क्षीर०—प्रालम्बिकेत्येव ॥

टीका०—सैव ललन्तिका मुक्तादिभिः कृता उरस्सूत्रिका ॥

१. 'न्ते ल' ख. पाठः. २. 'म्बिमिका' क. ख. ग. ज. पाठः.

**हारो मुक्तावली**

**क्षीर० — ह्रियतेऽनेन चित्तं हारः ॥**

**टीका० —** हारद्वयं **मुक्ताहारे** । ह्रियते मनोऽनेनेति हारः । मुक्तानामावली पङ्क्तिर्मुक्तावली । 'हारा मुक्तावली हारः' इति तु रभसः ॥

**देवच्छन्दोऽसौ शतयष्टिकः ।**

**क्षीर० — देवानां छन्दोऽभिप्रायो यत्र । यष्टिर्लता सरः सरिकेत्येकार्थाः ॥**

**टीका० —** असौ हारः शतयष्टिकः शतसरो देवच्छन्दाख्यः । देवैश्छन्द्यते परिधीयत इति घञ् । एवमजन्तः पुँल्लिङ्गश्च । अष्टोत्तरशतलतिको देवच्छन्द इति संहितायां वराहः । तथाहि —

"शतमष्टयुतं हारो देवच्छन्दो[1] *ट्टिगितिरेकयुता[2]" (?)

इति । लतिका दण्डिका यष्टिका सरिका इति समानार्थाः ॥

**हारभेदा यष्टिभेदाद् गुच्छगुच्छार्धगोस्तनाः ॥ १०५ ॥**
**अर्धहारो माणवकः**

**क्षीर० — यदाहुः—**

**"चतुष्षष्टिलतो हारोऽथाष्टहीना यथोत्तरम् ।**
**रश्मिःकलापो माणवकोऽर्धहारोऽर्धगुच्छकः ॥**

**कलाच्छन्दो मन्दरश्च गुच्छः सप्ततियष्टिकः ।"**

**अन्ये त्वाख्यन्—द्वात्रिंशल्लतो गुच्छः, गुह्यच्छादनात् । चत्वारिंशल्लतो गोस्तनो लम्बमानत्वात् । गोपुच्छोऽपि । चतुःपञ्चाशल्लतोऽ[3]र्धहारो देवच्छन्दार्धत्वात् । विंशतिलतो माणवकोऽल्पत्वात् ॥**

१. 'न्दोगति' ङ. छ. पाठः. २. 'ट' क. ख. पाठः. ३. 'तो हा' ण. पाठः.

* 'ह्यशीतिरेकयुता' इति बृहदभिधाने ।

**टीका०** — गुच्छपञ्चकं यष्टिभेदात् सरिकाभेदात् प्रत्येकं हारभेदे। स्तबके गुच्छ उक्तः।

"द्वात्रिंशद्भिर्गुत्सो विंशतिभिः कीर्तितोऽर्धगुत्साख्यः।
षोडशभिर्माणवको द्वादशभिश्चार्धमाणवकः ॥'

इति। संहितायां वराहः —

"गोस्तनस्तु चतुष्षष्टिहारभेदः प्रकीर्तितः।
चतुष्षष्ट्या तु यष्टीभिरर्धहार उदाहृतः" ॥

**एकावल्येकयष्टिका।**

**क्षीर०** — एका आवलते ॥

**टीका०** — एकयष्टिका,

"एकावली नाम यथेष्टसङ्ख्या हस्तप्रमाणा मणिविप्रयुक्ता।
संयोजिता या मणिना तु मध्ये यष्टीति सा भूषणविद्भिरुक्ता ॥"

इति वराहः ॥

**सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिका ॥ १०६ ॥**

**क्षीर०** — सैवैकावली ॥

**टीका०** — सैवैकावली सप्तविंशतिसङ्ख्यमौक्तिका नक्षत्रमाला।

"सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् "

इति मनुः ॥

**आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्।**

**क्षीर०** — हस्तसूत्राख्यः। आ उप्यते आवापकः। परिह्रियते परिहारे भवो वा पारिहार्यः। कटति कटकः। वलते वलयः दोर्भूषा ॥

**टीका०** — आवायकचतुष्कं शङ्खवलयकटकादौ बाहुभूषणे। आङ्-पूर्वाद् वयतेर्घञ्। आवायकः ॥

**केयूरमङ्गदं तुल्ये**

क्षीर०—के बाहुशीर्षे यौति केयूरम् । अङ्गं दयतेऽङ्गदम् ॥

टीका०—केयूरद्वयं बाहुखडे इति ख्याते ॥

**अङ्गुलीयकमूर्मिका ॥ १०७ ॥**

क्षीर०—अङ्गुल्यां भवमङ्गुलीयकम् । 'जिह्वामूलाङ्गुलेश्छः' (४. ३. ६२) । स्वार्थे कन् । ऊर्मिप्रकृतिरूर्मिका ॥

टीका०—अङ्गुलीयद्वयमङ्गुलीयके । 'जिह्वामूलाङ्गुलेश्छः' (४. ३. ६२) अङ्गुलीयः । ततः स्वार्थे कन् ।

"अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुलीयकः" । (स० ८. श्लो० ११८) इति भट्टौ पुमान् । 'इदं तदसुलभस्थानभ्रंशि शोचनीयमङ्गुलीयकम्' इत्यभिज्ञानशाकुन्तले क्लीबे । ऊर्मिकेति । इवार्थे कः ॥

**साक्षराङ्गुलिमुद्रा सा**

क्षीर०—अङ्गुल्यां मोदयते मुद्रयति वा अङ्गुलिमुद्रा । सा ऊर्मिका ॥

टीका०—सा ऊर्मिका अक्षरवती अङ्गुलिमुद्राख्या ॥

**कङ्कणं करभूषणम् ।**

क्षीर०—आहुश्च—'कङ्कणं स्यात् प्रतिसरः' । कं शुभं कणति कङ्कते सरति वा ॥

टीका०—मुक्तादिघटितवलयाकृति करभूषणं कङ्कणम् । कणन् कणतीति कङ्कणः । पृषोदरादिः । हस्तमण्डलसूत्रेऽप्ययम् । 'कङ्कणो ना प्रतिसर' इत्यमरमाला ।

---

१. 'हु' अ. पाठः. २. 'ण्ड' इ. च. छ. पाठः.

"क्लीबं स्यान्मण्डने सूत्रे कङ्कणं करभूषणम्"

इति रभसः ॥

**स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना स्त्रियः ॥ १०८ ॥**

क्षीर०—मीयते प्रक्षिप्यते मेखला। कञ्च्यते बध्यते काञ्ची। सपति समवैति सप्तकी। रशन्ति तां रशना। 'रश कान्तौ' सौत्रः। शिञ्जिनी च। कलापो नानार्थे ॥

**क्लीबे सारसनं च**

क्षीर०—सारं सनोति सारसनम्। स्त्रीकट्यां वस्त्राद्यग्रन्थनम्। उच्चयो नीवी च (काञ्ची?) ॥

टीका०—मेखलापञ्चकं स्त्रीकट्याभरणे। तत्र—

"एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका।
रशना षोडश ज्ञेया कलापो विंशकस्तथा" ॥

'कचि दीप्तिबन्धनयोः'। पचादिः। पृषोदरादिदीर्घत्वम्[3]। घञ्दीर्घत्वे वा। गौरादिङीष्। काञ्ची। 'काञ्चीदामनिरुद्धघर्घररवम्' इति प्रयोगश्च। 'काञ्चिदाम्नि पिहितैकतरोरु' (स० १०. श्लो० ८३) इति माघः। तदा च 'इन्' इतीन्। रशनेति। 'अशे रश च' (उ० २. ७८) इति युच् रशादेशश्च धातोः। 'व्यथितसिन्धुमनीरशनैः शनैः' (स० ५. श्लो० ११) इति भारविः। आरसनेन शब्देन सह वर्तत इति सारसनम्।

"मेखलायां सारसनमुरस्त्रे च तनुत्रिणाम्"

इति दन्त्यादौ रभसः ॥

**अथ पुंस्कट्यां शृङ्खला त्रिषु।**

क्षीर०—पुंस्कट्यां या काञ्ची, सा शृङ्खला। शृङ्गैः खलतीति ॥

टीका०—सैव काञ्ची पुंसां श्रोण्याभरणं शृङ्खलम्। तालव्यादि। स्त्रियां शृङ्खला ॥

१. 'याम्' ख. घ. पाठः. २. 'च्य' ख. पाठः. ३. 'दिदीर्घत्वम्। घञ्' ञ. पाठः.

**पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरस्तथा ॥ १०९ ॥**
**हंसकः पादकटकः**

क्षीर० — पादे अङ्गदमिव पादाङ्गदम् । तुलाकृतेर्जङ्घायाः कोटिरिव तुलाकोटिः । मञ्जु मधुरमीरयति मञ्जीरः । नुवति नूपुरम् । 'णु स्तवने' । नवनं पूरयति(वा) नूपुरम् । हंसवत् कायति हंसकः । अवान्तरभेदस्त्वेषां भरतोक्तो नादृतः ॥

टीका० — पादाङ्गदषट्कं स्त्रीचरणभूषणे । केचिद् रवशून्यः पादकटकः, हंसाकृतिर्हंसकः । द्वयं पादभूषणमात्रे वदन्ति । न्यूनं पूरयतीति नूपुरः । पृषोदरादिः । 'हंसकं पादनूपुरम्' इति क्लीबकाण्डे अमरमाला ॥

**:णी क्षुद्रघण्टिका ।**

क्षीर० — किञ्चित् किणति किङ्किणी । झिञ्झिणीत्येके । क्षुद्रा अल्पा घण्टिका क्षुरुकाख्या ॥

टीका० — किङ्किणीद्वयं घाघरीति ख्यातायाम् । '*चङ्कणेः किङ्किणश्च' (उ० ४. १८) इति क्वणेर्यङ्लुगन्तादीकन्प्रत्ययकिङ्किणादेशाभ्यां किङ्किणीकेत्युणादौ । तस्मात् किङ्किणी अव्युत्पत्तिः । कङ्कणी, आदिमध्ययोर्निरिकारापीति गोवर्धनः ॥

**त्वक्फलक्रिमिरोमाणि वस्त्रयोनिः**

क्षीर० — ग्रहणकवाक्यमिदम् । त्वगादयो वस्त्रस्य योनिरुपादानकारणम् । आविष्टलिङ्गत्वम् ।

टीका० — त्वगादि चत्वारि वस्त्रयोनिः वस्त्रकारणम् । एतस्मादेव परं वस्त्रस्योत्पत्तेः ॥

**दश त्रिषु ॥ ११० ॥**

---

१. 'नू' अ. पाठः. २. 'ङ्कि' ख. पाठः. ३. 'घुरुघुराख्या' ख. पाठः. ४. 'वा' अ. पाठः., 'घार्घरी' ख. पाठ..

* 'शङ्कणः वङ्कणश्च' इति मुद्रितोणादिपाठः

क्षीर० —वाल्कक्षौमफालकार्पासबादरकौशेयराङ्कवानाहतानिष्प्रवा-णितन्त्रकाणि वाच्यलिङ्गानि ॥

टीका० —वाल्कादीनि निष्प्रवाण्यन्तानि दश त्रिषु, चकारादेकादश तन्त्रकमिति केचित् । वाल्कादय उद्गमनीयान्ता दश त्रिष्विति कश्चित् । कृमि-कोशोत्थादयोऽपि व्याख्यापरा इति ते न गणिकायां प्रविष्टाः ॥

**वाल्कं क्षौमादि**

क्षीर० —वल्कस्य त्वचो विकारो वाल्कम् । क्षुमाया विकारः क्षौमम् । आदिशब्दाद् भाङ्गादि ॥

टीका० —वल्कभवं वाल्कम् । तद्विशेषाः क्षौमादयः । क्षुमा अतसी तद्भवं क्षौमम् । वृद्धम् । दुकूलवाचि त्ववृद्धम् । आदिना शाणादेर्ग्रहणम् ॥

**फालं तु कार्पासं बादरं च तत् ।**

क्षीर० —फलस्य विकारः फालम् ॥

टीका० —कार्पासे वस्त्रे फालत्रयम् । कार्पासबादरे स्वभावात् क्लीबे, पूर्ववज्जातार्थेऽण् । स्त्रियां फालीत्यादि ॥

**कौशेयं कृमिकोशोत्थं**

क्षीर० —कोशस्येदं कौशेयं नेत्रपटादिः । 'कोशाड्ढञ्' (४. ३. ४२) ॥

टीका० —कौषेयद्वयं कोषकारकर्पटे । 'कोषाड्ढञ्' (४. ३. ४२) ॥

१. 'ड्डा' ख. पाठः.

A. 47

**राङ्कवं मृगरोमजम् ॥ १११ ॥**

क्षीर० — रङ्कुर्मृगविशेषः । 'कच्छादिभ्यश्च' (४. २. १३३) इत्यण् ॥

टीका० — राङ्कवद्वयं रङ्कुरोमोद्भवे कम्बलादौ । हरिणविशेषो रङ्कुः । 'रङ्कोरमनुष्येऽण् च' (४. २. १००) । मृगा मेषाद्याः पशवः ॥

**अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।**

क्षीर० — छेदः क्षालनं भोगश्च आहननं, तद्रहितमनाहतम् । प्रोयतेऽस्यां प्रवाणी तन्तुवायशलाका । सा निर्गता अस्मात् । 'निष्प्रवाणिश्च' (५. ४. १६०) इति साधुः । 'तन्त्रादचिरापहृते' (५. २. ७०) इति कनि तन्त्रकम् ॥

टीका० — अनाहतचतुष्कं **नवाम्बरे** । प्रवाणिस्तन्तुवायदण्डिका, ततः प्रवाण्या निर्गतो निष्प्रवाणिः 'निष्प्रवाणिश्च' (५. ४. १६०) इत्यत्र निपात्यते । 'तन्त्रादचिरापहृते' (५. २. ७०) इति कन् । तन्त्रकम् ॥

**तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥**

क्षीर० — उद्गम्यतेऽभिलष्यते उद्गमनीयम् । युगमविवक्षितम् । यल्लक्ष्यं — 'गृहीतपत्युद्गमनीयवस्त्रा' ॥

टीका० — प्रक्षालितवस्त्रयुगलमुद्गमनीयम् । क्लीबम् ।

"सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा" (स० ७. श्लो० ११)

इति कुमारसम्भवः । अत्र च गृहीतेति तकारस्य प्रशब्दपूर्वस्य गुरुत्वे प्राप्ते लघुत्वमपीष्यते, नच्छन्दोभङ्ग इति कविसम्प्रदायः । तथाच शृङ्गारप्रकाशे —

१. 'कानिर्गतं वासः स्यात् ।' क. ग. घ. पाठः. २. 'व', ३. 'त्रम् इ' ग. ङ. छ. पाठः. ४. 'स्य गात्रांश' ङ. च. पाठः.

"यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्।
नच्छन्दोभङ्गमेवाहुस्तदादोषाय सूरयः" ॥

यथा—

"निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसः"

इति तिशब्दस्य लघुत्वमेव भूतम्। 'प्राप्तनाभिह्रदमज्जनमाशु' (स० १०. श्लो० ६०) इति माघश्च ॥

**पत्त्रोर्णं धौतकौशेयं**

**क्षीर०** — लकुचवटादिपत्त्रेषु क्रिमिलालोर्णाकृतं पत्त्रोर्णम्। पृषोदरादित्वात् ॥

**टीका०** — कौशेयमेव धौतं पत्त्रोर्णम् ॥

**बहुमूल्यं महाधनम्।**

**टीका०** — बहुमूल्यं यत् किमपि तन्महाधनं, न तु वस्त्रमेव। तथा च किराते— 'पुराधिरूढः शयनं महाधनम्' (स० १. श्लो० ३८) इति ॥

**क्षौमं दुकूलं स्याद्**

**क्षीर०** — क्षुमाया विकारः क्षौमम्। दुह्यते क्षुमाया आकृष्यते दुकूलम् ॥

**टीका०** — क्षौमद्वयं[2] मल्ल इति ख्याते। 'टुक्षु शब्दे'। सोमवद् मन्' एवमवृद्धः क्षोमः। वृद्धस्त्वतसीभववचन उक्तः ॥

**द्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥**

**क्षीर०** — निवीयते आच्छाद्यते निवीतम्। 'व्येञ् संवरणे' निवृतमिति मुनिः ॥

---

१. 'त् तः।' ङ. पाठः. २. 'यम' क. ख. ग. च. अ. पाठः.

टीका० — निवीतद्वयमवगुण्ठितवस्त्रे । 'व्येञ् संवरणे' । क्तः । यजादिसम्प्रसारणम् । 'हलः' (६. ४. २) इति दीर्घत्वम् । निवीतम् । वृणातेः क्तः । प्रावृतम् ॥

**स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ।**

क्षीर० — दृश्यन्ते दशाः । पुंसीत्येके । वस्यते याभिस्ता वस्तयः । अच्छिन्नदशस्य वस्त्रस्याच्छादनाम्नानात् । वर्तय इत्येके ॥

टीका० — दशाद्वयं दशतीति ख्यातासु ।

"दशा वर्तावस्थायां वस्त्रान्ते भूम्नि पुंस्त्रियोः"

इति रभसः । 'वासोदशाश्च दाराश्च' इति पुंस्त्वे वररुचिः । वस्त्रस्येति वचनाद् वर्त्यादावेकत्वे च । वस्तिस्त्वनियतसङ्ख्यः दशासामानाधिकरण्याद् वस्तेर्बहुवचनं कृतम् ॥

**दैर्घ्यमायाम आनाहः**

क्षीर० — आनह्यतेऽनेन आनाहः । सर्वत्रेदम् ॥

टीका० — दैर्घ्यत्रयं दीर्घत्वे । दीर्घस्य भावो दैर्घ्यम् । यामवदायामः । रोहतेर्घञ् । आरोहः ॥

**परिणाहो विशालता ॥ ११४ ॥**

क्षीर० — विस्तराख्यः ॥

टीका० — परिणाहद्वयं विस्तारे । वस्त्रविषये त्वयम् 'ओरौस इति' ख्याते । 'णह बन्धने' घञ् । परिणाहः ॥

**पटच्चरे जीर्णवस्त्रं**

क्षीर० — पट इवाचरत् पटत्, 'सर्वप्रातिपदिकेभ्यः क्विप्' (३. १. ११) इत्येके । ततः शत्रन्तात् 'भूतपूर्वे चरट्' (५. ३. ५३) ॥

टीका० — पुरातनवस्त्रे पटच्चरद्वयम् । पटदिति चरति स्फुटतीति पटच्चरम् ॥

---

१. 'नात्' ख. पाठः. २. 'मासार इ' क. ङ. पाठः. ३. 'सारइ' ग. घ. ङ. पाठः.

समौ नक्तककर्पटौ।

क्षीर०—नक्तं भवो नक्तकः। नजते वा। 'ओनजी व्रीडने'[1]। द्रव-द्रव्यं येन पूयते तत्र रूढोऽयं तत्तुल्येऽपि वस्त्रे वर्तते। कल्पते कर्पटः॥

टीका०—नक्तकद्वयं वस्त्रार्धखण्डे। मलिनत्वदुष्ट इति केचित्। 'कृपू सामर्थ्ये'। 'शकादिभ्योऽटन्' (उ० ४. ८२)। कर्पटः। नक्तकाष्टकमेव केचित् वस्त्रे वर्णयन्ति।

"पटोऽस्त्री कर्पटः शाटसिचयप्रोतनक्तकाः"

इति रभसश्च। तदा च समौ समलिङ्गौ न तु समार्थौ॥

वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्॥ ११८॥

क्षीर०—वस्यतेऽनेनाङ्गं वस्त्रम्। वासः असन्तं क्लीबे। चिल्यते चेलम्। चैलमित्यसत्। ‡'चिल चालने'। अंशूंस्तन्तून् कायत्यंशुकम्। प्रोतः सिचयश्चीरं च॥

टीका०—वस्त्रषट्कं वस्त्रे। 'वस आच्छादने' 'सर्वधातुभ्यष्ट्रन्' (उ० ४. १६०) वस्त्रम्। छदेः ल्युट्। छादनम्। 'वसेर्णित्' (उ० ४. २१९) इत्यसुन्। वासः। 'चिल सेचने' पचाद्यच्। चेलम्। 'कृत्यल्युटो बहुलम्' (३. (३. ११३) इति ल्युट्। वसनम्। करणे ल्युट्। अंशुकं तालव्यशम्॥

सुचेलकः पटोऽस्त्री

क्षीर०—पटति विस्तीर्यते पटः। अस्त्रीति चिन्त्यं, द्वयोर्दर्शनात्॥

टीका०—सुचेलकद्वयं शोभनपटे। 'अट पट गतौ'। अच्। पटः॥

ना वराशिः स्थूलशाटकः।

क्षीर०—वृणोत्यङ्गं[2] वराशिः[3]। ना पुंल्लिङ्गः। चत्वार एकार्था इत्येके[4]। एवं सत्यर्थात् पटीति[5] सिध्यति। स्थूलशाटी॥

---

१. 'विलासने' ख. पाठः. २. 'व', ३. 'ति प', ४. 'ति स्थू' ख. पाठः. ५. 'ति। अ' क. पाठः.

‡ 'चिल वसने' इति मुद्रितधातुपाठः।

टीका० — वराशिद्वयं स्थूलकर्पटे। वराशिस्तालव्यान्तः ॥

**अन्तरीयोपसंव्यानपरिधानान्यधोंशुके॥ ११६ ॥**

क्षीर० — अन्तरे भवमन्तरीयम्। गहादित्वाच्छः। उपसंवीयतेऽनेनाङ्गमुपसंव्यानम् ॥

**द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा।**

क्षीर० — प्राव्रियतेऽनेनाङ्गं प्रावारः। 'वृणोतेराच्छादने' (३. ३. ५४)। घञ्। उत्तरे ऊर्ध्वाङ्गे आसज्यते उत्तरासङ्गः। 'बृहत्या आच्छादने' (५. ४. ६)। कन् ॥

**निचोलः प्रच्छदपटः**

क्षीर० — निचोल्यतेऽनेन निचोलः, येन तूलशय्यादि प्रच्छाद्यते। चुलिः सौत्रः। चुदेर्लत्वं वा ॥

**समौ रल्लककम्बलौ ॥ ११७ ॥**

क्षीर० — रमन्तेऽस्मिन् रल्लकः। काम्यते कम्बलः। कम्बलः कमनीयो भवतीति निर्वचनात् ॥

**संव्यानमुत्तरीयं च**

क्षीर० — संवीयतेऽनेन संव्यानम्। उत्तरे ऊर्ध्वे भवमुत्तरीयम् ॥

टीका० — येन वस्त्रान्तरमाच्छाद्यते स्यूतेनास्यूतेन वा, तत्र निचोलद्वयम्। 'निचोलं[1] स्यान्निचुल' इति रभसः। 'चुल समुच्छ्राये'। अच्। निचोलः। प्रच्छाद्यतेऽनेनेति प्रच्छदः। ततः पटेन सह कर्मधारयः। रल्लकद्वयं राल्लेति ख्याते कम्बलविशेषे। ‡ 'कम्बलादयश्च' (उ० १. ११२) इति कमेः कलप्रत्ययो बुगागमश्च निपात्यते। अन्तरीयचतुष्कमधःपरिधानवस्त्रे। अन्तरशब्दस्य गहादित्वाद् 'गर्तोत्तरपदाच्छः (४. २. १३७) इत्यनुवर्तमाने 'गहादिभ्यश्च' (४. २.

१. 'लः स्या' ग, 'लं नि' ज. पाठः.

‡ 'कमेर्बुक्' इति मुद्रितोणादिपाठः

१३८) इति छप्रत्ययः। अन्तरीयम्। व्येञः कर्मणि ल्युट्। उपसंव्यानम्। धाञः करणे ल्युट्। परिधानम्। प्रावारपञ्चकमुपरिधाने। 'वृणोतेराच्छादने' (३. ३. ५४) इति घञ्। प्रावारः। उत्तरदेहभाग आसज्यत इत्युत्तरासङ्गः। कर्मणि घञ्। आच्छादनविशेषवृत्तेर्बृहतीशब्दाद् 'बृहत्या आच्छादने' (५. ४. ६) इति स्वार्थे कः। बृहतिका। 'अन च' इत्यस्माद् धातोः संव्यानम्। संपूर्वाद् व्येञो वा। अन्तरीयवदुत्तरीयम्॥

**चोलः कूर्पासकोऽस्त्रियाम्।**

**क्षीर०—चोल्यतेऽनेन[1] चोलः आप्रपदीनं कञ्चुकम्। कूर्परे अस्यते कूर्पासः स्त्रीणां कञ्चुलिकाख्यः॥**

टीका०—स्त्रीणां कञ्चुलिकायां चोलद्वयम्। निचोलवच्चोलः। पुरुषचोलेऽप्येतदुपचारात्। कूर्पासको दन्त्यसः॥

**नीशारस्तु प्रावरणे हिमानिलनिवारणे॥ ११८॥**

**क्षीर०—निशीर्यते शीताद्यनेन नीशारः। 'शॄवायुवर्णनिवृतेषु—' (३. ३. २१) इति घञ्। यल्लक्ष्यं—**

**"गौरिवाकृतनीशारं प्रायेण शिशिरीकृतम्"॥**

टीका०—हिमकालस्य प्रावरणे कम्बले रुगुपट्यादौ नीशारः। 'शॄवायुवर्णनिवृतेषूपसंख्यानम्' (३. ३. २१) इति घञ्। 'उपसर्गस्य—' (६. ३. १२२) इत्यादिना दीर्घः॥

**अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्।**

**क्षीर०—ऊर्वोरर्धाच्छादकमंशुकमर्धोरुकम्[3]। चण्डं भगमतात चण्डातकम्। यस्य चल्लनकोऽपभ्रंशः॥**

टीका०—विदग्धस्त्रीणामर्धोरूपिधायके चलणाकारे वस्त्रे चण्डातकम्।

"अर्धोरुकं वरस्त्रीणां वासश्चण्डातकः पुमान्"

इत्यमरमाला॥

---

१. 'नेति चो' क. पाठः. २. 'टा' ञ. पाठः. ३. 'नमर्धो' ख. पाठः.

**स्यात् त्रिष्वाप्रपदीनं तद् प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥**

क्षीर०—पादाग्रं प्रपदम् । आ प्रपदादाप्रपदम् 'आप्रपदं प्राप्नोति' (५. २. ८) इति खः ॥

टीका०—पादाग्रपर्यन्तं लम्बमाने वस्त्रे आप्रपदीनम् । 'आप्रपदं प्राप्नोति' (५. २. ८) इति खः ॥

**अस्त्री वितानमुल्लोचः**

क्षीर०—वितन्यते वितानम् । उपरि लोच्यत उल्लोचः । उल्लुच्यते अपनीयतेऽनेनातपादि वा । चन्द्रकाख्यः ॥

टीका०—वितानद्वयं चन्द्रातपे । तनोतेर्घञ् । वितानः । ऊर्ध्वं लोच्यते बध्यत इत्युल्लोचः । कर्मणि घञ् ॥

**दूष्याद्यं वस्त्रवेश्मनि ।**

क्षीर०—दूष्यतेऽनेनान्यदर्शनम् । आद्यशब्दात् पटकुटी गुणलयनी[1] च ॥

टीका०—वस्त्रवेश्मनि खंडेगहिकेत्यादौ दूष्यम् । आदिना पटवादिग्रहणम् । तथा च शुभाङ्गः—

> "स्थूलं पटगृहं दूष्यं पटवा पटकुट्यपि ।
> त्रिषु दूष्यं दूषणीये क्लीबे वस्त्रगृहान्तरे ॥"

इति रुद्रः ॥

**प्रतिसीरा जवनिका स्यात् तिरस्करणी च सा ॥ १२० ॥**

क्षीर०—प्रतिसिनोति बध्नाति प्रतिसीरा । जवन्तेऽस्यां जवनिका । तिरस्करोति छादयाति तिरस्करणी काण्डपटाख्या । क्वचित्—

१. 'नि स्कुलाश्च ॥' क. पाठः. २. 'च्य' क. ख, 'बद्ध' ख. पाठः.

"पर्यस्तिका परिकरः पर्यङ्कश्चावसक्थिका ।
अञ्चलं त्वंशुकान्ते नीवी सारसनमुच्चयः" ॥

टीका० — प्रतिसीरात्रयं व्यवधायके पटे । काण्डपटेऽपीति केचित् । प्रतिसिनोति बध्नातीति प्रतिसीरा, दन्त्यवती । 'शु*षिचिमीनां दीर्घश्च' (उ० २. २८) इति सिनोते रग् दीर्घत्वं च । जवनं वेगोऽस्या अस्तीति जवनिका । चवर्गादिः । दृष्टेरुपरतिरनयेति वा यवनिका । अन्तस्थादिः । तिरस्क्रियतेऽनयेति तिरस्करणी । ल्युडन्ता ॥

**परिकर्माङ्गसंस्कारः**

क्षीर० — मलपरिमार्जनार्थं परिकर्म स्नानोद्वर्तनादि ॥

टीका० — शरीरनिर्मलीकरणमात्रे परिकर्मद्वयम् । क्वचित् प्रतिकर्मेति पाठः । नान्तोऽयं शब्दः ॥

**स्यान्मार्ष्टिर्मार्जना मृजा ।**

क्षीर० — मार्जनं मार्ष्टिः शुद्धिमात्रे । मृ(तृ?ज)स्तिप् इति बाहुलकात् तिप् । 'व्रश्चभ्रस्ज—' (८. २. ३६) इति षः । 'मृजेर्वृद्धिः' (७. २. ११४) । मृजः षित्त्वाद् अङ् ॥

टीका० — चन्दनकुङ्कुमादिना निर्मलीकरणे मार्ष्टित्रयम् । 'मृजू शौचालङ्कारयोः' । चुरादिणिच् । बहुलवचनात् क्तिन् । 'मृजेर्वृद्धिः' (७. २. ११४) । मार्ष्टिः । अथवा 'मृजूष् शुद्धौ' । 'वसेस्तिः' (उ० ४. १८१) इति बाहुलकात्तिः । मृजेर्वृद्धिः । 'ण्यासश्रन्थो युच्' (३. ३. १०७) । मार्जना । षिद्भिदाद्यङि मृजा ॥

**उद्वर्तनोत्सादने द्वे क्लीबे**

क्षीर० — उच्छाद्यते मलोऽनेनोच्छादनम् । उत्सादनमिति सभ्याः ॥

* 'सि' इति मुद्रितोणादिपाठः ।

टीका० — उद्वर्तनद्वयमुपलणीति ख्यातायाम् । उभयत्र करणे ल्युट् । उद्वर्तनोत्सादने ॥

अथाप्लाव आप्लवः ॥ १२१ ॥

स्नानं

क्षीर० — 'विभाषाङि रुप्लुवोः' (३. ३. ५०) । घञ् । मज्जनं च ॥

टीका० — आप्लावत्रयं स्नाने । 'विभाषाङि रुप्लुवोः' (३. ३. ५०) घञ । आप्लावः । पक्षे 'ऋदोरप्' (३. ३. ५७) । आप्लवः । स्नातेः ल्युट् । स्नानम् ॥

चर्चा तु चार्चिक्यं स्थासकः

क्षीर० — चर्च्यतेऽनयाङ्गं चर्चा । चर्चिकायां चर्चने साधु चार्चिक्यम् । चन्दनादिना पुण्ड्रादि । तिष्ठत्यङ्गे स्थासकः । चर्चिक्यं त्वपभ्रष्टम् ॥

टीका० — चर्चात्रयं वस्त्राङ्गादौ विन्यस्तकुङ्कुमादिच्छटायाम् । चर्चेति 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (३. ३. १०५) इत्यङ् । स्थास एव स्थासकः ॥

अथ प्रबोधनम् ।

अनुबोधः

क्षीर० — अङ्गस्येति शेषः । यथा कस्तूरिकादेर्मद्यादिना ॥

टीका० — मन्दसौरभे पुनः सौरभस्य व्यक्तीकरणे प्रबोधनद्वयम् । कस्तूरिकादिभिर्वेधन इत्यन्ये । ल्युडादिः ॥

पत्रलेखा पत्राङ्गुलिरिमे स्त्रियाम् ॥ १२२ ॥

क्षीर० — पत्राकृतिर्लेखा द्रामिडकालिङ्गादिभेदेन पत्रभङ्गः ॥

टीका० — कपोलादौ कस्तूरिकारचितपत्रावल्यां पत्रलेखाद्वयम् ॥

१. 'पि' ख. पाठः. २. 'व' क. पाठः. ३. 'धः य' ख. पाठः.

**तमालपत्रतिलकचित्रकाणि विशेषकम्।**
**द्वितीयं च तुरीयं च न स्त्रियाम्**

क्षीर०—तमालपत्राकृति[1] कस्तूर्यादिना[2] ललाटे तमालपत्रम्। तिलाकृति तिलकम्। चित्रकं नानावर्णम्। विशिनष्टि विशेषकम्[3]। इत्थं तिलकपर्याया एते। पर्यायत्वं त्वदूरविप्रकर्षात्। अत्र द्वितीयचतुर्थौ तिलकविशेषकौ पुन्नपुंसकयोः। पुण्ड्रं च॥

टीका०—तमालपत्रचतुष्कं ललाटन्यस्ते चित्रके। द्वितीयं तिलकं चतुर्थं विशेषकम्। न स्त्रियामिति शेषः (?)। तिलकचित्रकौ प्रागुक्तौ॥

अथ कुङ्कुमम्॥१२३॥

**कश्मीरजन्माग्निशिखं वरं वाह्लीकपीतने।**
**रक्तसङ्कोचपिशुने वीरलोहितचन्दने॥१२४॥**

क्षीर०—कुं कौति कुङ्कुमम्। अग्नेरिव शिखाः केसराण्यस्याग्निशिखम्। व्रियते वरम्। 'ग्रहवृदृनिश्चि—' (३.३.५८) इत्यप्। वह्लीकदेशजं वाह्लीकम्। यद् रघोरुत्तरदिग्विजये—

"दुधुवुर्वाजिनः स्कन्धाल्लग्नकुङ्कुमकेसरान्"।
(स० ४. श्लो० ६७)

पीतयत्यङ्गं पीतनम्। रञ्जनाद् रक्तम्। अत एवासृक्संज्ञम्। सङ्कोचस्य पिशुनं सूचकम्। वीरं स्थिररागम्। लोहितं चन्दनमिव। घुसृणं देश्याम्॥

टीका०—कुङ्कुमैकादशकं कुङ्कुमे। वरं रक्तं धीरम् इति पदानि[9]। कश्मीरजन्म नान्तं तालव्यशं च। वह्लतेः घञ्, ततः ठन्, इति महान्यासः। औणादिकेन्नन्ताद् वा कन्। वह्लिका नाम क्षत्रियाः, तेषां जनपदा इति वह्लिकाः, तत्र भवः। 'अवृद्धादपि—'(४.२.१२५) इति वुञि प्राप्ते 'कच्छादिभ्यश्च' (४.

१. 'त्रकाकृ', २. 'र्यकादि', ३. 'कः।' ख. पाठः. ४. 'भेदा ए' ख. ङ. च. पाठः. ५. 'र्थम्।', क. ग. घ. पाठः. ६. 'र्धा', ७. 'धी', ८. 'तराङ्गम्।' ख. पाठः. ९. 'वर रक्त धीर इ' ञ. पाठः.

२. १३३) इत्यण्। कुङ्कुमहयादौ बाह्लिक इति।

"आजिघ्रति प्रणतमूर्धनि वह्लिदेश्यः"

इतीन्नन्तः। अलीकादित्वाद् वह्लीको दीर्घमध्योऽपि। तथा च—'वह्लिकेषु च वह्लीकाः' इति शब्दार्णवः।

"वह्लीकं वह्लिकं धीर[1]हिङ्गुनोर्नाश्वदेशयोः"

इति रुद्रः। तच्च देशे दीर्घत्वं चिन्त्यम्। कुङ्कुमादौ भवार्थेऽण् इति हट्टचन्द्रः

"धैर्यवत्स्वैरविद्वत्सु धीरः क्लीबं तु कुङ्कुमे"॥

**लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः।**

क्षीर०—लक्ष्यते लाक्षा। रक्षति देहं राक्षा[2]। लातिरात्योर्वा। जायते जतु। यौति यावः। न लज्ज[3]तेऽस्मादलक्तः, अलति वा। द्रुमस्यामय इव, निर्यासः। धन्वन्तरिस्तु—

"लाक्षा पलङ्कषा राक्षा दीप्तिश्च क्रिमिजं जतु।
क्षतघ्नानङ्गमाता च द्रुमव्याधिरलक्तकः"॥

टीका०—लाक्षाषट्कं जतुनि। 'रक्षा रक्षणलाक्षयोः' इत्यनेकार्थः। यावकाऽन्तस्थादिः। द्रुमस्यामयो रोगो द्रुमामयः॥

**लवङ्गं देवकुसुमं श्रीसंज्ञम्**

क्षीर०—लूयते लवङ्गम्। देवद्युतिमत् कुसुमं देवानां वा। श्रीपर्यायम्[4]॥

टीका०—लवङ्गत्रयं लवङ्गे। श्रीसंज्ञकं लक्ष्मीपर्यायनामकम्॥

**अथ जापकम्॥ १२८॥**

**कालेयकं च कालानुसार्यं च**

क्षीर०—जापकाख्यपर्वतभवम्। काले[5]वर्णसारम्॥

१. 'ह्री' क. ख. ग. च. ञ. पाठः. २. 'क्षा जा' ख. पाठः. ३. 'ज' क. पाठः
४. 'यम्।' ख. ङ. पाठः. ५. 'ले वर्ण सा' क. ख. ङ. पाठः.

टीका० — जार्षकत्रयं कालिआ इति ख्याते। अयं च पीतवर्णः।

"आबिभ्रती बभ्रु बभौ नतभ्रूः कालीयकीयं तिलकं ललाटे।
निमग्ननिश्शेषमिव स्मरेषुं स्वर्णज्वलत्पुङ्खमुखाङ्कितं[2] च॥"

इति कप्फिणाभ्युदयः। जाषकं चवर्गादि मूर्धन्यषं च॥

अथ समार्थकम्।

**वंशकागुरुराजार्हलोहक्रिमिजजोङ्गकम्॥ १२६॥**

कालागुरु

क्षीर० — वंशाभं[3] वंशकम्। वंशिकेत्येके। न गुरु अगुरु[4]। कालागरु काकतुण्डाख्यम्। रोहति लोहम्। क्रिमिभिर्जन्यते क्रिमिजम्[5]। जोङ्गकं गिरिजम्। आहुश्च —

"अगुरु प्रवरं लोहं क्रिमिजग्धमनार्यजम्"॥

टीका० — वंशिकषट्कं सामान्यागुरुणि। वंशिकं क्लीबे। लघुमानत्वादगुरु। पुंलिङ्गोऽप्ययमित्यन्यः। तथा च — 'शीतकृत् तेऽगुरोर्मदः' इति प्रयोगः। केचित् कालागुरुण्यगुरुः पुमान्। अत एव 'कालागुर्वगुरुः स्याद्' इति सविसर्गपाठो युक्तः। 'जुगि बुगि वर्जने'। चवर्गादिः। ण्वुल्। जोङ्गकम्। अथवा 'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' (उ० २. ३५) इति क्वुन्। बाहुलको गुणः। कृष्णागुरुश्चागुरुरुच्यते॥

**अगुरु स्यात् तु मङ्गल्यं मल्लिगन्धि यत्।**

क्षीर० — मल्लिकापुष्पगन्ध्यगुरु मङ्गल्याख्यम्॥

टीका० — मल्लिकासमानगन्धेऽगुरुणि मङ्गल्यम्[6]॥

१. 'प' ङ. छ. पाठः. २. 'न्विते च' ज. पाठः. ३. 'शभवं वं' ख. पाठः. ४. 'रु। काक' क. पाठः. ५. 'म्। आ' ख. पाठः ६. 'ल्या॥' क. ख. पाठः.

**यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥**
**बहुरूपोऽपि**

क्षीर० — यक्षं धूपयति यक्षधूपः । सर्जवृक्षस्य रसः सर्जरसः । राति प्रीतिं रालः । रालापि । बहुरूपो नानाकृतिगन्धः ॥

टीका० — यक्षधूपपञ्चकं धूणके । सर्जः सालः, तस्य रसः सर्जरसः । 'अरालः सर्जवक्रयोः' इति ह्रस्वादौ रभसः ।

"लालनः सर्जनिर्यासः सर्जः सर्जरसस्तथा"

इत्यमरमालायां सर्जोऽपि नाम ॥

**अथ वृकधूपकृत्रिमधूपकौ ।**
**तुरुष्कः पिण्डकः सिह्लो यावनोऽपि**

क्षीर० — वृकान् धूपयति वृकधूपः । तुरुष्को यवनदेशजः । पिण्डको द्रव्यान्तरैः सह पिण्डितस्वरूपत्वान्न च्यवते । सिह्लाख्यो वृक्षविशेषः । 'सिल उञ्छे' । सुगन्धिप्रस्तावात् पुनरिहोक्तः ॥

टीका० — गन्धशास्त्रोक्ते बहुवस्तुकृते वृकधूपद्वयम् । तुरुष्कचतुष्कं सेह्लके सल्लकीद्रवे । तुरुष्को मूर्धन्यषः । यावनोऽन्तस्थादिः ॥

**अथ पायसे ॥ १२८ ॥**
**श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ।**

क्षीर० — पयसो द्रुमक्षीरस्य विकारः स्रुतिः पायसः । श्रियो वासो वेष्टश्च निर्यासः । वेष्टते वेष्टः । सरलस्य देवदारुणो द्रवो निर्यासः ॥

टीका० — पायसपञ्चकं सरलवृक्षरसे । गोरसनामधेयत्वात् पायसः ।

"सरलद्रवः श्रीविष्टो दधिक्षीरघृताह्वयः"

इति रभसः ।

"श्रीवासे परमान्ने च पायसः पुंसि सम्मतः"

इति रुद्रः ॥

**मृगनाभिर्मृगमदः कस्तूरी च**

क्षीर० — कसति सौगन्ध्यमस्याः कस्तूरी । कस्त्वरते स्तूयते वा ॥

टीका० — मृगनाभित्रयं कस्तूरिकायाम् । गन्धमृगस्य नाभिर्मृगनाभिः ।

> "सुराट्क्षत्रिययोर्नाभिः पुंसि प्राण्यङ्गके द्वयोः ।
> चक्रमध्ये तु प्रधाने स्त्रियां कस्तूरिकामदे ॥"

इति नाभिशब्दोऽप्यत्र ॥

अथ कोलकम् ॥ १२९ ॥

**कक्कोलकं कोशफलम्**

क्षीर० — कोलमेव कोलकम् । कर्कन्तेऽत्र कर्कः कोलति संस्त्यायति कक्कोलम् । कोशे फलान्यस्य कोशफलम् ॥

टीका० — कोलकत्रयं कर्पूरगन्धितकोलफले ॥

अथ कर्पूरमस्त्रियाम् ।

**घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥**

क्षीर० — कल्पते कर्पूरः । घनस्येव सारोऽस्य शैत्याद् घनसारः, सिताभ्राभत्वाच्च । चन्द्रपर्यायो ह्लादकत्वात् । हिमा शीता चासौ वालुका ॥

टीका० — कर्पूरपञ्चकं कर्पूरे । 'कृपू सामर्थ्ये' । 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४.९१) कर्पूरमस्त्रियाम् । बहुलवचनात् 'कृपो रो लः' (८. २. १८) इति न लत्वम् । चन्द्रसंज्ञश्चन्द्रापरनामा । सिता आभा दीप्तिरस्येति सिताभः । सिताभ्र इति केचित् ॥

१. 'स्याः । कस्त्व' क. ग. घ. ङ. पाठः. २. 'तक्कोल' ख. पाठः. ३, ४. 'त्क' ख. पाठः. ५. 'तक्कोल' ख. पाठः.

**गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।**

क्षीर० — भद्रा श्रीरस्य भद्रश्रीः । चन्द्यते ह्लाद्यतेऽनेन चन्दनम् ॥

टीका० — गन्धसारचतुष्कं चन्दने । चन्देर्नेन्यादिल्युः । चन्दनम् ॥

**तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥**

क्षीर० — तैलपर्णगोशीर्षौ गिरी आकरावस्य । हरेरिन्द्रस्य चन्दनं हरिचन्दनम् । हरि कपिलं वा । तच्चातिपीतं शीतं चाहुः ॥

टीका० — तैलपर्णिकत्रिकं प्रत्येकं चन्दनविशेषे । तत्र धवलं सुशीतं[1] चन्दनं तैलपर्णिकम् । गोशीर्षाकारे मलयैकदेशे जातं गोशीर्षकम् । अतिसुरभितया सर्पैर्वेष्टितं भवतीति सर्पवेष्टितं चास्य नाम भवति । हरिर्मण्डूकः तदाकारे पर्वते जातं हरिचन्दनम् । पक्काम्रगन्धि पीतवर्णम् ॥

**तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।**

**कुचन्दनं च**

क्षीर० — तिलस्येव पर्णान्यस्याः । तिलपर्णी नदी आकरोऽस्येत्येके । पत्रेष्वङ्गति पत्रङ्गम् । पत्राङ्गापभ्रंशोऽयम् । कौ चन्दनम् ॥

टीका० — तिलपर्णीपञ्चकं रक्तचन्दने । बर्बराख्यं निर्गन्धं रूक्षं कुचन्दनं पृथगित्यन्यः । एतदपि रक्तचन्दनस्यैव । तथा च रभसः —

"कुचन्दनं च पत्राङ्गे द्रुभेदे रक्तचन्दने"

इति ॥

**अथ जातिकोशजातिफले समे ॥ १३२ ॥**

क्षीर० — जातिलतायाः[2] कोशं जातिफलाख्यम्[3] ॥

टीका० — जातीकोष[4]द्वयं जातीफले । जातेरक्तिन्नन्तत्वात् पक्षे ङीष् ॥

**कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।**

१. 'तलं च' ख. ञ. पाठः. २. 'वसनायाः' क. ग. पाठः. ३. 'सस्या' ख. घ. ङ., ४. 'ति' ङ. छ. पाठः.

क्षीर०—एतैः पिण्डीकृतैर्यक्षप्रियः कर्दमः। 'कुङ्कुमैः' इत्यागमः। धन्वन्तरिस्तु—

"कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं तथा।
महासुगन्धमित्युक्तं नामतो यक्षकर्दमः" ॥

टीका०—कर्पूरादिभिः समभागैर्यक्षकर्दमः। तथा च व्याडिः—

"कर्पूरागरुकस्तूरीकक्कोलघुसृणानि च।
एकीकृतमिदं सर्वं यक्षकर्दम उच्यते" ॥

**गात्रानुलेपनी वर्तिर्वर्णकं स्याद् विलेपनम् ॥ १३३ ॥**

क्षीर०—द्वौ द्वौ भिन्नार्थावित्येके। वर्तिर्हि नटादौ[3] प्रसिद्धा ॥

टीका०—गात्रानुलेपनीचतुष्कमनुलेपनार्थं वर्तिते कुङ्कुमचन्दनादौ।

"गात्रानुलेपनी वर्तिर्विदग्ध्यथ विलेपनम्।
वर्णकं चाथ विच्छित्तिः स्त्री कषायोऽङ्गरागके ॥"

इति रभसः। केचिदनुलेपनयो(गी ? ग्यी)कृते वर्तिते विलेपनद्वयम्। अपरद्वयं च समालम्भने वर्णयन्ति। वर्तयातिः शुक्लकरणे। 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति कर्मणि युजपवादः क्तिन्। वर्तिः। अथवा * 'ह्वशिविरुहिवृतिविदिकीर्तिभ्यश्च' (उ० ४. १२०) इतीन्नन्तो वा वर्तिः ॥

**चूर्णानि वासयोगाः स्युः**

क्षीर०—चूर्णं पटवासादिक्षोदः। वास्यते सुगन्धीक्रियते यैर्युज्यमानैर्मिश्रैस्ते वासयोगाः ॥

टीका०—विलासिनीनां नानासुगन्धिकृतगुडिकायां चूर्णद्वयम्।

"चूर्णौ धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु"

इति रुद्रः ॥

१. 'पङ्कः।' ग. घ. ङ. पाठः. २. 'धा' ग, ङ. पाठः ३. 'दे:' ख. पाठः.

* 'ह्वपिषिरुहिवृतिविदिच्छिदिकी' इति मुद्रितोणादिपाठः।

**भावितं वासितं त्रिषु ।**

क्षीर० — भाव्यते मिल्यते भावितम् । 'भुवोऽवकल्कने' । णिच् । वास्यते छाद्यते स्म । 'वस स्नेहच्छादापहारेषु' । गन्धद्रव्यैर्भावितं पुष्पाद्यैर्वासितमित्येके ॥

टीका० — गन्धग्राहिते वस्तुनि भावितद्वयम् ॥

**संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम् ॥ १३४॥**

क्षीर० — संस्कारस्तिलादीनां[1] गुणाधानम् । आद्यशब्दाद् धूपादिभिः ॥

टीका० — गन्धमाल्यधूपादिभिर्वस्त्रताम्बूलादीनां संस्कारोऽधिवासनम् ॥

**माल्यं मालास्रजौ मूर्ध्नि**

क्षीर० — मालैव माल्यम् । चातुर्वर्ण्यादित्वाद् यञ् । माल्यते धार्यते माला । सृज्यते स्रक् । 'ऋत्विग्दधृक्स्रग्—' (३. २. ५९) इति साधुः ॥

टीका० — माल्यत्रयं ग्रथितपुष्पावल्यां प्रकटायां मूर्ध्नि न्यस्तायाम् । अन्यत्रोपचारात् । 'मल मल्लधारणे' । 'ऋहलोर्ण्यत्' (३. १. १२४) माल्यम् । घञि माला । 'स्वभावाद् घञन्तोऽपि स्त्रीलिङ्गः' इति धातुप्रदीपः । 'सृज विसर्गे' । 'ऋत्विग्—' (३. २. ५९) इत्यादिना क्विन्नमागमौ निपात्येते । स्रक् ॥

**केशमध्ये तु गर्भकम् ।**

क्षीर० — माल्यमित्येव । गर्भस्थत्वाद् गर्भकम् ॥

टीका० — माल्यमेव केशमध्ये स्थितं गर्भाख्यम् ॥

१. 'दिना गु' ग. पाठः.

प्रभ्रष्टकं शिखालम्बि

क्षीर० — माल्यमित्येव। मध्यात् प्रभ्रष्टम् ॥

टीका० — चूडातो लम्ब(मा)नं माल्यं प्रभ्रष्टकम्। स्वार्थे कः ॥

पुरो न्यस्तं ललामकम् ॥ १३५ ॥

क्षीर० — ललत्यग्रे ललाम मुण्डमालाख्यम् ॥

टीका० — पुरोभागे न्यस्तं ललाटपर्यन्तमागतं माल्यं ललामकम् ॥

प्रालम्बमृजुलम्बि स्यात् कण्ठाद्

क्षीर० — यत् कण्ठाद् वक्षस्यवलम्बमानं माल्यं, तत् प्रालम्बम् ॥

टीका० — ग्रीवान्तादृजु लम्बमानं प्रालम्बाख्यम् ॥

वैकक्ष्यकं तु तत्।

यत् तिर्यक् क्षिप्तमुरसि

क्षीर० — विकक्षायां भवं वैकक्ष्यम्। यज्ञोपवीतन्यायेन माल्यम् ॥

टीका० — उत्तरीयाकारेणोरसि तिर्यगाहितं वैकक्ष्यकम् ॥

शिखास्वापीडशेखरौ ॥ १३६ ॥

क्षीर० — माल्यमित्येव। आपीड्यत आपीडः। शेते शिरसि शेखरः। उत्तंसोऽपि ॥

टीका० — शिखास्थितमात्रे माल्य आपीडद्वयम्। शिखासु शिखास्थानेषु। मुण्डिवलादाविति केचित्। पीडयतेः अच्। आपीडः। 'श्वित्रश्रोत्रकशेरुशेखर' इति शभेदः ॥

१. 'अवतंसो' ख. पाठः. २. 'ण्डी' ञ. पाठः.

**रचना स्यात् परिस्पन्दः**

**क्षीर० — शिल्पादिना रचना । अन्यत्रापि ॥**

**टीका० — पत्रावल्यादे रचना** परिस्पन्दः । 'स्पदि किञ्चिच्चलने' । वन्त्यादि । घञ् ॥

**आभोगः परिपूर्णता ।**

**क्षीर० — आभुज्यतेऽनेनाभोगः ॥**

**टीका० — सर्वसम्पूर्णत्वमाभोगः** । परिपूर्णता स्फीतता ॥

**उपधानं तूपबर्हः**

**क्षीर० — उपधीयतेऽस्मिञ्छिर उपधानम् । उपबृह्यतेऽनेनोपबर्हते वोपबर्हः । शिरोनिवेशनं च ॥**

**टीका०** — उपधानद्वयं गण्डके । उपधीयते शिरोऽत्रेत्युपधानम् । बर्हबर्हौ हिंसार्थौ पटपुटेत्यादिना दण्डकपठितौ । कर्मणि घञ् । उपबर्हः ।

"मृदूच्चतूलो गर्भोली[1] चातुरोऽपि मचूलकः ।
असिगण्डुः कोलगण्डौ[2] चाबुकी[3] गल्ल[4]चा[5]तुरी[6] ॥"

इति रभसः ॥

**शय्यायां शयनीयवत् ॥ १३७ ॥[7]**

**शयनं**

**क्षीर० — शेतेऽत्र । 'संज्ञायां समज—' (३.३.९९) इति क्यप् । 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इत्यनीयर् च । तूलिकादिः ॥**

**टीका०** — शय्यात्रयं शय्यायाम् । 'संज्ञायां समज—' (३.३.९९) इति क्यपि शय्या । 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इत्यधिकरणेऽनी-

१. 'भा' क. ख. ग. च. ञ. पाठः. २. 'ण्डु', ३. 'की' क. छ. पाठः. ४. 'ब' ञ. पाठः. ५. 'वा' च. पाठः. ६ 'की' ङ. छ. पाठः. ७. 'र ॥' ख. पाठः.

यर्। शयनीयम्। 'करणाधिकरणयोश्च' (३. ३. ११७) इति ल्युट्। शयनम्। यथा शय्यायां शयनीयशब्द उक्तस्तथा शयनशब्दोऽपीति वत्यर्थः॥

**मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः।**

क्षीर० — मञ्च्यते धार्यतेऽनेन मञ्चः। पर्यङ्क्यते पर्यङ्कः। 'परेश्च घाङ्कयोः' (८. २. २२) इति वा लत्वम्। खटन्त्येनां श्रान्ताः खट्वा॥

टीका० — मञ्चचतुष्कं खट्वायाम्। 'मचि धारणोच्छ्रायपूजनेषु'। पचाद्यच्। मञ्चः। अञ्चतेः कर्मणि घञ्। 'परेश्च घाङ्कयोः' (८. २. २२) इति लत्वविकल्पः। पर्यङ्कपल्यङ्कौ। 'खट काङ्क्षे'। विश्ववत् क्वन्। खट्वा॥

**गण्डुकः कन्दुकः**

क्षीर० — गाते गाः। गच्छन्गण्डुको गण्डुकः। गन्दुक इत्येके। गगन इन्दुरिव। कन्यतेऽर्थ्यते क्रीडार्थिभिः कन्दुकः। कं शिरो दुनोति वा, नमनोन्नमनेक्षणात्। वीटा भारते। च्युतादानक्रीडायां गुडिका। गिरिकश्चासौ॥

टीका० — गण्डूकद्वयं गण्डु इति ख्याते क्रीडागुडके॥

**दीपः प्रदीपः**

क्षीर० — प्रः स्वार्थे, मेरुसुमेरुवत्॥

टीका० — दीपद्वयं प्रदीपे। इगुपधलक्षणः कः॥

**पीठमासनम्॥ १३८॥**

क्षीर० — पीयते उपवेशनेन प्रस्यते पीठम्। आस्तेऽस्मिन्नासनम्।

टीका० — पीठद्वयमासने। 'आस उपवेशने'। ल्युट्॥

१. 'ण्डू' ग. पाठः.

**समुद्गकः सम्पुटकः**

क्षीर० — समुद्गम्यते समुद्गच्छति वा समुद्गः। सम्पुट्यते श्लेष्यते सम्पुटः। भूषणाद्यावपनम् ॥

टीका० — समुद्गद्वयं फरुगादिसम्पुटे। समुद्गच्छतीति डः ॥

**प्रतिग्राहः पतद्ग्रहः।**

क्षीर० — प्रतिगृह्णात्यालेपकादि प्रतिग्राहः। 'विभाषा ग्रहः' (३. १. १४३) इति णः। पतद् गृह्णातीति पतद्ग्रहः ॥

टीका० — प्रतिग्राहद्वयं प्रतिग्रह इति ख्याते। 'विभाषा ग्रहः' (३. १. १४३) इति कर्तरि णः। प्रतिग्राहः। दूषितरसं ताम्बूलं पतद् गृह्णातीति पतद्ग्रहः। पचादिः ॥

**प्रसाधनी कङ्कतिका**

क्षीर० — कचाकर्षणाख्या। प्रसाध्यन्तेऽनया केशाः। कङ्कते कङ्कती, कङ्कान् दन्तांस्तनोति वा ॥

टीका० — प्रसाधनीद्वयं गजदन्तादिमयकेशमार्जन्यां काङ्क इति ख्यातायाम्। 'कङ्कतमपि केशमार्जनम्' इति नाममालायां क्लीबेऽपि ॥

**पिष्टातः पटवासकः ॥ १३९ ॥**

क्षीर० — पिष्टेन कुङ्कुमचूर्णादिना अतति पिष्टातः। पटो वास्यतेऽनेन पटवासकः ॥

टीका० — पिष्टातद्वयं पटवासपिण्ड इति ख्याते ॥

**दर्पणे मुकुरादर्शौ**

१. 'प' म. पाठः.

[०—दृप्यन्तेऽनेन सुवेषा दर्पणः। मङ्क्यते मण्ड्यतेऽनेन मुकुरः। आदृश्यतेऽस्मिन् रूपमादर्शः। आत्मदर्शोऽपि॥

टीका०—दर्पणत्रयं दर्पणे। दर्पणो नन्द्यादिः। 'दर्पणमृदङ्गजठराः पुंस्युक्ताः' इति वररुचिः। 'मकि मण्डने'। 'मुकुरदर्दुरौ' (उ० १. ४२) इत्युरज् नकारलोपश्च निपात्यते। एवं मुकुरो मकारादिः। अत्यर्थं दृश्यते रूपमत्रेत्यादर्शः। 'हलश्च' (३. ३. १२१) इति घञ्॥

व्यजनं तालवृन्तकम्॥ १३९½॥

क्षीर०—व्यज्यते वातोऽनेन विक्षिप्यते वा व्यजनम्। तालस्येव वृन्तमस्य तालवृन्तम्। तालस्य वृन्तादुपलभ्यत इत्येके॥

इति नृवर्गः।

टीका०—व्यजनद्वयं सामान्यव्यजने। 'अज गतिक्षेपणयोः'। करणे ल्युट्। व्यजनम्। 'वा यौ' (२. ४. ५७) इति विकल्पेन वीभावः। तालवृन्तमेव तालवृन्तकम्। तथा च—'तालवृन्तानिलाधिकम्' (कु० स० २. श्लो० ३४) इति कालिदासः। स्वार्थे कः॥

इति वन्द्यघटीयसर्वानन्दकृतौ टीकासर्वस्वे

मनुष्यवर्गः।

१. 'णम्।' ख. पाठः. २. 'न्तैरुद्धृत' ङ पाठः. ३. 'वि' ख. पाठः.

॥ श्रीः ॥

# श्रीमदमरसिंहविरचितं

# नामलिङ्गानुशासनं

क्षीरस्वामिप्रणीतया अमरकोशोद्घाटनाख्यया व्याख्यया

वन्द्यघटीयश्रीसर्वानन्दप्रणीतया टीकासर्वस्वाख्यया

व्याख्यया च समेतम् ।

---

## द्वितीयं काण्डम् ।

---

### अथ ब्रह्मवर्गः ।

**सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।**
**वंशोऽन्ववायः सन्तानः**

क्षीर० — सन्तन्यतेऽनया सन्ततिः । गूयते, जन्यते, कुल्यते, चानेन । अन्वीयतेऽन्वयः । वश्यते जन्यते वंशः । अन्ववैत्यन्ववायः ॥

टीका० — सन्ततिनवकं वंशे । तनोतेः क्तिच् । सन्ततिः । गोत्रादयः प्रागुक्ताः । एतिरन्ववपूर्वः । ततः 'एरच्' (३. ३ ५६) । अन्ववायः । कल्पवृक्षे सन्तान उक्तः ॥

१. 'वि' ख. पाठः.

G. P. T. 1347. 500. 23-7-15.

वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥

क्षीर० — व्रियन्ते वर्ण्यन्ते वा वर्णाः ॥

टीका० — ब्राह्मणक्षत्रियवैश्यशूद्रा वर्णाः । 'वृ वरणे' । 'कृवृजृ—'(उ० ३. १०) इत्यादिना नः ॥

विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृताः ।

क्षीर० — चत्वार एव वर्णाश्चातुर्वर्ण्यम् । स्वार्थे ष्यञ् ॥

राजबीजी राजवंश्यः

क्षीर० — राजबीजमस्यास्ति राजबीजी । राजवंशे साधुर्भवो वा राजवंश्यः ॥

टीका० — राजबीजिद्वयं राजवंशे । मत्वर्थ इनिः । राजबीजी । भवार्थे दिगादियति राजवंश्यः ॥

बीज्यस्तु कुलसम्भवः ॥ २ ॥

क्षीर० — बीजे साधुर्भवो वा । यथा सूर्यबीज्यो रामः । य(त्प्र? ष्प्र)करणे 'अन्येभ्योऽपि दृश्यते' (५. २. १२०) ॥

टीका० — यस्यकस्यचित् कुले भूतो बीज्यः । 'यत्प्रकरणे अन्यत्रापि दृश्यते' इति यत् (?) ॥

महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।

क्षीर० — कुलस्यापत्यं कुलीनः । आरात् पापकेभ्यः कर्मभ्यो यात आर्यः । अरणीयो गम्यो वा । सभायां साधुः सभ्यः । संश्चासौ जनः सज्जं नयते वा सज्जनः । साध्नोति परकार्यं साधुः । आमुष्यायणोऽमुष्यपुत्रश्च ॥

टीका० — माहाकुलषट्कं कुलीने । महाकुलस्यापत्यं माहाकुलः । 'महाकुलादञ्खञौ' (४. १. १४१) । एवं वृद्धः । महत् कुलमस्येति बहुव्रीहौ अवृद्धोऽपि । अपत्यार्थे 'कुलात् खः' (४. १. १३९) । कुलीनः । आर्यो दीर्घादिः । अर्तेः 'ऋहलोर्ण्यत्' (३. १. १२४) । सभायां साधुरुपयुक्तः सभ्यः । 'सभाया यः' (४. ४. १०५) इति यः । साधेः 'कृवापाजि'—(उ० १. १) इत्यादिना उणि साधुः ॥

**ब्रह्मचारी गृही वानप्रस्थो भिक्षुः**

क्षीर० —

"ब्रह्म वेदो[1] ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतम्[2]" ।

तच्चरत्यर्जयत्यवश्यं ब्रह्मचारी । 'व्रते' (३. २. ८०) णिनिः । वर्णी । गृही गृहस्थो गृहमेधी ज्येष्ठाश्रमी । प्रतिष्ठन्तेऽस्मिन् प्रस्थः । वनप्रस्थे भवो वानप्रस्थो वैखानसाख्यः । भिक्षते तच्छीलो भिक्षुर्यतिः । 'सनाशंसभिक्ष उः' (३. २. १६८) ॥

टीका० — ब्रह्मचारिचतुष्कं प्रत्येकं स्वनामप्रसिद्धे । वेदाध्ययनार्थं ब्रह्म व्रतं चरतीति ब्रह्मचारी । गृहं भार्या, तद्योगाद् गृही । द्वौ नान्तौ । वनप्रस्थे वनैकदेशे भवोऽवस्थाता वा वानप्रस्थः । शेषेऽण् । गृहीतकाषायदण्डो भिक्षुः । 'भिक्ष याच्ञायाम्' । 'सनाशंसभिक्ष उः' (३. २. १६८) ॥

चतुष्टये ॥ ३ ॥

**आश्रमोऽस्त्री**

क्षीर० — अस्मिंश्चतुष्के आश्राम्यन्ति तपस्यन्त्यस्मिन्नित्याश्रमं प्रत्येकं वर्तते ॥

टीका० — ब्रह्मचार्यादिचतुष्टये आश्रमः । 'श्रमु तपसि खेदे च' । 'हलश्च' (३. ३. १२१) इति घञ् । 'नोदात्तोपदेश—'(७. ३. ३४) इत्यादिना वृद्ध्यभावः ॥

१, 'दा' क. ग. घ. ङ. पाठः. २. 'म् । 'व्रते' णिनिः । ब्रह्मचारी व' क. पाठः.

द्विजात्यग्रजन्मभूदेवबाडवाः ।

विप्रश्च ब्राह्मणः

क्षीर० —

"मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनात्"

इति द्विजातिः । अग्रे आदौ अग्रान्मुखाद् वा जन्मास्याग्रजन्मा । यच्छ्रुतिः— 'ब्राह्मणोऽस्य मुखमासीत्' । वाडव इवातृप्तः । विशेषेण पूरयति विप्रो विपाति विपति वा । 'विप क्षेपे' । ब्रह्मणोऽपत्यं ब्राह्मणः ॥

टीका० — द्विजातिषट्कं ब्राह्मणे । देहोत्पत्तिसंस्कारोत्पत्तिलक्षणे द्वे जाती जन्मनी अस्येति द्विजातिः । जातिपरत्वाच्छब्दस्य 'जात्यन्ताच्छ बन्धुनि' (५. ४. ९) इति छो न भवति । ब्रह्मणो मुखे अग्रे जन्मास्येत्यग्रजन्मा । नान्तः । वडवा ब्राह्मणी । तथा च —

"बडवा कुम्भदास्यश्च स्त्रीविशेषो द्विजाङ्गना"

इति रभसः । तत्र भवा बाडवाः । शेषेऽण् । 'प्रा पूरणे' । 'आतश्चोपसर्गे' (३. १. १३६) । कः । विप्रः । ब्रह्मणोऽपत्यं ब्राह्मणः । 'तस्यापत्यम्' (४. १. ९२) इत्यण् ॥

असौ षट्कर्मा यागादिभिर्युतः ॥ ४ ॥

क्षीर० — षट् कर्माणि ब्राह्मणस्य । अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्च ॥

टीका० —

"यजनं याजनं दानं विशिष्टाच्च प्रतिग्रहः ।
अध्यापनमध्ययनं विप्रकर्म प्रकीर्तितम् ॥"

इत्येतैः षड्भिर्युक्ते विप्रे षट्कर्मा ॥

विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः ।
धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः ॥ ५ ॥
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।

क्षीर० — वेत्ति विद्वान् । 'विदेः शतुर्वसुः' (७. १. ३६) । विपश्यंश्चेतयते विपश्चित् । दोषान् जानाति ज्ञात्वा जह्यादिति दोषज्ञः ।

सन् विद्यमानः, उत्तम इत्यर्थः । अन्ये त्वसत्कल्पाः । सुध्यायति सुधीः । 'अन्येभ्योऽपि दृश्यते' (३. २. १७८) इति क्विप् सम्प्रसारणं च । ओकः स्थानं वेत्ति कोविदः, 'कुङ् शब्दे' अस्माद् वा । धियमीरयति धीरः । मनस ईष्टे मनीषास्त्यस्य वा मनीषी । जानातीति ज्ञः । 'इगुपध–' (३. १. १३५) इति कः । प्रज्ञ एव प्राज्ञः । 'प्रज्ञादिभ्यश्च' (५. ४. ३८) इत्यण् । प्रज्ञास्त्यस्य वा । 'प्रज्ञाश्रद्धा––' (५. २. १०१) इति णः । सम्यक् ख्यानं ज्ञानमस्य सङ्ख्यावान् । सङ्ख्या विचारणा वा । पण्डते विजानाति पण्डितः । 'पडि गतौ' । सर्वे गत्यर्था ज्ञानार्था इति पण्डा धीः सञ्जातास्य वा । कवते वर्णयति कविः । कवितापि । सुवति सूरिः । कृतमस्यास्ति कृती कृतकृत्यः । कर्षति विविक्ते कृष्टिः । लब्धं वर्णनं प्रसिद्धिर्येन लब्धवर्णः । विचष्टे विचक्षणः ॥

## दूरदर्शी दीर्घदर्शी

क्षीर० — अप्रत्यक्षमूहत इत्यर्थः ॥

टीका० — विद्वदादिद्वाविंशकं पण्डिते । 'विदेः शतुर्वसुः' (७. १. ३६) इति शत्रन्ताद् वस्वादेशविकल्पे विद्वान् । विप्रकृष्टं चिनोतीति विपश्चित् । पृषोदरादिः । शोभनं ध्यायतीति सुधीः । किन्नाम वेत्तीति कोविदः । पृषोदरादिः । बुधज्ञयोरिगुपधलक्षणः कः । बुधो ज्ञश्च । व्रीह्यादित्वादिनिः । मनीषी । प्रज्ञायोगात् प्राज्ञः । 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५. २. १०१) इति मत्वर्थे णः । सङ्ख्या विचारणा, तद्वान् सङ्ख्यावान् । पण्डा बुद्धिर्जातास्मिन्निति पण्डितः । तारकादित्वादितच् । 'षूञ् प्राणिप्रसवे' । 'षूञः क्रिः' (उ० ४. ६५) । सूरिः, दन्त्यादिः । अभिधानमालायामिन्नन्तोऽपि सूरी । कृतं ज्ञातमनेनेति कृती । 'इष्टादिभ्यश्च' (५. २. ८८) इतीनिः । कर्षति निष्कर्षतीति कृष्टिः । बाहुलकः क्तिन् । 'अन्येभ्योऽपि दृश्यते' इति वा क्तिन् । 'स्त्र्याकर्षे ना बुधे कृष्टिः' इति रुद्रः । लब्धो वर्णः स्तुतिर्येन स लब्धवर्णः । विचक्षण इति 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति कर्तरि युच् । 'असनयोश्च प्रतिषेधो वक्तव्यः'(वा० २. ४. ५४) इति चक्षिङः ख्याञादेशप्रतिषेधः । देशकालविप्रकृष्टानर्थान् यो बुद्ध्या पश्यति, तत्र दूरदर्शिद्वयमिति केचित् ॥

१. 'शतिकं' म. पाठः.

श्रोत्रियच्छान्दसौ समौ ॥ ६ ॥

क्षीर०— 'श्रोत्रियंश्छन्दोऽधीते' (५. २. ८४)। श्रोत्राभ्यां कृतकर्मेति । छन्दोऽधीते छान्दसः ।

"मीमांसको जैमिनीयो वेदान्ती ब्रह्मवादिनि ।
वैशेषिकः स्यादौलूक्यः सौगतः शून्यवादिनि ।
नैयायिकस्त्वाक्षपादः स्यात् स्याद्वादिक आर्हतः ।
चार्वाकलोकायतिकौ सत्कार्यौ साङ्ख्यकापिलौ" ॥

टीका०— छन्दोऽध्येतरि श्रोत्रियद्वयम् । छन्दोऽधीत इति श्रोत्रियः । 'श्रोत्रियंश्छन्दोऽधीते (५. २. ८४) इति श्रोत्रियन्निपात्यते छन्दोऽधीत इत्येतस्मिन्नर्थे । नकारः स्वरार्थः । छन्दश्शब्दस्य वा श्रोत्रभावो घन्प्रत्ययश्च । 'तदधीते तद् वेद' (४. २. ५९) इत्यणि छान्दसः ॥

उपाध्यायोऽध्यापकः

क्षीर० — उपेत्याधीयतेऽस्मादुपाध्यायः । 'इङश्च' (३. ३. २१) इति घञ् ॥

टीका० — वेदादिपाठयितर्युपाध्यायद्वयम् । उपेत्याधीयतेऽस्मादित्युपाध्यायः । 'इङश्च' (३. ३. २१) इति घञ् ॥

अथ स्यान्निषेकादिकृद् गुरुः ।

क्षीर० — गृणात्युपदिशति गुरुः । यन्मनुः —

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते" ॥

निषेको गर्भाधानविधिः । आदिशब्दात् पुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौडोपनयनादीनि ॥

टीका०— निषेको गर्भाधानं, तत्कारिणि पितरि गुरुः । गिरतेः 'कृग्रोरुच्च' (उ० १. २४) इति कुप्रत्ययः उकारश्चान्तादेशः । 'उरण् रपरः' (१. १. ५१) । आदिना सीमन्तोन्नयनादि ॥

**मन्त्रव्याख्याकृदाचार्यः**

क्षीर० — आचरणीयः सेव्य आचार्यः । आचारं ग्राहयतीति नैरुक्ताः । मन्त्रकृद् वेदाध्यापनात् । विशिष्टाख्याकृदुपनीय[1] द्विजत्वापादनात् । यदाह[2] —

"उपनीय तु यः शिष्यं वेदमध्यापयेद्[3] द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥

टीका० — मन्त्रो वेदः, तस्योपनयनपूर्वकं प्रतिपादयिता आचार्यः ।

"उपनीय तु यः पूर्वं वेदमध्यापयेद् द्विजः ।
साङ्गं च सरहस्यं च तमाचार्यं विदुर्बुधाः ॥"

इति मनुः । अन्यत्रोपचारात् ॥

**आदेष्टा त्वध्वरे व्रती ॥ ७ ॥**

**यष्टा च यजमानश्च**

क्षीर० — स्वाम्येनादिशत्यादेष्टा । आदिष्टीति पाठे आदिष्टमनेनेति इष्टादित्वादिनिः । क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानात् सप्तमी । व्रती सनियमः । यजते यजमानः । 'पूङ्यजोः शानन्' (३. २. १२८) ॥

टीका० — अध्वरे अध्वरविषये आदेष्टा अध्वरस्वामी, तत्र व्रतित्रिकम् । यजमानश्चेति चकारान्तः पाठः साधुः । तथा च रभसः —

"मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ।
यष्टा च यजमानश्च याजको देवचारकः ॥
दीक्षितः सोमपीती"

इति । क्वचित् त्वन्तः पाठः । तदा च सोमयागयष्टरि यजमानदीक्षिताविति योजना ।

"सोमवत्यध्वरे यष्टा यजमानोऽपि[5] दीक्षितः"

१. 'नयनेन द्वि' ख. पाठः. २ 'हुः' ख. पाठः. ३. 'त्ररः ।' ग. पाठः. ४. 'नोऽथ स्वा' ख. ग. पाठः. ५. 'थ' क. म. पाठः.

इत्यमरमालापि । व्रतयोगाद् व्रती नान्तः । यजेः तृच् । यष्टा । 'पूङ्यजोः शानन्' (३. २. १२८) । यजमानः ॥

**स सोमवति दीक्षितः ।**

क्षीर०—स व्रती सोमवत्यध्वरे दीक्षिताख्यः दीक्षा सञ्जातास्येति । सोमवानग्निष्टोमादिः क्रतुः । यद् गौतमः—'अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः' ॥

टीका०—स यजमानः सोमवत्यध्वरे दीक्षिताख्यः । 'दीक्ष मौण्ड्येज्योपनयनादौ' । क्तः ॥

**इज्याशीलो यायजूकः**

क्षीर०—यजनमिज्या । 'व्रजयजोर्भावे क्यप्' (३. ३. ९८) । अत्यर्थं यजते[2] तच्छीलो यायजूकः । 'यजजपदशां यङः' (३. २. १६६) इत्यूकः ॥

टीका०—पुनः पुनर्यागकरणशीलो यायजूकः । 'यजजपदशां यङः' (३. २. १६६) इति यङन्तादूकप्रत्ययः ॥

**यज्वा तु विधिनेष्टवान् ॥ ८ ॥**

क्षीर०—'सुयजोर्ङ्वनिप्' (३. २. १०३) ।[1]

टीका०—विधिना यथाशास्त्रं निर्वर्तितयागो यज्वा ॥

**स गीष्पतीष्ट्या स्थपतिः**

क्षीर०—स यज्वा बृहस्पतिमेधेन हेतुना । स्थापयतीति स्थपतिः ॥

१. 'मः क्र' ख. पाठः. २. 'ति' क. ग. घ ङ. पाठः.

टीका० — स यज्वा बृहस्पतिसवनाम्ना यागेनेष्टवान् स्थपतिः ॥

**सोमपीथी तु सोमपः ।**

क्षीर० — पानं पीथः । 'पातृतुदि —' (उ० २. ७) इति थक् । 'घुमास्था —' (६. ४. ६६) इतीत्त्वम् । सोमपीतीति प्राच्याः पेठुः । सर्वदाऽयं, दीक्षितस्तु तत्कालम् ॥

टीका० — सोमपीतिद्वयं सोमलतारसपायिनि । सोमः पीतोऽनेनेति 'इष्टादिभ्यश्च' (५. २. ८८) इतीनिः ॥

**सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥**

क्षीर० — सर्वं विन्दत्यस्मात् सर्ववेदाः, असुन् ॥

टीका० — विश्वजिदादियागः सर्वस्वदक्षिणः, तद्याजी सर्ववेदाः, सर्वं सर्वस्वं वेदयति लम्भयति ऋत्विज इति । 'विदॢ लाभे' । ण्यन्तादसुन् ॥

**अनूचानः प्रवचने साङ्गेऽधीती**

क्षीर० — अनूक्तवान् । 'उपेयिवाननाश्वाननूचानश्च' (३.२.१०९) इति कानचि साधुः । प्रोच्यते प्रवचनं वेदः । अधीतमनेनाधीती । इष्टादित्वादिनिः । 'क्तस्येन्विषयस्य —'(वा० २. ३. ३६) इति सप्तमी ॥

टीका० — प्रवचने वेदे सशिक्षाद्यङ्गषट्के कृताध्ययने अनूचानः । 'उपेयिवाननाश्वाननूचानश्च' (३. २. १०९) इति निपातितः । प्रवचन इति 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' (वा० २. ३. ३६) इति सप्तमी ॥

**गुरोस्तु यः ।**

**लब्धानुज्ञः समावृत्तः**

क्षीर० — अधीत्य गुर्वाज्ञया गुरुगृहाद् यः समावर्तते स समावृत्तः स्नातकाख्यः ।

"गुरुगेहादनावृत्तः स्नातको हि न कथ्यते" ॥

टीका०—अधीतवेदो गृहमावस्तुं गुरोः सकाशाद् गृहीतानुज्ञः समावृत्तः। वृतेः क्तः ॥

सुत्वा त्वभिषवे कृते ॥ १० ॥

क्षीर०—सुनोति सुत्वा। 'सुयजोर्ङ्वनिप्' (३. २. १०३)। अभिषवः सोमकुट्टनसन्धानम् ॥

टीका०—अभिषवः स्नानमात्रं प्रस्तावाद् यागसम्बन्धिस्नानं यः कृतवान्, स सुत्वा। नान्तः। 'सुयजोर्ङ्वनिप्' (३. २. १०३) ॥

छात्रान्तेवासिनौ शिष्ये

क्षीर०—छत्रमिव शीलमस्य छात्रः। 'छत्रादिभ्यो णः'(४. ४. ६२)। छत्रेण गुरुसेवा लक्ष्यते। गुरोरन्ते वसत्यवश्यमन्तेवासी। 'शयवासवासिषु—'(६. ३. १८) इति सप्तम्या अलुक्। शासनीयः शिष्यः ॥

टीका०—छात्रद्वयं शिष्ये। गुरुच्छिद्रावरणशीलश्छात्रः। 'छत्रादिभ्यो णः' (४. ४. ६२)। अन्ते समीपे वस्तुं शीलमस्येत्यन्तेवासी। ताच्छीलिको णिनिः। 'शयवासवासिष्वकालाद्' (६. ३. १८) इति सप्तम्यलुग्विकल्पे अन्तेवासी च। प्रत्ययान्तरविषयश्चायं धातुः। तथा च भारविः—'वसन्निवान्ते विनयेन जिष्णुः'(स०३. श्लो० २४) इति। वसिसमानार्थधातुप्रयोगोऽप्यस्मिन् दृश्यते। तथा च—'मृगास्तमुपासते गुरुमिवान्तसदः' इति। 'शासु अनुशिष्टौ'। 'एतिस्तुशास्वृदृजुषः क्यप्' (३. १. १०९)। 'शास इदङ्हलोः' (६. ४. ३४) इतीत्वम्। 'शासिवसिघसीनां च' (८. ३. ६०) इति षत्वम्। शिष्यः ॥

शैक्षाः प्राथमकल्पिकाः।

क्षीर०—शिक्षायां भवाः शैक्षाः। प्रथमकल्प आद्यारम्भः प्रयोजनमेषां प्राथमकल्पिकाः ॥

---

१. 'मी' क. ख. ङ. च. छ. पाठः. २. 'ते' क. ख. पाठः.

टीका०—प्रथमवेदपाठके शैक्षद्वयम्। शिक्षासाहचर्याद् ग्रन्थोऽपि शिक्षा। 'तदधीते—'(४. २. ५९) इत्यण्। प्रथमकल्पं प्रथमशिक्षणीयमधीयत इति प्राथमकल्पिकाः। उक्थादित्वाट्ठक्॥

**एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः॥ ११॥**

क्षीर०—तुल्यवेदास्तुल्यव्रतास्तुल्याचाराश्चान्योन्यं समानं ब्रह्म चरन्ति सब्रह्मचारिणः।

"ब्रह्म वेदो ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतम्"

इति। एकस्मिन् वेदे व्रतमाचरन्ति वा। 'व्रते'(३.२.८०) इति णिनिः। 'चरणे ब्रह्मचारिणि' (६.३.८६) इति समानस्य सभावः॥

टीका०—एकस्माद् गुरोरेकं वेदमध्येतुमेकं ब्रह्म व्रतमाचरन्तोऽन्योन्यं सब्रह्मचारिण इत्युच्यन्ते। ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म। समानं ब्रह्मचरन्तीति सब्रह्मचारिणः। 'व्रते' (३. २. ८०) इति णिनिः। 'चरणे ब्रह्मचारिणि' (६. ३. ८६) इति सभावः॥

**सतीर्थ्यास्त्वेकगुरवः**

क्षीर०—'समानतीर्थे वासी' (४.४.१०७) इति यत्। 'तीर्थे ये' (६.३.८७) इति सत्वम्। तरन्त्यनेन विद्यां तीर्थं गुरुः॥

टीका०—एकगुरुका वेदविषयेऽन्यविषये च सतीर्थ्याः। पावनहेतुत्वात् तीर्थमिव तीर्थं गुरुः। 'समानतीर्थे वासी' (४. ४. १०७) इति यः। 'तीर्थे ये' (६. ३. ८७) इति सभावः॥

**चितवानग्निमग्निचित्।**

क्षीर०—आहिताग्निः। 'अग्नौ चेः' (३.२.९१)। क्विप्॥

टीका०—चिताग्निर्द्विजोऽग्निचित्। 'अग्नौ चेः' (३. २. ९१) इति क्विप्॥

**पारम्पर्योपदेशः स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥**

क्षीर० — इत्येवं किलेति मुखपारम्पर्यमितिह । ततः स्वार्थे पक्षे 'अनन्तावसथेतिहभेषजाञ्ञ्यः' (५. ४. २३) ॥

टीका० — उपदेशपरम्परायामैतिह्यद्वयम् । अस्मिन् वृक्षे यक्षोऽस्तीत्युदाहरणम् । इतिहशब्दोऽव्ययसमुदायः । ततः स्वार्थे 'अनन्तावसथेतिहभेषजाञ्ञ्यः' (५. ४. २३) ॥

**उपज्ञा ज्ञानमाद्यं स्याद्**

क्षीर० — उपज्ञायत इत्युपज्ञा, इदं[1]प्रथमतया ज्ञानम् । चन्द्रस्योपज्ञा चन्द्रोपज्ञं व्याकरणम् ॥

टीका० — विनोपदेशेन ज्ञानमुपज्ञा । यथा वाल्मीकेः श्लोकज्ञानम् ॥

**ज्ञात्वारम्भ उपक्रमः ।**

क्षीर० — उपज्ञाय आरम्भणमुपक्रमः । यत् कात्यः—'यस्मात् प्रवृत्त आरम्भः स उपक्रमः' । नन्दस्योपक्रमः । नन्दोपक्रमाणि मानानि । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' (२. ४. २१) इति नपुंसकत्वम् ॥

टीका० — एतदित्थं सिध्यतीत्युपायज्ञानपूर्वक आरम्भ उपक्रमः ॥

**यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥**

क्षीर०[2]— इज्यते यज्ञः । 'यजयाच—' (३. ३. ९०) इति नङ् । सूयते सोमोऽस्मिन् सवः । अध्वानं रात्यध्वरः । न ध्वरति वा । 'ध्वृ हूर्छने'[3] । सप्तभिश्छन्दोभिस्तन्यत इति[4] सप्ततन्तुः । मखति धर्मं मखः । क्रियते क्रतुः ॥

१. 'इसंज्ञकं व्या' ङ. पाठः २. 'मा', ३. 'ने । सप्ततन्तुः । 'सप्तभि', ४. 'ति । म' ख. पाठः.

टीका० — यज्ञसप्तकं यागे । 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३. ३. ९०) । यज्ञः । सुनोतेः 'ऋदोरप्' (३. ३. ५७) । सवः । स्वस्सम्बन्धिनमध्वानं रातीत्यध्वरः । मखिर्गत्यर्थः । दण्डकम् । अच् । मखः । 'सोमयागेष्वेव क्रतुशब्दोऽन्यत्रोपचारादि'ति जयादित्यः ॥

**पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।**
**एते[1] पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥**

क्षीर० — स्वाध्यायो ब्रह्मयज्ञः, होमो देवयज्ञः, नृयज्ञोऽतिथिपूजनं, तर्पणं श्राद्धाख्यं पितृयज्ञः, बलिर्भूतयज्ञः । यन्मनुः —

"स्वाध्यायो[2] ब्रह्मयज्ञः स्यात् पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" ॥

टीका० — एतैः पाठादिभिः पञ्चभिर्ब्रह्मयज्ञादिनामकैः पञ्च महायज्ञाः स्युः । सपर्या पूजा ।

"स्वा[3]ध्यायो ब्रह्मयज्ञः स्यात् पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥"

इति स्मृतिः ॥

**समज्या परिषद् गोष्ठी सभासमितिसंसदः ।**
**आस्थानी क्लीब आस्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥**

क्षीर० — समज[4]न्ति मिलन्त्यस्यां समज्या । 'संज्ञायां समज —' (३. ३. ९९) इति क्यप् । परिसीदन्त्यस्यां परिषत्[5] । पर्षच्च । गावो नानोक्तयस्तिष्ठन्त्यस्यां गोष्ठी । सह भान्त्यस्यां सभा । संयन्त्यस्यां समितिः । संसीदन्त्यस्यां संसत् । आ[6]तिष्ठन्त्यस्यामास्थानी । सीदन्त्यस्मिन् सदः । असुन् ॥

---

१. 'वं' ग. पाठः. २. 'यः स्यात् । अध्यापनं ब्रह्मयज्ञः पि' ख. पाठः. ३. 'अध्ययनं ब्रह्मयज्ञः पि' ख. ङ. छ. झ. ट. पाठः. ४. 'ज', ५. 'त् । गा', ६. 'अधिति' ख. पाठः.

टीका० — समज्यानवकं सभासामान्ये । कीर्त्तौ समज्योक्ता । परितः सीदन्त्यस्यामिति परिषत् । सम्पदादिः । 'सदिरप्रतेः' (८. ३. ६६) इति षत्वम् ।

"आस्थानं संसदास्थानी परिषत्पर्षदौ समे"

इति रभसः । गावः कथास्तिष्ठन्त्यस्यामिति गोष्ठी । गोष्ठवत् सर्वम् । सद्भिर्भातीति सभा । भया दीप्त्या सह वर्तत इति वा । संयन्ति मिलन्त्यस्यामिति समितिः । बाहुलकः क्तिन् । अकर्तरि च कारके वा । सम्पदादिक्विपि संसद् दान्ता । आगत्य तिष्ठन्त्यस्यामित्यास्थानी । आस्थानं च । अधिकरणे ल्युट् । सीदन्त्यस्यामिति सदः । असुन् । स्त्रियां सदाः सदसौ सदसः ॥

**प्राग्वंशः प्राग्घविर्गेहात्**

क्षीर० — वंशः कुलं स्थूणा वा । प्राग् वंशोऽत्र प्राग्वंशः[1] पत्नीशालाख्यः । प्राग्घविर्गेहाद्[2] अग्निशालाया आद्यो भागः ॥

टीका० — यत्र गृहे हव्यादिकं स्थाप्यते ततः पूर्वं सदस्यादीनां गृहं प्राग्वंशः ॥

**सदस्या विधिदर्शिनः ।**

क्षीर० — सदसि साधव ऊनाधिकजागरूका ऋत्विग्भेदाः सदस्याः ॥

टीका० — विधेर्न्यूनातिरिक्ततानिरीक्षणतत्परे सदस्यद्वयम् । सदसि साधुरुपकारकः सदस्यः । 'तत्र साधुः' (४. ४. ९८) इति यत् ॥

**सभासदः सभास्तारा: सभ्याः सामाजिकाश्च ते ॥ १६ ॥**

क्षीर० — सभायां सीदन्ति सभासदः । सभां स्तृण्वन्ति सभास्ताराः । समाजं समवयन्ति सामाजिकाः । 'समवायान् समवैति' (४. ४.

१. 'त्ति' घ. पाठः. २. 'त् पत्नीशालाख्यात् । अ' ख. घ. ङ. पाठः.

४३) इति ठक् । पारिषद्याः पारिषदाः सभाशूराश्च ॥

टीका० — सभासदादिचतुष्कं सभाया आरम्भके । सम्पदादिक्विपि सभासत् । सभां स्तृणन्ति छादयन्तीति सभास्तारा: । 'कर्मण्यण्' (३. २. १)। सदस्यवत् सभ्यः । 'समवायान् समवैति (४. ४. ४३) इति समजशब्दाट्ठकि सामाजिकः ॥

**अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।**

क्षीर० — ऋत्विज इत्येव । अध्वरं याति न ध्वरति वा अध्वर्युर्नाम ऋत्विक् । स यजुर्वित् कठः स्यात् । उद्गायक उद्गाता छन्दोगः स्यात् । होता बह्वृचः स्यात् ॥

टीका० — अध्वर्युत्रयं यथाक्रमं यजुर्वेदादिवेदिषु । अध्वरमिच्छतीत्यध्वर्युः । 'क्याच्छन्दसि' (३. २. १७०) इत्युः । 'कव्यध्वरपृतनस्यर्चि लोपः' (७. ४. ३९) इति 'अलोन्त्यस्य' (१. १. ५२) इति नियमेन रेफात् परस्याकारस्य लोपः । तृचि उद्गाता । होतेति 'तृन्विधावृत्विक्षु चानुपसर्गस्येति वक्तव्यम्' (वा० ३. २. १३५) इति तृन् ॥

**आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥**

क्षीर० — अग्नीनिन्धेऽग्नीत् । तस्य शरणमाग्नीध्रः । 'अग्नीधः शरणे रण् भषत्वं च'(वा० ४. ३. १२०) इति रण् । आद्यशब्दात् पोतृप्रशास्तृब्राह्मणाच्छंस्यच्छावाकग्रावस्तुदुब्रह्ममैत्रावरुणप्रतिप्रस्थातृप्रतिहर्तृनेष्टृनेतृसुब्रह्मण्याः । इत्थं ससदस्याः सप्तदश ऋत्विजः । 'एतिस्तुशास्वृ—' (३. १. १०९) इति वृञो ग्रहणाद् वृङो व्रियन्त इति वार्याः । 'ऋहलोर्ण्यत्' (३. १. १२४) । 'वृताः कुर्वन्ति ये यज्ञमृत्विजस्त' इति कात्यः । ऋतौ यजति । 'ऋत्विग्दधृग्—' (३. २. ५९) इति साधुः ॥

टीका० — आग्नीध्राद्याः षोडश यज्ञस्वामिना धनैर्वरणीया याजकादिद्वयवाच्याः । ते च ब्रह्मा, उद्गाता, होता, अध्वर्युः, ब्राह्मणाच्छंसी, प्रस्तोता, मैत्रावरुणः, प्रतिप्रस्थाता, पोता, प्रतिहर्ता, अच्छा-

वाकः, नेष्टा, आग्नीध्रः, सुब्रह्मण्यः, ग्रावस्तुद्, उन्नेता चेति षोडश प्रकाराः। अग्निमिन्धयतीति रक्। आग्नीध्रः। वृणातेः ण्यति वार्याः। ऋत्विगादिसूत्रेण ऋत्विग् जान्तो निपातितः। ण्वुलि याजकाः॥

**वेदिः परिष्कृता भूमिः**

क्षीर०—विदन्त्येनां वेदिः। परिष्कृता चातुरश्र्येण[1] भूषिता। यागार्थं परिष्कृतां[2] त्वाह॥

टीका०—यागार्थं संस्कृता भूमिर्वेदिः। ङीषि वेदी च॥

**समे स्थण्डिलचत्वरे।**

क्षीर०—तिष्ठन्त्यस्मिन् स्थण्डिलम्। चत्यते चत्वरम्। यागार्थं संस्कृता भूः॥

टीका०—यागार्थं संस्कृतभूमौ स्थण्डिलद्वयम्। प्राङ्गणे चत्वरमुक्तम्॥

**चषालो यूपकटकः**

क्षीर०—तक्ष्णा कारितो यूपाग्रे कटकाकृतिः। चष्यत उत्कीर्यत इति चषालः॥

टीका०—खादिरादिकं पशुबन्धनकाष्ठं यूपः। तन्मूर्ध्नि काष्ठमयो डमरुकाकृतिश्चषालः। 'चष भक्षणे'। मूर्धन्यषः। 'सानसिवर्णसि[3]तण्डुलाङ्कुशचषालेल्वलपल्वल—' (उ० ४. १०९) इत्यादिना आलः। अर्धर्चगणपठितत्वात् क्लीबेऽपि॥

**कुम्बा सुगहना वृतिः॥ १८॥**

क्षीर०—'कुबि आच्छादने'। 'चिन्तिपूजि—' (३. ३. १०५) इत्यङ्। व्रियतेऽनया वृतिः। यज्ञवाटे[4] वेणिका॥

१. 'चतुरश्रेण', २. 'चा' ग. पाठः. ३. 'धर्णसिपर्ण' ञ. पाठः. ४. 'व' क, ग, ङ. पाठः.

टीका० — यागभूमौ वृतिर्वेष्टनिका या सा कुम्बा । 'कुबिच्छादने' चुरादिणिच् । 'चिन्तिपूजिकथिकुबिचर्चश्च' (३. ३. १०५) इत्यङ् ॥

**यूपाग्रे तर्म**

क्षीर० — तरत्यनेन यूपं तर्म ॥

टीका० — यूपाग्रे तर्म । तरतेः मनिन् । वेदविदां तर्मेति पाठात् तर्ह्मेति पाठो लिपिदोषजः । 'उतृदिर् हिंसानोदरयोः' । मनिन् ॥

**निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।**

क्षीर० — निर्मथनीयं दारु, यतोऽग्निर्जन्यते । इयर्त्यग्निर्यतः सोऽरणिः ॥

टीका० — यत् काष्ठं काष्ठान्तरेणाग्न्युत्पादनार्थं घृष्यते सा अरणिः । अर्तेः अशनिवद् अनिः ॥

**दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥**

क्षीर० — दक्षिणेऽग्निर्दक्षिणाग्निः । गृहपतिना संयुक्तो गार्हपत्यः । 'गृहपतिना संयुक्ते ञ्यः' (४. ४. ९०) । आहोतव्य आहवनीयः ॥

टीका० — दक्षिणाग्नित्रयं पृथक् पृथक् स्वनामप्रसिद्धेऽग्नित्रये । दक्षिणोऽग्निर्दक्षिणाग्निः । 'गृहपतिना संयुक्ते ञ्यः' (४. ४. ९०) इति ञ्यः । गार्हपत्यः । अनीयरि आहवनीयः ॥

**अग्नित्रयमिदं त्रेता**

क्षीर० — त्रीणि इतां प्राप्ता त्रेता । पृषोदरादित्वादेत्वम् ॥

टीका० — इदं श्रौताग्नित्रयमेकोक्त्या त्रेतोच्यते । त्राणं त्राः सद्यः सन्धुक्षणम् । त्राम् इता प्राप्ता त्रेता स्त्रियाम् ॥

१. 'तदेमर्मीति' ख. ग. पाठः. २. 'दानयोः' ख. पाठः. ३. 'तो निर्मथ्य जन्य' ख. घ. पाठः. ४. 'कृ' ख. पाठः. ५. 'ता त्रे' ख. पाठः.

**प्रणीतः संस्कृतोऽनलः ।**

क्षीर० — प्रणयनं मन्त्रादिना संस्कारैः प्रादुष्करणम् ॥

टीका० — मन्त्रेण संस्कृतोऽग्निः प्रणीतः ॥

**समूह्यपरिचाय्योपचाय्या अग्नौ प्रयोगिणः ॥ २० ॥**

क्षीर० — 'अग्नौ परिचाय्योपचाय्यसमूह्याः' (३. १. १३१) इति निपात्यन्ते[1]। समूह्यते ढौक्यत इत्यग्निः समूह्यः। परिचीयते परिचाय्यः। उपचीयते उपचाय्यः। इत्यग्निनामधेयानि प्रयोगविषयाणि ॥

टीका० — समूह्यादयस्त्रयो[2] यागवह्नौ। प्रयोगिणः, प्रयोक्तव्या इत्यर्थः। नान्यत्र, यज्ञादिविषये निपातनाद् 'अग्नौ परिचाय्योपचाय्यसमूह्याः' (३. १. १३१) इत्यनेन। 'ऊह वितर्के'। ण्यत्। समूह्यो दीर्घमध्यः। एवं परिपूर्वाच्चिनोतेर्ण्यदायादेशौ। परिचाय्यः। उपपूर्वादुपचाय्यः ॥

**यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।**
**तस्मिन्नानाय्यः**

क्षीर० — 'आनाय्योऽनित्ये' (३. १. १२७) इति साधुः। आनीयते आनाय्यः। प्रणीयते दक्षिणाग्नित्वेन संस्क्रियते[3] ॥

टीका० — उत्तरस्थाद् गार्हपत्याद् योऽग्निः प्रणीयते आरोप्यते स आनाय्यः। 'आनाय्योऽनित्ये' (३. १. १२७) इत्यनेनाङ्पूर्वान्नयतेः पूर्ववद् ण्यदायादेशौ। एतद(रूच्या?नित्यम्) ॥

**अथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥**

क्षीर० — 'वृषाकप्यग्निकुसित —' (४. १. ३७) इति ङीप्प्रसङ्गेऐत्वम्। सुष्ठ्वाहूयते स्वाहा, स्वाहास्त्यस्या वा ॥

टीका० — अग्नायीत्रयमग्निभार्यायाम्। अग्निशब्दाद् 'वृषाकप्यग्नि-

---

१. 'रुन्तन्यत' ग. घ. ङ. पाठः. २. 'यो व' ख. पाठः. ३. 'ते प्रणाय्यः ॥' ग. पाठः.

कुसितकुसिदानामुदात्तः' (४. १. ३७) इति ङीप् ऐकारश्चान्तादेशः । अग्नायी । सुष्ठु आहूयन्ते देवा अनयेति स्वाहा । पृषोदरादिः ॥

**ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धनी ।**

**क्षीर० — समिधामाधानी सामिधेनी । 'समिधामाधाने (षे)ण्यण्' (वा० ४. ३. १२०) । धीयतेऽनया धाय्या । 'पाय्यसान्नाय्य—'(३. १. १२९) इति साधुः ॥**

**टीका० —** अग्निसमिन्धनेऽग्निज्वलने या ऋक् पठ्यते तत्र सामिधेनीद्वयम् । 'समिधामाधाने षेण्यण् वक्तव्यः' (वा० ४. ३. १२०) इति तस्येदमर्थे षेण्यण् । षित्वाद् ङीष् । 'हलस्तद्धितस्य' (६. ४. १५०) इति यलोपः । सामिधेनी । 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' (३. १. १२९) इत्यनेन धाञो ण्यदायादेशाभ्यां धाय्या निपातिता ॥

**गायत्रीप्रमुखं छन्दः**

**क्षीर० — गायन्तं[1] त्रायते गायत्री । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतिशक्वर्यतीशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतिकृतिप्रकृत्याकृतिविकृतिसङ्कृत्यभिकृत्युत्कृत्याख्यं षडक्षरादारभ्य षड्विंशत्यक्षरं यावत् । छन्दति छन्दोऽक्षरनियमात्मकं, गुरुलघुनियमात्मकं तु वृत्तं तनुमध्यादि ॥**

**टीका० —** गायत्रीप्रमुखं गायत्र्याद्यं छन्दश्शब्दवाच्यम् । आदिनोष्णिगनुष्टुब्बृहतीपङ्क्त्यादीनां ग्रहणम् ।

> "कात् का हरेर्नृता कस्य मूर्धवर्गग्रहः कथम् ।
> ऋक्षस्त्रिक्ष+चाष्टौ(?) स्युर्वर्णाः पादेष्वनुष्टुभि ॥"

इति विदग्धे द्विरुकारवाननुष्टुब् भान्ता च । तत्र षडक्षरा गायत्री, ततो यथाक्रममेकैकाक्षरवृद्ध्या क्रमादुष्णिगादीनां पादाः । गायन्तं त्रायत इति गायत्री । गौरादिः । 'चदि आह्लादने' । 'चदेरादेश्च छः' (उ० ४. २२०) इत्यसुन् आदेश्च छः । छन्दः ॥

---

१. 'क' ग. पाठः.

**हव्यपाके चरुः पुमान् ॥ २२ ॥**

क्षीर० — हव्यस्य पाको हव्यपाकः पक्वं होतव्यम् । चरुः चर्यते भक्ष्यत इति । स्थाल्यपि चरुः हव्यस्य पाकोऽत्रेति ॥

टीका० — देवार्थमन्नं[1] हव्यम् । तस्य पाके स्थाल्यादौ चरुः । चरेर्म-रुवद् उः ॥

**आमिक्षा सा शृतोष्णे या क्षीरे स्याद् दधियोगतः ।**

क्षीर० — पक्वे तप्ते च क्षीरे दधियोजनादामिक्षा[2] । 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षे'ति श्रुतिः । आमीयते क्षिप्यते दध्यत्रेति ॥

टीका० — आवर्तिते तप्ते क्षीरे दधियोगाद् या जटिकाकारा जायते सा आमीक्षा[3] । आङ्पूर्वाद् 'मिह सेचने' इत्यतः 'मनेर्दीर्घश्च' (उ० ३. ६४) इति बाहुलकः सः, उपधाया दीर्घत्वं च । एवं दीर्घमध्येति पुरुषोत्तमः । 'मिष स्पर्धायामि'त्यत आङ्पूर्वात् 'स्नुव्रश्चिकृत्यृषिभ्यः कित्' (उ० ३. ६६) इति बाहुलकः सः । एवं ह्रस्वमध्येति गोवर्धनः ॥

**धवित्रं व्यजनं तद् यद् रचितं मृगचर्मणा ॥ २३ ॥**

क्षीर० — धूयतेऽग्निर्येनेति धवित्रम् । 'अर्तिलूधूसू—'(३. २. १८४) इतीत्रः ॥

टीका० — यागाय वह्निज्वलनार्थं मृगचर्ममयं व्यजनं धुवित्रम् । 'धू विधूनने' । 'अर्तिलूधूसूखनसहचर इत्रः' (३. २. १८४) इति करणे इत्रः । कुटादित्वाद् ङित्त्वेन गुणाभावादुवङि धुवित्रम् । केचित्तु आतिदेशिकङित्त्वस्यानित्यत्वाद् गुण एव, नोवङ् इति मन्यन्ते ॥

**पृषदाज्यं सदध्याज्ये**

१. 'ना', २. 'क्षा । वै', ३. 'मि' अ. पाठः.

क्षीर० — पृषद्भिर्दधिबिन्दुभिः सहितमाज्यम् ॥

टीका० — दधिसहित आज्ये पृषदाज्यम् । कर्मधारयसमासः ॥

**परमान्नं तु पायसम् ।**

क्षीर० — पयसि संस्कृतं पायसम् ॥

टीका० — पायसे परमान्नद्वयम् । पयसि संस्कृतं पायसम् । 'संस्कृतं मक्षाः' (४. २. १६) इत्यण् ॥

**हव्यकव्ये दैवपित्र्ये अन्ने**

क्षीर० — अग्निमुखेभ्यो देवेभ्योऽन्नं हव्यम् । पितृभ्यः कव्यम् । उभयमुभयत्रेति श्रुतिज्ञाः ॥

टीका० — यथाक्रमं दैवेऽन्ने हव्यं पैत्रे कव्यम् । 'हु दानादानयोः' । 'अचो यत्' (३. १. ९७) । 'वान्तो यि प्रत्यये' (६. १. ७९) इति वान्तादेशः । 'कु शब्दे' । पूर्ववत् कव्यम् ॥

**पात्रं स्रुवादिकम् ॥ २४ ॥**

क्षीर० — पिबत्यस्मात् पात्रम् । आदिशब्दात् स्रुगादि ॥

टीका० — स्रुवादिकं यज्ञपात्रम् । पातेस्त्रन्, पात्रम् । आदिना चमसादि ॥

**ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।**

क्षीर० — ध्रुवति ध्रुवा । उपभ्रियत उपभृत् । हूयतेऽनया जुहूः । एते स्रुचो विशेषाः स्त्रीलिङ्गाः । स्रवत्यस्मात् स्रुवः स्रुग्विशेषः पुल्लिङ्गः ॥

टीका० — स्रुचः स्त्रियाः स्त्रीलिङ्गाया ध्रुवादयश्चत्वारो भेदाः । क्वचित् स्रुचः स्त्रिय इति पाठः । अस्यार्थः, स्रुचो भेदाध्रुवादयः, ते च स्त्रियः स्त्रीलिङ्गाः ।

१. 'चो भेदाः स्त्री', २. 'न्त्य' क. ग. ङ. पाठः.

स्रुवस्तु विशेषविधिनैव पुमानुक्तः । ध्रुव उक्तः, ततष्टाप् । उपपूर्वाद् भृञः क्विप्, उपभृत् । 'हुवः श्लुवच्च' (उ० २. ६३) इति क्विप्, दीर्घत्वं श्लुवच्च । 'श्लौ' (६. १. १०) इति द्विर्वचनम्, 'कुहोः—' (७. ४. ६२) इति चुत्वादि, जुहूः । 'स्रु गतौ' । 'स्रुवः [1]कन्' (उ० २. ६४) इति कन् । उवङ्, स्रुवः । 'चिक् च' (उ० २. ६५) इति स्रुवश्चिक्प्रत्ययः इकारककारावनुबन्धौ । 'चोः कुः' (८. २. ३०) कुत्वम् । स्रुक् । स्रिविधातोः क्विप् । 'ज्वरत्वर—' (६. ४. २०) इत्यूठि स्रूरित्यपि भ्रूशब्दसमाना बोद्धव्या ॥

**उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥**

क्षीर०— उपामन्त्र्य क्रियते हन्यते स्मोपाकृतः ॥

टीका०—मन्त्रेण पवित्रीकृत्य शस्त्रहतमात्रे पशावुपाकृतः । 'कृञ् हिंसायाम्' । स्वादिः । क्तः । 'यद्युपाकृतः पशुः पलायेदि'ति जीवत्यपि ताडितमात्रेऽपि ॥

**परम्पराकं शमनं प्रोक्षणं तत्र यो वधः ।**

क्षीर०—पर[2]ं परमकति परम्पराकम् । शसनमिति तु युक्तः पाठः । 'शसु हिंसायाम्' । प्रोक्षणं लक्षणया वधः, प्रोक्ष्य हि यज्ञे पशुर्हन्यते ॥

टीका०—परम्पराकत्रयं यागार्थपशुहनने । शमेर्ल्युट् । शमनम् । 'उक्ष सेचने' । ल्युट् । प्रोक्षणम् ॥

**वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता हते ॥ २६ ॥**

क्षीर०—यज्ञ इति शेषः । 'मीङ् हिंसायाम्' । उपसम्पद्यत उपसम्पन्नः । प्रोक्ष्यतेऽम्भसेति प्रोक्षितः । प्रमीतादयोऽर्थवल्लिङ्गास्त्रयः शब्दा हते वर्तन्ते ॥

१. 'ति चिक्' ञ. पाठः. २. 'रस्पर' क. ग. घ. पाठः.

† 'कः' इति मुद्रितोणादिपाठः ।

टीका०—यागार्थं मारिते पश्वादौ प्रमीतत्रयम्। 'मीङ् हिंसायाम्'। क्तः। प्रमीतः। पदेः क्तः। उपसम्पन्नः॥

**सान्नाय्यं हविः**

क्षीर०—सन्नीयते। 'पाय्यसान्नाय्य—' (३. १. १२९) इति साधुः। हूयते हविः॥

टीका०—हविरित्यनेन दधिपयोरूपं हविर्ग्राह्यम्। तत्र सान्नाय्यम्। 'पाय्यसान्नाय्य—' (३. १. १२९) इत्यादिना संपूर्वान्नयतेर्ण्यदायादेशौ दीर्घत्वं च निपात्यते, ततः स्वार्थे(वा)ण्। हविरिति इसिप्रत्ययान्तं क्लीबे च॥

**अग्नौ तु हुतं त्रिषु वषट्कृतम्।**

क्षीर०—वषण्मन्त्रलिङ्गेन हुतं वषट्कृतम्। अर्थवाल्लिङ्गम्॥

टीका०—अग्नौ हुते द्रव्ये वषट्कृतम्॥

**दीक्षान्तोऽवभृथो यज्ञे**

क्षीर०—अवभ्रियते पूर्यतेऽनेनावभृथः॥

टीका०—दीक्षान्तद्वयं प्रधानयागसमापको न्यूनाधिकदोषनिरासाय (यत्?यः) क्रियते तत्र। 'दीक्षान्तावभृथौ समौ' इति रभसः। प्रधानयागो दीक्षा, तस्यान्तो दीक्षान्तः। 'अवे भृञः' (उ० २. ३) इति क्थन्। अवभृथः॥

**तत्कर्मार्हे तु यज्ञियम्॥ २७॥**

**त्रिषु**

क्षीर०—यज्ञकर्मार्हति यज्ञियम्। 'यज्ञर्त्विग्भ्यां घखञौ' (५. १. ७१)। 'तत्कर्मार्हती'त्युपसङ्ख्यानात्॥

टीका०—यज्ञकर्मार्हे वस्तुनि यज्ञियम्। 'यज्ञर्त्विग्भ्यां घखञौ' (५. १. ७१) इति घः। तच्छब्देन यज्ञः परामृश्यते। स्त्रियां यज्ञिया भूमिः॥

**अथ क्रतुकर्मेष्टं**

क्षीर० — इज्यते स्मेष्टं यागादि । यदाह —

"एकाग्निकर्म हवनं त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद् दानमिष्टं तदभिधीयते" ॥

टीका० — क्रतुकर्म यत् तदिष्टम् । यजेः क्तः । वच्यादिसम्प्रसारणम् ॥

**पूर्तं खातादिकर्मणि ।**

क्षीर० — पिपर्ति पूर्तम् । 'न ध्याख्यापॄमूर्छिमदाम्' (८. २. ५७) इति निष्ठानत्वाभावः । खातं वाप्यादि । यदाह—

"वापीकूपतटाकानि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तं मर्त्याः प्रचक्षते ॥"

टीका० — खातं पुष्करिणी । आदिना देवकुलादि । एतत् पूर्ताख्यम् । तदुक्तं—

"पुष्करिण्यः सभा वापी देवस्यायतनानि च ।
आरामश्च विशेषेण पूर्तं कर्म विनिर्दिशेत् ॥"

इति । 'पॄ पालनपूरणयोः' । क्तः । 'उदोष्ठ्यपूर्वस्य' (७. १. १०२) इत्युत्वम् । 'हलि च' (८. २. ७७) इति दीर्घः । 'न ध्याख्यापॄमूर्छिमदाम्' (८. २. ५७) इति निष्ठानत्वप्रतिषेधः ॥

**अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥**

क्षीर० — न म्रियते न नश्यत्यमृतम् । यज्ञशिष्टमदनम् । विशिष्टमदनं विघसः । भुक्तशिष्टम् । 'उपसर्गेऽदः' (३. ३. ५९) इत्यप । 'घञपोश्च' (२. ४. ३८) इति घस्लादेशः । यन्मनुः —

"विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
विघसो भुक्तशिष्टं स्याद् यज्ञशिष्टमथामृतम्" ॥

टीका०—यथाक्रमं यज्ञशेषे दधिघृतादावमृतं, देवतातिथ्यादीनां भुक्तशेषे विघसः । दन्त्यसः । अमृतमुक्तम् । विपूर्वाददेः 'उपसर्गेऽदः' (३. ३. ५९) इत्यप् । 'घञपोश्च' (२. ४. ३८) इति घस्लादेशः ॥

त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रदेशनं निर्वपणमपवर्जनमंहतिः ।

क्षीर०—स्वत उपसर्गवशाच्चैते दानार्थाः । स्पर्शनं तूपचाराद् दानं, पुच्छादौ गवादिकं स्पृष्ट्वा हि दीयते । 'ओहाक् त्यागे' । 'श्रण दाने' । अंहतेऽहतिः । उपसर्गाद्यपि[1] ॥

टीका०—त्यागत्रयोदशकं दाने । त्यजतेर्घञ् । त्यागः । विपूर्वाज्जहातेः स्वार्थे हेतुमण्णिच् । 'अर्तिह्री—' (७. ३. ३६) इत्यादिना पुगागमः । 'नपुंसके भावे क्तः' (३. ३. ११४) । 'निष्ठायां सेटि' (६. ४. ५२) इति णिलोपः । विहापितम् । दानादयस्तु 'डुदाञ् दाने' । 'सृज विसर्गे' । 'श्रण दाने' । तालव्यादिः । चुरादिः । 'तॄ प्लवनतरणयोः' । 'स्पृश संस्पर्शे' । 'पद गतौ' । णिच् । 'दिश अतिसर्जने' । 'डुवप् बीजतन्तुसन्ताने' । 'वृजी वर्जने' । एभ्यो ल्युट् । हन्ति दुर्निमित्तमंहतिः । 'हन्तेरंह च' (उ० ४. ६३) इत्यतिरंहादेशश्च ॥

मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् ॥ ३० ॥

क्षीर०—तदहे प्रेतदिने मृतमुद्दिश्य दानं पिण्डोदकादि । ऊर्ध्वं देहाद् भवमौर्ध्वदैहिकम् । 'ऊर्ध्वं दमाद् देहाच्च' (वा० ४. ३. ६०) इति ठञ् । अनुशतिकादित्वादुभयपदवृद्धिमाहुः[2] ॥

टीका०—मृतार्थं यदहर्दानं मृताहःप्रभृति पिण्डादिदानं, तदौर्ध्वदैहिकम् । ऊर्ध्वदेहे भवमित्यर्थे 'ऊर्ध्वदेहाच्चेति वक्तव्यम्' (वा० ४. ३. ६०) इति ठञ् । वकारवत्त्वादिकं नाख्योक्तावुक्तम् (?) ॥

१. 'दौ द्विपद' क. ग. घ. ङ. पाठः. २. 'ञ् । ना' ङ. छ. पाठः.

**पितृदानं निवापः स्यात्**

**क्षीर०**—पितृभ्यो दानम्। न्युप्यते निवापः॥

**टीका०**—पितॄनुद्दिश्य जलाञ्जलि[1]दानं निवापः। 'डुवप् बीजतन्तु-सन्ताने'। घञ्। पितृग्रहणं मृतोपलक्षणार्थम्॥

**श्राद्धं तत्कर्म शास्त्रतः।**

**क्षीर०**—श्रद्धास्त्यस्य श्राद्धं पितृकर्म। 'प्रज्ञाश्रद्धा—' (५. २. १०१) इति णः॥

**टीका०**—शास्त्रतः कालपात्रादिनियमेन पितृकर्म ब्राह्मणभोजनादि श्राद्धम्। श्रद्धा प्रयोजनमस्येति 'चूडादिभ्योऽण् वक्तव्यः' (वा० ५. १. ११०) इत्यण्॥

**अन्वाहार्यं मासिके**

**क्षीर०**—अनु आह्रियते अन्वाहार्यम् अमावास्याश्राद्धम्॥

**टीका०**—अन्वाहार्यद्वयं मासिकश्राद्धे। एतच्चान्द्रमानेन प्रतिमासं क्रियमाणत्वात् पार्वणश्राद्धमुच्यते। अत्र च पिण्डान्वाहार्यकरणशब्दोऽपि वर्तते तथा च मनुः—

"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्"॥
(अध्या० ३. श्लो० १२२)

अन्वाङ्पूर्वात् हृञः 'ऋहलोर्ण्यत्' (३. १. १२४)। 'कालाट्ठञ्' (४. ३. ११) मासिकः॥

**अंशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम्॥ ३१॥**

**क्षीर०**—कुं तपति सूर्योऽत्रेति कुतपो मध्याह्नापवृत्तः श्राद्धकालः यत् स्मृतिः—

१. 'ल्यादिदा', २. 'त् पर्वमा' ञ. पाठः, ३. 'त्तिः श्रा' क. ग. घ. ङ. पाठः.

"दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो यत्र पितृभ्यो दत्तमक्षयम्" ॥

टीका० — पञ्चदशांशीकृते दिने[1] मध्यवर्तिनि घटिकात्मके काले कुतपः । स्मृतौ —

"रौद्रः श्वेतश्च मैत्रश्च तथा शारभटः स्मृतः ।
सावित्रो विजयश्चैव गान्धर्वः कुतपस्तथा ॥
रौहिणेयो विरिञ्चश्च सोमोऽथ[3] निर्ऋतिस्तथा ।
माहेन्द्रो वरुणश्चैव भटः पञ्चदश स्मृताः" ॥

कुं महीं कार्त्स्न्येन तपतीति कुतपः ॥

**पर्येषणा परीष्टिश्च**

क्षीर० — श्राद्धे द्विजशुश्रूषा । 'इषेरनिच्छार्थस्य युज् वक्तव्यः' (वा० ३. ३. १०७) । 'परेर्वा' (वा० ३. ३. १०७) ॥

**अन्वेषणा तु[4] गवेषणा ।**

क्षीर० — 'गवेष मार्गणे' ॥

टीका० — पर्येषणाचतुष्कमनुसरणे । 'इषु गतौ' । 'परेर्वा' (वा० ३. ३. १९७) इति युच् । पर्येषणा । पक्षे क्तिन् परीष्टिः । 'इषेरनिच्छार्थस्य युज् वक्तव्यः' (वा० ३. ३. १०७) इत्यस्मादेव युच् । अन्वेषणा । 'गवेष मार्गणे' । णिच् । 'ण्यासश्रन्थो युच् (३. ३. १०७) । गवेषणा ॥

**सनिस्त्वध्येषणा**

क्षीर० — गुर्वादेः कचिदर्थप्रार्थनया नियोजनं सनिः । 'षणु दाने' ॥

टीका० — गुर्वादेराराध्यस्य सत्कारपूर्वं कचिदर्थे नियोजने सनि

---

१. 'न' ग. घ. च. पाठः. २. 'पः स्मृतः ।', ३. 'य' अ. पाठः. ४. 'च ख. पाठः.

द्वयम्। 'षणु दाने'। 'धात्वादेः षः सः' (६. १. ६४)। *'सनिकषि—' (उ० ४. १४१) इत्यादिना इः। अन्वेषणावदध्येषणा ॥

**याच्ञाभिषस्तिर्याचनार्थना ॥ ३२ ॥**

क्षीर०— याचनं याच्ञा। 'यजयाच—' (३. ३. ९०) इति नङ्। 'ण्यासश्रन्थ—' (३. ३. १०७) इति बाहुलकाद् युच्। अभिषसनमभिषस्तिः। 'षस स्वप्ने' ॥

टीका०— प्रार्थनामात्रे याच्ञाचतुष्कम्। 'यजयाच—' (३. ३. ९०) इत्यादिना नङ्। याच्ञा। 'शंसु स्तुतौ याचने च'। बाहुलकः क्तिन्। अभिशस्तिः। 'टुयाचृ याच्ञायाम्'। ल्युट्। याचना। 'अर्थ उपयाच्ञायाम्'। चुरादिः। 'ण्यासश्रन्थो युच्' (३. ३. १०७)। अर्थना ॥

**षट् तु त्रिषु**

क्षीर०— आगन्त्वन्ताः षट् त्रिलिङ्गाः स्युरिति ॥

टीका०— आगन्तुपर्यन्ताः परे त्रिषु ॥

**अर्घ्यमर्घार्थे**

क्षीर०— वारिणीत्येव। 'पादार्घाभ्यां च' (५. ४. २५) इति यत् ॥

टीका०— अर्घः पूजाविधिः। तदर्थे पुष्पदूर्वादावर्घ्यम्। 'पादार्घाभ्यां च' (५. ४. २५) इति यत् ॥

**पाद्यं पादाय वारिणि।**

टीका०— अभ्यागतादेः पादप्रक्षालनाय दीयमानजले पाद्यम्। अर्घ्यवद् यत् ॥

**क्रमादातिथ्यातिथेये अवतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥**

'खनिकषि—' इति मुद्रितोणादिपाठः.

क्षीर० — अतिथये इदमातिथ्यम्। $'अतिथेर्ण्यः' (५. ४. २६)। अतिथौ साध्वातिथेयम्। 'पथ्यतिथि—' (४. ४. १०४) इति ढञ्। कात्यस्त्वाह—

"आवेशिकं विपश्चिद्भिरातिथ्यमभिधीयते"॥

टीका० — अतिथ्यर्थे भक्तादौ अतिथौ साधुनि कर्मादौ यथाक्रममेकैकमातिथ्यद्वयम्। $'अतिथेर्ण्यः' (५. ४. २६) इति ण्यः। आतिथ्यम्। 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (४. ४. १०४)। आतिथेयम्। स्त्रियामातिथेयी॥

**स्युरावेशिक आगन्तुरतिथिर्ना गृहागते।**

क्षीर० — अवेशे अप्रतिवेशे भव आवेशिकः।

"नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा"

इति स्मृतेः। नास्ति तिथिरस्यातिथिः[1]। 'अत सातत्यगमने'। अतति सततं गच्छति वा। यत् स्मृतिः—

"अध्वनीनोऽतिथिः प्राघूर्णिकः प्राहुणिकः[2] स्मृतः।
आगते स्वगृहं तस्मिन्नभ्युत्थानं तु गौरवम्"॥

टीका० — गृहादागते मानुषविशेषे आवेशिकत्रयम्। आवेशाद् गृहादागत इति 'तत आगत' (४. ३. ७४) इति ढञ्। सेतुवदागन्तुः।

"अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते"

इति मनुः। 'अत सातत्यगमने'। 'ऋतन्यञ्जि—'(उ० ४. २) इत्यादिना इथिन्। अतिथिः। 'अतिथिर्द्वयोरि'ति त्रिकाण्डशेषः। स्त्रियामतिथी॥

**पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः॥ ३४॥**

[क्षी]र० — 'नमोवरिवश्चित्रङः क्यच्' (३. १. १९) इति नमसः

१ 'थिः। अतति', २. 'कोऽपि च।' ख. पाठः.

$ 'अतिथेर्ञ्यः' इति मुद्रिताष्टाध्यायीपाठः।

पूजायां क्यच्। 'अ प्रत्ययात्' (३. ३. १०२) । अपचयनमपचितिः । 'अपचितश्च' (७. २. ३०) इत्यत्र 'क्तिनि नित्यं चिभावोऽनिट्त्वं (च) वक्तव्यम्' इति । सपरे साधुः सपर्या, सह पर्यायेण क्रमेण वर्तते वा ॥

टीका० — पूजाषट्कं पूजायाम् । पूजयतेः 'चिन्तिपूजि —' (३. ३. १०५) इत्यादिना अङ् । पूजा । नमःशब्दाद् 'नमोवरिवश्चित्रङः क्यच्' (३. १. १९), 'नमसः पूजायाम्' (वा० ३. १. १९) इति वचनात् । 'अ प्रत्ययात्' (३. ३. १०२) इत्यकारप्रत्ययः । नमस्या । 'चायृ पूजानिशामनयोः' । 'क्तिनि नित्यं चिभावो वक्तव्यः' (वा० ७. २. ३०) । अपचितिः । सपरशब्दस्य कण्ड्वादिपाठाद् यक् । सपर्या दन्त्यादिः । 'अर्च पूजायाम्' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । अर्चा । 'अर्ह पूजायाम्' । युच् । अर्हणा ॥

## वरिवस्या तु शुश्रूषा परिचर्याप्युपासनम् ।

क्षीर० — 'वरिवसः परिचर्यायां' (वा० ३. १. १९) । क्यच् । शुश्रूषा गुरुसेवा लक्षणया वृत्त्या । परिचरणं परिचर्या । 'परिचर्यापरिसर्यामृगयाटाट्यादीनामुपसङ्ख्यानम्' (वा० ३. ३. १०१) । 'परिचर्या तु पर्येष्टिरि'ति भागुरिः । परिव्रज्या तपस्या रुद्राङ्कुशो विशाखिका ॥

टीका० — वरिवस्याचतुष्कमुपासने । वरिवश्शब्दादव्ययाद् [४]नमस्यावत् क्यजादिः । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्' (३. ३. १०१) इत्यतः शप्रत्ययान्ता(त्?) परिचर्या निपात्यते । शृणोतेः सनन्तादप्रत्यये शुश्रूषा । आस्तेर्ल्युट् । उपासनम् ॥

## व्रज्याटाट्या पर्यटनं

१. 'वा', २. 'त्र चायेः क्ति', ३. 'या । प' ख. पाठः. ४. 'स' ख. ङ. छ. ट. पाठः. ५. 'तिता । शृ' ञ. पाठः.

क्षीर० — व्रजनं व्रज्या। 'व्रजयजोर्भावे क्यप्'। (३. ३. ९८)। कुटिलमटनमटाट्या। सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसङ्ख्यानाद् यङन्तादप्रत्ययः। यन्मनुः —

"तौर्यत्रिकमटाट्या च कामजो दशको गुणः"।

स्त्रीत्वं च नीवारवेन्येतिवत्(?)। एवं 'गदमदचर —' (३. १. १००) इति चर्या॥

टीका० — भिक्षाद्यर्थं सदाटने व्रज्यात्रयम्। 'व्रजयजोर्भावे क्यप्' (३. ३. ९८)। व्रज्या। परिचर्यावदटाट्या निपातिता। 'अटाट्या पर्यटनं भ्रमः' इति रत्नमाला॥

चर्या त्वीर्यापथस्थितिः॥ ३५॥

क्षीर० — ईर्यापथे ध्यानमौनादिके सुबोधमार्गाख्ये भिक्षुवृत्ते स्थितिरनुष्ठानम्। 'चर्या त्वीर्या विदुर्बुधाः' इति मुनिः॥

टीका० — यतीनां गतिस्थितिनिषद्याशयनीयानीर्यासंज्ञानि। तस्मिन्नीर्यावर्त्मनि स्थितिश्चर्या। 'गदमदचरयमश्चानुपसर्गे' (३. १. १००) इति भावे यत्॥

उपस्पर्शस्त्वाचमनम्

क्षीर० — उपस्पृश्यन्तेऽद्भिः खान्यत्रोपस्पर्शः। आचम्यतेऽम्भोऽत्राचमनम्॥

टीका० — उपस्पर्शद्वयमाचमने। 'चमु अदने'। ल्युट्। आचमनम्॥

अथ मौनमभाषणम्।

१. 'कं वृथाटाट्या का' ग. घ. ङ. पाठः. २. 'क' क. ग. घ. ङ. पाठः. ३. 'धे' ख. पाठः. ४. 'सम्यग् बं' ग. घ. ङ. पाठः.

क्षीर०—मुनेर्भावः कर्म वा मौनम्। 'इगन्ताच्च लघुपूर्वात्' (५. १. १३१)। अण्॥*

टीका०—मौनद्वयं मौने। मुनेः कर्म मौनम्। 'इगन्ताच्च लघुपूर्वात्' (५. १. १३१) इत्यण्॥

**आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः॥ ३६॥**
**पर्यायश्च**

क्षीर०—पूर्वानुक्रमेणानुपूर्वं, तस्य भाव आनुपूर्वी। ष्यञः षित्त्वाद् वा स्त्रीत्वम्। आवर्तनमावृत्। सम्पदादिक्विन्तः। परिपाटनं परिपाटिः। इञ्। आवृत्परिपाट्योर्द्वन्द्वात् स्त्रीत्वम्। पर्ययणं पर्यायः। 'परावनुपात्यय इणः' (३. ३. ३८) इति घञ्॥

टीका०—आनुपूर्वीपञ्चकमनुक्रमे। अनुपूर्वस्य भाव आनुपूर्वी। ष्यञ्। षित्त्वाद् ङीप्। 'हलस्तद्धितस्य' (६. ४. १५०) इति यलोपः। पक्षेऽभाषण-साहचर्यादानुपूर्व्यं योपधम्। नीवृदिवावृद् दर्घादिः। 'अट पट गतौ'। घञ्। ङीषि परिपाटी। 'परावनुपात्यय इणः' (३. ३. ३८) इति घञ्। पर्यायः॥

**अतिपातस्तु विपर्यय उपात्ययः।**

क्षीर०—विपर्ययः क्रमोल्लङ्घनम्। अतिक्रमश्च॥

टीका०—अतिपातत्रयं व्यतिक्रमे। भावे घञ्। अतिपातः। एतेरेरचि पर्ययोपात्ययौ॥

१. 'यामात्' ख. घ. पाठः. २. 'मणमनु' ग. घ. ङ. पाठः. ३. 'दि। प' ख. पाठः. ४. 'स्यात् प', ५. 'यः। क' ख. पाठः.

* इतः परं—

"प्राचेतसस्त्वादिकविः स्यान्मैत्रावरुणिश्च सः।
वाल्मीकिश्चाथ गाधेयो विश्वामित्रश्च कौशिकः।
व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः॥"

इति व्याख्यासूक्ष्मर्धत्रयमधिकं दृश्यते।

नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥ ३७ ॥

क्षीर० — व्रज्यर्तेऽन्नादि अत्रेति व्रतम् । उपवासादि कृच्छ्रचान्द्रायणादि पुण्यकपर्यायम् । 'संज्ञायां कन्' (५. ३. ७५) ॥

टीका० — शास्त्रविहिते नियमे व्रतम् । तच्च व्रतमुपवासादिलक्षणं पुण्यकमुच्यते । आदिशब्दाद(क्षै?क्षा)रादि ॥

औपवस्त्रं तूपवासः

क्षीर० — उपवस्ता प्राप्तोऽस्यौपवस्त्रम् । 'उपवस्त्रादिभ्यः' इत्यण् । उपवस्तस्येदमौपवस्तमित्येके । 'वसु स्तम्भे' । क्तः । उपवस्तुरिदमन्नाद्यमिति (वा) । यत् स्मृतिः —

"माषान् मधु मसूरांश्च वर्जयेदौपवस्त्रके" ॥

टीका० — उपवस्तद्वयमुपवासे । 'वसु स्तम्भे' । क्तः । उपवस्तम् ॥

विवेकः पृथगात्मता ।

क्षीर० — प्रकृतिपुरुषपृथग्ज्ञानं विवेकः । भावानां पृथक्स्वरूपत्वमित्येके । 'विचिर् पृथग्भावे' ॥

टीका० — प्रकृतिपुरुषयोर्विभागेन ज्ञानं विवेकः ॥

स्याद् ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः

क्षीर० — ब्रह्मणस्तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' (५. ४. ७८) इत्यच् ॥

टीका० — वृत्तस्य वेदाध्ययनस्य या सम्पत्तिर्गुणोत्कर्षस्तद् ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' (५. ४. ७८) इत्यच् समासान्तः ॥

अथाञ्जलिः ॥ ३८ ॥

१. 'य' क. पाठः. २. 'व्यप' ख. पाठः. ३. 'का' ञ. पाठः. ४. 'पंप्रमावस्त' ञ. ञ. पाठः.

**पाठे ब्रह्माञ्जलिः**

क्षीर० — ब्रह्मणे वेदायाञ्जलिः ।

"संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः" ॥

टीका० — सामवेदपाठे योऽञ्जलिः स्वरविभागार्थं क्रियते, स ब्रह्माञ्जलिः ॥

**पाठे विप्रुषो ब्रह्मबिन्दवः ।**

क्षीर० — वेदपाठे आस्यनिर्गता जलकणा ब्रह्मबिन्दवः ॥

टीका० — वेदपाठे निस्सृताः श्लेष्मबिन्दवो ब्रह्मबिन्दव इत्युच्यन्ते ॥

**ध्यानयोगासने ब्रह्मासनं**

क्षीर० — ध्यानयोगयोरास्यतेऽनेनासनम् । ध्यानमेकाग्रतया चिन्तनम्[1] । यथाह —

"तत्र प्रत्ययैकतानता ध्यानं, योगश्चित्तवृत्तिनिरोधः" ॥

टीका० — ध्यानयोगयोरासने ऊर्ध्वपादस्वस्तिकपद्मासनादौ ब्रह्मासनम् । निराकारज्ञानभावनं ध्यानं, साकारज्ञानभावनं योगः ॥

**कल्पे विधिक्रमौ ॥ ३० ॥**

क्षीर० — कल्प्यते, विधीयते, क्रम्यते चानेन विनियोगशास्त्रेणेति ॥

टीका० — वादके विधाने कल्पत्रयम् । त्रयमपि प्रागेव साधितम् ॥

**मुख्यः स्यात् प्रथमः कल्पः**

क्षीर० — आद्यो विधिरित्यर्थः ॥

१. 'प्रचि' ग. पाठः.

टीका० — शास्त्रविहितः प्रथमः कल्पो मुख्यः, यो व्रीह्यादियागः। मुखमिव मुख्यः। 'शाखादिभ्यो (यत्?यः) (५. ३. १०३)॥

अनुकल्पस्तु ततोऽधमः।

क्षीर० — मुख्याभावे प्रतिनिधिसंज्ञः॥

टीका० — तदभावे किञ्चिदधमे नीवारादौ यागेऽनुकल्पः॥

**संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः॥ ४०॥**

क्षीर० — उपाक्रियतेऽनेनेत्युपाकरणं, वेदपाठारम्भे विशिष्टो विधिः। 'रोहिण्यां छन्दांस्युपाकुर्याद्' इति हि श्रुतिः॥

टीका० — संस्कारो वटुकरणं, तत्पूर्वकं श्रुतेर्वेदस्य ग्रहणमुपाकरणम्॥

**समे तु पादग्रहणमभिवादनमित्युभे।**

क्षीर० —

"वामेन वामः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः"

इति पादोपसङ्ग्रहणम्[२]। अभिवादयते आशिषं कारयतेऽनेनाभिवादनम्[३]। अत एवाभिवाद्य उपसङ्ग्राह्यः॥

टीका० — पादग्रहणद्वयमभिवादने॥

**भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी॥ ४१॥**
**तपस्वी तापसः पारिकाङ्क्षी**

क्षीर० — भिक्षते भिक्षुः। 'सनाशंसभिक्ष उः' (३. २. १६८) परिवर्ज्यते सर्वं सन्न्यस्य व्रजति परिव्राट्। 'परौ व्रजेः षः पदान्ते' (उ० २. ६२) इति क्विप् षत्वं च। कर्मन्देन पाराशर्येण च प्रोक्तं भिक्षुसूत्रमधीते। 'कर्मन्दकृशाश्वादिनिः'। (४. ३. १११) 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४. ३. ११०)। णिनिः। मॉं कृषत कर्माणि

१. 'र्यां' ख. पाठः. २. 'म्। अभिवादनम अभि', ३. 'न। अत' ख. पाठः, ४. 'साकृतिक' ख. पाठः.

मुक्तिर्वः[1] श्रेयसीति मस्करी । 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६. १. १५४) इति साधुः । तपोऽस्यास्ति । 'तपस्सहस्राभ्यां विनीनी' (५. २. १०२) । 'अण् च' (५. २. १०३) । 'अन्येषामपि—' (६. ३. १३७) इति दीर्घात् पारिकाङ्क्षी ॥

टीका० — भिक्षुपञ्चकं चतुर्थाश्रमिणि भिक्षौ । 'सनाशंसभिक्ष उः' (३. २. १६८) इत्युः । 'परौ व्रजेः षश्च पदान्ते' (उ० २. ६२) इति क्विब् दीर्घश्च धातोः षश्चान्तादेशः पदान्ते । परिव्राड् जान्तः । कर्मन्दर्षिप्रोक्तसूत्रमधीत इति कर्मन्दी । 'कर्मन्दकृशाश्वादिनिः' (४. ३. १११) इतीनिः । ततः 'तदधीते—' (४. २. ५९) इत्यण् । तस्य 'प्रोक्ताल्लुक्' (४.२.६४) । पाराशर्यप्रोक्तसूत्रमधीते पाराशरी, तालव्यवान् । 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४. ३. ११०) इति णिनिः । पूर्ववदणलुकौ । 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६. १. १५४) इति निपातनान्मस्करी । तपस्वित्रयं तपोधने । 'तपस्सहस्राभ्यां विनीनी' (५. २. १०२) इति विनिः । तपस्वी । मत्वर्थे 'अण् च' (५. २. १०३) इत्यण् । तापसः । परं ब्रह्मज्ञानं काङ्क्षत इति पारिकाङ्क्षी । आवश्यके णिनिः । पृषोदरादित्वात् पूर्वपदाकारस्येत्वं पकाराकारस्य च दीर्घत्वम् ॥

वाचंयमो मुनिः ।

क्षीर० — वाचं यच्छति मौनेनास्ते वाचंयमः । 'वाचि यमो व्रते' (३. २. ४०) इति खच् । मन्यते मुनिः । भिक्षुपर्यायावेतावित्येके ॥

टीका० — वाचंयमद्वयं मौनव्रतिनि । 'वाचि यमो व्रते' (३. २. ४०) इति खच् । 'मनेरुच्च' (उ० ४. १२४) इति किः । मुनिः ॥

तपःक्लेशसहो दान्तः

क्षीर० — तपःक्लेशादनुद्विग्नः[2] । 'वा दान्तशान्त—' (७. २. २७) इति साधुः ॥

१. 'वां', २. 'वियोगः । वा' ख. पाठः,

टीका० — सत्यपि तपःक्लेशेऽनुद्विग्नो दान्तः। 'वा दान्तशान्त —' (७. २. २७) इत्यादिना इड्विकल्पः॥

**वर्णिनो ब्रह्मचारिणः॥ ४२॥**

क्षीर० — वर्णोऽस्यास्ति वर्णी। 'वर्णाद् ब्रह्मचारिणि' (५. २. १३४) इतीनिः। ब्रह्म चरति तच्छीलो ब्रह्मचारी॥

टीका० — वर्णिद्वयं ब्रह्मचारिणि। 'वर्णाद् ब्रह्मचारिणि' (५. २. १३४) इतीनिः। वर्णी॥

**ऋषयः सत्यवचसः**

क्षीर० — दर्शनादृषिरविसंवादिवाक्॥

टीका० — ऋषिद्वयमृषौ। ज्ञानस्य पारगमनादृषिः। 'ऋषी गतौ'। 'इगुपधात् किः' (उ० ४. १२१) इति किः। स्त्रियामृषी च॥

**स्नातकस्त्वाप्लुतो व्रती।**

क्षीर० — 'स्नात वेदसमाप्तौ' (ग० ५. ४. २९) इति यावादित्वात् कन्। यो व्रतवान् तीर्थे[1]ष्वाप्लवते स्नातीत्याप्लुतः सः, स्नातकः। यत् स्मृतिः —

"गुरवे तु वरं दत्त्वा स्नायाद् वा तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वाप्युभयमेव वा"॥
(याज्ञ० अध्या० १. श्लो० ५१)

टीका० — समाप्तवेदाध्ययनानन्तरं यः स्नानशील आश्रमान्तरं गच्छति तत्र स्नातकद्वयं। 'पुण्यस्नातवेदसमाप्तौ' (ग० ५. ४. २९) इति यावादिगणपाठात् कन्॥

**ये निर्जितेन्द्रियग्रामा यति[2]नो यतयश्च ते॥ ४३॥**

क्षीर० — यतं[3] यमनमस्यास्ति यती[4]। यच्छत्युपरमति यतिः॥

---

१. 'तीर्त्वाप्यु' क. ख. पाठः. २. 'मि', ३. 'मः', ४. 'मी।' ग. ङ. पाठः.

टीका० — निर्जितेन्द्रियगणे वसिष्ठादौ यतिद्वयम् । यतम् इ-न्द्रियसंयमोऽस्यास्तीति यती, इन्नन्तः । 'यती प्रयत्ने' । 'इन्' (उ० ४. ११९) इति इन् । यातः ॥

**यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।**
**स्थाण्डिलश्च**

क्षीर० — आद्यस्य 'व्रते' (३. २. ८०) इति णिनिः । परस्य 'स्थण्डि-लाच्छयितरि व्रते' (४. २. १५) इत्यण् ॥

टीका० — व्रतकाम्यया स्थण्डिले शयितरि स्थण्डिलशायिद्वयम् । 'व्रते' (३. २. ८०) इति णिनिः । स्थण्डिलशायी । 'स्थण्डिलाच्छयितरि व्रते' (४. २. १५) इत्यणि स्थाण्डिलः ॥

**अथ विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥**

क्षीर० — विगते रजस्तमसी येभ्यः, सात्त्विका इत्यर्थः । द्वय-मतिगच्छन्ति अतिक्रामन्ति द्वयातिगाः ॥

टीका० — रजस्तमःशून्याः केवलसत्त्वस्था द्वयातिगा उच्यन्ते । 'अन्ये-भ्योऽपि —' (वा० ३. २. १०१) इति डः ॥

**पवित्रः प्रयतः पूतः**

क्षीर० — पूयतेऽनेन पवित्रः । प्रयतते प्रयच्छत्युपरमति वा प्रयतः ।

**शुचिः पुण्यः पावनश्च ॥**

टीका० — शुचिपुरुषादौ पवित्रत्रयम् । 'अशित्रादिभ्य इत्रोत्रौ' (उ० ४. १७४) इति इत्रः । पवित्रः । 'पूङश्च' (७. २. ३१) इतीड्विकल्पेन पवित इत्यपि ॥

**पाषण्डाः सर्वलिङ्गिनः ।**

क्षीर० — पाषाणं[1] नन्दन्ति पाषण्डाः । वेदबाह्यव्रताः । सर्वलि-

---

१. 'नणति पा' ग, ङ. पाठः.

ङ्गिनः क्षपणकाद्याः, सर्वाणि लिङ्गानि सन्त्येषाम् । भग्नव्रता इत्येके । आहुश्च —

"नानाव्रतधरा नानावेषाः पाषण्डिनो मताः" ॥

टीका० — [1]सद्व्यवहारबाह्ये कापालिकक्षपणकादौ पाषण्डद्वयम् । पाषण्डो मध्यन्यषः । सर्वेषामाश्रमाणां लिङ्गं भजन्त इति सर्वलिङ्गिनः ॥

**पालाशो ६८७ आषाढो व्रते**

क्षीर० — आषाढासु जात आषाढः । 'विशाखाषाढादण् मन्थदण्डयोः' (५. १. ११०)। यदाहुः—'आषाढो व्रतिनां दण्डः' ॥

टीका०— व्रतिनां पलाशकृतो दण्ड आषाढः । 'विशाखाषाढादण् मन्थदण्डयोः' (५. १. ११०) इत्यण् ॥

**राम्भस्तु वैणवः ॥ ४५ ॥**

क्षीर० — व्रते द ड इत्येव । रम्भा वेणुपर्यायः ॥

टीका० — वैणवे दण्डे राम्भः । रम्भशब्देन वंशो बोध्यते । ततोऽण् ॥

**अस्त्री कमण्डलुः कुण्डी**

क्षीर० — कं जलमण्डे मध्ये लाति कमण्डलुः । कुण्डाद् 'जानपदकुण्ड—' (४. १. ४२) इत्यमत्रे ङीप् ॥

टीका० — मृण्मयादिजलाधारे कमण्डलुद्वयम् । कुण्डेरच् । कुण्डी । गौरादिः ॥

**व्रतिनामासनं बृसी ।**

क्षीर० — वन्तोऽस्यां सीदन्ति बृसी ॥

टीका० — व्रतिनां सलाङ्गूल आसने बृसी । 'गण्डूषा मञ्जूषा

1. 'यदा व्य' अ., 'सद्व्यव' ब. ग. ट. पाठः.

वृषी'ति मूर्धन्ये लिङ्गकारिका । 'वसा तसी बृसी मांसी'ति दन्त्यान्ते चन्द्रगोमी ॥

**अजिनं चर्म कृत्तिः स्त्री**

क्षीर० — अज्यते क्षिप्यतेऽजिनम् । चरति चर्म । कृत्यते कृत्तिः ॥

टीका० — अजिनत्रयं चर्मणि । 'अज गतिक्षेपणयोः' । 'अजेरज च' (उ० २. ५०) इतीनच् । वीभावबाधनार्थमजादेशः । चरतेर्मनिन् । चर्म, नान्तम् । 'कृती छेदने' । क्तिन् । कृत्तिः ॥

**भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥**

क्षीर० — 'भिक्षादिभ्योऽण्' (४. २. ३८) ॥

टीका० — भिक्षासमूहे भैक्षम् । 'भिक्षादिभ्योऽण्' (४. २. ३८) ॥

**स्वाध्यायः स्याज्जपः**

क्षीर० — स्वस्य वेदस्याध्ययनं स्वाध्यायः । 'इङश्च' (३. ३. २१) इति घञ् । जपनं जपः । 'व्यधजपोरनुपसर्गे' (३. ३. ६१) इत्यप् ॥

टीका० — आवृत्त्या वेदाध्ययने स्वाध्यायद्वयम् । सुआङ्पूर्वाद ध्यायतेर्घञ् । स्वाध्यायः । 'व्यधजपोरनुपसर्गे' (३. ३. ६१) इत्यप् । जपः । बाहुलकाद् घञि जाप इत्यपि रक्षितः ॥

**सुत्याभिषवः सवनं च सा ।**

क्षीर० — सोमं सुन्वन्त्यद्भिः परिवासयन्त्यस्यां सुत्या । 'संज्ञायां समज —' इति क्यप् । अभिषवणमभिषवः । 'उपसर्गात् सुनोति — (८. ३. ६५) इति षत्वम् ॥

[illegible] — [illegible]त्रयं [illegible] सोमलतानिर्दलने च ।

मज—' (३. ३. ९९) इत्यादिना क्यप् । सुत्या । कद्रोरपि उपसर्गादिना षत्वे अभिषवो मूर्धन्यषः ॥

**सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥**

क्षीर० — अघं मृष्यते शोध्यतेऽनेनाघमर्षणम् अब्दैवत्यो वा मन्त्रस्तज्जपो वा । त्रिरात्रोपवासादिस्तूपचारात् ॥

टीका० — सर्वपापापनोदि यज्जपनीयं, तदघमर्षणम् । अघमर्षणो मन्त्रः, अघमर्षणी ऋक् ॥

**दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ।**

क्षीर० — अमावास्या दर्शः, दृश्यते चन्द्रोऽत्रेति । यागस्तूपचारात् । पूर्णिमायां पौर्णमासः, पूर्णो माश्चन्द्रस्तत्र भवः ॥

टीका० — अमावास्यायागो दर्शाख्यः । पौर्णमासीयागः पौर्णमासाख्यः । पृथगिति भिन्नौ न पर्यायौ ॥

**शरीरसाधनापेक्षं नित्यं यत् कर्म तद् यमः ॥ ४८ ॥**

क्षीर० — शरीरमात्रेणैव यत् क्रियते, तद् यम्यतेऽनेन चित्तं यमः । 'यमः समुपनिविषु च' (३. ३. ६३) इत्यप् । आह च —

"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" (पात०सू० २. ३०)॥

टीका० — शरीरमात्रसाध्यं यद्, न बाह्यसाध्यं नित्यं यावज्जीवम् अहिंसासत्यादि तद् यमः ॥

**नियमस्तु स यत् कर्मानित्यमागन्तुसाधनम् ।**

क्षीर० — आगन्तु बाह्यं मृज्जलादि साधनं यत्र, तदेव कृत्रिमं

कर्म नियमः । यदाह—

"शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः" (पात० सू० २. ३२) ॥

"शैव और्ध्वस्रोतसिकः सिद्धान्ती शौचमार्गिकः ।
पञ्चार्थिकः पाशुपतो लाकुलोऽथ महाव्रती ॥
कपाली सोमसिद्धान्ती तान्त्रिकः स्याद् विशेषदृक् ।
यामलो द्वयमार्गी स्यात् त्रिकभेदी षडर्धिकः ॥
पूर्वाम्नायी महामार्गी भैरवी दक्षिणागमः ।
शाक्तो वामस्रोतसिकः कौल आर्न्वयिको मतः ॥
एकान्वयः सात्त्वतश्च वैष्णवः पाञ्चरात्रिकः ।
रक्ताम्बरो भदन्तश्च शाक्यः श्रमणवन्दको ॥
भिक्षुः श्वेतः श्वेतपटः क्षपणर्षिर्दिगम्बरः ।
नग्नाटः श्रावकाभ्रीकौ निर्ग्रन्थो जीवजीवको ॥
क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिपु ।
कक्ष्यापुटीच कौपीनं शाटी वस्त्रीति लक्ष्यतः" ॥

टीका०—आगन्तुकदेवोत्थापनादिनिमित्तमुपवासादिर्नियमः ॥

**उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४० ॥**

क्षीर०—उपवीयते आव्रियते स्मोपवीतम् । दक्षिणपाणौ प्रोद्धृते यदुपवीयते तद् यज्ञार्थं सूत्रमुपवीतम् ॥

टीका०—दक्षिणकरे प्रोद्धृते वामस्कन्धनिक्षिप्तं यज्ञसूत्रमुपवीताख्यम् ॥

**प्राचीनावीतमन्यस्मिन्**

क्षीर०—यज्ञसूत्रमित्येव । वामे करे प्रोद्धृते प्राचीनावीतम् । प्रा-

१. 'यत्र', २. 'नि । उपवासादिकं यमः । दानादिकं नियमः । यमाः शैव' ख. पाठः. ३. 'लो', ४. 'र्थि' घ. पाठः. ५. 'र्गी', ६. 'द्र' ग. घ. पाठः. ७. 'श्री', ८. 'भिक्षुकौ' ग. घ. पाठः. ९. 'भाद्रक', १०. 'ली' ख. पाठः.

गेव प्राचीनम्। 'विभाषाञ्चेरदिक्स्त्रियाम्' (५. ४. ८) इति खः। आवीयते स्मावीतम्॥

टीका॰ —श्राद्धकालेऽन्यस्मिन् वामे करे उद्धृते दक्षिणस्कन्धे निक्षिप्ते प्राचीनावीतम्॥

निवीतं कण्ठलम्बितम्।

क्षीर॰ — यज्ञसूत्रमित्येव। अनुद्धृतयोरुभयोरपि कण्ठे यल्लम्बते, तद् नियतं वीयतेऽस्मिन् निवीतम्। यन्मनुः—

"प्रोद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः।
सव्ये प्राचीनमावीती निवीती कण्ठसज्जने"॥
(अध्या॰ २. श्लो॰ ६३)

टीका॰ — यज्ञसूत्रं कण्ठादृजुलम्बितं तदेव निवीतम्॥

अङ्गुल्यग्रे तीर्थं दैवं

क्षीर॰ — देवेभ्यस्तीर्यते दीयतेऽनेन तीर्थम्॥

टीका॰ — अङ्गुलीनामग्रे दैवं तीर्थम्। देवस्येदं दैवम्। तेनैव तर्पणविधानात्

स्वल्पाङ्गुल्योर्मूले कायम्॥ ५०

क्षीर॰ — स्वल्पा कनिष्ठाङ्गुलिः। द्वित्वम् अङ्गुलिमध्येन प्रजापतिभ्यो जलदानाम्नानात्। कः प्रजापतिर्देवतास्य कायम्। 'कस्येत्' (४. २. २५) इत्यण् इत्वं च॥

टीका॰ — कनिष्ठानामिकयोर्मध्ये प्राजापत्यं तीर्थम्। को ब्रह्मा देवतास्येति कायम्। 'सास्य देवता' (४. २. २४) इत्यण्। 'कस्येत्' (४. २. २५ इति इकारः। तस्य च वृद्ध्यायादेशौ॥

१. 'उ' ग. घ. ङ. पाठः.

**मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं**

क्षीर०— अङ्गुलिस्तर्जन्यत्र । पितरो देवतास्य पित्र्यं तीर्थम् । 'वा-य्वृतुपित्रुपसो यत्' (४. २. ३१) ॥

टीका० — अङ्गुष्ठप्रदेशिन्योर्मूले पैत्रं, पितृदेवत्यम् ॥

**मूले त्वङ्गुष्ठस्य ब्राह्मम् ।**

क्षीर० — ब्रह्मा देवतास्य ब्राह्मं तीर्थम् । 'ब्राह्मोऽजातौ' (६. ४. १७१) इति साधुः । यद् याज्ञवल्क्यः—

"कनिष्ठातर्जन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥"
(अध्या० १. श्लो० १९)

**करमध्ये सौम्यं त्वाहुः ॥**

टीका० — अङ्गुष्ठमूले ब्राह्मम् । ब्रह्मदेवत्यम् । विद्युन्माला नामेयं सर्व-गुरुरनुष्टुप् ॥

**स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥**

क्षीर० — ब्रह्मणो ज्ञानस्य भवनं ब्रह्मभूयम् । ब्रह्मणैकार्थ्यं, मोक्ष इत्यर्थः । 'भुवो भावे' (३. १. १०७) इति क्यप् । सह युनक्ति सयुक्, तस्य भावः सायुज्यम् ॥

टीका० — ब्रह्मभूयत्रिकं ब्रह्मभवने । 'भुवो भावे' (३. १. १०७) । क्यप् । ब्रह्मभूयम् । 'तस्य भावस्त्वतलौ' (५. १. ११९) । ब्रह्मत्वम् । 'सम्बन्धि-गुणवान् सयुक्' इति त्रिकाण्डशेषः । अतो ब्रह्मसम्बन्धि ब्रह्मसायुज्यम् । ष्यञ् ॥

**देवभूयादिकं तद्वत्**

क्षीर० — तद्वदिति देवत्वं देवसायुज्यं च । आदिशब्दान्मूर्ख-भूयादिः ॥

१. 'वा' ख. पाठः. २. 'न्धी गु' क. ख. घ. च. पाठः.

टीका० — एवं देवभवने देवभूयं देवत्वं देवसायुज्यमित्यपि बोद्धव्यम् ।

**कृच्छ्रं सान्तपनादिकम् ।**

क्षीर० — कृन्तति पापं कृच्छ्रं नाम तपः । सन्तपने[1]भवं सान्तपनम् । यत् स्मृतिः —

"त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् कृच्छ्रं सान्तपनं स्मृतम्" ॥

आदिना पराकादि ॥

टीका० — सान्तपनचान्द्रायणादि कृच्छ्राख्यम् । कष्टे कृच्छ्रमुक्तम् ।

**सन्न्यासवत्यनशने पुमान् प्रायः**

क्षीर० — सन्न्यसनं सर्वत्यागो मरणाध्यवसायः । पुमानिति प्रायस्यां[2]सन्तत्वं मा विज्ञायीति । यल्लक्ष्यं — 'प्रायोपवेशनमतिर्नृपतिर्बभूव' (रघु० स० ८. श्लो० ९४) ॥

टीका० — सन्न्यस्तोऽहमिति प्रतिज्ञां कृत्वा यदभोजनं स प्रायः । 'प्रायोपवेशनमतिर्नृपतिर्बभूव' ( स० ८. श्लो० ९४) इति रघावदन्तः ॥

**अथ वीरहा ॥ ५२ ॥**

**नष्टाग्निः**

क्षीर० — वीरयते वीरोऽग्निः । तमुपेक्षया हन्ति ॥

टीका० — उत्सन्नाग्नौ पुरुषे वीरहा नान्तः । वीरोऽग्निः । हन्तेः क्विप् ॥

**कुहना दम्भान्मिथ्येर्यापथकल्पना ।**

क्षीर० — ईर्यापथाख्यस्य भिक्षुव्रतस्य दम्भेन परविस्मापनार्थं मिथ्याकल्पना कुहना । 'कुह विस्मापने' । अस्माद् युच् । अर्थलिप्सया विज्ञानदर्शनं वा कुहना[3]ख्या । शाश्वतस्त्वाह —

१. 'ने' ख. ग. घ. ङ. पाठः. २. 'स्य शान्त', ३. 'का' ख. पाठः.

"ईर्ष्यालुर्दम्भचर्या च कुहनः कुहना क्रमात्" ॥

टीका० — अन्नलिप्सया मिथ्यामार्गाश्रयणे कुहना । 'कुह विस्मापने' । चुरादिः । युच् ॥

**व्रात्यः संस्कारहीनः स्याद्**

क्षीर० — व्रते साधुः कालोऽस्य व्रात्यः । प्रायश्चित्तार्हः । संस्कारोऽत्रोपनयनम् । यत् स्मृतिः —

"सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः" ।
(याज्ञ० अध्या० १. श्लो० ३८)

व्रते साधुरित्येके । पृथग्व्यपदेशो[1] नेत्यर्थः ॥

टीका० — अष्टादशसंस्कारहीनो व्रात्यः ॥

**अस्वाध्यायो निराकृतिः ॥ ५३ ॥**

क्षीर० — निराक्रियते वेदहीनत्वान्निराकृतिः । आकृतेर्जातेर्वा निष्क्रान्तः । यत् स्मृतिः—

"अनधीत्य तु यो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥
(मनु० अध्या० २. श्लो० १६८)

टीका० — वेदपाठशून्ये अस्वाध्यायद्वयम् । निराकृतिः पुमान् । बाहुलकः क्तिच् ॥

**धर्मध्वजी लिङ्गवृत्तिः**

क्षीर० — धर्मो ध्वजश्चिह्नमिवास्त्यस्य धर्मध्वजी । लिङ्गाज्जटादेर्वृत्तिर्जीविकास्य । भिक्षिष्य इत्यस्य जटा इति यावत् ॥

टीका० — वर्तनार्थमेव जटादिधारणं यस्य तत्र धर्मध्वजिद्वयम् । धर्मध्वजी नान्तः । लिङ्गेन जटादिना वृत्तिर्वर्तनं यस्य स लिङ्गवृत्तिः ॥

1. 'शोऽनर्थः' ख. पाठः.

**अवकीर्णी क्षतव्रतः ।**

क्षीर० — अव अन्तरे कीर्णं रेतोऽस्त्यस्यावकीर्णी । यत् स्मृतिः —

"ब्रह्मचार्यवकीर्णी स्यात् कामतस्तु स्त्रियं व्रजन्" ॥

टीका० — स्त्र्यभिगमनादिना नष्टव्रतोऽवकीर्णी । 'इष्टादिभ्यश्च' (५. २. ८८) इतीनिः ॥

**सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥**
**अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम् ।**

क्षीर० — अभिभूय निर्मुक्तोऽस्तमितोऽर्कोऽस्याभिनिर्मुक्तः । अभिभूयोदितोऽर्कोऽस्याभ्युदितः ॥

टीका० — सुप्ते यस्मिन् द्विजे रविरस्तमेति सोऽभिनिर्मुक्तः, सुप्ते यस्मिन् रविरुदेति सोऽभ्युदितः ॥

**परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥**

क्षीर० — ज्येष्ठे भ्रातर्यकृतविवाहे कनिष्ठो विवाहाद्धेतोः परिवर्ज्य विन्दति परिवेत्ता । यत् स्मृतिः—

"येऽग्रजेष्वकलत्रेषु कुर्वते दारसङ्ग्रहम् ।
ज्ञेयास्ते परिवेत्तारः परिवित्तिस्तु पूर्वजः" ॥

उपलक्षणं चैतद्, यतोऽग्निहोत्रव्रतादावपि परिवेदनस्य व्यवहारोऽस्ति ॥

टीका० — अकृतविवाहे ज्येष्ठभ्रातरि कनीयान् भ्राता परिवेत्ता ॥

**परिवित्तिस्तु तज्ज्यायान्**

क्षीर० — तस्य ज्यायानग्रजः । परिवर्ज्य यं विन्दति स परिवित्तिः ॥

टीका० — तस्य परिवेत्तुर्ज्यायान् भ्राता परिवित्तिः । बाहुलकः क्तिच् ॥

**विवाहोपयमौ समौ ।**

**तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥**

क्षीर० — विवहनं विवाहः । उपयमनमुपयमः । 'यमः समुपनिविषु च' (३. ३. ६३) इति पक्षेऽप् ॥

टीका० — विवाहषट्कं विवाहे । विवाहोद्वाहयोर्घञ् । 'यमः समुपनिविषु च' (३. ३. ६३) इति पक्षेऽप् । उपयमः । घञि उपयामः । नयतेः एरचि परिणयः ॥

**व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।**

क्षीर० — व्यवयनं व्यवायः । मिथुनस्य स्त्रीपुंसयोरिदं मैथुनम् । निधूयन्तेऽङ्गान्यस्मिन निधुवनम् । रमणं रतम् । रतिः सुरतं मोहनं सम्प्रयोगो याभोऽपि ॥

टीका० — व्यवायचतुष्कं रतौ । इणः एरचि व्यवायः । ग्राम्याणां धर्म आचारो ग्राम्यधर्मः । 'धू विधूनने' । ल्युट् । निधुवनम् ॥

**त्रिवर्गो धर्मकामार्थैः**

क्षीर० — धर्माद्यैस्त्रिभिस्त्रिसङ्ख्यो वर्गः ॥

टीका० — धर्मार्थकामास्त्रिवर्गाख्याः ॥

**चतुर्वर्गः समोक्षकैः ॥ ५७ ॥**

क्षीर० — धर्मार्थकामैरित्येव ॥

टीका० — धर्मार्थकाममोक्षाश्चतुर्वर्गाख्याः ॥

**सबलैस्तैश्चतुर्भद्रं**

क्षीर० — चतुर्णां भद्राणां समाहारश्चतुर्भद्रम् । पात्रादि । तैर्धर्मकामार्थैः । यत् कात्यः —

१. 'विक्रिय' ख. पाठः. २. 'म् । तै' ग. घ. ङ. पाठः.

"आहुश्चत्वारि भद्राणि बलं धर्मं सुखं धनम्" ॥

टीका० — धर्मादिभिश्चतुर्भिः सबलैर्बलवद्भिश्चतुर्भद्रमुच्यते ॥

जन्याः स्निग्धा वरस्य ये ॥ ५७[1] ॥

क्षीर० — जनीं वधूं वहति। 'संज्ञायां जन्याः' (४. ४. ८२) इति साधुः। जामातुर्वयस्याः। जनीवोढारोऽपि। यल्लक्ष्यं — 'यातेति जन्यानवदत् कुमारी' (रघु० स० ६. श्लो० ३०)॥

इति ब्रह्मवर्गः।

टीका०—ये वरस्य जामातुर्वयस्याः स्निग्धाः ते जन्या इत्युच्यन्ते। जनीं वधूं वहन्तीति 'संज्ञायां जन्याः' (४. ४. ८२) इति यत् ॥

इति ब्रह्मवर्गः ॥

## अथ क्षत्रियवर्गः ।

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।

क्षीर० — मूर्धास्याभिषिच्यते मूर्धाभिषिक्तः। मूर्धावसिक्तोऽपि। राज्ञोऽपत्यं राजन्यः। 'राजश्वशुराद् यत्' (४. १. १३७) इत्यत्र 'राज्ञोऽपत्ये जातिग्रहणम्'। हिरण्यगर्भबाहुभ्यां जातो बाहुजः। यच्छ्रुतिः— 'बाहू राजन्यः कृतः'। क्षत्रस्यापत्यं जातिः क्षत्रियः। 'क्षत्राद् घः' (४. १. १३८)। क्षत्रं च क्षतत्राणात् ॥

टीका० — मूर्धाभिषिक्तपञ्चकं क्षत्रिये। राज्यारोपणकाले मूर्ध्न्यभिषिक्तो मूर्धाभिषिक्तः[3]। क्तः। प्रथमः क्षत्रियः। तत्प्रभवतया अनभिषिक्ता अपि मूर्धाभिषिक्ताख्याः। यथा ब्रह्मबाहुजन्य वंश्याश्च बाहुजाः। राजा क्षत्रियः, तस्यापत्यं राजन्यः। 'राजश्वशुराद् यत्' (४. १. १३७)। 'ये चाभावकर्मणोः'

१. 'धार्भि' ग. घ. ङ. पाठः. २. 'र्भाद् बा' ग. घ. ङ. पाठः. ३ 'क्तः। प्र' ख. ग. घ. ङ. ज. पाठः.

(६. ४. १६८) इति प्रकृतिभावः । 'राजेरन्यः' (उ० ३. १००) इत्युणादिः । तत्र 'राजृ दीप्तावि'त्यतोऽन्यप्रत्ययः । ब्रह्मणो बाहोर्जातो बाहुजः । अपत्ये 'क्षत्राद् घः' (४. १. १३८) । क्षत्रियः । तेन क्षत्रोऽप्यस्य नामेत्युक्तम् । अतितेजस्वितया विशेषेण राजते दीप्यत इति विराट् । 'सत्सूद्विष —' (३. २. ६१) इत्यादिना क्विप् ॥

**राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥**

**क्षीर० — राजते राट् । व्रश्चादिना षः । 'झलां जशोऽन्ते' (८. २. ३९) इति डत्वम् । 'वावसाने' (८. ४. ५६) । चर्त्वम् । पृथिव्या राजा पार्थिवः । 'सर्वभूमिपृथिवीभ्यामणञौ' (५. १. ४१) । मह्यां क्षियत्यधिवसति महीक्षित् ॥**

टीका० — जनपुरपरिपालनाधिकृते क्षत्रियेऽन्यस्मिन्नपि तत्कर्मकारिणि राजसप्तकम् । समृद्ध्या राजतीति राजा । नान्तः । 'कनिन् युवृषितक्षिराजिधन्वद्युप्रतिदिवः' (उ० १. १६२) इति कनिन् । 'सत्सूद्विष—' (३. २. ६१) इत्यादिना क्विप् । राट् । जान्तः । पृथिव्या ईश्वरः पार्थिवः । 'तस्येश्वरः' (५. १. ४२) इत्यण् । क्ष्मां भुनक्ति पालयतीति क्ष्माभुक् । जान्तः । नॄन् पातीति नृपः । 'आतोऽनुपसर्गे कः' (३. २. ३) 'क्षि निवासगत्योः' । धातूनामनेकार्थत्वान्महीमधिगतवानिति महीक्षित् । क्विबन्तः ॥

**राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।**

**क्षीर० — अध्युपरीष्टे तच्छीलोऽधीश्वरः ॥**

टीका० — प्रणता अशेषाः सामन्ता यत्र सोऽधीश्वराख्यः । संसक्तः संलग्नोऽन्तो यस्याः सा समन्ता, स्वविषयानन्तरा भूमिः । संशब्द एवात्र संसक्तार्थः । समन्ताया इमे सामन्ताः, अनन्तरा राजानः ।

"नयविक्रमसंस्कृतप्रतापैरपि सामन्तनृपैः प्रयाच्यमानः"

इति जातकमालायामनन्तरराजेपूक्तम् ॥

**चक्रवर्ती सार्वभौमः**

क्षीर० — नृपचक्रे राजचक्रे वर्तते, स्वाम्येन चक्रं राष्ट्रं वर्तयति वा चक्रवर्ती। सर्वस्या भूमेरीश्वरः सार्वभौमः। अनुशतिकादित्वादुभयपदवृद्धिः। अत्राहुः—

"रामो दाशरथी रावणारिकाकुत्स्थराघवाः।
सौमित्रिर्लक्ष्मणो लङ्कापतिपौलस्त्यरावणाः॥
दशास्योऽथेन्द्रजिन्मेघनादो मण्डोदरीसुतः।
आञ्जनेयस्तु हनुमान् मारुतिर्मारुतात्मजः॥
किष्किन्धाधिपसुग्रीवौ द्वौ जटायुजटायुषौ।
अजातशत्रुः शल्यारिर्धर्मपुत्रो युधिष्ठिरः॥
राधेयोऽङ्गाधिपः कर्णो भीमसेनो हिडिम्बभित्।
मारुतिः कीचकारातिर्बकवैरी वृकोदरः॥
धनञ्जयोऽर्जुनः पार्थो विजयः शक्रनन्दनः।
गाण्डीवी फल्गुनः सव्यसाची मध्यमपाण्डवः॥
जिष्णुः किरीटी बीभत्सुः श्वेतवाजी कपिध्वजः।
पृथा तु कुन्ती कृष्णा तु पाञ्चाली याज्ञसेन्यपि॥
द्रौपदी विक्रमादित्यः साहसाङ्कः शकान्तकः।
शूद्रकस्त्वग्निमित्राख्यो[1] हालः स्यात् सालवाहनः॥
वैरोचनो बलिः कार्तवीर्यार्जुनः सहस्रदोः"॥

टीका० — समस्तभूम्यधिपतौ राजनि चक्रवर्तिद्वयम्। पुण्योपनतेन चक्रेण वर्तते चेष्टते असाधुदमनिकां राजवृत्तिमनुतिष्ठतीति चक्रवर्ती। णिन्यन्तः। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिववदण्। 'अनुशतिकादीनां च' (७. ३. २०) इत्युभयपदवृद्धिः॥

नृपोऽन्यो मण्डलेश्वरः॥ २॥

क्षीर० — अन्यो भूम्येकदेशेशो नृपः॥

---

१. 'पमित्रो ना हा' ग. घ. पाठः.

टीका० — अन्योऽसार्वभौमो मण्डलेश्वरः ॥

**येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।**
**शास्ति यश्चाज्ञया राज्ञः स सम्राड्**

क्षीर० —इज्यते स्मेष्टम् । मण्डलस्य द्वादशराजकस्य । समुदितं लक्षणं चैतत् । सम्यग् राजति सम्राट् । 'मो राजि समः क्वौ' (८. ३. २५) इति मस्य मः ॥

टीका० —राजसूयनाम्ना यागेन येनेष्ट स सम्राट् । राजसूयाधिकारश्चासार्वभौमस्य न भवति । सार्वभौमः सकलमण्डलपालनात् सकलराजमण्डलशासनाद् वा भवतीति सार्वभौमप्रकारद्वयं प्रदर्शयति — 'मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञ' इति । एतेन राजसूयाधिकारिणि चाधिकारितामात्रेणापि सम्राट्छब्दो वर्तत इत्युक्तं भवति । बोपालितेन सार्वभौममनभिसन्धाय द्वयमेव सम्राट्त्वेन निबद्धम् । यो राजसूययाजी सार्वभौमनराट् स सम्राट् । मण्डलेश्वरश्च य इति यो हिमवत्समुद्राभ्यन्तरं सहस्रयोजनपरिमाणस्य भूमण्डलस्येश्वरः पालयिता सोऽपि सम्राट् । शास्ति यश्चाज्ञया राज्ञ इति यो हिमवत्समुद्राभ्यन्तरवर्तिनो राज्ञो विधेयीकरोति सोऽपि सम्राडित्युक्तम् । प्रेत्य देवेष्विह चातिविलक्षणतया राजसु मध्ये सम्यग् राजते इति सम्राट् । क्विप् । 'मो राजि समः क्वौ' (८. ३. २५) इति मकारस्य मकारोऽनुस्वारनिवृत्त्यर्थः ॥

अथ राजकम् ॥ ३ ॥

**राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ।**

क्षीर० — राज्ञां समूहो राजकम् । राजन्यानां समूहो राजन्यकम् । 'गोत्रोक्षोष्ट्र—' (४. २. ३९) इति वुञ् ॥

टीका० — नृपतिसमूहे राजकं क्षत्रियसमूहे राजन्यकम् । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्य—' (४. २. ३९) इत्यादिनोभयत्र समूहे वुञ् । 'प्रकृत्याके राजन्यमनुष्ययुवान इति वक्तव्यम्' (वा० ६. ४. १६३) इति प्रकृतिभावाद् 'आपत्यस्य च तद्धितेऽनाति' (६. ४. १५१) इति राजन्यके यलोपो न भवति ॥

**मन्त्री धीसचिवोऽमात्यः**

क्षीर० —मन्त्रं कर्तव्यावधारणमस्त्यस्य मन्त्री । धिया सचति समन्वेति धीसचिवः । अमा सह समीपे वा भवोऽमात्यः । 'अव्ययात् त्यप्' (४. २. १०४) । सामवायिकोऽपि ॥

टीका० —मन्त्रित्रयं मन्त्रिणि । इतिकर्तव्यतावधारणं मन्त्रः, तद्योगादिनिः । मन्त्री । धीप्रधानः सचिवो धीसचिवः । 'सचिवः सहायोऽमात्य' इति दन्त्यादावजयः । अमाशब्दः सहार्थे निपातितः । मन्त्रेणामा सह भवतीत्यमात्यः । 'अव्ययात् त्यप्' (४. २. १०४) । अन्येष्वपि सचिवेष्वमात्यशब्दो वर्तते ॥

**अन्ये कर्मसचिवास्ततः ॥ ४ ॥**

क्षीर० ततो मन्त्रिणोऽन्येऽमात्याः कर्मसहाया नियोग्याख्याः ॥

टीका० —धीसचिवादन्येऽक्षपटलादयः कर्मोपयुक्तत्वात् कर्मसचिवाख्याः ॥

**महामात्राः प्रधानानि**

क्षीर० —अमात्या इत्यंत । महती मात्रा परिच्छद एषां महामात्राः । प्रदधाति प्रधानम्, आविष्टलिङ्गम् ॥

टीका० —नापकृष्टा न चोत्कृष्टा मध्यमाधिकरणव्यवस्थिता राजसहायाः सेनापतिगणस्थिरादयो महामात्राः ।

"महामात्रः प्रधानं स्यात् तथा हस्तिपकाधिपे"

इति धरणिः । महती मात्रा परिच्छेद एषामिति महामात्राः । अत एव प्रधानानि । रूपभेदात् क्लीबम् । 'महामात्रः प्रधानः स्याद्' इति पुंस्काण्डे वोपालितः ॥

---

१. 'त्यः । सा' ख. पाठः. २. 'च्छे' ज. पाठः.

**पुरोधास्तु पुरोहितः।**

क्षीर० — पुरो धीयते हिनोति वा पुरोहितः। सौवास्तिकोऽपि॥

टीका० — पुरोधाद्वयं पुरोहिते। दृष्टादृष्टफलेषु कर्मसु पुरो धीयत इति पुरोधाः। पुरोहितश्च। 'पुरसि च' (उ० ४. २३२) इति धाञोऽसुन्। एवं पुरोधाः सान्तः। धाञः क्तः। 'दधातेर्हिः' (७. ४. ४२)। पुरोहितः॥

**द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ॥ ५॥**

क्षीर० — द्रष्टा निर्णेता। व्यवहारः ऋणादानादिन्यायः। यत् स्मृतिः—

"वि नानार्थेऽव सन्देहे हरणं हार उच्यते।
नानासन्देहहरणाद् व्यवहारः प्रकीर्तितः"॥

पृच्छतीति प्राट्। 'क्विब्वचि—' (उ० २. ६०) इति दीर्घोऽसम्प्रसारणं च। प्राट् चासौ विविधवाचकः प्राड्विवाकः। अक्षाण्यायमुखानि रूपाण्यवपश्यत्यक्षदर्शकः। धर्माधिकरणिक आक्षपटलिकश्च॥

टीका० — व्यवहाराणामृणादानदायादीनां द्रष्टरि धर्माधिकरणिकादौ प्राड्विवाकद्वयम्। तदुक्तं—

"विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः।
विचारयति येनादौ प्राड्विवाकस्ततः स्मृतः"॥

पृच्छतीति प्राट् 'क्विब्वचिप्रच्छि—' (उ० २. ६०) इत्यादिना क्विब् दीर्घश्च। विवक्तीति विवाकः। बहुलवचनात् कर्तरि घञ्। विवक्ति तमिति वा विवाकः। कर्मणि घञ्। ततः कर्मधारयः। तुलादिपरीक्षायां यः कृतोपवासो व्याप्रियते, सोऽपि प्राड्विवाकः। अक्षान् व्यवहारान् पश्यतीत्यक्षदर्शकः। ण्वुल्॥

१. 'नि द्रव्याणि वा प' ख. पाठः. २. 'अ' ग. घ. ङ. पाठः. ३. 'ण' पाठः. ४. 'वि' ग. पाठः. ५. 'रूपाणि' क. छ. पाठः.

**प्रतीहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।**

क्षीर० — प्रतिह्रियते वार्यतेऽनेन प्रतीहारः । द्वारि तिष्ठति द्वाःस्थः । द्वारि स्थितं दर्शयत्यावेदयति । द्वे संज्ञे इत्येके । द्वाःस्थित एव हि दर्शयति । द्वाःस्थोपस्थितदर्शका इत्येके पेठुः । दण्डी दौवारिको वेत्री उत्सारकश्च ॥

टीका० — प्रतीहारपञ्चकं प्रतीहारे । प्रतिराभिमुख्ये । राज्ञोऽभिमुखं जनान् हरति नयति प्रापयतीति प्रतीहारः । 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०) । 'अन्येषामपि —' (६. ३. १३७) इति दीर्घः । दीर्घत्वं न भवतीत्यपरे । तथा च नाममाला —

"बुधकुलजावभिजातौ प्रतिहारौ द्वारपालकद्वारौ"

इति । द्वारं पालयतीत्यण् । द्वारपालः । द्वारि तिष्ठतीति द्वाःस्थः । 'सुपि स्थः' (३. २. ४) इति कः । द्वारि स्थितो द्वाःस्थितः । दर्शयति जनानिति दर्शकः । समस्त एवेत्यन्यः । क्वचिद् द्वाःस्थोपदर्शक इति पाठः ॥

**रक्षिवर्गस्त्वनीकस्थः**

क्षीर० — अङ्गरक्षिवृन्दम्[1] । अनीके तिष्ठत्यनीकस्थः । 'राजशिक्षाविचक्षणा'विति शाश्वतः ॥

टीका० — रक्षिवर्गद्वयमङ्गरक्षे । अनीकेन वृन्देन तिष्ठतीत्यनीकस्थः ॥

**अथाध्यक्षाधिकृतौ समौ ॥ ६ ॥**

क्षीर० — अधिकृतोऽक्षेष्वायमुखेष्वध्यक्षः, अध्यक्ष्णोति वा । 'अक्षू व्याप्तौ' । अधिकान्यक्षाणीन्द्रियाण्यस्य वा । अधिक्रियत उपरि नियुज्यते[2] स्माधिकृतः[3] ॥

---

१. 'पद्म', २. 'तेऽधि' ख. पाठः. ३. 'स्मादधि' ग. पाठः.

टीका० —सामान्येन यो यत्राधिकृतस्तत्राध्यक्षद्वयम । 'अक्षू व्याप्तौ'। पचादिः । अध्यक्षः । करोतेः क्तः । अधिकृतः ॥

**स्थायुकोऽधिकृतो ग्रामे**

क्षीर० — **तिष्ठति तच्छीलः स्थायुकः । 'लषपतपद —' (३. २. १५४) इत्युकञ् ॥**

टीका० — **एकग्रामाधिकृतः** स्थायुकः । 'लषपत —' (३. २. १५४) इत्यादिनोकञ् । 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युक् । स्थायुकः ॥

**गोपो ग्रामेषु भूरिषु ।**

क्षीर० — **अधिकृत इत्येव । गां भुवं पाति, गोपायति वा गोपः ॥**

टीका० — **बहुषु ग्रामेष्वधिकृतो** गोपः । गां पातीति 'आतश्चोपसर्गे' (३. १. १३६) इति कः ॥

**भौरिकः कनकाध्यक्षः**

क्षीर० — **भूरिणि हेम्नि नियुक्तो भौरिकः । हैरिक इति पाठे हिरण्ये नियुक्तः ॥**

टीका० —**सुवर्णाधिकृते** भौरिकः । भूरि सुवर्णम् । तथा च धरणिः — 'भूरि प्राज्यसुवर्णयोः' इति । तत्राधिकृत इति ठक् ॥

**रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥**

क्षीर० — **रूपमाहतमस्य रूप्यं** दीनारादिः । 'रूपादाहतप्रशंसयोर्यप्' (५. २. १२०) । **निष्के दीनारादौ नियुक्तो नैष्किकः, टङ्कपतिः ॥**

१. 'कः ॥ गो' अ. पाठः. २. 'गे कः' क. ख. पाठः

टीका० — रूप्याधिकृते नैष्किकः। पूर्ववट्ठक् ॥

**अन्तःपुरेष्वधिकृतः स्यादन्तर्वंशिको जनः।**

क्षीर० — 'अन्तःपूर्वपदाट्ठञ्' (४.३.६०)। जनः कुब्जवामनादिसमुदायः ॥

टीका० — बृहदुपकारिकादावन्तःपुराधिकृते जनेऽन्तर्वंशिकः। 'अन्तःपूर्वपदाट्ठञ्' (४. ३. ६०)। संज्ञापूर्वकत्वान्न वृद्धिः ॥

**सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥**

क्षीर० — सुविदन्तं विवाहं जानन्तं लान्ति सुविदल्ला ऊढाः स्त्रियः, तत्र भवाः सौविदल्लाः। कञ्चुकं विनीतवेषार्थमस्त्येषाम्। स्त्रियो व्यवस्थायां स्थापयन्ति स्थापत्याः। यद्वा तिष्ठत्यस्मिन् वा स्थः। घञर्थे कः। स्थश्चासौ पतिश्चेति स्थपतिः, तत्र भवा इति 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (४. १. ८५)। सुविदस्योद्वहत इमे सौविदाः ॥

टीका० — सौविदल्लचतुष्कं कञ्चुकिनि। सत्रयं दन्त्यम्। कञ्चुकं चोलनयोगादिनिः। कञ्चुकी। स्थपतिः कञ्चुकी। स एव स्थापत्यः। स्वार्थे ष्यञ् ॥

**शण्ढो वर्षवरस्तुल्यौ**

क्षीर० — शाम्यति शण्ढः। अत एवान्तःपुरपालकः। वर्षं रेतःसेकं वृणोत्याच्छादयति वर्षवरः। 'वृष शक्तिप्रबन्धे' वा ॥

टीका० — मुष्कशून्योऽन्यो वा स्त्रीस्वभावो महल्लकस्तत्र षण्डद्वयम्। तदुक्तं —

१. 'म्। कुतश्चित् स्त्रीव्य' ग. पाठः. २. 'रः शा', ३. 'वा ॥ तुल्याः से' ग. पाठः.

"ये त्वल्पसारा: प्रखला: क्लीबाश्च स्त्रीस्वभाविन: ।
न दुष्टा: क्वापि कार्ये च ते वै वर्षवरा: स्मृता:" ॥

नपुंसके षण्ड उक्त: ॥

**सेवकार्थ्यनुजीविन: ।**

**क्षीर०** — अर्थयते तच्छीलोऽर्थी । 'अर्थाच्चासन्निहिते' (वा० ५. २. १३५) इति इनिर्वा ॥

**टीका०** — सेवकत्रयं सेवके । 'षेवृ सेवने' । ण्वुल् । सेवक: । अर्थनमर्थस्तद्योगादर्थी । नान्त: । प्रभो: पश्चाज्जीवतीत्यनुजीवी । णिनि: ॥

**विषयानन्तरो राजा शत्रु:**

**क्षीर०** — विजिगीषुविषयादव्यवहित: ॥

**टीका०**— विजिगीषो: समन्ततो मण्डलीभूते[1]भूम्यनन्तरो राजा शत्रु:, एकार्थाभिनिवेशात् ॥

**मित्रमत: परम् ॥ ९ ॥**

**क्षीर०** — अत: शत्रो: परभूमिस्थो विजिगीषोर्मित्रम् ॥

**टीका०** — तत: परं भूम्येकान्तरितं मित्रम्, उपकारित्वात् ॥

**उदासीन: परतर:**

**क्षीर०** — ऊर्ध्वमासीन इवोदासीन[3]: । स्वशत्रुमित्रभूमिभ्यो वाह्योऽत एव तटस्थ: ॥

**टीका०** — अरिविजिगीषुमध्यमानां मण्डलाद् बहिर्भूतोऽत्यन्तव्यवहि-

१. 'सत्त्वा: प्र', २. 'तस्य भू' अ. पाठ:. ३. 'न: । श' ख. पाठ:

तो बलाधिकोऽप्युपकारापकारौ यो न करोति, स उदासीनः । आस्तेः शानच् । 'ईदासः' (७. २. ८३) इतीत्वम् । तदुक्तमर्थशास्त्रे —

"सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः ।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥
अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् ।
तथारिमित्रमित्रं च विजिगीषोः पुरःस्थिताः[1] ।
पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः[2] ।
आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥
मण्डलाद् बहिरेतेषामुदासीनो बलाधिकः ।
अनुग्रहे संहतानां व्यस्तानां निग्रहे प्रभुः ॥"

इति ॥

**पार्ष्णिग्राहस्तु पृष्ठतः ।**

क्षीर० — नेतुः पश्चात् स्थितो राजा पार्ष्णिमिव पार्ष्णिं गृह्णात्यवष्टभ्नाति । पञ्चस्वेतेषु द्वादशराजकमण्डलं परिसमाप्तम् । यदाहुः —

"अरिर्मित्रमरेर्मित्रं मित्रामित्रमतः परम् ।
तथारिमित्रमित्रं[4] च विजिगीषोः पुरःस्थिताः ॥
पार्ष्णिग्राहस्तथाक्रन्द आसारौ[5] च तयोः पृथक् ।
मध्यमोऽथाप्युदासीन इति द्वादशराजकम्" ॥

टीका० — शत्रुमभियुञ्जानस्य विजिगीषोः शत्रुहननाय यः पार्ष्णिं गृह्णाति पृष्ठतः स पार्ष्णिग्राहः । 'कर्मण्यण्' (३. २. १) ॥

**रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥**

१. 'परे स्थि' ख. ग. ट. पाठः. २. 'तः ।' च. पाठः. ३. 'क्रान्तस्त' ग. पाठः. ४ 'मित्रारि' ख. पाठः. ५. 'रैश्च त' क. ख. घ. पाठः.

**द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः ।**
**अभिमातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ १० ॥**

क्षीर० — रेपयति रिपुः । 'रेपृ गतौ' । समानं पतत्येकार्थाभिनिवेशित्वात् सपत्नः । इयर्त्यरिः । द्वेष्टि द्विषन् । 'द्विषोऽमित्रे' (३. २. १३१) इति शता । द्वेष्टि तच्छीलो द्वेषणः । 'क्रुधमण्डार्थेभ्यश्च' (३. २. १५१) । युच् । दुष्टं हृदयमस्य दुर्हृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५. ४. १५०) इति साधुः । विरुद्धः पक्षो विपक्षः । अमत्यमित्रः । शातयति शत्रुः । 'प्रज्ञादिभ्यश्च' (५. ४. ३८) इति पक्षेऽण् । शात्रवः । अभिमन्यतेऽभिमातिः । प्रियते परः । 'पृङ् व्यायामे' । इयत्यर्रातिः । प्रतीपमर्थयते प्रत्यर्थी । परिपन्थयति परिपन्थी । 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (५. २. ८९) इति साधुः । प्रत्यवस्थाता प्रत्यनीकः परिपन्थकोऽपि ॥

टीका० — रिपूनविंशतिकं शत्रौ । रपत्यकीर्तिमिति रिपुः । 'रप लप व्यक्तायां वाचि' । 'रपेरिच्चोपधायाः' (उ० १. २६) इति कुः । वैरं विरोधः तद्योगाद् वैरी इन्नन्तः । सपत्नशब्दोऽव्युत्पन्न इति केचित् । सपत्नीवत् सपत्नोऽपि । दुःख हेतुत्वात् । सपत्नीशब्दाद् इवार्थे 'व्यन् सपत्ने' (४. १. १४५) इति निपातनादकारप्रत्ययः । ईकारलोप इत्यपरः । अर्तेः 'अच इः' (उ० ४. १४०) । अरिः । 'द्विषोऽमित्रे' (३. २. १३१) इति शतृप्रत्ययः । द्विषन् । द्वेषणो नन्द्यादिल्युडन्तः । दुष्टं हृदयमस्येति दुर्हृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५. ४. १५०) इति निपातनाद् हृद्भावः । द्विड् मूर्धन्यषान्तः 'सत्सूद्विष —' (३. २. ६१) इत्यादिना क्विप् । विरुद्धः पक्षोऽस्येति विपक्षः न हितोऽहितः । 'अम गत्यादिषु' । 'अमेर्द्विषति चित्' (उ० ४. १७५) इति इत्रः । अमित्रः । ना । एकतकारश्च ।

"स्यातामममित्रौ मित्रे च सहजप्राकृतावपि" (स० २. श्लो० ३६)

इति माघः । चौरे दस्युरुक्तः । शातयतीति शत्रुः । जन्वादिः । शत्रुरेव शात्रवः प्रज्ञादिः । यातेः क्तिच । अभियातिः । 'द्वेष्यभियातिरमित्र.' इति रत्नकोशोऽपि

---

१. 'मा' ग. पाठः

अभिघा(ती)तिपाठे अभिमुखं हन्तीति आवश्यके णिनिः । 'पॄ पालनपूरणयोः' 'ऋदोरप्' (३. ३. ५७) । परः । अर्तेर्बाहुलक आतिः, अरातिः । प्रतीपमर्थं प्रत्यर्थः, तद्योगादिनिः, प्रत्यर्थी । 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि (५. २. ८९) इति निपातनात् परिपन्थी नान्तः । छान्दसा अपि भाषाय प्रयुज्यन्ते ॥

**स्निग्धो वयस्यः सवयाः**

**क्षीर०** — स्निह्यति । वयसा तुल्यो वयस्यः । 'नौवयोधर्म—' (४. ४. ९१) इति यत् । समानं वयोऽस्य सवयाः ॥

**टीका०** — वयस्यत्रयं तुल्यवयसि । वयसा तुल्यो वयस्यः । 'नौवयोधर्म—' (४. ४. ९१) इत्यादिना यत् । स्निहेः क्तः । स्निग्धः । समा वयोऽस्येति सवयाः । सान्तः । 'ज्योतिर्जनपद—' (६. ३. ८५) इत्यादिन सभावः ॥

**अथ मित्रं सखा सुहृत् ।**

**क्षीर०** — मेद्यति स्निह्यति मित्रम् । समानं[1] ख्याति सखा । 'समाने ख्यश्च स चोदात्तः' (उ० ४. १३८) इतीन् डिच्च यलोपश्च ॥

**टीका०** — मित्रत्रयं मित्रे । सूर्ये मित्रं उक्तः । स पुमान् । 'अयमादिष्टलिङ्गः । 'इदं मित्रमयं मित्र' इति वात्स्यायने । स्त्रियां मित्रेति पाठः । समानः ख्यातः सखा । 'ख्या प्रकथने' । 'समाने ख्यः स चोदात्तः' (उ० ४ १३८) इति डः, टिलोप', समानस्य च सभावः । 'अनङ् सौ' (७. १ ९३) इत्यनङ् । दुर्हृद्वत् सुहृत् ॥

**सख्यं साप्तपदीनं स्याद्**

**क्षीर०** — सख्युर्भावः[2] सख्यम् । 'सख्युर्यः' (५. १. १२६) । सप्त पदानि क्रमात् सुप्तिङन्तानि व्याप्नोति साप्तपदीनम् । 'साप्तपदीनं सख्यम्

1. 'त्रशब्द उ' अ. पाठः. २. 'नवाप्नो' ग. घ. ङ. पाठः.

द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः ।
अभिमातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ १० ॥

क्षीर० — रेपयति रिपुः । 'रेपृ गतौ' । समानं पतत्येकार्थाभिनिवेशित्वात् सपत्नः । इयर्त्यरिः । द्वेष्टि द्विषन् । 'द्विषोऽमित्रे' (३. २. १३१) इति शता । द्वेष्टि तच्छीलो द्वेषणः । 'क्रुधमण्डार्थेभ्यश्च' (३. २. १५१) । युच् । दुष्टं हृदयमस्य दुर्हृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५. ४. १५०) इति साधुः । विरुद्धः पक्षो विपक्षः । अमत्यमित्रः । शातयति शत्रुः । 'प्रज्ञादिभ्यश्च' (५. ४. ३८) इति पक्षेऽण् । शात्रवः । अभिमन्यतेऽभिमातिः । प्रियते परः । 'पृङ् व्यायामे' । इयर्त्यरातिः । प्रतीपमर्थयते प्रत्यर्थी । परिपन्थयति परिपन्थी । 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (५. २. ८९) इति साधुः । प्रत्यवस्थाता प्रत्यनीकः परिपन्थकोऽपि ॥

टीका० — रिपूनविंशतिकं शत्रौ । रपत्यकीर्तिमिति रिपुः । 'रप लप व्यक्तायां वाचि' । 'रपेरिच्चोपधायाः' (उ० १. २६) इति कुः । वैरं विरोधः. तद्योगाद् वैरी इन्नन्तः । सपत्नशब्दोऽव्युत्पन्न इति केचित् । सपत्नीवत् सपत्नोऽपि । दुःख हेतुत्वात् । सपत्नीशब्दाद् इवार्थे 'व्यन् सपत्ने' (४. १. १४५) इति निपातनादकारप्रत्ययः । ईकारलोप इत्यपरः । अर्तेः 'अच इः' (उ० ४. १४०) । अरिः । 'द्विषोऽमित्रे' (३. २. १३१) इति शतृप्रत्ययः । द्विषन् । द्वेषणो नन्द्यादिल्युडन्तः । दुष्टं हृदयमस्येति दुर्हृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५. ४. १५०) इति निपातनाद् हृद्भावः । द्विड् मूर्धन्यपान्तः । 'सत्सूद्विष —' (३. २. ६१) इत्यादिना क्विप् । विरुद्धः पक्षोऽस्येति विपक्षः । न हितोऽहितः । 'अम गत्यादिषु' । 'अमेर्द्विषति चित्' (उ० ४. १७५) इति इत्रः । आमित्रः । ना । एकतकारश्च ।

"स्यातामममित्रौ मित्रे च सहजप्राकृतावपि" (स० २. श्लो० ३६)

इति माघः । चौरे दस्युरुक्तः । शातयतीति शत्रुः । जत्वादिः । शत्रुरेव शात्रवः । प्रज्ञादिः । यातेः क्तिच । अभियातिः । 'द्वेष्यभियातिरमित्र.' इति रत्नकोशोऽपि ।

१. 'मा' ग. पाठः.

अभिघा(ती)तिपाठे अभिमुखं हन्तीति आवश्यके णिनिः। 'पॄ पालनपूरणयोः'। 'ऋदोरप्' (३. ३. ५७)। परः। अर्तेर्बाहुलक आतिः, अरातिः। प्रतीपमर्थनं प्रत्यर्थः, तद्योगादिनिः, प्रत्यर्थी। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (५. २. ८९) इति निपातनात् परिपन्थी नान्तः। छान्दसा अपि भाषायां प्रयुज्यन्ते॥

**स्निग्धो वयस्यः सवयाः**

**क्षीर०**—स्निह्यति। वयसा तुल्यो वयस्यः। 'नौवयोधर्म—' (४. ४. ९१) इति यत्। समानं वयोऽस्य सवयाः॥

**टीका०**—वयस्यत्रयं तुल्यवयसि। वयसा तुल्यो वयस्यः। 'नौवयोधर्म—' (४. ४. ९१) इत्यादिना यत्। स्निहेः क्तः। स्निग्धः। समानं वयोऽस्येति सवयाः। सान्तः। 'ज्योतिर्जनपद—' (६. ३. ८५) इत्यादिना सभावः॥

**अथ मित्रं सखा सुहृत्।**

**क्षीर०**—मेद्यति स्निह्यति मित्रम्। समानं ख्याति सखा। 'समाने ख्यश्च स चोदात्तः' (उ० ४. १३८) इतीन् डिच्च यलोपश्च॥

**टीका०**—मित्रत्रयं मित्रे। सूर्ये मित्रे उक्तः। स पुमान्। 'अयमाविष्टलिङ्गः। 'इदं मित्रमयं मित्र' इति वात्स्यायने। स्त्रियां मित्रेति पाठः। समानः ख्यातः सखा। 'ख्या प्रकथने'। 'समाने ख्यः स चोदात्तः' (उ० ४. १३८) इति डः, टिलोप, समानस्य च सभावः। 'अनङ् सौ' (७. १. ९३) इत्यनङ्। दुर्हृद्वत् सुहृत्॥

**सख्यं साप्तपदीनं स्याद्**

**क्षीर०**—सख्युर्भावः सख्यम्। 'सख्युर्यः' (५. १. १२६)। सप्त पदानि क्रमात् सुप्तिङन्तानि व्याप्नोति साप्तपदीनम्। 'साप्तपदीनं सख्यम्'

---

१. 'त्रशब्द उ' अ. पाठः. २. 'नवाप्नो' ग. घ. ङ. पाठः.

(५. २. २२) इति साधुः। तद्योगात् सखापि साप्तपदीनः। सौहृदं सौहार्दं मैत्री सौहृदय्यमजर्यं च ॥

टीका० — सख्यद्वयं मैत्र्याम्। सख्युर्भावः सख्यम्। 'सख्युर्यः' (५. १. १२६) इति यः। 'साप्तपदीनं सख्यम्' (५. २. २२) इति निपातनात् साप्तपदीनम् ॥

अनुरोधोऽनुवर्तनम् ॥ १२ ॥

क्षीर० — इच्छानुवर्तनमित्यर्थः। 'अनौ रुध कामे' ॥

टीका० — अनुरोधद्वयमानुकूल्ये। 'रुधिर् आवरणे'। 'वृतु वर्तने'। घञ्ल्युटौ ॥

यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः।
चारश्च गूढपुरुषश्च

क्षीर० — देशकालोचितो वर्ण आकारो जातिवर्णनं वास्य यथार्हवर्णः। प्रकर्षेण गुप्तो निधीयते परेषु प्रणिधिः। अपच्छन्नः सर्पत्यपसर्पः। चरति चरः चारश्च। ज्वलादित्वाण्णो वा। स्पशति बाधते परान् स्पशः ॥

टीका० — यथार्हवर्णसप्तकं चरे। वणिक्कृषीवलभिक्षुकादिरूपस्थायिनि चरे आद्यं नामद्वयमिति केचित्। वर्णः प्रकारः। यथा येन वर्णेन प्रकारेण परचक्रं ज्ञातुं शक्नोति तत्प्रकारवानित्यर्थः। निधिवत् प्रणिधिः। अपकृष्टं सर्पतीत्यपसर्पः। चरति जानाति परबलमिति चरः। अच्। 'स्पश बाधनस्पर्शनयोः'। पचाद्यच्। स्पशस्तालव्यान्तो रेफशून्यश्च। प्रज्ञाद्यणि चारः। गूढः पुरुषो गूढपुरुषः ॥

आप्तप्रत्ययितौ समौ ॥ १३ ॥

क्षीर० — आप्यते स्माप्तः अविसंवादिवाक्। प्रत्ययो विश्वासः सञ्जातोऽत्र[1] प्रत्ययितः ॥

---

१. 'य आयंसा सञ्जातास्य प्र' ग. पाठः.

टीका० — आप्तद्वयं सभ्ये। आप्नोतेः क्तः। आप्तः। तारकादित्वादितच्। प्रत्ययितः॥

**सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि।**
**स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि॥ १४॥**

क्षीर० — संवत्सरः कालोपलक्षणं[1], तद् वेद सांवत्सरः। 'तदधीते तद् वेद' (४. २. ५९) इत्यण्। ज्योतींषि ग्रहादीन् वेद ज्यौतिषिकः। 'क्रतूक्थादिसूत्रान्ताट्ठक्' (४. २. ६०)। दैवं पूर्वकृतं कर्म जानाति दैवज्ञः। मुहूर्तं वेद मौहूर्तिकः। ऋतूक्थादित्वाट्ठग् वा। कालादिज्ञानमस्यास्ति इति ज्ञानी। कृतान्तं वेद कार्तान्तिकः॥

टीका० — सांवत्सराष्टकं ज्यौतिषिके। 'तदधीते तद् वेद' (४. २. ५९) इत्यणि सांवत्सरः। ज्योतिरधिकृत्य कृतो ग्रन्थो ज्यौतिषम्। 'अधिकृत्य कृते ग्रन्थे' (४. ३. ८७) इत्यण्। संज्ञापूर्वकत्वाद् वृद्ध्यभावः। ततः 'क्रतूक्थादिसूत्रान्ताट्ठक्' (४. २. ६०) इत्युक्थादित्वात् 'तदधीते तद् वेद' (४. २. ५९) इत्यर्थे ठक्। ज्यौतिषिकः। एवं मौहूर्तिकः। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति मौहूर्तः। सर्वज्ञवद् दैवज्ञः। गणयतीति गणकः। शुभाशुभज्ञानयोगाज् ज्ञानी। अत इनिः। कृतान्तो दैवं, ततः पूर्ववट्ठक्। कार्तान्तिकः॥

**तान्त्रिको ज्ञातसिद्धान्तः**

क्षीर० — तन्यते तन्त्र्यते वानेन तन्त्रं पारमेश्वरवैद्यकज्योतिषादि। तद् वेद तान्त्रिकः। सिद्धो निवारितविप्रतिपत्तिरन्तो निष्ठा[2] अत्र सिद्धान्तः॥

टीका० — यस्यकस्यचिच्छास्त्रज्ञे तान्त्रिकद्वयम्। 'तदधीते तद् वेद' (४. २. ५९) इत्यर्थे क्रतूक्थादिठकि तान्त्रिकः॥

१. 'णं, तं' ग. पाठः. २. 'रपद' क. छ. पाठः.

**सत्री गृहपतिः समौ ।**

क्षीर० — सीदन्त्यस्मिन् सत्रं गृहं सदा दानं च ॥

टीका० — सत्रिद्वयं दानपतौ । सदेरौणादिकः ष्ट्रन् । द्वितकारं दन्त्यादि च ।

"सत्रं यज्ञे सदा दाने छादनारण्ययोरपि"

इति धरणिः । तद्योगात् सत्री ॥

**लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥**

क्षीर० — लिपिं करोति । 'दिवाविभा—' (३. २. २१) इत्यादिना टः । अक्षरैर्वित्तोऽक्षरचणः, अक्षरचुञ्चुश्च । 'तेन वित्तश्चुञ्चुप्चणपौ' (५. २. २६) ॥

टीका० — लिपिकरचतुष्कं लेखके । दिवाकरवल्लिपिकरः । 'तेन वित्तश्चुञ्चुप्चणपौ' (५. २. २६) इति चणप्चुञ्चुब्भ्यामक्षरचणाक्षरचुञ्चू । लिखतेः ण्वुल् । लेखकः ॥

**लिखिताक्षरविन्यासो लिपिर्लिबिरुभे स्त्रियौ ।**

क्षीर० — अक्षरविन्यासे त्रयं वर्तते । लिख्यते स्म लिखितम् । लिप्यतेऽनया पत्रं लिपिः । जपादित्वात् पक्षे वत्वम् ॥

टीका० — पुस्तकादौ लिखितेऽक्षरसंस्थाने आरोपणे विन्यासे वा लिपिद्वयम् । लिखितमक्षरसंस्थानं च लिपेर्नामेति कृत्वा नामचतुष्टयमित्यन्ये । 'लिप उपदेहे' । किः । लिपिः । पृषोदरादिवत्वे लिबिः । ङीषि दीर्घान्ते च ॥

**स्यात् सन्देशहरो दूतः**

क्षीर० — सन्दिश्यते सन्देशो मुखस्वरूपम् । दूयतेऽनेन यथोक्त-वादित्वात् पर इति दूतः ॥

टीका० — सन्देशहरद्वयं दूते । 'हरतेरनुद्यमनेऽच्' (३. २. ९) । सन्देशहरः । 'दुद्रु गतौ' । 'दुतनिभ्यां दीर्घश्च' (उ० ३. ९०) इति क्तः, दीर्घश्च ॥

दूत्यं तद्भावकर्मणोः ॥ १६ ॥

क्षीर० — 'दूतवणिग्भ्यां च' (वा० ५. १. १२६) इति वक्तव्याद् यः ॥

टीका० — दूतत्वे दूतकर्मणि च दूत्यम् । 'दूतवणिग्भ्यां चेति वक्तव्यम्' (वा० ५. १. १२६) इति यः । ब्राह्मणादेराकृतिगणत्वात् ष्यञि दौत्यमिति भाषावृत्तिः । 'दूत्यं तद्भागकर्मणी' इति पाठ इति केचित् । तत्र 'दूतस्य भागकर्मणी' (४. ४. १२०) इति यत् । भागेन चांशो वण्टक इति गृह्यते(?) ॥

अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

क्षीर० — अध्वानं गच्छत्यध्वनीनः । 'अध्वनो यत्खौ' (५. २. १७) । 'आत्माध्वानौ खे' (६. ४. १६९) इति प्रकृतिभावः । पन्थानं गच्छति पथिकः । 'पथः ष्कन्' (५. १. ७५) । पन्थानं नित्यं गच्छति पान्थः । 'पन्थो ण नित्यम्' (५. १. ७६) इति णः पन्थादेशश्च । अदूर-विप्रकर्षत्वादनयोः पर्यायत्वम् ॥

टीका० — अध्वनीनपञ्चकं पथिके । 'अध्वनो यत्खौ' (५. २. १७) । अध्वनीनाध्वन्यौ । 'अन्तात्यन्त—' (३. २. ४८) इत्यादिना डः । अध्वगः । 'पन्थो ण नित्यम्' (५. १. ७६) इति णः पन्थादेशश्च । पान्थः । 'पथः ष्कन्' (५. १. ७५) इति ष्कन् । षकारो ङीषर्थः । पथिकः ॥

स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः

१. 'चि' ख. पाठः. २. 'र्ण' च. पाठः.

क्षीर० — स्वं विद्यतेऽस्य स्वामी । 'स्वामिन्नैश्वर्ये' (५. २. १२६) इति साधुः । अमा सह समीपे वा भवोऽमात्यः । 'अमेहक्वतसित्रेभ्यस्त्यप्' (वा० ४. २. १०४) । कूयते मृग्यते कोशः । कुष्णातेः कोष इत्येके । राजते राष्ट्रम् । दुःखेन गम्यतेऽस्मिन् दुर्गम् । 'सुदुरोरधिकरणे च' (वा० ३. २. ४८) इति डः । बलन्त्यनेनेति बलम् । अङ्गान्यारम्भकाणि । प्रक्रियन्तेऽनया प्रकृतिः ॥

**पौराणां श्रेणयोऽपि च ।**

क्षीर० — एकमुख्यः सजातीयसमूहः श्रेणिः । प्रकृतयो राज्याङ्गानीत्येव । यत् कात्यः —

"अमात्याश्चापि पौराश्च सद्भिः प्रकृतयः स्मृताः" ॥

टीका० — स्वाम्याद्याः सप्त राज्याङ्गान्युच्यन्ते । प्रकृतिवाच्याश्चैते । प्रकृतिशब्दस्तु पौरश्रेणिष्वपि वर्तते । तत्र स्वामी राजा, अमात्यो मन्त्री, सुहृन्मित्रं, सुवर्णादिमयो भाण्डागारः कोषः, जनपदवती भूमी राष्ट्रं, पर्वतोदकादिभिर्दुर्गमं पुरं दुर्गम् ॥

**सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥**
**षड् गुणाः**

क्षीर० — सन्धानमेकत्वं सन्धिः । विरुद्धं ग्रहणं स्वस्थानात्[3] परमण्डले दाहविलोपादि विग्रहः । यानं प्रयातव्यं प्रति यात्रा । आसनं विग्रहादिनिवृत्तिः । द्विप्रकारं द्वैधम् । 'द्वित्र्योश्च धमुञ्' (५. ३. ४५) । एकेन सन्धायान्यत्र यात्रेत्यर्थः । यद्वा —

"बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयेत् ।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः" ॥

अशक्त्या बलवदाश्रयणमाश्रयः । गुणा राज्योपकारकाः ॥

१. 'त्रिविधियोंऽव्ययात्मकः । कू', २. 'मुह्यते' ख. पाठः. ३. 'संस्था' ग. घ., 'स्वात् स्था' क. पाठः.

**टीका०** — सन्ध्यादिशब्दे गुणशब्दः। तत्रोपहार[1]लक्षणः पणबन्धः सन्धिः। धाञः 'उपसर्गे घोः किः' (३. ३. ९२)। अपहार[2]लक्षणो विग्रहः। ग्रहेः दरवदप्। स्वशक्त्युपचये परस्य व्यसने वा परजिगीषया प्रयाणं यानम्। यातेर्ल्युट्। देशकालाद्यपेक्षया युद्धाभावादुपसंहृतप्रयाणस्य स्थितिरासनम्। आसेर्ल्युट्। बलिनोर्द्विषतोर्मध्ये काकाक्षिवदलक्षितस्योभयत्र वचनेनात्मसमर्पणं द्वैधम्। 'द्वित्र्योश्च धमुञ्' (५. ३. ४५)। तदुक्तं —

"बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयेत्।
द्वैधभावेन वर्तेत काकाक्षिवदलक्षितः" ॥

रिपुणोच्छिद्यमानस्य यद्धर्मविजयिबलवदाश्रयणं स आश्रयः। श्रयतेः 'एरच्' (३. ३. ५६)। तदुक्तं —

"यदा परब(ला? लेना)नुगमनीयतमो भवेत्।
तदा तु संश्रयेत् क्षिप्रं धार्मिकं बलिनं नृपम्" ॥

**शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः**

**क्षीर०** — **शक्यन्ते जेतुमाभिः शक्तयः। कोशदण्डर्द्धिः प्रभुशक्तिः। उद्यम्य सहनमुत्साहशक्तिः। मन्त्रः पञ्चाङ्गो मन्त्रशक्तिः ॥**

**टीका०** — तिस्रः शक्तयः प्रभावशक्तिरुत्साहशक्तिर्मन्त्रशक्तिश्चेति। तत्र कोशदण्डबलं प्रभुशक्तिः। बलवती विक्रमचेष्टा उत्साहशक्तिः। सन्ध्यादीनां यथावत्प्रयु(क्त? क्ति)ज्ञानबलं मन्त्रशक्तिः ॥

**क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥**

**क्षीर०** — **प्रागवस्थातः शक्तिसिद्ध्योरपचयः क्षयः। साम्यं स्थानम्। उपचयो वृद्धिः। नीतेरन्यत्र धर्मादिस्त्रिवर्गः ॥**

**टीका०** — क्षयत्रयं त्रिवर्गवाच्यम्। अयं नीतिवेदिनां त्रिवर्गः,

१., २. 'का' क. ग. ङ. च. छ. पाठः.

धर्मार्थकामैरितरेषाम्। आत्मनोऽपचयः शत्रुकर्मोपचयनिमित्तकः क्षयः। तद्विपर्ययो वृद्धिः। उभयोः साम्यं स्थानम्। तदुक्तं —

"परकर्मोदये नेतुः क्षयो वृद्धिर्विपर्यये।
तुल्यकर्मफले स्थानं कर्मसु ज्ञेयमात्मनः॥"

इति। एते च क्षयादयोऽष्टवर्गस्यापचयोपचयसाम्याद् भवन्ति।

"कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्।
खन्याकरब(ला)दानं (च?) शून्यानां च निवेशनम्॥"

इत्येवाष्टवर्गः॥

**स प्रतापः प्रभावश्च यत् तेजो दण्डकोशजम्।**

क्षीर०—प्रतपत्यनेन प्रतापः। प्रभवत्यनेन प्रभावः। तेज उत्कटत्वम्। यद् भरतः—

"अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्।
प्राणात्ययेऽप्यसहनं तत् तेजः समुदाहृतम्"॥

टीका०—दमो दण्डः। तात्स्थ्याद् बलमपि। ततो जातं कोशाच्च यत् तेजस्तत्र प्रतापद्वयम्। तपेः घञ्। प्रतापः। 'श्रिणीभुवोऽनुपसर्गे' (३. ३. २४) इति घञ्। भावः। ततः प्रकृष्टो भावः प्रभावः। प्रादिसमासः॥

**सामदाने भेददण्डावित्युपायचतुष्टयम्॥ २०॥**

क्षीर०—उपैत्यनेनोपायः। मायोपेक्षेन्द्रजालान्यत्रैवान्तर्भूतानि॥

टीका०—(भेद? साम)चतुष्कमुपायाख्यम्। यद्यपि

"साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः॥"

१. 'द' ख. पाठः.

इति। तथापि मायोपेक्षे दण्डान्तर्गते। इन्द्रजालं च भेदेऽन्तर्गतम्। तेनापरत्रयं पृथङ् न कृतम्। तत्र परस्माद् विश्लेषणं भेदः। दण्डः पीडा। साम अनुकूलनम्। दानमुपहारः॥

**साहसं तु दमो दण्डः**

**क्षीर० — सहसि बले भवं साहसम्॥**

**टीका०** — नाममात्रेणोक्तानां प्रत्येकं पर्यायमाह। साहसत्रयं **दण्डे**। सहसा बलेन निर्वृत्तं साहसम्। 'तेन निर्वृत्तम्' (४. २. ६८) इत्यण्। दमनं दमः। 'दम उपशमे'। ण्यन्ताद् घञ्। 'णेरनिटि' (६. ४. ५१) इति णिलोपः। 'मितां ह्रस्वः' (६. ४. ९२)। अस्मादेव धातोः 'अमन्ताड्डः' (उ० १. ११९)। दण्डः॥

**साम सान्त्वम्**

**क्षीर० — स्यति वैरं सामयति वा साम प्रियवचनादि[1]। 'साम सान्त्वने'। 'सान्त्व सामप्रयोगे'॥**

**टीका०** — सामद्वयं **सामनि**। वेदे सामोक्तम्। अत्यर्थमधुरे सान्त्वम्॥

**भेदोपजापौ** **अथो समौ।**

**क्षीर० — संहतयोर्भेदनं भेदः। उपांशु जपनमुपजापः॥**

**टीका०** — भेदद्वयं **भेदे**। भिदेर्जपेश्च घञ्। दानं च ब्रह्मवर्ग एवाभिहितम्। तेनात्र नोक्तम्॥

**उपधा धर्माद्यैर्यत् परीक्षणम्॥ २१॥**

**क्षीर० — उपधीयते समीपे ढौक्यते परीक्षार्थमुपधा। धर्मार्थका-**

१. 'नि' ग. घ. ङ. पाठः.

मभयोपन्यासेनाशयान्वेषणम् । यत् कौटिल्यः — 'उपधाभिः शौचाचारपरिज्ञानममात्यानाम्' (अधि० १. अध्या० १०) ॥

टीका० — धर्माद्यैर्धर्मार्थकामभेदै राज्ञोऽमात्यानां परीक्षणमुपधा । अन्तर्धावत् ॥

**पञ्च त्रिषु**

क्षीर० — निश्शलाकान्ता वक्ष्यमाणा वाच्यलिङ्गाः ॥

टीका० — निश्शलाकान्ताः पञ्च त्रिषु ॥

**अषडक्षीणो यस्तृतीयाद्यगोचरः ।**

क्षीर० — न षडक्षीणि यत्र अषडक्षीणो मन्त्रः । 'अषडक्षाशितङ्गु—' (५. ४. ७) इति स्वार्थे खः । यदाहुः — 'षट्कर्णो भिद्यते मन्त्रः' । अत एव तृतीयादीनां नृणामगोचरः ॥

टीका० — द्वाभ्यां यो मन्त्रः असावषडक्षीणः । नास्मिन् षडक्षीणि विद्यन्त इत्यषडक्षीणः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् —' (५. ४. ११३) इति षच् समासान्तः । ततः 'अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः' (५. ४. ७) ॥

**विविक्तविजनच्छन्ननिश्शलाकास्तथा रहः ॥ २२ ॥**
**रहश्चोपांशु चालिङ्गे**

क्षीर० — विविच्यते पृथक्क्रियते स्म विविक्तम् । विगतो जनोऽत्र विजनम् । छाद्यते स्म छन्नम् । निर्गता शलाका व्यथकोऽत्र निश्शलाकः । रहयति रह इत्येके । रहश्शब्दः सान्तः क्लीबे । अन्योऽव्ययम् , उपांशु च । अलिङ्गे अव्यये द्वे । अनुरहसं च ॥

टीका० — विविक्तसप्तकं विजने । 'विचिर् पृथग्भावे' । क्तः । 'विविक्तं त्रिष्वि'ति रुद्रः । विगतो जनोऽस्मादिति विजनः । 'वा दान्तशान्तपूर्णदस्त-

स्पष्टच्छन्नज्ञप्ताः' (७. २. २७) इति निपातनाच्छन्नः। निर्गता शलाका अस्मादिति निश्शलाकः। शलाका शारिका मदनशारिकेति पर्यायाः।

"शल्यं श्वाविच्छलाका स्याच्छारा मदनशारिका"

इति तालव्यादौ रभसः। रमन्तेऽत्रेति रहः। 'देशे ह च' (उ० ४. २१६) इत्यसुन् हश्चान्तादेशः। रहः। सान्तं क्लीबे। द्वितीयो रह उपांशुशब्दश्चालिङ्गे अव्यये॥

**रहस्यं तद्भवे त्रिषु।**

**क्षीर०— रहसि भवं रहस्यम्। दिगादित्वाद् यत्॥**

**टीका०— रहोभवं** रहस्यम्। दिगादियत्॥

**समौ विस्रम्भविश्वासौ**

**क्षीर० — विस्रम्भणं विस्रम्भः। विश्वास आश्वासः॥**

**टीका०** — विस्रम्भद्वयं विश्वासे। 'स्रन्भु विश्वासे'। दन्त्यादिः। घञ्। विस्रम्भः। 'श्वस प्राणने'। घञ्। विश्वासः॥

**भ्रेषो भ्रंशो यथोचितात्॥ २३॥**

**क्षीर० — यथोचिताद् रूपाद् भ्रंशोऽधःपातो भ्रेषः। 'भ्रेष चलने'॥**

**टीका०** — यथोचिताद् यथाप्राप्ताद् भ्रंशो भ्रेषः। मूर्धन्यषः। 'भ्रेषृ चलने'। घञ्॥

**अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम्।**

**क्षीर०— नियतमीयते न्यायः। 'परिन्योर्नीणोः—' (३. ३. ३७) इति घञ्। कल्पनं कल्पः सामर्थ्यम्। दिश्यमानस्योचितस्य रूपं देशरूपम्। प्रशस्तं देशनं वा। सम्यगञ्जसा सत्यमत्र समञ्जसम्॥**

**टीका०** — अभ्रेषपञ्चकं न्याये। नञा अभ्रेषः। 'परिन्योर्नीणोर्द्यूताभ्रेषयोः' (३. ३. ३७) इति घञ्। न्यायः। प्रलये कल्प उक्तः। सङ्गतमञ्ज-

१. 'शिदर्शनं' ग. घ. पाठः.

स्तत्त्वं समञ्जसम्। 'अच् प्रत्यन्ववपूर्वात् सामलोम्नः' (५. ४. ७५) इत्यत्र अजिति योगविभागादच् ॥

**युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥**
**न्याय्यं च त्रिषु षट्**

क्षीर० — उपाय एवौपयिकम्। विनयादित्वाद् 'उपायाद्ध्रस्वश्च' (ग० ५. ४. ३४) इति ठक्। अभिनीयते स्माभिनीतम्। तद्वन्न्याय्यं न्यायादनपेतम्। 'धर्मपथ्यर्थ—' (४. ४. ९२) इति यत्। उचितं साम्प्रतं च ॥

टीका० — युक्तषट्कं न्याय्ये। औचित्य इति यावत्। युजेः क्तः। युक्तम्। औपयिकमिति। विनयादिषु 'उपायाद्ध्रस्वश्च' (ग० ५. ४. ३४) इति ठग्घ्रस्वत्वे। स्वार्थे 'पोरदुपधात्' (३. १. ९८) इति यति लभ्यम्। भजेः शानचि भजमानम्। नयतेः क्तः। अभिनीतम्। न्यायादनपेतमिति न्याय्यम्। यथा भजमानाभिनीते युक्ताभिधायके तथा न्याय्यमपीति वच्छब्दस्यार्थः। युक्तषट्कं[1] त्रिषु। न्यायागते द्रव्यादौ युक्तषट्कम्, अभ्रेषपञ्चकं च न्याय्य इति केचित् ॥

**सम्प्रधारणा तु समर्थना।**

क्षीर० — सम्प्रधार्यते भ्रष्टं स्वरूपमापद्यतेऽनयेति सम्प्रधारणा, युक्तायुक्तपरीक्षा ॥

टीका० — सम्प्रधारणद्वयं समर्थने। निर्धारणे इत्यर्थः ॥

**अपवादस्तु निर्देशो निदेशः शासनं च तत् ॥ २५ ॥**
**शिष्टिराज्ञा च**

क्षीर० — अपनम्य वदनमपवाद मुखस्वरूपम्। निश्शेषेण देशनं निर्देशः। शासनं नियोजनं शिष्टिः। आज्ञापनमाज्ञा ॥

टीका० — अपवादषट्कमाज्ञायाम्। अपवदनमपवादः। घञ्। दिशेर्घञि निर्देशनिदेशौ। शासेर्ल्युटि शासनम्। शिषेः क्तिन्। शिष्टिः। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। आज्ञा ॥

---

१. 'कं न्या' ग. घ. पाठः.

**संस्था तु मर्यादा धारणा स्थितिः ।**

क्षीर० — सन्तिष्ठतेऽनया संस्था । मर्या इति सीमार्थेऽव्ययं, तत्र दीयते मर्यादा ॥

टीका० — संस्थाचतुष्कं **मर्यादायाम्** । न्यायपथस्थितावित्यर्थः । आज्ञावत् संस्था । पर्याङ्पूर्वाद् दाञो मर्यादा । नैरुक्तो वर्णविपर्ययः । धारेः 'ण्यासश्रन्थो युच्' (३. ३. १०७) । धारणा । तिष्ठतेः क्तिन् । स्थितिः ॥

**आगोऽपराधो मन्तुश्च**

क्षीर० —आ अगति कुटिलं गच्छत्यागः, असन्तः क्लीबे । मन्यते हृदि मन्तुः ॥

टीका० — आगस्त्रयमपराधे । 'इण आगोऽपराधे' (उ० ४. २१३) इत्यनेन इणोऽसुन् आगादेशश्च । 'अभ्यर्णमागस्कृतमस्पृशद्भिः' (स० २. श्लो० ३२) इति रघुः । अपराधनमपराधः । जन्तुवन्मन्तुः ॥

**समे तूद्दानबन्धने ॥ २६ ॥**

क्षीर० — उद्दीयतेऽस्मिन् उद्दानम् । 'दो अवखण्डने' 'देङ् रक्षणे' वा ॥

टीका०— उद्दानद्वयं **बन्धने** । 'दो अवखण्डने' । भावे ल्युट् । उद्दानम् । 'बन्ध बन्धने' । ल्युट् । बन्धनम् ॥

**द्विपाद्यो द्विगुणो दण्डः**

क्षीर० — द्वौ पादौ प्रमाणमस्य द्विपाद्यः । 'पणपादमाषशताद् यत्' (५. १. ३४) । प्राण्यङ्गत्वाभावात् 'पद्यत्यतदर्थे' (६. ३. ५३) इति पद्भावाभावः ॥

टीका० — **यथोचिताद् द्विगुणो दण्डो** द्विपाद्याख्यः । यथा धान्य-

षड्भागहरणे प्राप्ते[1] द्विभागहरणम् । द्वौ पादौ परिमाणमस्येति 'पणपादमाषशताद् यत्' (५. १. ३४) । 'पादः पद्' (६. ४. १३०) इति प्राण्यङ्गग्रहणादत्र[2] न पद्भावः ॥

**भागधेयः करो बलिः ।**

क्षीर० — भाग एव भागधेयः । 'भागरूपनामभ्यो[3] धेयः' (वा० ५. ४. ३६)। कीर्यते प्रत्येकं करः । बलन्तेऽनेन बलिः । 'राजग्राह्यः षड्भागादिः भागः। प्रत्येकं स्थावरजङ्गमादादेयः करः। नियोज्योपजीव्यो बलि'रित्यवान्तरभेदोऽर्थशास्त्रोक्तो नाश्रितः ॥

टीका० — राजदेये करे भागधेयत्रयम् । प्राग् व्युत्पादितम् ॥

**घट्टादिदेयं शुल्कोऽस्त्री**

क्षीर० — घट्टन्तेऽनेन घट्टयति वा घट्टो नदीतरणस्थानम् । आदिशब्दाद् गुल्मप्रतोल्यादौ प्रावेश्यनैष्क्रम्यद्रव्येभ्यो राजग्राह्यो भागः शुल्कः, शलति[4] शलयति वा सुखेन यात्यनेनेति ॥

टीका० — घट्टो वर्त्म । आदिना गुल्मादि । तत्र रक्षार्थं राजदेये शुल्कोऽस्त्री, तालव्यादिश्च ॥

**प्राभृतं तु प्रदेशनम् ॥२७॥**
**उपायनमुपग्राह्यमुपहारस्तथोपदा ।**

क्षीर० — प्रकर्षेणाराधनार्थमाभ्रियते ढौक्यते स्म प्राभृतम् । प्रदिश्यते प्रदीयते प्रदेशनम् । उप समीपमयन्तेऽनेनोपायनम्[5] । उपगृह्यते उपग्राह्यम् । उपह्रियते उपहारः । उपदीयते उपदा । कौशलिकं ढौकनिकं च । उपदोत्कोच इत्येके ।

"उपप्रदानमुत्कोच उपदा लञ्चया[6] समाः" ॥

१. 'प्तऽपि द्वि' ङ. छ. पाठः. २. 'दन्यत्र' ख. ङ. छ. पाठः. ३. 'भ्यः स्वार्थे धे', ४. 'व' ख. पाठः. ५. 'पे अय' ग. पाठः, ६. 'ञ्च' ख. ङ. पाठः.

टीका० — प्राभृतद्वयं पाहुड इति ख्याते । भृञः क्तः । प्राभृतम् । उपायनचतुष्कमुत्कोचादावुपहारे । एतेः ल्युट् । उपायनम् । ग्रहेर्ण्यति उपग्राह्यम् । हारवदुपहारः । अङि उपदा । षडेव केचिदुपहारे वर्णयन्ति ॥

**यौतकादि तु यद् देयं सुदायो हरणं च तत् ॥ २८ ॥**

क्षीर० — युतयोर्वधूवरयोरिदं यौतकम् । आदिशब्दाद् बन्धुदत्तादि । सुष्ठु दीयते सुदायः । स दाय इत्येके । यच्छाश्वतः —

"यौतकादिधनं दायो दायो दानं च कथ्यते" ।

ह्रियते हरणम् ॥

टीका० — कन्यादानकाले जामात्रे दानं यौतकं, तत्र दायद्वयम् । युतकं योनिसम्बन्धः, तत्र भवं यौतकम् । अन्तःस्थादिः । आदिना व्रतभिक्षादिः । ददातेः घञ् । दायः । हरतेः ल्युट् । हरणम् ॥

**तत्कालस्तु तदात्वं स्यात्**

क्षीर० — स चासौ कालश्च तत्कालः । तदेत्यस्य भावस्तदात्वम् ॥

टीका० — तत्कालद्वयं वर्तमाने काले ॥

**स्यायतिः काल उत्तरः ।**

क्षीर० — आ एत्यायतिरागामिकालः ॥

टीका० — भाविनि काले आयतिः ॥

**सान्दृष्टिकं फलं सद्यः**

क्षीर० — सन्दृष्टं प्रत्यक्षं प्रयोजनमस्य सान्दृष्टिकम् । समानेऽहनि सद्यस्तात्कालिकं फलम् । 'सद्यःपरुत्परारि —' (५. ३. २२) इति साधुः ॥

१. 'के । हि' क. ख पाठः. २ 'णम् । यल्लक्ष्य — सत्त्वानुरूप हरणीकृतश्रीः तत्का' ख. पाठः.

टीका० — सद्य इति तात्कालिकं फलं सान्दृष्टिकम् । अध्यात्मादित्वाट्ठक् ॥

**उदर्कः फलमुत्तरम् ॥ २९ ॥**

क्षीर० — उदृच्यतेऽभिलाषात् स्तूयते उदर्कः ॥

टीका० — भावि फलमुदर्कः । अर्कवत् ॥

**अदृष्टं वह्नितोयादि**

क्षीर० — भयमित्युत्तरेण योज्यम् । आदिशब्दात् पिशाचाशन्यादि ॥

टीका० — वक्ष्यमाणेन भय(सम्बन्धे?शब्दे)न सम्बन्धाद् वह्नितोयाद्यदृष्टं[1] भयमुच्यते, दैवजनितत्वात् । आदिना वृष्टिशलभमूषिकादि । भयहेतुत्वाद् भयम् ॥

**दृष्टं स्वपरचक्रजम् ।**

क्षीर० — स्वराष्ट्रचौराटविकादिभयं[2] परराष्ट्राद् दाहविलोपादिभयं च ॥

**महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥**

क्षीर० — स्वपक्षाद् राजपुत्रादेरहेरिव गृहस्थिताद् भयम् ॥

टीका० — स्वपक्ष[3]मात्रप्रभवं यद् राज्ञां युद्धे भयं, तदहेरिव भयमहिभयम् । पक्षशब्देन भृत्यादयः सप्त गृह्यन्ते । तथाहि —

"निजोऽथ मैत्रश्च समाश्रितश्च सम्बन्धजः कार्यसमुद्भवश्च ।
भृत्यो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति[4]" ॥

**प्रक्रिया त्वधिकारः स्यात्**

---

१. 'ष्ट' क. ख. ग ङ. छ. पाठः. २. 'चो', ३. 'क्षजाद् य' ख. पाठः. ४. 'भजन्ति' ङ. छ. पाठः.

क्षीर० — प्रारम्भात् करणं प्रक्रिया। अधिक्रियते प्रस्तूयतेऽधिकारः, व्यवस्थास्थापनमित्यर्थः ॥

टीका० — नृपादीनां चामरोद्धू(ल?न)नादिप्रतिपत्तौ प्रक्रियाद्वयम्। 'कृञः श—' (३. ३. १००) इति शः। 'रिङ् शयग्लिङ्क्षु' (७. ४. २८) इति रिङ्। 'अचि श्नुधातु —' (६. ४. ७७) इत्यादिना इयङ्। प्रक्रिया ॥

चामरं तु प्रकीर्णकम्।

क्षीर० — चमर्या इदं चामरम्। प्रकीर्यते विक्षिप्यते प्रकीर्णकम् ॥

टीका० — चामरद्वयं चामरे। चमरो मृगः, तस्यायमिति चामरः। 'कॄ विक्षेपे'। कर्मणि क्तः। ततः स्वार्थे कन्। प्रकीर्णकम् ॥

नृपासनं यत् तद् भद्रासनं

क्षीर० — भद्रस्यासनं, भद्रं रूप्यादिमयं वा आसनं भद्रासनम् ॥

टीका० — नृपासनद्वयं नृपासनसामान्ये ॥

सिंहासनं तु तत् ॥ ३१ ॥

क्षीर० — हेम्न इदं हैमं सिंहोपलक्षितमासनम् ॥

टीका० — तदेवासनं सौवर्णं सिंहासनाख्यम् ॥

छत्रं त्वातपत्रं

क्षीर० — छाद्यतेऽनेन छत्रम्। आतपात् त्रायत आतपत्रम् ॥

टीका० — छत्रद्वयं छत्रे। छादेः ष्ट्रन्। छद्मवद् ह्रस्वत्वम्। आतपात् त्रायत इत्यातपत्रम् ॥

---

१. 'च' ख. च. पाठः.

राज्ञस्तु नृपलक्ष्म तत् ।

क्षीर० — तत् छत्रम् । यल्लक्ष्यं —

"नृपतिककुदं दत्त्वा यूने सितातपवारणम्" ॥

टीका० — राज्ञश्छत्रं कनकदण्डं नृपलक्ष्म । नान्तम् ॥

भद्रकुम्भः पूर्णकुम्भः

क्षीर० — भद्रार्थे भद्रार्थो वा कुम्भः ॥

टीका० — भद्रकुम्भद्वयं पूर्णकुम्भे ॥

भृङ्गारः कनकालुका ॥ ३२ ॥

क्षीर० — भृज्यते भ्रियते वा भृङ्गारः । सौवर्णी आलुका ॥

टीका० — भृङ्गारद्वयं कनकघटादौ । कनकस्यालुका कर्करी कनकालुका ॥

निवेशः शिबिरं षण्ड

क्षीर० — निवेश्यते सन्निवेशेन स्थाप्यते निवेशः सैन्यावासः । शेरतेऽस्मिञ्छिबिरम् । स्कन्धावारोऽपि ॥

टीका० — आगन्तुकसैन्यस्य[1] वाटके कटके वा निवेशद्वयम् । विशेर्घञ् । निवेशः । 'अजिरशिशिरशिबिर —' (उ० १. ५६) इत्यादिना शेतेर्निपातनाच्छिबिरम् । अनेकार्थत्वादन्तःपुरेऽपि[2] ॥

मज्जनं तूपरक्षणम् ।

क्षीर० — सत् शोभनं जन्यते सज्जनं, सज्ज्यतेऽनेनेति वा । उपरक्ष्यतेऽनेनोपरक्षणं सैन्यस्य प्रगुणीकरणं गुल्मको वा ॥

१. 'स्या' ज., 'स्य दाठके' ख. पाठः. २. 'राऽपि ख. पाठः.

टीका०—बलैकदेशेन यद् बलस्य रक्षणं तत्र सज्जनद्वयम्। 'ग्लुञ्चुषस्ज गतौ'। ल्युट्। जश्त्वचुत्वे। सज्जनम्॥

**हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधम्॥ ३३॥**

क्षीर०—चतुरङ्गा हि सेना। पदातीनां समूहः पादातम्। भिक्षादित्वादण्॥

टीका०—हस्त्यश्वादिचतुष्कं सेनाङ्गम्। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (२. ४. २) इति समासे एकवचनम्। पदातिसमूहे पादातम्। समूहेऽण्॥

**दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।**
**मतङ्गजो गजो नागः कुञ्जरो वारणः करी॥ ३४॥**
**इभः स्तम्बेरमः पद्मी**

क्षीर०—दन्तौ स्तोऽस्य दन्ती। दन्तावलः। 'दन्तशिखात् संज्ञायाम्'(५. २. ११३)। वलच्। 'वले' (६. ३. ११८) इति दीर्घः। हस्ती। 'हस्ताज्जातौ' (५. २. १३३) इतीनिः। द्वौ रदावस्य द्विरदः। न एकेन पिबत्यनेकपः। द्वाभ्यां पिबति द्विपः। मतङ्गाद्दर्पेर्जातो मतङ्गजः। गजति माद्यति गजः। नगे भवो नागः। न अगो वा। कुञ्जौ कुम्भाधोगर्तौ दंष्ट्रे वा स्तोऽस्य कुञ्जरः। 'खमुखकुञ्जेभ्यो रो वक्तव्यः' (वा० ५.२.१०७)। वारयत्यरीन् वारणः। एतीभः। स्तम्बे तृणे रमते स्तम्बेरमः। 'स्तम्बकर्णयो रमिजपोः' (३. २. १३)। अच्। पद्मानि यौवने रक्ता बिन्दवः सन्त्यस्य पद्मी। सामजः सिन्धुरः कुम्भी च॥

टीका०—दन्तिपञ्चदशकं हस्तिनि। दन्तयोगाद् दन्ती। 'दन्तशिखात् संज्ञायाम्' (५. २. ११३) इति वलच्। 'वले' (६. ३. ११८) इति दीर्घः। दन्तावलः। हस्तीति। 'हस्ताज्जातौ' (५. २. १३३) इतीनिः। दन्तद्वययोगाद् द्विरदः। करेणास्येन च पिबतीत्यनेकपः। अत एव द्विपः। 'सुपि' (३. २. ४) इति योगविभागात् कः। मतङ्गाद्दर्पेर्जातो मतङ्गजः। गजतीति

१. 'दन्तोऽस्यास्ति द' ग. घ. ङ. पाठः. २. 'द्दर्पेर्जा' ख. ङ. छ. पाठः.

गजः । अच् । नग इव दृश्यत इति नागः । शेषेऽण् । कुञ्जौ हनू, तद्योगात् कुञ्जरः । 'खमुखकुञ्जेभ्य उपसङ्ख्यानम्' (वा० ५. २. १०७) इति रः । परबलं वारयतीति वारणः । नन्द्यादिः । करयोगाद् इनौ करी । 'इणः कित्' (उ० ३. १५४) इति भन् । इभः । 'स्तम्बकर्णयो रमिजपोः' (३. २. १३) इति अच् । स्तम्बेरमः । पद्मं बिन्दुजालकं, तद्योगाद् इनिः । पद्मी ॥

**यूथनाथस्तु यूथपः ।**

**क्षीर०** — इतोऽश्वेभ्यः प्राग् गजवर्गः ॥

**टीका०** — यूथनाथद्वयं यूथाधिपतौ करिणि ॥

**मदोत्कटो मदकलः**

**क्षीर०** — मदेन दानाम्बुना कलो मनोज्ञः ॥

**टीका०** — अन्तर्मदे हस्तिनि मदोत्कटद्वयम् ॥

**कलभः करिपोतकः ॥ ३५ ॥**

**क्षीर०** — कलो भाति, कं लभते वा कलभः ॥

**टीका०** — कलभद्वयं करिपोते । § 'शृशलिकलिभ्योऽभच्' (उ० ३. १२२) ॥

**प्रभिन्नो गर्जितो मत्तः**

**क्षीर०** — प्रभिद्यते स्म प्रभिन्नः । गर्जा[1] सञ्जातास्य गर्जितः ॥

**टीका०** — प्रभिन्नत्रयं मत्तहस्तिनि । भिदिगर्जिमदिभ्यः क्तः । प्रभिन्नः ॥

१. 'न्नः । इतचि गर्जि' ख. पाठः.

§ 'कृशलिकलिगर्दिभ्योऽभच्' इति मुद्रितोणादिपाठः

**समावुद्वान्तनिर्मदौ ।**

**क्षीर० — उद्वमति स्मोद्वान्तः ॥**

**टीका०** — कालवशान्निगलितमदे उद्वान्तद्वयम् । 'टुवम उद्गिरणे' । क्तः । 'अनुनासिकस्य —' (६. ४. १५) इत्यादिना दीर्घः । उद्वान्तः ॥

**राजवाह्यस्त्वौपवाह्यः**

**क्षीर० — उपवाह्याः समन्ताद् वोढव्याः सन्त्यस्यौपवाह्यः ॥**

**सन्नाह्यः समरोचितः ॥ ३६ ॥**

**क्षीर० — सन्नद्धं कर्तुमर्हति । समराय योग्यत्वात् ॥**

**हास्तिकं गजता बृन्दे**

**क्षीर० — हस्तिनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक्' (४. २. ४७) । गजानां समूहो गजता । '†गजाच्च' (वा० ४. २. ४३) इति वक्तव्यात् तल् ॥**

**टीका०** — **गजबृन्दे** हास्तिकद्वयम् । 'अचित्तहस्तिधेनोष्ठक्' (४. २. ४७) । हास्तिकम् । [1]'गजाच्चेति वक्तव्यम्' (वा० ४. २. ४३) इति तल् । गजता ॥

**करिणी धेनुका वशा ।**

**क्षीर० — धयन्त्येनां धेनुका । वष्टि कामयते वशा ॥**

**टीका०** — करिणीत्रयं **हस्तिन्याम्** । धेनुरेव धेनुका । 'वश कान्तौ' । अच् । वशा तालव्यशा । अतः परं गात्रापरपर्यायान्ता हस्तिनोऽवयवाः कथ्यन्ते

१. 'त्ते' ख. पाठः.

† 'गजसहायाभ्यां च' इति मुद्रितवार्त्तिकपाठः ।

**गण्डः कटः**

क्षीर० — 'गडि वदनैकदेशे' । कटति वर्षति मदं कटः ॥

टीका० — मदनिर्झरस्थाने गण्डद्वयम् । खड्गिनि गण्ड उक्तः । कटेः अच् । कटः ॥

**मदो दानं**

क्षीर० — माद्यत्यनेन मदः । 'मदोऽनुपसर्गे' (३. ३. ६७) । अप् । द्यति खण्डयत्यनेनेति दानम् ॥

टीका० — मदद्वयं मदे । द्वयं साधितम् ॥

**वमथुः करशीकरः ॥ ३७ ॥**

क्षीर० — वम्यते वमथुः । 'ट्वितोऽथुच्' (३. ३. ८९) ॥

टीका० — वमनजले वमथुद्वयम् । 'टुवम उद्गिरणे' । 'ट्वितोऽथुच्' (३. ३. ८९) । वमथुः ॥

**कुम्भौ तु पिण्डौ शिरसः**

क्षीर० — कुम्भाकृती मांससङ्घातौ ॥

टीका० — शिरःपिण्डौ कुम्भाख्यौ ॥

**तयोर्मध्ये विदुः पुमान् ।**

क्षीर० — वेत्ति संज्ञां यस्मादङ्कुशस्थानात् स विदुः । यत् पालकाप्यः—

"तत्र रक्षाविताने द्वे विदू द्वौ श्रवणे गतौ ।
प्राक् च पश्चाच्च तिर्यक् च षड्भेदाङ्कुशधारणा" ॥

१ 'नं दन्तिवां ॥' ग. घ. ङ. पाठः. २. 'ज्ञायां य' ख. ग. घ. ङ. पाठः.

टीका० — कुम्भयोर्मध्यभागो विदुः । अङ्कुशाघातं वेत्यस्मिन्निति 'कुर्भश्च' (उ० १. २२) इति बाहुलक औणादिकः कुः ॥

**अवग्रहो ललाटं स्याद्**

क्षीर० — **अवगृह्यतेऽङ्कुशेनावग्रहः ॥**

टीका० — ललाटेऽवग्रहो दीर्घशून्यो वृष्टयभावे साधितः ।

"गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः"

इति रुद्रश्च ॥

**ईषिका त्वक्षिकूटकम् ॥ ३८ ॥**

क्षीर० — **ईषा लाङ्गलकीलिकेवेषिका ॥**

टीका० — अक्षिकूटमक्षिगोलं, तत्रेषिका । दीर्घादिः । 'ईष गतिहिंसादानेषु' । ण्वुल् । उणादौ तु 'ईषेः किद्ध्रस्वश्च' (उ० ४. २१) इतीकनि धातोर्ह्रस्वत्वे ह्रस्वादि दीर्घमध्यं च । 'ऐषीकमस्त्रामि'त्यादिमुरारेर्दीर्घमध्यप्रयोगः । शरकाष्ठिकायां वीरणकाष्ठिकायां चेदृगेव । तथाच — 'शरत्समयमिव रोचमानेषीकं द्विरदामि'त्याश्चर्यमञ्जरी । शरत्पक्ष इषीका ॥

**अपाङ्गदेशो निर्याणं**

क्षीर० — **निर्यात्यश्रु अनेन निर्याणम् ॥**

टीका० — काशीति ख्याते नेत्रान्ते निर्याणं, निर्यात्यनेन दृष्टिरिति । ल्युट् ॥

**कर्णमूलं तु चूलिका ।**

क्षीर० — **चोद्यते पार्श्वगमनायाङ्कुशेनास्यां चूलिका ॥**

१. 'दुसंज्ञितः । अ' ग. ष. ज. पाठः.

टीका० — कर्णमूले चूलिका । 'चूल समुच्छ्राये' । ण्वुल् ॥

**अधः कुम्भस्य वाहित्थं**

क्षीर० — वाह्यतेऽनेनाङ्कुशचोदनया वाहित्थम्[1] । मदवाहिनि स्थाने तिष्ठति । वाहिस्थापभ्रंशोऽयं वा ॥

टीका० — कुम्भस्येति वातकुम्भस्याधो वाहित्थम् । 'वाहित्थं वातकुम्भाध' इति भागुरिः । वातकुम्भश्च ललाटाधोभागः ॥

**प्रतिमानमधोऽस्य च ॥ ३९ ॥**

क्षीर० — अस्य वाहित्थस्याधः प्रतिमानम् । प्रतिमीयतेऽनेनेति । 'डुमिञ् प्रक्षेपणे' । 'मीनातिमिनोतिदीङां ल्यपि च' (६. १. ५०) इत्यात्वम् ॥

टीका० — वाहित्थस्याधोभागो दन्तयोर्मध्यं प्रतिमानम् । मातेर्ल्युट् ॥

**आसनं स्कन्धदेशः स्यात्**

क्षीर० — आस्यतेऽस्मिन्नासनम् ॥

टीका० — आसनद्वयं हस्तिपकोपवेशनस्थाने । आसनमुक्तम् ॥

**पद्मकं बिन्दुजालकम् ।**

क्षीर० — पद्मप्रतिकृती रक्तत्वात् पद्मकम् । तारुण्ये हस्तिनां देहे रक्तबिन्दवः स्युः ॥

टीका० — सिध्मादिरूपबिन्दुसमूहे पद्मकद्वयम् । पद्ममेव पद्मकम् ॥

**पक्षभागः पार्श्वभागो दन्तभागस्तु योऽग्रतः ॥ ४० ॥**

क्षीर० — हस्तिनां योऽग्रतो भागः ॥

१. 'ह्य' ग. पाठः.

टीका०—पक्षभागद्वयं पार्श्वदेशे। दन्तसन्निहितोऽग्रभागो दन्तभागः॥

**द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रापरे क्रमात्।**

क्षीर०—हस्तिनां पूर्वः पादजङ्घादिर्भागो गात्रम्। पश्चाद्भागोऽपरम्॥

टीका०—पूर्वमग्रं, पूर्वजङ्घा आदिदेशो यस्य तद् गात्रम्। पश्चाज्जङ्घा आदिदेशो यस्य तत्रापरम्। पूर्वजङ्घाभागो गात्रं पश्चाज्जङ्घाभागोऽपरमित्यर्थः॥

**तोत्रं वैणुकम्**

क्षीर०—तुद्यतेऽनेन वेणुमयेन प्रेषणेनेति तोत्रम्॥

टीका०—तोत्रद्वयं कनाल इति ख्याते। 'तुद व्यथने'। दाम्नीशस—' (३. २. १८२) इत्यादिना ष्ट्रन्। तोत्रम्। वेणुना निर्वृत्तं वैणुकम्। 'निर्वृत्तेऽक्षद्यूतादिभ्यः'(४. ४. १९) इति ठक्। क्वचिद् वेणुकमिति पाठः। तदा च स्वार्थिकः कन्॥

**आलानं बन्धस्तम्भे**

क्षीर०—आलायते बध्यतेऽत्रालानम्॥

टीका०—आलानद्वयं वाखोड इति ख्याते। बन्धस्तम्भ इति समाहारद्वन्द्व(मि?इ)ति बन्धस्तम्भयोरुभयोरप्यालानं वर्तते इति केचित्। प्रयोगोऽप्युभयत्र दृश्यते। 'नालानं करिणां सस्ने' (इति),

"तद्गजालानतां प्राप्तैः सह कालागरुद्रुमैः"

इति च। लातेः करणे ल्युट्॥

**अथ शृङ्खले॥ ४१॥**

**अन्दुको निगलोऽस्त्री स्याद्**

---

१. 'दो' ग. घ. ङ. पाठः.

क्षीर० — शृणाति बन्धने शृङ्खलम् । अन्दति बध्नात्यन्दूः । 'अति-अदि बन्धने' । स्वार्थे कन् । 'इको ह्रस्वोऽङ्यो गालवस्य' (६. ३. ६१) । निगल्यते बध्यतेऽनेनेति निगलः ॥

टीका० — शृङ्खलत्रयं सिङ्कळेति ख्याते । शिञ्जन्तः स्खलन्त्यनेनेति पृषोदरादिः । शृङ्खलः । 'शृङ्खलस्त्रिष्विति' तालव्यादौ रभसः । 'अति अदि बन्धने' । 'अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः' (उ० १. ९६) इति बाहुलकः कूप्रत्ययः । ततः 'इवे प्रतिकृतौ' (५. ३. ९६) इति कन् । 'केऽणः' (७. ४. १३) इति ह्रस्वः । अन्दुकः । 'गड सेचने' । अच् । निगडः ॥

अङ्कुशोऽस्त्री सृणिर्द्वयोः ।

क्षीर० — अङ्क्यते गम्यतेऽनेनाङ्कुशः । सरत्यनया सृणिः ॥

टीका० — अङ्कुशत्रयमङ्कुशे । 'अकि लक्षणे' । 'सानसिवर्णसि—' (उ० ४. १९) इत्यादिना उशप्रत्ययः । अङ्कुशस्तालव्यशः । सर्तेः 'सृवृषिभ्यां कित्' (उ० ४. ५०) इति निः । सृणिः । 'आरक्षमग्नमवमत्य सृणिं शिताग्रम्' (स० ५. श्लो० ५) इति माघप्रयोगात् स्त्रियामिति प्रमादपाठः । द्वयोरित्येव पाठः ॥

दूष्या कक्ष्या वरत्रा स्यात्

क्षीर० — दूष्यते दूयतेवानया वा दूष्या । कक्षायां मध्यमदेशे भवा कक्ष्या । व्रियतेऽनया वरत्रा मध्यबन्धनी चर्मरज्जुः ॥

टीका० — चूषात्रयं कच्छरज्जौ । *'चूष याचने' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । चूषा । दीर्घवच्चकारादिमूर्धन्यषा । कक्षा विश्वप्रकाशे

१. 'लेन शृ' क. पाठः. २. 'डः' ग. घ. ङ. पाठः. ३. 'क' ख. ग. पाठः. ४. 'याः' ख. पाठः.

* 'चूष पाने इति' मुद्रितधातुपाठः

क्षान्तोक्ता । यन्तापि कक्ष्येत्यजयः । 'वृञश्चित्' (उ० ३. १०७) इत्यत्रन् । वरत्रा ॥

**कल्पना सज्जना समे ॥ ४२ ॥**

क्षीर० — हस्तिनां सज्जीकरणम[1]ङ्कोलगैरिकादिना । शृङ्गारेणेत्येके ॥

टीका० — कल्पनाद्वयं सामणीति ख्यातायाम् । 'कृपू सामर्थ्ये' । 'ग्लुञ्चु षस्ज गतौ' । 'ण्यासश्रन्थो युच्' (३. ३. १०७) ॥

**प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ।**

क्षीर० — प्रवयत्येनां प्रवेणी । आस्तीर्यते हस्तिपृष्ठे आस्तरणम् । वर्णो वर्णकम्बलः । भीमवत् । परिस्तोम्यते प्रस्तीर्यते परिस्तोमः । वर्णपरिस्तोम इत्येके । कुथ्यते कुथः ॥

टीका० — प्रवेणीपञ्चकं चित्रकम्बले । वेण्यां प्रवेण्युक्ता । आस्तीर्यतेऽनेनेत्यास्तरणम् । ल्युट् । ब्राह्मणादिषु वर्ण उक्तः । स्तौतेः सोमवन्मन् । परिस्तोमः । 'कुथ पूतीभावे' । इगुपधलक्षणः कः । 'स्त्रियां वेणी कुथं त्रिष्वि'ति वोपालितः ॥

**वीतं त्वसारं हस्त्यश्वं**

क्षीर० — वेति स्म याति भुङ्क्ते च[2] वीतम् । विशेषेणेतं नष्टं वा । सेनाङ्गत्वात् समाहारः ॥

टीका० — असारं युद्धाक्षमं हस्त्यश्वं वीतम् । विगतमितं गमनमस्य तद् वीतम् ॥

**वारी तु गजबन्धनी ॥ ४३ ॥**

क्षीर० — वार्यतेऽनया वारी गजादानभूमिः ॥

टीका० — वारिद्वयं वार्याम् । 'वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्' (उ० ४. १२६) इति वृणातेः ण्यन्तादिञ् । 'कृदिकारादू —' (ग० ४. १. ४५) इति ङीषि वारी च । उक्तो हस्ती ॥

---

१. 'णं कोलकगै' ख. पाठः. २. 'वा' क. ख. पाठः.

**घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः ।**
**वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ॥ ४४ ॥**

क्षीर० — घोटते भूमौ परिवर्तते घोटकः । वेति याति वीतिः । पीतिरित्येके । 'पीङ् पाने' । तुरं त्वरितं गच्छतीति तुरगः, 'अन्यत्रापि दृश्यते' (वा० ३. २. ४८) इति डः । तुरङ्गमः, 'गमश्च' (३. २. ४७) इति खच् । तुरङ्गः, 'खच्च डिद् वा वक्तव्यः' (वा० ३. २. ३८) । अश्नुतेऽध्वानमश्वः । वजति तच्छीलो वाजी । वाजाः पक्षा अभूवन्नस्येति वा । वाह्यते वाहः । अर्वति यात्यर्वा । गन्ध्यतेऽर्द्यते गन्धर्वः । हयति याति हयः । सिन्धौ भवः सैन्धवः । विशेषोऽपि सामान्यवृत्तिः । सपति[2] समवैति सप्तिः । इतो रथप्रकरणात् प्रागश्वपरिकरः ॥

टीका० — घोटकत्रयोदशकमश्वे । 'घुट परिवर्तने' । ण्वुल् । घोटकः । पिबतेः 'क्तिच्क्तौ च संज्ञायाम्' (३. ३. १७४) इति क्तिः । 'पाने स्त्री पीतिरश्वे ना' इति रुद्रः । 'तुर त्वरणे' । 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५) । तुरो गच्छतीत्यर्थः । भुजगवद्प्रत्ययादि: । 'अशू प्रुषिलटिकणिखटिविशिभ्यः क्वन्' (उ० १. १५७) । अश्वः । वाजो वेगस्तद्योगाद् वाजी । वाह्यत इति वाहः । घञ् । अर्तेः वनिप् । अर्वा नान्तः । शत्रन्तोऽप्यर्वन् । तथाच माघे—'(मुहुरमुः!अ)र्वतां व्रजाः' इति । स्त्रियामर्वती । गन्धर्व उक्तः । 'हय गतौ' । पचाद्यच् । हयः । सिन्धुदेशे भवः सैन्धवः । 'कच्छादिभ्यश्च' (४. २. १३३) इत्यण् । सप समवाये' । बाहुलकस्तिः । सप्तिः ॥

**आजानेयाः कुलीनाः स्युः**

क्षीर०—आजेन क्षेपेण आनेया आजानेयाः, आयत्ता इत्यर्थः ॥

टीका०—कुलीनाः प्रधानाश्च भूमिभवा अश्वा आजानेयाः, सुवाहत्वात् । अजावन्नेया अजानेयाः । पृषोदरादित्वादादिदीर्घत्वमिति हड्डचन्द्रः ।

"अश्वं कुलीनमाजानेयं शाबकं किशोरकं ब्रूते"

---

१ 'ति । डः । खच्च डित् । गमश्चेति खच् । अश्नु' क. ग. घ. ङ. पाठः. २. 'ति सप्तिः' ग. पाठः.

इति नाममालायामपि ॥

**विनीताः साधुवाहिनः।**

क्षीर० — विनीयन्ते विनीताः सुशिक्षिताः ॥

टीका० — शोभनवहनशीला यत्र तत्र भवा विनीताः। नयतेः क्तः ॥

**वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः ॥ ४५ ॥**

क्षीर० — वनाय्वादिषु देशेष्वेते जाता हयविशेषाः। एवं तुरका-रादयोऽपि (१)। लक्ष्ये वाह्लीकोऽश्वः ॥

टीका० — वानायुजद्वयं **वनायुजदेशजे**। अनयोरभेदोपचारादेकत्वम्। द्वौ भवार्थेऽणि दीर्घा(दिः/दी)। तथाच नाममाला —

"श्वेतं कर्काख्यं वानायुजमपि पारसीकं तु"।

'पारसीको वनायुजः' इत्युत्पलिन्यां ह्रस्वादिः। **कम्बोजदेशजेऽश्वे** काम्बोज-द्वयम्। 'कम्बोजाल्लुक्' (४. १. १७३) इति 'जनपदशब्दात् क्षत्रियादञ्' (४. १. १६६) इत्यस्यैवानन्तरविहितस्य लुक्, न तु शैषिकाणः। अतो दीर्घादिः काम्बोजः। कुङ्कुमे बाह्लिक उक्तः। हया हयविशेषाः। एकत्वं नास्ति। पृथ-गेव नामानीति केचित् ॥

**ययुरश्वोऽश्वमेधीयः**

क्षीर० — यात्यत्यर्थं ययुः। अश्वमेधाय हितोऽश्वमेधीयः। 'अश्वमेधाच्छ च' ॥

टीका० — **अश्वमेधार्हे घोटके** ययुः। द्यन्तस्थः। 'या प्रापणे'। 'यो द्वे च' (उ० १. २१) इत्युः किच्च। ययुः। 'तस्मै हितम्' (५. १. ५) इति छः। अश्वमेधीयः ॥

**जवनस्तु जवाधिकः।**

क्षीर० — जवते तच्छीलो जवनः। 'जुचङ्क्रम्य —' (३. २.

१. 'तुरुष्का' ग. घ. ङ, 'तु तर्करा' ख. पाठः.

१५०) इति युच् । मृगादिरपि । 'प्रजोरिनिः' (३. २. १५६) इति प्रजवी च ॥

टीका० — वेगाधिके जवनश्चवर्गादिः ॥

पृष्ठ्यः स्थौरी

क्षीर० — यत्पृष्ठे जलादिकमुह्यतेऽसौ पृष्ठ्यः । यप् । स्थूराणां पश्चाज्जङ्घाभागानामिदं स्थौरम् । स्थौरं बलमस्त्यस्य स्थौरी ॥

टीका० — बलीवर्दवत् पृष्ठेन भारवाहके पृष्ठ्यद्वयम् । य(त्प ? प्य) करणे 'अन्येभ्योऽपि दृश्यते' (वा० ५. २. १२०) इति य(त् ? प्) । पृष्ठ्यः । 'स्थूल परिबृंहणे' । अण् । रलयोरैक्यात् स्थूराया इदं स्थौरं पृष्ठवाह्यं, तद्योगादिनिः. स्थौरी । स्थूरीत्यपि केचित् ॥

सितः कर्कः

क्षीर० — शुक्लोऽश्वः कर्कः । क्रियन्ते वर्णान्तराण्यस्येति ॥

टीका० — श्वेतहये कर्कः

रथ्यो वोढा रथस्य यः ॥ ४६

क्षीर० — रथं वहति रथ्यः । 'तद् वहति रथयुग—' (४. ४. ७६) इति यत् ॥

टीका० — यो रथं वहति स रथ्यः । 'तद् वहति रथयुगप्रासङ्गम्' (४. ४. ७६) इति यत् ॥

बालः किशोरः

क्षीर० — (किश्यते ?) वध्यते कश्यते वा किशोरः ॥

टीका० — बाले किशोरः । 'किशोरादयश्च' (उ० १. ६८) इत्यत्र तालव्यशः ॥

वाम्यश्वा वडवा

१. 'गोऽपि । प्रज' क. ख. पाठः. २. 'त' ख. ङ. छ. पाठः.

क्षीर०— **वाम्यते गर्भं वामी। यल्लक्ष्यम् —'अथोष्ट्रवामीशतहारितार्थम्' (रघु० स० ५. श्लो० ३२)। वडं बलं हयं वा वाति वडवा। स्त्रीविषयत्वाद् ङीप् नास्ति। अश्वा त्वजादिः। पमूर्नानार्थे॥**

टीका० — वामीत्रयमश्वायाम्। वामी गौरादिः। अश्व उक्तः। टापि अश्वा। वलतेर्बाहुलकाद् अवन्। डलयोरेकत्वस्मरणम्। वडवा॥

**वाडवं गणे।**

क्षीर० —**वडवानां समूहो वाडवम्। 'खण्डिकादिभ्यश्च' (४. २. ४५) इत्यञ्॥**

टीका० — **वडवासमूहे** वाडवम्। 'खण्डिकादिभ्यश्च' (४. २. ४५) इत्यञ्॥

**त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते॥ ४७॥**

क्षीर० — **'अश्वस्यैकाहगमः' (५. २. १९) इति खञ्॥**

टीका० — **अश्वैकदिनगम्ये वर्त्मन्याश्वीनम्।** 'अश्वस्यैकाहगमः' (५. २. १९) इति खञ्॥

**कश्यं तु मध्यमश्वानां**

क्षीर० —**कशामर्हति कश्यम्॥**

टीका० — **अश्वमध्यभागे** कश्यं, कशां चमत्कृतां ताडनार्थमर्हतीति। 'दण्डादिभ्यो यः' (५. १. ६६)। 'दशाकशावशे'ति तालव्यदेशना॥

**हेषा ह्रेषा च निस्वनः।**

क्षीर० — **'हेषृ ह्रेषृ अव्यक्ते शब्दे'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः॥**

टीका० — **अश्वनिस्वने** हेषाद्वयम्। 'हेषृ ह्रेषृ अव्यक्ते शब्दे'। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। हेषेति पाठो 'ह्रेष गतौ' इत्यतो व्युत्पाद्यः। द्वौ मूर्धन्यषौ॥

**निगालस्तु गलोद्देशः**

क्षीर० — निगलत्यनेन निगालः। गलो जत्रुसन्धिः। 'उन्न्योर्ग्रः' (३. ३. २९) इति घञ्। गलस्योद्देशः प्रदेशः। देवमणेरावर्तस्य स्थानम्॥

टीका० — अश्वानां गलस्योद्देशे समीपे निगालः। गिरतेर्ण्यन्ताद् एरचि रलयोरैक्यम्॥

**वृन्दे त्वश्वीयमाश्ववत्॥ ४८॥**

क्षीर० — अश्वानां समूहे। 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४. २. ४८)। पक्षे 'अनुदात्तादेरञ्' (४. २. ४४) इत्यञ्॥

टीका० — अश्वीयद्वयमश्वसमूहे। 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४. २. ४८) इति छः। अश्वीयम्। 'तस्य समूहः' (४. २. ३७) इत्यणि आश्वम्॥

**आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम्।**
**गतयोऽमूः पञ्च धाराः**

क्षीर० — अश्वानां धाराख्याः पञ्चमा गतयः। धार्यते गतौ स्थाप्यतेऽनया धारा। भिदादित्वात् साधुः। आस्कन्दनमास्कन्दितम्, उत्तेरिताख्यो गतिविशेषः। धोरणं धोरितम्। 'धोरृ गतिचातुर्ये'। रेचितम् उत्तेजिताख्यम्। क्रमस्त्वन्यथा। यदाहुः—

> "धोरितं वल्गितं धाराः प्लुतमुत्तेजितं क्रमात्।
> उत्तेरितं चेति पञ्च शिक्षयेत् तुरगं गतीः॥
> धोरितं गतिमात्रे यद् योजनं वल्गितं पुरः।
> अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम्॥
> पूर्वापरोन्नमनतः क्रमादारोहणं प्लुतम्।

१. 'लोद्दे' ख पाठः. २. 'स्याम् इति विकल्पेन यञ्। प' ख. पाठः.

उत्तेजितं मध्यवेगे योजनं श्लथवल्गया ॥
उत्तेरिते तु वेगान्धो न शृणोति न पश्यति।" ॥

टीका०—आस्कन्दितादयः पञ्च गतिविशेषा धाराशब्दवाच्याः। तत्र विष्टब्धा समा च गतिरास्कन्दितं वीरव इति ख्यातम्। 'स्कन्दिर् गतिशोषणयोः'। क्तः। ऋजुदूरगमनं पुलिन इति ख्यातं धौरितकम् 'धोर्ऋ गतिचातुर्ये'। क्तः। तदन्तात् स्वार्थे कन्। मण्डलिकालयेन गमनं रेचितम्। क्तः। हेडु इति ख्यातम्। वेगेन विक्षिप्तोपरिचरणं वल्गनं वल्गितम्। वल्गेः क्तः[2]। मार्जा इति ख्यातम्। त्वरया साम्येन गतिः प्लुतम्। प्लवतेः क्तः। पर इति ख्यातम् ॥

**घोणा तु प्रोथमस्त्रियाम् ॥ ४९ ॥**

**क्षीर०—घुणते श्वासेन चलति घोणा। प्रवते चलति प्रोथः, वृत्तो नासान्तरप्रदेशः ॥**

टीका०—घोणायां प्रोथः। 'प्रोथृ पर्याप्तौ'। पचादिः ॥

**कविका तु खलीनोऽस्त्री**

**क्षीर०—कवते दन्तचर्वणाच्छब्दायते इति कविका वक्त्रैकदेशे वक्त्रनियामके लोहशङ्कौ वर्तते। लोके त्वयोमयी सर्वमुखनियन्त्रिका कविका। खलति चलति खलीनम्। खे तालुनि लीनं वा ॥**

टीका०—**कवीति ख्यातायां लोहकृतायां** (लेखकृतायाम्?) **अश्वमुखबन्धन्यां** कविकाद्वयम्। 'कवी तु खलीनं[3]' इत्यजयः। अतः स्वार्थिकोऽत्र कः

"कविका[4] तु खलीनोऽस्त्री कविकं कर्षणीत्यपि"

इति रभसः। खे मुखविवरे लीनं खलीनं दीर्घमध्यम्।

"सोत्सेधैः स्कन्धदेशैः खरखलिनकशाकर्कशात्यन्तमुग्रैः"

इति विशाखदत्तः। तदा च पृषोदरादिह्रस्वत्वम् ॥

---

१. 'ति', २. 'क्तः। त्व' ञ. पाठः. ३. 'लि' ग. घ. पाठः. ४. 'वी' ञ. पाठः.

**शफं क्लीबे खुरः पुमान् ।**

क्षीर० — शाण्यते भुवा घृष्यते शफम् । खुरति विलिखति क्ष्मां खुरः ॥

टीका० — शफद्वयं खुरे । शफं क्लीबम् । 'खुरच्छेदने' । इगुपधलक्षणः कः ।

"भजेथाः पश्चान्मां वरतनु ! पुरस्तान्मृगखुरक्षुरप्रस्यालेख्यस्थपुटितविभागा वनभुवः ।"

इत्यादि । (सुवश्च ?) ॥

**पुच्छोऽस्त्री लूमलाङ्गूले बालहस्तश्च बालधिः ॥ ५० ॥**

क्षीर० — पूयते दंशादीनुत्सारयति पुच्छम् । पुतं छादयति वा । लूयते लूमम् । लङ्गति चलति लाङ्गूलम् । बालो हस्त इव दंशवारणाद् बालहस्तः । प्रशस्ता बाला वा । बाला धीयन्तेऽस्मिन् बालधिः ॥

टीका० — पुच्छत्रयं लाङ्गूले । 'पुच्छ प्रमादे' । कः । पुच्छः । लूञो बाहुलको मक् । लूममदन्तम् । लगेः 'खर्जपिञ्जादिभ्य ऊरोलचौ' (उ० ४. ९१) । 'अन्येषामपि —' (६. ३. १३७) इति दीर्घः । लाङ्गूलम् । केशवति लाङ्गूलमात्रे बालहस्तद्वयम् । न तु हस्तिन एव । तथा च 'परिगतो ज्वलनमुग्धतावालधिः' इति बालरामायणे हनूमद्विषये वालधिः प्रयुक्तः । बालसमूहयोगाद् बालहस्तः । बाला धीयतेऽत्रेति बालधिः ॥

**त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ।**

क्षीर० — उपावर्तते स्मोपावृत्तोऽश्वः । लुठति स्म लुठितः ॥

१. 'उन्नाहस्थ' ग ड. पाठः. २. 'गक्षु' ट., 'गखुरप्र' ज. पाठः. ३. 'तच्छाद' ग. पाठः.

टीका० — भूमौ पुनः पुनर्लोठ्यायतेऽश्वादावुपावृत्तद्वयम्। उपाङ्पूर्वाद् वृतेः लुठतेश्च कर्तरि क्तः॥

**याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः॥ ५१॥**

क्षीर०—यान्त्यनेन यानं साम्परायिकाख्यं। शताङ्गो बह्वरकः। स्यन्दते याति स्यन्दनः। रमन्तेऽस्मिन् रथः। इतो भटादेः प्राग् रथप्रकरणम्॥

टीका० — युद्धार्थे चक्रवति याने शताङ्गत्रयम्। शतमङ्गान्यस्येति बहुव्रीहिः। 'स्यन्दू प्रस्रवणे'। 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युच्। स्यन्दनम्। रमेः 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ० २. २)। रथः॥

**असौ पुष्यरथश्चक्रयानं न समराय यत्।**

क्षीर० — पुष्ये[2] यात्रोत्सवादौ मङ्गल्यो रथः पुष्यरथः[3], यद् युद्धार्थं न स्यात्। चक्रयुक्तं यानम्॥

टीका० — यत्र युद्धार्थं चक्रयुक्तम्, अपि तु क्रीडाभ्रमणाद्यर्थं यानं, स पुष्यरथः। पूर्वपदं चात्र यरलवीययकारान्तं,

"महारथः पुष्यरथं रथाङ्गी क्षिप्रं क्षपानाथ इवाधिरूढः"

(स० ३. श्लो० २२)

इति माघे पुष्यशब्देन सह श्लेषात्॥

**कर्णीरथः प्रवहणं डयनं च समं त्रयम्॥ ५२॥**

क्षीर०—कर्णिषु स्कन्देषु रथः कर्णीरथः। दीर्घो लक्ष्यात्। पुंस्कन्धोह्यमानो रथः। प्रवहन्त्यनेन प्रवहणम्। डयन्ते विहायसा यान्तीवानेन डयनं विमानाख्यम्॥

टीका० —स्त्रीणां नयनार्थे कौर्कीयके ढल्लारिकाप्राये रथे कर्णीरथत्रयम्। प्रवहेर्ल्युट्। प्रवहणम्। 'हि गतौ'। करणे ल्युट्। हयनम्। 'डीङ् विहायसा

१. 'ठ्यायित' क. ख. ग. घ. ङ. पाठः. २. 'ष्यो' ग. पाठः. ३. 'थः। च' ख. पाठः. ४. 'ति', ५. 'त्येन' ख. पाठः.

गतौ' । करणे ल्युटि डयनमपि मतभेदादिति वर्णदेशना ॥

**क्लीबेऽनः शकटोऽस्त्री स्याद्**

क्षीर० — अनिति चीत्करोति अनः । असुन् । शक्नोति भारं वोढुं शकटम् ॥

टीका० — अनोद्वयं शकटे । 'अन गतौ' इत्यस्माद् धातोः असुनि अनः, सान्तम् । 'शक्लृ शक्तौ' । 'शकादिभ्योऽटन्' (उ० ४. ८२) । शकटः ॥

**गन्त्री कम्बलिवाह्यकम् ।**

क्षीर० — गच्छति तच्छीला गन्त्री शकटिका । कम्बलिभिर्दान्तैर्वोढव्यम् ॥

टीका० — कम्बलिनो गावः, तद्वाह्ये शकटे गन्त्री । गमेः ष्ट्रन् । ङीष् ॥

**शिविका याप्ययानं स्याद्**

क्षीर० — शिवा श्रेयस्करी । 'संज्ञायां कन्' (५. ३. ८७) । याप्यस्याशक्तस्य यानं युगाख्यम् । [३]कन्यायानमिति गौडः ॥

टीका० — शिविकाद्वयं झंपाण इति ख्याते । शिविका तालव्यादिः । याप्यैरधमैर्याप्यते नीयत इति याप्ययानम् । अन्तस्थादिः ॥

**दोला प्रेङ्खादिका स्त्रियाम् ॥ ५३ ॥**

क्षीर० — दोल्यते दोला काष्ठमयी रज्जुः प्रालम्बश्च । प्रे[५]ङ्ख्यते प्रेङ्खा हिन्दोलकाख्या । आदिशब्दाच्छयानकादि, याप्ययानानुवृत्तेः ॥

टीका० — उद्यानादौ क्रीडनार्थं काष्ठादिमयो[६]ऽन्दोलः । प्रेङ्खा । प्रेङ्ख्यते प्रेर्यत इति प्रेङ्खा ।

१. 'र्सा' ग. पाठः. २. 'न विग' ग. च., 'नेवल' ख. ट., 'नलेत्य' ङ. छ. पाठः. ३. 'कुध्यान' ग. पाठः. ४. 'सं' क. ख. ञ. ट. पाठः. ५. 'ङ्खा । आ' घ. पाठः. ६. 'यो हि' क. ख., 'भि' ङ. च. छ. पाठः.

"दोला प्रेङ्खः पुमान् प्रेङ्खा निःश्रेणिरधिरोहिणी" ॥
इति रत्नकोशे द्वयोः। आदिना घट्टनादिवाद्यापि दोला ॥

**उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे।**

**क्षीर०**—द्वीपिनश्चर्मणा प्रावृतो द्वैपो रथः। 'द्वैपवैयाघ्रादञ्' (४. २. १२) ॥

**टीका०**—व्याघ्रचर्मावृते रथे द्वैपद्वयम्। द्वीपिभवं चर्म द्वैपम्। तेन वृतो रथो द्वैपः। 'द्वैपवैयाघ्रादञ्' (४. २. १२) इत्यञ् ॥

**पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ॥ ५४ ॥**

**क्षीर०**—पाण्डुकम्बलेन प्रावृतो रथः। 'पाण्डुकम्बलादिनिः' (४. २. ११) ॥

**टीका०**—पाण्डुकम्बलेनावृते रथे पाण्डुकम्बली। 'पाण्डुकम्बलादिनिः' (४. २. ११) इतीनिः ॥

**रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते।**

**क्षीर०**—'परिवृतो रथः' (४. २. १०) इत्यण्। आदिशब्दाद् दौकूलाद्याः[1] ॥

**टीका०**—वस्त्रकम्बलाभ्यामावृते रथे काम्बलवास्त्रौ। 'परिवृतो रथः' (४. २. १०) इत्यण्। आदिना क्षौमादिः ॥

**त्रिषु द्वैपादयः**

**क्षीर०**—वाच्यलिङ्गत्वाद् द्वैपी गन्त्री, द्वैपो रथः, द्वैपमनः। शकटाद्यपि रथत्वेन मन्यते ॥

**टीका०**—द्वैपादयो वास्त्रान्तास्त्रिषु ॥

१. 'दौप्रल्याह्वयाः।' ग. पाठः. २. 'ह्वयाः' ख. पाठः.

**रथ्या रथकड्या रथव्रजे ॥५५॥**

**क्षीर० — रथानां समूहे 'खलगोरथात्' (४. २. ५०) 'इनित्र-कड्यचश्च'*(४. २. ५१) इति यत् कड्यच् च ॥**

टीका० — रथ्याद्वयं रथव्रजे । 'खलगोरथात्' (४. २. ५०) इति यत् । रथ्या । 'इनित्रकड्यचश्च' (४. २. ५१) इति कड्यच् । डापि रथकड्या ॥

**धूः स्त्री क्लीबे यानमुखं**

**क्षीर० — धूर्वति हिनस्ति वोढारं धूः । यस्या अग्रे वोढारो बध्यन्ते । यानमुखं रथादेरग्रम् ॥**

टीका० — रथाग्रभागे धूर्द्वयम् । 'धुर्वी हिंसायाम्' । 'भ्राजभास-भाषधुर्वी —' (३. २. १७७) इत्यादिना क्विप् । 'राल्लोपः' (६. ४. २१) इति वलोपः । धू रेफान्ता ॥

**स्याद् रथाङ्गमपस्करः ।**

**क्षीर० — रथारम्भकं चक्रादन्यत् । अपकरोत्यपस्करः । 'अप-स्करो रथाङ्गम्' (६. १. १४९) इति साधुः ॥**

टीका० — रथावयवमात्रे चक्रादावपस्करः । 'अपस्करो रथाङ्गम्' (६. १. १४९) इति निपातितः ॥

**चक्रं रथाङ्गं**

**क्षीर० — रथस्य यच्चक्रं, तद् रूढ्या रथाङ्गम् ॥**

टीका० — चक्रद्वयं चक्रे । चक्रमुक्तम् ॥

१. 'वा' क. ख. घ. पाठः. २. 'वद्वयमा' ख. पाठः

* 'कड्यचश्च' इति मुद्रिताष्टाध्यायीपाठः

**तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान् ॥५६॥**

**क्षीर०— तस्य चक्रस्यान्ते । नमतीति नेमिः । प्रान्ते धीयते प्रधिः । प्रथते प्रथिरित्येके ॥**

**टीका०** — नेमिद्वयं चक्रस्यान्ते । 'नियो मिः' (उ० ४. ४४) इति मिः । नेमिः । ङीषि नेमी च । धाञः किः । प्रधिः ॥

**पिण्डिका नाभिः**

**क्षीर०— पिण्ड्यन्ते अरा अस्यां सा पिण्डिका । नभ्यते हिंस्यतेऽक्षेण नाभिः ॥**

**टीका०** — रथमध्ये चक्राकारा पिण्डी । यस्यां सर्वाणि काष्ठान्यासज्यन्ते, सा नाभिः । ङीषि नाभी च[2] ॥

**अक्षान्तकीलके तु द्वयोरणिः ।**

**क्षीर०—अक्षस्य नाभिक्षेप्यकाष्ठस्यान्ते ब(द्धा[3] ? न्धा)र्थे कीलके । अणति शब्दायतेऽणिः[4] । लक्ष्ये त्वाणी ॥**

**टीका०** — अक्षः शकटः । तथाच —

"अक्षो वि(हीन?भीत)के नित्ये शकटव्यवहारयोः"

इत्यादि । **तस्याग्रिमे कीले** अणिः । अणेरौणादिक इः ।

"सीमावृक्षाग्रकीलेषु स्यादाणिरणि च द्वयोः"

इति रुद्रः ॥

**रथगुप्तिर्वरूथो ना**

**क्षीर०— व्रियते गुप्त्यर्थं रथो येन, स वरूथो लोहादिमयी आवृतिः ॥**

---

१. 'धिः । पिण्ड' ग. घ. ङ. पाठः. २. 'च ॥ द्वयोरिति रुद्रः । चक्रनिरोधार्थेऽक्षाग्रनिखातकीलके अणिः ॥ शस्त्र' ङ. छ., 'च ॥ द्वयोरिति रुद्रः ॥ शस्त्र' ख. पाठः. ३. 'न्धस्यार्थे' ग. घ. पाठः. ४. 'णिः ॥ रथ' ख. पाठः.

टीका० — शस्त्रभयादात्मरक्षार्थं कृते गुप्तीति ख्याते रथस्य स्थानविशेषे रथगुप्तिद्वयम्। 'जॄवृञोरूथन्' (उ० २. ६) इत्यूथन्। वरूथः॥

**कूवरस्तु युगन्धरः॥८७॥**

क्षीर० — कूयते शब्दायते कूवरः। युगं वोढुं स्कन्धकाष्ठं धारयति युगन्धरः। 'संज्ञायां भृतॄवृजि'—(३. २. ४६) इति खच्॥

टीका० — रथस्य युगकाष्ठं यत्रासज्ज्यते, तत्र कूवरद्वयम्। कुं महीं वृणातिच्छादयतीति कूवरः। ‡'अन्येभ्योऽपि —' इति दीर्घः। धारेर्विश्वंभरवद् युगन्धरः॥

**अनुकर्षो दार्वधःस्थं**

क्षीर० — अनुकृष्यतेऽनुकर्षः॥

टीका० — रथस्याधःस्थं यद् दारु, यस्योपरि घट्टकर्म, सोऽनुकर्षः। 'कृष विलेखने'। अच्॥

**प्रासङ्गो ना युगाद्युगः।**

क्षीर० — प्रसज्ज्यते वोढुं स्कन्धे प्रासङ्गः। युगेनातति युगाद् रथादिः, तस्य युगः। ना पुमान्। अन्यस्तु क्लीबे। युगं कालो युग्मं वा। युगाद् युगान्तरं वत्सदमनार्थमिति गौडाः। यन्मुनिः—'युगं द्वितीयं प्रासङ्गम्'॥

टीका० — गुरुत्वाच्चतुर्भिः षड्भिर्वा वृषैर्यदा शकटो नीयते, तदा दीयमानस्य द्वितीययुगस्य प्रासङ्गाख्या॥

**सर्वं स्याद् वाहनं यानं युग्यं पत्रं च धोरणम्॥८८॥**

१. 'ते र' ज. पाठः. २. 'त्तु' ख. पाठः.

‡ 'अन्येषामपि दृश्यते' (६. ३. १३७) इत्येव दीर्घविधायकसूत्रं दृश्यते

क्षीर० — सर्वं हस्त्यश्वरथादि दोलान्तम् । योक्तव्यं युग्यम् । 'युग्यं च पत्रे' (३.१.१२१) इति साधुः । पतन्त्यनेनेति पत्रम् । 'दाम्नीशस—'(३. २. १८२) इति करणे ष्ट्रन् । धोर्यतेऽत्र धोरणम् ॥

टीका० — सर्वं हस्त्यश्वादि वाहनं यानादिचतुष्केणोच्यते । वहतियात्योः करणे ल्युट् । 'वाहनमाहितात्' (८. ४. ८) इति निपातनाद् दीर्घः । 'युग्यं च पत्रे' (३. १. १२१) इत्यनेन युग्यं निपातितम् । 'धोॖरि गतिचातुर्ये' । ल्युट् । धोरणम् ॥

**परम्परावाहनं यत् तद् वैनीतकमस्त्रियाम् ।**

क्षीर० — वोढृभिः परम्परया वाह्यते । प्राबन्धिकमभ्यासस्थितम् । विनीतानामिदं याप्ययानादि ॥

टीका० — मनुष्यादिभिर्यः परम्परया अंसपाण्यादिद्वारेण वाह्यते, स वैनीतकः ॥

**आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ॥ ५९ ॥**

क्षीर० — आधोर्यते हस्ती यैराधोरणाः । हस्तिनं पान्ति हस्तिपकाः । हस्तिनमारोहन्ति हस्त्यारोहाः । निषीदन्त्यवश्यं निषादिनः । द्वौ द्वौ भिन्नार्थावित्येके । आद्यौ पालकौ, परौ योद्धारौ ॥

टीका० — आधोरणचतुष्कं हस्त्यारोहे । आङ्पूर्वाद् धोरेः 'चलनशब्दार्थादकर्मकाद् युच्' (३. २. १४८) । आधोरणः । हस्तिनं पातीति हस्तिपः । ततः 'संज्ञायां कन्' (५. ३. ८७) । कर्मण्यणि हस्त्यारोहः । 'सदिरप्रतेः' (८. ३. ६६) इति षत्वे निषादी ॥

**नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ।**

१. 'त्य', २. 'ति ष्ट्र' ग. पाठः. ३. 'ह' ख. पाठः. ४. 'झम्पणादि' ख. ह. छ. पाठः.

**सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ॥ ६० ॥**

क्षीर० —नियच्छति[1] नियन्त्रयति नियन्ता। प्राजति प्राजिता। 'अज गतिक्षेपणयोः'। वानुवृत्तेर्वीभावो[2] नास्ति। सुवति सूतः। 'षू प्रेरणे'। क्षदति क्षत्ता। सरथस्यापत्यं सारयति वाहान् वा[3] सारथिः। सव्ये तिष्ठति सव्येष्ठः। 'सव्ये स्थश्छन्दसि' (उ० २. १०१) इति ऋन् डिच्च। 'स्थास्थिन्स्थृणाम्—' (वा० ८. ३. ९७) इति षत्वम्। रथस्य कुटुम्बी वाहकः ॥

टीका० —रथकुटुम्बी सारथिः, तत्र नियन्त्रष्टकम्। अर्थात् सारथिनो रथकुटुम्बी च नाम। यमेस्तृचि नियन्ता। 'अज गतौ'। प्राजितृशब्दार्थे तृजन्ताद् 'अजेर्व्यघञपोः' (२. ४. ५६) इति नित्यं वीभावे प्राप्ते 'वलादावार्धधातुके विकल्प इष्यते' (वा० २. ४. ५६) इति वीभावविकल्पः। 'वीभावपक्षे तु प्रवेता इत्यपी'ति वृत्तिः। 'षू प्रेरणे'। क्तः। सूतः। क्षदेः सौत्रात् 'तृन्तृचौ शंसिक्षदादिभ्यः[5] संज्ञायां चानिटौ' (उ० २. ९४) इति तृच्। क्षत्ता। सव्ये तिष्ठतीति सव्येष्ठा। 'दिवेर्ऋन्' (उ० २. ९९) 'नयोर्डिच्च' (उ० २. १००) इति चानुवृत्तौ 'सव्ये स्थश्छन्दसि' (उ० २. १०१) इति सव्यशब्दे उपपदे तिष्ठतेर्धातोः ऋन्। डित्त्वाट्टिलोपः। 'अम्बाम्ब—'(८. ३. ९७) इत्यादिना षत्वम्। 'हलदन्तात्—' (६. ३. ९) इति सप्तम्या अलुक्। 'सव्येष्ठा दक्षिणस्थश्चे'ति त्रिकाण्डपाठाद् भाषायां साधुरिति विनीतकीर्त्तिः। अम्बाम्बगोभूम्यादौ 'स्थास्थिन्स्थृणाम्—'(वा० ८. ३. ९७) इत्यस्य सर्वसम्मतत्वाभावादमरमालायामदन्तोऽयम्। तथाच—

"सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ एव च"

इति ॥

**रथिनः स्यन्दनारोहाः**

**क्षीर० —रथयोद्धारः ॥**

---

१. 'ति नियन्ता' ख. पाठः. २. 'त्यं सारथिः। सा', ३. 'वा सारथिः। स' क. पाठः.
४. 'द् अजे' क. ख. ग. छ. पाठः. ५. 'शिशसिशासिक्ष' क. ख. ङ. च. छ. पाठः.

टीका० — रथिद्वयं रथयोधे ॥

**अश्वारोहास्तु सादिनः।**

क्षीर० — अश्ववाराख्याः। सीदन्त्यवश्यं सादिनः ॥

टीका० — अश्वारोहद्वयमश्वचारे। सदेर्णिनिः, सादी। 'सादी सूताश्वचारयोः' इति दन्त्यादावजयः ॥

**भटा योधाश्च योद्धारः**

क्षीर० — भटन्ति काङ्क्षन्ति युद्धं भटाः। युध्यन्ते योधाः। पचाद्यच्[1] ॥

टीका० — भटत्रयं सामान्ययोद्धृपुरुषे। 'भट भृतौ'। पचाद्यच्। भटः। 'युध सम्प्रहारे'। पचादिः। योधः। तृचि योद्धा ॥

**सेनारक्षास्तु सैनिकाः ॥ ६१ ॥**

क्षीर० — 'रक्षति' (४. ४. ३३) इति ठक्। प्राहरिकाद्याः ॥

टीका० — सेनारक्षद्वयं सेनारक्ष(प ?प्रा)हरिकादौ। 'रक्षति' (४. ४. ३३) इति ठक्। सैनिकः ॥

**सेनाया[2] समवेता ये सैन्यास्ते सैनिकाश्च ते।**

क्षीर० — सेनां समवयन्ति श्लिष्यन्ति। 'सेनाया वा' (४. ४. ४५) इति ण्यठकौ ॥

टीका० — सेनासमवेते अङ्गभूते हस्त्यश्वादौ सैन्यद्वयम्। 'सेनाया वा' (४. ४. ४९) इति ण्यठकौ ॥

**बलिनो ये सहस्रेण ते साहस्राः सहस्रिणः ॥ ६२ ॥**

क्षीर० — बलं सैन्यम्। सहस्रं योद्धारः सन्त्यस्य। 'तपःसहस्राभ्यां विनीनी' (५. २. १०२)। 'अण् च' (५. २. १०३) ॥

---

१. 'धाः योद्धारश्च। प' ग. घ. ङ. पाठः. २. 'ण सा', 'स्रास्ते स' ख. पाठः.

टीका० —सहस्राश्वादेर्बलस्य[1] स्वामिनि सेनापतौ साहस्रद्वयम् । 'अण् च' (५. २. १०३) इत्यण् । साहस्रः । 'तपःसहस्राभ्यां विनीनी' (५. २. १०२) इति इनिः । सहस्री ॥

**परिधिस्थः परिचरः**

क्षीर० —परिधौ सेनाप्रान्ते[2] तिष्ठति परिधिस्थः । परितः समन्तात् चरति रक्षितुं परिचरः ॥

टीका० — परिधिस्थद्वयं युद्धकाले प्रहारादिभ्यो यो रक्षति तत्र । प्रयाणकाले सामन्तस्य स्थापनकारिणीत्यन्यः । सेनाया राज्ञो दण्डनायक इत्यन्यः । चेरच् । परिचरः ॥

**सेनानीर्वाहिनीपतिः ।**

क्षीर० —सेनां नयति नियुङ्क्ते सेनानीः ॥

टीका० —सेनानीद्वयं सेनापतौ । कार्तिकेये सेनानीरुक्तः ॥

**कञ्चुको वारबाणोऽस्त्री**

क्षीर० —कञ्च्यते बध्यते कञ्चुकः । वारमाच्छादकं वानमस्य वारबाणम् । 'पूर्वपदात् संज्ञायाम् —' (८. ४. ३) इति णत्वम् । बाणवारस्य व्यत्ययो मयूरव्यंसकादित्वादिति श्रीभोजः ॥

टीका० — कञ्चुकद्वयं भौट्टिकादौ[3] चोळकाकृतिसन्नाहे । 'कचि दीप्तिबन्धनयोः' । 'मृकणिभ्यामूकोकणौ' (उ० ४. ३९) इति बाहुलक उकण् । कञ्चुकः । बाणं वारयतीति पृषोदरादित्वाद् वर्णविपर्ययेण वारबाणः ॥

**यत्तु मध्ये सकञ्चुकाः ।**
**बध्नन्ति तत् सारसनमधिकाङ्गः**

१. 'स्रस्याश्वा' ख. ङ. छ. पाठः. २. 'नान्ते' ग. घ. ङ. पाठः. ३. 'भाडिका' ङ. पाठः. 'कवचैक' ञ. 'काकाकृ' क. ख. पाठः.

क्षीर०—सारं सनोति ददाति सारसनम्। अधिकमङ्गादधिकाङ्गः। सारसनाधिपाङ्गे इत्येके पेठुः[1]। यन्मुनिः—'अधिपाङ्गं[2] सारसनम्'। * भुग्नस्तु—

"तस्य सारसनं ज्ञेयमधियाङ्गं निबन्धनम्"॥

टीका०—सकञ्चुकाः पुरुषाः काण्डाघनादि[3]निवृत्त्यर्थं (?) हृदयमध्ये यद् दृढार्थं बध्नन्ति[4] पट्टकर्णिकादिकं, तत्र सारसनद्वयम्।

"भवेत् सारसनं काञ्च्यामुरःस्थेऽपि निगद्यते"

इति दन्त्यादावजयः। 'अधिकाङ्गं सारसनम्' इत्यमरमालायाम् आर्यापाठादधिकाङ्गं ह्रस्वादि॥

अथ शीर्षकम्।

शीर्षण्यं च शिरस्त्रे

क्षीर०—शीर्षप्रतिकृतिः शीर्षकम्। शिरसि भवं शीर्षण्यम्। 'शरीरावयवाद् यत्' (५. १. ६), 'शीर्षश्छन्दसि' (६. १. ६०), 'ये च तद्धिते' (६. १. ६१)। शिरस्त्रायते शिरस्त्रम्॥

टीका०—शीर्षकत्रयं टोपर इति ख्याते। शीर्षं शिरो रक्षति त्रायत इति शीर्षकम्। 'कुमारशीर्षयोर्णिनिः' (३. २. ५१) इति निपातनाद् अकारान्ताच्छिरःशब्दपर्यायात् शीर्षशब्दात् 'प्रातिपदिकाद् धात्वर्थे णिज्बहुलमिष्ठवच्च' (ग० ३. १. २६) इति णिचि ण्वुल्। शिरसे हितं शीर्षण्यम्। 'शरीरावयवाद्यत्' (५. १. ६)। 'ये च तद्धिते' (६. १. ६१) इति शीर्षन्नादेशः। 'ये चाभावकर्मणोः' (६. ४. १६८) इति प्रकृतिभावः। शिरस्त्रायत इति शिरस्त्रम्॥

१. 'त्सपरे पे', २. 'या' ग. घ. ङ. पाठः, ३. 'लि', ४. 'न्ति त' ख. पाठः

* 'दुर्गस्तु—तस्य सारसनं ज्ञेय धिपाङ्गं च निबन्धनम्। इति' इति भानुजिः।

अथ तनुत्रं वर्म दंसनम् ॥ ६४ ॥

उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ।

क्षीर०—वृणोत्यङ्गं वर्म । दंस्यते बध्यते दंसनम् । कङ्कटत्याच्छादयति कङ्कते वा कङ्कटकः । जागर्तेरचि ह्रस्वाज्जगरः । यन्माला—'उरश्छदो जगरः' । कवते कवचः, कं वञ्चति वा ॥

टीका०—तनुत्रसप्तकं सन्नाहे । शिरस्त्रवत् तनुत्रम् । वृञो मनिन् । वर्म । दंशेर्ल्युटि दंशनम् । उरश्छादयत्यनेनेत्युरश्छदः । 'छादेर्घेऽद्व्युपसर्गस्य' (६. ४. ९६) इति ह्रस्वः । 'ककि लौल्ये' । 'शकादिभ्योऽटन्' (उ० ४. ८२) । कङ्कटः । ततः कन् । जगरः । चवर्गादिः ।

"जगरः कङ्कटो योगः सन्नाहः स्यादुरश्छदः"

इति वोपालितः ॥

आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥ ६५ ॥

क्षीर० — आमुच्यते, प्रतिमुच्यते, अपिनह्यते बध्यते स्म । पिनद्धः ।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"

इति पक्षे अल्लोपः ॥

टीका०— परिहिते वस्त्रादौ आमुक्तचतुष्कम् । 'मुच्लृ मोक्षणे' । क्तः । आमुक्तप्रतिमुक्तौ । 'णह बन्धने' ।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"

इत्यल्लोपः । 'नहो धः' (८. २. ३४) इति धः । पिनद्धः । यथापिनद्धः परिहितकर्पटे, तथा पिनद्धोऽपीति वच्छब्दार्थः ॥

सन्नद्धो वर्मितः सज्जो दंसितो व्यूढकङ्कटः ।

क्षीर०—सन्नह्यति स्म सन्नद्धः । वर्म सञ्जातमस्य वर्मितः ।

सञ्जायते सज्जति वा सज्जः। व्यूढो धृतः कङ्कटो येन सः व्यूढकङ्कटः ॥

टीका० — सन्नद्धपञ्चकं कृतसन्नाहे[1]। पिनद्धवत् सन्नद्धः। 'सत्यापपाश—' (३. १. २५) इति णिजन्तात् क्तः। वर्मितः[2]। 'षस्ज गतौ'। पचाद्यच्। सज्जः। दंशेः क्तः। दंशितः ॥

**त्रिष्वामुक्तादयः**

क्षीर० — नवेत्यर्थः ॥

टीका० — आमुक्तादयो व्यूढकङ्कटान्तास्त्रिषु ॥

**वर्मभृतां कावचिकं गणे ॥ ६६ ॥**

क्षीर० — कवचिनां समूहः कावचिकम्। 'ठञ् कवचिनश्च' (४. २. ४१) इति ठञ् ॥

टीका० — वर्मभृतां[4] गणे कावचिकम्। 'ठञ् कवचिनश्च' (४. २. ४१) इति ठञ्। 'नस्तद्धिते' (६. ४. १४४) इति टिलोपः ॥

**पदातिपत्तिपदगपादातिकपदाजयः।**
**पद्गश्च पदिकश्च**

क्षीर० — पादाभ्यामतति गच्छति पदातिः। पादाभ्यामजति पदाजिः। 'पादस्य पदाज्यातिगोपहतेषु' (६. ३. ५२) इति पदभावः। हलन्तपक्षे पद्गः। यल्लक्ष्यं — 'पद्गा भरद्वाजमुनिं सशिष्यम्' (भट्टि० स० ३. श्लो० ४१)। पादाभ्यामतति पादातिकः। औणादिक इकः। वि-

१. 'हे। अपि' ञ. पाठः. २. 'वर्मितदंशितौ तारकादीतजन्तौ। 'षस्ज गतौ'। अर्ज सर्ज व्यूढकङ्कटो बहुव्रीहिः ॥ आ' ङ. छ. पाठः. ३. 'दिव्यूढ', ४. 'कवचिनां समूहे का' ञ. पाठः.

नयादित्वात् स्वार्थे ठग्वा । पतति पत्तिः । पादाभ्यां चरति पदिकः । पर्पादित्वात् ठन् । इके चरतौ वक्तव्यात् पदिकः ॥

टीका० — पदातिसप्तकं पादानीके । 'अत सातत्यगमने' । 'अज्यतिभ्यां च' (उ० ४. १३२) इत्यनुवृत्तौ 'पादे च' (उ० ४. १३३) इति पादोपपदे इण् । 'पादस्य पदाज्याति —' (६. ३. ५२) इति[2] पदादेशो[3]ऽदन्तः । पदातिः । 'पदेर्नित्' इति पत्तिः । पादाभ्यां गच्छतीति पदगः । पूर्ववत् पदादेशः । पादातमस्यास्तीति पादातिकः । 'अत इनिठनौ' (५. २. ११५) इति ठन् । पदाजिरिति । 'पादस्य पदाज्याति—' (६. ३. ५२) इति[4] निपातनाद् अजेर्न वीभावः । पादसमानाद्धलन्तात् पच्छब्दात् पद्गः । पद्भ्यां चरतीति पदिकः । 'पर्पादिभ्यः ष्ठन्' (४. ४. १०) । 'इके चरतावुपसङ्ख्यानम्' (वा० ६. ३. ५३) इति पद्भावः ॥

**अथ पादातं पत्तिसंहतिः ॥ ६७ ॥**

क्षीर० — पदातीनां समूहः पादातम् । 'भिक्षादिभ्योऽण्' (४. २. ३८) ॥

टीका० — पदातिसमूहे पादातम् । 'भिक्षादिभ्योऽण्' (४. २. ३८) ॥

**शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ।**

क्षीर० — काण्डानि पृष्ठेऽस्य काण्डपृष्ठः । आयुधेन जीवति । 'आयुधाच्छ च' (४. ४. १४) इति ठक्छौ ॥

टीका० — शस्त्राजीवचतुष्कं यः शस्त्रं विधायावलगति, तत्र । वाहिताग्न्यादित्वात् काण्डस्पृष्टः स्पृष्टकाण्डः । तेन जीवतीत्यर्थे 'आयुधाच्छ च' (४. ४. १४) इति छठकौ । आयुधीयायुधिकौ ॥

१. 'तौ पद् व' ख. पाठः. २. 'ति निपातनादजेर्न वीभावः । प' ञ. पाठः. ३. 'शः । प' क. पाठः. ४. 'ति पदादेशः । पाद' ख. ग. ङ. छ. पाठः.

**कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ॥ ६८ ॥**

क्षीर० — कृतौ सिद्धौ हस्तावस्य कृतहस्तः। कृताः पुङ्खा अनेन कृतपुङ्खः॥

टीका० — सुप्रयुक्तकाण्डे पुरुषे कृतहस्तत्रयम्। कृतोऽभ्यस्तो हस्तो येन स कृतहस्तः। सुप्रयोगविशिखोऽपि बहुव्रीहिः। कृतपुङ्खवदित्यत्र कृतशब्दो गृहीतवाची। यथा — 'अकृतव्यूहाः पाणिनीयाः', 'कृतमपि शास्त्रं निवर्तयन्ति'। अत्र हि अकृतव्यूहा अगृहीतशास्त्रा इति परिभाषावृत्तिकारैरुक्तम्। कृतपुङ्खवत् कृतपुङ्ख इव सुप्रयोगविशिख इति वच्छब्दस्यार्थः॥

**अपराद्धपृषत्कोऽसौ लक्षाद् यश्च्युतसायकः।**

क्षीर० — अपराद्धा अलब्धलक्षा बाणा अस्य अपराद्धपृषत्कः॥

टीका० — लक्षात् च्युतः सायको बाणो यस्यासावपराद्धपृषत्कः। राधेः क्तः। अपराद्धः। अपराध्यो यकारान्त इति केचित्। अपराद्धः अशोभनः पृषत्कोऽस्येति बहुव्रीहिः॥

**धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः॥ ६९ ॥**

क्षीर० — धन्वास्यास्तीति धन्वी। व्रीह्यादित्वादिनिः। धनुः प्रहरणमस्य धानुष्कः। तदस्य प्रहरणमिति ठक्। निषङ्गस्तूणोऽस्यास्तीति ङ्गी। अस्त्राणि सन्त्यस्य अस्त्री॥

टीका० — धन्विषट्कं धानुष्के। धनुस्समानार्थाद्धन्वन्शब्दाद् व्रीह्यादित्वादिनिः। धन्वी। धनुष्मान् मत्वन्तः। धनुः प्रहरणमस्येति धानुष्कः। 'प्रहरणम्' (४. ४. ५७) इति ठक्। निषङ्गोऽस्त्रं तूणोऽपि[2]। 'स्याच्चापायुधयोरस्त्रम्' इति रभसः। तद्योगादुभयत्र इनिः॥

१. 'ख्ने' ख. पाठः. २. 'णः। स्या' म. पाठः.

**स्यात् काण्डवांस्तु काण्डीरः**

क्षीर० — 'काण्डाण्डादीरन्नीरचौ' (५. २. १११) ॥

टीका० — काण्डवद्द्वयं काण्डधरे । उपाधिभेदाद् भेदः । काण्ड एव केवलो यस्यास्त्रमिति । अस्यैव वा नामद्वयम् । 'काण्डाण्डादीरन्नीरचौ' (५. २. १११) । काण्डीरः ॥

**शाक्तीकः शक्तिहेतिकः ।**

क्षीर० — शक्तिः प्रहरणमस्य शाक्तीकः । 'शक्तियष्ट्योरीकक्' (४. ४. ५९) ॥

**याष्टीकपारश्वधिकौ यष्टिपार्श्वधहेतिकौ ॥ ७० ॥**

क्षीर० — पार्श्वधः परशौ न दृष्टः । अतो 'यष्टिस्वधितिहेतिकौ' इति कश्मीराः पठन्ति । यन्मुनिः — 'परश्वधः कुठारश्च स्वधितिः' । तदस्य प्रहरणम् । 'परश्वधाट्ठञ्च' (४. ४. ५८) ॥

**नैस्त्रिंशिकोऽसिहेतिः स्यात्**

क्षीर० — निस्त्रिंशोऽसिः प्रहरणमस्य नैस्त्रिंशिकः ॥

टीका० — शक्त्यादिको हेतिः प्रहरणं येषां ते शाक्तीकयाष्टीकपारश्वधिकनैस्त्रिंशिकाः । यथाक्रमं 'शक्तियष्ट्योरीकक्' (४. ४. ५९) 'परश्वधाट्ठञ्च' (४. ४. ५८) 'प्रहरणम्' (४. ४. ५७) इति ठक् ॥

**समौ प्रासिककौन्तिकौ ।**

क्षीर० — प्रासः कुन्तश्च प्रहरणमस्य ॥

टीका० — प्रासिकद्वयं कुन्तकरे । पूर्ववत् ठक् ॥

**चर्मी फलकपाणिः स्यात्**

क्षीर० — चर्म[1] फलको[2]ऽस्यास्तीति चर्मी। फलति विशीर्यते घातैः फलकः। रलयोरैक्यात् फरकोऽपि॥

टीका० — चर्मिद्वयं फलकपाणौ। चर्मी व्रीह्यादिः॥

**पताकी वैजयन्तिकः॥ ७१॥**

क्षीर० — वैजयन्त्या चरति वैजयन्तिकः। 'चरति' (४. ४. ८) इति ठक्॥

टीका० —पताकि[3]द्वयं पताकायुक्ते। व्रीह्यादित्वादिनिः। पताकी। 'चरति' (४. ४. ८) इति ठक्। वैजयन्तिकः॥

**अनुप्लवः सहायश्चानुचरोऽभिचरः समाः।**

क्षीर० — अनु पश्चात् प्लवते अनुप्लवः। सह अयते सहायः॥

टीका० — अनुप्लवचतुष्कं सहाये[4] वांच्छियाण[5] इति ख्याते। सर्वे पचाद्यजन्ताः। सह अयते गच्छतीति[6] सहायः। अन्वभिशब्दौ पश्चादर्थे॥

**पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः॥ ७२॥**

**पुरोगमः पुरोगामी**

क्षीर० — पुरो गच्छतीति पुरोगः। गमश्च (इति?) डः। अग्रे सरत्यग्रेसरः। 'पुरोऽग्रतोऽग्रेषु सर्तेः' (३. २. १८)। टः। प्रतिष्ठते प्रष्ठः। 'प्रष्ठोऽग्रगामिनि' (८. ३. ९२) इति साधुः॥

टीका० —अग्रगामिनि पादातिकादौ पुरोगसप्तकम्। 'अन्येष्वपि —' (३. २. १०१) इति डः। पुरोगः। 'पुरोऽग्रतोऽग्रेषु सर्तेः (३. २. १८) इति टः। पुरःसराग्रेसराग्रतःसराः। 'प्रष्ठोऽग्रगामिनि' (८. ३. ९२) इति निपा-

१. 'र्मा' ख. पाठः. २. 'पुरोऽस्या' ग. घ ङ. पाठः. ३ 'कायुक्ते पताकी।' क. ग. पाठः. ४. 'ये। स' ञ. पाठः. ५. 'पाजिया' ख. पाठः. ६. 'उच्छति' घ. पाठः.

तनात् प्रष्ठः । 'गमश्च' (३. २. ४७) इति खचि पुरोगमः । अव्ययत्वान्नुमभावः । णिनौ पुरोगामी ॥

**मन्दगामी तु मन्थरः ।**

**क्षीर० — मथ्नाति पादौ मन्थरः ॥**

**टीका०** — मन्दगामिद्वयं **मन्दगमनशीले** ताच्छीलिकणिनौ मन्दगामी । 'मन्थ विलोडने' । 'ऋच्छेररन्' (उ० ३. १३१) इति बाहुलकोऽरन् । मन्थरः ॥

**जङ्घालोऽतिजवः**

**क्षीर० — जङ्घे स्तोऽस्य जङ्घालः ॥**

**टीका०** — अतिवेगवति जङ्घालद्वयम् । 'प्राणिस्थादातो लजन्यतरस्याम्' (५. २. ९६) इति लच् । जङ्घालः । अतिशयितो जवो वेगो यस्य सोऽतिजवः ॥

**तुल्यौ जङ्घाकरिकजाङ्घिकौ ॥ ७३ ॥**

**क्षीर० — जङ्घा एव करो राजदेयोंऽशोऽस्त्यस्य जङ्घाकरिकः । जङ्घाभ्यां जीवति जाङ्घिकः ॥**

**टीका०** — जङ्घाकरिकद्वयं **जङ्घाजीविनि धावकादौ** । जङ्घैव करी यस्येति व्युत्पत्त्या संज्ञायां कनि जङ्घाकरिक इति केश्चित्[1] । करो राजदेयः । जङ्घैव करो जङ्घाकरः । तद्योगाद् मत्वर्थठनि जङ्घाकरिक इत्यपरः । 'जीवति' इति ठकि जाङ्घिकः ॥

**तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ।**

**क्षीर०** — तरोऽस्यास्ति तरस्वी । 'अस्मायामेधा —' (५. २. १२१) इति विनिः । त्वरते स्म त्वरितः । प्रजवते प्रजवी । 'प्रजोरिनिः'

---

1. 'केंचित्' म. पाठः.

(३. २. १५६)। जवते तच्छीलो जवनः। 'जुचङ्क्रम्य—' (३. २. १५०) इति युच्। जवते जवः। पचाद्यच्॥

टीका०—वेगवन्मात्रे तरस्विपञ्चकम्। 'अस्मायामेधास्रजो विनिः' (५. २. १२१)। तरस्वी। त्वरितजवयोः अर्शआद्यच्। वेगयोगाद् वेगी। जुः सौत्रो धातुः। चवर्गादिः। 'प्रजोरिनिः' (३. २. १५६) इति प्रजवी। जुचङ्क्रम्यादियुचि जवनः॥

## जय्यो यः शक्यते जेतुं

क्षीर०—'क्षय्यजय्यौ शक्यार्थे' (६. १. ८१) इति साधुः॥

टीका०—अवश्यं जेतुं शक्यो जय्यः। 'शकि लिङ् च' (३. ३. १७२) इति शक्नोत्यर्थे वर्तमानाद् धातोर्लिङ्कृत्यानां विधानाद् 'अचो यत्' (३. १. ९७) इति यत्। 'क्षय्यजय्यौ शक्यार्थे' (६. १. ८१) इत्ययादेशनिपातनाद् जय्यः॥

## जेयो जेतव्यमात्रके॥ ७४॥

क्षीर०—शक्यादन्यत्रेत्यर्थः॥

टीका०—योग्यतामात्रेण जयनीये जेयः। 'अचो यत्' (३. १. ९७)॥

## जैत्रस्तु जेता

क्षीर०—जेतैव जैत्रः। तृन्नन्तात् प्रज्ञादित्वादण्। जेतुरयं वा। [२]फलितं तुल्यार्थत्वम्॥

टीका०—जेतृमात्रे जैत्रद्वयम्। जयशीले तु 'जेता जिष्णुश्च जित्वर' इति वक्ष्यति। जेतृशब्दात् प्रज्ञाद्यणि जैत्रः। तृचि जेता॥

## यो गच्छत्यलं विद्विषतः प्रति।

१. 'म्येत्यादि' अ. पाठः. २. 'ततस्तुल्या' ख. पाठः.

**सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ॥ ७८॥**

क्षीर० — आभिमुख्येनामित्रानलङ्गामी । 'अध्वनो यत्खौ' (५. २. १६) 'अभ्यमित्राच्छ च' (५. २. १७) इति छो यत्खौ च ॥

टीका० — विपक्षाभिमुखमत्यन्तगन्तरि अभ्यमित्र्यत्रयम् । 'अध्वनो यत्खौ' (५. २. १६) इत्यनुवर्तमाने 'अभ्यमित्राच्छ च' (५. २. १७) इति छयत्खप्रत्ययाः ॥

**ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ।**

क्षीर० — ऊर्ज ऊर्जा वास्त्यस्येति 'ज्योत्स्नातमिस्रा—' (५. २. ११४) इति साधुः । ऊर्जो (नादिस ? नास) न्तं मन्यते । अन्यथा ऊर्जस्वीति निपातनं व्यर्थं स्यात् । 'अस्मायामेधास्रजो विनिः' (५. २. १२१) इति विधिना सिद्धत्वात् ॥

टीका० — अतिशयितबलयुक्ते अतिशयितपराक्रमयुक्ते वा ऊर्जस्वलद्वयम् । 'ज्योत्स्नातमिस्रा —' (५. २. ११४) इत्यादिना निपातितौ ॥

**स्यादुरस्वानुरसिलः**

क्षीर० — उरसा बलं लक्ष्यते । तदस्यास्ति । पिच्छादित्वादिलच् ॥

टीका० — अतिशयितोरसि उरस्वद्द्वयम् । मतुपि 'झयः' (?) (८. २. १०) इति वत्वे उरस्वान् । पिच्छादीलचि उरसिलः ॥

**रथिको रथिरो रथी ॥ ७९ ॥**

क्षीर० — रथोऽस्यास्ति रथिकः । 'अत इनिठनौ' (५. २. ११५) । 'मेधारथाभ्यामिरन्निरचौ' (वा० ५. २. १०९) । रथिन इत्यपाठः ॥

टीका० — रथस्वामिनि राजादौ रथिकत्रयम् । 'अत इनिठनौ'

१. 'जमस्यास्तीति' क. च. पाठः. २. 'जौंऽस' क. ग. घ. पाठः.

(५. २. ११५)। रथिकरथिनौ। 'मेधारथाभ्यामिरन्निरचौ वक्तव्यौ' (वा० ५. २. १०९) इति मत्वर्थे इरच्। रथिरः॥

**कामंगाम्यनुकामीनो**

क्षीर०—अनुकामं यथेच्छं गामी अनुकामीनः। 'अवारपारात्यन्तानुकामं गामी' (५. २. ११) इति खः॥

टीका०—कामंगामी यथेष्टगमनशीलः। स्वेच्छाप्रवृत्तिरनुकामीनः। 'अवारपारात्यन्तानुकामं गामी' (५. २. ११) इति खः॥

**अत्यन्तीनस्तथा भृशम्।**

क्षीर०—अत्यन्तं भृशं कृत्वा गामीत्यत्यन्तीनः। भृशं गन्तेत्यर्थः। पूर्ववत् खः॥

टीका०—अत्यन्तगमनशीले अत्यन्तीनः। पूर्ववत् खः॥

**शूरो वीरश्च विक्रान्तः**

क्षीर०—शूरयते वीरयते शूरवीरौ। विक्रमते उत्सहते स्म विक्रान्तः॥

टीका०—शूरत्रयं शूरे। 'शूर वीर विक्रान्तौ'। चुरादिः। पचादिः। सूर्यनाम्न्यशत्वमपि निरूपितम्। क्रमेः क्तः। क्रान्तः॥

**जेता जिष्णुश्च जित्वरः॥ ७७॥**

क्षीर०—जेतुं शील इति तृन्। 'ग्लाजिस्थश्च क्स्नुः' (३. २. १३९)। 'इण्नशिजिसर्त्तिभ्यः क्वरप्' (३. २. १६३)॥

टीका०—जयनशीले जेतृत्रयम्। जयतेस्तृचि जेता। 'ग्लाजिस्थश्च क्स्नुः' (३. २. १३९)। जिष्णुः। इत्वरवज्जित्वरः॥

**सांयुगीनो रणे साधुः**

१. 'मी', २. 'गच्छतीति अ' क. पाठः. ३. 'जेतुं शा' ख. पाठः.

क्षीर० — संयुगे साधुः सांयुगीनः। 'प्रतिजनादिभ्यः खञ्' (४. ४. ९९)॥

टीका० — सङ्ग्रामकुशले सांयुगीनः। 'प्रतिजनादिभ्यः खञ्' (४. ४. ९९) इति खञ्॥

**शस्त्राजीवादयस्त्रिषु।**

क्षीर० — वाच्यलिङ्गत्वात्॥

टीका० — पूर्वोक्ताः शस्त्राजीवादयः सांयुगीनान्तास्त्रिषु॥

**ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः॥ ७८॥**
**वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्।**

क्षीर० — वाहाः सन्त्यस्यां वाहिनी। सिनोति सेना, सह इनेन वर्तते वा। प्रियते पृतना। 'पृङ् व्यायामे'। चमत्यरीन् चमूः। वरूथो रथगुप्तिरस्त्यस्यां वरूथिनी। बलति प्राणिति बलम्। सेनैव सैन्यम्। चातुर्वर्ण्यादित्वात् ष्यञ्। करोति चकते वा चक्रम्। अनित्यनीकं, न नीयते वा[1]। सैन्यैकदेशोऽयम्॥

टीका० — ध्वजिनीसप्तकं सेनायाम्। तत्र वाहिनी पृतना अनीकिनी चमूरिति चतस्रः सेनाभेदेऽपि वक्ष्यति। पताकाहयबलरथगुप्तीनां योगाद् ध्वजिनीवाहिन्यनीकिनीवरूथिन्यः। 'कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्' (उ० ३. १०) इति नः। सेना। 'कृषिचमितनि —' (उ० १. ८४) इत्यादिना ऊः। चमूः। बलचतुष्कं सामान्येन सेनाङ्गे। बलचक्रशब्दौ उक्तौ। सेनैव सैन्यम्। हृषीकवदनीकम्॥

**व्यूहस्तु बलविन्यासः**

---

1. 'न क्रियते च' क पाठ.

क्षीर० — व्यूह्यते रच्यते व्यूहः ॥

टीका० — यथोक्तदेशे बलविन्यासो विभज्य स्थापनं व्यूहः। 'ऊह वितर्के'। घञ् ॥

**भेदा दण्डादयो युधि ॥ ७९ ॥**

क्षीर० — व्यूहस्येति शेषः। यदाहुः —

"दण्डो मण्डलभोगौ चाप्युत्सन्नश्चाचलो दृढः।
व्यूहास्तेषां विशेषाः स्युश्चक्रव्यूहादयोऽपि च" ॥

टीका० — दण्डभोगमण्डलासंहताश्चत्वारः प्रकृतिव्यूहभेदाः। तत्रानीकानां तिर्यग्वृत्तिर्दण्डः। समस्तानामन्वावृत्तिरन्योन्यगनावृत्तिर्भोगः। मण्डलरचनया सरतामनीकानां सर्वतोवृत्तिः सर्पशरीरवन्मण्डलः। स्थितानामितरेतरसंहतानां विशिष्टतराणामनीकानां पृथग्वृत्तिरसंहतः। तथाच कामन्दकः —

"तिर्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्वावृत्तिरेव च।
मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः ॥"

इति। तत्रापि प्रदरदृढकादयः सप्तदश दण्डभेदाः। गोमूत्रिकाहिंसकसञ्चारिकशकट(नरक? मकर)पनन्तकाः पञ्च भोगभेदाः। सर्वतोभद्रदुर्जयौ मण्डलभेदौ। अर्धचन्द्रकोद्यानादयः षडसंहतभेदाः ॥

**प्रत्यासारो व्यूहपार्ष्णिः**

क्षीर० — प्रत्यासरति भग्नान् प्रत्यासारः। 'सृ स्थिरे' (३. ३. १७) इति घञ्। पार्ष्णिः पश्चाद्भागः ॥

टीका० — व्यूहसमवेत एव व्यूहस्य पश्चाद्भागे व्यूहान्तरे वा प्रत्यासारद्वयम्। सर्तेर्घञ्। प्रत्यासारः ॥

**सैन्यपृष्ठे प्रतिग्रहः।**

१. 'च व्युत्पन्न' क पाठः. २. 'नु' ज. पाठः. ३. 'तिर्यग्वृ' ग. पाठः ४. 'कि:', ५. 'ना' ज. पाठः. ६. 'भागान' ग. घ. पाठः.

क्षीर० — प्रतिगृह्यतेऽवष्टभ्यतेऽनेन सैन्यम् ॥

टीका० — यत्र स्थितो राजा स्वसैन्यं प्रतिगृह्णाति, तत्सैन्यस्य पश्चाद् धनुःशतद्वयान्तरे स्थितं भिन्नसङ्घातमनीकं प्रतिग्रहः परिग्रहो वा । ग्रहेरप् ॥

**एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ॥ ८० ॥**

क्षीर० — पतति पत्तिः सेनाङ्गम् । यद् भारतम् —

"एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" ॥

टीका० — पत्तिनवकं प्रत्येकं सेनाविशेषे । तत्र त्रिभिरश्वैर्गजेनैकेन रथेन पदातिभिः पञ्चभिः पत्तिर्नाम सेनान्तरम् ॥

**पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।**
**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥ ८१ ॥**
**अनीकिनी**

क्षीर० — पत्तिस्त्रिगुणा सेनामुखम् । तत्त्रिगुणं गुडति गुल्मः । तत्त्रिगुणो गण्यते गणः । एवमुत्तरोत्तरं क्रमात् त्रिगुणम् ॥

टीका० — पत्त्यङ्गैश्च सर्वैर्गजादिभिर्यथापूर्वं त्रिगुणैः तथोक्तक्रमेण सेनामुखादयो भवन्ति । एतदुक्तं भवति — तिस्रः पत्तयः सेनामुखम् । त्रिभिः सेनामुखैर्गुल्मः । गुल्मत्रयेण गणः । त्रयो गणा वाहिनी । वाहिनीत्रयं पृतना । पृतनात्रयं चमूः । चमूत्रयमनीकिनी ॥

**दशानीकिन्यक्षौहिणी**

क्षीर० — अक्षाणां रथकाष्ठानाम् ऊहोऽस्त्यस्याः । अक्षादूहिन्यां वृद्धिश्च ॥

---

१. 'च' क. छ. पाठः. २. 'नरश्चैको नागाः प' ख. पाठः.

टीका० — अक्षौहिण्यां न त्रैगुण्यं, किन्तु दशानीकिन्योऽक्षौहिणी। अक्षो रथावयवः, तस्योहः, तद्योगान्मत्वर्थीय इनिः। 'ऋन्नेभ्यो ङीप्' (४. १. ५)। 'पूर्वपदात् —' (८. ४. ३) इत्यादिना णः। 'अक्षादूहिन्यां वृद्धिर्वक्तव्या' (वा० ६. १. ८९) इति वृद्धिः।

"अक्षौहिण्यामित्यधिकैः सप्तत्या त्वष्टभिः शतैः।
संयुक्तानि सहस्राणि रथानामेकविंशतिः॥
एवमेव गजानां तु संख्यानं कीर्तितं बुधैः।
पञ्चषष्टिसहस्राणि षट्शतानि दशैव तु॥
सङ्ख्यातास्तुरगास्तज्ज्ञैर्विना रथ्यैस्तुरङ्गमैः।"

रथसम्बन्धिनोऽश्वान् विहायेत्यर्थः।

"नृणां शतसहस्रं तु सहस्राणि नवैव तु॥
शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः॥"

इति तदङ्कनाप्यक्षौहिणीसङ्ख्या यथा —गजरथौ (२१८७०), अश्वः (६५६१०) पदातिः (१०९३५०)॥

अथ सम्पदि।

**सम्पत्तिः श्रीश्च लक्ष्मीश्च**

क्षीर० — 'सम्पदादिभ्यो भावे क्विप् वक्तव्यः' (वा० ३. ३. १०८)। श्रयन्ति तां श्रीः। 'क्विप् वचि —' (उ० २. ६०) इति क्विप् दीर्घश्च॥

टीका० — धनोत्कर्षः सम्पत्तिः, तत्र सम्पच्चतुष्कम्। 'सम्पदादिभ्यः क्विप् वक्तव्यः'। (वा० ३. ३. १०८)। सम्पत्। श्रीलक्ष्मीशब्दावुक्तौ। क्तिनि सम्पत्तिः॥

---

१ 'न्य' ङ. छ. पाठः. २. 'ता' ख. पाठः. ३. 'च प' ख. ङ. छ. पाठः.

**विपत्त्यां विपदापदौ ॥ ८२ ॥**

क्षीर० — विपत्तिर्दारिद्र्यम् ॥

टीका० — विपत्तित्रयं विपदि । पूर्ववत् ॥

**आयुधं तु प्रहरणं शस्त्रमस्त्रम्**

क्षीर० — आयुध्यन्तेऽनेनेत्यायुधम् । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (वा० ३. ३. ५८) । शस्यतेऽनेन शस्त्रम् । 'दाम्नी —' (३. २. १८२) इति करणे ष्ट्रन् । अस्यतेऽस्त्रम् । हेतिर्नानार्थे ॥

टीका० — आयुधचतुष्कं शस्त्रमात्रे । 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति युध्यतेः कः । आयुधम् । 'शसु हिंसायाम्' । 'दाम्नीशस —' (३. २. १८२) इत्यादिना ष्ट्रन् । शस्त्रम् । 'असु क्षेपणे' । *'ष्ट्रन्' (उ० ४. १६०) इति ष्ट्रन् । अस्त्रम् । शस्त्रं, विना क्षेपेण घातकं खड्गादि, क्षेपणीयं शर(श)ल्यादि अस्त्रमिति केचिच्छस्त्रास्त्रयोर्भेदमाहुः । 'शस्त्रास्त्रैर्बहुधा मुक्तैरि'ति देवीमाहात्म्ये च ॥

**अथास्त्रियौ ।**

**धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ॥ ८३ ॥**

**इष्वासोऽपि**

क्षीर० — धन्यते अर्थ्यते धनुः । अर्धर्चादिः । यल्लक्ष्यं — 'ततो धनुषमादाय' । चपस्य वेणोर्विकारश्चापम् । धनेः(इति?) कनिप् । शरा अस्यन्तेऽनेनेति शरासनम् । 'कुदि अनृतभाषणे' । अस्माद्दु अण्डन्, कुर्देर्वा रेफलोपे कोदण्डम् । कर्मणे प्रभवति कार्मुकम् । 'कर्मण उकञ्' (५. १. १०३) । इषवोऽस्यन्तेऽनेन इष्वासः । आसोऽपि ॥

टीका० — धनुःसप्तकं चापे । 'धन धान्ये' । 'अर्तिपृवपियजितनिधनित्रपिभ्यो नित्' (उ० २. ११७) इति उसिः । धनुः सान्तम् । 'भृमृशीतृचे-

१. 'प' अ. पाठः. २. 'हम्य' । पाठः. ३. 'न श' ख. ग. पाठः. ४. 'त, कु' क. पाठः. ५. 'स' ख. पाठः.

* 'सर्वधातुभ्यः ष्ट्रन्' इति मुद्रितोणादिपाठः

रित्सरितनिधनिमिमस्जिभ्य उः' (उ० १. ७) इत्यनेन धनुरुदन्तोऽपीत्युणादिः। दीर्घान्तः स्त्रीलिङ्गः। तथाच—'शरावापो धनूः स्त्री स्याद्' इति त्रिकाण्डशेषः। 'चप सान्त्वने'। भूवादौ पवर्गमध्ये पठितः। ततः पचाद्यच्। चपो वृक्षविशेषः। तस्य विकारश्चापः। धन्वचतुष्कं क्लीबम्। तत्र धन्व नान्तम्। 'कर्मण उकञ्' (५. १. १०३)। कार्मुकम्। इष्वासो मूर्धन्यमध्यो दन्त्यान्तः॥

**अथ कर्णस्य कालपृष्ठं शरासनम्।**
**कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसके॥ ८४॥**

**क्षीर०—गाण्डिः पर्वास्यास्तीति[1] गाण्डीवम्। 'गाण्ड्यजगात् संज्ञायाम्' (५. २. ११०) इति वः। गाण्डिरिदन्त ईदन्तश्चात्र प्रश्लिष्य निर्दिष्टः। पुन्नपुंसके इति प्रथमाद्विवचनमजहल्लिङ्गम्॥**

**टीका०**—कर्णस्य **कानीनस्य धनुः** कालपृष्ठम्। कपिध्वजोऽर्जुनः, तद्धनुषि गाण्डीवद्वयम्। 'गाण्ड्यजगात् संज्ञायाम्' (५ २. ११०) इति गाण्डीगाण्डिशब्दाभ्यां वः। गाण्डीवं गाण्डिवम्। द्वितीयो ह्रस्वान्तः, 'गाण्ड्यजगादि'ति संहितायां दीर्घह्रस्वान्तयोस्तुल्यत्वात्॥

**कोटिरस्याटनिः**

**क्षीर०—अस्य धनुषः प्रान्तः कुटति कोटिः। अटत्यटनिः। अटनीत्येके॥**

**टीका०**—धनुषः कोटिरुभयप्रान्तम् अटनिः। 'अट पट गतौ'। अशनिवद्[2]नि:। पक्षे ङीप्॥

**गोधे तले ज्याघातवारणे।**

**क्षीर०—गोधा च गोधा च द्वे, सव्यसाचित्वात्। 'गुध परिवेष्टने'। तलं चर्मादिमयो ज्याघाताधारः। गोधा तला च गोधातले द्वे इत्येके॥**

1. 'स्ति गा' ख. ग. घ. पाठः. २. 'दटनिः' ञ. पाठः.

टीका० — गुणाद्याघातनिवारणार्थे[1] बाहुपट्टिकायां गोधाद्वयम् ।

"तलस्ता(लं ! ले) चपेटे च तलं चाधः स्वरूपयोः ।
*कार्यवीर्ये प्रकोष्ठे ज्याघातस्यैवापवारके ॥"

क्वचिद् बाह्वोर्द्वित्वाद् गोधे तले इति पाठः ॥

**लस्तकस्तु धनुर्मध्यं**

क्षीर० — 'लस श्लेषणे' ॥

टीका० — बाँस[2] इति ख्याते लस्तकः ॥

**मौर्वी ज्या शिञ्जिनी गुणः ॥ ८५ ॥**

क्षीर० — मूर्वाख्यतृणस्य विकारो मौर्वी । जिनाति ज्या । जीवापि । शिङ्क्ते शब्दायते शिञ्जिनी । गुण्यतेऽभ्यस्यते गुणः ॥

टीका० — मौर्वीचतुष्कं धनुर्गुणे । मूर्वा वृक्षविशेषः, तद्विकारो मौर्वी । ज्या चवर्गादिः । आवश्यकणिनौ शिञ्जिनी । तालव्यादिः । गुण उक्तः ॥

**स्यात् प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ।**

क्षीर० — जङ्घयोश्चारिनिवृत्तौ[4] स्थितिः स्थानकर्म । अत्र विशेषः । आलेढि भुवमालीढम् । आदिशब्दात् समपादं, वैशाखं, मण्डलं च धनुर्वेदप्रसिद्धम् । भरतस्त्वन्यथाह —

"वैष्णवं समपादं च वैशाखं मण्डलं तथा ।
प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् ॥"

इति ॥

टीका० — प्रत्यालीढमालीढं समपदो विशाखो मण्डलं चेति भन्विनः पञ्च पदस्थानानि । तत्रोर्ध्वस्थस्य वामजङ्घाप्रसारे दक्षिणसङ्कोचे प्रत्यालीढम् ।

१. 'र्थं', २. 'मध्ये प्र', ३. 'ख्याल इ' क. पाठः. ४. 'वृत्त', ५. 'वृं' ख. पाठः. ६. 'मात्र' ग. घ. पाठः.

* 'कार्यबीजे' इति तु मेदिनी ।

दक्षिणप्रसारे वामसङ्कोचे आलीढम् । तुल्यपादयुगे[1] समपदम् । वितस्त्यन्तरेण स्थिते पदद्वये विशाखः । मण्डलाकृतिपदद्वयं मण्डलम् ॥

**लक्षं लक्ष्यं शरव्यं च**

क्षीर० — लक्ष्यत इति घञ् ण्यच्च । शृणाति शरुर्हिस्रः, तस्मै हितं शरव्यम् । 'उगवादिभ्यो यत्' (५. १. २)। शरैर्वीयते छाद्यते वा[3] । वेध्यं च ॥

टीका० — लक्षत्रयं वेज्झा इति ख्याते। व्याजे लक्षमुक्तम् । शृणातेः स्वरुवदुः (शरुः) आयुधं, तस्मै हितं शरव्यम् । 'उगवादिभ्यो यत्' (५. १. २) इति यत् । 'ओर्गुणः' (६. ४. १४६) इति गुणः । अवन्तादेशः ॥

**शराभ्यास उपासनम् ॥ ८६ ॥**

क्षीर० — 'असु क्षेपणे' ॥

टीका० — नित्यं शराभ्यासे परिशीलने उपासनम् ॥

**पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ।**
**कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ॥ ८७ ॥**

क्षीर० — पर्षति सिञ्चत्यसृजा पृषत्कः, पृथक् षट्कमस्येति । धनुर्वेदः—

"पुङ्खः शरस्तथा शल्यं पक्षस्नायुजतूनि षट् ।"

वणति व्रण्यतेऽनेन वा बाणः । विशीर्यते विशिखः । 'शि निशाने'[4] । विविधशिखो वा । अजिह्मगः ऋजुगामी । कल्यते क्षिप्यते कलम्बः । मार्गयति[5] लक्ष्यं मार्गणः । शृणाति शरः । रोप्यते निखन्यते रोपः । इष्यति इषुः । 'इष गतौ' । मर्दराद्या नानार्थे[6] ॥

टीका० — पृषत्कद्वादशकं काण्डे । स्पृशन्[7] कसति गच्छतीति पृषत्कः । पृषोदरादिः मूर्धन्यषश्च । 'बण भण सम्भक्तौ' । घञ् । बाणः । विशन् खनतीति

१. 'गे' ञ. पाठः. २. 'खम् ॥' ङ. छ. पाठः. ३. 'वा ॥ अ' ग. घ. ङ. पाठः. ४. 'शासने' ख. पाठः. ५. 'णो' ग. घ. ङ. पाठः. ६. 'त' ग. घ. पाठः. ७. 'पृषति क' ङ छ. पाठः.

विशिखः। पृषोदरादिः। अजिह्मगाद्यास्त्रयो डप्रत्ययान्ताः। 'कड मदे'। बाहुलकोऽम्बन्। लडयोरेकत्वस्मरणम्। कलम्बः। 'मार्ग अन्वेषणे'। ल्युट्। मार्गणः। शृणातेः 'ऋदोरप्' (३. ३. ५७)। शरः।

"स्थलं क्ष्वेडो विपाटश्च चित्रपुङ्खः शरः सरः"

इति त्रिकाण्डशेषे दन्त्यादिश्च। पत्रं पक्षः, तद्योगात् पत्री। 'रुप विमोहने'। चुरादिः। अच्। रोपः। 'इषेः किच्च' (उ० १. १३) इत्युः। इषुः॥

**प्रक्ष्वेडनास्तु नाराचाः**

**क्षीर०** — प्रक्ष्वेडन्ते प्रक्ष्वेडनाः। क्ष्विदे रूपं क्ष्वेडतेर्वोन्नेयम्[1]। नरमञ्चति नराचः[2]। नराच[3] एव नाराचः। स्वार्थेऽण्[4]। सर्वलोहोऽयम्॥

**टीका०** — प्रक्ष्वेडनद्वयं नाराचे। 'ञिक्ष्विदा स्नेहनमोचनयोः'। नन्द्यादिः। पृषोदरादित्वाड्डत्वम्। प्रक्ष्वेडनः। नरानाचामतीति नाराचः। 'अन्येभ्योऽपि—' (३. २. १०१) इति डः। 'अन्येषामपि—' (६. ३. १३७) इति दीर्घः॥

**पक्षो[5] वाजः**

**क्षीर०** — 'पक्ष परिग्रहे'। वजति गच्छत्यनेन वाजः[6]॥

**टीका०** — काण्डपत्रे पक्षद्वयम्। 'वज गतौ'। करणे घञ्। वाजः। 'अजिव्रज्योश्च' (७. ३. ६०) इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वनिषेधः॥

**त्रिषूत्तरे।**

**क्षीर०** — लिप्तान्ता वाच्यलिङ्गाः॥

१. 'ड्विवों' ग. घ. पाठः. २, ३, ४. 'ना' क. ख. ङ. पाठः. ५. 'क्ष' ग. पाठः. ६. 'जः। न्यङ्क्वादेः कुत्वम्॥ त्रि' ग. घ. ङ. पाठः.

टीका० — उत्तरे परे लिप्तकान्तास्त्रिषु ॥

**निरस्तः प्रहिते बाणे**

क्षीर० — निरस्यते[1] स्म प्रहीयते स्म, क्षिप्त इत्यर्थः ॥

टीका० — प्रहिते (नि?वि)क्षिप्ते बाणे निरस्तः। प्राक् साधितः ॥

**विषाक्ते दिग्धलिप्तकौ ॥ ८८ ॥**

क्षीर० — विषेणाक्ते उक्षिते। दिह्यते स्म लिप्यते स्म ॥

टीका० — वि(षभ?षो)क्षितकाण्डे दिग्ध(त्र!द्व)यम्। दिहेः क्तः। दिग्धः। 'लिप उपदेहे'। क्तः। ततः कन्। लिप्तकः ॥

**तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः।**
**तूण्यां**

क्षीर० — तूण्यते पूर्यते शरैस्तूणः। तूणीति लिङ्गभेदार्थम्। उपासज्यन्ते निषज्यन्ते (स्म?) च बाणा यत्रेत्युपासङ्गनिषङ्गौ। इषवो धीयन्तेऽत्र इषुधिः। कलापो नानार्थे ॥

टीका० — तूणषट्कं तोण इति ख्याते। 'तूण पूरणे'। चुरादिः। एरचि तूणः। गौरादिङीषि तूणीत्यपीति धातुप्रदीपः। रूपभेदात् पुमान्। टापि तूणेति वररुचिः। 'षञ्ज सङ्गे'। घञ्। उपासङ्गः। 'कृगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च'? 'कृगॄशॄपृकटिपटिशौटिभ्य ईरन्' (उ० ४.३०) इति बाहुलक ईरन्। तूणीरः। 'उपसर्गात्—' (८.३.६५) इत्यादिना षत्वे निषङ्गो मूर्धन्यषः। इषवो धीयन्तेऽत्रेति इषुधिः ॥

**खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ॥ ८९ ॥**
**कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्।**

---

1. 'ते प्र' क. ग. पाठः. 2. 'स' क. ख. पाठः.

क्षीर०— खण्डयति[1] भिनत्ति खड्गः । निष्क्रान्तस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः । चन्द्रवद्धासः प्रभास्य चन्द्रहासः । अस्यतेऽसिः । ऋषेर्गत्यर्थादृष्टिः । 'ऋत्यकः' (६. १. १२८) इति प्रकृतिभावः । हिंसार्थाद् रिषेस्तु रिष्टिः । चन्द्रहासासिरिष्टय इति केचित् पठन्ति । कुक्षौ भवः कौक्षेयकः । 'कुलकुक्षि—' (४. २. ९६) इति ढकञ् । मण्डलाकृत्यग्रमस्य मण्डलाग्रः । करे वलनमस्य करवालः । कल्पते कृपाणः । कृपिः पूरणार्थः ॥

टीका० — खड्गनवकं खड्गे । 'खट खटि भेदने' । बाहुलको गन् । खड्गः । निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति निस्त्रिंशः । 'डच्प्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं निस्त्रिंशाद्यर्थम्' (वा० ५. ४. ७३) । डच् । चन्द्रमिव हसति उद्योतकारित्वाच्चन्द्रहासः । 'कर्मण्यण्' (३. २. १) । 'असु क्षेपणे' । 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च' (उ० ४. १४१) इति इः । असिः । दन्त्यसः । 'ऋषि गतौ' । क्तिचि ऋष्टिः । एवमजादिः ।

"चन्द्रहासर्ष्टिनिस्त्रिंशा ज्ञेया एकार्थवाचकाः"

इति त्रिकाण्डशेषश्च । 'रिषि हिंसायां, हलादिरि'ति वर्णदेशना । द्विविध एवेति रभसः । 'कुलकुक्षि—' (४. २. ९६) इत्यादिना ढकञ् । कौक्षेयकः । करं पालयति पलतीति वा करपालः । 'कर्मण्यण् (३. ४. १) । 'विधूतकरपालकः पालक' इति यमकम् ।

"दन्तैश्चिच्छिदिरे लूनकरवालाः पदातयः" (स० १९. श्लो० ५५)

इति माघश्लेषाद् वकारवानपि । कृपाण इति । ऋपेर्बहुलवचनादानच् सम्प्रसारणं चेति न्यासकारः । यथा कृपाणः खड्गे तथा करवालोऽपीति वत्यर्थः ॥

**त्सरुः खड्गादिमुष्टौ स्याद्**

क्षीर०—'त्सर छद्मगतौ' ॥

---

१. 'ति ख' ख. पाठः.

टीका० — खड्गच्छुरिकादिमुष्टौ[1] त्सरुः। ना। 'त्सर छद्मगतौ'। दन्त्यसः। चरुवद् उः॥

**मेखला तन्निबन्धनम्॥ ९०॥**

क्षीर० — मीयते मणिबन्धे प्रक्षिप्यते मेखला। यथा प्रहरतो हस्तान्न निर्याति॥

टीका० — खड्गादिनिबन्धनः सीकनलिकातकादिकं[2](?) मेखला। गङ्गायामिति केचित्॥

**फलकोऽस्त्री फलं चर्म**

क्षीर० — फलति विशीर्यते प्रहारैः फलकम्। फलं मुनिना खड्गाद्यग्रे[3] दृष्टम्। अयं तु लोकात् फलकं मन्यते। यच्छाश्वतः—

"लाभे[4] सस्ये शराद्यग्रे[5] व्युष्टौ च फलके फलम्"।

चर्ममयत्वाच्चर्म॥

टीका० — फलगा इति ख्याते फलकत्रयम्। फलकचर्मणी साधिते॥

**सङ्ग्राहो मुष्टिरस्य यः।**

क्षीर० — सङ्गृह्यतेऽनेन सङ्ग्राहः। 'समि मुष्टौ' (३. ३. ३६) इति घञ्। अस्य चर्मणो मुष्टिग्रहणस्य स्थानम्॥

टीका० — फलकस्य मुष्टौ माण्डु इति ख्याते सङ्ग्राहः। 'समि मुष्टौ' (३. ३. ३६) इति ग्रहेर्घञ्॥

**द्रुघणे मुद्गरघनौ**

क्षीर० — द्रुं वृक्षाङ्गं हन्ति द्रुघणः। द्रोर्घनो वा। अयोघनो-

१. 'दिमु मु' ङ. ञ. पाठः. २. 'सिककलिकातनिका' क. ख, ङ. छ. पाठः. ३. 'द' ख. पाठः. ४. 'लो' क. ख. पाठः. ५. 'द्या' ख. पाठः.

ऽन्यः। मुदं गिरति ग्रसते मुद्गरः। हन्यतेऽनेन घनः। 'मूर्तौ घनः' (३. ३. ७७) इति साधुः। यच्छाश्वतः—

"वाद्ये मुस्तेऽम्बुदे सान्द्रे घनः स्याल्लोहमुद्गरे" ॥

टीका०— वर्धकिमुद्गराकृतावस्त्रविशेषे द्रुघणत्रयम्। द्रुः वृक्षो हन्यतेऽनेनेति द्रुघणः। 'करणेऽयोविद्रुषु' (३. ३. ८२) इति द्रुशब्द उपपदे हन्तेर्धातोरप्प्रत्ययः, घनादेशश्च। धातोः 'पूर्वपदात् संज्ञायामगः' (८. ४. ३) इति णत्वम्। क्षुभ्नादेराकृतिगणत्वात् 'कवर्गव्यवाये हादेशप्रतिषेधो वक्तव्य' इति णत्वं न भवतीत्यपरे। मुदं हर्षं हरतीति मुद्गरः। पचादिः॥

स्यादीली करवालिका ॥ ९१ ॥

क्षीर०—ईड्यते ईली। एकधारोऽसिस्तुरुष्कायुधम्। करवालादल्पे कन्। तरवारिकेत्येके॥

टीका०—हस्तकुण्डेति ख्याते ईलीद्वयम्।

"ईलिः करवाली स्याद् धैमेयो धान्यपरिवर्तः[1]"

इति नाममालायामार्यापाठाद् दीर्घादिः। 'इल स्वप्नक्षेपणयोः'। 'इगुपधात् किरि'त्यनेन ह्रस्वादिरिति पुरुषोत्तमटीका। पक्षे ङीष्॥

भिन्दिपालः सृगस्तुल्यौ

क्षीर०—भिन्दतः पालयति भिन्दिपालः[2]। स हस्ताक्षेप्यो लगुडः। सृज्यते सरति वा सृगः॥

टीका०—भिन्दिपालद्वयं हस्तप्रमाणे हस्तकाण्डे इति ख्याते। नलिकाण्डमिति केचित् तमाहुः।

"भिन्दिर्द्वादशतालं तु दशकुन्तोऽभिधीयते"

इति भरतीये। सृगो दन्त्यादिः॥

परिघः परिघातनः।

क्षीर०—परिहन्ति परिघः। 'परौ घः' (३. ३. ८४) इति घत्वम्। लोहबद्धो लगुडः॥

---

१. 'र्तौ' अ. पाठः. २. 'लः। सहस्ताक्षे' ख. पाठः,

टीका० — परिघद्वयं लोहबद्धलगुडे खड्गे च । 'परौ घः' (३. ३. ८४) इति हन्तेरप् घादेशश्च । 'परेश्च घाङ्कयोः' (८. २. २२) इति लत्वविकल्पः । परिघः पलिघः । हन्तेर्ण्यन्ताल्ल्युटि परिघातनः ॥

**द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ॥ ९१ ॥**

क्षीर० — कुठान् वृक्षान् इयर्त्ति कुठारः । स्वं धियति बिभर्ति स्वधितिः । परान् शृणाति परशुः परश्वधश्च । पर्श्वधोऽपि । यदाह —

"याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ" ॥

टीका० — कुठारचतुष्कं कुठारे । कुठं तरुम् आरातीति कुठारः, कप्रत्ययान्तः । आङ्पूर्वाच्छृणातेः 'आङ्परयोः खनिशृभ्यां डिच्च' (उ० १. ३४) इति कुः । परशुः ।

"कुठारः स्त्री च स्वधितिः परशुश्च परश्वधः ।
कुठाटङ्कः[1] पर्शुरथच्छुरिका कोषणादिका ॥ "

इति रभसः । परश्वधस्तालव्यमध्यः ॥

**स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ।**

क्षीर० — शस्यतेऽनया शस्त्री । असेः पुत्रीव, अल्पत्वात् । छुरति छिनत्ति छुरिका । क्षुरिकापि ॥

टीका० — शस्त्रीचतुष्कं छुरिकायाम् । ङीषि शस्त्री । पुत्रीधेनुकाभ्यामसेः षष्ठीसमासः । 'छुर छेदने' । कुन् । छुरिका ॥

**वा पुंसि शल्यं शङ्कुर्ना**

क्षीर० — शलति विशल्यन्तः शल्यम् । शङ्कतेऽस्माच्छङ्कुरायुधविशेषः । यच्छाश्वतः —

"सङ्ख्याकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तरे" ।
अन्यत्रोपचाराच्छल्यम् ॥

---

१. 'ठारट', २. 'परशुर' क. ख. पाठः.

टीका० — शल्यद्वयं शेल्ल इति ख्याते। शलेः यत्। शल्यः। यादोभेदे शङ्कुरुक्तः॥

**सर्वला तोमरोऽस्त्रियाम्॥ ९२॥**

क्षीर० — सर्वान् लाति सर्वला। स्तोम्यते श्लाघ्यते तोमरम्। तुः सौत्रो वा॥

टीका० — शर्वरीति ख्यातायां शर्वलाद्वयम्। 'शर्व चर्व गतौ'। वृषादिकलच्। शर्वला। 'शार्दूलशर्वलाशलाटुः' इति शभेदः॥

**प्रासस्तु कुन्तः**

क्षीर० — प्रास्यते प्रासः। हस्तक्षेप्यः (शिल्पः? शल्यः)। कुणाति कुन्तः॥

टीका० — प्रासद्वयं कुन्ते। 'असु क्षेपणे'। घञ्। प्रासः। कुं तनोतीति कुन्तः। पृषोदरादिः॥

**कोणस्तु स्त्रियः पाल्यश्रिकोटयः।**

क्षीर० — कोणो गृहादेर्विदिक्। 'कुण शब्दोपकरणयोः'। पाति पालिः। अश्नुते अश्रिः। कुटति कोटिः॥

टीका० — कोणचतुष्कमग्रभागे। यथा षट्कोणः षडश्र इति। पालित्रयं पक्षे ङीषन्तं च। 'अश भोजने'। वङ्क्र्यादित्वाद् रिन्। अश्रिः। कुटेरिः। कोटिः॥

**सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः॥ ९३॥**

क्षीर० — सर्वेण सैन्येनाभिसरणं सर्वाभिसारः। सर्वेषामोघो वहनं सर्वौघः। सर्वैः सन्नह्यतेऽत्र सर्वसन्नहनम्॥

टीका० — चतुरङ्गबलस्य सन्नहने सर्वपल्लाण इति ख्याते सर्वाभिसारद्वयम्॥

**लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनो विधिः।**

१ 'ज्वलीति' अ. पाठः.

क्षीर० — अस्त्रभृतां राज्ञां यः शास्त्रिको[1] विधिः प्रस्थानात् प्राक्, स लोहाभिसारः। लोहं शस्त्रमभिसार्यते प्रस्थाप्यतेऽत्रेति। नीरस्य शान्त्युदकस्य अजनं क्षेपोऽत्र नीराज(नं॑नः), मन्त्रोल्कया वाहनायुधादेर्निश्शेषेण राजनं वा । अत्र नीराजनानन्तरं कर्म लोहाभिसार[2] इति मुनिः —

"विधिर्लोहाभिसा[3]रस्तु राज्ञां नीराजनोत्तरः" ।

भुग्नोऽपि —

"लोहाभिसा[4]रस्तु विधिः परो नीराजनान्नृपैः ।"
दशम्यां दंसितैः कार्यः"

इति । अत एव नीराजनाद्विधिरित्येके पठन्ति ॥

टीका० — महानवमीदीक्षायां बलस्य नीराजने निर्मज्जने राज्ञां शस्त्रधारिणां यः शास्त्रचोदितो विधिः, तत्र लोहाभिहारः ॥

**यत् सेनयाभिगमनमरौ तदभिषेणनम् ॥ ९४ ॥**

क्षीर० — 'सत्यापपाश —' (३. १. २५) इति णिच् । 'उपसर्गात् सुनोति—' (८. ३. ६५) इति षत्वम् ॥

टीका० — सेनया करणभूतया विजिगीषोररौ शत्रौ आभिमुख्येन गमनमभिषेणनम् । सेनाशब्दात् 'सत्यापपाश —' (३. १. २५) इत्यादिना णिच् । ल्युट् । 'उपसर्गात् सुनोति —' (८. ३. ६५) इत्यादिना षत्वम् ॥

**यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ।**

क्षीर० — यान्त्यस्यां यात्रा । व्रजनं व्रज्या । 'व्रजयजोर्भावे क्यप्' (३. ३. ९८) । प्रपूर्वस्तिष्ठतिर्गत्यर्थः । 'ग्रहवृदृनिश्चि —' (३. ३. ५८) इत्यपि गमः ॥

---

१. 'न्ति' ग. पाठः.  २, ३, ४. 'हा' ग. पाठः.

टीका० — विजिगीषोः प्रयाणे यात्राषट्कम् । यातेः ष्ट्रन् । यात्रा । भिक्षायां व्रज्योक्ता । निर्याणत्रिके ल्युट् । गमेरप् । गमः ॥

**स्यादासारः प्रसरणं**

क्षीर० — सैन्यस्य सर्वतो व्याप्तिरासारः । आस्रियतेऽनेनेत्यासारः अन्वागच्छद्बलम् । प्रसारस्तु सैन्याद्बहिस्तृणजलाद्यर्थं प्रसरणमिति कौटिल्यः । यल्लक्ष्यं —

"निरुद्धवीवधासारप्रसारा गा इव व्रजम्" ॥

टीका० — सर्वतो बलस्य प्रसारे आसारद्वयम् । सर्तेर्घञ् । आसारः । धरणिवत् प्रसरणिः । पक्षे 'कृदिकाराद् —' (ग० ४. १. ४५) इति ङीष् ॥

**प्रचक्रं चलितार्थकम् ॥ ९८ ॥**

क्षीर० — प्रस्थितं सैन्यं प्रचक्रम् ॥

टीका० — चलितशब्दस्यार्थे प्रचक्रम् । 'प्रचक्रं चलितं त्रिषु' इत्यमरमाला ॥

**अहितान् प्रत्यभीतस्य रणे यानमभिक्रमः ।**

क्षीर० — आभिमुख्येनाभिभूयारीन् वा प्रतिगमनमभिक्रमः ॥

टीका० — अरीन् प्रति निर्भयस्य पुंसो याने अभिक्रमः ॥

**वैतालिका बोधकराः**

क्षीर० — वितालः शब्दः प्रयोजनमेषां वैतालिकाः । मङ्गल्याख्याः प्रातर्बोधका इत्येके ॥

टीका० — निशान्ते ये बोधयन्ति, तत्र वैतालिकद्वयम् । विविधतालेन चरन्तीति[3] वैतालिकाः । 'चरति' (४. ४. ३) इति ठक् ॥

१ 'स', २. 'वा ग' क. ख. पाठः. ३. 'ति ठ' ख. पाठः.

चाक्रिका घाण्टिकार्थकाः ॥ ९६ ॥

क्षीर० — चक्रं राष्ट्रम्। घण्टाघातेन देवताग्रे ये शंसन्ति ते, श्रावकाख्याः ॥

टीका० — बहुभिर्मि[1]लित्वा स्तुवत्सु चाक्रिकद्वयम्। चक्रेण चरन्तीति ठक्। घ[2]टया चरन्तीति घाण्टिकाः। पृषोदरादित्वाद् वर्णागमः, निरनुनासिको वा ॥

स्युर्मागधास्तु म[3]गधाः

क्षीर० — वंशोदीरणेन ये याचन्ते। आहुश्च —

"वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः।
राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः ॥
मागधाः स्तुतिवंशज्ञाः"

इति। मगधेति याच्ञार्थः कण्ड्वादिः। यच्छ्रीभोजः —

"कमर्थिनः कुषुभ्यन्तु कं मगध्यन्तु मागधाः।
कमिषुध्यन्तु यज्वानो रामेऽरण्यं भुरण्यति" ॥

टीका० — वंशस्तुतिपाठकेषु मागधद्वयं, वनौषधौ साधितम् ॥

वन्दिनः स्तुतिपाठकाः।

क्षीर० — वन्दन्ते स्तुवन्ति तच्छीलाः। चत्वार एकार्था इत्येके ॥

टीका० — वीर्यादिस्तुतिं ये नासीरे पठन्ति, तत्र वन्दिद्वयम्। सारपद्यस्तुतिपाठक इति केचित्। व्रीह्यादीनौ वन्दी ॥

संशप्तकास्तु समयात् सङ्ग्रामादनवर्तिनः ॥ ९७ ॥

१. 'लिताभिस्तुवत्सु चावेहा इति ख्यातेषु चा' ख. क. छ. पाठः. २. 'ण्ट' ख. पाठः. ३. 'वंशज्ञाः' ख. छ. पाठः.

क्षीर० — संशपन्ति पलायमानान्, सशपथं वा युध्यन्ते दृढनिश्चयाः संशप्तकाः ॥

टीका० — समयात् तत्रैव स्थित्वास्माभिर्योद्धव्यमिति निश्चयाद्, अथवा कुलाचाराद्, ये सङ्ग्रामे न निवर्तन्ते, ते संशप्तकाः । 'शप उपालम्भने' । क्तः ॥

**रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ।**

क्षीर० — रीयते रेणुः । 'रीङ् गतौ' । धूयते धूलिः । पंसयति वस्त्रादि पांसुः । 'पसि नाशने' । रज्यते वस्त्राद्यनेन रजः क्लीबे । 'रजनरजकरजस्सूपसंख्यानम्' इति नलोपः ॥

टीका० — रेणुचतुष्कं धूल्याम् । स्थाणुवद् रेणुः । 'धू विधूनने' । बाहुलकाल्लिः । कुटादित्वाद् ङिद्वद्भावः । वङ्क्र्यादित्वात् क्निन् । रलयोरेकत्वस्मरणम् । धूलिः । ङीषि धूली च । 'पशि नाशने' । 'अर्जिदृशिकम्यमिपशि —' (उ० १. २७) इत्यादिना उः दीर्घश्च । पांशुः । एवमुणादौ तालव्यवान् । धातुवृत्तौ दन्त्यवानुक्तः । अत एव वृन्दावनयमकं —

"कणिकाभिरपां सुखरं विसृजन्ति गुहासमीरणमपांसुखरम्"

इति । रञ्जेः 'भूरञ्जिभ्यां कित्' (उ० ४. २१८) इत्यसुन् । रजः । अदन्तोऽपि । तथाचोत्पलिनी —

"पुष्परेणौ गुणे चैव रजोऽपि रजसा सह"

इति । न द्वयो रज इति सम्बन्धः ॥

**चूर्णे क्षोदः**

क्षीर० — 'चूर्ण क्षोदे' । 'क्षुदिर् सम्पेषणे' । धूलिप्रायोऽयम् । यच्छाश्वतः —

"चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करा" ॥

१. 'कयोस्सूप' ग. पाठः. २. 'त्वम्' ख. पाठः. ३. 'ग्याः' क. ग. पाठः.

टीका० — धूलितः किञ्चिदुपचिते क्षोदनेन कृते माषादीनां रजोविशेषे क्षोदद्वयम्। क्षोदसाहचर्यात् चूर्णो ना। 'क्षुदिर् सम्पेषणे'। घञ्। क्षोदः। षडेव समानार्था इत्यपरः॥

**समुत्पिञ्जपिञ्जलौ भृशमाकुले॥ ९८॥**

क्षीर०—'पिजि हिंसायाम्'। आह च—'समुत्पिञ्जोऽतिसङ्कुलः'॥

टीका० — अत्यन्तव्याकुले सैन्यादौ समुत्पिञ्जद्वयम्। 'तुजि पिजि बलने'। चौरादिकादेरचि समुत्पिञ्जः। पृषोदरादित्वात् पिञ्जलः॥

**पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्।**

क्षीर० — पतति धूयते पताका। विजयते विजयन्तः। औणादिको झच्। तस्येयं वैजयन्ती। केत्यते संज्ञायतेऽनेन केतनम्। ध्वजति धूयते ध्वजः। पताकादण्डो ध्वज इत्येके। केतुर्नानार्थे॥

टीका० — पताकाचतुष्कं पताकायाम्। '‡शलिपरिपतिभ्यो नित्' इत्याकः। पताका। पटाकाशब्दोऽप्यत्र। विपूर्वाज्जयतेः 'तृभूवासिवहिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च' (उ०३. १२८) इति झच्। अन्तादेशः। पृषोदरादित्वाद् वर्णविपर्ययः। वैजयन्तः। षिदधिकारान्ङीषि वैजयन्ती। विजयन्तानां सम्बन्धिनी वा वैजयन्ती। 'तस्येदम्' (४. ३. १२०) इत्यण्। गेहे केतनमुक्तम्। ध्वजेरच्। ध्वजः॥

**सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा॥ ९९॥**

क्षीर० — वीरा आशंस्यन्तेऽत्र॥

टीका० — खण्डखण्डि(?) भूतैरश्वहस्त्यादिभिरतिभयङ्करा भूः वीराशंसनम्। 'शन्सु स्तुतौ'। कर्मणि 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति ल्युट्। बहुलमन्यत्रापीति वा युच्॥

---

१. 'ली' ख. पाठः. २. 'क्ष', क. पाठः.

---

‡ इदं मुद्रितोणादौ बलाकादिगणान्तर्गतं दृश्यते।

**अहं पूर्वमहं पूर्वमित्यहम्पूर्विका स्त्रियाम् ।**

क्षीर० — अहं पूर्वमहं पूर्वमस्यां क्रियायामिति सर्वे यत्र ब्रुवते, सा अहंपूर्विका । स्वार्थे कन् । मत्वर्थीयो वा ठन् ॥

टीका० — अहमग्रे यामि अहमग्रे यामीत्यन्योन्यं यद् योधानां धावितं तत्राहम्पूर्विका । विभक्तिप्रतिरूपकोऽहंशब्दो निपातितः । 'सुप्सुपा' इति योगविभागात् समासः । ततः संज्ञायां कन् । वीप्साया गम्यमानत्वान्न द्विरुक्तिः ॥

**आहोपुरुषिका दर्पाद् या स्यात् सम्भावनात्मनि ॥१००॥**

क्षीर० — अहो पुरुषोऽहमित्यस्य भावः । मनोज्ञादित्वाद् वुञ् ॥

टीका० — अधिकार्थवचनेनात्मनः शक्तेरप्रतिघाताविष्करणं संभावना, तत्र आहोपुरुषिका । अत्राप्यहोशब्दोऽहंकृद्वाची । पूर्ववत् समासः । मनोज्ञादित्वाद् वुञ् ॥

**अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः ।**

क्षीर० — अहं शक्तोऽहं शक्त इत्यस्त्यस्यामहमहमिका । ठन् । अहंशब्दो निपातः ॥

टीका० — अन्योन्यं प्रति श्रेष्ठोऽहमित्यभिमानोऽहमहमिका । आर्येयम् ॥

**द्रविणं तरःसहोबलशौर्याणि स्थाम शुष्मं च ॥ १०१ ॥**
**शक्तिः पराक्रमः प्राणः**

क्षीर० — द्रवत्यनेनारिर्द्राविणम् । तरत्यनेनापदं तरः । सहतेऽनेन अरिं सहः । असन्तौ । शूरस्य भावः शौर्यम् । तिष्ठन्त्यनेन स्थाम । शुष्यत्यनेनारिः शुष्मम् । शुष्मेत्येके । शकनं शक्तिः । प्राणनं प्राणः ॥

१. 'पूर्विकैव स्त्रियामह' ग. पाठः. २, ३. 'भवामि', ४. 'त्वाद् द्वि' म. पाठः.

टीका० — द्रविणदशकं सामर्थ्ये । 'द्रु गतौ' । 'द्रुदक्षिभ्यामिनन्' (उ० २. ५३) । द्रविणम् । तरतेः सहतेश्च असुनि तरस्सहसी क्लीबे । बलम् उक्तम् । शूरस्य भावः शौर्यम् । तिष्ठतेर्मेनिन्, स्थामा । शुषेर्मक्, शुष्मम् । 'शक्लृ शक्तौ' । क्तिन् । शक्तिः । क्रमतेर्घञ्, पराक्रमः । प्राण उक्तः ॥

**विक्रमस्त्वतिशक्तिता ।**

क्षीर० — विक्रमन्तेऽनेन विक्रमः ॥

टीका० — अतिशक्तिता शौर्यातिशयो विक्रमः ॥

**वीरपाणं तु यत् पानं वृत्ते भाविनि वा रणे ॥ १०२ ॥**

क्षीर० — वीराणां मद्यपानं वीरपाणम् ॥

टीका० — भूते रणे भविष्यति वा यद् योधानां मद्यादिपानं, तद् वीरपाणम् । पातेर्ल्युटि 'वा भावकरणयोः' (८. ४. १०) इति णत्वम् ॥

**युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।**
**मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् ॥ १०३ ॥**
**अस्त्रियां समरानीकरणाः कलहविग्रहौ ।**
**सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः ॥ १०४ ॥**
**अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ।**
**समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ १०५ ॥**

क्षीर० — 'युध सम्प्रहारे' । युद्धम् । भावे क्तः । ल्युट्यायोधनम् । जायते जन्यं, 'भव्यगेय —' (३. ४. ६८) इति साधुः । प्रधनन्ति घ्नन्ति प्रधनम् । धनिर्मरणार्थोऽत्र निधनवत् । म्रियन्तेऽस्मिन् मृधम् । आस्कन्द्यतेऽत्रास्कन्दनम् । संचक्ष्यतेऽस्मिन् सङ्ख्यम् । सम्पूर्वश्चक्षिर्वर्जनार्थः । समीयतेऽस्मिन् समीकम् । 'ई गतौ' । सम्परायो मृत्युः प्रयोजनमस्य साम्परायिकम् । विनयादित्वात् स्वार्थे ठग्वा । समियर्ति सङ्घटतेऽस्मिन् समरः । न नीयते चाल्यतेऽत्रानीकम् । अनीकमस्त्यस्यै वा ।

१. 'समार्थे द्रु' अ. पाठः. २. 'यन्ते मृ', ३. र्थः । सङ्ख्यं च । स', ४. 'त्र' ग. पाठः.

रणन्ति दुन्दुभयोऽत्र रणम्। 'वशिरण्योश्च' (वा० ३.३.५८) इति वक्तव्यादप्। कल्यते क्षिप्यतेऽत्र कलहः। कलं हीनबलं हन्ति वा। विगृह्णात्यत्र विग्रहः। 'ग्रहवृदृनिश्चि—'(३.३.५८) इत्यप्। सम्प्रहरन्त्यन्योन्यं घ्नन्त्यत्र सम्प्रहारः। अभिसम्पतन्त्यत्र अभिसम्पातः। कल्यतेऽत्र कलिः। संस्फुटन्त्यत्र संस्फोटः। संस्फेट इति तु युक्तः पाठः। 'स्फिट अनादरे'। भरते तु संफेटः। संयुज्यन्तेऽत्र सङ्गता रथयुगा अत्र वा संयुगः। अभ्यामृद्नन्त्यत्र अभ्यामर्दः। समाघ्नन्त्यत्र समाघातः। सङ्ग्रामयन्तेऽस्मिन् सङ्ग्रामः। अभ्यागच्छन्त्यत्र अभ्यागमः। आह्वयन्तेऽत्र आहवः। 'आङि युद्धे' (३.३.७३) इत्यप्। 'ह्वः सम्प्रसारणम्' (६.१.३२)। समुदयन्ते मिलन्त्यत्र समुदायः। संयतन्ते संयच्छन्ति वात्र संयत्। संयन्ति सङ्गच्छन्तेऽत्र समितिः। आ अज्यन्ते क्षिप्यन्तेऽत्राजिः। युध्यन्तेऽस्यां युत्॥

टीका०—युद्धाद्येकत्रिंशद् युद्धे। युद्धायोधनयोर्भावे क्तल्युटौ। शस्तजनयोगाज्जन्यम्। यप्प्रकरणे 'अन्येभ्योऽपि दृश्यते'(५.२.१२०) इति यप्। प्रशस्तं धनं सङ्घोऽत्रेति प्रधनम्। दृणातेर्णिचि ल्युट्। प्रविदारणम्। 'शृधुमृधू उन्दे'। अधिकरणे घञर्थे कः। मृधम्। 'स्कन्दिर् गतिशोषणयोः'। ल्युट्। आस्कन्दनम्। ख्यातेः 'घञर्थे कविधानम्' (३.३.५८) इति कः। सङ्ख्यम्। 'समं ष्टम वैक्लव्ये'। 'अलीकादयश्च' (उ० ४.२५) इति ईकन्, समीकम्। दन्त्यवत्। सम्परापूर्वादिणः 'पुंसि संज्ञायां घः प्रायेण' (३.३.११८) इति घः। ततः संज्ञायां स्वार्थे कन्। सम्परायकः। साम्परायिकपाठे स्वार्थे 'विनयादिभ्यष्ठक्' (५.४.३४)। सह मरेण वर्तते समरः। अनीकं सैन्यं, तद्योगादनीकम्। अर्शआद्यच्। रणतेः पचाद्यच्। रणः। समरत्रिकमस्त्रियाम्। कलं हन्तीति कलहः। विग्रहोऽबन्तः। 'अध्यायन्यायोद्यावसंहाराधारावायाश्च' (३.३.१२२) इत्यनेन चकारस्यानुक्तसमुच्चयार्थत्वादधिकरणे घञि सम्प्रहारः। अधिकरणे 'हलश्च' (३.३.१२१) इति घञ्, अभिसम्पातः। कलेः 'इन्' इति इन्।

१. 'न्ते आक्षि' ख. पाठः. २. त्। घटादयः षित इति।' क. ग. घ. ङ. पाठः. ३. 'धा', ४. 'धयो' ख. ग. पाठः. ५. 'स्त्रजयो', ६. 'धृ शब्दने अ' ड. छ. पाठः. ७. 'म वै' ख. ग. पाठः. ८. 'इति घञ्। अनेन' ङ. छ. पाठः.

कलिः। स्फुटेर्घञ्। संस्फोटः। युगे युग उक्तः। सम्पूर्वः संयुगः। 'मृद क्षोदे'। घञ्। अभ्यामर्दः। हन्तेर्घञ्। 'हनस्तोऽचिण्णलोः' (७. ३. ३२) इति तकारः। आघातः। 'सङ्ग्राम युद्धे'। चुरादिणिच्। 'पुंसि संज्ञायां घः प्रायेण' (३. ३. ११८) इति घः। सङ्ग्रामः। गमेरप्। अभ्यागमः। आहूयन्तेऽत्रेत्याहवः। 'आङि युद्धे' (३. ३. ७३) इत्यप् सम्प्रसारणं च। समूहे समुदाय उक्तः। 'यमु उपरमे'। क्विप्। 'गमः क्वौ' (६. ४. ४०) इत्यनुवृत्तौ 'गमादीनामिति वक्तव्यम्' (६. ४. ४०) इति क्वौ अनुनासिकलोपः। संयत्।

"रवेण भौमो ध्वजवर्तिवीरवेरवेजि संयत्यतुलास्त्रगौरवे।"

इति दण्डिना पुमान् संयत् प्रयुक्तः। समितिः। 'अज गतिक्षेपणयोः'। 'अज्यतिभ्यां च' (उ० ४. १३२) इति इण्। बाहुलकान्न वीभावः। आजिः।

"वाहनाजनि मानासे साराजावनमा ततः।"

इति माघे (सर्ग० १९. श्लो० ३३) पुमानाजिः। सारश्चासावाजिश्चेति साराजिः। तस्मिन् साराजौ। किंभूते, मानासे मानखण्डके। अन्यथा मानासायामिति स्यात्। सम्यगिणोऽधिकरणे सम्पदादिक्विप्। समित्। युध्यतेः क्विप्। युत्॥

**नियुद्धं बाहुयुद्धे**

**क्षीर०**—नियुतं युद्धं नियुद्धम्॥

**टीका०**—मल्लादीनां बाहुयुद्धे नियुद्धम्॥

**अथ तुमुलं रणसङ्कुले।**

**क्षीर०**—ताम्यन्त्यत्र तुमुलम्। तुः सौत्रो वा॥

**टीका०**—आकुले रणे तुमुलम्। 'तुमुलो व्याकुलो रण' इति त्रिकाण्डः॥

**क्ष्वेडा तु सिंहनादः स्यात्**

---

१. 'ल' ब. पाठः.

क्षीर०—'क्ष्वेड अव्यक्ते शब्दे' इति दुर्गः। सिंहस्येव नदनं भटानां सिंहनादः॥

टीका०—योधानां परबलभङ्गार्थं झङ्कारवे क्ष्वेडाद्वयम्। विषे क्ष्वेड उक्तः। सिंहानां गर्जितमिव सिंहनादः॥

**करिणां घटना घटा ॥ १०६ ॥**

क्षीर०—'घटादयः षित' इति 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४)॥

टीका०—करिणां घटना सङ्ग्रामभावोक्तं सज्जनं घटा। 'घट चेष्टायाम्'। घटादीनां षित्त्वात् 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४)॥

**क्रन्दनं योधसंरावः**

क्षीर०—समन्ताद् रवणं संरावः। 'उपसर्गे रुवः' (३. ३. २२)।

टीका०—योधानामन्योन्यं मया सह युध्यस्वेत्याद्याह्वाने क्रन्दनद्वयम्। क्रन्दतेर्ल्युट्॥

**बृंहितं करिगर्जितम्।**

क्षीर०—'बृहि शब्दे'॥

टीका०—करिणां गर्जिते बृंहितद्वयम्। 'बृह बृहि वृद्धौ'। क्तः॥

**विष्फारो धनुषः स्वानः**

क्षीर०—'स्फुर चलने'॥

टीका०—धनुश्शब्दे विस्फारः। 'स्फुर संचलने'। घञ्। लघूपधगुणः। 'स्फुरतिस्फुलत्योर्घञि' (६. १. ४७) इति एचः स्थाने आत्वे विस्फारः। दन्त्यवान्। 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' (८. ३. ७६) इति षत्वविकल्पे विष्फार

इत्यपि । णिचि तु एरचि 'चिस्फुरोर्णौ' (६. १. ५४) इत्यात्वविकल्पे पूर्ववत् षत्व-विकल्पे च विस्फोरविष्फोरौ च ॥

**पटहाडम्बरौ समौ ॥ १०७ ॥**

क्षीर० — पटो हन्यते स्म पटहः । आदम्यते आडम्बरः । डम-रुवद् दस्य डत्वम् ॥

टीका० — पटहद्वयं सङ्ग्रामपटहध्वनौ । पटह उक्तः । आङ्पूर्वा-ल्लम्बतेः 'ऋच्छेररन्' (उ० ३. १३१) इति बाहुलकोऽरन् । डलयोरेकत्वस्मरणम् । आडम्बरः ॥

**प्रसभं[1] तु बलात्कारो हठः**

क्षीर० — प्रगता सभात्र प्रसभम्[2] । सभया युक्तायुक्तविचारो लक्ष्यते । 'प्रस प्रसवे वा' । बलादिति निपातो हठार्थः । 'हठ प्लुतिश-ठत्वयोः' ॥

टीका० — प्रसभत्रयं बलात्कारे । 'क्लीबे तु प्रसभं हठः' इति बोपा-लितः । 'हठ प्लुतिसङ्कोचयोः' । पचाद्यच् । हठः ॥

**अथ स्खलितं छलम् ।**

क्षीर० — स्खलनं मार्गाच्चलनम् । छ्यति भिनत्ति छलम् ॥

टीका० — स्खलितद्वयं युद्धविषये मर्यादायाः स्खलने । पूर्वं तु नाट्यप्रकरणे[3] धैर्यादेः स्खलने रिङ्गणमुक्तम् ॥

**अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् ॥ १०८ ॥**

क्षीर० — न जने साध्वजन्यम् । उत्पतत्यकस्माद्दौयात्युत्पातः । ज्वलादित्वाण्णः । उपसृज्यते उपद्रियते प्रजाऽत्रोपसर्गः ॥

१. 'भस्तु ब', २ 'भः । स' ख. पाठः, ३. 'क्रमे धै' क. ख, ग. घ. पाठः, ४. 'दुद्यात्यु' ख. पाठः,

टीका० — अजन्यत्रयमुत्पाते । 'अजन्योपप्लवोत्पाता' इति[1] तु पुंस्काण्डे वोपालितः ॥

**मूर्छा तु कश्मलं मोहोऽपि**

क्षीर० — कशति वैचित्यात् कश्मलम् ॥

टीका०—मूर्छात्रयं मोहे । 'मुर्छा मोहसमुच्छ्राययोः' । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । टाप् । 'उपधायां च' (८. २. ७८) इति दीर्घः । मूर्छा । कसेः सौत्रात् 'कम्बलादयश्च' इति निपातनात् कलप्रत्ययो मुगागमश्च । कस्मलम् । तालव्यशामिति केचित् । 'कुष निष्कर्षे' । 'कुटिकुषिभ्यां क्मलन्' (उ० ४. १८८) इति वर्तमाने 'कुषेरच्चोपधायाः'* इति क्मलन् उपधायाश्च अकारः । कष्मलम् । एवमुणादौ मूर्धन्यवत् । 'मुह वैचित्ये' । घञ् । मोहः ॥

**अवमर्दस्तु पीडनम् ।**

क्षीर० — 'पीड गहने' ॥

टीका० — परचक्रेण देशस्य पीडने अवमर्दद्वयम् । 'मृद क्षोदे' । घञ् । अवमर्दः । पीडयतेर्ल्युटि पीडनम् ॥

**अभ्यवस्कन्दनं त्वभ्यासादनं**

क्षीर० — छलादाक्रमणमित्यर्थः । साचि[3] चं[4] (?) । रात्रौ सौ-[5]षुप्तिकम् ॥

टीका० — निश्शक्तीकरणाय यः शत्रुभिः प्रहारो दीयते तत्राभ्यवस्कन्दनद्वयम् । 'स्कन्दिर् गतिशोषणयोः' । ल्युट् । अभ्यवस्कन्दनम् । सदेर्णिचि ल्युट् । आसादनं, दन्त्यसम् ॥

१. 'ति पुं' ञ. पाठः. २. 'दि' ख. पाठः. ३. 'पी च', ४. 'चात्रौ ग. पाठः ५. 'कः' ॥ क. घ. पाठः.

* इदं सूत्रं मुद्रितोणादौ न दृश्यते ।

विजयो जयः ॥ १०९ ॥

क्षीर० — विः स्वार्थे । लोचनविलोचनवत् ॥

टीका० — विजयद्वयं जयक्रियायाम् । एरच् (३. ३. ५६) ॥

वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ।

क्षीर० — प्रतीपकरणं प्रतीकारः । शुद्धिः निर्यातनं शोधनम् । 'यत निकारो[1]पसंस्कारयोः' । जितकाशी जिताहवः ॥

टीका० — वैरशुद्धित्रयं वैरनिर्यातने । क्तिन्नन्तत्वाद् वैरशुद्धिः । स्त्रियां घञि प्रतीकारः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति पक्षे दीर्घः ॥

प्रद्रावोद्द्रावसन्द्रावसन्दावा विद्रवो द्रवः ॥ ११० ॥
अपक्रमोऽपयानं च

क्षीर० — एतेऽष्टौ पलायनार्थाः । 'प्रे द्रुस्तुस्रुवः' (३. ३. २७)। 'उदि श्रयतियौतिपूद्रुवः' (३. ३. ४९) इति घञ् । 'समि युद्रुदुवः' (३. ३. २३) इति घञ् । अपद्वारेण क्रमणं पलायनम् अपक्रमः ॥

टीका० — प्रद्रावाष्टकं पलायनमात्रे । 'प्रे द्रुस्तुस्रुवः' (३. ३. २७) इति घञ् । प्रद्रावः । 'उदि श्रयतियौतिपूद्रुवः' (३. ३. ४९) इति घञि उद्द्रावः । सन्द्रावसन्दावयोः 'समि युद्रुदुवः' (३. ३. २३) इति घञ् । ऋदोरपि[2] विद्रवद्रवौ । यातेर्ल्युट् । अपयानम् ॥

रणे भङ्गः पराजयः ।

क्षीर० — भङ्गोऽपसरणम् । अन्यत्रोपचारात् ॥

1. 'पातोप' ग. घ. पाठः.　२. 'पृ । वि' ञ. पाठः.

टीका० — युद्धभङ्गे पराजयः ॥

**पराजितपराभूतौ त्रिषु**

क्षीर० — परिभूतोऽभिभूतोऽपि ॥

टीका० — युद्धे जिते पराजितद्वयम् । क्तान्तम् ॥

**नष्टतिरोहितौ ॥ १११ ॥**

क्षीर० — त्रिष्वित्येव । नश्यति स्म नष्टम् । अदृश्यम् । तिरोधीयते स्म तिरोहितम् । गृहीतादिकं[1] च ॥

टीका० —नष्टद्वयमदृष्टे वस्तुनि । लुक्काइत[2] इति यावत् । त्रिष्वित्युभयत्र सम्बध्यते । नश्यतेः क्तः । नष्टः । तिरःपूर्वाद् धाञः क्तः । 'दधातेर्हिः' (७. ४. ४२ ) इति[3] धातोर्हिरादेशः । अथवा 'हि गतौ' । क्तः । तिरस् अदर्शनं हितो गतः तिरोहितः ॥

**प्रमापणं निबर्हणं निकारणं निशारणम् ।**
**प्रवासनं परासनं निषूदनं निहिंसनम् ॥ ११२ ॥**

**निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।**
**निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥ ११३ ॥**

**निर्वापणं विशसनं मारणं प्रतिघातनम् ।**
**उदासनं[4] प्रमथनक्रथनोज्जासनानि च ॥ ११४ ॥**

**आलम्भपिञ्जविशरघातोन्माथवधा अपि ।**

क्षीर० — अत्राहिंसार्था अप्युपसर्गवशाद्धिंसार्था ज्ञेयाः । अकर्मकाश्च णिचा सकर्मकाः । प्रमापणम् । 'मीङ् हिंसायाम्' । णिचि 'मीनातिमिनोति—' (६. १. ५०) इत्यात्वम् । निपूर्वाद् बृहेर्बर्हेर्वा निबर्हणम्

१. 'हृ ॥ प्र', २. 'का इति', ३. 'ति हिरा', ४. 'न' ख. पाठः.

निकारणम्। 'कृञ् हिंसायाम्'। निशारणम्। 'शॄ हिंसायाम्'। प्रवसतः प्रयुक्तिः प्रवासनम्। एवं निर्वासनम्। 'असु क्षेपणे'। अस्मात् परासनमपासनं च। 'षूद क्षरणे'। अस्मान्निषूदनं जीवाच्चालनम्। नितरां हिंसनं निहिंसनम्। संज्ञपनम्। ज्ञपेः 'मारणतोषण—' इति मित्त्वाद्ध्रस्वः। निर्ग्रन्थनम्। 'ग्रथि कौटिल्ये'। निस्तर्हणम्। तृहेर्हिंसार्थान्निष्पूर्वात् स्तृहेर्वा निपूर्वात्। क्षणनम्। 'क्षण हिंसायाम्'। निर्वापणम्। 'पै ओवै शोषणे'। विशसनम्। 'शसु हिंसायाम्'। क्रथनम्। 'क्रथ हिंसायाम्'। उज्जासनम्। 'जसु हिंसायाम्'। आकुलं लम्भनमालम्भः। लभिराङ्पूर्वो हिंसार्थः। 'उपसर्गात् खल्घञोः' (७. १. ६७) इति नुम्। 'पिजि हिंसायाम्'। पिञ्जः। विशरणं हिंसनं विशरः। हननं वधः। 'हनश्च वधः' (३. ३. ७६) इत्यप् वधादेशश्च। पक्षे घञि घातः। 'मथ संक्लेशने'। व्यापादनं निशसनं कदनं निसुम्भनं च॥

टीका० — प्रमापणादयस्त्रिंशद् मारणे। प्रमाणीनामेयमनुष्टुप्। 'हन्त्यर्थाश्च' इति चुरादिणिच्। 'मीनातिमिनोतिदीङां ल्यपि च' (६. १. ५०) इत्यात्वम्। 'अर्तिह्री —' (७. ३. ३६) इत्यादिना पुक्। 'णेर्विभाषा' (८. ४. ३०) इति णत्वविकल्पः। प्रमापणम्। आलम्भादिषड्बहिः सर्वत्र ल्युट्। निबर्हणमुक्तम्। 'कृञ् हिंसायाम्'। प्रमापणवण्णिचि निकारणविशारणे। 'वस स्नेहच्छेदापहरणेषु'। चुरादिणिचि प्रवासनपरासननिर्वासनोद्वासनानि। 'षूद क्षरणे हिंसायां च'। 'सात्पदाद्योः' (८. ३. १११) इति षत्वप्रतिषेधः। निसूदनम्। 'बृह बृहि हिसि हिंसायाम्'। निहिंसनम्। 'मारणतोषणनिशामनेषु ज्ञा' इति मित्त्वम्। संज्ञपनम्। 'ग्रन्थ हिंसायाम्'। निर्ग्रन्थनम्। 'तृह हिंसायाम्'। निस्तर्हणम्। हन्तेर्निहननम्। 'क्षणु हिंसायाम्'। क्षणनम्। 'वृजी वर्जने'। परिवर्जनम्। ओवपो णिचि निर्वापणम्। 'शमु हिंसा-

१. 'म्। पिञ्जः। पिजिर्हिंसार्थः। वि' ख. पाठः. २. 'पि' ग. पाठः. ३. 'शु' क. पाठः.

याम्' । विशसनम् । मृङो णिचि मारणम् । हन्तेः पूर्ववण्णिचि प्रतिघातनम् । 'मथे विलोडने' । प्रमथनम् । 'श्रथ क्रथ हिंसायाम्' । पूर्ववण्णिचि घटादि-मित्त्वे च क्रथनम । 'जसु हिंसायाम्' । तद्वण्णिचि उज्जासनम् । आङ्पूर्वो लभि-र्मारणे । घञ् । 'उपसर्गात् खल्घञोः' (७. १. ६७) इति नित्यत्वाद् वृद्धिं बाधि-त्वा नुम् । आलम्भः । 'पिजि हिंसायाम्' । चुरादिः । एरचि पिञ्जः । शृणातेः ऋदोरपि विशरः । आघातवद् घातः । 'मथे विलोडने' । घञ् । उन्माथः । 'हनश्च वधः' (३. ३. ७६) इति हन्तेः पक्षे अप् वधादेशश्च । वधः ॥

**स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥ ११६ ॥**

**अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।**

क्षीर० — देहस्तावत्[१] पञ्चभूतारब्धः । मरणं त्वेतस्य[२] पञ्चभावः, प्रत्येकं स्वांशसङ्क्रमात् । कालो मृत्युदूतः, क्षणत्र्युट्यात्मको वा । यदाहुः — 'कालः संहरति प्रजाः' । तस्य धर्मः कालधर्मः संहारः । दिष्टस्य कालस्य जीवितावधेरन्तो दिष्टान्तः । अत्ययोऽन्तः । मरणं मृत्युः । द्वयोः स्त्रीपुंसयोः । निवृत्तं धनमत्र निधनम् । निपूर्वो धनिर्मरणार्थ इति सभ्यः ॥

टीका० — पञ्चतादशकं मरणे । पञ्चानां भूतानां पृथक्ता पञ्चता कालस्य यमस्य धर्मः, तत्प्रयुक्तत्वात् कालधर्मः । दिष्टस्य कालस्यान्तो दिष्टान्तः । प्रलय उक्तः । एतेः 'एरच्' (३. ३. ५६) । अत्ययः । 'अति अदि बन्धने' । अच् । अन्तः । अमेर्वा तन् । नश्यतेर्घञ् । नाशः । 'भुजिमृङ्भ्यां युक्त्युकौ' (उ० ३. २१) इति त्युक् । मृत्युः द्वयोः । म्रियतेर्ल्युटि मरणम् । निपूर्वाद् दधातेः 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' (उ० २. ८३) । निधनम् ।

१. 'णे । उ' ङ. छ. पाठः. २. 'न्महाभू', ३. णत्वेनास्य पञ्चता । ५ ४. 'युगाद्यात्म' क. पाठः. ५. 'भ्याः' ङ. पाठः. ६. 'ञ्चभू' क. ख. पाठः. 'नोऽस्त्रियाम्' क. ख. ञ. पाठः.

*परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ॥ ११६ ॥
मृतप्रमीतौ त्रिष्वेते

क्षीर० — परागता असवोऽस्य परासुः । संतिष्ठते स्म संस्थितः । सम्पूर्वस्तिष्ठतिर्मरणे वर्तते । सर्वेऽते वाच्यलिङ्गाः ॥

टीका० — परासुसप्तकं मृते । परागता असवोऽस्येति परासुः । प्राप्तं पञ्चत्वं पृथगात्मता येन स प्राप्तपञ्चत्वः । पराप्रपूर्वादिणः क्तः । परेतप्रेतौ । सम्पूर्वस्तिष्ठतिर्मरणे । क्तः । संस्थितः । मृङः क्तः । मृतः । 'मीङ् हिंसायाम्' । प्रमीतः । परास्वादयस्त्रिषु ॥

चिता चित्या चितिः स्त्रियः ।

क्षीर० — चीयते स्म चिता । चेतव्या चित्या । 'चित्याग्निचित्ये च' (३. १. १३२) इति साधुः । चीयते चितिः । एते प्रेतदाहार्थेऽग्न्याधारे वर्तन्ते ॥

टीका० — चितात्रयं चितायाम् । चिञो बहुलवचनाद् 'अञ्जिघृसिभ्यः क्तः' (उ०३. ८९) । टाप् । चिता । 'निष्ठा' (३. २. १०२) इति वा क्तः । 'चित्याग्निचित्ये च' (३. १. १३२) इत्यनेन निपातिता चित्या । अधिकरणे क्तिनि चितिः ॥

कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ॥ ११७ ॥

क्षीर० — कस्य शिरसो बन्धोऽत्र कबन्धः । केन बन्धो वा । क्रियायुक्तं नृत्यत् । अपगतो मूर्धास्य अपमूर्ध यत् कलेवरम् । कुण्डोऽपि ॥

टीका० — शिरःशून्यं सक्रियं शरीरं कबन्धः । कं शिरः बध्यतेऽस्मिन्निति कबन्धः । अधिकरणे घञ् ॥

श्मशानं स्यात् पितृवनं

क्षीर० — शवानां शयनं श्मशानम् । पृषोदरादित्वाच् शवशब्दस्य श्मादेशः शयनस्य शानं च । प्रेतवनं करवीरं च ॥

---

१. 'जि' क. ख. पाठः. २. 'ति अ' पाठः. ३. 'दिः । प्रे' ग. पाठः.

* इतः प्राक् 'प्रलयोऽस्त्री दीर्घनिद्रा हिंसा संस्था प्रमालनम्' इत्यर्धमधिकं क्षीरस्वामीयकोशेषु दृश्यते ।

टीका० — श्मशानद्वयं श्मशाने। शवस्य शयनं श्मशानम्। पृषोदरादिः। तालव्यं च। 'वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः' (८. ४. ४) इति नियमितत्वादत्र न णत्वं, पितृवनम्॥

कुणपः शवमस्त्रियाम्।

क्षीर० — कुणं शब्दं पाति कुणपः। धनञ्जयाख्यस्य वायोः शवेऽसम्भवात्। शवति यात्यस्माज्जीवः शवः॥

टीका० — कुणपद्वयं शवे। क्वणेः शब्दार्थाद् दण्डकात् 'क्वणेः सम्प्रसारणं च' (उ० ३. १४३) इति कपन्, वकारस्य सम्प्रसारणमुकारः। कुणपः। 'शव गतौ'। तालव्यादिः। पचाद्यच्। शवः॥

प्रग्रहोपग्रहौ वन्द्यां

क्षीर० — प्रगृह्यते बध्यते प्रग्रहः। वन्द्यते याच्यते वन्दी हठहृता स्त्री। बलवतो हस्ते क्षिप्तो राजपुत्रादिश्च। यदाहुः— 'वन्दी स्यात् पणबन्धस्थः'॥

टीका० — प्रग्रहद्वयं वन्द्याम्। 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यपि प्रग्रहोपग्रहौ। वन्देः 'इन्' (उ० ४. ११९) इति इन्। ङीषि वन्दी॥

कारा स्याद् बन्धनालये॥११८॥

क्षीर० — कीर्यते क्षिप्यतेऽस्यां कारा। भिदादिः। गुप्तिश्च॥

टीका० — काराद्वयं काहरेति ख्याते। भिदादिगणसूत्रेण 'कारा बन्धने' इत्यनेन करोतेरङुपधादीर्घत्वाभ्यां कारा निपातिता॥

पुंसि भूम्न्यसवः प्राणाश्चैवं

क्षीर० — अस्यन्तेऽसवः। स्वभावाद् बहुत्वे पुंल्लिङ्गाः। प्राणित्यमीभिः प्राणाः। एवंशब्दात् पुंसि भूम्नि च। 'प्राणो नाम वायुरि'त्येकत्वमजीवार्थत्वात्॥

---

१. 'प्र।' क. ख. ग. पाठः. २. 'वार्यते' ग. पाठः.

टीका० — असुद्वयं प्राणेषु। 'असु क्षेपणे'। स्वरुवद् उः। असुशब्दो दन्त्यवान्। प्राणा अपि पुंसि बहुत्वे चेति एवंशब्दार्थः। कथं तर्हि 'प्राणो नाम महान् वायुर्यदोर्ध्वमतिक्रामती'ति न्यासः। स एकत्वविवक्षायां साधुः। पञ्चानां वायूनां च यदा प्राणशब्देनाभिधानं, तदा बहुत्वमेव। अत एव एकत्वविवक्षायां —

"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः"

इति प्रयोगः॥

**जीवोऽसुधारणम्।**

क्षीर० — जीवः प्राणधारणम्। जीवापि॥

टीका० — प्राणधारणक्रियायां जीवद्वयम्। जीवतेः 'हलश्च' (३. ३. १२१) इति घञ्। जीवः॥

**आयुर्जीवितकालो ना**

क्षीर० — आयात्यायुः। जीवनावधिः। उसन्तः क्लीबे। छन्दस्युदन्तोऽपि॥

टीका० — आयुर्द्वयमायुषि। 'एतेर्णिच्च' (उ० २. ११८) इति उसिः। णित्त्वाद् वृद्धिः आयुः। जीवितकालो ना॥

**जीवातुर्जीवनौषधम्॥ ११९॥**

क्षीर० — जीवत्यनेन जीवातुः। जीवनायौषधं जीवरक्षोपायः। यथा —

"जीवातवे विसृज शूद्रमुनौ कृपाणम्"।

जीवितमौषधं चेत्युपाध्यायः॥

इति क्षत्रियवर्गः॥

१. 'वनं जी' ख. पाठः. २. 'य', ३. 'नौष' क. पाठः.

टीका० — म्रियमाणसञ्जीवनौषधौ जीवातुद्वयम्। 'जीवेरातुः' (उ० १. ८२) इत्यातुः। 'जीवातुः पुन्नपुंसकमि'ति रभसः॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे क्षत्रियवर्गः।

---

## अथ वैश्यवर्गः।

**ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः।**

क्षीर० — ऊर्वोर्भवा ऊरव्याः। 'शरीरावयवाद् यत्' (५. १. ६)। यच्छ्रुतिः—'ऊरू तदस्य यद्वैश्यः'। अरणीयोऽर्यः। 'अर्यः स्वामिवैश्ययोः' (३. १. १०३) इति साधुः। विशोऽपत्यं जातिर्वैश्यः। 'गर्गादिभ्यो यञ्' (४. १. १०५)। भूमिं स्पृशति कृष्यादिना भूमिस्पृक्। विशतीति विट्॥

टीका० — ऊरव्यषट्कं वैश्ये। ब्रह्मण ऊर्वोर्भवा ऊरव्याः। 'शरीरावयवाद् यत्' (५. १. ६) इति यत्। 'ओर्गुणः' (६. ४. १४६)। 'वान्तो यि प्रत्यये' (६. १. ७९) इत्यवादेशः। ऊर्वोर्जाता ऊरुजाः। 'ऋ गतौ'। 'अर्यः स्वामिवैश्ययोः' (३. १. १०३) इति यत्। अर्यः। विश एव वैश्याः। स्वार्थे ष्यञ्। क्षेत्रसंस्काराय नित्यं भूमिं स्पृशन्तीति भूमिस्पृशः। विशेः क्विप्। विट् शान्तः॥

**आजीवो जीविका वार्ता वृत्तिर्वर्तनवेतने॥ १॥**

क्षीर० — आजीवत्यनेनेति करणे भावे वा साधुः। जीवनं जीविका। 'रोगाख्यायां—' (३. ३. १०८) इत्यत्र धातुमात्राद् भावे ण्वुल् वक्तव्यः। कृष्यादिस्तूपचारात्। वर्तनं वृत्तिरस्त्यस्यां वार्ता। 'प्रज्ञाश्रद्धार्चा—' (५. २. १०१) इति णः। वर्तन्तेऽनया वृत्तिः। वेति खादत्यनेन वेतनम्॥

टीका० — आजीवषट्कं जीविकायाम्। 'अकर्तरि च—' (३. ३.

---

१. 'रो' ख. पाठः. २. 'त्।' अ. पाठः. ३. 'जीवने' क. ग. घ. पाठः. ४. 'ष्यः', ५. 'ति न खा' ख पाठः.

१९) इति घञि आजीवः। जीवयतीति जीविका। ण्वुल्। वृत्तिः प्राणधारणा, तद्योगात् 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५. २. १०१)। वार्ता। क्तिनि वृत्तिः। करणे ल्युट्। वर्तनजीवने ॥

**स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः।**

**क्षीर० — कर्षणात् कृषिः। 'इक् कृष्यादिभ्यः' (वा० ३. ३. १०८)। पशुपालस्य कर्म पाशुपाल्यम्। वणिजः कर्म वाणिज्यम्। ब्राह्मणादित्वात् ष्यञ्। 'दूतवणिग्भ्यां च' (५. १. १२६) इति वक्तव्याद् वणिज्यापि वा ॥**

टीका० — कृष्यादयस्त्रयः प्रत्येकं वैश्यानां वृत्तयः। 'इक् कृष्यादिभ्यः' (वा० ३. ३. १०८) इति इक्। कृषिः। पशून् गोमहिष्यादीन् पालयतीति पशुपालः। 'कर्मण्यण्' (३. २. १)। ततः कर्मणि ष्यञ्। वणिज्येत्यपीत्यन्यः ॥

**क्षीर० —**

**"ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।**
**सत्यानृताभ्यामथवा न श्ववृत्त्या कथञ्चन ॥"**
**(मनु० अ० ४. श्लो० ४)**

**इति ये षड् वृत्तिभेदाः, तानाह —**

**सेवा श्ववृत्तिः**

**शुन इव वृत्तिः। परपिण्डोपजीवित्वादधमेत्यर्थः ॥**

टीका० — सेवाद्वयं शूद्रवृत्तौ। षेवृ सेवार्थो दण्डकः। 'गुरोश्च हलः' (३. ३. १०३) इत्यः। सेवा। सा च दैन्यादिना अतिनिकृष्टतया शुन इव वृत्तिः श्ववृत्तिरुच्यते। केवलं कृष्यादिरेव वृत्तिः। सेवा (श्व ? च) वृत्तिरिति पाठे श्ववृत्तिशब्दस्यासङ्ग्रहः स्यात्। स चेष्यते। तथाच नाममाला — 'कर्षणयाचितसेवानृतमृतश्ववृत्त्याख्याः' ॥

**अनृतं कृषिः**

**क्षीर० — न ऋतमनृतं पापिष्ठत्वात्। प्रमृतमिति तु सभ्यः पाठः ॥**

---

१. 'ल्। वृद्धिः। वृ' घ. ञ. पाठः. २. 'णं कृ' ख. पाठः.

टीका० — अनृतद्वयं कृष्याम् । सत्यमृतं, नञा अनृतम् ॥

उञ्छसिलं त्वृतम् ॥ २ ॥

क्षीर० — उञ्छो धान्यकणोच्चयः । सिलं धान्यमञ्जर्यार्जनम् । समस्तं व्यस्तं विपर्यस्तं चैतत् । ऋतधर्मत्वात् सत्यम् ॥

टीका० — उञ्छत्रयं सिञ्चोह[1] इति ख्याते । 'उछि उञ्छे' । घञ् । उञ्छः । 'शिल सिल उञ्छे' । इगुपधलक्षणः कः । शिलम् ।

"लूनकेदारशेषं तु शिलं सिलमिति स्मृतम् ।
उञ्छभक्षं च यच्चान्यन्निष्परिग्रहमाहृतम् ॥ "

इति नियमाख्यमभिधानम् ।

"प्रतिग्रहाच्छिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते"

इति । उञ्छशिलमिति समाहारद्वन्द्वः । तत्र शाल्यादिनिपतितपरित्यक्तमञ्जरीणामादानं शिलम् । एकैकशः कपोतवत् कणानां ग्रहणमुञ्छः । अन्ये तु अल्पभेदादेकत्वं मन्यन्ते । तथाच प्रयोगः—

"शक्या न चेदुञ्छसिलेन वृत्तिः फलेन मूलेन च वारिणा च"

इति । सत्ये ऋतमुक्तम् ॥

द्वे याचितायाचितयोर्यथासङ्ख्यं मृतामृते ।

क्षीर० — मृतं निर्जीवमिव । अमृतम् अविनश्वरम् ॥

टीका० —यथाक्रमं याचिते मृतम्, अयाचितेऽमृतम् । द्वयं साधितम् । याचितं याचितलक्षणवृत्तिः । मरणसमदुःखतया मृतमित्युच्यते ॥

सत्यानृतं वणिग्भावः

क्षीर० — किञ्चित् सत्यं किंचिच्चासत्यम् । अत्र मनुः—

"ऋतमुञ्छसिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेनापि खलु जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्जयेत् ॥"

(अ० ४. श्लो० ५. ६)

---

१. 'ञ्छोंञ्च इ' ग. पाठः.

टीका० — सत्यानृतद्वयं वाणिज्ये। सत्यसहितमनृतं सत्यानृतम्।
"वाणिज्यं[1] सत्यानृतमाख्याता योषिद् वणिज्या"
इति वोपालितः॥

**स्यादृणं पर्युदञ्चनम्॥ ३॥**

**उद्धारः**

क्षीर० — अर्यते स्म ऋणम्। 'ऋणमाधमर्ण्ये' (८. २. ६०) इति साधुः। परित[2] उदञ्चनम् उत्तमर्णादुद्धारत्वेन ग्रहणम्॥

टीका० — ऋणादित्रयमृणे। 'ऋणमाधमर्ण्ये' (८. २. ६०) इति निष्ठातो नः। अञ्चतेः कर्मणि ल्युट्। पर्युदञ्चनम्। उद्ध्रियते गृह्यत इत्युद्धारः॥

**अर्थप्रयोगस्तु कुसीदं वृद्धिजीविका।**

क्षीर० — अर्थस्य[3] प्रयोगः कलान्तरेणादानम्। कुत्सितं सीदन्त्यत्र कुसीदम्॥

टीका० — अर्थप्रयोगत्रयं वृद्धिजीविकायाम्। 'कुस श्लेषणे'। 'कुसेरुलोम्भोमे(दे)ताः कित्' (उ० ४. १०८) इति ईदः। कुसीदं दन्त्यसमिति काचिदुणादिवृत्तिः। वृध्या जीविका वृद्धिजीविका॥

**याच्ञयाप्तं याचितकं निमयादापमित्यकम्॥ ४॥**

क्षीर० — 'अपमित्ययाचिताभ्यां कक्कनौ' (४. ४. २१)। मुनिस्तु—
"निमयः परिवर्तः स्यादुद्धारोऽप्यापमित्यकम्"॥

टीका० — याच्ञाप्राप्ते वस्तुनि जाइत्रार्था[6] इति ख्याते याचितकम्। 'अपमित्ययाचिताभ्यां कक्कनौ' (४. ४. २१) इति कन्। निमयात् परिवर्तनादवाप्ते वस्तुनि आपमित्यकम्। 'मेङ् प्रणिदाने'। अपपूर्वाद् 'उदीचां माङो व्यती[7]-

१. 'ज्य वाणिज्यं स' ञ. पाठः. २. 'र्युद', ३. 'र्थप्र', ४. 'ण दानात्। कु' क.पाठः. ५ 'दाः' ञ. पाठः. ६. 'त्रा' ङ. पाठः. ७. 'ति' ख. पाठः.

हारे' (३. ४. १९) इति क्त्वाप्रत्ययः । क्त्वो ल्यप् । 'मयतेरिदन्यतरस्याम् (६ ४. ७०) इति इत्त्वम् । 'ह्रस्वस्य पिति कृति तुक्' (६. १. ७१) इति तुक् । 'अपमित्ययाचिताभ्यां कक्कनौ' (४. ४. २१) इति कक् । 'किति च' (७. २. ११८) इत्यादिवृद्धिः ॥

उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।

क्षीर० — उत्तम ऋणेन उत्तमर्णः प्रयोक्ता । अधम ऋणेन अधमर्णः ग्राहकः । 'सुप्सुपे'ति समासः ॥

टीका० — ऋणदातर्युत्तमर्णः । उपचयहेतुतया उत्तममृणमस्येति समासः । ऋणग्रहीतरि अधमर्णः । अपचयहेतुतया अधममृणमस्येति समासः ॥

कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ८ ॥

क्षीर० — कुसीदं गृह्णातीति कुसीदिकः । 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' (४. ४. ३१) । वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः । 'प्रयच्छति गर्ह्यम्' (४. ४. ३०) इति ठक् वृद्धेर्वृधुषिभावश्च । लक्ष्यादिदन्तोऽपि । यन्मनुः —

"श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः" ।

(अ० ४. श्लो० २२४)

वृद्धिमाजीवति वृद्ध्याजीवः । द्वैगुणिकश्च । वृद्धिर्लाभः कलान्तरम् ॥

टीका० — वृद्ध्याजीविके कुसीदिकचतुष्कम् । 'कुसीददशकादशाद्ष्ठन्ठचौ' (४. ४. ३१) इति ठन् । कुसीदिकः । 'वृद्धेर्वृधुषिभावश्च वक्तव्यः' (वा० ४. ४. ३०) इति ठक् । वार्धुषिकः । वार्धुषिरिति नैरुक्तोऽत्र ककारलोपइति टीकाकृतः ॥

**क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः।**

क्षीर०—कर्षति कृषिकः। औणादिक इकः। कृषक इत्येके। कर्षति क्ष्मां कर्षकः। शिल्पिनि कार्षिकोऽपि। कृषिरस्त्यस्य कृषीवलः। 'रजःकृष्यासुतिपर्षदो वलच्' (५. २. ११२)। 'वले' (६. ३. ११८) इति दीर्घः॥

टीका०—क्षेत्राजीवचतुष्कं कृषके। ण्वुलि कर्षकः। 'कृषेर्वृद्धिश्चो-दीचाम्' (उ० २. ४०) इति क्वुन् वृद्धिश्च। कार्षकः। अवृद्धिपक्षे कृषकः। 'रजःकृष्यासुतिपर्षदो वलच्' (५. २. ११२)। 'वले' (६. ३. ११८) इति दीर्घत्वम्। कृषीवलः॥

**क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम्॥६॥**

क्षीर०—व्रीहीणां भवनं क्षेत्रं व्रैहेयम्। 'व्रीहिशाल्योर्ढक्' (५. २. २)॥

टीका०—व्रीहयो यवाद्याः, तत्क्षेत्रे व्रैहेयम्। 'व्रीहिशाल्योर्ढक्' (५. २. २)। शालिभवने क्षेत्रे शालेयम्। व्रैहेयवद् ढक्॥

**यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत्।**

क्षीर०—यवानां भवनं क्षेत्रं यव्यम्। 'यवयवकषष्टिकाद्यत्' (५. २. ३)। यवकोऽल्पयवः। 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' (५. १. ९०)। उपाध्यायो यवादिभवने हितमिति पाठं परिकल्प्यायस्तवान् चोद्यं करिष्यामीति[3], अशुद्धं पठामीति॥

टीका०—यवादिभवने क्षेत्रे यव्यादिकम्। 'यवयवकषष्टिका-द्यत्' (५. २. ३)॥

**तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता॥७॥**

क्षीर०—तिलानां भवनं क्षेत्रं तिल्यं तैलीनम्। 'विभाषा तिलमाषोमाभङ्गाणुभ्यः' (५. २. ४) इति यत्खञौ[4]। एवं माषादीनां द्विरूपता।

---

१. 'कः। कार्षको' ङ. पाठः. २. 'पि' ख. ङ. पाठः. ३. 'त्यशुभं चोद्यं करिष्यामीत्यशुद्धं पाठमिति॥' ग. घ, 'त्यशद्ध पाठमिति' ख. ङ. पाठः. ४. 'दिति यत्' ग. पाठः.

माष्यं माषीणम् । उम्यमौमीनम् । उमा अतसी । अणव्यमाणवीनम् । भङ्ग्यं भाङ्गीनम् ॥

टीका० — तिलादिभवने क्षेत्रे तिल्यं तैलीनं च। यथा तिलक्षेत्रे तिल्यं तैलीनं च, तद्वन्माष्यं माषीणं च। उम्यमौमीनम् । अणव्यम् आणवीनम् । भङ्ग्यं भाङ्गीनम् । 'विभाषा तिलमाषोमाभङ्गाणुभ्यः' (५. २. ४) इति यत् । पक्षे खञ् ॥

**मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।**

क्षीर० — मुद्गानां कोद्रवाणां च भवनं क्षेत्रम् । 'धान्यानां भवने क्षेत्रे खञ्' (५. २. १)। आदिशब्दान्मामूरीणादि । शेषाणि व्रीह्यादिभ्योऽन्यानि। शाकक्षेत्रे द्वयं शाकशाकटं शाकशाकिनं, 'भवने क्षेत्रे शाकटशाकिनौ वक्तव्यौ'[1] (वा० ५. २. २९) इति वक्तव्यात् ॥

टीका० — व्रीह्यादिभङ्गान्तं यदुक्तं, तच्छेषम् । मुद्गकोद्रवादिधान्यभवने क्षेत्रे मौद्गीनकौद्रवीणादि। 'धान्यानां भवने क्षेत्रे खञ्' (५. २. १) इति खञ् । आदिना कौळत्थीनादयः[2] ॥

**बीजाकृतं तूप्तकृष्टं**

क्षीर० — अबीजं सबीजं सम्पन्नं बीजाकृतम्। 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५. ४. ५८) इति डाच् । आदावुप्तं पश्चात् कृष्टं क्षेत्रमुप्तकृष्टम्। 'पूर्वकाल —'(२. १. ४९) इति समासः ॥

टीका० — पूर्वमुप्तं पश्चात् कृष्टं यत् क्षेत्रं, तत्र बीजाकृतद्वयम् । 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५. ४. ५८) इति डाच् । बीजाकृतम् ॥

**सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥**

क्षीर० — सीतया हललेखया समितं सङ्गतं सीत्यम् । 'नौवयोधर्म —' (४. ४. ९१) इति सीतया समिते यत्। हलेन कृष्टं हल्यम्। 'मतजनहलात् करणजल्पकर्षेषु' (४. ४. ९७) इति यत् ॥

टीका० — सीत्यत्रयं कृष्टभूमौ । 'नौवयोधर्मविषमूलमूलसीता—' (४. ४. ९१) इत्यादिना यत् । सीत्यम् । कृषेः क्तः । कृष्टम् । 'मतजनहलात् करणजल्पकर्षेषु' (४. ४. ९७) इति यत् । हल्यम् ॥

१. 'व्यात् ॥' ख. पाठः. २. 'स्थी' ञ. पाठः.

**त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।**

क्षीर० — त्रिगुणं कृष्टं क्षेत्रं त्रिगुणाकृतम् । 'सङ्ख्यायाश्च गुणान्तायाः' (५. ४. ५९) इति डाच् । त्रिहल्यं त्रिसीत्यमपि प्राग्वत् । 'नौवयोधर्म —' (४. ४. ९१) इत्यादिना 'मतजन —' (४. ४. ९७) इत्यादिना च यत् । रथसीताहलेभ्यो यद्विधौ तदन्तविधिः ॥

टीका० — वारत्रयं कृष्टे त्रिगुणाकृतचतुष्कम् । आर्येयम् । 'सङ्ख्यायाश्च गुणान्तायाः' (५. ४. ५९) इति डाच् । त्रिगुणाकृतम् । बीजाकृतवत् तृतीयाकृतम् । 'रथसीताहलेभ्यो यद्विधौ तदन्तविधिरिष्यत' इति वचनाद् हल्यवत् त्रिहल्यत्रिसीत्ये ॥

**द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥**

क्षीर० — सर्वं पूर्वं डाच् यच्च । द्वितीयाकृतं द्विहल्यं द्विसीत्यम् । शम्बाकृतं हि संम्याक् कृष्ट्वा तिर्यक् कृष्टमाहुः ॥

टीका० — द्विगुणाकृते वारद्वयं कृष्टे सर्वं समानम् । तद्यथा — द्विगुणाकृतं द्वितीयाकृतं द्विहल्यं द्विसीत्यम् । अतिरिक्तं च सम्बाकृतमपीह । सम्बारिमिति यत्र प्रसिद्धिः । एवमत्र पञ्च नामानि । सम्बाकृतं दन्त्यादि ॥

**द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।**

क्षीर० — द्रोणस्य वापः क्षेत्रं द्रौणिकम् । उप्यते अस्मिन्निति वापः । 'तस्य वापः' (५. १. ४५) इति ठक् । आदिशब्दात् प्रस्थादिभ्यः 'सम्भवत्यवहरति पचति' (५. १. ५२) इति प्रास्थिकादयः ॥

टीका० — उप्यतेऽस्मिन्निति वापः क्षेत्रम् । यथाक्रमं द्रोणस्य वापे क्षेत्रे द्रौणिकः, आढकस्य वापे आढकिकः । 'तस्य वापः' (५. १. ४५) इति ठक् । आदिना प्रास्थिकादि ॥

**खारीवापस्तु खारीकः**

---

१. 'शम्बरीकृष्टं ति' ख., 'शम्याकृष्टं ति' क. पाठः.

क्षीर० — 'खार्या ईकन्' (५. १. ३३) ॥

टीका० — खारीवापे क्षेत्रे खारीको दीर्घमध्यः। 'खार्या ईकन्' (५. १. ३३) इति ईकन् ॥

उत्तमर्णादयस्त्रिषु ॥ १० ॥

क्षीर० — वाच्यलिङ्गत्वात् ॥

टीका० — उत्तमर्णादयः खारिकान्तास्त्रिषु ॥

पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रम्

क्षीर० — उप्यतेऽस्मिन् वप्रम्। के जले दार्यते केदारः। क्षीयते धान्यैरुष्यतेऽत्र, हलैर्हिंस्यते वा क्षेत्रम्। 'क्षि निवासे', 'क्षीष् हिंसायां' वा ॥

टीका० — वप्रत्रयं क्षेत्रे। वप्र उक्तः। के जले दरणमस्येति केदारः। क्षेः ष्ट्रन्। क्षेत्रम् ॥

अस्य तु।

कैदारकं स्यात् कैदार्यं क्षैत्रं कैदारिकं गणे ॥ ११ ॥

क्षीर० — अस्य क्षेत्रस्य समूहार्थे एते स्युः। 'केदाराद्यञ्च' (४. २. ४०) इति यञ् वुञ् च। 'ठञ् कवचिनश्च' (४. २. ४१) इति ठञ्। क्षेत्राद् 'अचित्तहस्ति—' (४. २. ४७) इति ठकि प्राप्ते भिक्षादित्वादण् ॥

टीका० — क्षेत्रस्य समूहे कैदारकचतुष्कम्। 'केदाराद्यञ्च' (४. २. ४०) इति यञ्। चकाराद् वुञ्। कैदारककैदार्ये। 'भिक्षादिभ्योऽण्' (४. २. ३८)। क्षैत्रम्। केदारानुवृत्तौ 'ठञ् कवचिनश्च' (४. २. ४१) इति ठञि कैदारिकम् ॥

लोष्टानि लोष्टवः पुंसि

क्षीर० — लुष्यते लुपति वा लोष्टम्। लोष्टुश्च मृत्खण्डः ॥

टीका० — मृत्तिकाखण्डे लोष्टद्वयम्। 'लोष्टपलितौ'(उ० ३. ९२) इत्यनेन लूञः क्तषुग्गुणा निपात्यन्ते। 'लिश अल्पीभावे'। तुप्रत्ययेन[1] लेष्टुरिति चान्द्राः। 'लेष्टुः खण्डेऽपि लोष्टः स्याद्' इति पुंस्काण्डे वोपालितः ॥

कोटिशो लोष्टभेदनः।

क्षीर० — कोटिभिः कोणैः श्यति भिनत्ति कोटि..

टीका० — कोटिशद्वयं को[2]डणा इति ख्याते। कोटिरग्रभागः, ..गाल् लोमादिशः। 'लोष्टघ्नः कोटीश' इति रत्नकोशे दीर्घमध्यः ॥

प्राजनं तोदनं तोत्रं

क्षीर० — प्राज्यते प्रेर्यतेऽनेन प्राजनम्। 'वा यौ' (२. ४. ५७) इति पक्षे अजेर्धातोर्वी। प्रवयणं च। तुद्यतेऽनेन तोत्रम्। प्रेषणं च ॥

टीका० — प्राजनत्रयं पाणाटीति ख्यातायाम्। अजेर्ल्युट्। प्राजनम्। वीभावपक्षे प्रवयणं चेति वृत्तिः। तुदेर्ल्युट्ष्ट्रनौ तोदनतोत्रे ॥

खनित्रमवदारणम् ॥ १२ ॥

क्षीर० — खन्यतेऽनेन खनित्रं कुद्दालादि ॥

टीका० — खनित्रद्वयं खनित्रे। अरित्रवत् खनेः खनित्रम् ॥

दात्रं लवित्रम्

क्षीर० — द्याति लुनाति चा[3]नेन। 'दाम्नी—' (३. २. १८२) इति ष्ट्रन्। 'अर्तिलूधूसूखन—' (३. २. १८४) इत्यादिना इत्रः ॥

टीका० — दात्रद्वयं दात्रे। 'दाप् लवने'। ष्ट्रन्। दात्रम्। अरित्रवल्लुञा लवित्रम् ॥

---

1. 'तुष्टुप्र' ख. पाठः. २. 'क्रो' म. पाठः. ३. 'वा' क. ग. पाठः.

**आबन्धो योत्रं योक्त्रम्**

क्षीर० —आबध्यते यूयते युज्यते चानेनेति । चर्मरज्जुः ॥

टीका० —आबन्धत्रयं योत्रे । करणे घञा आबन्धः । यौतेर्युजेश्च ष्ट्रन् । योत्रयोक्त्रे ॥

**अथो हलम् ।**

क्षीर० —इतो हलप्रकरणमारब्धमित्यर्थः । अतो हलमित्येके पठन्ति ॥

**निरीषे कुटकं**

निष्क्रान्ता ईषा अस्मान्निरीषम् । कुटति कुटकं, यस्मिन् फालो बध्यते ॥

**फालः कृषकः**

फलति विशीर्यते भूमिरनेनेति फालः । कृषति क्ष्मां कृषकः । 'ष्वुन् शिल्पिसंज्ञयोः—' (उ० २. ३५) । हलादयः पञ्चैकार्था इत्येके । कुशिकः फलं च ॥

टीका० —फलपञ्चकं हले । 'फलं लाभे फलेऽस्त्राङ्गे........ व्युष्टौ हेतु-समुत्थे स्यादि'ति पवर्गादावजयः । फलशब्द उक्तः । ईषाया निर्गतं निरीषम् । कुट एव कुटकः साधितः । 'ञिफला विशरणे' । णिजन्तादच् । फालः । 'वृश्चिकृषोः किकन्' (उ० २. ४२) इति किकन् । कृषिकः । क्वचित् कृषक इत्यपि[2] पाठः[3] ।

"उदित्रं योक्त्रमाबन्धः फालः कृषक उच्यते ।
ईषा लाङ्गलदण्डस्तु निरीषं कुटकं हलम्[1] ॥"

इति वृष्काः । केचित्तु इहापि ऊःमादि पठित्वा हलादित्रयं लाङ्गलमुण्डके, फालद्वयं फाले वर्णयन्ति ॥

१. 'क्के' ञ. पाठः. २. 'पि वा पा' ख. पाठः. ३. 'ठः । केचित्तु उ' क. पाठः. 'म् । इति वृष्काः । इ' ग. घ., 'म् । इति भागुरिः भृषकाः इ' ञ. पाठः.

लाङ्गलं हलम् ॥ १३ ॥

गोदारणं च सीरः

क्षीर० — लङ्गति लाङ्गलम् । हलति विलिखति हलम् । गौर्भूर्दार्यतेऽनेनेति गोदारणम् । सीयते बध्यते सीरः ॥

टीका० — लाङ्गलचतुष्कं लाङ्गले । 'हल विलेखने' । पचाद्यच् । गां भूमिं दारयतीति गोदारणम् । नन्द्यादि । 'षिञ् बन्धने' । 'शुसिचिमीनां दीर्घश्च' (उ० २. २७) इति क्रन् । सीरम् ॥

अथ शम्या स्त्री युगकीलकः ।

क्षीर० — शाम्यति शम्या ॥

टीका० — शम्याद्वयं युगकीले शमिल इति ख्याते । शाम्यतेरघ्न्यादियत् । शम्या ॥

ईषा लाङ्गलदण्डः स्यात्

क्षीर० — ईषति ईषा । 'ईष उञ्छे' ॥

टीका० — ईषाद्वयमीषे । 'ईष गतिहिंसादानेषु'[‡] । 'गुरोश्च हलः' (३. ३. १०३) इत्यः । ईषा दीर्घादिर्मूर्धन्यषा ।

"प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके"

इति तालव्यान्ते रभसः ॥

सीता लाङ्गलपद्धतिः ॥ १४ ॥

क्षीर० — स्यति भुवं सीता हललेखा ॥

टीका० — सीताद्वयं लाङ्गलरेखायाम् ।

"सीता लाङ्गलरेखा स्याद् व्योमगङ्गा च जानकी"

इति दन्त्यादौ रभसः ।

१. 'द' क. ख. ग. पाठः.

‡ 'ईष गतिहिंसादर्शनेषु' इति मुद्रितधातुपाठः ।

"शीता नभस्सरिति लाङ्गलपद्धतौ च
शीता दशाननरिपोः सहधर्मिणी च ।
शीतं स्मृतं हिमगुणे च तदन्विते च
शीतोऽलसे च बहुवारतरौ च दृष्टः ॥"

इति तालव्यादौ धरणिः ॥

**पुंसि मेथिः खलेदारु न्यस्तं यत् पशुबन्धने ।**

क्षीर० — मीयते क्षिप्यते मेथिः । मेध्यते[1] सङ्गच्छते[2]ऽस्मिन् वा । खलेवाली च । खलं[3] तु खलधानकम् । खलेदार्विति 'हलदन्तात्—' (६. ३. ९) इत्यलुक् । पशुबन्धने पशुबन्धननिमित्तम् ॥

टीका० — खले धान्यमर्दनस्थाने पशुबन्धनार्थं मध्ये निहिते दारुणि मेधिः । 'मेधृ सङ्गमे च' । 'इन्' (उ० ४. ११९) इति इन् ॥

**आशुर्व्रीहिः पाटलः स्यात्**

क्षीर० — अश्यते अश्नुते वा आशुः । शीघ्रपाको वा । यद् भुग्रः — 'आश्वाख्या शालिशीघ्रयोः' । व्रीणानि व्रीहिः षष्टिकादिधान्य-विशेषः । 'व्री हरणे' । यतः,

"व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणकाः ।
अणवः प्रियङ्गुकोद्रवमयुष्ठकाः शालिकाढक्यः ।
किञ्च कलायकुलस्थौ शणश्च सप्तदश धान्यानि" ॥

टीका० — आशुत्रयम् आशुधान्ये । शब्दत्रयं साधितम् । 'पादलोडी-भिराशु च' इति तन्त्रान्तरम् ॥

**शितशूकयवौ समौ ॥ १५ ॥**

१, २. 'न्ते', ३. 'लं ख' ख. पाठः. ४. 'षा' ग. पाठः,

क्षीर० — शितस्तीक्ष्णः शूकः किंशारुरस्य शितशूकः । यूयते यवः ॥

टीका० — शितशूकद्वयं यवे । यौतेरच् । यवः ॥

**तोक्मस्तु तत्र हरिते**

क्षीर० — तत्र नीले यवे । तुज्यते तोक्मः । 'तुजि हिंसायाम्'[1] ॥

टीका० — हरिते अपक्के यवे तोक्मः ॥

**कलायस्तु सतीनकः ।**
**हरेणुखण्डिकौ चास्मिन्**

क्षीर० — कलामतिसारम् अयते कलायः । कं लाति वा । सीदन्त्यनेन सतीनकः । सातीनकोऽपि[3] । ह्रियते हरेणुः । खण्ड्यते खण्डिकः ॥

टीका० — कलायचतुष्कं कलाये । कं वातं लातीति कलायः । कृञः करेणुवद् हरेणुः । खण्डयोगात् खण्डिकः । 'पूखण्डिभ्यां ठन्' ।

"कलायस्त्रिपुटः प्रोक्तः सतीनो वर्तुलो मतः ।
हरेणुरङ्कटा ज्ञेया"

इति व्याडिः ॥

**कोरदूषस्तु कोद्रवः ॥ १६ ॥**

क्षीर० — कोरं भक्तं दूषयति कोरदूषः, कदन्नत्वात् । केनाम्भसा उद्यते क्लिद्यते कोद्रवः । उद्दालकोऽपि ॥

टीका० — कोरदूषद्वयं कोद्रवे । कोरं रुधिरं दूषयतीति कोरदूषः ॥

**मङ्गल्यको मसूरः**

क्षीर० — 'मसी परिणामे' ॥

१. 'जिहिं', २. 'थंः ॥' ग. पाठः. ३. 'नेऽपि' ख. पाठः. ४. 'मा' ग. घ. ङ. पाठः.

टीका० — मङ्गल्यकद्वयं मसूरे । 'मसेश्च' (उ० १. ४६) इति उरन् । मसुरो ह्रस्वमध्य इति प्रथमपादीयोणादिवृत्तिः । ततो 'मसेरूरन्' (उ० ५. ३) इत्यनेन तत्पञ्चमपादीयेन दीर्घमध्योऽपि साधितः । 'मसूरो मसुरश्चापी'ति द्विरूपकोशः ॥

**वनमुद्गे अथ मकुष्ठकमयुष्ठकौ ।**

क्षीर०—मङ्क्यतेऽनेन मकुष्ठकः ॥

टीका० — मकुष्ठकत्रयमृषिमुद्गे काठाइडा इति ख्याते । मयुष्ठके द्वितीयोऽन्तःस्थः ॥

**सर्षपे तु द्वौ तुन्तुभकदम्बकौ ॥ १७ ॥**

क्षीर०—सरति सर्षपः । तुदति तुन्तुभः । कुत्सितमम्बते कदम्बकः ॥

टीका० — सर्षपत्रयं सर्षपे । 'सर्तेरपः षुक् च' (उ० ३. १४१) इत्यपः षुगागमश्च धातोः । सर्षपो दन्त्यादिमूर्धन्यमध्यः ।

"सर्षपः स्यात् सरिषपः कटुस्नेहश्च तुन्तुभः"

इति त्रिकाण्डशेषः ॥

**सिद्धार्थस्त्वेष धवलः**

क्षीर० — सिद्धप्रयोजनो रक्षाघ्नत्वात् । श्वेतसर्षपः ॥

टीका० — सितसर्षपे सिद्धार्थः ॥

**गोधूमः सुमनः समौ ।**

क्षीर० —गुध्यति परिवेष्टयति गोधूमः, गां धुनोति वा । सुष्ठु मन्यते सुमनोऽकारान्तः ॥

टीका० — गोधूमद्वयं गोधूमे । 'गुध परिवेष्टने' । 'गुधेरूमः' (उ० ५. २) इति ऊमः । सुमनोऽदन्तः ॥

**स्याद् यावकस्तु कुल्मामः**

क्षीर०—यूयतेऽम्भसा यावकः। कोलति कुलेन मस्यति परिणमते वा कुल्मासः, अर्धस्विन्नो यवादिः। धान्यविशेष इत्येके॥

टीका०—यावकद्वयं माषपत्रायतपत्रे राजमाषे। कुलस्थे इत्यन्ये। यवको बोखधान्यमिति रक्षितः। कुलं मस्यतीति कुल्मासः। 'मस परिणामे'। 'कर्मण्यण्' (३.२.१)। पृषोदरादित्वात् कुलशब्दाकारलोपः। एवं धातुपारायणे दन्त्यमः। कुत्सितो माषः कुल्माषः। पृषोदरादिरित्यन्यः।

"कुल्माष काञ्जिके क्लीबं यवके तु पुमानसौ"

इति मूर्धन्ये रुद्रः॥

**चणको हरिमन्थकः॥ १८॥**

क्षीर०—चणते दीयते चणकः। हरिभिर्मथ्यते हरिमन्थकः॥

टीका०—चणकद्वयं चणके। 'चन च, नोच्यन' इत्यस्माद् धातोरौणादिककुना धातुप्रदीपादौ चनकः साधितः। चणकस्तु चिन्त्यः। हरिमन्थके स्वार्थिकः कः॥

**द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले।**

क्षीर०—'तिलान्निष्फलात् पिञ्जपेजौ वक्तव्यौ' (वा० ४.२.३६)। 'जर्तिलः स्याद् वनतिलः'॥

टीका०—निष्फले तिले तिलपेजद्वयम्। 'तिलान्निष्फलात् पिञ्जपेजौ वक्तव्यौ' (वा० ४.२.३६) इति पिञ्जपेजौ॥

**क्षवः क्षुताभिजननो राजिका कृष्णिकासुरी॥ १९॥**

क्षीर०—क्षौत्यनेन क्षवः। क्षुतमभिजनयति क्षुताभिजननः। कृ-

1. 'य' घ. ट. च पाठः.

ष्णसर्षपोऽयं राजसर्षपाख्यः। राजते राजिका। कृष्णा वर्णेन, कर्षति विलिखति वा कृष्णिका। अस्यते असुरस्त्रीव वा आसुरी॥

टीका०— क्षवपञ्चकं राजिकायाम्। क्षुवतेरपि क्षवः। क्षुधामभिजनयतीति क्षुधाभिजननः। नन्द्यादिः। 'असुरी राजिकायां स्याद्' इति रभसः॥

**स्त्रियौ कङ्गुप्रियङ्गू द्वे**

क्षीर०— कुत्सितं कृत्वा अङ्ग्यते कङ्गुः। कङ्कुः कुङ्गुश्चेत्येके। प्रीणाति प्रियङ्गुः॥

टीका०— कङ्गुद्वयं कामण इति ख्यातायाम्। कङ्कुः कङ्गुश्चेति द्विरूपकोशः॥

**अतसी स्यादुमा क्षुमा।**

क्षीर०— न तस्यते अतसी। अवते उमा। 'उङ् शब्दे'। क्षौत्यनया क्षुतया क्षुमा॥

टीका०— अतसीत्रयमिनीति ख्यातायाम्। 'अत सातत्यगमने'। 'अत्यमिचमि—' (उ० ३. ११७) इत्यादिना असच्। गौरादिः॥

**मातुलानी तु भङ्गायां**

क्षीर०— न तोल्यते मातुलानी। भज्यते भङ्गा। शणोऽपि॥

टीका०— मातुलानीद्वयं कश्मीरेषु भङ्गा इति[1] ख्यातायाम्। एतत्फलं कलायपरिमाणम्। द्वयं साधितम्॥

**व्रीहिभेदस्त्वणुः पुमान्॥ २०॥**

क्षीर०— अणुरल्पकणत्वात्। अणति पर्दत्यनेनेति वा। तुवरी त्वरके। वल्लो निष्पावे। श्यामः श्यामाके च॥

१. 'त्वेव ख्या' क. ग. पाठः

टीका० — कङ्गुतो मनागुपचितो व्रीहिविशेषोऽणुशब्देनैव केदारादिदेशे ख्यातोऽणुः। अणेर्धातोः 'धान्ये नित्' (उ० १. ९) इति उः ॥

**किंशारुः सस्यशूकं स्यात्**

**क्षीर० — कुत्सितं शृणाति किंशारुः। श्यति शूकम् ॥**

टीका० — किंशारुद्वयं सस्यशूके। 'किंजरयोः श्रिणः' (उ० १. ४) इत्युण् ॥

**कणिशं सस्यमञ्जरी।**

**क्षीर० — कणाः सन्त्यस्य कणिशम्। धान्येयवादि शिलं, सिलं च ॥**

टीका० — अभिनवधान्यादिशीर्षे कणिशद्वयम्। कणिशं तालव्यशम् ॥

**धान्यं व्रीहिः स्तम्बकरिः**

**क्षीर० — धन्यतेऽर्थ्यते धान्यम्। स्तम्बं करोति स्तम्बकरिः। 'स्तम्बशकृतोरिन्' (३. २. २४)। सीत्यं च।**

**"कुसूलो वलकः कोष्ठागारं धान्यादिकोष्ठकः" ॥**

टीका० — धान्यत्रयं धान्ये। 'दधातेर्यङ् नुट् च' (उ० ५. ४८) इति यक् नुडागमश्च प्रत्ययस्य। धान्यम्। स्तम्बं गुत्सं करोतीति स्तम्बकरिः। 'स्तम्बशकृतोरिन्' (३. ३. २४) ॥

**स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥**

**क्षीर० — तृणादेर्यः स्तम्बो नालं स गुञ्ज्यतेऽनेन गुच्छः। यं प्रति स्तम्बोऽप्रसिद्धः, तं प्रत्यन्यथा विध्यनुवादौ कार्यौ। एवं सर्वत्रोन्नेयम् ॥**

---

१. 'णुः। क्वचिन्नित्यन्यः। अ' ग. पाठः. २, 'न्य' क. ग. पाठः. ३. 'स्य', ४. 'लः सवकः', ५. 'कम्' ख. पाठः, 'त' ग. पाठः. ६. 'न्यादित्र' क. ग. पाठः. ७. 'योज्यौ।' ख. पाठः.

टीका० — तृणस्य गुत्से स्तम्बः । आदिना धान्यस्य । द्वयं साधितम् ।

"हस्तैन्यूनाधिकं[1] यस्य प्रमाणं न ततः परम् ।
नाभिमात्रश्च विस्तारो गुत्सः स इति कथ्यते ॥
पत्राणि येषामाकाशे सारं भूमौ तु वर्तते ।
तेऽपि गुत्सा इति प्रोक्ता यथा स्युर्मूलकादयः ॥
एकस्मादेव मूलात्तु लतापुञ्जाद् विनिर्गतः ।
एकोऽपिच प्ररोहैस्तु बहुभिः स्तम्ब उच्यते ॥"

इति निगमाख्यमभिधानम् ॥

**नाडी नालं च काण्डोऽस्य**

क्षीर० — अस्य गुच्छस्य यः कण्ठत्यनेनेति काण्डः, सा नडति नाडी । 'णल गन्धे' ॥

टीका० — अस्य तृणादिनः काण्डे नाडीद्वयं, साधितम् ॥

**पलालोऽस्त्री स निष्फलः ।**

क्षीर० — स काण्डः । पलति पलालः ॥

टीका० — स एव तृणादिकाण्डो गृहीतधान्यः पलालाख्यः ॥

**कडङ्गरो बुसं क्लीबे**

क्षीर० — कडत्यावृणोति कड् अङ्गं रूपमस्य कडङ्गरः । बुस्यते उत्सृज्यते बुसं तृणादिक्षोदः ॥

टीका० — कडङ्गरद्वयं पातानत इति ख्याते । 'बुस उत्सर्गे' । 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५)। बुसो दन्त्यस इति धातुप्रदीपः। 'बुषवेषतुषारकापा' इति मूर्धन्यपभेदः ॥

**धान्यत्वचि पुमांस्तुषः ॥ २२ ॥**

क्षीर० — तुष्यत्यनेनाग्निस्तुषः ॥

टीका० — धान्यत्वचि तुषः । 'तुष तुष्टौ' । इगुपधलक्षणः कः ॥

**शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे**

1. 'स्तं न्यू' क. पाठः.

क्षीर० — श्यति शूकम्। श्लक्ष्णं च तीक्ष्णाग्रं च तत्। सस्यादेरन्यत्र वृश्चिकादिकण्टकोऽपि शूक इति किंशारोः पृथङ्निर्देशः। शूकधान्यशमीधान्यभेदार्थं वा पुनरुक्तम्। धान्यतीक्ष्णाग्र इत्येके॥

टीका० — सामान्येन श्लक्ष्णे सूक्ष्मे तीक्ष्णाग्रे शूकः। 'शूकोऽनुग्रहशुङ्गयोरि'ति तालव्यादावजयः॥

शमी शिम्बा

क्षीर० — शाम्यत्यस्यां शमी। शिनोति शिम्बा। शिम्बिरित्यपि॥

टीका० — शमीद्वयं शिम्बाडिकायाम्। शमी उक्तः॥

त्रिषूत्तरे।

क्षीर० — रिद्धाद्याश्चत्वारो वाच्यलिङ्गाः॥

टीका० — ऋद्धादयो बहुलीकृतान्तास्त्रिषु॥

रिद्धमावसितं धान्यं

क्षीर० — रिद्धं सिद्धं राधेः। ऋद्धं सुसम्पन्नम् इत्येके, ऋधेर्वा। आवसितं रक्षार्थमाच्छादितम्। 'वस आच्छादने'। आ अवसितं निष्पन्नमित्येके॥

टीका० — ऋद्धे सम्पन्ने आवसितम्। आङवपूर्वात् 'षो अन्तकर्मणि' इत्यस्मात् क्तः। (न स्योत तत् स्थितमवकीर्णे श्रुतम्?)। ऋद्धमावसितामिति नाममालायां दीर्घादिः।

"अवसानं गते ज्ञाते ऋद्धेऽप्यवसितं त्रिषु"

१. 'बिः शिबिरि', २. 'चि' ख. पाठः. ३. 'न्य स रि', ४. 'रि' क. पाठः.
५. 'वासि' क. ख. पाठः. ६. 'न्द्र' ख., 'न्द्रु' ग. पाठः.

इति ह्रस्वादौ रभसः ॥

पूतं तु बहुलीकृतम् ॥ २३ ॥

क्षीर० — पूयते स्म पूतं निर्बुसीकृतम् । बहु लाति बहुलं सारम् । मार्जनीशोधनमित्येके ॥

टीका० — पूतद्वय बहुलीकृतधान्य । पूतमुक्तम् ॥

माषादयः शमीधान्ये

क्षीर० — वर्तन्त इति शेषः । आदिशब्दान्मुद्गमसूरादयः ॥

टीका० — शमीसहिते धान्ये शमीधान्यम् ।

"मुद्गो माषो राजमाषः कुलत्थश्चणकस्तिलः ।
काकाण्डश्चरवश्चेति शमीधान्यगणः स्मृतः ॥"

इति रत्नकोषः ॥

शूकधान्ये यवादयः ।

क्षीर० — आदिशब्दाद् गोधूमादयः ॥

टीका० — शूकसहिते धान्ये शूकधान्यम् । ते यवगोधूमादयः ॥

शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥

क्षीर० — शाल्यते शालिः । कल्यते कलमः । आदिशब्दाद् राजशाल्याद्याः जलजाः । 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' (५. १. ९०) । आदिशब्दात् कटजाद्याः स्थलजाः । अमी इति पुल्लिङ्गनिर्देशान्माषाद्याः शाल्यन्ताः पुंसि ॥

टीका० — कलमाद्याः शूकधान्यविशेषाः शालिशब्दवाच्याः । प्रथमेनादिना रक्तशाल्यादिग्रहणम् । द्वितीयेन कलमादिभ्योऽपकृष्टानां ग्रहणम् । अपकर्षादेव षष्टिकस्य पृथग्ग्रहणम् । 'शालृ श्लाघायाम्' । 'इन्' (उ० ४. ११९)

१. 'म् । ओतः श्विः । मा' ग. पाठः. २ 'लुत्थश्च' ठ. पाठः. ३. 'दयः ज' ख. पाठः. ४. 'ला' ख. पाठः.

इति इन्। लत्वम्। शालिः। 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' (५. १. ९०) इति कन्नन्तो निपातितः षष्टिकः। माषयवशालिषष्टिकाः पुंसि॥

**तृणधान्यानि नीवाराः**

**क्षीर० —** नियतैर्व्रियन्ते[1] नीवाराः, मुन्यन्नत्वात्। 'नौ वृ धान्ये'। (३. ३. ४८) इति घञ्। बहुवचनाच्छ्यामाकादयोऽपि॥

**टीका० —** नीवारादयस्तृणधान्यानीत्युच्यन्ते। आदिना श्यामाकादिग्रहणम्। 'नौ वृ धान्ये' (३. ३. ४८) इति घञ्। नीवाराः ओडि इति ख्याताः॥

**स्त्री गवेधुर्गवेधुका।**

**क्षीर० —** गवे अम्भसि धीयते। गवेधुर्नाम मुन्यन्नम्। गवेधुरित्येके॥

**टीका० —** गवेधुद्वयं गवेधुक इति ख्यातं। घुणुर्धीति चास्याः प्रसिद्धिः। पुंसि च। 'गवेधु(नं ? र्ना) गवेधुक' इति रत्नकोषः॥

**अयोग्रं मुसलोऽस्त्री स्यात्**

**क्षीर० —** अयोऽग्रेऽस्य अयोग्रम्। अयोदारित्येके पेठुः। मुस्यते खण्ड्यतेऽनेनेति मुसलम्॥

**टीका० —** अयोग्रद्वयं मुसले। अयो लोहोऽग्रे मुखेऽस्येति अयोग्रम्। मुसलिनि मुसलो व्युत्पादितः। मूर्धन्योऽपि दृश्यत इति वर्णदेशना॥

**उदूखलमुलूखलम्॥ २९॥**

**क्षीर० —** ऊर्ध्वं खं लाति। उद्धणोद्धलवत् पृषोदरादित्वादुभयम्।

**टीका० —** उदूखलद्वयमुलूखले। ऊर्ध्वं खमस्येत्युदूखलम्। पृषोदरादित्वादूर्ध्वस्य उदूभावः, खस्य च खलः। एवमयं टवर्गतृतीयवान्। अतो डलयोरैक्यादुलूखलमित्यपि। तस्मात् तवर्गतृतीयोऽपपाठः॥

---

१. 'ते व्रि' ड. पाठः. २. 'द्री' ग. पाठः. ३, ४ 'धु' क. पाठः. ५. 'मृ। अ'ख. ग. पाठः. ६. 'जि' क., 'न्दि' ख. पाठः. ७. 'तः। मुषलइत्यपि॥' ङ. पाठः. ८. 'र्ध्वे ख मा' ख. क. पाठः. ९. 'द् द्वयम्' क. पाठः १०. 'न पदे उलूखलपाठो युज्यते। त' ज. पाठः.

**प्रस्फोटनं शूर्पमस्त्री**

क्षीर० — प्रस्फोट्यते असारं बहिः क्रियतेऽनेनेति प्रस्फोटनम्। शीयते शीर्यते वानेन शूर्पम्। 'शूर्प माने' वा ॥

टीका० — प्रस्फोटनद्वयं कुल्लके। स्फुटतेर्ल्युट्। 'श्यः सम्प्रसारण-मूश्च' इति वर्तमाने 'सुशृभ्यां निच्च' (उ० ३. २६) इति पप्रत्ययः, ऊकारश्चान्तादेशः। शूर्पम् ॥

**चालनी तितउः पुमान्।**

क्षीर० — चाल्यतेऽनेन। चालनमिति काल्यः।

"क्षुद्रच्छिद्रसमोपेतं चालनं तितउ स्मृतम्"।

तनोति सारं तितउः। 'तनोतेर्डउः सन्वच्च' (उ० ५. ५२)। परि-(वन? पव)नं च ॥

टीका० — चालनी। 'चालनं तितउ प्रोक्तम्' इति तु रत्नकोषः। अतः पुमानिति मतान्तरमाश्रित्योक्तम्। अपपाठ इति केचित्। 'तनोतेर्डउः सन्वच्च' (उ० ५. ५२) इति डउप्रत्ययः सन्वद्भावश्च। डउ इति विसन्धिनिर्देशात् संहितायां अभावः। अन्यथा लाघवाड्डोरित्येव ब्रूयात्। तितउः ॥

**स्यूतप्रसेवौ**

क्षीर०[1] — समानाविन्त्येव। सीव्यते स्म स्यूतः। वस्त्राद्यावपनम्। प्रसीव्यते प्रसेवः ॥

टीका० — स्योनद्वयं धौतच्छटे। सीव्यत इति स्योनः। 'सिवु तन्तु-सन्ताने'। बहुलवचनान्नः। ऊठ् गुणश्च। स्योनः। स्यूत इति पाठे क्तः। 'स्योनस्यूतप्रसेवका' इति रभसः। कर्मणि घञ्। प्रसेवः ॥

**कण्डोलपिटौ**

क्षीर० — कण्ड्यते कण्डोलः। पठ्यते पिटः वंशदलादिमयं भाण्डम्। पिटकोऽपि ॥

१. 'वकः'। क. ख. पाठः. २. 'ब्य' ख. पाठः.

टीका०— कण्डोलद्वयं कण्डोलके। 'कडि रक्षणे'। $ 'कविकलिकण्डिगडिगण्डिकटिपटिभ्य ओलच्' (उ० १. ६९)। कण्डोलः। 'पिट शब्दे'। इगुपधलक्षणः कः। पिटः॥

**समानौ कटकिलिञ्जकौ ॥ २६ ॥**

क्षीर०— कटत्यावृणोति कटः। किल्यते क्षिप्यतेऽस्मिन् किलिञ्जकः। वीरणनडादिमयं कुणोलाख्यम्॥

टीका०— येन मरावो बध्यते, तत्र कटद्वयम्। गजावयवे कट उक्तः॥

**रसवत्यां तु पाकस्थानमहानसे।**

क्षीर०— रस आस्वादोऽस्त्यस्यां रसवती। महदनोऽस्य महानसम्। अनसा उपकरणं लक्ष्यते। 'अनोऽश्मायस्सरसां जातिसंज्ञयोः' (५. ४. ९४) इति[1] समासान्तष्टच्प्रत्ययः॥

टीका०— रसवतीत्रयं महानसे[2]। रसः संस्क्रियमाणोऽस्यामस्तीति मतुपि रसवती। महच्चानश्चेति महानसम्। 'सन्महत्—' (२. १. ६१) इत्यादिना कर्मधारयः। 'अनोश्मायस्सरसां जातिसंज्ञयोः' (५. ४. ९४) इति समासान्तोऽच्॥

**पौरोगवस्तदध्यक्षः**

क्षीर०— पुरो गौर्मांसं[3] जलं वास्याः पुरोगुः, तस्या रसवत्या अयं पौरोगवः॥

टीका०— रसवत्यध्यक्षे पौरोगवः॥

**सूपकारास्तु बल्लवाः॥ २७॥**

१. 'ति टच्' क., 'समासान्तोऽच्प्र' ख. पाठः. २. 'रसनगृहे। र' ख. पाठः.
३. 'गोमत् स्थलं' क. ग., 'गोमान् स्थल' ख. घ. पाठः.

$ 'कपिगडि.........' इति मुद्रितोणादिपाठः।

क्षीर०— सूपं कुर्वन्तीत्युपलक्षणं मांसपाकादेः । वल्लिः सौत्रः प्रीत्यर्थः ॥

**आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।**

क्षीर०—अरालम् अन्ध ओदनं च पण्यमेषाम् । सूदयन्ति तण्डुलान् सूदाः । गुणयन्ति गुणाः । रक्तकराश्च ॥

टीका०— सूपकारसप्तकं सूपकारे । सूपं व्यञ्जनं करोतीति सूपकारः । कर्मण्यण् । वर्णोऽधिकारः । तद्योगाद् वर्णवः । वप्रकरणे 'अन्येभ्योऽपि दृश्यन्त इति वक्तव्यम्' (वा० ५. २. १०९) इति वः । अरालं कुटिलं चरतीत्याारालिकः । अन्धो भक्तं तत्साधनं शिल्पमस्येति आन्धसिकः । 'शिल्पम्' (४. ४. ५५) इति ठक् । एवमौदनिकः । 'सूद क्षरणे' । दन्त्यादिः । पचादिः । सूदः । गुण उक्तः ॥

**आपूपिकः कान्दविको भक्ष्यकारः**

क्षीर०— अपूपाः कन्दुश्च पण्यमस्य । 'इसुसुक्तान्तात् कः' (७. ३. ५१) इति कान्दुक इति न्याय्यम् । खरविशदमभ्यवहार्यं भक्ष्यम् ॥

टीका० — छन्दवारेति ख्याते आपूपिकत्रयम् । 'तदस्य पण्यम्' (४. ४. ५१) इति ठकि आपूपिकः । कन्दुः स्वेदनी, तत्र संस्कृतपिष्टादिकमप्युपचारात् कन्दुः, स पण्यमस्येति कान्दविकः । भक्षं करोतीति भक्षकारः । भक्षशब्दो यकारान्त इति प्रमादपाठः ॥

**इमे त्रिषु ॥ २८ ॥**

क्षीर० — पौरोगवाद्या वाच्यलिङ्गाः ॥

टीका० — पौरोगवाद्या भक्षकारान्तास्त्रिपु ॥

**अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।**

१. 'रक्तकारा' ख. पाठः.

क्षीर० — अश्नुतेऽश्मन्तम्। उद्धन्यतेऽत्रोद्धानम्। अधिश्रीयतेऽनया अधिश्रयणी। 'श्रीञ् पाके'। 'अन्त्यधिश्रयणी भवेदि'ति माला॥

टीका० — अश्मन्तपञ्चकं चुल्ल्याम्। अश्मनोऽप्यन्तमत्रेति अश्मन्तकम्। शकन्ध्वादिरिति गोवर्धनः। उत्पूर्वाद्धाञो ल्युट्। उद्धानम्। 'ध्मा शब्दाग्निसंयोगयोरि'ति उद्ध्मानमिति कश्चित्। 'श्रीञ् पाके'। अध्यादिः। ल्युट्। अधिश्रयणी। 'चुल्ल भावकरणे'। 'इन्' (उ० ४. ११९) इति इन्। चुल्लिः। पक्षे ङीष्। समीपे अन्तिक उक्तः। ततष्टाप्॥

अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि॥ २९॥
हसन्यपि

क्षीर० — अङ्गारा धीयन्ते अस्याम् अङ्गारधानी। मग्नाग्निः। हसत्यङ्गारैर्हसन्ती, हसन्यपि॥

टीका० — अङ्गारधानिका[2]चतुष्कम् अङ्गारशकटिकायाम्। माङ्ग[3]लिका माङ्गलशकटिकेति यामाहुः। स्वेदायाङ्गारा धीयतेऽस्यामिति अङ्गारधानी। ल्युट्। स्वार्थे कः। हसन्ती शत्रन्ता। ल्युटि हसनी॥

अथ न स्त्री स्यादङ्गारः

क्षीर० — अङ्गचते अङ्गारः। लिङ्गार्थं विधिः॥

अलातमुल्मुकम्।

क्षीर० — अलन्ति[4] वारयन्ति[5] एतदलातम्[6]। न लान्ति वा। उल्कां[7] मुञ्चत्युल्मुकम् अर्धदग्धं काष्ठम्। उलति वा। उलिः सौत्रः॥

टीका० — ईषद्दग्धकाष्ठादिखण्डे साग्नौ निरग्नौ चाङ्गारत्रयम्। 'अङ्गारचुम्बितमिव व्यथमानमास्ते' इति साग्नौ प्रयोगः। 'कलङ्कस्तत्रत्यो व्रजति मलिनाङ्गारतुलनामि'ति तु निरग्नौ प्रयोगः। 'अगि रगि लगि गत्यर्थाः'। मन्दार-

१. 'नी च।' ख. पाठः. २. 'कादिच' ग. पाठः. ३ 'ङ्गा' ङ. पाठः. ४, ५. 'ति' क. पाठः. ६. 'म्। उल्कां' ख. पाठः. ७. 'अ' ग. पाठः.

वदारन् । अङ्गारः । 'उच समवाये' । 'उल्मुकदर्विहोमि---' (उ० ३. ८४) इति मुकप्रत्ययो गुणाभावो लत्वं च चकारस्य निपात्यते ॥

**क्लीबेऽम्बरीषं भ्राष्ट्रो वा**

क्षीर० — अम्ब्यतेऽर्थ्यतेऽम्बरीषम् । भृज्ज्यतेऽस्मिन् भ्राष्ट्रः । अस्त्र्यम्बरीषमित्येके पठन्ति ॥

टीका० — यत्र कलायचणकादिकं [1]भृज्ज्यते, तत्राम्बरीषद्वयम् । 'भ्रस्जो पाके' । 'अम्बरीषः' (उ० ४. २७) इत्यनेन ईषन् अम्बर इत्ययं चादेशः । 'भ्राष्ट्रोऽम्बरीष उक्त' इति पुंस्काण्डे वोपालितः । 'भ्रस्जगामिहनिनमिवि*शां वृद्धिश्च' (उ० ४. १६१) इति ष्ट्रन् वृद्धिश्च । भ्राष्ट्रम् ॥

**कन्दुर्ना स्वेदनी स्त्रियाम् ॥ ३० ॥**

क्षीर० — वेत्येव । विकल्पेन कन्दुर्ना पुमान् । पक्षे स्त्री । कन्दत्येनां कन्दुः । स्वेदयति स्वेदनी ॥

टीका० — अधोमुखीकृत(क ? घ)ट[2]कपालप्राये लोहादिमये पाकपात्रे कन्दुद्वयम् । 'स्कन्देः सलोपश्च' (उ० १. १४) इति कुः । कन्दुः । ल्युटि स्वेदनी ॥

**अलञ्जरः स्यान्मणिकः**

क्षीर० — अलं जीर्यत्यल[3]ञ्जरः महाकुम्भः । मणत्यम्भसा [4]भ्रियमाणो मणिकः ॥

टीका० — [5]अलञ्जरद्वयं जा[6]डीति ख्याते । मणिरेव मणिकः । स्वार्थिकोऽत्र कः ॥

---

१. 'मृ' ख. ग. ङ. च. पाठः. २ 'कप्रा', ३. 'जी' ख., 'जला। म' ग. पाठः. ४. 'भ्रि' ख. पाठः. ५. 'आलञ्जूर' ङ. च. छ. पाठः. ६. 'धी' ख. ग. पाठः.

---

* 'विश्यशाम्' इति मुद्रितोणादिपाठः ।

कर्कर्यालूर्गलन्तिका।

क्षीर०—किरत्यम्बु कर्करी। औलोत्यालूः। 'अड उद्यमने'। अ-स्मादौलूर्वा। गलत्यम्भोऽस्या गलन्तिका॥

टीका०—कर्करीत्रयं भोवाडिआ इति ख्याते। 'कॄ गतौ'। 'त्रो रश्च लः' (उ० १. ९) इति बाहुलकाद् गुणूलत्वे। आलुः। 'गड सेचने'। 'हृवसी'-त्यादिना झच्। स च षि(त्वा?)त्। ङीप्। गलन्तिका॥

पिठरः स्थाल्युखा कुण्डं

क्षीर०—पिठति पिठरः पिठरी च। 'पिठ अवयवे'। पिठेरमिति सभ्याः। तिष्ठत्यस्यां स्थाली। स्थालं कुम्भी च। (उ?ओ)खत्युखा। कु(ड्य?ण्ड्य)ते पच्यतेऽस्मिन्निति कुण्डं कुण्डी च॥

टीका०—पिठरचतुष्कं भाण्डीति ख्यातायाम्। पचतेः 'पचिव-चिभ्यामिच्चोपधायाः' इत्यरः ठश्चान्तादेशः। पिठरः। 'स्थाचतिमृजे-रालज्वालजालीयरः' (उ० १. ११५) इति आलः। स्थाली। 'उख णखे'-त्यादौ इगुपधलक्षणः कः। उखा। कुण्ड उक्तः॥

कलशस्तु त्रिषु द्वयोः॥ ३१॥

घटः कुटनिपौ

क्षीर०—कं लाति कलयति वा कलशः। घटते घटः। कुटति कौत्यम्भसा वा कुटः। निपिबन्त्यस्मान्निपः॥

टीका०—कलशचतुष्कं कलशे। 'सकलशे कलशे वनमालिके'ति क-प्फिणाभ्युदये यमकम्। 'सुक्षेत्रमिव सकलशालिकं स्नानागारमि'त्याश्चर्यमञ्जरी च। 'कलशः कलसोऽपि च' इति तु रभसः। घटेरचि घटः। स्त्रियां घटी। कुटेः कः। कुटः। निपिबन्त्यनेनेति निपः। 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कः॥

१. 'अ' क. ख पाठः. २. 'ल' क. ग. ङ. पाठः. ३. 'दारुपूर्वा', ग., 'दारु दूर्वा' ङ. पाठः. ४. 'का। चालयतीत्यर्थः। पि' क. ग. ङ. पाठः. ५. 'भाडि' ङ. ङ. पाठः. ६. 'न्त्य' ख. ङ. पाठः. ७. 'स्या' ग. पाठः.

**अस्त्री शरावो वर्धमानकः ।**

क्षीर० — शीर्यमाणमवति शरावः । वर्धते मृत्पिण्डाद् वर्ध्यते छिद्यते वा चक्राद् वर्धमानकः । शालाजिरो[1][2]ऽपि ॥

टीका० — शरावद्वयं शरावे । 'शृणातेराव' इत्यावः । शरावः[3] । 'अस्त्री सराव' इति तु विदग्धाः । 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३. २. १२९) । स्वार्थे कन् । वर्धमानकः ॥

**ऋचीकं पिष्टपचनं**

क्षीर० — अर्च्यते पाकोत्कर्षादृचीकम् । ऋजीषमिति तान्त्रिकाः[4] । 'ऋज भृजि भर्जने' । पिष्टकृतं भक्ष्यं पच्यतेऽस्मिन् पिष्टपचनम् ॥

टीका० — तेलावणीति ख्यातायाम् ऋजीषद्वयम् । 'अर्ज षर्ज अर्जने' । 'अर्जेः[5] किद् ऋज च' (उ० ४. २८) इति ईषन् ऋजादेशश्च धातोः । ऋजीषम् । मूर्धन्यषम् ॥

**कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥**

क्षीर० — काम्यतेऽस्मात् कंसः । चषको मल्लिका पारी च ॥

टीका० — कंसद्वयं पानभाजने । रजतमयादावपि । 'कमेः सः' इति सः । कंसः ॥

**कुतूः कृत्तेः स्नेहपात्रं**

क्षीर० — कुत्सितं तन्यते कुतूः । कृत्तेश्चर्मणः ॥

टीका० — कृत्तेश्चर्मणः स्नेहपात्रे कुडुआ इति ख्याते कुतूः । सैवेति निर्देशात् स्त्रियाम् ॥

**सैवाल्पा कुतुपः पुमान् ।**

क्षीर० — ह्रस्वा कुतूः कुतुपः । 'कुत्वा डुपच्' (५. ३. ८९) ॥

---

१. 'जी' ग. पाठः. २. 'को' ख. पाठः. ३. 'वः । शरावोऽस्त्री निरसरावरणेइ' क. च. छ., 'वः रावेणेइ' ख. ग. ट. पाठः. ४. 'काः । ऋर्षाकामित्येके । ऋ' ख. पाठः. ५. 'जेर्ऋ-श्च'इ' क. ख. पाठः.

टीका० — अल्पा कुतूः कुतुपः । 'कुत्वा डुपच्' (५. ३. ८९) इति कुतूशब्दाड् डुपच् ॥

**सर्वमावपनं भाण्डं पात्रामत्रे[1] च भाजनम् ॥ ३३ ॥**

क्षीर० — आ उप्यते आधेयमस्मिन्नावपनम्। भण्डत्याधेयं भाण्डम्। 'भडि परिभाषणे'। पात्याधेयं[2] पीयतेऽस्माद्वा पात्रम्। अमत्याधेयमत्रामत्रम्। भज्यतेऽस्मिन्नाधेयं भाजनम्। भाण्डावपने पृथगाहुः। यन्मुनिः —

"उष्ट्रिकादि[3] तु यद् भाण्डं सर्वमावपनं विदुः"॥

टीका० — सर्वमावपनं वस्तुस्थापकं गोणीप्रसेवकादिका[4] कलशस्थाल्यादिकश्च भाण्डादिचतुष्कवाच्याः। आङ्पूर्वो वपिर्न्यासे[5]। 'भडि परिभाषणे'। पचाद्यच्। पृषोदरादित्वाद् दीर्घः। भाण्डम्। पातेः ष्ट्रन्। पात्रम्। अमत्रं ह्रस्वादि। भजेर्ण्यन्ताल् ल्युट्। भाजनम् ॥

**दर्वी कम्विः खजाका च**

क्षीर० — दृणाति पाक्यं दर्वी। काम्यते कम्विः। खजति मथ्नाति खजाका ॥

टीका० — दर्वित्रयं दार्वीति[6] ख्यातायाम्। 'दॄ विदारणे'। 'वॄदॄभ्यां विन्'[7] (उ० ४. ५४)। दर्विः। 'उल्मुकदर्विहोमिनः' (उ० ३. ८४) इत्यनेन वा विप्रत्ययान्ता दर्विर्निपात्यते। कमेर्बाहुलकाद् विन्। कम्विः। 'खज मन्थे'। 'खजेराकः' (उ० ४. १३) इत्याकः। टाप्। खजाका ॥

**स्यात्तन्दूर्दारुहस्तकः।**

क्षीर० — ततं दुनोति खण्डयति तन्दूः, तनोति वा[8]। तण्डूरिति सभ्यः पाठः। दारुमयी हस्तप्रतिकृतिः दारुहस्तकः। दर्वीभेदोऽयम् ॥

---

१. 'त्रं' ङ. पाठः. २. 'त्यते आधे' ख. पाठः. ३. 'दिमयं भा' ग. पाठः. ४. 'वका क' ख. ह. ञ., 'वादिककरक' ठ. पाठः. ५. 'सं।' क. पाठः. ६. 'दर्व्याम्' ठ. पाठः, '[illegible]वीति' ख. पाठः. ७. 'वृदृभ्यां' [illegible]. ट. पाठः. ८. 'वा। दा' ग. पाठः.

टीका० — तर्दूद्वयं परिवेषणोपयुक्तायाम् । '*त्रो डुक् च' (उ० १. ९२) इति ऊः धातोर्डुगागमश्च । तर्दूः स्त्रियाम् । दारुणो हस्त इव दारुहस्तकः । 'इवे प्रतिकृतौ' (५. ३. ९६) इति कन् ॥

**अस्त्री शाकं हरितकं शिग्रुः**

क्षीर० — श्यति देहं, शक्यतेऽनेन भोक्तुं वा शाकम् । हरितकं नीलत्वात् । शिनोति शिग्रुः द्व्यर्थे, शौभाञ्जनं[1] हरितकविशेषश्चेति ॥

टीका० — शाकत्रयं शाके । शाकशिग्रुशब्दावुक्तौ । हरितात् स्वार्थे कन् । हरितकम् ॥

**अस्य तु नाडिका[2] ॥ ३४ ॥**

**कदम्बश्च कलम्बश्च**

क्षीर० — अस्य शाकस्य नाडी[3] । कदति के लम्बति वा कदम्बः । शाकविशेषे इत्येके । प्राकृते डस्य[4] डत्वात् कडम्ब इत्याहुः[5] । कलम्बो वा ॥

टीका० — शाकनालिकायां कडम्बद्वयम् । नाला उक्ता । कनि नालिका । कडेर्बाहुलकः अम्बच् । कडम्बकलम्बौ ॥

**वेषवार उपस्करः ।**

क्षीर० — वेषं व्याप्तिं वृणीते वेषवारः । कासमर्दसुरसादिः । येन मांसाद्युपस्क्रियतेऽसावुपस्करः[6] । 'समवाये च' (६. १. १३८) इति सुट् ॥

टीका० — वेशवारद्वयं सर्षपादौ हिङ्गुजीरकाम्लवेतसादौ च । वर्णदेशनायां तु दन्त्यो वेसवारः । उपस्करोति व्यञ्जनमिति उपस्करः । पचादिः ॥

तद्भेदानाह—

**तिन्तृडीकं[7] च चुक्रं च वृक्षाम्लम्**

१. 'सौभञ्जनं हरितवि', २. 'लि', ३. 'ली' ख. पाठः. ४. 'डस्य सत्त्वा' ग. पाठः. ५. 'माहुः' ख. पाठः. ६. 'ते स उप', ७. 'त्रि' क. ख. पाठः.

---

* 'त्रो दुट् च' इति मुद्रितोणादिपाठः ।

:० — तिन्तृडीशैलजं तिन्तृडीकम्। चुक्रम्। 'चुक व्यथने'।
वृक्षस्याम्लमम्लवेतसमाहुः॥

टीका० — महाद इति ख्याते तिन्तृडीकद्वयम्। 'चक तृप्तौ'। 'चकि-रम्योरुच्चोपधायाः' (उ० २. १६) इति रक्। चुक्रम्॥

अथ वेल्लजम्॥ ३५॥
**मरिचं कोलकं कृष्णमूषणं धार्मपत्तनम्।**

क्षीर० — वेल्ले वेलातटे जायते वेल्लजम्। वेल्लाख्यः शाखीत्येके। म्रियते मरिचम्। सौक्ष्म्यात् कोलकम्। 'कुल बाल्ये'। कृष्णं वर्णेन, कर्षति तैक्ष्ण्याद्वा। ऊषति रुजत्यूषणम्। धर्मपत्तने भवं धार्मपत्तनम्। आह च —

"मरिचं वलितं श्यामं वेल्लजं कृष्णमूषणम्।
यवनेष्टं शरं वृन्तं कोलकं धार्मपत्तनम्"॥

टीका० — वेल्लजषट्कं मरिचे।

"मरीचं कोलकं धार्मपत्तनं मरिचं समम्"

इति रभसः। कृष्णमुक्तम्। उषणं दीर्घादि चास्ति॥

**जीरको जरणोऽजाजिः कणा**

क्षीर० — जीर्यतेऽनेनान्नं जीरको जरणश्च। अजं स्वाभाविकं मन्दाग्नित्वमजति अजाजिः, स्त्री। कणाः सन्त्यस्यां कणा। अर्शआदित्वा-दच्॥

टीका० — जीरकचतुष्कं जीरके। 'स्त्र्यजाजिर्जीरणोऽजाजी' इति वोपालितः। कणा उक्ता॥

कृष्णे तु जीरके॥ ३६॥
**सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका।**

क्षीर० — कृष्णा तु पिप्पलीत्येके पेठुः। सुष्ठु सुवति प्रेरयति दोषान्

---

१., २. 'न्त्रि' क. ख. पाठः. ३. 'म्' 'म्रि', ४. 'न। ऊ', ख. पाठः. ५. 'म्योऽच्' क. पाठः.

सुषवी। कारोरियं कारवी[1]। काला वर्णेन। उपकुञ्चयत्यल्पीकरोति दोषान् उपकुञ्चिका। आह च—

"उत्कुञ्चिकोपकुञ्ची च कालिका चोपकालिका।
सुषवी कुञ्चिका कुञ्ची पृथ्वीका कृष्णजीरकः" ॥

टीका०—कृष्णजीरके सुशवीषट्कम्। सुशवी तालव्यमध्या। अपरं साधितम् ॥

आर्द्रकं शृङ्गिबेरं स्याद्

क्षीर०—आर्द्रात् 'संज्ञायां कन्' (५. ३. ७५)। शृङ्गोपलक्षितं बेरं देहोऽस्य शृङ्गिबेरम्। आह च—

"महौषधं शृङ्गिबेरं कटुभद्रं तथार्द्रकम्" ॥

टीका०—आर्द्रकद्वयमार्द्रके। आर्द्रायां नक्षत्रे जातमार्द्रकम्। कनि 'केऽणः' (७. ४. १३) इति ह्रस्वत्वम्। शृङ्गमिव बेरं वपुरस्येति शृङ्गबेरम् ॥

अथ च्छत्रा वितुन्नकम् ॥ ३७ ॥

क्षीर०—छत्राभा[2] छत्रा, छादयति दोषान् वा। वितुदति मन्दाग्नित्वं[3] वितुन्नकम् ॥

कुस्तुम्बुरु च धान्याकम्

कुत्सितं तुम्बति कुस्तुम्बुरु। 'तुबि लुबि अर्दने'। पारस्करादित्वात् सुट्। धान्यमकति धान्याकम्। अल्लुका धान्यकं च ॥

टीका०—छत्राचतुष्कं धान्याके। छत्रा उक्ता। विपूर्वात् तुदेः क्तः। स्वार्थे कन्। वितुन्नकम्। कुत्सितं तुम्बुरु कुस्तुम्बुरु। 'कुस्तुम्बुरूणि जातिः' (६. १. १४३) इति सुट् निपात्यते। धान्यात् स्वार्थे कनि धान्याकम्। धान्यकमपीति हट्टचन्द्रः ॥

---

१. 'वी। बृहत्कारणात् का' क, 'बा ......त्करणात् का' ग. पाठः. २. 'त्राभपत्रा' छादयति दोषान् वा छत्रा। 'बि' ग. ङ. पाठः. ३. 'मित्वाद् वि' ख. पाठः. ४. 'श्यामाके' ग. पाठः.

अथ शुण्ठी महौषधम् ।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥

क्षीर० — शुण्ठति शुष्यति शुण्ठी[1] । नगराख्ये देशे भवं नागरम् । विश्वभेषजम् अनेकदोषजित् । विश्वं विश्वा च, भीमवत् ॥

टीका० — शुण्ठीपञ्चकं शुण्ठ्याम् । 'शुठि शोषणे' । पचादिगौरादी[2] । स्त्रीनपुंसकयोर्विश्वम् । देवभेदे पुमानुक्तः ॥

आरनालकसौवीरकुल्माषाभिषुतानि तु ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्चिकम् ॥ ३९ ॥

क्षीर० — अरनालो भक्तं, तज्जमारनालम् । सुवीरेषु प्रायभवं सौवीरम् । 'षुञ् अभिषवे'[3], अस्माद्वा पृथक् कुल्माषाख्या नास्ति । अस्ति चेद् भीमवत् स्यात् । कुल्माषैर्यवादिभिरर्धस्विन्नैरभिषूयते परिवास्यते स्म कुल्माषाभिषुतम् । अवन्तिषु सूयते अवन्तिसोमम् । कुञ्जं लाति[4], तथा कुत्सितं जलमस्त्यस्य वा कुञ्जलम् । काञ्चयति दीपयत्यग्निं[5] काञ्चिकं, बध्नाति दोषान् वा काञ्च्यां पुरि भवं वा । आह च —

"काञ्चिकं काञ्जिकं वीरं कुन्माषाभिषुतं तथा ।
अवन्तिसोमं धान्याम्लमारनालं महारसम् ॥
सौवीरकं सुवीराम्लं तथा चुक्रं तुषोदकम्" ॥

टीका० — आरनालाष्टकं काञ्चिके । सौवीरं दन्त्यसम् । यवके कुल्माष उक्तः । दन्त्योऽपि कुल्मासः । स च यवविकारवाचीति वर्णदेशना । अभिषुतं मूर्धन्यषम् । अवन्तिसोमेतिच्छेदः । केन जलेन अञ्जिका अभिव्यक्तिरस्येति काञ्जिकम् ॥

सहस्रवेधि जतुकं बाल्हिकं हिङ्गु रामठम् ।

क्षीर० — सहस्रं बहु विध्यति सहस्रवेधि[6] । जायते जतुकम् । बाल्हिकरामठौ उदग्देशौ । हिनोति हिङ्गु । अत्युग्रं भूतनाशनं गूढगन्धं च ॥

---

१. 'म् । शुष्यति शुण्ठी शती । न', २. 'दिः । गौरादिः । स्त्री' ग. पाठः. ३. 'पुञोऽभिषवार्थाद्वा' क. पाठः. ४. लातीति कु' ख. पाठः. ५. 'ग्निं बध्नाति दोषान् वा काञ्चिकम् । का' ग. ङ. पाठः. ६. 'धि । बा' ख. पाठः.

टीका० —सहस्रवेधिपञ्चकं हिङ्गुनि। ताच्छीलिकणिनौ सहस्रवेधी। जतुकं चवर्गादि प्रागुक्तम्। बाल्हीको[1]ऽप्युक्तः। न स्त्री हिङ्गुरित्यन्यतन्त्रम्। रमठदेशे भवो रामठः॥

**तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः॥ ४०॥**

क्षीर० —तस्य हिङ्गोः पत्री। कारोरियं कारवी संस्कर्त्री। बाष्पं स्रवति बाष्पिका। कबर्याकृतिः कबरी। करवीति पाठभेदः॥

टीका० —हिङ्गुतरुपत्र्यां कारवीपञ्चकम्॥

**निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी।**

क्षीर० —निशाख्या रात्रिपर्याया, नानार्थे रजनीत्वात्। काञ्चनवर्णा काञ्चनी। हरिं[2] पीतं[3] वर्णं द्राति हरिद्रा। वरो वर्णोऽस्त्यस्या वरवर्णिनी। आह च—

"हरिद्रा पीतिका पिण्डा रजनी रजना निशा।
गौरी वर्णवती पीता हरिता वरवर्णिनी"॥

टीका० —निशाह्वापञ्चकं हरिद्रायाम्। निशाह्वा रात्रिपर्यायाभिधाना। 'कचि दीप्तौ'। ल्युट्। पृषोदरादि[4]त्वाद् दीर्घत्वम्। काञ्चनी। पीत उक्तः। टापि पीता। वरः श्रेष्ठो वर्णः पीतः। तद्योगाद् वरवर्णिनी॥

**सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत्॥ ४१॥**

क्षीर० —लुनाति जाड्यं लवणम्। नन्द्या[5]दित्वाल्ल्युः, णत्वं च। अक्ष्णोति व्याप्नोति अक्षीवम्। उश्यते वशिरम्। 'वश कान्तौ'॥

टीका० —समुद्रवेलाभवे कडकश्चेति ख्याते लवणे अक्षीवद्वयम्। अक्षीवं ह्रस्वादि॥

**सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे।**

क्षीर० —सिन्धुनद्युपलक्षितं सैन्धवम्। तत्र भवः। 'कच्छादिभ्यश्च' (४. २. १३३) इत्यण्। शीतं शिनोति शीतशिवम्, उष्णवीर्यत्वात्[6]। आह च—

"मणिमन्थं च सिन्धूत्थं नादेयं सिन्धुजं शिवम्।
शुद्धं शीतशिवं च॥"

अन्यदेव वस्तकम्॥

---

१. 'ल्हि' ग. पाठः. २ 'रितं पी', ३. 'त' ख. पाठः. ४. 'दिदी', ५. 'दिल्युः' ग. पाठः. ६. 'त्। वस्तं तु रौमके। सि' ङ. पाठः.

टीका० — सिन्धुदेशभवे लवणे सैन्धवत्रयम् । शैलवदाणि सैन्धवः, अस्त्री । सितं शुभ्रं शुभं कल्याणमिति कर्मधारयः । मणिमन्थपर्वते भवो माणिमन्थः ॥

रौमके[1] वस्नकं

क्षीर० — रुमायामाकरे भवं वस्नकं नाम लवणम् । 'रौमके वसुकं वस्वि'ति च माला ॥

टीका० — लुमा नाम समहरिदेशे लवणाकरः, तत्र प्रविष्टं दार्वपि चिराल्लवणं स्यात् । तद्भवे लवणे रौमकद्वयम् ॥

पाक्यं विडं[2] च कृतके द्वयम् ॥ ४२ ॥

क्षीर० — पाके साधु पाक्यं पक्तव्यं वा कल्लराख्यम् । विडति भिनत्ति मलान् विडम्[3] । कृतकलवणस्य द्वे नामनी । पाक्यविडलवणयोर्भेदेऽपि कृतकत्वादैक्यम् । ऽयर्थे पाक्यं, विडलवणं यवक्षारः क्षारश्चेति ॥

टीका० — लवणमृत्तिकां सिक्त्वा निष्पादिते लवणे पाक्यम् । पचतेर्ण्यत् ॥

सौवर्चलेऽक्षुरुचके[4]

क्षीर० — सुवर्चलाकरभवं सौवर्चलं, सुवर्चस्येदं सौवर्चम् अग्निदीपनं लाति वा । 'वर्च दीप्तौ' । अच् । अक्ष्णोति व्याप्नोत्यक्षु । अक्षमित्येके । रोचतेऽनेन रुचकम् । हृद्यगन्धं च ॥

टीका० — सौवर्चलत्रयं सौवर्चले । अक्षद्वयं साधितम् ॥

तिलकं तत्र मेचके ।

क्षीर० — तिलति स्निह्यति तिलकम् तत्र तस्मिन् मेचके कृष्णे[5] लवणे वर्तते । पूर्वं तु मधुवर्णम् । अगन्धं कृष्णवर्णं[6] तिलकमित्येके । यद्वैद्याः—

---

1. 'वस्नकं रौमके रु' ग. पाठः. २. 'वि' ग. ड. पाठः. ३. 'बि' ग. पाठः. ४. 'क्षुः रो' क. ग. पाठः. ५. 'ष्णे व' ख. पाठः. ६. 'ष्णलवणं ति' ग. पाठः.

"कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिते" ॥

टीका० — कृष्णे सौवर्चले तिलकं, साधितम् ॥

**मत्स्यण्डी फाणितं खण्डविकारे**

क्षीर० — मदं स्यन्दयते[1] मत्स्यण्डी सामान्यशर्करा । मत्स्यानमति[2] मत्स्यान्दीति वा । मत्स्याण्डीति वैद्याः । यद्धन्वन्तरिः—

"शर्करोक्ता तु मीनाण्डी श्वेता मत्स्याण्डिका सिता ।"

"मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तराः"

इति तु वाहटः । फण्यते द्रवत्वात् फाणितम् । खण्ड्यते श्च्योतः । क्षौद्रकं त्विक्षुरसविकारः खण्डवत् ॥

टीका० — इक्षुविशेषस्य रसपाके खण्डयोग्ये या सारभूता गुडिकाकारा जायते सा मत्स्यण्डी खण्डशाल्कम् । अर्धावर्तितं फाणितम् । (अनः खण्डविकारौ[3] ?) ॥

**शर्करा सिता ॥ ४३ ॥**

क्षीर० — शीर्यते शर्करा । सीयते सिता, खण्डशर्कराख्या ॥

टीका० — शर्कराद्वयं शर्करायाम् । शर्करोक्ता ।

"शर्करायां सिता शुक्ले बद्धे चावसिते त्रिषु"

इति दन्त्यान्ते रभसः ॥

**कूर्चिका क्षीरविकृतिः स्याद्**

क्षीर० — कूर्चस्तन्मस्तु[4], तदस्त्यस्यां कूर्चिका । कुचति कुंचिकेत्येके[5] । किलाटिकाख्या ॥

टीका० — क्वथितक्षीरविकारे खिरिस इति ख्याते कूर्चिका ।

---

१. 'न्दते', २. 'ति भजति मत्स्यण्डी' क. ग. ङ. पाठः. ३. 'रे' ज. पाठः. ४. 'र्चोऽस्त्य' ख., 'र्चस्तमस्तद' ग., 'र्चस्तद' क. पाठः. ५. 'कूचिके' ख., 'कुचीले' क. पाठः.

"दध्ना सह पयः पक्वं यत् तत् स्याद् दधिकूर्चिका।
तक्रेण पक्वं यत् क्षीरं सा भवेत् तक्रकूर्चिका" ॥

**रसाला तु मार्जिता।**

**क्षीर०** — रसमलति रसाला। मार्ज्यते मार्जिता दधिसितामरिचादिकृतं लेह्यम्। यत् सूदशास्त्रम्—

"अर्धाढकं सुचिरपर्युषितस्य दध्नः
खण्डस्य षोडशपलानि शशिप्रभस्य।
सर्पिः पलं मधु पलं मरिचं द्विकर्षं
शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम्॥
श्लक्ष्णे पटे ललनया मृदुपाणियुक्ता
कर्पूरधूलिसुरभीकृतभाण्डसंस्था।
एषा वृकोदरकृता सरसा रसाला
यास्वादिता भगवता मधुसूदनेन" ॥

**टीका०** — रसालाद्वयं शिखरिण्याम्।

"स चान्तर्जातकाजाजीसगुडाद्रकनागरम्।
रसाला स्याच्छिखरिणी सघृतं सरसं दधि ॥"

इति रत्नमाला। आम्रे रसाल उक्तः। ततष्टाप्। मृजोऽङि 'मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यत' इति वृद्धौ मार्जा। ततस्तत्करोतीति णिजन्तात् क्तः। मार्जिता ॥

**स्यात् तेमनं तु निष्ठानं**

**क्षीर०** — तिम्यत्यार्द्रीभवत्यनेन तेमनम् उपसेचनं कौपनाख्यम्[3]। [1]नितिष्ठत्यन्नमनेन निष्ठानम्। व्यञ्जनं च। सूपादय उपचारात् ॥

**टीका०** — त्रिमण इति ख्याते तेमनद्वयम्। 'तिम ष्टिम आर्द्रभावे'। ल्युट्। तेमनम्। तिष्ठतेर्ल्युट्। निष्ठानम् ॥

1. 'चा' क. ग. ङ. पाठः. २. 'संस्कृत' क. पाठः. ३. 'केवना' ख. पाठः.

त्रिलिङ्गा वासितावधेः ॥ ४४ ॥

क्षीर० — इतः प्रभृति वासितान्ता वाच्यलिङ्गाः ॥

टीका० — अतः परं वासितावधेः प्राग् वाच्यलिङ्गाः ॥

शूलाकृतं भटित्रं च शूल्यम्

क्षीर० — 'शूलात् पाके' (५. ४. ६५) इति डाच् । भटत्यनेन भटित्रम् । 'भट भृतौ' । शूले संस्कृतं शूल्यम् । 'शूलोखाद्यत्' (४. २. १७) । भरूटकं भृष्टं[1] च ।

"संस्कृतं सर्पिषा दध्ना सार्पिष्कं दाधिकं क्रमात् ।
उदलावणिकं तत् स्याद् यत् सिद्धं लवणाम्भसा" ॥

टीका० — शूलाकृतत्रयं भडित इति ख्याते तेमनविशेषे । शूलाकृतम् । 'शूलात् पाके' (५. ४. ६५) इति डाच् । 'भट भृतौ' । 'अशित्रादिभ्य इत्रोत्रौ' (उ०४. १७४) इति इत्रः । भटित्रम् । 'शूलोखाद् यत्' (४. २. १७) इति यत् । शूल्यं मांसम् । शूल्यो मत्स्यः । शूल्या वार्त्ताकुः ॥

उख्यं तु पैठरम् ।

क्षीर० — उखायां स्थाल्यां संस्कृतम् उख्यम् । पिठरे संस्कृतं पैठरम् । 'संस्कृतं भक्षाः' (४. २. १६) इत्यण् ॥

टीका० — स्थाल्यां संस्कृते उख्यद्वयम् । शूल्यवदुख्यम् । 'संस्कृतं—' (४. २. १६) इत्यण् । पैठरम् ॥

प्रणीतमुपसम्पन्नं

क्षीर० — रूपरसादिनिष्पन्नमन्नं प्रणीयते स्म प्रणीतम् ॥

टीका० — पाकरूपरसादिभिः सम्पन्ने व्यञ्जने प्रणीतद्वयम् । नयतेः पदेश्च क्तः ॥

[1]. 'ष्टकं च' च. पाठः.

**प्रयस्तं स्यात् सुसंस्कृतम् ॥ ४५॥**

क्षीर० — परिव्ययपाकादिना प्रयत्ननिष्पन्नमन्नं प्रयस्तम्। संस्कृतम्। अनित्ये साधुः। प्रयतमिति केचित्। यदुक्तं—'प्रयतं संस्कृते पूते'॥

टीका० — तैलपरिव्ययादियोगेन सुष्ठु संस्कृते व्यञ्जनादौ प्रयस्तम्। 'यसु प्रयत्ने'। क्तः॥

**स्यात् पिच्छिलं तु विजिलं**

क्षीर० — पिच्छा आचामोऽस्य पिच्छिलम्। पिच्छादित्वादिलच्। विजते चलति विजिलम्। विज्यमिति वैद्याः। 'स्यात् पिच्छिलं तु विजलमि'त्येके॥

टीका० — पिच्छिलद्वयं पिच्छिले। पिच्छादीलचि पिच्छिलम्। 'ओविजी भयचलनयोः'। 'कुटादिभ्यः कित्' इति इलच्। स च कित्। विजिलम्॥

**संमृष्टं शोधितं समे।**

क्षीर० — वालमक्षिकादिरहितं सम्मृष्टम्। 'मृजू शुद्धौ'॥

टीका० — अपनीतकेशमक्षिकाद्यवकरे सम्मृष्टद्वयम्। मृजेः शुध्यतेश्च क्तः। सम्मृष्टं शोधितम्॥

**चिक्कणं मसृणं स्निग्धे**

क्षीर० — चिगित्यव्यक्तं कणति चिक्कणम्। मसृणति मसृणम्॥

टीका० — चिक्कणत्रयं चिक्कणे। 'चिती संज्ञाने'। 'चितः कः कणच्' (उ० ४. १७७) इति कणच्, तकारस्य ककारः। चिक्कणम्। 'ऋण गतौ दीप्तौ च'। सम्पूर्वात् कः। पृषोदरादित्वाद् वर्णविपर्ययः। मसृणम्॥

**तुल्ये भावितवासिते ॥ ४६॥**

१. 'धुः ॥ स्यात' क. ग. ङ. पाठः. २. 'य' क., 'ज्ययमि' घ. प :. ३. 'श्च' क. ट. पाठः. ४. 'क्तः ॥' क. ख. ट. पाठः. ५. 'मसृण' ठ. पाठः. ६. 'णमिति धातुप्रदीपः। ऋ' क. ख. ग. घ. ङ. पाठः.

क्षीर० — भाव्यते मिश्रीक्रियते स्म भावितम्। 'भुवोऽवकल्कने'। णिच्। वास्यते द्रव्यान्तरेण मिल्यते धूपपुष्पादिना वाधिवास्यते वासितम्। यन्मुनिः—'धूपितं वासितं विदुः'॥

टीका० — व्याघ्राङ्गारादिना धूपिते तेमनादौ भावितद्वयं, मनुष्यवर्गे साधितम्॥

**आपक्कं पौलिरभ्यूषः**

क्षीर० — ईषद्भृष्टं कलायादि आपक्कं खेलभर्जिताख्यम्। * पुलति वर्धते पौलिः। 'पुल महत्त्वे'। ऊषो रुजार्थादभ्यूषः। उषो दाहार्थादभ्योष इत्येके॥

टीका० — पाकावस्थे यवशीर्षादौ अग्निना ईषद्दग्धे होदुस इति ख्याते आपक्कत्रयम्। ओलभेति चास्य प्रसिद्धिः। पचेः क्तः। 'पचो वः' (८.२.५२)। आपक्कम्। 'ऊष रुजायाम्'। घञर्थे कः। अभ्यूषः।

"भृष्टयवो धानाः स्त्री तोक्मो हरितो यवोऽभ्युषः पक्कः।"

इति रत्नकोषार्यादौ ह्रस्वमध्यश्च। पौलिर्ना॥

**लाजाः पुम्भूम्नि चाक्षताः।**

क्षीर० — लज्यन्ते लाजाः। 'लज भर्जने'। न क्षण्यन्ते अक्षताः। चार्द्रं भिन्नक्रमात् ते पुंसि बहुत्वे च। 'अक्षता यवाः' इति पुराणम्। तन्मते पुंबहुत्वार्थो विधिः॥

टीका० — लाजद्वयं लाजेषु। 'लाज लाजि भर्जने'। पचादिः। लाजाः। न क्षता अक्षताः। दारा इव लाजाः। 'लाजाः स्त्रियामि'ति वार्तः।

१. 'प्रथा' च. पाठः. २. 'बलवार्जे' क. ग. पाठः. ३. 'भा' ग. पाठः. ४. 'त ते' ख. पाठः. ५. 'यं भी इति ख्यातायाम। लाज' क. ख. ग. घ. पाठः.

---

पुलतेः क्षीरस्वामिपक्षे तुदादित्वमपि। तथाच पुलधातौ क्षीरतरङ्गिणी—"पोलति...... तुदादौ पुलति" इति।

"लाजाः पुंसि बहुत्वे वा स्त्रियां लाजापि चाक्षतम्"
इति संसारावर्ते एकवचनान्तापि ॥

**पृथुकः स्याच्चिपिटकः**

**क्षीर० — आर्द्रभृष्टं सस्यं तद्विपाकात् पृथु भवति, चिपिटीभवति च। नीलधान्यं वा भृष्टमुलूखलक्षोदाच्चिपिटीभूतं तण्डुलम् ॥**

**टीका०** — पृथुकद्वयं चिड इति ख्याते। निशब्दाद् 'इनच्पिटच्चिकचि च' (५. २. ३३) इति पिटच्प्रत्ययश्चिरादेशश्च नेः। 'चिपिटस्तु चिपुटः स्यादि'ति[१] उकारमध्योऽपि ॥

**धाना भृष्टयवे स्त्रियः ॥ ४७ ॥**

क्षीर० — धीयन्ते धानाः। भृष्टयव इति जात्याख्यायामेकत्वम्। धानाश्चूर्णिताः सक्तवः स्युः। 'वस्तिः स्यादंसशष्कुली'। धूस्तीरिति[२] द्रमिडाः ॥

**टीका०** — भृष्टयवे धाना नित्यबहुवचनान्ताः। 'धापॄवस्यज्यतिभ्यो नः' (उ० ३. ६) ॥

**पूपोऽपूपः पिष्टकः स्यात्**

**क्षीर० — पुनाति पूपः। न पूयतेऽपूपः पिष्टातकमयो मण्डकाख्यः। 'पूयी विशरणे'। अद्भिरुप्यत इति नैरुक्ताः। 'पिष्टाच्च' (४. ३. १४६), 'संज्ञायां कन्' (४. ३. १४७)। मुनिस्तु—**

**"अपूपः पिष्टपूपः स्यात् पूपा भक्ष्याः प्रकीर्तिताः" ॥**

**टीका०** — पूपत्रयं पिष्टके। पिष्टानां तण्डुलानां विकारः पिष्टकः। 'पिष्टाच्च' (४. ३. १४६) इत्यनुवृत्तौ 'संज्ञायां कन्' (४. ३. १४७) इति कन् ॥

**करम्भो दधिसक्तवः।**

१ 'ति रभसकोषार्थ उ' क. ख. ग. घ. ङ., 'ति रत्नकोषार्थ उ' ज. पाठः.
१. 'र्णस' क. ग. पाठः. २. 'अस्तिरि' ख. पाठः.

क्षीर० — केन रभ्यते†(मी?मि)ल्यते कार्यते वा करम्भः। दध्युपसिक्ताः सक्तवः ॥

टीका० — दध्युपसिक्ताः सक्तवः करम्भः, भान्तः। तथाच —

"साम्भः कुम्भं करम्भं नवमथितघटीकर्करीं[1] शर्करीं च"

इति बाणानुप्रासः। यस्तु पकारान्तः, स मिश्रसामान्यवाची। करंकुकोककलहंसकाम्बविक' इति विदग्धमुखमण्डनम् (?) ॥

**भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः॥४८॥**

क्षीर० — भस्यते भक्ष्यते भिस्सा। भ्यसेः सम्प्रसारणं वा। 'ब्राह्मणभिस्से'ति भाष्यम्। भज्यते भक्तम्। अनित्यनेनान्धः, सान्तम्। अद्यतेऽन्नम्। उनत्ति क्लिद्यत्योदनम्। भृशं दीव्यत्यनेन दीदिविः। स इति विशेषणात् पुंसि ॥

टीका० — भिस्साषट्कं भक्ते। भिस्सा दन्त्यसा। 'अदेर्नुम् धश्च' (उ० ४. २०७) इत्यसुन् नुं धान्तादेशश्च। अन्धः। 'अन्नाणः' (४. ४. ८५) इति निपातनादन्नम्। 'पन अन च व्यवहारे'। 'कृवृदृवसिदुपन्यनिस्वपिभ्यो नित्' (उ० ३. ९) इति वा अनेर्नः। 'उन्देर्नलोपश्च' (उ० २. ७९) इति युच्। ओदनम्। 'दिवो द्वे दीर्घश्चाभ्यासस्य' (उ० ४. ५६) इति किन्। 'लोपो व्योर्वलि' (६. १. ६६) इति वलोपः। ओदनशब्दो दीदिविसहितोऽस्त्री, न तु सदीदिविशब्दः[2] ॥

**भिस्सटा दग्धिका**

क्षीर० — कुत्सिता भिस्सा भिस्सटा। यथा — ओदनभिस्सटा। लक्ष्यानुरोधाट्टः। यथा — स्वर्गग्रामटिका, वधूटिका ॥

टीका० — दाडीति ख्यातायां भिस्सटाद्वयम् ॥

---

१. 'र्तं' ङ. छ. पाठः. २. 'विः ॥' छ. पाठः.

† 'मिल श्लेषणे' इति मिलधातोः श्लिष्यतेरिव सकर्मकत्वात् कर्मणि लट्। मेल्यत इति वा पाठ्यम्। मिल्यते कार्यते इति रभेरर्थद्वयकथनं, 'परिरभत' इत्यादौ मेलनार्थस्य 'तन्तुना पटमारभते' इत्यादौ करणार्थस्य च दर्शनात्।

**सर्वरसाग्रे मण्डमस्त्रियाम् ।**

क्षीर० — सर्वरसानां द्रवद्रव्याणामग्रं मुखं, मण्डयति मण्डः ॥

टीका० — सर्वेषां रसानां घृतौदनादीनामग्ररसे मण्डः । 'मडि भूषायाम्' । अच् ॥

**मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥**

क्षीर० — मस्यति परिणमते मासरः । आचम्यते आचामः । निस्राव्यते निस्रावः ॥

टीका० — भक्तमण्डे मासरत्रयम् । 'चमु अदने' । आङ्पूर्वात् कर्मणि घञ् । आचामः । मूत्रं निस्रावयतीति निस्रावः ॥

**यवागूरुष्णिका श्राणा विलेपी तरला च सा ।**

क्षीर० — यूयते पिष्टादिना यवा । आगूयतीत्यागूः । संज्ञितोष्णा उष्णिका । 'ब्राह्मणकोष्णिके संज्ञायाम्' (५. २. ७१) । श्रायते श्राणा । 'श्रा पाके' । विलिम्पति विलेपी । तरला लेह्यत्वाच्चपला ।

"म्रक्षणाभ्यञ्जने तैलं कृसरोऽत्र तिलौदनः" ॥

टीका० — यवागूपञ्चकं यवाग्वाम् । वैद्यके तु विलेपनादिर्यवागूविशेष इत्युक्तम् । यौतेः 'सृयुवचिभ्योऽन्युजागूजक्नुचः' (उ० ३. ८१) इत्यागूच् । यवागूः । 'ब्राह्मणकोष्णिके संज्ञायाम्' (५. २. ७१) इति कना निपातितत्वादुष्णिका । 'श्रा पाके' । क्तः । 'संयोगादेरातो धातोर्यण्वतः' (८. २. ४३) इति निष्ठातो नः । श्राणा, तालव्यादिः । विलेपी पचादिः, गौरादिः । तरलशब्द उक्तः ॥

**गव्यं त्रिषु गवां सर्वं**

१. 'का' ग. क. पाठः. २. 'म् इति कन् प्रत्ययमा निपात्यते । श्रा' ख. पाठः. ३. 'उक्षणा' क. ख. पाठः. ४. 'लो' ग. पाठः.

क्षीर० — गोरिदं गवि भवमित्यादिषु सर्वेष्वर्थेषु गव्यं क्षीरादि 'सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्' (वा० ४. १. ८५) ॥

टीका० — गोर्विकारोऽवयवो वा गव्यम्[1]। तत्र भवे इत्याद्यर्थे 'सर्वत्र गोरजादिप्रसङ्गे यद् वक्तव्यः' (वा० ४. १. ८९) इति यत्। अवयवार्थे 'उगवादिभ्यो यत्' (५. १. २) ॥

**गोविड् गोमयमस्त्रियाम् ॥ ५० ॥**

क्षीर० — गोर्विष्ठा गोविट्। 'गोश्च पुरीषे' (४. ३. १४५)। मयट् ॥

टीका० — गोविड्द्वयं गोमये। गोविट् षान्ता स्त्रीलिङ्गा च। 'गोश्च पुरीषे' (४. ३. १४५) इति मयट् ॥

**तद्विशुष्कं करीषोऽस्त्री**

क्षीर० — करोत्यग्निं करीषं शुष्कं गोमयम् ॥

टीका० — गोमये विशुष्के करीषः। 'कॄ विक्षेपे'। 'कॄतॄभ्यामीषन्' (उ० ४. २६) ॥

**दुग्धं क्षीरं पयः समम्।**

क्षीर० — दुह्यते दुग्धम्। घस्यते क्षीरम्। 'घसेः किच्च' (उ० ४. ३४) इतीरन्। 'गमहनजनघन—' (६. ४. ९८) इत्युपधालोपः। 'खरि च' (८. ४. ५५) इति चर्त्वम्। 'शासिवसिघसीनां च' (८. ३. ६०) इति षत्वम्। पीयते पयते वा सरसत्वात्[3] पयः। असुन्। सममिति पयसो नपुंसकत्वार्थम् ॥

टीका० — दुग्धत्रयं दुग्धे। दुहेः क्तः। दुग्धम्। पय उक्तम् ॥

---

१. 'दिष्व' ख. ग. ङ. पाठः. २. 'वाद्य' क. ख. पाठः. ३. 'रसवत्त्वात्' क. पाठः'

**पयस्यमाज्यदध्यादि**

क्षीर० — पयसो विकारः पयस्यम् । 'गोपयसोर्यत्' (४. ३. १६०)। आदिशब्दान्नवनीतादि ॥

टीका० — आज्यदधितक्रादि पयस्याख्यम् । गव्यवद् यत् ॥

**द्रप्सं दधि घनेतरत् ॥ ५१ ॥**

क्षीर० — दृप्यति द्रप्सम् । घनादन्यद्, अघनमित्यर्थः । यन्माला — 'द्रप्सं दध्यघनं तथा' । एतच्च द्रप्सं 'शरमि'ति भागुरिपाठः । सरमिति बुद्ध्वा मालाकारो भ्रान्तः । 'केचिन्नेटैस्तु नाशिता' इति * अयमपि मालापाठेन विप्रलब्धः । यदाह शुभ्रः — 'बाणद्रप्सौ शरौ' इति । इत्थं सामर्थ्यं — तरत् उपरि प्लवमानं घनं दधि द्रप्सम् ॥

टीका० — घनेतरद् अघनं दधि द्रप्सं द्रगड इति ख्यातम् ॥

**घृतमाज्यं हविः सर्पिः**

क्षीर० — जिघर्ति घृतम् । 'अञ्जिसिघृभ्यः क्तः' (उ० ३. ८९) आ अञ्जनीयम् आज्यम् । 'आङ्पूर्वादञ्जेः संज्ञायाम् —' (वा० ३. १ १०९) । क्यप् । हूयते हविः, हविष्यं च । सर्पति सर्पिः । इसन्तौ ॥

टीका० — घृतचतुष्कं घृते । 'घृ क्षरणदीप्त्योः' । 'अञ्जिघृषिभ्यः क्तः' (उ० ३. ८९) । घृतम् । 'आङ्पूर्वादञ्जेः संज्ञायाम् —' (वा० ३. १. १०९) । क्यप् । आज्यम् । 'अर्चिशुचिहुसृ[illegible]च्छर्दिच्छादिभ्य इसिः' (उ० २. १०८) । हविः, सर्पिश्च । तद्दिवसीयाद् दध्नो दुग्धाद् वा समुद्धृतं घृतम् ॥

**नवनीतं नवोद्धृतम् ।**

क्षीर० — दध्नो मथितान्नवं तत्कालं नीतमुद्धृतं नवनीतं घृतयोनिः ॥

---

१. 'त् ॥ घ' क घ. पाठः. २. 'तेन ना', ३. 'हुः बा' ख. पाठः. ४. 'समर्थं तत्' क. पाठः. ५. 'ध्यान्तरम् । उ' ख. पाठः.

---

* अयमपि भागुरिपाठोऽपि । मालापाठेन विप्रलब्धः, मालापाठविस्रम्भेण पाठकैर्नाशित इति तात्पर्यम् ।

टीका० — नाग्निस्पृष्टं नवनीतम् । नवाद् दध्यादेर्नीतं प्राप्तम् ॥

**तत् तु हैयङ्गवीनं यद् ह्योगोदोहसमुद्भवम् ॥ ५२ ॥**

क्षीर० — ह्योगोदोहस्य विकारो हैयङ्गवीनम् । 'हैयङ्गवीनं संज्ञायाम्' (५. २. २३) इति साधुः । कात्यो नवनीतमित्याह ॥

टीका० — ह्यो गतादिनं, तद्गोदोहभवं घृतं हैयङ्गवीनम् । 'हैयङ्गवीनं संज्ञायाम्' (५. २. २३) इति खञ् निपातितः । ह्योगोदोहशब्दस्य हियङ्गवादेशः । तस्य च विकारे खञ् ॥

**दण्डाहतं कालशेयमरिष्टमपि गोरसः ।**

क्षीर० — मन्थदण्डेनाहतम् । कलश्यां घर्घर्यां भवं कालशेयम् । 'दृतिकुक्षिकलशि—' (४. ३. ५६) इति ढञ् । न रिष्यति न निहन्त्यरिष्टं, सर्वरोगजित्त्वात् ॥

टीका० — सामान्यगोरसे दण्डाहतचतुष्कम् । मन्थानदण्डेन हतं दण्डाहतम् । कलश्यां भवं कालशेयं, तालव्यशम् । आहेयवद् ढञ् । अरिष्टमुक्तम् ॥

क्षीर० — तद्विशेषानाह—

**तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥**

तञ्चति द्रुतं गच्छति तक्रं, चतुर्भागाम्बु । उदकेन श्वयत्युदश्विद्, अर्धाम्बु । दध्नो मथनमात्रसाध्यं मथितं, निर्जलम् ।

"द्विगुणाम्बु श्वेतरसमर्धोदकमुदश्वितम् ।
तक्रं त्रिभागहीनं तु केवलं मथितं स्मृतम् ॥"

इति धन्वन्तरिः ॥

टीका० — यथाक्रमं पादाम्बु घोलं तक्राख्यम्, अर्धाम्बु उदश्वित्, निर्जलं तु मथिताख्यम् । 'तञ्चे सङ्कोचने' । 'स्फायितञ्चि—' (उ० २. १३) इत्यादिना रक् । न्यङ्क्वादिकुत्वम् । तक्रम् । बहूदकत्वाद् उदकेन श्वयति वर्धत इत्युदश्वित् । 'टुओश्वि गतिवृद्ध्योः' । क्विप् । तुक् च । 'उदकस्योदः संज्ञायाम्' (६. ३. ५७) इत्युदकस्योदभावः । 'उदश्वितोऽन्यतरस्याम्' (४. २. १९) इति निपातनान्न सम्प्रसारणम् । 'मथे विलोडने' । क्तः । मथितम् ॥

**मण्डं दधिभवं मस्तु**

क्षीर० — दध्नो मण्डं द्रवो भागः । मस्यति परिणमते मस्तु ॥

टीका० — दध्नो मण्डे मस्तु । 'मस परि(माणे?णामे)' । सेतुवत् तुन् ॥

**पीयूषोऽभिनवं पयः ।**

क्षीर० — पीयते पीयूषः । 'नवप्रसूतगवीक्षीरं क्वथितं सत् पीयूषमिति सज्जनः ॥

टीका० — गोप्रसवानन्तरे सप्तरात्रपर्यन्ते दुग्धे(पेष्टम[1] । 'अथ पेष्टषपिष्टनवं?) सप्तदिनावधी'ति शब्दार्णवः ॥

**अशनाया बुभुक्षा क्षुद्**

क्षीर० — अशनेच्छा अशनाया । 'अशनायोदन्य—' (७. ४. ३४) इति साधुः । भोक्तुमिच्छा बुभुक्षा । 'क्षुध बुभुक्षायाम्' । क्विपि क्षुत् । रुचिश्च ॥

टीका० — अशनायात्रयं बुभुक्षायाम् । अशनशब्दादिच्छायां क्यच् । 'अ प्रत्ययात्' (३. ३. १०२) इत्यः । 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' (७. ४. ३४) इत्यात्वम् । अशनाया । भुजेः सन् । बुभुक्षा । क्षुधेः क्विप् । क्षुत् ॥

**ग्रासस्तु कवलार्थकः ॥ ५४ ॥**

१. 'श्वि गतौ । स्फा' ग. पाठः. २. 'न व' क. ग. पाठः. ३. 'वान्त', ४. 'षष्टम् । अथ पेपष्ठपि' क. ख. पाठः. ५. 'पृ' क. ख. पाठः.

क्षीर० — ग्रस्यते ग्रासः । के तालुनि वलते कवलः ॥

टीका० — ग्रासद्वयं कबले । 'ग्रसु ग्लसु अदने' । कर्मणि घञ् । ग्रासः । केन तोयेन वलनमस्येति कवलः ॥

सपीतिः स्त्री तुल्यपानं

क्षीर० — सहपानं सपीतिः ॥

टीका० — तुल्यपाने सहपाने सपीतिः[1] । समाना पीतिः, स्त्रीलिङ्गा । 'समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु' (६. ३. ८४) इति सभावः । छान्दसा अपि लोके प्रयुज्यन्ते, 'दिवसावसानताम्यत्तामरसमधुसपीतिप्रीते धुतपक्षेराजिवीजितरजसि राजहंसयूथे' इति बाणप्रयोगात् । स्त्रिया योषिता सह पीतिरिति नादरणीयम् ॥

सग्धिः[3] स्त्री सहभोजनम् ।

क्षीर० — सहादनं[4] सग्धिः । क्तिन् । 'बहुलं छन्दसि' (२. ४. ३९) इति घस्लृ । 'घसिभसोर्हलि च' (६. ४. १००) इत्युपधालोपः । 'झलो झलि' (८. २. २६) इति सलोपः । 'झषस्तथोर्धोऽधः' (८. २. ४०) । 'झलां जश झशि' (८. ४. ५३) ॥

टीका० — सहभोजने सग्धिः । समाना ग्धिः सग्धिः । अदेः क्तिन् । 'बहुलं छन्दसि' (२. ४. ३९) इति घस्लादेशः । 'घसिभसोर्हलि च' (६. ४. १००) इत्युपधालोपः । 'झलो झलि' (९. २. २६) इति सकारलोपः । ततस्तकारस्य धत्वं, जश्त्वं च । पूर्ववत् सभव : ॥

उदन्या तु पिपासा तृट् तर्षः

क्षीर० — उदकेच्छोदन्या । 'अशनायोदन्य—' (७. ४. ३४) इति साधुः । तर्षणं तृट् तर्षश्च । 'ञितृषा पिपासायाम्' । तृष्णा नानार्थे ॥

---

1. 'तिः स्त्री' क. ङ. पाठः. 2. 'स' क. पाठः. 3. 'जग्धिः स', 4. 'ने क्तिन्' ख. पाठः.

टीका० — उदन्याचतुष्कं पिपासायाम्। उदकशब्दात् क्यच्। 'अशनाय—' (७. ४. ३४) इत्यादिनोदन्भावः। उदन्या। पातुमिच्छा पिपासा। 'ञितृषा पिपासायाम्'। भावे क्विप्'। तृट् षान्ता। घञि तर्षः॥

**जग्धिस्तु भोजनम्॥ ५५॥**

**जेमनं लेपं आहारो निघसो न्याद इत्यपि।**

क्षीर० — अदनं जग्धिः। 'अदो जग्धिर्ल्यप् ति किति' (२. ४. ३६)। जमेर्जेमनमाहुः। जमनं जवनं वा। यद् भुशः— 'जमनं भोजनं क्वचित्'। न्यदनं निघसः। 'नौ ण च' (३. ३. ६०) इत्यप्। 'घञपोश्च' (२. ४. ३८) इति घस्लादेशः। णे न्यादः। प्रत्यवसानमभ्यवहारश्च॥

टीका० — जग्धिसप्तकं भोजने। अदेः क्तिन्जग्ध्यादेशौ। जग्धिः। भुजेर्ल्युटि भोजनम्। 'चमु छमु जमु झमु अदने' इत्यत्र जिमिरप्यूहनीयः। जेमनम्। लिपेरच्। लेपः। हरतेर्घञि आहारः। 'नौ ण च' (३. ३. ६०) इति चकाराद् निपूर्वाददेरप्। 'घञपोश्च' (२. ४. ३८) इति घस्लादेशः। निघसः। 'नौ ण चे'त्यनेनैव णप्रत्ययेन अदेर्न्यादः॥

**सौहित्यं तर्पणं तृप्तिः**

क्षीर० — सुहितस्य भावः सौहित्यम्॥

टीका० — सौहित्यत्रयं तृप्तौ। सुहितस्तृप्तः। तद्भावः सौहित्यम्। तृपेर्ल्युट्। तर्पणम्। क्तिनि तृप्तिः॥

**फेला भुक्तसमुज्झितम्॥ ५६॥**

क्षीर० — फलति विशीर्यते फेला। 'फेलृ चलने' अस्माद्वा॥

टीका० — पूर्वं भुक्तं पश्चात् समुज्झितं भुक्तसमुज्झितम्। तत्र फेला॥

**कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्।**

क्षीर० — काम्यते कामम्। पर्याप्तिः पर्याप्तम्। इष्यते इष्टम्। ईप्सितमनतिक्रम्य यथेप्सितम्। प्रायः क्रियाविशेषणान्येतानि। अत

---

१. 'ह्' क. ख. पाठः. २. 'गर्गः— ज' ख. पाठः. ३. 'प्। णप्रत्ययश्च। अप्। घ' घ. पाठः.

एव अन्ययत्वे[1] एषां श्रीभोजो भ्रान्तः । यच्छाश्वतः — 'कामे निकामे कामाख्या' ॥

टीका० — कामषट्कं यथेष्टे । 'कमेर्णिङ्' (३. १. ३०) इति णिङन्तात् कमेरच् । कामं प्रकामं निकामं च । क्रियाविशेषणतया चैते क्लीबलिङ्गाः । आप्नोतेः क्तः । पर्याप्तम् । 'इषु इच्छायाम्' । क्तः । इष्टम् । ईप्सितस्यानतिक्रमो यथेप्सितम् । क्लीबाव्ययम् ॥

**गोपे गोपालगोसङ्ख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥**

**क्षीर० — गाः पाति गोपः[2] । गाः पालयति गोपालः । गाः सङ्ख्याति गोसङ्ख्यः । गां दोग्धि गोधुक् । आ[3] अभित ईरयत्याभीरः । वल्लति गाः वल्लवः । वल्लिः सौत्रो वा ॥**

टीका० — गोपषट्कं गोपे । गां पातीति गोपः । 'आतोऽनुपसर्गे कः' (३. २. ३) । कर्मण्यणि गोपालः । गां सञ्चष्टे गोसङ्ख्यः । 'समि ख्यः' (३. २. ७) इति कः । 'चक्षिङः ख्याञ्' (२. ४. ५४) इति ख्याञादेशः । गां दोग्धीति क्विप् । गोधुक्, हान्तः । आ भियं राति समन्ताद् भीतिं ददात्याभीरः, कप्रत्ययान्तः । गोमहिष्यादिकं[4] वलमानाः संवृण्वन्तो वान्ति गच्छन्तीति वल्लवाः । 'बद स्थैर्ये' । क्विप् । बत् स्थैर्यम् । लुनातेरच् । लवः । बदो लवा बल्लवा इति सनातनः ॥

**गोमहिष्यादिकं पादबन्धनं**

**क्षीर० — पादे बन्धनमस्य पादबन्धनम् । आदिशब्दात्[5] खरादि । जीववद् धनमित्येके पेठुः ॥**

टीका० — गोमहिष्यादिकं धनं यादवाख्यम् । यदूनामिदं यादवम् । ते ह्येवंधना अभवन्[6] ।

"क्षोभमाशु हृदयं नयदूनां रागवृत्तिमकरोन्न यदूनाम् ।"
(स० १०. श्लो० ९०)

इति माघः ॥

---

१. 'त्वेन श्रुतेरेषां', २. 'पः । पा' ग. ङ. पाठः. ३. 'गा' क. पाठः. ४. 'कं धनं' ख. पाठः. ५. 'त् स्कान्धिकादिबन्धन' क. ग. ङ. पाठः. ६. 'न् ॥ गर्वा' ठ. पाठः.

द्वौ गवीश्वरे।

गोमान् गोमी

क्षीर० — गावः सन्त्यस्य गोमी। 'ज्योत्स्नातमिस्रा —' (५. २. ११४) इत्यादिना साधुः॥

टीका० — गवीश्वरत्रयं गोस्वामिनि। गोमान् मत्वन्तः। 'ज्योत्स्नातमिस्रा —' (५. २. ११४) इत्यादौ गोमी निपातितः॥

गोकुलं तु गोधनं स्याद् गवां व्रजः॥ ५८॥

क्षीर० — व्रजत्यस्मिन् व्रजो गोसम्बन्धी समूहः। 'गोचरसञ्चर —' (३. ३. ११९) इति साधुः। धनं च॥

टीका० — गवां व्रजे संहतौ गोकुलद्वयम्। धनशब्द उक्तः समूहवाची॥

त्रिष्वाशितङ्गवीनं तद् गावो यत्राशिताः पुरा।

क्षीर० — आशिता भोजिता गावो यत्र आशितङ्गवीनम्। 'अषष्ठ्याशितङ्गु —' (५. ४. ७) इति स्वार्थे खः। 'आशितङ्गवीनमि'ति [illegible] अपः। यत्रान्[illegible] — 'गावो यत्रे[illegible] पु[illegible]ति॥

उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः॥ ५९॥

अनड्वान् सौरभेयो गौः

क्षीर० — उक्षत्युक्षा। भन्दते भद्रः। बलिं वृणुते बलीवर्दः। ऋषति गच्छति ऋषभः। अनो वहत्यनड्वान्। वहेः क्विप्, अनसो डश्च। सुरभेरपत्यं सौरभेयः। गच्छति गौः। अवान्तरभेदोऽस्य न विवक्षितः। शकरशाकरौ बाडवेयः शाङ्करश्च॥

१. 'जे', २. 'धुः। गोध' क. ग. पाठः. ३. 'क्तः। कुरुंस' ठ. पाठः.

टीका० — उक्षनवकं बलीवर्दे । 'श्वन्नुक्षन्' इत्यादिसूत्रे उक्षा नान्तो निपातितः । भद्रवृषावुक्तौ । 'ऋषिवृषिभ्यां कित्' (उ० ३. १२३) इत्यभचि ऋषभवृषभौ । 'अनसि वहेः क्विप्, अनसो ड श्चे'ति अनउपपदाद् वहतेः क्विप्, सकारस्य च डः । सम्प्रसारणम् । 'सावनडुहः' (७. १. ८२) इति नुम् । 'चतुरनडुहोरामुदात्तः' (७. १. ९८) इत्यामागमः । अनड्वान् । 'इतश्चानिञः' (४. १. १२२) इति ढकि सौरभेयः । गच्छतीति गौः । 'गमेर्डोः' (उ० २. ७०) इति डोप्रत्ययः । तत्रानडुहादित्रयं स्त्रियां च । 'अनडुहः स्त्रियां वेति वक्तव्यम्' (वा० ७. १.९८) इत्याम्विकल्पेन अनड्वाही अनडुही च । गौरादिपाठान्ङीष् । 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप् । सौरभेयी । गौरित्यत्र तु विशेषणे परं विशेषो न रूपे ॥

**उक्ष्णां संहतिरौक्षकम् ।**

क्षीर० — 'गोत्रोक्षोष्ट्र—' (४. २. ३९) इति वुञ् ॥

टीका० — बलीवर्दानां संहतौ औक्षकम् । राजकवद् वुञ् ॥

**गव्या गोत्रा गवां**

क्षीर० — संहतिरित्येव । 'खलगोरथात्' (४. २. ५०) इति यः । 'इनित्रकट्यचश्च' (४. २. ५१) इति त्रः ॥

टीका० — गवां संहतौ गव्याद्वयम् । 'खलगोरथात्' (४. २. ५०) इति यत् । गव्या । 'इनित्रकट्यचश्च' (४. २. ५१) इति त्रः । गोत्रा ॥

**वत्सधेन्वोर्वात्सकधैनुकम् ॥ ६० ॥**

क्षीर० — वत्सानां समूहो वात्सकम् । 'गोत्रोक्ष—' (४. २. ३९) इति वुञ् । धेनूनां समूहो धैनुकम् । 'अचित्तहस्तिधेनोष्ठक्' (४. २. ४७) ॥

टीका० — यथाक्रमं वत्ससंहतौ वात्सकम् । राजकवद् वुञ् । धेनुसंहतौ[1] धैनुकम् । हास्तिकवत् ठक् । 'इसुसुक्तान्तात् कः' (७. ३. ५१) इति ठस्य कः ॥

---

१. 'ति कः' क. ख. ग. घ. पाठः.

**उक्षा महान् महोक्षः स्यात्**

क्षीर० — महांश्चासावुक्षा च महोक्षः । 'अचतुर —' (५. ४. ७७) इत्यादिना साधुः । एवं वृद्धोक्षजातोक्षौ । मालात्र —

"महोक्षः स्यादुक्षतरः स्कान्धिकः स्कन्धवाहकः ।
षोडन् षड्दशनोऽथ स्यात् कूटो भग्नविषाणकः" ॥

टीका० — अतिमहति बलीवर्दे महोक्षः । 'अचतुर —' (५. ४. ७७) इत्यादिना समासान्तोऽच् ॥

**वृद्धोक्षस्तु जरद्गवः ।**

क्षीर० — जरंश्चासौ गौश्च जरद्गवः । 'गोरतद्धितलुकि' (५. ४. ९२) इति टच् ॥

टीका० — वृद्धोक्षद्वयं वृद्धवृषे । पूर्ववत् समासान्ताचि वृद्धोक्षः । 'गोरतद्धितलुकि' (५. ४. ९२) इति समासान्तोऽच् । जरद्गवः ॥

**उत्पन्न उक्षा जातोक्षः**

क्षीर० — प्रसूतमात्रो जातोक्षः ॥

टीका० — उत्पन्न उक्षा सम्प्राप्तबलीवर्दभावः, तत्र जातोक्षः । अचतुरादिना समासान्तोऽच् ॥

**सद्यो जातस्तु तर्णकः ॥ ६१ ॥**

क्षीर० — तृणोत्पत्ति केवलं तर्णकः ॥

**शकृत्करिस्तु वत्सः स्यात्**

क्षीर० — शकृत् करोति शकृत्करिः । स्तम्बशकृतोर्व्रीहिवत्सयो-[1]रुपसङ्ख्यानाद् इन् । वसति वत्सः ॥

---

१. 'तोरिन् । व्रीहि' क. ख. ग. घ. पाठः.

**दम्यवत्सतरौ समौ ॥**

क्षीर० — दम.र्हो दम्यः । वत्सत्वं तनुत्वमस्य वत्सतरः । 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' (५. ३. ९१) इति ष्टरच् । तनुत्वं द्वितीयवयःप्राप्तिः ॥

टीका० — हृष्ट.ल्ये दाम्नोडेति ख्याते दम्यद्वयम् । 'पोरदुपधात्' (३. १. ९८) इति यति दम्यः । 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' (५. ३. ९१) इति ष्टरचि वत्सतरः ॥

**आर्षभ्यः षण्डतायोग्यः**

क्षीर० — अण्डाकर्षणोचितः । षण्ड इत्येके । अत एव ऋषभस्य प्रकृतिरार्षभ्यः । 'ऋषभोपानहोर्ञ्यः' (५. १. १४) ॥

टीका० — षण्डतायोग्यो भविष्यत्षण्डो वत्स आर्षभ्याख्यः । 'ऋषभोपानहोर्ञ्यः' (५. १. १४) ॥

**षण्डो गोपतिरिट्चरः ॥ ६२ ॥**

क्षीर० — सन्यते उत्सृज्यते षण्डः । एषणमिट्, इषा चरति इट्चरः स्वेच्छाचारी । इत्वर इत्येके पटुः ॥

टीका० — षण्डत्रयं षण्डे । 'षणु दाने' । 'अमन्ताड्डः'(उ० १. ११०) । षण्डः । '(षा/सा)ण्डो[1]त्रिवत्सः सोमक्रयण' इति वेदपाठात् साण्डो गोपतिरि[2]ट्चर इति युज्यते पाठ इति दे[3]वेश्वरः । 'गोपतिनपुंसकयोः शण्डः' इति नामानुशासनम् । एषणम् इट्, तया चरतीत्यच् । इट्चरः ॥

**स्कन्धदेशस्त्वस्य वहः**

क्षीर० — वहन्त्यनेन वहः । 'गोचर—' (३. ३. ११९) इति साधुः ॥

१. 'ण्डं त्रिवत्स सो' छ. ज. पाठः. २. 'ति उच्यते', ३. 'ति वारणसेवा दे' क. ख. ग. घ. ङ. च. पाठः.

टीका० — स्कन्धप्रदेशे वहः । 'गोचरसञ्चर—' (३. ३. ११९) इत्यादिना घः ॥

सास्ना तु गलकम्बलः ।

क्षीर० — सस्ति स्वपिति वा [illegible]मानत्वात्, सीयमानत्वात् सीयते वा सास्ना । 'षस स्वप्ने', 'षोऽन्तकर्मणि' ॥

टीका० — सास्नाद्वयं गलकम्बले । 'रास्नासास्ना—' (उ० ३. १९) इत्यादिना सास्ना द्विदन्त्यसा निपातिता ॥

स्यान्नस्तितस्तु नस्योतः

क्षीर० — नासिकाया नस्तः । 'नस् नासिकाया यत्तसक्षुद्रेषु' (वा० ६. १. ६३) इति नस् । नस्तः क्रियते स्म नस्तितः । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति णिजन्तात्क्तः । नासायां कृतच्छिद्रो गौरित्यर्थः । नासिकायां भवं नस्यं नासाछिद्रे रन्ध्रे रज्ज्वादिना ओतो गुम्फितो नस्योतः ॥

टीका० — नस्तितद्वयं नासारज्जुयुक्ते बलीवर्दे । नस्ता नासिकायां निक्षेपः । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति णिचि कर्मणि क्तः । नस्तितः । नस्यया ऊतः स्यूतो नस्योतः ॥

प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥

क्षीर० — पञ्चमं षष्ठं वा वर्षं वहति प्रष्ठवाड् युवा गौः । 'वहश्च' (३. २. ६४) इति ण्विः । युगस्य स्कन्धकाष्ठस्य पार्श्वं गच्छति युगपार्श्वगः । हल्वोढेत्यर्थः । दमनाय योजित इत्येके, लक्षणेन विलक्षणेनापि । ग्रन्थकृता वहंलिहाद्या नोक्ताः ॥

टीका० — शिक्षार्थं युगवाहिद्वयपार्श्वे भ्राम्यमाणे दम्ये प्रष्ठवाड्द्वयम् । प्रष्ठमग्रगामिनं वहतीति 'वहश्च' (३. २. ६४) इति ण्विः । प्रष्ठवाट् ॥

१. 'प्रा' क. पाठः. २. 'यते' क. ग. घ. ङ. पाठः.

युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः।

क्षीर०—युगं प्रासङ्गं शकटं च वहति। 'तद् वहति रथयुगप्रासङ्गम्' (४. ४. ७६) इति यत्। 'शकटादण्' (४. ४. ८०)॥

टीका०—युगप्रासङ्गशकटानां वोढृषु युग्यत्रयम्। जूमाळेति ख्यातो युगः। दमनार्थमदम्यानां स्कन्धे यद् वक्रं काष्ठमासज्यते, स प्रासङ्गः। 'तद् वहति रथयुगप्रासङ्गम्' (४. ४. ७६) इति यत्। 'शकटादण्' (४. ४. ८०) इत्यण्। शाकटः॥

खनन्ति तेन तद् वोढास्येदं हालिकसैरिकौ॥६४॥

क्षीर०—हलेन खनति। 'तेन दीव्यति—' (४. ४. २) इति ठक्। हलं वहति हलस्येदं चेति 'हलसीराट्ठक्' (४. ४. ८१, ४. ३. १२४)॥

टीका०—तेन खनतीत्याद्यर्थत्रये हालिकसैरिकौ। अयमर्थः—लाङ्गलेन खनतः लाङ्गलं वहतः लाङ्गलस्येश्वरस्य च, तथा सीरेण खनतः सीरं वहतः सीरस्येश्वरस्य च यथाक्रमं नामद्वयम्। तत्र तेन खनतीत्यर्थे 'तेन दीव्यति खनति जयति जितम्' (४. ४. २) इति ठक्, तद्वहत्यर्थे तस्येदमित्यर्थे च॥

धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः।

क्षीर०—धुरं वहति। 'धुरो यड्ढकौ' (४. ४. ७७)। 'खः सर्वधुरात्' (४. ४. ७८) इति योगविभागात् खः। धुरं धारयति धुरंधरः। कथञ्चित् संज्ञात्वात् खच्। धूर्धरोऽप्युक्षा स्यात्॥

टीका०—धूर्वहपञ्चकं सामान्येन यो धुरं वहति तत्र। वहतेः पचाद्यच्। धूर्वहः। 'धुरो यड्ढकौ' (४. ४. ७७) इति यत्। 'न भकुर्छुराम्' (८. २. ७९) इति प्रतिषेधाद् 'हलि च' (८. २. ७७) इति न दीर्घः। धुर्यः। खः सर्वधुरात्' (४. ४. ७८) इत्यत्र ख इति योगविभागात् खः। धुरीणः। 'वाचंयमपुरन्दरौ च' (६. ३. ६९) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद् धुरंधर इति न्यासकारः। पृषोदरादित्वाद् धूर्धरोऽपीत्यन्यः॥

**उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥**

क्षीर० — 'एकधुराल्लुक् च' (४. ४. ७९) इति खः लुक् च। 'ऋक्पूरब्धूः —' (५. ४. ७४) इत्यच् समासान्तः ॥

टीका० — एकस्यैव रथस्य लाङ्गलस्य वा यो धुरं वहति तत्र एकधुरीणत्रिकम्। एका चासौ धूश्चेति एकधुरा। 'ऋक्पूरब्धूःपथामानक्षे' (५. ४. ७४) इति समासान्तोकारप्रत्ययः। स्त्रीत्वाट्टाप्। तां वहतीत्यर्थे 'एकधुराल्लुक् च' (४. ४. ७९) इति खः लुक् च। लुक्पक्षे 'लुक् तद्धितलुकि' (१. २. ४९) इति स्त्रीप्रत्ययनिवृत्तिः। वहेः पचाद्यच्। एकधुरावहः ॥

**स तु सर्वधुरीणो[2] यो भद्रः सर्वधुरावहः।**

क्षीर० — 'खः सर्वधुरात्' (४. ४. ७८) ॥

टीका० — यः सर्वधुरां रथसम्बन्धिनीं लाङ्गलसम्बन्धिनीं च वहति स सर्वधुरीणः। 'खः सर्वधुरात्' (४. ४. ७८) इति खः ॥

**माहेयी सौरभेयी गौरुस्रा माहा[3] च शृङ्गिणी ॥ ६६ ॥**

**अर्जुन्यघ्न्या रोहिणी**

— मह्यते पूज्यते माहा, तस्या अपत्यं माहेयी। सुरभ्या अपत्यं सौरभेयी। वसति क्षीरमस्यामुस्रा। शृङ्गिण्यादयः सामान्यं हित्वा विशेषे वर्तन्ते। अर्जुनी हि शुक्लगवी। न हन्त्यघ्न्या। 'अघ्न्यादयश्च' (उ० ४. ११३) इति साधुः। रोहिणी शबला। अनड्वाही गौरनडुही च। प्रशस्ता गौर्गोमतल्लिका। सुरभिर्नामार्थे ॥

टीका० — माहेयीनवकं स्त्रीगवि। मह्या भूमेरपत्यं माहेयी। 'स्त्रीभ्यो ढक्' (४. १. १२०)। एवं सौरभेयी। गोशब्द उक्तः। किरणे उस्र उक्तः।

---

१. 'न्तोऽच्। स्त्री' क. ख. घ. च. छ. ज. झ. ञ. ट ठ., 'न्तः अः। स्त्री' ड. पाठः. २. 'णः स्याद् यो हि स' ख. पाठः. ३. 'ता' ग. पाठः. ४. 'का॥ स्या' क. पाठः.

ततष्टाप्। माहारोहिणीशब्दावुक्तौ। शृङ्गयोगात् शृङ्गिणी। अर्जुन उक्तः। स्त्रियामर्जुनी। न हन्यत इत्यघ्न्या। 'अघ्न्यादयश्च' (उ० ४. ११३) इति यक्। टाप्॥

**स्यादुत्तमा गोषु नैचिकी।**

क्षीर०—नीचैश्चरति नैचिकी। ठक्। 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' (वा० ६. ४. १४४)। इतो गवाधिकारः प्रागुष्ट्रात्॥

टीका०—उत्तमायां गवि नैचिकी। 'निचिकं तु शिरोदेशः' इति रभसः। 'अणुप्रकरणे ज्योत्स्नादिभ्य उपसङ्ख्यानम्' (वा० ५. २. १०३) इति ज्योत्स्नाद्याणि नैचिकी। 'गौरुत्तमा तु निचिकी'ति नाममालायां संज्ञापूर्वकत्वान्न वृद्धिः॥

**वर्णादिभेदात् संज्ञाः स्युः शबलीधवलादयः॥ ६७॥**

क्षीर०—शबलीति 'अन्यतो ङीप्' (४. १. ४०)। धवलोऽन्तोदात्त इत्यनुदात्तत्वाभावाद् ङीप् नास्ति। आदिप्रमाणादिशब्दात् खण्डामुण्डाद्याः। द्वितीयात् कृष्णाकपिलाद्याः॥

टीका०—वर्णादीत्यादिना प्रमाणादि। तत्र शबलीधवलादयो वर्णात् [illegible] संज्ञाः। वामनिकादयः प्रमाणभेदात्। [illegible] [illegible] शबली व्युत्पादिता॥

**द्विहायनी द्विवर्षा गौः**

क्षीर०—द्वौ हायनौ वयःप्रमाणमस्या इति आर्हीयस्य ठञः 'अध्यर्धपूर्व—' (५. १. २८) इत्यादिना लुक्। 'दामहायनान्ताच्च' (४. १. २७) इत्यत्र 'हायनाद् वयसी'ति ङीप्। द्वे वर्षे प्रमाणमस्या द्विवर्षा। 'वर्षाल्लुक् च' (५. १. ८८), 'चित्तवति नित्यम्' (५. १. ८९)।

---

१. 'द्यादा' क. पाठः. २. 'ष्ड' ख. पाठः.

'अपरिमाणबिस्ताचित—' (४. १. २२) इति ङीब् नास्ति, कालः सङ्ख्या च न परिमाणमिति ॥

टीका० — द्विसंवत्सरायां गवि द्विहायनीद्वयम्। 'दामहायनान्ताच्च' (४. १. २७) इति ङीपि द्विहायनी। द्वे वर्षे भूता द्वे वर्षे स्वसत्तया व्याप्तवती द्विवर्षा। 'तमधीष्टो भृतो भूतो भावी' (५. १. ८०) इति ठञ्। 'चित्तवति नित्यम्' (५. १. ८९) इति लुक्॥

एकाब्दा त्वेकहायनी।
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥

क्षीर० — 'त्रिचतुर्भ्यां हायनाद् वयसि' (वा० ४. १. २७) इति णत्वम् ॥

टीका० — एकवर्षायां गवि एकाब्दाद्वयम्। पूर्ववन्ङीप्॥

वशा बन्ध्या

क्षीर० — वष्टि कामयते एवं वशा। बध्नाति (प्रेस्तौति?) बन्ध्या, बन्धनीया वा ॥

टीका० — वशाद्वयं वन्ध्यायाम्। वशोक्ता। अघ्न्यादित्वाद् यक्, उपधालोपाभावश्च। वन्ध्या ॥

अवतोका तु स्रवद्गर्भा

क्षीर० — अवस्रुतं तोकमपत्यमस्याः अवतोका। 'अवस्रवन्ती मृतवत्सा स्रवद्गर्भे'ति माला ॥

टीका० — यस्याः दैववशाद् गर्भः स्रवति सा अवतोका। अवगलितं तोकमपत्यमस्या इति बहुव्रीहिः ॥

अथ सन्धिनी।

१. 'वं शब्दाद् ब' क. ग. घ. ङ. पाठः. २. 'प्राप्नोति' ख. पाठः. ३. 'अवस्रुवती मृ' क. ग. ङ. पाठः.

**आक्रान्ता वृषभेण**

**क्षीर०**—सन्धानं सन्धा गर्भग्रहणमस्त्यस्याः सन्धिनी। 'अदुग्धा दोहकाले तु सन्धिनी' इति कात्यः।

"सन्धिन्यकुलिदुग्धा गौर्वृषाक्रान्ता च सन्धिनी"

इति शाश्वतः॥

**टीका०**—ऋषभेण या ऋतुमती आक्रान्ता सा सन्धिनी। गर्भः सन्धीयतेऽस्यामिति सन्धिनी। दधातेर्ल्युट्। पृषोदरादित्वान्मध्यस्याकारस्य इकारः॥

**अथ वेहद्गर्भोपघातिनी॥ ६९॥**

**क्षीर०**—विहन्ति गर्भं वेहत्, 'वेहृ प्रयत्ने' अस्माद्वा। 'वेहद् वृषभोपगते'ति भागुरिः॥

**टीका०**—अनृतावपि वृषोपगमनवशाद् यस्या गर्भपातो भवति तत्र वेहद्द्वयम्। 'संश्चत्तृपद्वेहत्' (उ० २. ८६) इति वहेरुपपूर्वस्त्वातिप्रत्ययाभ्यां वेहन्निपातिता। वृषोपगमननिमित्तो गर्भघातोऽस्यामस्तीति गर्भोपघातिनी॥

**काल्योपसर्या प्रजने**

**क्षीर०**—प्रजने गर्भग्रहणे प्राप्तकाला वृषेणोपसरणीयोपसर्या। 'उपसर्या काल्या प्रजने' (३. १. १०४) इति साधुः।

**टीका०**—प्रजने प्रथमगर्भग्रहणे काल्या प्राप्तकाला ऋतुमती या सा उपसर्या। कालः प्राप्तोऽस्या इति 'कालाद् यत्' (५. १. १०७) इति यत्। काल्या। उपात् सर्तेः 'उपसर्या काल्या प्रजने' (३. १. १०४) इति यत्॥

**पष्ठौही बालगर्भिणी।**

---

१. 'तु' क. पाठः. २. 'त गर्भोपघातिनी। वे' ख. पाठः. ३. 'दि' क. ख. पाठः.

क्षीर० — पष्ठं वहति पष्ठौही । 'वहश्च' (३. २. ६४) इति ण्विः। 'वाहः' (४. १. ६१) इति ङीप्। 'वाह ऊठ्' (६. ४. १३२)। 'एत्येधत्यूठ्सु' (६. १. ८९) इति वृद्धिः । 'पष्ठौही कालगर्भिणी' इति सभ्याः। 'असिक्नी बालगर्भिणी'ति भागुरिः। 'मलिनी बालगर्भिणी'ति माला ॥

टीका० — या बाला प्रथमगर्भिणी च सा पष्ठौही । 'वाहः' (४. १. ६१) इति ङीप्। 'वाह ऊठ्' (६. ४. १३२) इत्यूठ्। 'एत्येधत्यूठ्सु' (६. १. ८९) इति वृद्धिः ॥

स्यादचण्डी तु सुकरा

क्षीर० — अचण्ड्यकोपनेत्यर्थः । बह्वादित्वाद् वा ङीष् । सुखेन क्रियते सुकरा । 'सुकुचे'त्यागमः ॥

टीका० — सुशीलायां गवि अचण्डीद्वयम् ॥

बहुसूतिः परेष्टुका ॥ ७० ॥

क्षीर० — परमिच्छति परेष्टुः । सकृत् प्रसूता तु गृष्टिः ॥

टीका० — बहुसूतिः भूरिप्रसवा परेष्टुकाख्या ॥

चिरसूता बष्कयिणी

क्षीर० — बस्कं(य्यै?)तेऽतिक्रामति । बस्कयश्चिरकालः औणादिकात् षत्वम् । सोऽस्त्यस्या बष्कयिणी ॥

टीका० — चिरकालप्रसूतायां गवि बष्कयिणी । मूर्धन्यषः । 'बष्कयस्त्वेकहायनो वत्स' इति शाकटायनः । तद्योगादिनिङीपौ ॥

धेनुः स्यान्नवसूतिका ।

क्षीर० — धयन्त्येनां धेनुः ॥

---

१. 'पङ्क्ती बा' ख., 'सिक्षी बा' घ. पाठः. २, ३. 'षु' ख. घ. ङ. पाठः. ४. 'ष्कयते' क. ग. घ. ङ. पाठः. ५. 'र' क. पाठः. ६. 'ब.' ग. पाठः. ७. 'से' ख. पाठः.

टीका० — प्रत्यग्रप्रसूतायां गवि धेनुः ॥

**सुव्रता सुखसन्दोह्या**

क्षीर० — सुशीलेत्यर्थः ॥

टीका० — सन्दानमन्तरेण या सुखेन दुह्यते सा सुव्रता ॥

**पीनोध्नी पीवरस्तनी ॥ ७१ ॥**

क्षीर० — पीनमूधोऽस्याः पीनोध्नी । 'ऊधसोऽनङ्' (५. ४. १३१)। 'बहुव्रीहेरूधसो ङीष्' (४. १. २५)। पीवरस्तनीति । 'स्वाङ्गाच्चोपसर्जनात् —' (४. १. ५४) इति ङीष् ॥

टीका० — बृहदूधःप्रदेशायां गवि पीनोध्नीद्वयम् । पीनमूधोऽस्याः पीनोध्नी । 'ऊधसोऽनङ्' (५. ४. १३१) इत्यनङ् । 'बहुव्रीहेरूधसो ङीष्' (४. १. २५)। 'स्वाङ्गाच्चोपसर्जनात् —' (४. १. ५४) इति ङीषि पीवरस्तनी ॥

**द्रोणक्षीरा द्रोणदुघा**

क्षीर० — द्रोणं दोग्धि द्रोणदुघा । 'दुहः कब् घश्च' (३. २. ७०) ॥

टीका० — द्रोणपरिमितक्षीरदायिन्यां गवि द्रोणक्षीराद्वयम् । द्रोणदुग्धं प्रस्रवतीति द्रोणदुघा । 'दुहः कब् घश्च' (३. २. ७०) इति कब् घश्चान्तादेशः ॥

**धेनुष्या बन्धके स्थिता ।**

क्षीर० — 'संज्ञायां धेनुष्या' (४. ४. ८९) इति साधुः । आ ऋणशुद्धेर्या बन्धके स्थापिता सा पीतदुग्धाख्या ॥

१. 'यां धेनुका ॥' क. ख. ङ. ठ. पाठः. २. 'व्रता सु' ख पाठः. ३. 'त् —ङी' क. ग. घ. ङ. पाठः. ४. 'स्यां' ख., 'स्याम् इति पी' ग. पाठः. ५. 'घकारश्चा' ग. पाठः. ६. 'न्धस्था' ख., 'न्धे स्था' ग. घ. ङ. पाठः.

टीका० — गौर्महिषी वा दुग्धबन्धके स्थिता धेनुष्या, मूर्धन्यषा । 'संज्ञायां धेनुष्या' (४. ४. ८९) इति यत्पुगागमौ ॥

**समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥**

क्षीर० — 'समां समां विजायते' (५. २. १२) इति खः । समां समामिति वीप्सा । विजायत इति प्रत्ययार्थः । गर्भधारणेन समावाप्य[1] इति 'कालाध्वनोः —' (२. ३. ५) इति द्वितीया । समां समां विजायते समांसमीना गौः । 'पूर्वपदे सुपोऽलुग् वक्तव्यः' (वा० ५. २. १२) ॥

टीका० — वर्षे वर्षे प्रसवि[2]न्यां[3] समांसमीना । समायां समायां विजायत इत्यर्थे 'समां समां विजायते' (५. २. १२) इति खः । पूर्वपदे यलोपः । परिशिष्टस्य चालुक् ॥

**ऊधस्तु क्लीबमापीनं**

क्षीर० — उनत्त्यूधः । आप्यायते आपीनम् । 'प्यायः पी[4]' (६. १. २८) अनुपसर्गस्य । 'सोपसर्गान्न' (वा० ६. १. २८) । आङ्पूर्वस्यान्धूधसोर्वक्तव्यात्[5] सोपसर्गस्य । ओदित्त्वान्निष्ठानत्वम् । हुम्भारावो गवां ध्वनिः ॥

टीका० — गोस्तने ऊधोद्वयम् । ऊधः सान्तं क्लीबं दीर्घादि च । आङ्पूर्वात्[6] प्यायेः क्तः । 'आङ्पूर्वस्यान्धूधसोः' (वा० ६. १. २८) इति वक्तव्येन पीभावः । 'ओदितश्च' (८. २. ४५) इति नत्वम् । आपीनम् । अरुणस्तु पुंसि पठति ॥

**समौ शिवककीलकौ ।**

क्षीर० — शिवात् कन्, शिनोति वा शिवकः । कीलयते बध्यतेऽस्मिन् कीलकः ॥

टीका० — गोष्ठे गवां बन्धनार्थं काष्ठे शिवकद्वयम् । शिव उक्तः ।

१. 'ने' ज. पाठः. २. 'खः ॥' क. ग. घ. ङ. पाठः. ३. 'न्यां' ग. ठ. पाठः ४. 'पी सो', ५. 'दोदि' ग. घ. पाठः. ६. 'र्वादन्धू' क. ख. ग. घ. ज. ठ. पाठः. ७. 'कण्डूयना' ग. पाठः.

'कील बन्धने'। 'हलश्च' (३. ३. १२१) इत्यधिकरणे घञ्। उभयत्र स्वार्थे कः॥

**न पुंसि दाम सन्दानं**

क्षीर॰—दीयते रक्ष्यतेऽनेन, द्यति वा दाम। दामा स्त्री। सन्दीयते रक्ष्यतेऽनेन सन्दानं बन्धनरज्जुः॥

टीका॰—यत्रैकस्मिन् बहुप्रग्रहयुक्ते बहवो गावो बध्यन्ते, तत्र दामद्वयम्। 'दो अवखण्डने'। मनिन्। दाम। स्त्रियां(टा? डा)प् दामा सीमावत्। सम्पूर्वो दोः संयमनार्थः। करणे ल्युट्। सन्दानम्॥

**पशुरज्जुस्तु दामनी॥ ७३॥**

क्षीर॰—'नित्यं संज्ञाच्छन्दसोः' (४. १. २९) इति ङीप्॥

टीका॰—वत्सरूपाश्वादीनां चरणपाशो दामनी। तथाच—

"वत्सानां रोपितैः कीलैर्दामनी पाशपाशितैः"

इति हरिवंशः। दामैव दामनी। प्रज्ञादेराकृतिगणत्वादण्। क्वचित् 'पशुरज्जुस्तु बन्धनी' इति पाठः॥

**वैशाखमन्थमन्थानमन्थानो मन्थदण्डके।**

क्षीर॰—विशाखासु जातो वैशाखः। 'विशाखाषाढादण् मन्थदण्डयोः' (५. १. ११०)। विशाखस्यायं वा। मथ्यतेऽनेन मन्थः। 'पुंसि संज्ञायां घः प्रायेण' (३. ३. ११८)। मथ्नातीति मन्थानः। ताच्छील्ये चानश्। मथिन्शब्दस्य 'इतोऽत् सर्वनामस्थाने' (७. १. ८६)। 'थो न्थः' (७. १. ८७)। मन्था इत्येकत्वे। मन्थनार्थो दण्डो मन्थदण्डः। कः संज्ञायाम्। खजाकः कुण्डोऽपि॥

टीका॰—वैशाखपञ्चकं मन्थनदण्डे। 'विशाखाषाढादण् मन्थदण्डयोः' (५. १. ११०) इत्यण्। वैशाखः। करणे घञि मन्थः। मन्थानः, अद-

---

१. 'स्य' ग. पाठः. २. 'न्धर' क. ग. घ. ङ. पाठः. ३. 'वो ब' ग. घ. ङ. पाठः. ४. 'दा सं' ग. घ. पाठः. ५. 'मार्थः' क. ख. ञ ठ. पाठः. ६. 'न्थ्य' ग. पाठः. ७. 'घः। म' क. ख. पाठः. ८. 'नः। चा' क. ग. घ. ङ. पाठः. ९. 'थ' ख. पाठः. १०. 'ण्डकः।' क., 'ण्डः॥ ख' ख. पाठः.

न्तोऽयम् । 'मन्थ विलोडने' । 'परमे कित्' (उ० ४. १०) इत्यनुवृत्तौ 'मन्थः' (उ० ४. ११) इत्यनेन सूत्रेण इनिः, स च कित् । एवं मथिन् । पथिन्छब्दवद्रूपम् । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य चे'ति वचनाद् द्वन्द्वेऽपि 'थो न्थः' (७. १. ८७) इत्यादि कार्यम् ॥

**कुटरो दण्डविष्कम्भे**

क्षीर० — कुटति कुटरः कुटको वा दण्डकुटके वर्तते । दण्डं विष्कभ्नाति बध्नाति दण्डविष्कम्भः, यस्मिन् बद्ध्वा मन्थ आकृष्यते । मञ्जीरोऽपि । दण्डकोटकमित्येके ॥

टीका० — यत्र स्तम्भेऽवकर्षणार्थं रज्ज्वा मन्थदण्डो बध्यते तत्र कुठरः । दण्डस्य विष्कम्भो निबन्धको दण्डविष्कम्भः । मूर्धन्यषः ॥

**मन्थनी गर्गरी समे ॥ ७४ ॥**

क्षीर० — मथ्यतेऽस्यां मन्थनी । गिरति दधि गर्गरी । कलशी च ॥

टीका० — मन्थनकुम्भिकायां मन्थनीद्वयम् । अधिकरणे ल्युटि मन्थनी । गर्गशब्दं रातीति गर्गरी, गौरादिः ॥

**उष्ट्रे क्रमेलकमयमहाङ्गाः**

क्षीर० — उष्यते दह्यते मरावुष्ट्रः । क्रमादेलयति क्रमेलकः । मीनात्यहीन् मयः, मयते गच्छति वा । येम इत्येके ।

**"दासेरको दीर्घजङ्घो ग्रीवी रणकधूम्रकौ"॥**

टीका० — उष्ट्रचतुष्कमुष्ट्रे । 'उष दाहे' । 'उषिखनिभ्यां कित्' (उ० ४. १६३) इति ष्ट्रन् । उष्ट्रः । 'मय गतौ' । पचाद्यच् । मयः । महान्ति अङ्गान्यस्येति महाङ्गः ॥

**करभः शिशौ ॥**

क्षीर० — कं शिरो रभते उन्नमयति करभो बालोष्ट्रः ॥

---

१. 'ज्जि' क., 'ज्जी', २. 'काष्ठक' ख. पाठः. ३. 'न्थ्य' घ. ङ. पाठः. ४ 'हिं म' ख. पाठः. ५. 'मय इ' ग. घ. ङ. पाठः. ६. 'जिह्वो गीती उरणधू' ग घ. पाठः.

टीका० — उष्ट्रशिशौ करभः । किरतेः शरभवद् अभच् ॥

**करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७८ ॥**

क्षीर० — 'शृङ्खलमस्य बन्धनं करभे' (५. २. ७९) इति कन् । विकारे 'नित्यं वृद्धशरादिभ्यः' (४. ३. १४४) इति मयटा दारुमयैरिति युक्तम् ॥

टीका० — दारुविकारैः पादबन्धनैर्लक्षिताः करभाः शृङ्खलकाख्याः । 'शृङ्खलमस्य बन्धनं करभे' (५. २. ७९) इति कन् ॥

**अजा छागी**

क्षीर० — अजति गच्छति व्यायामशीलत्वादजा[1] । 'अजाद्यतष्टाप्' (४. १. ४) । छ्यति रोगान् छागी । 'जातेरस्त्रीविषयादयोपधात्[2]' (४. १. ६३) इति ङीप् । स्त्रीप्रत्ययविशेषार्थं[3] पृथक् पाठः ॥

टीका० — अजाद्वयं छाग्याम् ॥

**शुभश्छागबस्तच्छगलका अजः ।**

क्षीर० — शोभते शुभः । स्त(नो?भ्नो)ति स्त(भे?भो) निघण्टुषु । बस्ते बस्तः । छ्यति रोगान् छागः छगलश्च । छगोऽपि ॥

टीका० — तुभपञ्चकं छागे । 'णभ तुभ हिंसायाम्' । इगुपधलक्षणः कः । तुभः । 'छो छेदने' । खड्गवद् गन् । छागः । 'गन्ध बस्त अर्दने' । कर्मणि घञ् । बस्तः । 'छो गुक् ह्रस्वश्च' (उ० १. ११८) इति कलः । धातोर्गुगागमो ह्रस्वश्च । छगलः । 'जनी प्रादुर्भावे' । 'जनस्तो रश्च' इत्यनुवृत्तौ 'डोऽट् च' इति डः अडागमश्च धातोः । अजः ॥

**मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय[5] एडकाः[6][7] ॥ ७६ ॥**

क्षीर० — मेहति मेढ्रः । उरु भ्रमत्युरभ्रः । उच्चैरभते वा । उः स्वरप्रतिरूपको[10] निपातः । एवमुच्चै रणोऽस्य उरणः । उरण्य[ति]

1. 'त् । अजाद्य' क. पाठः. 2. 'त् । ङी' क. ग. घ. ङ. पाटः. 3. 'र्थं' क ख. पाठः. 4. 'लः । ज' क. ख. ङ. च. छ. ज. ट. पाठः. 5. 'ढोरभ्रो' क. 'ढोरभ्रो' ग. घ. ङ. पाठः. 6. 'ण्ड' ख. पाठः. 7. 'काः ॥ एडशब्दार्थाः । मे' ख. च., 'काः ॥ एडशब्दार्थात् मे' ग. घ. ङ. पाठः. 8. 'ण्डकः । उ' क, 'ड्कः । उ' ग, 'ण्डः । उ' घ. पाठः. 9. 'र' क. पाठः. 10. 'को वा नि' ख. पाठः.

देवताः प्रीणातीति श्रीभोजः, कण्ड्वादिपाठात्। ऊर्णास्त्यस्योर्णायुः। 'ऊर्णाया युस्' (५. २. १२३)। मेषते वाशते मेषः। पचाद्यच्। वर्षति वृष्णिः। आ ईड्यन्तेऽनेन देवाः एडकः। हुडुश्च। अविर्नोनार्थे॥

टीका०—मेण्डसप्तकं मेण्ढे। उरभ्रोरणौ ह्रस्वादी। ऊर्णा मेषलोम, तद्योगाद् 'ऊर्णाया युस्' (५. २. १२३)। ऊर्णायुर्दीर्घादिः। 'मिष स्पर्धायाम्'। पचाद्यच्। मेषः। 'वृषु सेचने'। 'सृवृषिभ्यां कित्' (उ० ४. ५०) इति निः। वृष्णिः। स्त्रियामेडका॥

**उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम्।**

क्षीर०—'गोत्रोक्षोष्ट्र—' (४. २. ३९) इति वुञ्॥

टीका०—यथाक्रममुष्ट्रादिसमूहे औष्ट्रकत्रयम्। 'गोत्रोक्षोष्ट्र—'(४. २. ३९) इत्यादिना वुञ्॥

**चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः॥ ७७॥**

क्षीर०—चक्रमस्त्यस्य तैलिकादिचक्रभ्रमणाच्च। 'आसन्दीवदष्ठीवच्चक्रीवद्—' (८. २. १२) इति साधुः। 'चक्रवालस्तु बालेय' इति माला। बालेभ्यो हितो बालेयः। वाले वलने भवो वा। रासते रासभः। 'रासृ शब्दे'। गर्दति गर्दभः। 'गर्द शब्दे'। शङ्कुकर्णोऽपि। खं शब्दं राति खरः, खमस्त्यस्य वा। 'खमुखकुञ्जेभ्यो रः' (वा० ५. २. १०७)। क्रूरो वा।

"षट्त्वे पशुनामभ्यः षड्गवमथ गोयुगं द्वित्वे"[3]।

यथा मेषषड्गवम्। 'षट्त्वे षड्गवच्' (वा० ५. २. २९) इति वक्तव्यात् षड्गवच्। गोगोयुगम्। 'पशुनामभ्यो द्वित्वे गोयुगच्'। (वा० ५. २. २९)।

"अविसोढमविमरीसं तथाविदूसं पयो मेष्याः"।

'अवेर्दुग्धे सोढदूसमरीसचः' (वा० ४. २. ३६)॥

---

१. 'आधिर्नो' क. ग. घ. ङ पाठः. २. 'वा' क. पाठः. ३. 'वम्। यथा मेषषड्गवम्। षट्त्वे षड्गवच् इति वक्तव्यात् षड्गवच्। अथ गोयुगं द्वित्वे। यथा गोगोयुगम्। 'पशुनामभ्यो द्वित्वे गोयुगच्। अविसोढमविमरीसं दुग्धं तथाविदूसमवेः। 'अवेर्दुग्धे प्रत्यया वक्तव्याः सोढदूसमरीसचः॥' क. ख. च. छ. पाठः.

टीका० — चक्रीवत्पञ्चकं गर्दभे। मतुपि चक्रीवान्। 'आसन्दीवदष्ठीवच्चक्रीवद्—' (८.२.१२) इत्यादिना चक्रीभावो निपात्यते। 'रासृ शब्दे'। 'रासिवल्लिभ्यां च' (उ० ३. १२५) इत्यभच्। रासभः। 'गर्द शब्दे'। शलभवदभच्। गर्दभः॥

**वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक।**
**पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः॥ ७८॥**

क्षीर० — विदेहे उपचये भवो वैदेहः। सार्थान् सधनान् सरतो वा पान्थान् वहति सार्थवाहः। निगमे आगमे भवो नैगमः। निगमो वणिक्पथमस्य निवासो वा। पणते वणिक्। प्रज्ञादित्वात् स्वार्थेऽण्। (वाणिजः)। आपणः प्रयोजनमस्य आपणिकः। क्रयविक्रयाभ्यां जीवति क्रयविक्रयिकः। 'वस्नक्रयविक्रयाट्ठन्' (४. ४. १३) इति सङ्घातविगृहीताट्ठन्॥

टीका० — वैदेहकाष्टकं वणिजि। वसिष्ठमुनिना राजा निमिर्ऋत्विङ्निमित्तं विदेहो भवेति शप्तः। एतन्निमित्तं विदेह इत्यस्य नामाभूत्। विदेहेन च वणिज्याशास्त्रं प्रणीतम्। अतो वणिजस्ताच्छिष्याः। 'धूमादिभ्यश्च' (४. २. १२७) इति शैषिको वुञ्। वैदेहकः। सार्थं वणिक्संघातं वहति देशान्तरं प्रापयतीति कर्मण्यणि सार्थवाहः। निगमः पुटभेदनं, तत्र भवो जातो वा नैगमः। पणत इति वणिक्। 'पणेरिज्यादेश्च वः' (उ० २. ७३) इतीजिप्रत्ययः आदेश्च वः। इकार उच्चारणार्थः। वणिगेव वाणिजः। प्रज्ञादिः। पण्येनाजीवतीति पण्याजीवः। 'आङि पणिपतिखनिभ्यश्च' (उ० २. ४५) इति इकन्। आपणिकः। क्रयविक्रयाभ्यां जीवतीति क्रयविक्रयिकः। 'वस्नक्रयविक्रयाट्ठन्' (४. ४. १३)॥

**विक्रेता स्याद् विक्रयिकः**

क्षीर० — विक्रीणीते भाण्डेन मूल्यं गृह्णाति॥

---

१. 'चक्रीवदष्ठीवद्' क. ख. च. ज. ठ. पाठः. २. 'वित् इ' क. ख. च. छ. पाठः. ३. 'फ' क. पाठः. ४. 'तार्थाट्ठक्॥' ग. पाठः. ५. 'ह्राष्ट' क. ख. ज. ड. पाठः.

टीका० —विक्रेतृद्वयं विक्रेतरि। तृचि विक्रेता। पूर्ववद्धनि विक्र-
:॥

**क्रायकः क्रयिकः समौ।**

क्षीर० —क्रीणाति मूल्येन भाण्डं गृह्णाति क्रायकः। क्रयेण जीव-
ति क्रयिकः॥

टीका० —क्रायकद्वयं क्रेतरि। ण्वुलि क्रायकः। 'क्रय इकन्' (उ० २.
४६) इतीकन्। क्रयिकः॥

**वाणिज्यं तु वणिज्या स्याद्**

क्षीर० —वणिजो भावः। ब्राह्मणादित्वात् ष्यञ्। 'दूतव-
णिग्भ्यां च' (वा० ५. १. १२६) इति वक्तव्याद् यच्च॥

टीका० —वणिजां कर्मणि वाणिज्यद्वयम्। वाणिज्यमुक्तम्। दूत्य-
वद् यत्। टापि वणिज्या॥

**मूल्यं वस्नोऽप्यवक्रयः॥ ७९॥**

क्षीर० —मूलेनानाम्यं मूल्यम्। 'नौवयोधर्म—' (४. ४. ९१)
इति यत्। वसत्यस्मिन् पण्यं वस्नः। अवक्रीयतेऽनेन अवक्रयः॥

टीका० —मूल्यत्रयं मूल्ये। पटादीनामुत्पत्तिकारणं हिरण्यं मूलं[3],
तदधिकं हिरण्यं मूल्यम्। 'नौवयोधर्मविषमूल—' (४. ४. ९१) इत्यादिना
यत्। अधिकत्वाद् मूलेन नाभिभूयते। मूलाद् विक्रयार्थस्याल्पत्वे[4] अभिभवनीयं
स्यात्। वसतेः 'धाप्वृवस्यज्यतिभ्यो नः' (उ० ३. ६)। वस्नः। क्लीबं चैत-
दित्यन्यः॥

**नीवी परिपणो मूलधनं**

क्षीर० —नीवीव परहस्तेऽर्प्यमाणत्वात्[6]। परिपण्यते वृद्ध्यर्थं
प्रयुज्यते परिपणः। मूलं लाभकारणम्॥

---

१. 'ण्डं क्रा' क. ग. घ. ङ. पाठः. २. 'चायच' क. पाठः. ३. 'लं नौ' ठ. पाठः. ४. 'त्वम्' क. ख. ग. घ. ङ. च. छ. ज. ठ. पाठः. ५. 'पृ' ठ. पाठः. ६. 'स्तेर्यमा' क. ख. ग. पाठः. ७. 'स्य' ग. घ. ङ. पाठः. ८. 'भे' ख. पाठः.

टीका० — नीवीत्रयं मूलधने[1] भाण्डा इति ख्याते। निपूर्वाद् व्येञः 'नौ व्यो यलोपः पूर्वपदस्य च दीर्घः' (उ० ४. ३७) इति इण्प्रत्ययः डिच्च यलोपः पूर्वपदस्य दीर्घत्वम्। ङीषि नीवी। घप्रत्यये परिपणः॥

**लाभोऽधिकं फलम्॥ ८०॥**

क्षीर० — मूलधनाद् यदधिकं निष्पन्नं, स लाभः। फलं च कैलान्तरादि॥

टीका० — मूलधनविक्रयादधिकं यद् धनं लभ्यते, स लाभः। घञन्तः॥

**परिदानं परीवर्तो नैमेयनिमयावपि।**

क्षीर० — परिवृत्त्या दानं परिदानम्। निमेये परिवर्तनीये भवो नैमेयः। निमानं निमयः। 'मेङ् प्रणिदाने'॥

टीका० — प्रतिदानचतुष्कं परीवर्ते। ल्युटि प्रतिदानम्। दीर्घत्व-विकल्पात् परिवर्तोऽपि। 'मेङ् प्रणिदाने'। विपूर्वः। 'अचो यत्' (३. १. ९७)। विमेयः। प्रज्ञाद्यणि वैमेयः। मिञ एरचि निमयः॥

**पुमानुपनिधिर्न्यासः**

क्षीर० — उप समीपे निधीयते गुप्तं स्थाप्यते उपनिधिः। उप समीपे निधेर्वा। न्यस्यते निक्षिप्यते न्यासः। निक्षेपोऽपि। स्मार्ते त्वेषां भेदोऽस्ति —

"वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्पितम्।
द्रव्यं तूपनिधिर्न्यासः प्रकाश्य स्थापितं तु यत्॥
निक्षेपः शिल्पिहस्ते तु भाण्डं संस्कर्तुमर्पितम्।"

१. 'ने।' ठ. पाठः. २. 'ह्' ख. ग. च. ठ., 'ङ्चूप्र' क. ङ. छ. ट. पाठः. ३. 'वद् दी' क. ख. ङ. च. छ. ट. ठ. पाठः. ४. 'ददी' ज. पाठः. ५. 'का' क. ख. घ. ङ. पाठः. ६. 'वै', ७. 'वि', ८. 'वै' ख. पाठः. ९. 'भाजन' क. ख. पाठः. १०. 'तदुपधि' ग. पाठः.

टीका० — उपनिधिद्वयं निक्षेपे । निधिरुक्तः । उपपूर्वादुपनिधिः । 'अस्नु क्षेपणे' । घञ् । न्यासः ॥

**प्रतिदानं तदर्पणम् ॥ ८१ ॥**

क्षीर० — तस्य न्यासस्य निक्षप्त्रे प्रतीपं दानं प्रतिदानम् । परिदानमित्येके ।

"प्रत्यक्षदानात् स्वीकारोऽवक्रयः कूप्तकं च तत्" ॥

टीका० — निक्षेपार्पणे परिदानम् । परिपूर्वो ददातिर्न्यासार्पणे ॥

**क्रये प्रसारितं क्रय्यं**

क्षीर० — क्रयनिमित्तमापणे न्यस्तं क्रय्यम् । 'क्रय्यस्तदर्थे' (६. १. ८२) इति साधुः ॥

टीका० — क्रयोऽस्य भवत्विति यद् घट्टादौ प्रसारितं वस्तु, तत् क्रय्याख्यम् । क्रीणातेः 'अचो यत्' (३. १. ९७) । 'क्रय्यस्तदर्थे' (६. १. ८२) इत्ययादेशः ॥

**क्रेयं क्रेतव्यमात्रके ।**

क्षीर० — यथा क्रेयो गौर्वर्तते न च क्रय्योऽस्ति ॥

टीका० — क्रेतव्यमात्रे वस्तुनि न तु प्रसारिते क्रेयम् । 'अचो यत्' (३. १. ९७) ॥

**विक्रेयं पणितव्यं च पण्यं**

क्षीर० — 'अवद्यपण्य —' (३. १. १०१) इति साधुः ॥

टीका० — विक्रेयत्रयं विक्रयणीये । 'क्रय्यस्तदर्थे' (६. १. ८२) इत्यनुपसर्गनिर्देशाद् विक्रय्यमसाधुरिति श्रीकण्ठः । पणेस्तव्यत् । पणितव्यम् । 'अवद्यपण्यवर्या —' (३. १. १०१) इत्यादिना यति पण्यम् ॥

**क्रय्यादयस्त्रिषु ॥ ८२ ॥**

क्षीर० —वाच्यलिङ्गा इत्यर्थः ॥

टीका० —क्रय्यादयस्त्रिषु ॥

**क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ।**

क्षीर० —अवश्यं मयैतद् विक्रेयमिति सत्यस्य करणं सत्यापनम् । 'सत्यापपाश —' (३. १. २५) इति णिच् । 'अर्थवेदसत्यानामापुक्' (वा० ३. १. २५) । 'कारे सत्यागदस्य' (६. ३. ७०) इति मुम् । 'सत्यादशपथे' (५. ४. ६६) इति डाच् ॥

टीका० —अवश्यं सत्यमिदं कर्तव्यमित्याख्याने सत्यापनत्रयम् । 'सत्यापपाश —' (३. १. २५) इत्यादिना ण्यन्ताल्ल्युट् । सत्यापनम् । पवर्गवत् । 'सत्यापना सत्याकृतिरि'ति स्त्रीकाण्डे वोपालितः । सत्यंकार इति 'कारे सत्यागदस्य' (६. ३. ७०) इति मुम् । सत्यस्य कृतिः सत्याकृतिः । 'सत्यादशपथे' (५. ४. ६६) इति डाच् ॥

**विपणो विक्रयः**

क्षीर० —विपणनं विपणः । चुराद्यं(द)न्तादच् । अन्यथा विपाणः स्यात् ॥

टीका० —विपणद्वयं विपणक्रियायाम् । 'नित्यं पणः परिमाणे' (३. ३. ६६) इत्यप् ॥

**सङ्ख्याः सङ्ख्येये ह्यादश त्रिषु ॥ ८३ ॥**

क्षीर० —एकाद्या दशान्ताः संख्याः सङ्ख्येये वर्तमानास्त्रिलिङ्गाः । एका शाटी एकः पटः एकं कुण्डम् । दश स्त्रियः दश पटाः दश कुण्डानि । आदशेत्यष्टादशान्ताः ॥

टीका० —आदशं दशश्रुतिपर्यन्तम्, आ अष्टादशभ्य इति यावत् । एकादिसङ्ख्याशब्दाः सङ्ख्येयवस्तुनि वर्तमानास्त्रिषु । एतेषां च संख्यासंख्येययोः सामानाधिकरण्यं भवति । एको ब्राह्मणः एका स्त्री एकं ब्राह्मणकुलम् । दश

१. 'दिण्यन्ता' क. गं. घ. ङ. पाठः. २. 'दशश्रु' ग. पाठः.

ब्राह्मणाः दश स्त्रियः दश ब्राह्मणकुलानि[1] इत्यादि। एतस्य चाभिधेयलिङ्गतया त्रिष्वित्युक्तं, न तु ब्राह्मणानामित्यादिवैयधिकरण्यं भवति। 'अनश्च' (५. ४. १०८) इति समासान्ताचि आदशमकारान्तम्। 'आङ् मर्यादाभिविध्योः' (२. १. १३) इति समासः॥

**विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः।**

**क्षीर०** — विंशत्याद्याः सर्वा एव संख्याः संख्येये संख्यायां (च) नित्यमेकवचनान्ता वर्तन्ते। यद् भाष्यम् — 'आ दशभ्यः संख्याः संख्येये वर्तन्ते[2]। अत ऊर्ध्वं संख्याने संख्येये च'। विंशतिः पटाः विंशतिः पटानाम्। शतं गावः शतं गवाम्॥

**टीका०** — विंशत्याद्याः सर्व एव संख्याशब्दा बहुवचनविशिष्टसंख्येयवचना अपि एकत्ववृत्तय एव। तद् यथा विंशतिर्गावः। संख्यावचनत्वे तु गवां विंशतिः। भेदनिबन्धना षष्ठी॥

**संख्यार्थे द्विबहुत्वे स्तः**

**क्षीर०** — संख्यामात्रेऽर्थे वर्तमानाया विंशत्यादेः[3] संख्याया चनबहुवचने अपि स्तो भवतः, एकशेषात्। द्वे विंशती तिस्रो गवां विंशती[6] गवां विंशतयः॥

**टीका०** — यदा तु संख्यान्तरस्यार्थेऽभिधेये विंशत्यादयो वर्तन्ते, द्विवचनबहुवचने अपि भवतः। द्वे विंशती तिस्रो विंशतयः। पञ्च शत

**तासु चा नवतेः स्त्रियः॥ ८४॥**

**क्षीर०** — विंशत्याद्या नवत्यन्ताः

**टीका०** — तासु विंशत्यादिषु। आ नवतेः नवतिं व्याप्य। विंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतयो भिन्नलिङ्गेनापि[7] समानाधिकरणाः

१. 'नि। अष्टादश ब्राह्मणा इ' ग. पाठः. २ 'न्ते। ऊ', ३. 'दिसं', ४. 'स्तः, ए' ख. पाठः. ५. 'षो द्वे' क. ग. घ. ङ. पाठः. ६. 'तिः' ख. घ, ङ. पाठः. ७. 'ना अपि' ग. पाठः.

स्त्रियः स्त्रीलिङ्गाः। यथा—विंशत्या[1] पुरुषैः विंशतिः कुण्डानि एकविंशतिः कुण्डानीति ॥

**पङ्क्तेः शतसहस्रादि क्रमाद् दशगुणोत्तरम्।**

**क्षीर०—द्वौ पञ्चतौ[2] पङ्क्तिर्दशाख्या। 'पङ्क्तिविंशतित्रिंशत्—' (५. १. ५९) इति साधुः। दश पङ्क्तयः शतं, दश शतानि[3] सहस्रं, दश सहस्राण्ययुतम्। इत्थं परार्धान्तान्यष्टादश गणितस्थानानि। यथाहुः—**

**"एकदशशतसहस्राण्ययुतप्रयुताख्यलक्षमथ नियुतम्।**
**अर्बुदकोटिन्यर्बुदपद्मे खर्वं निखर्वमिति दशभिः॥**
**गुणनान्महाब्जशङ्कू समुद्रमध्यान्तमथ परार्धं च।**
**खहतं परार्धममितं तत्खहतं भूर्यतोऽसङ्ख्यम्॥"**

**प्रयुतसंज्ञं लक्षम्। अर्बुदसंज्ञा कोटिरित्यर्थः॥**

**टीका०**—पङ्क्तिशब्देन दशसंख्योच्यते। पङ्क्तेः प्रभृति दशगुणोत्तरक्रमेण शतसहस्रादि। तद् यथा—दश दशगु(णं ? णाः) शतं, शतं दशगुणं सहस्रं, सहस्रं दशगुणमयुतमित्यादि। तदुक्तम्—

"एकं दश शतमस्मात् सहस्रमयुतं ततः परं लक्षम्।
प्रयुतं कोटिमथार्बुदमब्जं खर्वं निखर्वं च॥
तस्मान्महासरोजं शङ्कुं सरितां पतिं ततस्त्वन्त्यम्।
मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः"॥

**पौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्॥ ८५॥**

**क्षीर०—पुनातीति पोतुर्मानभाण्डशोधकः पोतवाध्यक्षाख्यः। तस्येदं पौतवम्। द्रोर्विकारो द्रुवयम्। 'द्रोश्च' (४. ३. १६१)। 'माने वयः' (४. ३. १६२)। पाति पाय्यम्। 'पाय्यसान्नाय्य—' (३. १. १२९) इति साधुः। मीयतेऽनेनेति मानम्। पौतवं तुलादि, द्रुवयं प्रस्थादि, पाय्यं हस्तादीति गौडो भ्रान्तः॥**

---

१. 'त्या कुपु' क. ख. पाठः. २. 'कौ' क. ग. घ. पाठः. ३. 'नि द्रु स' ग, पाठः.

टीका०—यौतवत्रयं मानसामान्ये। केचित्तु अनन्तरं 'मानं तुलाङ्गुलिप्रस्थैरि'ति वक्ष्यति, तद्दृष्ट्या यथाक्रमं यौतवं तुलादि, द्रुवयं‡ वितस्त्यादि, पाय्यं प्रस्थादीति सम्बध्नन्ति। तन्न युज्यते। तथाच वोपालितः—

"प्रस्थः सानौ द्रुवये चराचरे जङ्गमे भवने"

इति। यदि यथाक्रमं सम्बन्धः, तदा द्रुवये प्रस्थ इति न स्यात्। 'यु मिश्रणे'। बहुलवचनाद् भावे 'वसेस्तुन्' (उ० १.७८) इति तुन्। योतुः शोधनं, तदर्थतया तस्येदं यौतवं तुलादिशोधनोपाय इति यौतवाध्यक्ष इत्यध्याये चाणक्यटीकाकृतोक्तम्। द्रुर्वृक्षः, तद्विकारो द्रुवयम्। 'द्रोश्च' (४. ३. १६१) इत्यनुवृत्तौ 'माने वयः' (४. ३. १६२) इति वयः। यथाकथञ्चिद् व्युत्पत्तिरियम्। रूढशब्दोऽयम्। मीयतेऽनेनेति पाय्यम्। 'पाय्यसान्नाय्य—' (३. १. १२९) इत्यादिना ण्यद् आदिपत्वं युगागमश्च निपात्यते। एवं पवर्गादिर्द्वितालव्यश्चेत्युपदेशपरम्परा॥

**मानं तुलाङ्गुलिप्रस्थैः**

क्षीर०—मिमीते मानं मीयतेऽनेन च। तत्र तुलाद्युन्मानम्, अङ्गुल्यादि प्रमाणं, प्रस्थादि परिमाणम्। यदाहुः—

"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् सङ्ख्या भिन्ना तु सर्वतः॥"

'संख्या बाह्या तु सर्वतः' इति पाठभेदः॥

टीका०—तन्मानं वस्तुतस्त्रिधा, तुलाङ्गुलिप्रस्थभेदात्। तुलाग्रहणेनोन्मानाद्युपलक्ष्यते, अङ्गुल्या हस्तादि, प्रस्थेन द्रोणकादि॥

**गुञ्जाः पञ्चाद्यमाषकः।**

क्षीर०—गुञ्जा रक्तिका। आद्यो मुख्यः। 'धान्यकणा दश माषकः। तथा द्वे कृष्णले रूप्यमाषे' इति दर्शनात्। अस्मिन् कालेऽद्य इत्येके। यदाहुः—"माषकं सप्त कृष्णलाः"॥

---

१. 'बाह्या तु', २. 'भिन्ना तु' क. पाठः. ३. 'न्यु', ४. 'न्ते' ङ. पाठः. ५. 'न' ख. पाठः. ६. 'सामकं' ङ. पाठः.

---

‡ अत्र सर्वत्र वप इत्यस्य स्थाने वय इत्येव पठितव्यं भाति।

टीका० — पञ्च गुञ्जाः काकचिञ्चिकाः । आद्यः प्रथमः, शास्त्रीयो माषक इत्यर्थः । माषो मूर्धन्यषः । 'संज्ञायां कन्' (५. ३. ७५)। दशकृष्णलापेक्षया आद्यत्वम् ॥

**ते षोडशाक्षः कर्षोऽस्त्री**

क्षीर० — अक्ष्णोत्यक्षः । कर्षति कर्षः ॥

टीका० — ते माषकाः षोडश अक्षद्वयवाच्याः । अक्ष उक्तः । कृषोऽच् । कर्षः । अस्त्री ॥

**पलं कर्षचतुष्टयम् ॥ ८६ ॥**

क्षीर० — 'पल रक्षायाम्' ॥

टीका० — कर्षचतुष्टये पलम् ॥

**सुवर्णविस्तौ हेम्नोऽक्षे**

क्षीर० — सुवर्णमस्त्यस्य, अर्शआदित्वादच् । विस्यते विस्तः । 'विस उत्सर्गे'† । अक्षे षोडशमाषके माने द्वौ वर्तेते । यत् स्मृतिः—

"पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश" ॥

टीका० — हेम्नोऽक्षे कर्षे सुवर्णद्वयम् । हेमजातिवचनस्तु सुवर्णशब्दः क्लीबे । विस्तः सकारतकारवान् ॥

**कुरुविस्तस्तु तत्पले ।**

क्षीर० — कुरुदेशे प्रसिद्धो विस्तः कुरुविस्तो हेमपलम् । यन्माला — 'पलेन हि सुवर्णस्य कुरुविस्तः' ॥

टीका० — तत्पले कुरुवि(न्दः! स्तः) ॥

**तुला स्त्रियां पलशतं**

क्षीर० — तोल्यते तुला । 'चिन्तिपूजि —' (३. ३. १०५) इति चकारादङ् । ङित्करणसामर्थ्याद् गुणाभावः ॥

---

१. 'क्षो' घ. पाठः. २. 'स्य' क. ग. घ. ङ. पाठः.

---

† उत्सर्गे इत्यर्थलेखनं बुसधातुभ्रान्त्या, यतो 'बिस प्रेरणे, बिस्यति' इत्येव तरङ्गिण्यां क्षीरस्वाम्याह ।

टीका० — कपित्थतुलेत्यर्थशास्त्रप्रयोगाद् यस्यकस्यचित् पलशतं तुला। 'तुल उन्माने'। चुरादिणिचोऽनित्यत्वाद् इगुपधलक्षणः कः, ततष्टाबिति धातुप्रदीपः॥

**भारः स्याद् विंशतिस्तुलाः॥ ८७॥**

क्षीर० — भ्रियते भारः। पुंसां हि द्वे पलसहस्रे वोढुं शक्येते॥

टीका० — विंशत्या तुलाभिर्भारः। भृञो घञ्। भरश्चात्र। 'भरोऽतिशयभारयोः' इति रुद्रः॥

**आचितो दश भाराः स्युः शाकटो भार आचितः।**

क्षीर० — आचीयते आचितः। स च शकटेन वोढुं शक्यः। अन्ये[1] तु विंशतिपलसहस्राण्याचितमाहुः। शकटभारस्ततोऽतिरिक्तोऽप्याचित एवेति। अत एव शाकटाख्योऽप्याचित इति पुनराचितग्रहणेन द्योत्यते॥

टीका० — दश भारा आचितम्। रूपभेदात् क्लीबम्। 'शकटभरोऽप्याचितः प्रोक्तः' इति रत्नकोषार्या। अतो दीर्घादिः[2]। 'आचितो दशभिर्भारैरि'ति पुंस्काण्डे अमरमाला। प्रसङ्गादनेकार्थतां चाचितस्याह — शकटस्य यो भारः शकटोन्मेयः सोऽप्याचितः, पुमान्॥

**कार्षापणः कार्षिकः स्यात्**

क्षीर० — कर्षसंबन्धिना आपण्यते व्यवह्रियतेऽनेन रूप्यरूपकेण स कार्षापणः। कर्षः प्रमाणमस्य[3] कार्षिकः॥

टीका० — सुवर्णताम्रादेः शास्त्रीयपञ्चकृष्णलो माषः। रजतस्य द्विकृष्णलः। तथाच मनुः —

"द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः"।

एवम्भूतषोडशमाषकैर्यो रजतकर्षः, तत्कृतो व्यवहारः कार्षिकः ताम्रकार्षापणः। कर्षस्यायं कार्षिकः। अध्यात्मादित्वाट्ठञ्।

"स्यात् कार्षिकः पुराणः कार्षापणमुभयतो नृशण्डत्वम्"

इति वोपालितः। अतः पुराणोऽप्यस्य[4] पर्यायः। आद्यव्यवहारे रजतकृष्णलाया

---

१. 'न्ये विं' ख. पाठः. २. 'दि' क. पाठः. ३. 'स्य स का' ख. पाठः. ४. 'णोऽस्य' क. पाठः.

दश गण्डका मूल्यं, द्वात्रिंशता च रजतकृष्णलाभी रजतकर्षः, मिलित्वा षोडशकपर्दकपणा एव मूल्यम् । अत्रैव च लोके उपचारात् पुराणकार्षापणयोः प्रयोगः ॥

**कार्षिके ताम्रिके पणः ॥ ८८ ॥**

**क्षीर०** — ताम्रमयं कर्षप्रमाणं रूप्यं पणः । तन्मूल्यं चोपचाराद् अशीतिः श्वेतकाः ॥

**टीका०** — पञ्चकृष्णलकारब्धताम्रकार्षिके पणः । साधितः प्राक् । आद्य-व्यवहारेण हि पञ्चगुञ्जामाषसङ्ख्यया ताम्रपलस्याशीतिगण्डका मूल्यं, कर्षस्य च विंशतिगण्डकाः । अत्रैव च लोकैरुपचारात् पणशब्दः प्रयुज्यते । कार्षिकवत् ताम्रिकः ॥

**अस्त्रियावाढकद्रोणौ खारी वाहो निकुञ्चकः ।**
**कुडुबः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥ ८९ ॥**

**क्षीर०** — पृथगिति एषामपर्यायत्वम् । परिमाणविशेषा एते । यदाहुः—

"पलं प्रकुञ्चकं मुष्टिः कुडुबस्तच्चतुष्टयम् ।
चत्वारः कुडुबाः प्रस्थश्चतुष्प्रस्थमथाढकम् ॥
अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते ।
स च शूर्पो भवेत् खारी द्विशूर्पा गोण्युदाहृता ॥
तामेव भारं जानीयाद् वाहो भारचतुष्टयम् ।
शुष्कमेयेष्विदं मानं द्विगुणं तद् द्रवेषु तु ॥"

तत्तद्देशभेदात् सङ्ख्यान्यथात्वम् । तथाच क्वचिच्चतुराढको द्रोणः । षोडशद्रोणा खारी । विंशतिद्रोणः कुम्भः । दशकुम्भो वाहः ॥

**टीका०** — आढकादयः सप्त प्रत्येकं परिमाणार्थकाः । दशाङ्गुलं वा सर्वतोमानमाढकम् । अपचयविवक्षायामाढकी । चतुराढको द्रोणः । षोडशद्रोणा खारी । वाहो विंशतिखारीकः । खारीपादो मानी । मानीपादो द्रोणः । द्रोणपाद आढकः । आढकपादः प्रस्थः । प्रस्थपादः कुडवः । कुडवपादो निकुञ्चः । अयं

च प्रसृतं इति ख्यातः । इतिशब्देनाद्य(त्वे ? र्थे)न मानी । प्रवर्तिकादय आद्याः । पृथग् भेदेन परिमाणार्थवाचकाः द्रव्याणां लौहानां दारवाणां वाचकाः, न तु पर्याया इत्यर्थः । प्रवर्तिश्च खारीपञ्चकम् । तथाच गणिते —

> "वाहो विंशतिखारीभिर्भरिका स्यादनेन तु ।
> प्रवर्तिः पञ्चखारीभिः सस्यमानं प्रकीर्तितम् ॥
> निकुञ्जं यावदाखार्याः पादं पादावशेषितम् ।
> मानीद्रोणाढकप्रस्थकुडुवेषु भवेदिति ॥"

ये तून्मानार्थाः कुडुवादयः, पलचतुष्टयं कुडुवः, कुडुवैश्चतुर्भिः प्रस्थः, प्रस्थाश्चत्वार आढकः, चत्वार आढका द्रोणः, षोडश द्रोणाः खारी, विंशतिर्द्रोणाः कुम्भः, कुम्भैर्दशभिर्वाह इत्यादयः शास्त्रान्तरे परिभाषिताः, ते तुलामात्र एवान्तर्भूताः ॥

**अंशस्तुरीयः पादः स्याद्**

**क्षीर०** — रूपकादेश्चतुर्थोंऽशः पादः । 'पदरुज —' (३. ३. १६) इति कर्तरि घञ् ॥

**टीका०** — तुरीयो भागश्चतुर्थोंऽशः पादाख्यः । 'अंशस्तुरीयो भागः स्यादि'ति प्रमादपाठः । तथा च —

> "पादा ब्रध्नाङ्घ्रितुर्यांशररश्मिप्रत्यन्तपर्वताः" ।

नहि तुर्यभागोंऽशशब्दे दृश्यते ॥

**अंशभागौ तु वण्टकः ।**

**क्षीर०** — अंशतेंऽशः । भज्यते भागः । वण्ट्यते विभज्यते वण्टकः ॥

**टीका०** — अंशत्रयं भागे । स्कन्धे अंश उक्तः । भजेर्घञ् । भागः । 'वटि विभाजने' । घञ् । वण्टः । स्वार्थे कन् ॥

**द्रव्यं वित्तं स्वापतेयमृक्थं रिक्थं धनं वसु ॥ ९० ॥**
**हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ।**

**क्षीर०** — 'द्रव्यं च भव्ये' (५. ३. १०४) इति साधुः । विन्दन्त्यनेन[3] वित्तम् । 'वित्तो भोगप्रत्यययोः' (८. २. ५८) इति साधुः ।

---

१. 'तिरि' ग. पाठः　२. 'न माना' ठ. पाठः　३. 'न्त्येतद वि' ख. पाठः

[illegible]स्वापतेयं, 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (४. ४. १०४)। ऋच्यते स्तूयते ऋक्थम्। एवं रिक्थम्। दधन्ति धनम्। वस्ते छादयति वसु, वसतीश्वरगृहे वा। ह्रियते हिरण्यम्। द्रवति द्रविणम्। द्यूयते द्युम्नम्। 'द्यु अभिगमने'। अर्थ्यतेऽर्थः। रान्त्येनां राः। स्त्रीत्येके। विभवति विभवः॥

टीका०—द्रव्यत्रयोदशकं धने। 'द्रोश्च' (४. ३. १६१) इति यत्। द्रव्यम्। 'वित्तो भोगप्रत्यययोः' (८. २. ५८) इति निपातनाद् विदेर्लाभार्थादुत्तरस्य निष्ठातो नत्वाभावः। वित्तम्। स्वपतौ धनपतौ साधु स्वापतेयम्। पाथेयवड्ढञ्। स्वागतादित्वादैज्निषेधः। 'रिचिर् विरेचने'। 'पातॄतुदिवचिरिचिसिचिभ्यः क्थन्' (उ० २. ७)। रिक्थम्। 'ऋच स्तुतौ'। बाहुलकात् क्थन्। ऋक्थम्। बाहुलके नकि ऋक्नमिति गोवर्धनः। 'धन धान्ये'। अच्। धनम्। वसतेः स्वरुवद् उः। वसु। 'हर्य्य गतिकान्त्योः'। हर्य्यतेः क्यन् हिरणादेशश्च धातोः। हिरण्यम्। 'द्रुदक्षिभ्यामिनन्' (उ० २. ५३)। द्रविणम्। दिवि आम्नायत इति द्युम्नम्। 'म्ना अभ्यासे'। 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कर्मणि क इति धातुप्रदीपः। अर्तेः कुष्ठवत् थन्। अर्थः। 'रातेर्डैः' (उ० २. ६९) इति डैः। (रै ? राः)। विभव उक्तः॥

**स्यात् कोशश्च हिरण्यं च हेमरूप्ये कृताकृते॥ ९१॥**

क्षीर०—कूयते शब्द्यते कोशः। कुष्यते आकृष्यते आयस्था[illegible] कोष इत्येके। हेम कृताकृतं घटितमघटितं च॥

टीका०—कृताकृतं हेमरूप्यं च मिलितं कोष(त्र ? द्व)यवाच्यं, न तु यथाक्रमं सम्बन्धः। तथाच भागुरिः—

"कोषमाहुर्हिरण्यं च हेमरूप्यं कृताकृतम्"

। तत्र पिण्डीकृतमाहेरीकृतम् आदितं(?)कृतम्। आकरोत्थम्, अजातकचूर्णादिरूपमकृतम्। कोशस्तालव्यशो मूर्धन्यषश्चेत्युक्तं प्राक्। अनेकार्थोऽ[illegible]॥

१ 'रि' क. ख. ड. पाठः. २. 'द्व' ख. 'भागी[illegible] ड. पाठः.

**ताभ्यां यदन्यत् तत् कुप्यं**

क्षीर० — हेमरूप्याभ्यामन्यत् ताम्रादि । गोपनीयं 'राजसूयसूर्यमृषोद्यरुच्यकुप्य —' (३. १. ११४) इति साधुः ॥

टीका० — ताभ्यां हेमरूप्याभ्यां यदन्यत् तैजसं द्रव्यं ताम्रकांस्यादि यच्चातैजसं राजपट्टदारुवि(षया ? षा)दिकम् असारद्रव्यं, तत् सर्वं कुप्यम् । तथाहि — कुप्याध्यक्षप्रचारे लोहवर्गश्चर्मवर्गो विषादिवर्गश्च दर्शितः । 'कुप्यमसारं[1] द्रव्य'मिति तट्टीकाकृतश्च । 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः' (३. १. ११४) इति गुपेः क्यप् आदिकत्वं च निपात्यते । कुप्यम् ॥

**रूप्यं तद्वयमाहतम् ।**

क्षीर० — रूपमाहन्यते स्म रूप्यम् । 'रूपादाहतप्रशंसयोर्यप्' (५. २. १२०) । द्वयं कुप्याकुप्यम् ॥

टीका० — तद्वयमिति हेमरूप्यम् आहतं च परापरपुरुषरूपमुत्थापयितुं निघातिकया[5] ताडितं दीनारादिकं रूप्यशब्दवाच्यम् । 'रूपादाहतप्रशंसयोर्यप्' (५. २. १२०) इति यप् ॥

**गारुत्मतं मरतकमश्मगर्भो हरिन्मणिः ॥ ९२**

क्षीर० — गरुत्मत इदं जातं विषं हन्तुं गारुत्मतम् । मरं न्यनेन मरतकम् । अश्मनो गर्भोऽश्मयोनिः । हरिन्नीलवर्णो मणिः

टीका० — गारुत्मतचतुष्कं मरतके । गरुडप्रभवत्वाद् गारुत्मतम् ॥

**शोणरत्नं लोहितकः पद्मरागः**

१. 'रं, कुद्र' ग. ङ. पाठः. २. 'तु टीका' क. पाठः. ३. 'रू' घ. ङ ४. 'प्यं प' ग. ठ. पाठः. ५. 'नि' ठ. पाठः. ६. 'कतम्' क. ग. घ. पाठः. ७. 'लो [illegible]. पाठः. ८. 'भत्वा' क. [illegible]. ङ. पाठः.

* 'तक सहने । [illegible] इति दुर्गः ।' इति क्षीरतरङ्गिणी ।

क्षीर० — शोणं च तद् रत्नं च। लोहित एव लोहितकः[1]। 'लोहितान्मणौ' (५. ४. ३०)। कन्॥

टीका० — शोणरत्नत्रयं पद्मरागे। लोहितो मणिर्लोहितकः[2]। 'लोहितान्मणा' (५. ४. ३०) इति कन्॥

अथ मौक्तिकम्।

मुक्ता

क्षीर० — विनयादित्वात् स्वार्थे[3] वा ठक्॥

टीका० — मौक्तिकद्वयं मुक्तायाम्। विनयादित्वात् स्वार्थे ठकि मौक्तिकम्॥

अथ विद्रुमः पुंसि प्रवालं[4] पुन्नपुंसकम्[5]॥ ९३॥

क्षीर० — विशिष्टो द्रुमो विद्रुमः, विद्रवत्यर्थान्। प्रवते प्रबलते वा(र्थे? ब्धेः) ऊर्ध्वे प्रवालम्[6]।

"सूर्यकान्तस्त्वग्निमणिर्वैदूर्यं वालवायजम्"॥

टीका० — विद्रुमद्वयं प्रवाले॥

रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च।

क्षीर० — रमन्तेऽस्मिन् रत्नम्। मण्यते शब्द्यते मणिः। पुंस्त्रीलिङ्गः। अश्मजातीयं मरतकेन्द्रनीलादि[7]। आदिशब्दाद् विद्रुमादि[8] वज्रपद्मरागादि वा पानीयभाण्डत्वात्॥

टीका० — अश्मजातौ मरतकपद्मरागस्फटिकादौ मुक्तावज्रादौ च रत्नद्वयम्। 'रमेस्त च' (उ० ३. १४) इति तः नोऽन्तादेशश्च। रत्नम्॥

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्॥ ९४॥

---

१. 'तमेव', २. 'कम्।', ३. 'र्थे ठ' ख. पाठः. ४. 'लः', ५. 'कः॥', ६. 'लः।' क. पाठः. ७. 'कतेन्द्र' क. ख. पाठः. ८. 'दि प' क. पाठः.

**तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ।**
**चामीकरं जातरूपं महारजतकाञ्चने ॥ ९८ ॥**
**रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ।**

क्षीर० — शोभनो वर्णोऽस्य स्वर्णम् । समासे वर्णस्य(वा)वलोपमाहुः । यथा पञ्चार्णो मन्त्रः । कनति कनकम् । 'कन दीप्तौ' । हिनोति हेम । हटति हाटकम् । 'हट दीप्तौ' । ण्वुल् । तप्यते तपनीयम् । शतकुम्भे गिरौ भवं शातकुम्भम् । शातकौम्भमित्येके । तत्पक्षे अनुशतिकादित्वादुभयपदवृद्धिः । गङ्गाया अपत्यं गाङ्गेयम् । भ्रियते[2] भार्यते[3] वा भर्म । कर्वति लोहमध्ये[4] दृप्यति कर्बुरं नानारूपं वा । चमीकरकृतस्वरावाकरौ । भवेऽण् । जातरूपम् अकृतकरूपं कुङ्कुदेशजम् । महच्च तद्[6] रजतं रुक्मम्[7] । कञ्चति काञ्चनम् । 'काचि दीप्तौ' । रोचते रुक्मम् । जम्बूनदे[8] जम्बूफलरसोत्थे[10] नदे[11] जातं जाम्बूनदम् । अष्टासु लोहेषु पदं प्रतिष्ठास्या ष्टापदम् । 'अष्टनः संज्ञायाम्' (६. ३. १२५) दीर्घः । कल्याणम् अर्जुनं कलधौतं गैरिकं भूरिचन्द्रं वसु च ॥

टीका० — स्वर्णादय एकोन[12]विंशतिः **स्वर्णे** । सुष्ठु दीप्यत इति स्वर्णम् । 'ऋणु दीप्तौ' । पचाद्यच् । शोभनं वर्णमस्येति सुवर्णम् । 'कनी[13] दीप्तौ' । क्वुन् । कनकम् । हिरण्यमुक्तम् । 'हि गतौ' । मनिन् । हेम । 'हट दीप्तौ' । ण्वुल् । हाटकम् । तपनं दाहमर्हतीति तपनीयम् । 'अर्हे कृत्यतृचश्च' (३. ३. १६९) इत्यनीयर् । शतकुम्भपर्वते भव शातकुम्भम् । गङ्गायामग्निना न्यस्तस्य माहेश्वरबीजस्य तत्त्वेन भूतत्वाद् गाङ्गेयम् । 'शुभ्रादिभ्यश्च' (४. १. १२३) इति ढक् ।

"यं गर्भं सुषुवे गङ्गा पावकाद् दीप्ततेजसम् ।
त(दर्थं ? दुल्बं) पर्वते न्यस्तं हिरण्यं समपद्यत ॥"

---

१. 'म्भ', २. 'ते भ' ग. पाठः. ३. 'ते भ' क. ख. घ. ङ. पाठः. ४. 'ध्ये क' क. पाठः. ५. 'क' घ. ङ. पाठः. ६. 'द् रञ्ज' क. ग. घ. ङ. पाठः. ७. 'रम' ख. ग. घ. ङ. पाठः. ८. 'द्वीपे ज' ङ. पाठः. ९. 'दीजं ज' क. पाठः. १०. 'त्थ', ११. 'द्यां' क. ङ. पाठः. १२. 'ऊन' ज. पाठः. १३. 'नि' ङ., 'न' ज. पाठः. १४. 'क । भू' ठ. पाठः.

इति वायुपुराणे । भृशो मनिन् । भर्म । कर्बुरमुक्तम् । जातं रूपमस्येति जातरूपम् । 'कचि दीप्तिबन्धनयोः' । कर्तरि ल्युट् । पृषोदरादिदीर्घत्वम् । काञ्चनम् । रोचतेः युग्मवद् मक् । रुक्मम् ।

"स्थगयन्त्यमूः शमितचातकार्तस्वरा
जलदास्तटित्तुलितकान्तकार्तस्वराः ।" (स० ४. श्लो० २४)

इति माघयमकात् कार्तस्वरं दन्त्यसम् । जम्बूरसनिःष्यन्दप्रसवा नदी जम्बूनदी, तत्र जातं जाम्बूनदम् । अष्टौ पदान्युत्पत्तिस्थानान्यस्येत्यष्टापदम् । 'अष्टनः संज्ञायाम्' (६. ३. १२५) इति दीर्घः ॥

**अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः ॥ ९६ ॥**

क्षीर०—शृङ्ग्यलङ्कारकारिका, तदर्थं कनकम् ॥

टीका०—कनककुण्डलादेरलङ्कारस्य सुवर्णे शृङ्गीकनकं, केवलश्च शृङ्गीशब्दः । तथाच 'भूषणकनकं शृङ्गी'ति नाममाला । ह्रस्वान्तोऽपि शृङ्गिशब्दः । तथाच बाणः—

"वर्षसमूहमिवान्तःस्थितापरिमाणशृङ्गिहेमकूटम्"

राजकुलमिति सम्बन्धः । अद इति, एतत् ॥

**दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ।**

क्षीर०—दुर्वर्णं सुवर्णापेक्षया । रज्यते हेम्ना रजतम् । रूप्यति रूप्यम् । 'रुप लुप विमोहने' । खर्जति खर्जूरम् । 'खर्ज व्यथने' । इतिशब्दात् सितादि । अपिशब्दात् तारं कलधौतं च ॥

टीका०—दुर्वर्णपञ्चकं रूप्ये । स्वर्णापेक्षया निन्दितं वर्णमस्येति दुर्वर्णम् । 'पृषिरञ्जिभ्यां कित्' (उ० ३. १११) इत्यतच् । रजतम् । शब्दत्रयं व्युत्पादितम् ॥

**रीतिः स्त्रियामारकूटो न स्त्रियाम्**

क्षीर०—रीयते स्रवति रीतिः । इयर्त्यारः, तस्य कूटं पित्तलाख्यम् । आरोऽपि । कपिलोहं च ।

---

१. 'ग्म' क. ग. पाठः. २. 'दी, त' ङ. पाठः. ३. 'द्र', ४. 'त्यन्यस्तामारः' क. ग. पाठः. ५. 'रु' क. पाठः.

पिङ्गा ब्रह्मरीतिः कांस्यं लोहो द्विलोहकम्" ॥

टीका०

पधापीत्यन्यः ॥

अथ ताम्रकम् ॥ ९७ ॥

**शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ।**

क्षीर० — ताम्यति ताम्रम् । स्रवति द्रवति शुल्बम् । म्लेच्छदेशे मुखमुत्पत्तिरस्य । द्वे हेमरूप्ये अश्नुते द्व्यष्टम् । अतिशयेन वरं वरिष्ठम् । कालिकानिवृत्तं स्वर्णं हि तत् । अत एवोदुम्बरम् । उद्भूताम्बरमिति नैरुक्ताः । औदुम्बरमित्येके । रक्तधौतकं च ।

"सौराष्ट्रकं पञ्चलोहे वर्तलोहे तु वर्तकम्" ॥

टीका० — ताम्रषट्कं ताम्रे । आम्रवत् ताम्रम् । 'शुच शोके' । 'उल्बादयश्च' (उ० ४.९६) इति वन्, लत्वं, गुणाभावः । शुल्बम् । म्लेच्छमुखं समुदितं नाम । वरिष्ठं टवर्गद्वितीयान्तम् । 'औदुम्बरं च ताम्रमि'ति नाममालायांपाठादौकारवदौदुम्बरम् ।

"उच्यते गैरिकं धातुस्ताम्रं शुल्बमुदुम्बरम्"

इति हलायुधः ॥

**लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ॥ ९८ ॥**
**अश्मसारः**

क्षीर० — लुनाति लोहं, 'लुह कत्थनादौ' वा । शस्यतेऽनेन शस्त्रम् । 'शसु हिंसायाम्' । तेज्यते तेजयति वा तीक्ष्णम् । शस्त्रान्तरच्छेदकत्वात् । वैकृन्तकाख्यं तत् । 'तिज निशाने' । पिण्ड्यते पिण्डम् । कालं च तदयः कालायसम् । 'अनोऽश्मायः—' (५.४.९४) इति टः । अयते मेघमयः । अश्मनः सारोऽश्मसारः । यत् स्मृतिः — "अश्मभ्यो लोहमुत्थितम्" । पारशवं घनं च ॥

१. 'शु' ख. पाठः. २. 'वै' ग. घ. ङ. पाठः. ३. 'न्ताख्यं' ख., 'तका' ग. घ. ङ. पाठः.

टीका० — लोहसप्तकं लोहे। रुहेर्घञि लत्वे च लोहोऽस्त्री। शस्त्रमुक्तम्। स्वार्थिकोऽत्र कन्। तीक्ष्णपिण्डशब्दावुक्तौ। कालं च तदयश्चेति कालायसम्। 'अनोऽश्मायस्सरसां जातिसंज्ञयोः' (५. ४. ९४) इति समासान्तष्टच्। 'असुन्' (उ० ४. १९०) इत्यसुनि अयः। अश्मनः सारोऽश्मसारः। [1]लायामश्मसारं क्लीबम्॥

**अथ मण्डूरं सिंहानमपि तन्मले।**

क्षीर० — मण्डते मण्डूरम्। हिनस्ति सिंहानम्। ध्मायमानस्यायसो मलम्॥

टीका० — तन्मले लोहमले मण्डूरद्वयम्। खर्जूरवन्मण्डूरम्। 'शिघि आघ्राणे'। 'आनकच् शीङ्भियः' (उ० ३. ८२) इत्यनुवृत्तौ '(आ?) शिङ्घिधाञ्भ्यश्च' (उ० ३. ८३) इत्यानकच्। शिङ्घाणकः। पृषोदरादित्वात् कलोपः॥

**सर्वं स्यात् तैजसं लोहं**

क्षीर० — तेजसो विकारस्तैजसम्। हेमाद्यपि लोहम्। यदाहुः—

"सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।
सीसं च (च?त) मरं चैव अष्टौ लोहानि चक्षते॥"

**तु विशेषाल्लोहम्॥**

टीका० — सर्वं च तैजसं सुवर्णरजतताम्रारकूटकांस्यरङ्गसीसकायोरूपमष्टविधं लोहाख्यम्। तेजोऽस्मिन् विद्यत इति तैजसम्। 'अणूप्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम्' (वा० ५. २. १०३) इत्यण॥

**विकारस्त्वयसः कुशी॥ ९९॥**

क्षीर० — कुत्सितं श्यति कुशी फालः। यच्छाश्वतः— 'कुशो दर्भः कुशी फालः'। 'जानपदकुण्डगोण —' (४. १. ४२) इत्ययोविकारे[1] कुशाद् ङीष्॥

1. 'रे ङी' ख. पाठः.

टीका० — फालात्मकेऽयोविकारे कुशी। (तथा वन्दया ।वकारो!) 'जानपदकुण्डगोण —' (४. १. ४२) इत्यादिना ङीष्।

"कुशा वल्गा कुशी फालः कुशो दर्भः कुशं जलम्"

इति व्याडिः ॥

**क्षारः काचः**

क्षीर० — क्षरति गलति क्षारः। कचति काचः ॥

टीका० — काचाख्ये मृत्तिकाविशेषे क्षारद्वयम्। 'क्षर सञ्चलने' 'कच बन्धने'। घञ् ॥

**अथ चपलो रसः सूतश्च पारते।**

क्षीर० — चपलोऽस्थैर्यात्। रस्यते रसायनार्थिभी रसः। सूते हेमायुषी सूतः, शिवात् प्रसूतो वा। पिपर्ति पारतं, पारं तनोति वा ॥

टीका० — चपलचतुष्कं पारदे। शब्दत्रयं साधितम्।

"रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते"

इति तारपालः।

"पारतस्तु मनाक् पाण्डुः सूतस्तु स सितो मनाक्।
शीतः सर्वे तुल्यगुणाः स्मृताः"

इति शब्दार्णवः ॥

**गवलं माहिषं शृङ्गम्**

क्षीर० — गा अलति वारयत्यनेन गवलं, गवते वा ॥

टीका० — महिषशृङ्गे गवलः ॥

**अभ्रकं गिरिजामले ॥ १०० ॥**

क्षीर० — अभ्रप्रतिकृतिरभ्रकम्। गिरिजं च तदमलं च गिरिजामलम्। गौर्या मल इति धातुविदः ॥

टीका० — अभ्रकत्रयम् अभ्रके । गिरौ जातं गैरिजम् । अमल-
मुक्तम् ॥

**स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने ।**

क्षीर० — अज्यतेऽक्ष्यनेनाञ्जनं, यमुनास्रोतसो जातम् ।
रदेशे भवं सौवीरम् । कपोतवर्णं कापोताञ्जनम् । यमुनास्रोतसो जातं
। धन्वन्तरिस्तु —

"अञ्जनं मेचकं कृष्णं सौवीरं स्यात् सुवीरजम् ।
कापोतकं यामुनं च स्रोतोञ्जनमुदाहृतम्" ॥

टीका० — स्रोतोञ्जनचतुष्कं स्रोतोञ्जने । नदीस्रोतोभवत्वात् स्रोतो-
नं, राज्यन्धोपयुक्तम् । काञ्जिके सौवीरमुक्तम् । एतत् पार्वतेयम् । अल्पभेद-
त्वादभेदः । कपोताख्यमञ्जनं कपोताञ्जनम् । यमुनाभवं यामुनम् ॥

**तुत्थाञ्जनं शिखिग्रीववितुन्नकमयूरकम् ॥ १०१ ॥**
**कर्परी**

क्षीर० — तुदत्याक्षिरोगांस्तुत्थम् । शिखिग्रीवं मयूरग्रीवाभम् ।
वितुदति रोगान् वितुन्नकम् । मयूरभतिकृतिर्मयूरकम् । कल्पते रोगान्
जेतुं कर्परी ॥

**दार्विकाक्काथोद्भवं तुत्थरसाञ्जनम् ।**
**रसगर्भं ताक्ष्यशैलं**

दारुहरिद्राकाथोत्थं, तुत्थं च तद् रसाञ्जनम् । दार्वीरसस्य
गर्भो रसगर्भम् । ताक्ष्यशैले कुलूतायां भवम् । रसजातं रसा-
ख्यं च ॥

टीका० — तुत्थाञ्जनचतुष्कं पुषातुत्थाञ्जनमिति ख्याते । 'तुद व्यथने' ।

१. 'आम्र इति ख्याते । गि' ज., 'आह इति ख्याते । गि' क. पाठः. २.
'स्यतेऽञ्जन' ख. ग. घ. ङ. पाठः. ३. 'दीकर' क. ङ. पाठः. ४. 'का' ख. पाठः.

'पातृतुदिवचि—' (उ० २. ७) इत्यादिना क्थः। तुत्थं तदञ्जनं चेति तुत्थाञ्जनम्। मयूरकण्ठाभत्वाच्छिखिग्रीवम्। तुदेः क्तादि। वितुन्नकम्। तस्मिन् तुत्थे क्राथोद्भवे आवर्तिते कर्परीद्वयम्।

"तुत्थाञ्जनं क्राथोद्भवं कर्परीदार्विके स्त्रियौ"

इति रभसश्च। तुत्थ इति ख्याते तुत्थाञ्जनम्। नामद्वयमित्यन्यः। रसाञ्जनत्रयं रसाञ्जने॥

गन्धाश्मनि तु गन्धिकः॥ १०२॥

सौगन्धिकः

क्षीर० — गन्धोऽस्यास्तीति गन्धिको गन्धपाषाणः। गन्धकोऽयम्। सौगन्धिकं च॥

टीका० — गन्धाश्मत्रयं गन्धके। मत्वर्थीयठनि गन्धिक इत्य(प? पि) पाठः। तेन जयतीति ठकि सौगन्धिको ना।

"गन्धको गन्धपाषाणः पामघ्नश्च सुगन्धकः"

इति माधवः

चक्षुष्याकुलाल्यौ तु कुलस्थिका

क्षीर० — चक्षुषे हिता चक्षुष्या दृक्प्रसादाख्या। कुल कुलाली। कुले तिष्ठति कुलस्था कुलस्थप्रतिकृतिर्वा। लोकोक्तौ त कुल्या। आह च—

"कुलाली लोचनहिता दृक्प्रसादा कुलस्थिका"॥

टीका० — कुलस्थाकारप्रस्तरेऽञ्जनविशेषे चक्षुष्यात्रयम्। 'शरीराव यवाद् यत्' (५. १. ६) इति यति चक्षुष्या। कुलालीत्यर्थग्रहणम्। तेन कुम्भ कारीत्यपि।

१. 'त्थाञ्जनाञ्ज' ज. पाठः. २. 'न्ध', क. पाठः. ३. 'कं च ग' ख. पाठः. ४. 'न्ध' क. पाठः. ५. 'न्धी च' क. ग. घ. ङ. पाठः. ६. 'त्थि' ङ. पाठः. ७. 'स्थि का क' ख. पाठः. ८. 'स्थ' क. ग. घ. ङ. पाठः. ९. 'क' [illegible] पाठः.

"चक्षुष्या कुम्भकारी च कुलाली च कुलस्थिका"

इति रत्नमाला च ॥

**रीतिपुष्पं पुष्पक तत् पौष्पकं कुसुमाञ्जनम् ॥ १०३ ॥**

क्षीर० — रीतेर्ध्मायमानस्य पुष्पाभं मलं रीतिपुष्पम् । पुष्पप्रतिकृतिः पुष्पकम् । पक्षे स्वार्थेऽण् ॥

टीका० — रीतिपुष्पचतुष्कं कुसुमाञ्जने । रीतिः पित्तलं, तस्याः पुष्पं रजः, मलमिति यावत् । तथाच योगशतकव्याख्याने सनातनः — 'रीतिकायां ध्माय्यमानायां यदुत्पद्यते मलं, तत् पुष्पाञ्जनमि'ति । पुष्पकमित्येव नाम ॥

**पिञ्जरं पीतनं तालमालं च हरितालके ।**

क्षीर० — 'पिजि हिंसादौ' । पीयते पीतनं, पीतं वर्णं नयति वा । आलाति शोभामालम्, अलति भूषयति वा । हरेः पीतवर्णस्य तालं प्रतिष्ठास्मिन् हरितालं, हरितमलयति भूषयति वा । तालं च भीमवत् । यद् धन्वन्तरिः —

"हरितालं तु गोदन्तं पीतकं तटमण्डनम् ।
आलं च तालं जैरं च पिञ्जरं विस्रगन्धिकम् " ॥

टीका० — पिञ्जरपञ्चकं हरिताले ॥

**गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ॥ १०४ ॥**

क्षीर० — गिरेरिदं गैरेयम् । अर्थ्यते रसायनार्थिभिरर्थ्यम् । शिलातः स्रवज्जत्वाकृति शिलाजतु ॥

टीका० — गैरेयपञ्चकं शिलाजतुनि । एतच्च वानरैर्भक्षिते तद्विष्ठाया-मौत्तरापथिकैः प्राप्यते । 'इतश्चानिञः' (४. १. १२२) इति ढकि गैरेयम् । 'धर्मपथ्यर्थन्यायादनपेते' (४. ४. ९२) यकि अर्थ्यम् । पाषाणजातत्वादश्मजम् ॥

**बोलो गन्धरसप्राणपिण्डगोपरसाः समाः ।**

१. 'त' क. ग. पाठः.

क्षीर०—बोल्यते बोलः । 'बुल निमज्जने' । गन्धप्रधानो रसोऽस्य गन्धरसः । प्राणित्यनेन प्राणः । पिण्ड्यते द्रव्यान्तरैः । पिण्डसहत्वात् पिण्ड इत्येके । गां पाति रसोऽस्य गोपरसः । गोपो रसो भीमवत् । गोशशशाः समा इत्येके । गां श्यति गोशः । शशते शशः ॥

टीका०—बोलषट्कं गन्धरसे । प्राणपिण्डशशा उक्ताः । गोसो दन्त्यसः ॥

डिण्डीरोऽब्धिकफः फेनः

क्षीर०—डिण्डीति शब्दमीरयति डिण्डीरः । दादिर्वा[2] । डिमवत् । अब्धेः कफ इवाधिक्ये बहिःप्रसरादब्धिकफः सागरमलाख्यः । नद्यास्तूपचारात् । स्फायते फेनः ॥

टीका०—हिण्डीरत्रयं समुद्रफेने । 'हिडि गत्यनादरयोः' । 'कृगृशृ—' इत्यादिना बहुलवचनादीरनि हिण्डीर इति गोवर्धनीयोणादिवृत्तिः । रूपरत्नाकरे तु 'खादे रः, इड्(भ्य ?), हिण्डेरादेश्च ड.' इति रप्रत्यये इटि डत्वे च डिण्डीरः । 'टिण्डीरापिण्डपरिमण्डिते'त्यादिप्रयोगो बृहत्कथायाम् । पैशाचिके हि टवर्गस्यैव टकारादेशो भवति ॥

सिन्दूरं नागसम्भवम् ॥ १०५ ॥

क्षीर०—सिनोति बध्नाति चेतः सिन्दूरं, (सिन्दय?स्यन्द)ते वा । नागात् सीसात् सम्भवोऽस्य नागसम्भवम् । चीनपिष्टं गन्धपङ्कोऽपि । धन्वन्तरिस्तु—

"सिन्दूरं रक्तरेणुश्च नागरक्तं च नागजम् ।
शृङ्गारभूषणं श्रीमद्वसन्तोत्पलमण्डनम् ॥
हंसपादो हिङ्गुलके" ॥

टीका०—सिन्दूरद्वयं सिन्दूरे । 'स्यन्देः संप्रसारणं च' (उ० १. ६८) इत्यूरन् । सिन्दूरं दन्त्यसम् ॥

---

१. 'पंड संहतत्वा' ख. पाठः. २. 'र्व्याडिः । दाडि' च. पाठः. ३. 'ड्डि' ङ. पाठः. ४. '[illegible]' क. पाठः.

नागसीसकयोगेष्टवप्राणि

क्षीर० — न न गच्छति चलत्वान्नागम्। सिनोति बध्नाति पारतं सीसकं, सीसपत्रं च। हेम्नो वर्णोत्कर्षार्थं योगे श्लेषे इष्टं योगेष्टम्। उप्यते वप्रम्। हेम्नो वर्णोत्कर्षे बीजत्वात्॥

रङ्गवङ्गे त्रपु पिच्चटम्।

त्रपत इवाग्नेराशुद्रुतेस्त्रपु। पिच्च्यते कुट्यते पिच्चटम्। रज्यतेऽनेन रङ्गम्। वङ्गति द्रवति वङ्गम्। आलीनमपि॥

टीका० — नागषट्कं सीसके।

"श्रेष्ठे च कद्रुजे नागः क्लीबं सीसकरङ्गयोः"

इत्यनेकार्थः। सीसमेव सीसकं द्विदन्त्यसम्। योगेष्टमित्येकं नाम। 'वेद्रो ना सीसपत्रकम्' इत्यमरमाला।

"स्यादारकूटो रीतिश्च सीसकं त्रपु बन्धकम्।
नागं महाबलश्चैव योगेष्टं वसुनेष्टकम्॥"

इति व्याडिः।

"सीसपत्रं बहुमलं योगेष्टं पिष्टपिच्चटे।
...............रङ्गसीसकयोस्त्रपु॥"

इति रुद्रः। वसुवत् त्रपु। 'पिच्च कुट्टने'। 'शकादिभ्योऽटन्' (उ० ३. ८२) इत्यटन्। पिच्चटम्। रङ्गद्वयं रङ्गे। 'रगिवगी गत्यर्थौ'। पचादी। त्रपुचतुष्टयमेव रङ्ग इत्यन्यः॥

अथ पिचुस्तूलः

० — पिच्यते सूत्रमस्मात् पिचुः, पियति वा। 'पिचु गतौ'। तूल्यते फलात् तूलः। 'तूल निष्कर्षे'। निर्बीजकार्पासोऽयम्। 'रङ्गवङ्गेऽथ पिचु(रि?ल इ)ति प्रगृह्यसंज्ञाविस्मृतेः पाठः॥

ख. पाठः.

टीका० — पिचुद्वयं कार्पासादितूलके । 'पिचु मर्दने' । बाहुलकात् उः तुः सौत्रः । 'शूलादयश्च' इति क्तः दीर्घत्वं च । तूलः । पिचुतूल इति संघातोऽपि ।

"तूलः पिचुः पिचुतूलस्तर्कटी सूत्रतर्कुकः"

इति रभसः ॥

अथ कमलोत्तरम् ॥ १०६ ॥

**स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि ।**

क्षीर० — कमलेभ्य उत्तरं वर्णाधिक्यात् कमलोत्तरम् । कुस्यति कुसुम्भम् । 'कुसु श्लेषणे', कौ सुम्भ्यते (निकुम्भ्यते ?) वा । कुसिः सौत्रः (?) । वह्नेरिव शिखास्य वह्निशिखम् । महच्च तद् रजनं, रज्यतेऽनेनेति रजनरजकरजस्सूपसंख्यानान्नलोपः ॥

टीका० — कमलोत्तरचतुष्कं कुसुम्भे वस्त्ररञ्जनद्रव्ये । 'कुसि श्लेषणे' । 'कुसेरूलोम्भोमेदेताः कित्' । (उ० ४. १०८) इति उम्भः । कुसुम्भो दन्त्यसः । वह्नेरिव शिखास्येति वह्निशिखम् । 'रञ्जेः क्युन्' (उ० २. ८१) इति क्युन् । महारजनम् ॥

**मेषकम्बल ऊर्णायुः**

क्षीर० — काम्यते शीतार्तैः । 'कम्बलः कमनीयो भवती'ति निरुक्तम् । ऊर्णास्त्यस्योर्णायुः । 'ऊर्णाया युस्' (५. २. १२३) ॥

टीका० — मेषरोमरचिते कम्बले मेषकम्बलद्वयम् । 'ऊर्णाया युस्' (५. २. १२३) । ऊर्णायुर्दीर्घादिः ॥

**शशोर्णं शशलोमनि** ॥ १०७ ॥

क्षीर० — शशस्योर्णा शशोर्णम् । गृहस्थूणवत् क्लीबे ॥

टीका० — शशस्योर्णा लोम शशोर्णं क्लीबं शशलोमनि ॥

**मधु क्षौद्रं माक्षिकादि**

.... —महंतेर्ऽभलष्यत मधु पुष्परसाख्यम् । क्षुद्राभिर्मक्षिकाकृतम् । 'क्षुद्राभ्रमर —' (४. ३. ११९) इत्यञ् । आदिशब्दात् पौत्तिकभ्रामरादि । अगणितोऽवान्तरभेदो गजनिमीलिकयैव । यन्निमिः —

"माक्षिकं तैलवर्णं स्याद् घृतवर्णं तु पौत्तिकम् ।
विज्ञेयं भ्रामरं श्वेतं क्षौद्रं तु कपिलं मतम्" ॥

टीका० —मधुशब्देन क्षौद्रमुच्यते माक्षिकादि च । आदिना भ्रामरवाटरपौत्तिकादि । क्षुद्राभिः कृतं क्षौद्रम् । 'क्षुद्राभ्रमरवटरपादपादञ्' (४. ३. ११९) इत्यञ् । मक्षिकया कृतं माक्षिकम् । एवं सारघम् । 'संज्ञायाम्' (४. ३. ११७) इत्यण् ॥

मधूच्छिष्टं तु सिक्थकम् ।

क्षीर० —मधुना उच्छिष्यते त्यज्यते मधूच्छिष्टम् । सिञ्चति सिक्थकम् ॥

टीका० —मधूच्छिष्टद्वयं सिक्थ इति ख्याते । 'षिच क्षरणे' । पातृतुदिवचिरिचिसिचिभ्यः क्थन् (उ० २. ७) । ततः स्वार्थे कः ॥

मनश्शिला मनोगुप्ता मनोह्वा नागजिह्विका ॥ १०८ ॥

क्षीर० — मनोवाच्या[2] शिला । मनश्शब्देन हूयते मनोह्वा । नागजिह्वामतिकृतिर्नागजिह्विका । शिला च ॥

टीका० — मनश्शिलाचतुष्टयं मनश्शिलायाम् ॥

नैपाली कुनटी गोला

क्षीर०—नेपालदेशे भवा मनश्शिला नैपाली द्विसंज्ञा । अभेदान्नेपाली[3] वा । कौ नटति कुनटी । गाः लाति गोला, गुडति वा । सप्तैका ॥

1. 'ध' ख पाठः. 2. 'च्या । म' क. ग. घ. ङ. पाठः. 3. 'ली । कौ' क. ङ. पाठः.

टीका० — नेपालदेशजा कुनटी मनश्शिला गोलाख्या। सप्तकमेव [illegible]
शिलायामित्यन्वः। तथाच श्लोकार्धपर्याये माधवः —

"मनश्शिला मनोज्ञा च नैपाली कुनटी शिला"

इति॥

यवक्षारो यवाग्रजः।

पाक्यः

क्षीर० — दग्ध्वा यवाङ्कुराज्जन्यते यवक्षारः। पचनीयः पाक्यः।

टीका० — यवक्षारत्रयं यवक्षारे। पचेर्ण्यति पाक्यः॥

अथ सर्जिकाक्षारः कापोतः सुखबन्धकः॥१०९॥

सौवर्चलं स्याद् रुचकं

क्षीर० — रुच्यते दीप्यते जाठरोऽग्निरनेन रुचकम्। क्षारप्रसङ्गात् पुनरुक्तम्। एवं ग्रन्थिकप(त ?त्रा)ङ्गादि॥

टीका० — सर्जिकाक्षारपञ्चकं सर्जिकाक्षारे। लवणप्रस्तावे तु अत्रैव सौवर्चलनामोक्तम्। सत्रयं दन्त्यम्॥

"कापोतः सर्जिका सार्जिः सुघ्निका च सुवर्चिका।
रुचकं कृष्णलवणमक्षं सौवर्चलं च तद्॥"

इति श्लोकपर्याये माधवः॥

त्वक्क्षीरा वंशरोचना

क्षीर० — त्वचो वंशात् क्षीरमस्यास्त्वक्क्षीरा त्वक्क्षीरी च। वंशोत्था रोचना वंशरोचना। आह च —

"स्याद् वंशरोचना वांशी तुकाक्षीरी तुका शुभा।
त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी"॥

टीका० — त्वक्क्षीराद्वयं[2] वंशरोचनायाम्। एतयोर्भेदेऽप्येकत्व[3]

1. 'ति मा', 2. 'वं रो', 3. 'दे एकत्वम्॥' ख. पाठः.

**शिग्रु च[1] श्वेतमरिचं**

क्षीर० — शिनोति तैक्ष्ण्याच्छिग्रु । सौभाञ्जनबीजम् ॥

टीका० — शोभाञ्जनबीजे शिग्रु[2]जद्वयम् ॥

**मोरटं मूलमैक्षवम् ॥ ११० ॥**

क्षीर० — मुरति मोरटम् । 'मुर संवेष्टने' ॥

टीका० — इक्षुमूले मोरटम् । 'मुर खण्डने' । 'शकादिभ्योऽटन्' (उ० ४. ८२) ॥

**ग्रन्थिकं पिप्पलीमूलं चट[3]काशिर इत्यपि ।**

क्षीर० — ग्रन्थिप्रतिकृति ग्रन्थिकम् । चट[4]काशिरोरूपत्वाच्चट[5]का-शिरः ॥

टीका० — ग्रन्थिकचतुष्कं पिप्पलीमूले ।

"शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति "

इति रभसः ॥

**गोलोमी भूतकेशो ना**

क्षीर० — गोरिव लोमान्यस्या गोलोमी । भूताः केशा अस्य भूतकेशः, भूतस्येव केशा अस्य वा । ना पुमान् ॥

टीका० — भूतकेशा इति ख्याते तृणे गोलोमीद्वयम् । गोलोमी ङ्यन्ता ॥

**पत्राङ्गं रक्तचन्दनम् ॥ १११ ॥**

क्षीर० — पत्राण्यङ्के पत्राङ्गम् ॥

---

१. 'स्तु' ख. पाठः. २. 'ग्रुद्र' च. ज. पाठः. ३. ४. ५. 'टि' क. पाठः.

टीका० — पत्राङ्गेति ख्याते रक्तसारे रक्तचन्दनसदृशे पत्राङ्गद्वयम् ॥

**त्रिकटु त्र्यूषणं व्योषं**

क्षीर० — त्रीणि कटून्यूषणानि च शुण्ठीमरिचपिप्पल्याख्यानि समाहृतानि। विशेषेणौषति दहति व्योषम्। कटुत्रिकं च ॥

टीका० — त्रिकटुत्रयं त्रिकटौ।

"त्र्युषणं त्रिकटु व्योषं रुचकः सौवर्चलः पुंसि"

इति रत्नकोशार्यापाठाद्ध्रस्वादि त्र्युषणम्। 'अयस्तिलत्र्यूषणकोलभोगै'रित्यादौ[1] तु योगशतके दीर्घादिः। 'उष दाहे'। विपूर्वः। व्योषम् ॥

**त्रिफला तु फलत्रिकम् ॥ १११½ ॥**

क्षीर० — त्रयाणां फलानां हरीतक्यामलकविभीतकानां समाहारस्त्रिफला। अजादित्वाट्टाप्। वरा च ॥

इति वैश्यवर्गः।

टीका० — हरीतकीविभीतक्यामलकानि[2] फलत्रयं त्रिफला। अजादित्वाट्टाप्। 'तृफ तृम्फ तृप्तौ'। 'कलप् तृफश्च' (उ० १. १०९) इति कलप्प्रत्ययेन तृफलेत्यपि। 'त्रिफला तृफलापि च'ति त्रिकाण्डशेषश्च। आहिताग्न्यादेराकृतिगणत्वात् परनिपातविकल्पे फलत्रिकम् ॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे

वैश्यवर्गः।

1. 'दिना तु' क. ज. पाठः. २. 'तौ तृ' क. ज. ढ. पाठः.

# अथ शूद्रवर्गः ।

**शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।**

क्षीर० — शु पूजितं कृत्वा उन्दन्ति सुरान् क्लेदयन्ति शूद्राः, शीयन्ते वा । वृषं लुनन्ति वृषलाः । नारदस्तु —

"वृषो हि भगवान् धर्मस्तस्य यः कुरुते लयम् ।
वृषलं तं विजानीयात्" ॥

जघन्याज्जाता जघन्यजाः । यच्छ्रुतिः— 'पद्भ्यां शूद्रो अजायत' । पज्जाः पद्याश्च ॥

टीका० — शूद्रचतुष्कं शूद्रे । 'शुच शोके' । 'शुचेर्दश्च' (उ० २. २१) इति रक्, दश्चान्तादेशः, उपधादीर्घत्वं च । शूद्रः । अवरवर्णः अधमवर्णः । 'वृषु सेचने' । 'वृषादिभ्यः कलच्' (उ० १. १११) । वृषलः । वृषं धर्मं लुनातीति वा सः । ब्रह्मणो जघन्याङ्गे पादे जाता जघन्यजाः ॥

**आ चण्डालात् तु सङ्कीर्णा अम्बष्ठकरणादयः ॥ १ ॥**

क्षीर० — चण्डालो ब्राह्मण्यां शूद्राज्जातोऽत्र । संकीर्णाः प्रतिलोमानुलोमजत्वान्मिश्राः । यत् स्मृतिः —

"विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम् ।
जातोऽम्बष्ठस्तु शूद्रायां निषादः पारशवोऽपि च ॥
माहिष्योग्रौ प्रजायेते विट्छूद्राङ्गनयोर्नृपात् ।
शूद्रायां करणो वैश्याद् विना त्वेष विधिः स्मृतः ॥
ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद् वैदेहकः स्मृतः ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥

१. 'परिकीर्तितः । मा', २. 'करणात्' क. पाठः.

क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥
माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥"

टीका० — चण्डाल वक्ष्यति । तं व्याप्य वक्ष्यमाणाः करणादयः संकीर्णाः शूद्रजातयः ॥

क्षीर० — तदाह —

**शूद्राविशोस्तु करणः**

सिंहावलोकितेन सुत इत्येव । शूद्रायां वैश्याज्जातः । करोति प्रेष्यकर्माणि करणः । ल्युट् । एवं सर्वत्राध्याहार्यानुषङ्गादि ॥

टीका० — 'शूद्राविशोरि'त्यादिभिः पञ्चम्यन्तैः प्रत्येकं सुत इति वक्ष्यमाणः सम्बध्यते । शूद्रायां वैश्याज्जातः सुतः करणो लिपिलेखनवृत्तिः ॥

**अम्बष्ठो वैश्याद्विजन्मनोः ।**

क्षीर० — अम्बायां तिष्ठत्यम्बष्ठः । 'अम्बाम्बगोभूमि —' (८. ३. ९७) इति षत्वम् । ह्रस्वो निर्देशात् । द्विजन्मात्र विप्रः । वैश्येति । 'यञश्च' (४. १. १६) इति ङीब् नास्ति, लक्ष्यात् ॥

टीका० — वैश्यायां ब्राह्मणाज्जातोऽम्बष्ठश्चिकित्सावृत्तिः ॥

**शूद्राक्षत्रिययोरुग्रः**

क्षीर० — 'शूद्रा चामहत्पूर्वा —' (वा० ४. १. ४) इत्यजादित्वाट्टाप् । उचत्युग्रः । 'उच समवाये' ॥

टीका० — शूद्रायां क्षत्रियाज्जात उग्रः ॥

**मागधः क्षत्रियाविशोः ॥ २ ॥**

क्षीर० — मगध्यति स्तौति मागधः ॥

टीका० — क्षत्रियायां वैश्याज्जातो मागधः स्तुतिक्रियावृत्तिः ॥

**माहिष्योऽर्याक्षत्रिययोः**

क्षीर० — महिष्यां साधुर्माहिष्यः । स ह्यन्तःपुररक्षितेति स्मार्ताः । अर्येति वैश्या ॥

टीका० — वैश्यायां क्षत्रियाज्जातो माहिष्यः ॥

**क्षत्तार्याशूद्रयोः सुतः ।**

क्षीर० — क्षदति द्वाःस्थत्वात् क्षत्ता । 'तृंस्तृचौ शंसिक्षदादिभ्यः—' (उ० २. ९४) इत्यनिट् । क्ष(त्त[1]दाति)स्त्वौणादिकपाठात् ॥

टीका० — शूद्रात् क्षत्रियायां जातः क्षत्ता । अर्या स्वामिनी । सा चेह क्षत्रियेति बोद्धव्यम् । क्षत्रियस्यैव क्षितिस्वामित्वं, सामान्यशब्दस्यार्थाद् विशेषोऽवगम्यते । यथा 'अञ्जलिना सूर्यमुपतिष्ठेत' 'अञ्जलिना पयः पिबती'त्यादावर्थानुरोधात् पाणिसन्निवेशविशेषः प्रतीयते, तथा ।

"क्षत्ता शूद्रात् क्षत्रियाजे सारथिप्रतिहारयोः" ॥

**ब्राह्मण्यां क्षत्रियात् सूतः**

क्षीर० — सुवति प्रेरयत्यश्वान् सूतः ॥

टीका० — ब्राह्मण्यां क्षत्रियाज्जातः सूतः । हेतौ पञ्चमी ।

"सूतः स्यात् क्षत्रियासूनुः शूद्राज्जातोऽथ वर्धकिः"

इति त्वमरमाला ॥

**तस्यां वैदेहको विशः ॥ ३ ॥**

क्षीर० — ब्राह्मण्यां वैश्याज्जातो वैदेहको वणिक्कर्मा ॥

टीका० — ब्राह्मण्यां वैश्याज्जातो वैदेहकः ।

"वैदेहकं तु शूद्राज्जातं वैश्यासुतं ब्रुवते"

इति नाममाला ॥

१. 'त्ता शूद्रः । क्ष' ङ. पाठः.

**रथकारस्तु माहिष्यात् करण्यां यस्य सम्भवः।**

**क्षीर०—माहिष्याद् वैश्याक्षत्रिययोर्जातात् करण्यां शूद्रावैश्यजातायां जातो रथकारस्तक्षा ॥**

टीका०—करण्यां माहिष्याज्जातो रथकारः ॥

**स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥**

**क्षीर०—चण्डमुग्रं कर्मालति पर्याप्नोति चण्डालः ॥**

टीका०—ब्राह्मण्यां शूद्रसुतश्चण्डालः। 'चडि कोपे'। 'पतिचण्डिभ्यामालञ्' (उ० १. १२२)। चण्डालः। चण्डालात् पूर्वं सर्वत्र पाणिग्रहणपूर्वकमिति योज्यम्। पाणिग्रहणव्यतिरेकेणापि प्रमादतो जातः करणादिरेव। गर्हितः स इति परं विशेषः ॥

**कारुः शिल्पी**

**क्षीर०—करोति कारुः ॥**

टीका०—कारुद्वयं शिल्पिनि। करोतेः 'कृवापा—' (उ० १. १) इत्यादिना उण्। कारुः ॥

**संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः।**

**क्षीर०—समानजातीयकारुसङ्घः श्रीयत इति श्रेणिः स्त्रीपुंल्लिङ्गः ॥**

टीका०—सजातीयानां शिल्पिनां सङ्घातः श्रेणिः पुंस्त्रियौ व्युत्पादिता ॥

**कुलकः स्यात् कुलश्रेष्ठी**

**क्षीर०—कुलं का(र?)यतीति कुलकः। कुलिक इत्येके। श्रेण्यादौ श्रेष्ठार्थः। कुले वणिग्वृन्दे श्रेष्ठत्वमस्त्यस्य कुलश्रेष्ठी ॥**

टीका०—शिल्पिनां कुलेषु प्रधाने कुलिकद्वयम्। 'अत इनिठनौ' (५. २. ११५) इति ठनि कुलिकः। कुलश्रेष्ठी नान्तः। 'कुलश्रेष्ठी चे'ति त्रिकाण्डशेषः। कुलयोगादर्शआद्यचि कुलोऽपीत्यन्यः ॥

१. 'लः' ठ. पाठः.

**मालाकारस्तु मालिकः ॥ ५ ॥**

क्षीर० — 'तदस्य पण्यम्' (४. ४. ५१) इति ठक् ॥

टीका० — मालाकारद्वयं मालाकारे । कर्मण्यणि मालाकारः । मालानिर्माणं शिल्पमस्येति मालिकः । 'शिल्पम्' (४. ४. ५५) इति ठक् ॥

**कुम्भकारः कुलालः स्यात्**

क्षीर० — कुलानि गृहाण्यलति कुलालः, कुं मृदं लालयति मृद्नाति वा ॥

टीका० — कुम्भकारद्वयं कुम्भकारे । मालाकारवत् कुम्भकारः । कुं लालयतीति कुलालः ॥

**पलगण्डस्तु लेपकः ।**

क्षीर० — पलेन मांसेनेव मृदादिना गण्ड(ते[1]ति) सचते पलगण्डो लेप्यकृत् ॥

टीका० — पलगण्डद्वय लेप्यकरे । लिपेर्ण्वुलि लेपकः ॥

**तन्तुवायः कुविन्दः स्यात्**

क्षीर० — तन्तून् वयति तन्तुवायः[2] । 'ह्वावामश्च' (३. २. २) इत्यण् । कुं विन्दति कुविन्दः ॥

टीका० — तन्तुवायद्वयं तन्तुवाये । वेञो 'ह्वावामश्च' (३. २. २) इत्यण् । तन्तुवायः । डुवपेः तन्तुवापशब्दोऽप्यत्र[3] । 'कुपेर्वश्च' (उ० ४. ८६) इति किन्दच् वश्चादेशः । कुविन्दः ॥

**तुन्नवायस्तु सौचिकः ॥ ६ ॥**

क्षीर० — तुन्नं विद्धं वयति तुन्नवायः । सूच्यादि शिल्पमस्य सौचिकः ॥

१. 'ह्र' ग. घ. ङ. पाठः. २. 'यः । कुं' क. पाठः. ३. 'पोऽपि । कु' ठ. पाठः.

टीका० — तुन्नवायद्वयं सूचिकर्मोपजीविनि। तुन्नं त्रुटितं वयतीति तुन्नवायः। मालिकवत् सौचिकः। दन्त्यादिः॥

**रङ्गाजीवश्चित्रकरः**

**क्षीर० — रङ्गाणि रक्तपीतादीन्याजीवति रङ्गाजीवः। चित्रं करोति 'दिवाविभा—' (३. २. २१) इति टः॥**

टीका० — रङ्गाजीवद्वयं चित्रकरे। रज्यते शुक्लं रक्ततामापद्यतेऽस्मिन्निति रङ्गो हरितालमनश्शिलादिः, तमाजीवतीति रङ्गाजीवः। दिवाकरवच्चित्रकरः॥

**शस्त्रमार्जोऽसिधावकः।**

**क्षीर० — शस्त्रं मार्ष्टि तेजयति शस्त्रमार्जः। असिं धावयति शोधयति असिधावकः॥**

टीका० — शस्त्रमार्जद्वयम् असिधावके[2]। शस्त्रं मार्ष्टि शोधयतीति शस्त्रमार्जः। अणन्तात् स्वार्थे कनि असिधावकः॥

**पादूकृच्चर्मकारः स्यात्**

**क्षीर० — पादूः[3] पादत्राणानि करोति[4] पादूकृत्। पादकृदित्येके॥**

टीका० — पादुकृद्द्वयं चर्मकारे। पादूमुपानहं करोतीति क्विप्। 'इको ह्रस्वोऽङ्यो गालवस्य' (६. ३. ६१) इति ह्रस्वः। पादुकृत्। चर्म करोति विकारतामापादयतीति अणि चर्मकारः॥

**व्योकारो लोहकारकः॥ ७॥**

**क्षीर० — विशेषेणोकं समवायमियर्ति व्योकारः। 'व्यो इत्ययः-पर्याय' इति श्रीभोजः॥**

टीका० — व्योकारद्वयं लोहकारे[7]।

१. 'वः। श' क. ग. पाठः. २. 'सिआर इति ख्याते। श' ज. पाठः. ३. 'दूं कृणाति' क. पाठः. ४. 'ति वा पा' क. ग. पाठः. ५. 'पदू-कृ' ख. पाठः. ६. 'त्सेवमयः' क. पाठः. ७. 'कर्मद्य' ज. पाठः.

"व्योकारोऽयस्कारः क(र्मका[१]र्मा)रो लोहकारः स्याद्"

इति रत्नकोशः। अन्ये तु आकरोत्थं लोहं ध्मात्वा यो लोहं संस्करोति स लोहकारो व्योकारश्च। कोशलादावनेनैव नाम्ना प्रसिद्धः। व्यो इति लोहबीजस्य प्रसिद्धिः। तथाच हर्षचरिते आकरोत्थलोहसंस्कारिणि विन्ध्याटवीवर्णनायाम् 'ऊष्माणं क्वचिदन्यत्र ग्राहयन्तमिवाङ्गारीयदारुसङ्ग्रहादिह व्योकारैः' इति प्रयोगः। यस्तु संस्कृतं लोहं खड्गनाराचादिविकारमापादयति, स कर्मकारः। एतच्च क्रियाभेदमात्रम्। जातिरेकैव ॥

**नाडिन्धमः स्वर्णकारः कलादो रुक्मकारके।**

**क्षीर॰**—नाडिं धमति नाडिन्धमः। 'नाडीमुष्ट्योश्च[२]' (३. २. ३०) इति खश्[३]। कला आदत्ते कलादः। कलं सुवर्णकालिकाम् आद्यत्याखण्डयति वा। अत एव कलं धौतं यत्रेति कलधौतं रुक्मम्। हेममुष्टिकोऽपि ॥

**टीका॰**—नाडिन्धमचतुष्कं स्वर्णकारे। नाडी नलीति[४] ख्याता, तां मुखवायुना धमति शब्दयतीति 'नाडीमुष्ट्योश्च'। (३. २. ३०) इति खश्। नाडिन्धमः। कलां स्वर्णशिल्पमात्तवान् स्वीकृतवानिति[५] कलादः। मूलविभुजादेराकृतिगणत्वात् कः ॥

**स्याच्छाङ्खिकः काम्बविकः**

**क्षीर॰**—कम्बुघटनं शिल्पमस्य काम्बविकः ॥

**टीका॰**—शाङ्खिकद्वय शाङ्खिके। 'तदस्य पण्यम्' (४. ४. ५१) इति ठक्। शाङ्खिकः। काम्बविके तु आरअन्तात् पूर्ववट्ठक्। अन्यथा 'इसुसुक्तान्तात् कः' (७. ३. ५१) इति कः स्यात् ॥

**शौल्विकस्ताम्रकुट्टकः[६] ॥ ८ ॥**

**क्षीर॰**—शुल्वं ताम्रम्। कुट्टयति[७] छोदयति शौल्विकः। मणिकारो वैकटिकः ॥

१. 'शश्च। अ' क. ख. ग. घ. ठ पाठः २ 'णि' ख पाठः. ३. 'ति। अ' क. ग. ख. ङ. पाठः ४. नाली। तां, ५. 'निति' ठ., 'न् हीत' क. पाठः. ६. 'कः॥ शौ' क. ग. पाठः ७. 'ति। म' ख. पाठः ८ 'तनिकः' ग. पाठः.

टीका० — शौल्बिकद्वयं कांस्यकारे। शुल्बं ताम्रं, तत्कुट्टनं शिल्पमस्येति शौल्बिकः। ताम्रं कुट्टयतिच्छेदयतीत्यणि ताम्रकुट्टकः॥

**तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्।**

क्षीर० — तक्ष्णोति तक्षा। वर्धयतीति वर्धकिः। 'वर्ध छेदने'। त्वक्षति तनूकरोति दारूणि त्वष्टा। काष्ठं तक्ष्णोति काष्ठतट्[1]। स्थपतिश्च॥

टीका० — तक्षपञ्चकं वर्धकौ। 'तक्षू त्वक्षू तनूकरणे'। कनिन्। तक्षा। त्वक्षेरेव तृच्। 'स्कोः —' (८. २. २९) इत्यादिना कलोपः। त्वष्टा। काष्ठं तक्षतीति[2] क्विपि काष्ठतट्॥

**ग्रामाधीनो ग्रामतक्षः**

क्षीर० — ग्रामस्यायत्तस्तक्षा[3] ग्रामतक्षः। 'ग्रामकौटाभ्यां च तक्ष्णः'। (५. ४. ९५) इति टच्॥

टीका० — ग्रामवर्धकौ ग्रामाधीनद्वयम्। 'ग्रामकौटाभ्यां च तक्ष्णः' (५. ४. ९५) इति समासान्ताचि ग्रामतक्षः॥

**कौटतक्षोऽनधीनकः॥ ९॥**

क्षीर० — कुट्यां भवः कौटः स्वतन्त्रः। नास्ति अधि उपरि इनः स्वाम्यस्यानधीनकः॥

टीका० — यस्तु स्वकर्माजीवी ग्राम एव व्यवस्थितः, तत्र कौटतक्षद्वयम्। कुट्यां भवः स्थितः कौटः। ततः कर्मधारयः। पूर्ववत् समासान्तः॥

**क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः।**

क्षीर० — क्षुरमस्त्यस्य[4] क्षुरी। मुण्डयति मुण्डी। दिवा कीर्त्यते दिवाकीर्तिः। रात्रौ क्षुरकर्मनिषेधात्। नाप्यते नापितः। नञ् प्रकृत्या। अन्तम् अवस्यत्यन्तावसायी। चण्डालकोऽपि। 'संवाहकोऽङ्गमर्दः स्यात्'॥

टीका० — क्षुरिपञ्चकं नापिते। मुण्डवान् मुण्डी। दिवा दिवसे कीर्ति-[5]

१. 'ट्। ग्रा', २. 'ति का', ३. 'य तक्षा', ४. 'स्य। मु', ५. 'ति। दि' क. पाठः.

र्व्यापारोऽस्येति दिवाकीर्तिः । 'नञ्याप्नोतेरिट् च' (उ० ३. ८७) इति तन् इडागमश्च । नापितः । अन्तावसायी णिन्यन्तः ॥

**निर्णेजकः स्याद् रजकः**

क्षीर० — निर्णेनेक्ति[1] क्षालयति निर्णेजकः[2] । रञ्जयति रजकः । 'शिल्पिनि ष्वुन्' (३. १. १४५) । रजनरजकरजस्सूपसंख्यानान्नलोपः । क्वचिद् य एव धावकः स एव रजकः । स्मार्ते तु भिन्नावेतौ ॥

टीका० — निर्णेजकद्वयं रजके । 'णिजिर शौचे' । ण्वुल । 'उपसर्गादसमासेऽपि णोपदेशस्य' (८. ४. १४) इति णत्वम् । निर्णेजकः । रजक इत्यत्र 'शिल्पिनि ष्वुन्' (३. १. १४५) ॥

**शौण्डिको मण्डहारकः ॥ १० ॥**

क्षीर० — शुण्डा पानमदस्थानं सुरा वा पण्यमस्य शौण्डिकः । मण्डमच्छसुरां हरति मण्डहारकः । सुराजीवी कल्यपालाख्यः ॥

टीका० — शौण्डिकद्वयं शौण्डिके । शुण्डा पानस्थानम् । तात्स्थ्यात् सुरापि शुण्डा । 'तदस्य पण्यम्' (४. ४. ५१) इति ठकि शौण्डिकः । तालव्यादिः । अन्नसंबद्धं मण्डमग्रं हरति उद्धरतीति मण्डहारः ॥

**जाबालः स्यादजाजीवः**[4]

क्षीर० — जवमलति जवालश्छागः, तस्यायं जावालः । अजापालापभ्रंशोऽयम् ॥

टीका० — जाबालद्वयं छागीवाले । अजां पालयतीति पृषोदरादित्वादकारलोपो बत्वं च । जाबालः । 'अजाबालमजाजीविमि'ति रत्नमाला ॥

**देवाजीवस्तु देवलः ।**

क्षीर० — देवान् लाति देवलः ॥

टीका० — भोजनकोति ख्याते देवाजीवद्वयम् । देवान् जीविकार्थे लातवान् स्वीकृतवानिति कः । देवलः ॥

१. 'क्ति नि', २. 'कः क्षालयिता । र' क. पाठः. ३. 'न् । पूर्वो वत्रधा'. पाठः. ४. 'वी' क. ग. घ. पाठः. ५. 'वितामि' ज. पाठः.

**स्यान्माया शाम्बरी**

**क्षीर० — मात्यस्यां विश्वं माया । शम्बराख्यस्यासुरस्येयं शाम्बरी । शं वृणोति शंवरो व्याज इति तु युक्तम्[1]। इन्द्रजालं कुसृतिः कुहकश्च ॥**

**टीका० —** मायाद्वयम् इन्द्रजालादिमायायाम् । माति छायावद् यः । माया । शम्बरासुरेण प्रणीतत्वान्मायायाः 'तस्येदम्' (४. ३. १२०) इत्यणि शाम्बरी[2] । शकार इति निरूपितं प्राक् ॥

**मायाकारस्तु प्रातिहारिकः ॥ ११ ॥**

**क्षीर० — प्रतिहारो[3] व्याजः प्रयोजनमस्य प्रातिहारिकः ॥**

**टीका० — मायाकारद्वयमैन्द्रजालिके** । प्रातिपूर्वाद् हृञो ण्वुलि प्रातिहारको दीर्घादिः ।

"मायाकारकसंज्ञः स्यात् प्रतिहारक इरम्मदोऽग्निः"

इति वररुचेरार्यायां[4] ह्रस्वादिरपि ॥

**शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।**
**भरता इत्यपि नटाः**

**क्षीर० — शिलालिना कृशाश्वेन च प्रोक्तं नटसूत्रमधीते शैलाली कृशाश्वी च । 'पाराशर्यशिलालिभ्यां —' (४. ३. ११०) इति णिनिः। 'कर्मन्दकृशाश्वादिनिः' (४. ३. १११) । शिलूषस्यर्षेरपत्यं शैलूषः। भरतस्यापत्यम् । बिदाद्यञ् । तस्य बहुत्वे 'यञञोश्च' (२. ४. ६४) इति लुक् । नटति नटः ॥**

**टीका० — शैलालिषटकं नटे** । शिलालिना प्रोक्तं नटसूत्रमधीयत इति शैलालिनः । 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४. ३. ११०) इति

१. 'ति यु' ख. पाठः. २. 'री माया । श' ठ. पाठः. ३. 'रण व्या' क. ग. पाठः. ४. 'यया ह' ज. पाठः.

णिनिः। जायया जीवन्तीत्यचि जायाजीवाः। कृशाश्वप्रोक्तं नटसूत्रमधीयत इति कृशाश्विनः। 'कर्मन्दकृशाश्वादिनिः' (४. ३. १११)। भरतशिष्यतया भरताः। 'तस्येदम्' (४. ३. १२०) इत्यण्। संज्ञापूर्वकत्वान्न वृद्धिः। भरतगोत्रतया उत्साद्यत्रि बहुत्वलुगन्तो वा। एकद्वित्वयोस्तु भारतः भारतौ। 'नट नृत्तौ'। पचाद्यच्। नटाः॥

**चारणास्तु कुशीलवाः॥ १२॥**

**क्षीर० — चरणस्य भ्रमणस्यायं चारणः, यतो देशान्तरभ्रमणाज्जीवति। कुत्सितं शीलं वाति कुशीलवः॥**

**टीका०** — चारणद्वयं छात्रकथकादिषु। दिगन्तेषु कीर्तिं चारयन्ति प्रापयन्तीति ल्युटि चारणाः। कुत्सितं शीलमस्येति कुशीलवः। वप्रकरणे'* 'अन्यत्रापि दृश्यते' (वा० ५. २. १०९) इति वः॥

**मार्दङ्गिका मौरजिकाः**

**क्षीर० — मृदङ्गमुरजवादनं शिल्पमस्य मार्दङ्गिकः, मौरजिकः॥**

**टीका० — मुरजवादके** मार्दङ्गिकद्वयम्। 'शिल्पम्' (४. ४. ५५) इति ठक्॥

**पाणिवादास्तु पाणिघाः।**

**क्षीर० — पाणिं हन्ति पाणिघः। 'पाणिघताडघौ शिल्पिनि' (३. २. ५५) इति साधुः॥**

**टीका०** — ये पाणिनैव पाण्यभ्यन्तरे मुरजादिवाद्यमुत्पादयन्ति तत्र पाणिवादद्वयम्। 'पाणिघताडघौ शिल्पिनि' (३. २. ५५) इति निपातनात् पाणिघाः॥

**वेणुध्माः स्युर्वैणविकाः**

१. 'ङ्गवा', २. 'कः॥' क. ग. पाठः.

* 'अन्येभ्योऽपि दृश्यते' इति मुद्रितवार्त्तिकपाठः

क्षीर० — वेणून् धमति वेणुध्मः[1]। वेणुर्वंशिका शिल्पमस्य ॥

टीका० — वेणुध्मद्वय[2] वेणुवादके। वेणुं धमति शब्दयतीति कः। वेणुध्मः। वेणुविकारो वैणवम्[3]। तद्वादनं शिल्पमस्येति ठकि वैणविकः ॥

**वीणावादास्तु वैणिकाः ॥ १३ ॥**

क्षीर० — वीणावादनं शिल्पमस्य वैणिकः ॥

टीका० — वीणावादके वीणावादद्वयम् ॥

**जीवान्तकः शाकुनिकः**

क्षीर० — शकुनिं हन्ति शाकुनिकः। 'पक्षिमत्स्यमृगान् हन्ति' (४. ४. ३५) इति ठक् ॥

टीका० — वर्तनार्थं पक्षिघातके जीवान्तकद्वयम्। जीवानां पक्षिणामन्तको जीवान्तकः। 'पक्षिमत्स्यमृगान् हन्ति' (४. ४. ३५) इति ठकि शाकुनिकः ॥

**द्वौ वागुरिकजालिकौ।**

क्षीर० — एकार्थाविति शेषः। वागुरया मृगबन्धनरज्ज्वा चरति वागुरिकः। जालेन जालिकः ॥

टीका० — जालेन मृगहन्तरि वागुरिकद्वयम्। वागुरा मृगबन्धनजालम्। तया चरतीति वागुरिकः। 'पर्पादिभ्यः ष्ठन्' (४. ४. १०)। जालिकः ॥

**वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥**

क्षीर० — वितंस्यते वितंसः प्राणिबन्धोपकरणम्। कूटं कूटयन्त्रम्। ताभ्यां चरति जीवति वेति ठक्। मांसं पण्यमस्य मांसिकः। सौनिकार्था इत्येके ॥

१. 'ध्मा वंशिकः ॥' ख. पाठः. २. 'वांशिकाः इति ख्याते वेणुध्मद्वयम्।', ३. 'वम्। वेणु' ज. पाठः.

टीका० — कौटिकादिषु वैतंसिकत्रयम् । मृगपक्ष्यादिबन्धनोपायो वीतंसः । दन्त्यान्तः । मृगपक्ष्यादिबन्धनयन्त्रं कूटम् । ताभ्यां चरतीति ठक् । वैतंसिकः कौटिकः । 'तदस्य पण्यम्' (४. ४. ५१) इति ठकि मांसिकः ॥

**भृतको भृतिभुक् कर्मकरो वैतनिकश्च सः ।**

क्षीर० — भ्रियते स्म भृतकः । स्वार्थे कन् । भृतिं वेतनं भुङ्क्ते भृतिभुक् । वेतनेन जीवति वैतनिकः । 'वेतनादिभ्यो जीवति' (४. ४. १२) इति ठक् ॥

टीका० — वेतनोपजीविनि कर्मकरे भृतकचतुष्कम् । वेतनेन क्रीतो भृतः, भृत एव भृतकः । 'अनुकम्पायाम्' (५. ३. ७६) । कन् । क्विपि भृतिभुक् । 'कर्मणि भृतौ' (३. २. २२) ति टः । कर्मकरः । ठकि वैतनिकः ॥

**वार्तावहो वैवधिकः**

क्षीर० — 'विभाषा विवधवीवधात्' (४. ४. १७) इति ठक् ॥

टीका० — वान्धारीति[3] ख्याते वार्तावहद्वयम् । धान्यमत्स्यादिवार्तां वहतीति पचाद्यच् । वार्तावहः । विवधः पर्याहारः । 'विभाषा विवधवीवधात्' (४. ४. १७) इति ठक् । विवधेन हरतीति वैवधिकः ॥

**भारवाहस्तु भारिकः ॥ १५ ॥**

क्षीर० — भारोऽस्त्यस्य भारिकः ॥

टीका० — भारवाहद्वयं भारिके । 'कर्मण्यण्' (३. २. १) भारवाहः । 'हरत्युत्सङ्गादिभ्यः' (४. ४. १५) इति ठकि भारिकः ॥

**विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।**
**निहीनोऽपशदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥**

क्षीर० — विरुद्धो वर्णोऽस्य विवर्णः, वर्णान्तरालत्वात् । पामाः

१. 'टादि' क, 'ट' ग. पाठः. २. 'कः ॥ वार्तावहद्वयं वैवधिके । धा' ठ. पाठः. ३. 'त्सा' क. पाठः.

सन्त्यस्याधनत्वात्, पामरः। निम्नमञ्चति नीचः। प्रकृतौ भवः प्राकृतः गुणाद्यसंस्कृतः। पृथग् जनेभ्यः पृथग्जनः। नियतं हीयते निहीनः। अपशीयतेऽपशदः। जलति जाल्मः। 'जल धान्ये'। क्षुधं लाति क्षुल्लकः। इतरस्तुच्छत्वाद्, इतं राति वा। वर्वरो यथाजातोऽपि। भरतादौ रेफसकारौ॥

टीका० — विवर्णदशकं नीचे। विगतो वर्णो यशोऽस्येति विवर्णः। पामानं रातीति पामरः। न्यञ्चति न्यग्भवतीति नीचः। अञ्चेः क्विन्। ऊर्णनाभवदच् समासान्तः। 'अचः' (६. ४. १३८) इत्यकारलोपः। 'चौ' (६. ३. १३८) इति दीर्घः। प्रकृतौ यथाजातभावे भवोऽव्युत्पन्नः प्राकृतः। सज्जनेभ्यः पृथग्भूतो जनः पृथग्जनः। जहातेः क्तः। निहीनः। सदेः पचाद्यच्। अपसदः। क्षुधं लाति गृह्णातीति क्षुल्लः। ततोऽज्ञाताद्यर्थे कः।

"क्षुल्लकः पामरे स्तोके क्षारः काचे च भस्मनि"

इत्यजयः। रभसस्तु 'खुल्लकस्त्रिषु नीचेऽल्पे' इत्यादिना कवर्गद्वितीयादौ पठति। सज्जनेभ्योऽन्यतया इतरः॥

**भृत्ये दासेरदासेयदासगोप्यकचेटकाः।**
**नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः॥ १७॥**
**पराचितपरिस्कन्दपरजातपरैधिताः॥ १७½॥**

क्षीर० — भरणीयो भृत्यः। 'भृञोऽसंज्ञायाम्' (३. १. ११२) इति क्यप्। दास्या अपत्यं दासेरो दासेयश्च। 'क्षुद्राभ्यो वा' (४. १. १३१) इति ढक्ढकौ। दीयते दस्यते वा दासः। 'दसु उपक्षये'। गोपनीयो गोप्यः। चेटति चेटः। 'चिट परप्रेष्ये'। 'प्रयोज्यनियोज्यौ शक्यार्थे' (७. ३. ६८) इति साधुः। किं करोमीत्याज्ञाप्रतीक्षः किङ्करः। 'दिवाविभा—' (३. २. २१) इत्यादिना टः। प्रेषणीयः प्रेष्यः। 'प्राद्-

१. 'स्य पामवत्त्वात्' क. ग. पाठः २. 'द' क. पाठः. ३. 'न्यङ् ही' ग. पाठः. ४. 'जघन्ये' ग. घ. ङ. पाठः. ५. 'ल्लः।.तुच्छ' ग. पाठः. ६. 'कः। तुच्छ', ७. 'रात्येति', ८. 'वा इतरः। व' ख. पाठः.

* 'धान्यं जडत्वम्' इति क्षीरतरङ्गिणी

ह्रोढोढ्यैषैष्येषु' (वा० ६. १. ८९) इति वृद्धिः। 'इषु इच्छायाम्'। अस्मात्तु प्रेष्यः। भुङ्क्ते स्वाम्युच्छिष्टं भुजिष्यः। परैराचीयते वर्ध्यते पराचितः। परिस्कन्द्यते आक्रम्यते परिस्कन्दः। 'परिस्कन्दः प्राच्यभरतेषु' (८. ३. ७५) इति साधुः। परैरेध्यते वर्ध्यते परैधितः॥

टीका० — भृत्यैकादशक भृत्ये। 'भृञोऽसंज्ञायाम्'(३. १. ११२) इति क्यप्। भृत्य.। दास्या अपत्यं दासेरः, दासेयश्च। 'क्षुद्राभ्यो वा' (४. १. १३१) इति ढ्रक्। 'दसि दंशदर्शनयोः'। 'दंसेष्टटनौ न आ च' (उ० ५. ९.) इति टटनौ प्रत्ययौ नकारस्य चाकारः। एवं दासो दस्त्यसः। गुपेर्ण्यति 'अनुकम्पायाम्' (५. ३. ७६) कन्। गोप्यकः। 'चिट परप्रेष्यभावे'। घञ्। पूर्ववत् कन्। चेटकः। युजे 'शकि लिङ् च' (३. ३. १७२) इति चकारात् कृत्यप्रत्ययो ण्यत्। नियोज्यः। 'प्रयोज्यनियोज्यौ शक्यार्थे' (७. ३. ६८) इति कुत्वाभावः। किञ्चित् करोतीति 'कियच्चद्धहुप कृञोऽज्विधानम्' (वा० ३. २. २१) इत्यच्। तेन स्त्रियां टाप्। किञ्चिदर्थवृत्तिरत्र कि शब्दः। 'इष गतौ' दैवादिकः। ण्यति लघूपधगुणः। 'प्रादूहोढोढ्यैषैष्येषु ण्याः' (वा० ६. १. ८९) इति वृद्धौ प्रैष्यः। कर्माणि घञि प्रैषोऽपीति ः। 'इष उञ्छे', 'इष गतिहिंसादानेषु'। घञि ण्यति च गुरूपधत्वाद् गुणाभावे प्रेषप्रेष्यौ। 'रुचिभुजिभ्यां किष्यन्' (उ० ४. ८०)। भुजिष्यो मूर्धन्यषः। चरतेर्ण्वुल्। परिचारकः। परसंवर्धित पराचितचतुष्कम्। चिञः क्तः। पराचितः। स्कन्देः पचाद्यच्। 'परेश्च' (८. ३. ७४) इति षत्वविकल्पः। परिस्कन्दः। परेण पोषितत्वात् परस्माज्जात इव परजातः। परैरेधितः संवर्धितः परैधितः॥

**मन्दस्तु तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः।**

क्षीर० — मन्दते स्वपितीव मन्दः। अत एव 'मदि जाड्ये' इति चान्द्रो धातुः। तुन्दं परिमार्ष्टि तुन्दपरिमृजः। 'तुन्दशोकयोः परि-

१. 'ते नियुज्यते प' क. ग. पाठः, २. 'ते प' ग. पाठः.

मृजापनुदोः' (३. २. ५) इति सूत्रे 'आलस्यसुखाहर(ण)योरि'ति वक्तव्यात् कः। आलस्यमस्त्यस्यालस्यः। अर्शआदित्वादच्। शीतादलसे 'शीतोष्णाभ्यां कारिणि' (५. २. ७२) इति कन्। न लसत्यलसः॥

टीका० — मन्दपट्कमलसे। 'मदि स्तुत्यादौ'। पचाद्यच्। मन्दः। 'तुन्दशोकयोः परिमृजापनुदोः' (३. २. ५) इति कः। तुन्दपरिमृजः। 'मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते' इति वचनात् तुन्दपरिमार्ज इत्यपि। न लसतीत्यलसः। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञि आलस्यः। शीतं मन्दं करोतीति शीतकः। 'शीतोष्णाभ्यां कारिणि' (५. २. ७२) इति कन्॥

**दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च॥ १८॥**

क्षीर० — दक्षते दक्षः। चनते कर्म चतुरः। पेशति पिशति वा पेशलः। 'पिश अवयवे', 'पिश गतौ' । पटति पाटयति वा पटुः। सुष्ठु स्थानम् उद्योगोऽस्य सूत्थानः। ओषति दहतीव उष्णः। उष्णकोऽपि॥

टीका० — दक्षपञ्चक दक्षे। 'दक्ष वृद्धौ शीघ्रार्थे च'। पचाद्यच्। दक्षः। 'चते चदे याचने'। अङ्कुरवदुरच्। चतुरः। 'पिश अवयवे'। बाहुलकादलच्। पेशलः। 'पट गतौ'। हेतुमण्णिच्। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ० १. १८) इति उः, धातोश्च पटिरादेशः। पटुः। सुष्ठूत्थानमुद्योगोऽस्येति सूत्थानः॥

**चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः॥ १९॥**
**निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः।**

क्षीर० — चण्डते चण्डालः। प्लवते प्लवः। मा निषिद्धं तङ्गति मातङ्गः। 'अ मा नो न प्रतिषेधे'। मतङ्गापत्यमिति पौराणिकाः। दिवा कीर्त्यते दिवाकीर्तिः। रात्रौ भयदत्वात्। जनं गच्छति जनङ्गमः। 'गमश्च' (३. २. ४७) इति खच्। निषण्णमस्मिन् पापमिति निषादः, निषीदति वा। ज्वलादित्वाण्णः। श्वानं पचति श्वपचः। पचादित्वाद-

१. 'स्यास्तीत्याल' ग. घ. पाठः. २. 'ते च' ग. पाठः. ३. 'तौ वा। प', ४. 'शोभनमुत्था' ख. पाठः. ५. 'ले' क. ग. घ. पाठः. ६. 'करत्वा' ग. पाठः.

* 'पिसृ पेसृ गतौ' इति भ्वादौ क्षीरतरङ्गिणी।

णोऽपवादोऽच । ग्रामस्यान्ते वसत्यन्तेवासी, अन्तावसायी च । कुलालवरुडचण्डालनिषादमित्रामित्रेभ्यश्छन्दस्युपसंख्यानात् स्वार्थेऽण् । चाण्डालः । बुत् कुत्सितं कसति बुत्कसः । बुक्कस इत्येके । अवान्तरभेदोऽत्र नादृतः । यतः श्वपचो डोम्बः, बुत्कसो मृतपः ॥

टीका० — चण्डालदशकं चण्डाले । 'पतिचण्डिभ्यामालञ्' (उ० १. १२२) चण्डालः । प्रज्ञाद्यणि चाण्डाल इत्युणादिवृत्तिः । प्लव उक्तः । दिवसस्य पुण्यकालत्वात् तत्राकीर्तनम्* अस्येति दिवाकीर्तिः । जनाद् गच्छतीति जनङ्गमः । '(जने ? गम)श्च' (३. २. ४७) इति खच् । निषाद उक्तः । श्वानं पचतीति श्वपचः । पचादिषु श्वपचपाठादच् । नगरादेरन्ते वसतीति णिनिः । सप्तम्या अलुक् । अन्तेवासी ॥

"अन्तेवासी च चण्डालो दिवाकीर्तिर्जनङ्गमः"

इत्यमरमाला । पुमांसं कसति गच्छतीति पुल्कसः, दन्त्यसः पृषोदरादिश्च ॥

**भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥**

क्षीर०—किराताद्याः तथा म्लेच्छजातीयाः मुल्गभेदादयः चण्डालभेदाः । किरति शरान् किरातः । शवत्यरण्यं शबरः । पोलति भ्रमति पुलिन्दः । एतेऽरण्यचरा देशभेदाद् भिन्नाः । म्लेच्छत्यव्यक्तं वक्ति म्लेच्छः ।

**निष्या माला भटा भिल्ला नाहलाश्चान्त्यजाः पृथक् ॥**

टीका० — एते किरातादयस्त्रयश्चण्डालानां भेदाः । म्लेच्छन्ति अव्यक्तं भाषन्त इति म्लेच्छाः । 'म्लेच्छ अव्यक्तायां वाचि' । पचाद्यच् । तदुक्तं—

"गोमांसभक्षको यस्तु लोकबाह्यं च भाषते ।
सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते ॥"

१. 'कुटच' ग. घ ङ. पाठः. २. 'तः ॥ भे' ख. पाठः. ३. 'चतिपा' ज. पाठः. ४. 'गें' ग. घ. ङ. पाठः.

* अत्र मन्नं मृग्यम् ।

तत्र मयूरपिञ्छपरिधानो म्लेच्छः । पत्रपरिधानः शबरः । पत्रशबरशब्दोऽप्यत्र वर्तते । ('श्रु ? शु) सु गतौ' । 'कृदरादयश्च' (उ० ५. ४१) इत्यरन् । शबरः । स्वभाषाव्यवहारी परभाषानभिज्ञः पुलिन्दः । 'पुल महत्त्वे' । *'कलिपुलिभ्यां किन्दच्' (उ० ४. ८६) । पुलिन्दः ॥

"पुलिन्दः कथ्यते म्लेच्छः पुलिन्द्रोऽपि निगद्यते" .

इति तारपालः ॥

**व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः ।**

**क्षीर०—विध्यति व्याधः । 'श्याद्व्यधा—' (३. १. १४१) इति णः । मृगान् याति मृगयते वा मृगयुः । लुभ्यति गृध्यति मांसं लुब्धकः ॥**

**टीका०**—व्याधचतुष्कं व्याधे । स च म्लेच्छप्रकारो गीतादिना हरिणादीन् हन्ति । 'श्याद्व्यधा—' (३. १. १४१) इत्यादिना णः । व्याधः । मृगवधमाजीवतीति मृगवधाजीवः । मृगान् वधार्थं याति धावतीति मृगयुः । 'मृगय्वादयश्च' (उ० १. ३९) इति कुः । मृगेषु लुब्धः प्रसक्तो लुब्धकः ॥

**कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥**
**शुनको भषकः श्वा स्याद्**

**क्षीर०—कुले गृहे भवः कौलेयकः । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' (४. २. ९६) इति ढकञ् । सरमाया अपत्यं सारमेयः । कोकते कुक् चोरग्राही, कुकशब्दं वा कुरति कुक्कुरः । 'कुर शब्दे' । मृगान् दशति मृगदंशकः । शुनति शुनकः । 'शुन गतौ' । भषति कुत्सितं भाषते भषकः । शवति श्वयति वा श्वा । मण्डली च । रथ्यामृगो देश्याम् ॥**

**टीका०**—कौलेयकसप्तकं कुक्कुरे । कौक्षेयकवद् ढकञ् । कौलेयकः । सरमा शुनी, तदपत्यं सारमेयः दन्त्यादिः । 'कुक वृक आदाने' । 'मद्गुरादयश्च'

---

१. 'यौ', २. 'क्षीति', ३. 'शः । शु' ख. पाठः.

* 'कुणिपुल्योः किन्दच्' इति मुद्रितोणादिपाठः.

(उ० १. ४३) इति उरच् कुगागमश्च । एवमुणादौ कुक्कुरो मध्यरेफरहितो व्युत्पादितः । क्वुनि भषकः । 'श्वन्नुक्षन्—' (उ० १. १६५) इत्यादिना श्वयतेः श्वन् इति साधितः ॥

**अलर्कस्तु स यो गरी ।**

**क्षीर०**—सः श्वा सञ्जातगरप्रयोगः अलयते वार्यते दंशनभयादलर्क उन्मत्तः श्वा ॥

**टीका०**—योगितो दत्तयोग उन्मत्तादिभावं प्रपन्नः श्वा अलर्कः ह्रस्वादिः ॥

**श्वा विश्वकद्रुर्मृगयाकुशलः**

**क्षीर०**—विश्वं कन्दत्याह्वयते विश्वकद्रुः । विगतं श्वकदनमस्येत्येके । विश्वकं द्रवति वा ॥

**टीका०**—आखेटकुशलः श्वा विश्वकद्रुः ॥

**सरमा शुनी ॥ २२ ॥**

**क्षीर०**—सरति सरमा देवशुनी । विशेषवृत्तिरपि सामान्येऽभिधानात् ॥

**टीका०**—कुक्कुर्यां सरमाद्वयम् । सर्तेर्बाहुलकात् 'प्रथेरमच्' (उ० ५. १९) । सरमा ॥

**विड्चरः सूकरो ग्राम्यः**

**क्षीर०**—विषं गूथं चरति विड्चरः । सूयते बहून् सूकरः ॥

**टीका०**—ग्रामभवे सूकरे विड्चरः । विषं विष्ठां चरतीत्यच् ॥

**वर्करस्तरुणः पशुः ।**

**क्षीर०**—वर्कते बर्करः । 'वृक आदाने' ॥

**टीका०**—तरुणपशुसामान्ये वर्करः[२] । मतभेदाद् वर्करो मेषशावक इति रक्षितः । 'वृक आदाने' । 'ऋच्छररन्' (उ० ३. १३१) इति बाहुलकोऽरन् ॥

१. 'ब' ख. ग. घ. पाठः. २. 'क' ज. पाठः.

**आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्॥ २३॥**

क्षीर० — आचोद्यन्ते भ्राम्यन्ते प्राणिनोऽत्राच्छोदनम्। चुदेश्छत्वम्। मृगान् व्ययति मृगव्यम्। मृगव्येति मुनिः। 'व्येञ् संवरणे'। आखेट्यन्ते प्राणिनोऽत्र आखेटः। 'खिट उत्त्रासने'। मृग्यन्तेऽस्यां प्राणिनो मृगया। मृगयाटाट्येति (यञ्? यक्शौ)। पापर्द्धिश्च॥

टीका० — आच्छोदनचतुष्कमाखेटके। मृगबाधो मृगव्यम्। 'व्यध ताडने'। 'अन्येष्वपि' इत्यपिशब्दाद् भावे डः। 'किट खिट उत्रासने'। घञ्। आखेटः। 'मृग अन्वेषणे'। चुरादिणिच्। 'परिचर्यापरिसर्यामृगयाटाटचीनामुपसंख्यानम्' (वा० ३.३.१०१) इति भावे शः। मृगया॥

**दक्षिणारुर्लुब्धयोगाद् दक्षिणेर्मा कुरङ्गकः।**

क्षीर० — लुब्धसंबन्धाद् दक्षिणे पार्श्वे अरुर्व्रणमस्य दक्षिणारुः। दक्षिणे ईर्मं व्रणमस्य दक्षिणेर्मा। 'दक्षिणेर्मा लुब्धयोगे' (५.४.१२६) इति साधुः। 'व्रणोऽस्त्रियामीर्ममरुरि'त्युक्तम्॥

टीका० — लुब्धयोगाद् दक्षिणारुः लुब्धकेन दक्षिणाङ्गे कृतव्रणो मृगः। दक्षिणेर्मा। दक्षिणाङ्गे ईर्मं व्रणमस्येति दक्षिणेर्मा नान्तः। 'दक्षिणेर्मा लुब्धयोगे' (५.४.१२६) इति समासान्तानिच्प्रत्ययान्तो निपातितः॥

**चौरैकागारिकस्तेनदस्युतस्करमोषकाः॥ २४॥**

**प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः।**

क्षीर० — चोरयति चोरः। स्वार्थेऽण्। चुराशीलो वा। छत्रादित्वाण्णः। एकस्मिन्नसहायेऽगारे भव एकागारिकः। 'ऐकागारिकट् चौरे' (५.१.११३) इति साधुः। स्तेनयति स्तेनः। 'स्तेन चौर्ये'। 'शास्त्या(त्रञ् विभ्यतः'? हृञ्विभ्यः) (उ० २.४८) इतीनचि स्त्येनः स्यात्। दस्यत्युपक्षिणोति दस्युः। तत् करोति तस्करः। 'तद्बृहतोः करपत्यो-

१. 'ट' क. पाठः. २. 'ट्यादीना' ग. पाठः. ३. 'म। दक्षिणेर्मा मृगः। दक्षिणमङ्गं व्रणितं व्याधेनेत्यर्थः॥ चौ', ४. 'र्ये। द' ख. पाठः.

श्चोरदेवतयोः सुट् तलोपश्च' (ग० ६. १. १५७)। मुष्णाति मोषकः। प्रतिरुणद्धि प्रतिरोधी। परानास्कन्दयति परास्कन्दी। पाटयंश्चरति पाटच्चरः। पटच्चरे जीर्णवस्त्रे भवो वा। मलिनं म्लोच(य?)ति मलिम्लुचः। 'म्लुच स्तेयकरणे'। पारिपन्थिकः पश्यतोहरश्च। 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' (वा० ६. ३. २१) इति षष्ठ्या अलुक्।

व्यलीकं चातिसन्धानं वञ्चनं च प्रतारणम् ॥

टीका० — चौरदशकं चोरे। चुरा चौर्यं शीलमस्येति चौरः। 'छत्रादिभ्यो णः' (४. ४. ६२)। चुराशब्दं छत्रादिपाठादेव अङ्, णिज्लुक् च। पचाद्यचि चोरशब्दोऽप्यत्र। णेऽपि क्वचिदण्कृतं कार्यं भवतीति स्त्रियां च ङीपि चौरी, तापसी च। एकमसहायं गृहं प्रयोजनमस्येति ऐकागारिकः 'ऐकागारिकट् चौरे' (५. १. ११३) इति निपातितः। टकारो ङीबर्थः। अपरे तु इकट्प्रत्ययं वृद्धिं च निपातयन्ति। मोषार्थिनो ह्येकागारं प्रयोजनम्। 'स्तेन चौर्ये'। चुरादिणिच्। पचाद्यच्। स्तेनः। 'दसु च'त्यत्र 'यजिमनिशुन्धिदसिजनिभ्यो युः' (उ० ३. २०)। दस्युः। तत् करोतीति तस्करः। 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपो वक्तव्यः' (ग० ६. १. १५७) इति पारस्करादित्वात् सुट्तलोपौ। 'मुष स्तेये'। ण्वुल्। मोषकः। प्रतिरोधिपरास्कन्दिनौ आवश्यकणिन्यन्तौ। पाटयंश्चरतीति पाटच्चरः। दीर्घवदादिः। मलिनं यथा स्यात् तथा म्लोचति गच्छतीति मलिम्लुचः। म्लुचेर्गत्यर्थाद् इगुपधलक्षणः कः। पृषोदरादित्वान्मलिननकारलोपः ॥

चौरिका स्तैन्यचौर्ये च स्तेयं

क्षीर० — चौरस्य भावश्चौरिका। मनोज्ञादित्वाद् वुञ्। ब्राह्मणादित्वात् ष्यञि चौर्यम्। स्तेनस्य भावः कर्म वा स्तैन्यम्। 'स्तेनादि'ति योगविभागात् ष्यञ्। 'स्तेनाद्यन्नलोपश्च' (५. १. १२५) इति स्तेयम् ॥

टीका० — चौरिकाचतुष्कं चौरिकायाम्। चौरस्य कर्म चौरिका। मनोज्ञादित्वाद् वुञ्। स्तेनस्य कर्म स्तेयम्। 'स्तेनाद् यन्नलोपश्च' (५. १.

१. चेति। प', २. 'र इत्यपि। णे' ठ. पाठः. ३. 'का। द्वन्द्वम' ख. पाठः.

१२९) इति यत् । स्तेनादिति योगविभागात् ष्यञ् । स्तैन्यम् । चोरस्य कर्म चौर्यं ष्यञन्तम् ॥

**लोप्त्रं तु तद्धनम् ॥ २५ ॥**

क्षीर० — लोप्यते लोप्त्रं चौर्यधनम् ॥

टीका० — तद्धनं चौरिकाधनं लोप्त्रम् । 'लुप्लृ छेदने' । ष्ट्रन् । *'लोप्त्रमश्रुणि चौरिकम्' इति कान्ते विश्वप्रकाशः ॥

**वितंसस्तूपकरणं बन्धनं मृगपक्षिणाम् ।**

क्षीर० — मृगादिबन्धननिमित्तं जालवागुरादिसाधनं वितन्यते वितंसः, वितंस्यते[1]ऽनेन वा । तंसिः सौत्रः ॥

टीका० — मृगाणां बन्धनोपायः स्नाय्वादिपाशसङ्गतः, पक्षिणां च बालपाशादियुक्तो वितंसः । 'तसि भूष अलङ्कारे' । विपूर्वाद् घञ् । पक्षे दीर्घः । वीतंसः ॥

**उन्माथः कूटयन्त्रं स्याद्**

क्षीर० — ऊर्ध्वयात्रा मथ्यतेऽनेन उन्माथः । छलेन यम्यतेऽनेन कूटयन्त्रम् । पाशयन्त्रमित्येके ॥

टीका० — आमिष दत्त्वा मृगपक्षिबन्धनार्थं यत् सन्धानयन्त्रं निवेश्यते तत्रोन्माथद्वयम् । 'मथे विलोडने' । 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०) । उन्माथः । कूटाख्यं यन्त्रं कूटयन्त्रम् ॥

**वागुरा मृगबन्धनी ॥ २६ ॥**

क्षीर० — रज्जुरिति शेषः । अवागूरयति मृगान् वागुरा । जालाकृतिः ॥

टीका० — वागुराद्वय मृगबन्धनजाले ॥

**शुम्बं वटाकरः स्त्री तु रज्जुस्त्रिषु वटी गुणः ।**

क्षीर० — शुः पूजार्थोऽव्ययम् । पूजितं मीयते शुम्बं शुल्बं वा । वट्यते वेष्ट्यते वटाकरः, वटी च । सृज्यते रज्जुः । गुण्यतेऽभ्यस्यते

---

१. 'ते बध्यतेऽने' ख. पाठः.　　२. 'र' क. ख. पाठः.

* 'लोप्त्रं वस्तुनि चोरिते इति रान्ते विश्वप्रकाशः' इति पाठः स्यात् ।

गुणः । वटी गुण इति पृथगाहुः । 'वट वेष्टने' । (योऽयैः) वेष्टने द्विगुणा त्रिगुणा वा रज्जुर्वेष्ट्यते, ते वटा गुणाश्चेत्येके ॥

टीका० — शुल्बपञ्चकं वलितगुणे । शुल्बं तालव्यादि, क्लीबम् । 'रज्जुः शुल्वा वटारो ना' इति स्त्रीकाण्डे रत्नकोषः । 'वट वेष्टने' । 'अङ्गिमन्दि —' (उ० ३. १३४) इत्यादिना बाहुलकादारन् । ततः स्वार्थे कः । वटारकः । 'सृजेरसुमुश्च' (उ० १. १९) इति उप्रत्ययः असुमागमः, चकारात् सलोपः[1] । ऋकारस्य यणादेशः, सकारस्य जश्त्वेन दकारः, दकारस्य च चुत्वेन जकारः । रज्जुः । 'वट वेष्टने' । इन् । 'कृदिकारादक्तिनः' (ग० ४. १. ४५) इति ङीषि वटी ॥

**उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥**

क्षीर० — उद्घाट्यते प्रकाश्यते जलमनेनोद्घाटनम्[2] । 'ऊर्ध्वं हन्यतेऽनेन उद्घा(ट?त)नम्[3]' इति कौटिल्यः । प्रहेः कूपादे[4]र्जलमूर्ध्वं वाह्यतेऽनेनोद्वाहनम् । पादावर्तोऽपि ॥

टीका० — प्रहेररघट्टकूपाद् येन यन्त्रेण जलमुत्तोल्यते, तत्रोद्घाटनद्वयम् । 'घट सङ्घाते' । चुरादिः । ल्युट् । उद्घाटनम् ॥

**पुंसि वेमा वायदण्डः**

क्षीर० — वयन्त्यनेन वेमा । ऊयते पीड्यते तन्तुसूत्रं येनेति वायः, तदर्थो दण्डः । वापदण्ड इति तु युक्तम् ॥

टीका० — वेमद्वयं वेमनि । 'वेञः सर्वत्र' (उ० ४. १५१) इति इमन् । वेमा नान्तः ॥

**सूत्राणि नरि तन्तवः ।**

क्षीर० — सूयते सूत्र्यते वा पटोऽनेन सूत्रम् । तन्यतेऽनेन तन्तुः ॥

१. 'सकारलो' ठ. पाठः. २. 'जने' ग. घ. पाठः. ३. 'म् । उत्पाटनम् इ', ४. 'उदपानादेः' ग. घ. ङ. पाठः.

टीका० — सूत्रद्वयं सूत्रे । 'षिवु तन्तुसन्ताने' । 'सिविमुच्योष्टेरू च' (उ० ४. १६४) इति ष्ट्रन्, ऊकारश्च टेः । सूत्रम् । 'तनु विस्तारे' । सेतुवत् तुः । नरि पुल्लिङ्गे तन्तुशब्द इत्यर्थः । छन्दःपूरणार्थं बहुत्वनिर्देशः । द्वित्वैकत्वयोरप्येतयोर्वृत्तिः ॥

**वाणिर्व्यूतिः स्त्रियौ तुल्ये**

क्षीर० — वयनं* वाणिः । (व्यूतिः । 'ऊतियूति—' (३.३.९७) इति साधुः ?) व्यूत एव निष्प्रवाणिर्नवः पटः । वयनं वानिः । निवृत्ते वयने निष्प्रवाणिः । पुंस्येव मन्यते नवः पटः । वयनं व्यूतिः । 'ऊतियूति—'(३. ३. ९७) इति साधुः । तुल्या च तुल्या च तुल्ये द्वे ॥

टीका० — वाणिद्वयं वयनक्रियायाम् । वेञो विपूर्वाद् 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' (३. ३. ९७) इति क्तिन् । संप्रसारणोकारस्य दीर्घत्वनिपातनाद् व्यूतिः । वृत्तौ तु अवतेरूतिरिति निपातितम् । तन्मते अवतेः क्तिन् । 'ज्वरत्वर—'(६. ४. २०) इत्यादिना ऊठ् । विपूर्वः ॥

**पुस्तं ले(ख्या?प्या)दिकर्मणि ॥ २८ ॥**

क्षीर० — पुस्यते मर्द्यते मृदत्र पुस्तम् । पुस्त आदरे वा ॥

टीका० — लेप्यादिकर्म पुस्तमुच्यते । आदिना काष्ठखननकर्म गृह्यते । 'पुस्त बुस्त आदरानादरयोः' । चुरादिणिच् । एरच् ।

"मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा ।
लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते" ॥

**पाञ्चालिका पुत्रिका स्याद् वस्त्रदन्तादिभिः कृता ।**

क्षीर० — पञ्चालदेशे भवा पाञ्चालिका, यया बालाः खेलन्ति । 'यावादिभ्यः कन्' (५. ४. २९) इत्यत्र 'कृत्रिम' इति कन् । पुत्रिका । पुत्रकृत्त्योरिकन् (वा) ॥

१. 'त्वबहुत्व', २. 'णी' क. पाठः. ३. 'व्येनादि' ग. घ., 'व्यूनादि' क. पाठः. ४. 'मृद्यते', ५. 'ते पु', ६. 'स' ख. पाठः.

* वयनशब्दो वेञ औणादिकेन शिता साध्यः ।

टीका० — पाञ्चालिकाद्वयं पुत्तलीकेति ख्यातायाम्। 'पुत्र कृत्रिमे' इति यावादिगणसूत्रेण कन्। पुत्रिका। आदिना शृङ्गकाष्ठादिग्रहणम् ॥

**स्यात् सालभञ्जिका स्तम्भे लेप्येनाञ्जलिकारिका ॥२९॥**

**जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु ।**

क्षीर० — 'त्रपुजतुनोः षुक्' (४. ३. १३८) ॥

**पिटकः पेटकः पेटा मञ्जूषा**

'पीड गहने'। 'पीङ् पाने'। अस्माद् वा पीडेति श्रीभोजः(?)।[1] मञ्जु मनोज्ञं कृत्वा वस्त्राद्यैरुष्यतेऽत्र मञ्जूषा। आद्यौ पेटारिकायां, परौ महत्याम् ॥

टीका० — पिटकद्वयं पेडा इति ख्याते। 'पिट शब्दसङ्घातयोः'। यथाक्रमं क्कुन्ण्वुलौ। पेटाद्वयं काष्ठादिमञ्जूषायाम्। 'टु मस्जो शुद्धौ'। 'मस्जेर्नुं च' (उ० ४. ७८) इति ऊषन्नुमागमौ। मञ्ज्जूषा द्विजकारा। 'झरो झरि सवर्णे' (८. ४. ६५) इति सलोपपक्षे एकजकारा मञ्जूषा ॥

**अथ विहङ्गिका ॥ ३० ॥**

**भारयष्टिः**

क्षीर० — विहङ्गप्रतिकृतिश्चर्मादिमयी (वहित्यादौ!) लम्बमाना स्थाप्यते प्रयाणके च सञ्चार्यते। भारोद्वहनार्था यष्टिः। 'चतुर्दण्डिके'ति सभ्याः। शिक्याधारस्कन्धग्राह्यो लगुड इति द्रमिडाः। विहङ्गमेत्यन्ये[2] ॥

टीका० — विहङ्गमाद्वयं बाहुकेति[3] ख्याते। पक्षिपर्याये विहङ्गमा साधिता। क्वचिद् विहङ्गिकेति पाठः ॥

**तदालम्बः शिक्यं काचः**

क्षीर० — तदालम्बो भारालम्बः, तस्या अवलम्बते वा। शक्नोति वोढुं शिक्यम्। अघ्न्यादि। कच्यतेऽनेन काचः। 'कच बन्धने'। यत्र रज्जुपञ्जरे वोढव्यमास्ते ॥

---

१. 'डयतीति' ग. घ. ङ. पाठः. २. 'कुट इ' ख. पाठः. ३. 'गे' क. पाठः.

* "'पिट शब्दसंघातयोः'। पेटति। पिटकः पेटकः पेटा मञ्जूषा। पिटः पिटक कण्डोलः। पिठकं विस्फोटः।" इति क्षीरतरङ्गिणी।

टीका० — शिक्यद्वयं शिक्ये । शिक्यं तालव्यशम् ॥

अथ पादुका ।

**पादूरुपानत् स्त्री**

क्षीर० — पद्यतेऽनया पादूः । 'णित्कसिपद्यर्तेः' (उ० १. ८८) । स्वार्थे कः । 'केऽणः' (७. ४. १३) इति ह्रस्वः । पादुका । उपनह्यत इत्युपानत् । 'नहिवृति —' (६. ३. ११६) इति दीर्घः । पादत्राणं च ॥

टीका० — पादुकात्रयं पादुकायाम् । 'णित्कसिपद्यर्तेः' (उ० १. ८८) इति ऊः । णित्वाद् वृद्धिः । पादूरेव पादुका । स्वार्थे कन् । 'केऽणः' (७. ४. १३) इति ह्रस्वः । 'णह बन्धने' । सम्पदादिक्विप् । 'नहिवृति —' (६. ३. ११६) इत्यादिना पूर्वपददीर्घः । पदान्ते 'नहो धः' (८. २. ३४) इति हस्य धः । चर्त्वम् । तकारः । उपानत्, हान्ता ॥

**सैवानुपदीना पदायता ॥ ३१ ॥**

क्षीर० — अनुपदं पदायामेन बद्धा अनुपदीना । 'अनुपदस-र्वा —' (५. २. ९) इति खः ॥

टीका० — पदायता पादप्रमाणा पादूः अनुपदीना । अनुपदसर्वान्ना-यानयं बद्धाभक्षयतिनेयेषु' (५. २. ९) इति खः ॥

**नध्री वध्री वरत्रा स्यात्**

क्षीर० — नह्यति बध्नाति नध्री । वर्धते दीर्घीभवति चर्मरज्जु-त्वाद् वध्री । व्रियतेऽनया वरत्रा । 'वरत्रा (वेत्र) वैणवी'ति तु चाणक्य-स्तन्त्राध्यक्षे* उपचारादाख्यत् ॥

टीका० — नध्रीत्रयं चर्मरज्ज्वाम् । 'णह बन्धने' । 'दाम्नीशसयुयु-जस्तुतुदसिसिचमिहपतदशनहः करणे' (३. २. १८२) इति ष्ट्रन् । 'नहो धः' (८. २. ३४) इति धत्वम् । षित्वात् ङीष् । नध्री । 'वृधिवपिभ्यां रन्' (उ० २. ३०) इति वृधे रन् । गौरादिङीष् । वध्री । 'वार्ध्री दीर्घवदादिरि'ति हट्टचन्द्रः । 'वृञश्चित्' (उ० ३. १०७) इत्यत्रन् । वरत्रा ॥

---

* कौटिलीयार्थशास्त्रे सूत्राध्यक्षे अधि० २. अध्या० २३. प्रक० ४०.

**अश्वादेस्ताडनी कशा ।**

क्षीर० — कशति कशा चर्मयष्टिः ॥

टीका० — वामाठीति[1] ख्यातायां कशा । आदिना उष्ट्रादेः । कश-स्तालव्यान्तः सौत्रः । पचाद्यच् ॥

**चाण्डालिका तु कण्डोलवीणा चाण्डालवल्लकी ॥ ३२ ॥**

क्षीर० — चण्डालस्येयं चाण्डालिका । कण्ड्यते[3] तन्त्रीभिराव्रियते कण्डोलवीणा किन्नराख्या ॥

टीका० — चाण्डालिकात्रयं चण्डालवीणायाम्[4] । चण्डालेन कृता चा-ण्डालिका । 'कुलालादिभ्यो वुञ्' (४. ३. ११८) । 'कटे वर्षावरणयोः' । कपोलवद् ओलच् । कटोलश्चण्डालः । तस्य वीणा कटोलवीणा ॥

**नाराची स्यादेषणिका**

क्षीर० — नरम् अञ्चति नराङ्, तस्येयं नाराची । अन्विष्यते (व्रणोऽवर्णो)ऽनयेत्येषणिका । स्वर्णतुलेतीह युक्तम् ॥

टीका० — नाराचीद्वयं नाराचीकृतलोहतुलायाम् । इच्छतेः करणे ल्युट् । 'एषणात् करणे' (ग० ४. १. ४१) इति ङीप् । एषणी ॥

**शाणस्तु निकषः कषः ।**

क्षीर० — श्यति तनूकरोति शाणः । निकष्यत तत्र निकषः । 'गोचरसञ्चर —' (३. ३. ११९) इति चकारात् साधुः । पुंसि संज्ञायां घो वा । एवं कषः । निकषोपल इत्येके । पचाद्यच् । मणिकारादिभा-ण्डमाहुः । यन्मुनिः — 'शाणश्च निकषोपलः' ॥

टीका० — शाणत्रयं कर्षपट्टिकायाम् । 'शण श्रण दाने' । घञ् । शाणस्तालव्यादिः । निकषकषौ घप्रत्ययान्तौ ॥

१. 'ठी', २. 'अश्वादेरित्यादिना उष्ट्रादेर्ग्रहणम् । कशः सौ' ठ. पाठः. ३. 'ण्ड्य' क. च. पाठः. ४. 'किन्दरा इति ख्यातायाम् । चण्डाले' क. च. ज. पाठः. ५. 'चा' ग. घ. ङ. पाठः. ६. 'च' ग. पाठः. ७. 'णः । नि' ठ. पाठः.

**व्रश्चनः पत्रपरशुः**

क्षीर० — वृश्चति छिनत्ति व्रश्चनः। पत्राकारः पत्राणां वा परशुः॥

टीका० — व्रश्चनद्वयं स्वर्णादिच्छेदनिकायाम्। 'ओ. व्रश्चू छेदने'। करणे ल्युट्। व्रश्चनः। पत्रमिव परशुः॥

**ईषिका तूलिका समे॥ ३३॥**

क्षीर० — ईषति ईषिका। 'ईष उञ्छे'। काष्ठलोहादिमयी शलाका। तूल्यते तूलिका। 'तूल निष्कर्षे'। इषीकेत्येके। 'शलाकेषिकयोस्तूलिरि'ति भुग्नो भेदनाह॥

टीका० — सामान्येन वीरणादिशलाकायामिषीकाद्वयम्। केचित् चित्रकरकूर्चिकायाम्। आवर्तितमनावर्तितं वा सुवर्णं ज्ञातुं यन्निक्षिप्यते तत्रेत्यपरे। इषीका गजाक्षिकूटपर्याये व्युत्पादिता। 'तूल निष्कर्षे'। क्वुन्। तूलिका॥

**तैजसावर्तनी मूषा**

क्षीर० — तैजसं हेमादि आवर्त्यते द्रवीक्रियतेऽस्यां तैजसावर्तनी। मूयतेऽस्यां मूषा। 'मूङ् बन्धने'॥

टीका० — तैजसावर्तनीद्वयं मूषायाम्। मुषः 'गुरोश्च हलः' (३. ३. १०३) इत्यप्रत्यये टापि 'अन्येषामपि —' (६. ३. १३७) इति दीर्घत्वे मूषा। 'मूषा त्वावर्तनी मूषी'ति शब्दार्णवः॥

**भस्त्रा चर्मप्रसेविका।**

क्षीर० — बभस्ति भक्षयतीव स्थाप्यं भस्त्रा। चर्ममयी, प्रसीव्यते, प्रसेविका। प्रसेवकोऽपि॥

टीका० — भस्त्राद्वयं भस्त्रायाम्। 'भस भर्त्सनदीप्त्योः'। 'हुयामाश्रुभसिभ्यस्त्रन्' (उ० ४. १६९)। 'तितुत्र —' (७. २. ९) इत्यादिना इडभावः॥

१. 'षि' क. ङ. पाठः. २. 'भाखीति ख्यातायां' क. ग. पाठः.

**आस्फोटनी वेधनिका**

**क्षीर० — आस्फोट्यते विध्यतेऽनया मौक्तिकादि ॥**

टीका० — मणिशङ्खादेर्वेधनी भ्रमः । तत्र लास्फोटनीद्वयम् । लडति स्फोटयतीति लास्फोटनी । पृषोदरादिः ॥

**कृपाणी कर्त्तरी समे ॥ ३४ ॥**

**क्षीर० — कल्प्यते भिद्यतेऽनया कृपाणी । कर्त्यतेऽनया कर्त्तरी ॥**

टीका० — कृपाणीद्वयं पत्रीकृतसुवर्णादेः कर्तनोपाये कासीति ख्याते, नापितकेशकर्तरिकायां वा । 'कृती छेदने' । बाहुलकादरन् । गौरादिङीष् । कर्तरी ॥

**वृक्षादनो वृक्षभेदी**

**क्षीर० — वृक्षोऽद्यते छिद्यतेऽनेन शस्त्रकेण वृक्षादनः ॥**

टीका० — वृक्षादनद्वयं वृक्षभेदिनि । वृक्षादनो नन्द्यादिः । वृक्षभेदी नान्तः ॥

**टङ्कः पाषाणदारणः ।**

**क्षीर० — टङ्क्यतेऽनेन टङ्कः । 'टकि बन्धने' । हन्यमानः टंशब्दं कायतीति वा ॥**

टीका० — टङ्कद्वयं पाषाणदारणे । 'टकि बन्धने' । चुरादिणिच् । 'एरच्' (३. ३. ५६) । अतः परमार्याद्वयम् * ॥

**क्रकचोऽस्त्री करपत्रं**

**क्षीर० — 'क्र' शब्दोच्चारणेन कचति क्रकचः । करसञ्चार्यं शस्त्रं करपत्रम् । करशब्दोच्चारणेन पतति वा ॥**

---

१ 'मरः । त' ग. ठ. पाठः । २. 'ये । ना' ठ. पाठः. ३. 'नीआणेति ख्याते । वृ' ४. 'टङ्कीति ख्यात । ट' क. ग. पाठः.

---

* अत्र प्रथमार्या, "क्रकचोऽस्त्री करपत्रं स्यादारा चर्मभेदिका चैव । सूर्मी स्थूणा लोहप्रतिमा शिल्पं कलादिकं कर्म ॥ " इति पाठेन सम्पाद्या ।

टीका० — क्रकचद्वयं करवत इति ख्याते। क्रकचोऽस्त्रीति सम्बन्धः चवर्गान्तोऽयम्। नाममालायां तु क्लीबं क्रकचम्॥

**स्यादारा चर्मभेदिका॥ ३८॥**

क्षीर० — इयर्त्यनयेत्यारा। भिदादौ आरा शस्त्र्यां साधुः। चर्मसीवनी॥

टीका० — चर्मकाराणां चर्मवेधनं लोहद्रव्यम् आरा। 'ऋ गतौ' आङ्पूर्वाद् भिदादिगणसूत्रेण 'आरा शस्त्र्याम्' (ग० ३. ३. १०४) इति निपातिता। अङ्प्रत्ययः। 'ऋदृशोऽङि गुणः' (७. ४. १६)। सवर्णदीर्घत्वम्। ततष्टाप्॥

**सूर्मिः स्थूणायःप्रतिमा**

क्षीर० — सुवति सूर्मिः। शोभनोर्मिरित्येके। तिष्ठति स्थूणा। यच्छाश्वतः— 'स्थूणा स्तम्भे च सूर्म्यां च'। अयोमयी प्रतिकृतिः। यत्स्मृतिः—

"सूर्मिं ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः"॥

टीका० — सूर्मीत्रयं लोहप्रतिमायाम्।

"स्वच्छभिर्बलिभिरक्षदुन्दुभिर्नाभिगोमुरभिजानि(?)शूर्मयः"

इत्यरुणः। 'सृ गतौ'। 'ग्रीष्मजाल्मादय' इति मप्रत्यये सूरादेशे च गौरादिङीषि सूर्मी। 'चुल्लीति महान्यास' इति उपाध्यायसर्वस्वम्। तिष्ठतेः 'रास्नासास्नास्थूणा—' (उ० ३. १५) इत्यादिना नक्, अन्त्यस्योकारः, णत्वं च। स्थूणा॥

**सिल्पं कर्म कलादिकम्॥३५॥**

क्षीर० — सिनोति सिल्पम्। 'षिञ् बन्धने'। 'सिल उञ्छे'। अस्माद् वा। कला गीताद्याश्चतुष्षष्टिः। आदिशब्दः प्रकारे॥

टीका० — वात्स्यायनोक्तनृत्तवाद्यादिचतुष्षष्टिर्बाह्यक्रियाः, तथालि-

---

१. 'शू' ग. ङ. पाठः. २. 'सू। सृ' ठ. पाठः., ३., ४., ५. 'शि' ग, घ, ङ. पाठः.

ङ्गनचुम्बनाद्याश्चाभ्यन्तराश्चतुष्षष्टिः क्रियाः कलाः । आदिना स्वर्णकारादिकर्म तत् सर्वं शिल्पम् । तालव्यादिः ॥

**प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।**
**प्रतिकृतिरर्चा पुंसि प्रतिनिधिः**

क्षीर० — प्रतिमीयतेऽनेन प्रतिमानं, प्रतिमा च । प्रतिबिम्ब्यते प्रतिबिम्बं, बिम्बसदृशं वा । प्रतियातयत्यनया प्रतियातना । 'यत निकारोपसंस्कारयोः' । अर्च्यते अर्चा । प्रतिनिधीयते प्रतिनिधिर्मुख्यसदृशः । प्रतिरूपं प्रतिच्छन्दः प्रतिकायश्च ॥

टीका०— प्रतिमानाष्टकं मूर्तिसदृशशिलादिनिर्मितप्रतिरूपके । सर्वमेव साधितम् ॥

**उपमोपमानं स्यात् ॥३६॥**

क्षीर० — उपमितिरुपमा । केचिदेतत् पूर्वैः सम्बध्नन्ति ॥

टीका० — उपमाद्वयं येनोपमीयते या, सोपमितिस्तत्र । मातेः 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् । उपमा ॥

**वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ॥ ३७ ॥**
**साधारणः समानश्च**

क्षीर० — सह माति समः । तुलया सम्मितस्तुल्यः । 'नौवयोधर्म —' (४. ४. ९१) इति यत् । समान इव दृश्यते । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३. २. ६०) इति 'समानान्ययोश्चे'ति वक्तव्यात् कञ् क्विंश्च । 'दृग्दृशवतुषु' (६. ३. ८९) इति समानस्य सः । समानम् आधारणं मानं चास्य साधारणः समानश्च ॥

टीका० — समसप्तकं तुल्ये । एते वाच्यलिङ्गाः । 'षम ष्टम शब्दे' । पचादिः । समः । तुलया सम्मितस्तुल्यः । 'नौवयोधर्म —' (४. ४. ९१) इत्यादिना यत् । समान इव दृश्यत इति सदृक्षः । सदृक् शान्तः । 'दृशेः क्सन्प्रत्ययो वक्तव्यः' (वा० ३. २. ६०) इति क्सन् । व्रश्चादिना षत्वम् । 'षढोः कः सि' (८. २. ४१) इति कुत्वम् । 'दृक्षे चेति

१. 'यात्य' ख. घ. ङ. पाठः. २. 'या । य' ख. पाठः.

वक्तव्यम्' (वा० ६. ३. ८९) इति समानस्य सभावः। सदृक्षः। 'समानान्य-योश्चेति वक्तव्यम्' (वा० ३. २. ६०) इति कञ्क्विनौ। 'दृक्दृशवतुषु' (६. ३. ८९) इति समानस्य सभावः। सदृशः सदृक्। 'आग्नीध्रसाधारणा-दञ् वक्तव्यः' (वा० ५. ४. ३६) इति स्वार्थेऽञ्विकल्पः। तेन स्त्रियामञ्-पक्षे टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप्। साधारणी। कनि टापि साधारणा॥

**स्युरुत्तरपदे त्वमी।**
**निभसङ्काशनीकाशप्रतीकाशोपमादयः॥ ३८॥**

क्षीर०—वाच्यलिङ्गास्तुल्यार्थाश्चैते। यथा चन्द्रनिभं मुखम्, पद्मसङ्काशम्। नियतं भाति निभम्। समं काशते सङ्काशम्। आदि-शब्दाच्चन्द्रप्रतिमः, पतिरूपः, आयामभूतः इत्यादि। चन्द्रेण निभ इत्यादौ न भवति। समास एवोत्तरपदत्वस्य रूढेः॥

टीका०—निभादयस्तूत्तरपदभूताः सन्तः सदृशवचनाः, वाच्यलिङ्गा इति परं पूर्वस्माद् विशेषः। उदाहरणं तु पितृनिभः, मातृसंकाशः। 'काशृ दीप्तौ'। तालव्यान्तः। घञि संकाशः। पचाद्यचि 'इकः काशे' (६. ३. १२३) इति पूर्वपददीर्घत्वे नीकाशः। घञि प्रतीकाशः। आदिना भूतरूपकल्पानां ग्रहणम्। यथा पितृकल्पः पितृरूपः पितृभूतः॥

**कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम्।**
**भरण्यं भरणं मूल्यं[1] निर्वेशः पण इत्यपि॥ ३९॥**

क्षीर०—कर्मणि साधुः कर्मण्या। विधीयतेऽनया विधा, लक्ष्ये भोजनपिण्डे रूढा। भ्रियतेऽनयेति 'संज्ञायां समज—' (३. ३. ९९) इति क्यपि साधुः। 'स्त्रियां क्तिन्' (३. ३. ९४)। मनिन्। ल्युट् तुट् च, वीयतेऽनेन वेतनम्। 'वी गत्यादौ'। भरणे साधु भरण्यम्। मूलेनानाम्यं मूल्यम्। नौवयोधर्म—' (४. ४. ९१) इति यत्। निर्विश्यते भुज्यते निर्वेशः। पण्यते आभाष्यते पणः। 'नित्यं पणः परिमाणे' (३. ३. ६६) इति साधुः॥

---

१. 'ण्या, भरण्यं वा। वि' ग. घ. ङ, 'ण्या। अनुवि' ख. पाठः.

टीका० — कर्मण्यैकादशकं वेतने । कर्मणा संपद्यत इति कर्मण्या । 'कर्मवेशाद् यत्' (५. १. १००) । 'ये चाभावकर्मणोः' (६. ४. १६८) इति प्रकृतिभावः । धाञोऽङ् । विधा । भृञः 'संज्ञायां समज—' (३. ३. ९९) इत्यादिना क्यप् । भृत्या । 'कर्मणि भृतौ' (३. २. २२) इति निपातनात् क्तिनि भृतिः । मनिना भर्म । 'वी गत्यादौ' । 'वीपथिभ्यां तनन्' (उ० ३. ५१) । वेतनम् । 'राजेरन्यः' (उ० ३. १००) इति बाहुलकोऽन्यः । भरण्यम् । ल्युटि भरणम् । मूल्यपणौ साधितौ । वेश उक्तः । निर्पूर्वाद् निर्वेशः ॥

**सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा ।**
**गन्धोत्तमा प्रसन्नेरा कादम्बर्यः परिस्रुता ॥ ४० ॥**
**मदिरा कश्यमद्ये चापि**

क्षीर० — सूयते परिवास्यते[3] सुरा । हलिनो बलस्य प्रिया । जहाति लज्जामनया हाला । हलति विलिखति वाङ्मम् । ज्वलादित्वाण्णः । परिस्रवति परिस्रुत् । परिस्रुता च । वरुणात्मजा वारुणी, समुद्रोत्थत्वात् । गन्धेनोत्तमा गन्धोत्तमा । प्रसीदति प्रसन्ना, अच्छसुरा । एति भ्राम्यत्यनया इरा । कुत्सिताम्बरस्य नीलवाससः इयं कादम्बरी । सहार्थे तृतीया । माद्यन्त्यनया मदिरा । कशिदेशे भवं कश्यम् । मदे साधु मद्यं, माद्यत्यनेन वा । 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति करणे 'गदमद—' (३. १. १००) इति यत् । स्वादुरसा मादिष्ठा, कल्या, हारहूरा, कापिशायनं च ॥

टीका० — सुरात्रयोदशकं मद्ये । सुपूर्वाद् रातेरङि सुरा । बलभद्ररुच्यत्वाद् हलिप्रिया । 'स्रु गतौ' । क्विपि परिस्रुत् तान्ता । मथनकाले सागरादियं वरुणसुता जातेत्यतो वरुणात्मजा । तदुक्तं —

"वरुणस्य ततः कन्या प्रार्थ्यमाना परिग्रहम्"

इति । सीदतेः क्तः । प्रसन्ना । इः कामः, तं रातीति इरा ह्रस्वादिः । 'आतोऽनुपसर्गे कः' (३. २. ३) । गोमन्तपर्वते कदम्बकोटरजत्वात् कादम्बरी । तदुक्तं —

१. 'द् । अनुवि' ग. पाठः. २. 'ल' क. पाठः. ३. 'चार्यतेऽनया सु' ग. ख, क. पाठः. ४. 'मा । प्र' ख. पाठः.

"कदम्बकोटराज्जाता नाम्ना कादम्बरी तु सा।"

नैरुक्तो वर्णसङ्घातलोपः। मुदिरवत् किरचि मदिरा। काशिः सौत्रस्ताल व्यान्तः। 'जनेर्यक्' (उ० ४. ११२) इति बाहुलको यक्। कश्यम्। 'गदमद चरयमश्चानुपसर्गे' (३. १. १००) इति मद्यम् ॥

**अवदंशस्तु भक्षणम्।**

**क्षीर० — अवदश्यते पानरुचिजननार्थमवदंशः खरविदंशमभ्यवहार्यम्। चर्वणमुपदंशश्च ॥**

**टीका० —** ओडशिकायामुपदंशः ॥

**शुण्डा पानमदस्थानं**

**क्षीर० —** शु(ण्ड्य ? ण्य)ते शुण्डा। 'शुण गतौ'। पानमदयोरास्पदं कल्यापालगृहैकदेशः। शाश्वतस्तु —

"कुञ्जराणां करः शुण्डा शुण्डा कादम्बरी मता" ॥

**टीका० —** शुण्डात्रयं पानागारे। पिबन्त्यस्मिन्निति पानम्। शुण्ड तालव्यादिः। पिबतां मदस्तत्रोपजायत इति मदस्थानम् ॥

**मधुवारा मधुक्रमाः ॥ ३०॥**

**क्षीर० —** क्रमेण मधुपानावसराः ॥

**टीका० —** असकृन्मधुपानक्रमे मधुवारद्वयम्। वारः क्रमः परिपाटिरिति पर्यायाः। षष्ठीसमासः। बहुत्वाद् बहुवचनम् ॥

**क्षीर० —** "गौडी पैष्टी च माध्वी च (प ? फ)लेस्तथा च सुरा स्मृता" इति सुराभेदानाह —

**मध्वासवो माधवकः**

**मौक्षिकमिश्रम् आसूयते मध्वासवः। मधुनो विकारो मधुकृतो वा माधवकः। कुलालादित्वाद् वुञ् ॥**

१. 'क्षीरमि' ग. घ. पाठः.

**मधु मार्द्वीकमद्ययोः ।**

मद्यते मधु माद्यत्यनेन वा । मृद्वीकाया विकारो मार्द्वीकम् । माध्वीकमित्युपाध्यायः । मद्यस्योक्तत्वादद्वयोरित्येके पेठुः । तन्न । सामान्यविशेषरूपत्वात् ॥

टीका० —मधूकपुष्पकृते मद्ये मध्वासवचतुष्कम् । मधूकपुष्पं मधु, तस्यासवः सन्धानं मध्वासवः । मधुना कृतो माधवकः । 'कुलालादिभ्यो वुञ्' (४. ३. ११८) । मधुप्रकृतित्वान्मधु । मृद्वीका द्राक्षा, तस्या विकारो मार्द्वीकम् । एतत् तु 'पचाम मधु माध्वीकमि'त्यत्र टीकाकृतोक्तम् । न द्वयोः नपुंसकमेवेत्यर्थः ॥

**मैरेयमासवः शीधुः**

क्षीर० — मिरायां देशे भवो गौड्याः सुराया विशेषो मैरेयः । शेरतेऽनेन शीधुः । शीथोरित्येके पठित्वा शीथुप्रकृतिक इति व्याख्यन् । यदाहुः—'मध्वासवस्तु मैरेयम्' । तन्न । यन्माला—'मैरेयो गदितः शीधुः' । पक्वरसोऽपि ॥

टीका० —मैरेयत्रयं मद्यविशेषे । यद्यपि—

> ''शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
> मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम् ॥''

इति माधवः, तथापि सूक्ष्मभेदमनादृत्यैतदुक्तम् । 'शीङ्स्थुक्लक्वलञ्वालञः' (उ० ४. ३८) इति धुक्प्रत्ययः । अर्धर्चादिपाठात् पक्षे क्लीबम् । शीथोः परेण सम्बन्ध इत्यन्यः ॥

**मेदको जगलः समौ ॥ ४० ॥**

क्षीर० — मेद्यति स्निह्यत्यनेन मेदकः । भृशं गलतीति जगलः सुरायाः सन्धानद्रव्यपङ्कः ॥

१. 'न्य' ग. घ. ङ. पाठः. २. 'मि' क. पाठः. ३. 'म् । य' क. ख. पाठः. ४. 'च' क ङ. ठ. पाठः. ५. 'को धुक्', ६. 'धु' ङ. ज. पाठः.

टीका० — मेदकद्वयं सुराकल्के । जगलः चवर्गादिः ।

"मद(नादौ ? नद्रौ) पिष्टमद्ये जगले भूतेमेदके"

इति रभसः ॥

**सन्धानं स्यादभिषवः**

क्षीर० — सन्धीयते सन्धानं, वंशाङ्कुरफलादीन् बहुकालं सन्धाय यत् क्रियते । अभिषूयते चिरं क्लेद्यते अभिषवः । भावसाधनो वा । सुरासन्धौ वर्तेते ॥

टीका० — सुरासन्धानेऽभिषवद्वयम् । धाञो ल्युट् । सन्धानम् । स्नानेऽभिषव उक्तः ॥

**किण्वं पुंसि तु नग्नहूः ।**

क्षीर० — कणति कीयते वा सुरानेन किण्वं, माषदलव्योपादि सुराबीजाख्यम् । नग्नेन(हू ? ह्व)यते स्पर्धते सुरास्वादनाभावाद् नग्नहूः । नग्नहुर्मालायाम् ॥

टीका० — नानाद्रव्यकृते सुराबीजे किण्वद्वयम् । नग्नमाह्वयत इति नग्नहूः नग्नहौ नग्नहुः । 'ह्वयतेश्च' इति क्विप् । अव्युत्पन्नोऽयमुकारान्त इत्यन्यः ।

"विद्याद् देयमृणं परिवृत्ते नग्नहुं किण्वम्"

इति नाममाला । 'क्लीबे किण्वं च नग्नहुरि'त्यमरमाला च ॥

**कारोत्तमः सुरामण्डः**

क्षीर० — कारेण क्रियया वश्यान्मुख्यः कारोत्तमः । सुरा(त्थाः ? त्थः) स्वच्छभागः ॥

टीका० — सुराया मण्डेऽग्रभागे कारोत्तरः ॥

---

१. 'र्तें' क. पाठः. २. 'क्वि' ख. पाठः. ३. 'ण्वः' ग. घ. ङ. पाठः. ४. 'क्वि', ५. 'क्री', ६. 'च्छा' क. ग. घ. पाठः. ७. 'ला ॥' ग. पाठः. ८. 'रापार्श्वे मूर्धाभा' ग. घ. ङ. पाठः.

**आपानं पानगोष्ठिका ॥ ४१ ॥**

क्षीर० — आपीयतेऽस्मिन्नापानम् । पानाय गोष्ठी आसनं पानगोष्ठी । गावो नानाविधा वाचस्तिष्ठन्त्यत्रेति ॥

टीका० — आपानद्वयं संभूय यत्र पीयते, तत्र ॥

**चषकोऽस्त्री पानपात्रं**

क्षीर० — चषन्त्यनेन चषकः । गल्वर्कोऽपि ॥

**सरकोऽप्यनुतर्षणम् ।**

विवक्षातो विध्यनुवादौ । सरति सरकः । अनुतृष्यत्यनेनानुतर्षणं सुरापरिवेषणम् । चषकपर्यायावेतावित्येके । यन्मुनिः — 'चषकश्चानुतर्षश्च सरकः' ॥

टीका० — चषकचतुष्कं मद्यपानपात्रे । अपिशब्दात् सरकोऽप्यस्त्री । 'सरकं वा ना । अनुतर्षो ने'ति तु रत्नकोषः । 'चष भक्षणे' । मूर्धन्यषः । 'सृ गतौ' । 'कृञादिभ्यो वुञ्' (उ० १. ३५) । चषकसरकौ । 'ञितृषा पिपासायाम्' । ल्युट् । अनुतर्पणम् ॥

**धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत् समाः ॥ ४२ ॥**

क्षीर० — धूर्वति हिनस्ति धूर्तः । अक्षैर्दीव्यति विजिगीषते तच्छीलोऽक्षदेवी । किं तवास्तीति पणते कितवः ॥

टीका० — धौर्तपञ्चकं द्यूतकारे । द्यूतविषये धृतिरवस्थानमस्यास्तीति धार्तः । मत्वर्थे ज्योत्स्नादित्वादण् । अक्षदेवी णिन्यन्तः । किं तवास्तीति वदतीति कितवः । पृषोदरादिः ॥

**स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ।**

क्षीर० — लगति लग्नकः । प्रतिनिधिर्भवति प्रतिभूः । सभा

---

१. 'नावा' ख. पाठः. २. 'क' ग. ङ. पाठः. ३. 'दः' ग. पाठः. ४. 'कृ', ५. 'क' ङ. पाठः. ६. 'णम् । च' ख. पाठः. ७. 'ति जि' ग. घ. ङ. पाठः. ८. 'धू' ङ. ज. पाठः.

द्यूतशालाऽस्त्यस्य सभिकः। द्यूतकारकः। द्वौ द्वौ भिन्नार्थौ। आद्ययोः सर्वसामान्यत्वात्[1] ॥

टीका० — लग्नकद्वयं लग्नके। 'ओ लजी ओ लस्जी व्रीडे'। क्तः। कन्। लग्नकः। क्विपि प्रतिभूः। सहिकद्वयं सहिअरे इति ख्याते। द्यूतसहयोगात सहिकः। व्रीह्यादित्वात् ठन्[2] ॥

**द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥ ४३ ॥**

क्षीर० — दीव्यते स्म द्यूतम्। कितवस्य कर्म कैतवम्। पणनं पणः। दरोदरं नानार्थे ॥

टीका० — द्यूतचतुष्कं द्यूते। दिवेः क्तः। द्यूतः। 'दिवोऽविजिगीषायाम्' (८. २. ४९) इति निष्ठानत्वं न भवति। अक्षाः पाशका अत्रोपायत्वेन सन्तीति मतुपि अक्षवती। स्वभावात् स्त्रीत्वम्। कितवकर्म कैतवम्। युवादित्वादण्। पणयोगादर्शआद्यचि पणः ॥

**पणोऽक्षेषु ग्लहः**

क्षीर० — पण्यते पणो बन्धकः। गृह्यते ग्लहः। 'अक्षेषु ग्लहः' (३. ३. ७०) इत्यप्[3] ॥

टीका० — अक्षेषु द्यूतेषु आढ इति ख्याते ग्लहः। 'अक्षेषु ग्लहः' (३. ३. ७०) इति निपातनाद् ग्रहेरपि लत्वम् ॥

**अक्षास्तु देवनाः पाशकाश्च ते।**

क्षीर० — अक्ष्णोत्यक्षः। दीव्यत्यनेन देवनः। पाश्यते बध्यतेऽनेन पाशकः। प्रासक इत्येके ॥

टीका० — अक्षत्रयं पाशके। विभीतकादावप्यक्षः। पाशकस्तालव्यशः ॥

**परिणायस्तु शारीणां[3] समन्तान्नयने**

क्षीर० — वामदक्षिणयोः शारीणां[4] परिणयनं परिणायः। 'परि-

१. 'न्यात् ॥' ग. घ. ङ. पाठः. २. 'ति साधुः ॥' ख. पाठः. ३, ४. 'रा' ग. घ. ङ. पाठः.

न्योर्नीणोर्द्यूताभ्रेषयोः' (३.३.३७) इति घञ्। शृणाति शारिः[1] विखे-लनी ॥

टीका०—वामदक्षिणयोरग्रतश्च शारीणां नयनं परीणायः। 'परि-न्योर्नीणोर्द्यूताभ्रेषयोः' (३. ३. ३७) इति घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति पक्षे दीर्घत्वम् ॥

अस्त्रियाम् ॥४४॥

अष्टापदं शारिफलं

क्षीर०—अष्टौ पदान्यत्राष्टापदम्। शारयः[2] फलन्त्यत्र शारि[3]-फलं[4] खेलनाधारश्चतुरङ्गफलकादि। आकर्षो नानार्थे ॥

टीका०—अष्टापदद्वयं शारिपट्टे। एतावस्त्रियौ। प्रतिपङ्क्ति अष्टौ पदान्यस्येत्यष्टापदम्। 'अष्टनः संज्ञायाम्' (६. ३. १२५) इति पूर्वपददी-र्घत्वम्। देशान्तरे चतुरङ्गस्यैव पीठिकायां शकद्यूतकमपि प्रवर्तते। 'शॄ हिंसा-याम्'। 'शृणातेः शकुनौ' इतीञ्। शारिः। तालव्यादिरुक्तः। ईश्वरा हि प्रायः पट्ट एव दीव्यन्ति ॥

प्राणिद्यूतं समाह्वयः।

क्षीर०—प्राणिभिर्मेषकुक्कुटादिभिर्द्यूतं प्राणिद्यूतम्। संघर्षेणाह्व-[5]यन्तेऽत्र समाह्वयः ॥

टीका०—प्राणिद्यूतद्वयं मेषकुक्कुटादियुद्धे। तदुक्तम्—

"अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते ॥
प्राणिभिः क्रियते यत् तु स विज्ञेयः समाह्वयः ॥"

इति ॥

१. 'रः', २. 'राः फ', ३. 'र' ग. घ. ङ. पाठः. ४. 'लं लेखना' ख., 'लं खल' ग. पाठः. ५. 'णात्राह्वयन्ते स' ख. पाठः.

**उक्ता भूरिप्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः ॥ ४९ ॥**
**ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ ४९½ ॥**

क्षीर० — अत्र शूद्रवर्गे ये सम्बन्धिशब्दा लक्ष्यबाहुल्यादेकस्मिन् लिङ्गे उक्ताः, ते तद्गुणयोगादन्यत्र वर्तमाना लिङ्गान्तरेऽप्युत्प्रेक्ष्याः । यथा — कर्मण्या भृतिः कर्मण्यं वेतनं, हलिप्रिया सुरा हलिप्रियं मद्यम्, अक्षवती सभा अक्षवद् द्यूतम् । एवं मालाकारी स्त्री । अक्षदेवनी स्त्री । तथा अनुपदीनं पा(द)त्रम् ॥

इति श्रीक्षीरस्वाम्युत्प्रेक्षितेऽमरकोशोद्घाटने भूम्यादिकाण्डो

द्वितीयः ।

टीका० — समस्तलिङ्गग्रहादेव संपूर्णतां परिहरति — अत्र च वर्गे ये यौगिकाः शब्दाः मायाकारमार्दङ्गिकवैणविककर्मकरनियोज्यचौराक्षदेविप्रभृतयः पुंसि प्रचुरप्रयोगदर्शनाद् एकस्मिन् लिङ्गे पुंस्यभिहिताः, ते ताद्धर्म्यात् तद्योगवशादेकक्रियाकारित्वात् ततोऽन्यत्र स्त्र्यादौ वृत्तौ सत्यां लिङ्गान्तरेऽप्यूह्याः । तद् यथा — कर्मकरी स्त्री, कर्मकरं ब्रह्मवृन्दमित्यादि । ये त्वयौगिकाः करणमालिककुम्भकारादयः, ते जातिवचनत्वाच्छूद्रादिवदेव स्त्रीपुंसयोरिति ॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ
टीकासर्वस्वे शूद्रवर्गः ॥

**काण्डश्च द्वितीयः समाप्तः**

१. 'रा म. प्र. क.

Rukmini Nadhal Jastri
Masulipatam.

॥ श्रीः ॥

श्रीमदमरसिंहविरचितं

# नामलिङ्गानुशासनं

वन्द्यघटीयश्रीसर्वानन्दप्रणीतया टीकासर्वस्वाख्यया

व्याख्यया समेतम्

## तृतीयं काण्डम् ।

### अथ विशेष्यनिघ्नवर्गः ।

**विशेष्यनिघ्नैः सङ्कीर्णैर्नानार्थैरव्ययैरपि ।**
**लिङ्गादिसङ्ग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥**

**विशेष्यनिघ्नैरित्यादि** । वक्ष्यमाणे सामान्ये काण्डे विशेष्यनिघ्नैः विशेष्यायत्तैः सुकृतिप्रभृतिभिः, सङ्कीर्णैः परस्परविजातीयार्थैः कर्मपारायण-परस्परप्रभृतिभिः, अनेकार्थैः नाकादिभिः, अव्ययैः आङादिभिः, लिङ्गस-ङ्ग्रहैः 'स्त्रियामीदूद्विरामैकाच्' इत्यादिभिः, आदिशब्देन नामसङ्ग्रहैश्च लङ्का-शेफालिकादिभिः । ते च पूर्ववर्गसंश्रयाः पूर्ववर्गानुगताः । तथाहि — सुकृति-प्रभृतयोऽमरमनुष्यादिषु विशेषणतया सम्बद्धाः, कर्मादयस्तद्व्यापारतया, नाका-दयो वाचकतया, आङादयोऽवध्यादिद्योतकतया, स्त्रियामीदूदित्यादयश्च तत्त-ल्लिङ्गादिप्रतिपादकतया । अत एव साधारणत्वात् सामान्यकाण्डमिदम् ॥

G. P. T. 541. 500-5-7-91. B

**स्त्रीदाराद्यैर्यद् विशेष्यं यादृशैः प्रस्तुतं पदैः ।**
**गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥**

इह शास्त्रे रूपभेदात् प्रायशो लिङ्गनिर्णयः । सोऽत्रापि वर्गे रूपभेदादेवेति भ्रमनिरासार्थमाह— स्त्रीदाराद्यैः स्त्रीदारकलत्राद्यैः पदैर्यादृशैर्लिङ्गैः स्त्रीत्वादियुक्तैर्यदर्थरूपं विशेष्यं विशेषणीयं प्रक्रान्तं, तस्य विशेष्यस्य भेदका गुणादिशब्दाः तथा स्युः तल्लिङ्गा एव भवेयुः । एतदुक्तं भवति— यदा विशेष्यं स्त्रीलिङ्गेन विशेष्यपदेन प्रस्तूयते, तदा गुणादिशब्दोऽपि सुकृतिप्रभृतिः तस्य विशेषकः स्त्रीलिङ्गः । यदा पुँल्लिङ्गेन प्रस्तूयते, तदा पुँल्लिङ्गः । यदा क्लीबलिङ्गेन प्रस्तूयते, तदा क्लीबलिङ्गः । विशेष्यनिघ्नत्वेन विशेष्यगतमेव लिङ्गं विशेषणान्याददते इति यावत् । तद्यथा— सुकृतिनी स्त्री, सुकृतिनो दाराः, सुकृति कलत्रमित्यादि ॥

**सुकृती पुण्यवान् धन्यः**

सुकृतित्रयं सुकृतिनि । 'धनगणं लब्धा' (४. ४. ८४) इति यत् । धन्यः ॥

**महेच्छस्तु महाशयः ।**

महेच्छद्वयं महाशये । महाशयो महामनाः ॥

**हृदयालुः सहृदयः**

प्रकृष्टहृदये हृदयालुद्वयम् । 'हृदयाच्चालुरन्यतरस्याम्' (वा० ५. २. १२२) इत्यालुः ॥

**महोत्साहो महोद्यमः ॥ ३ ॥**

महोत्साहद्वयं महाध्यवसाये ॥

**प्रवीणनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।**
**वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥**

प्रवीणदशकं सुज्ञे । 'पुण कर्मणि शुभे' । इगुपधलक्षणः कः । निपुणः । 'निनदीभ्यां स्नातेः कौशले' (८. ३. ८९) इति षत्वे निष्णातः ।

शिक्षा सञ्जातास्येति तारकादित्वाद् इतच्। शिक्षितः। विज्ञानेन व्यवहरतीति वैज्ञानिकः। 'चरति' (४. ४. ८) इति ठक्। मत्वर्थीयठनि विज्ञानिको वा पाठः। कृतमभ्यस्तं मुखम् उपायोऽनेनेति कृतमुखः। कृती इन्नन्तः। कुशेस्तालव्यात् सौत्राद् वृषादिकलचि कुशलः॥

**पूज्यः प्रतीक्ष्यः**

पूज्यद्वयं **पूज्ये**॥

**सांशयिकः संशयापन्नमानसः।**

सांशयिकद्वयं **संशयविषयस्थाण्वादौ**। 'संशयमापन्नः' (५. १. ७३) इति ठक्, न तु संशयवति पुरुष इति न्यासः। अतः सप्तम्यर्थे बहुव्रीहिः। संशयकर्तरि पुरुष एवेति तद्रक्षमतिः॥

**दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि॥ ७॥**

दक्षिणीयत्रयं **दक्षिणायोग्ये**। 'कडङ्करदक्षिणाच्छ च' (५. १. ६९) इति छयत्प्रत्ययाभ्यां दक्षिणीयदक्षिण्यौ॥

**स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे।**

वदान्यचतुष्कं **बहुप्रदे**। 'वदेरान्यः' (उ० ३. १०४)। वदान्यः। दाने शौण्डः प्रसक्तो दानशौण्डः॥

**जैवातृकः स्यादायुष्मान्**

जैवातृकद्वयं **दीर्घायुषि**। चन्द्रे जैवातृक उक्तः॥

**अन्तर्वाणिस्तु शास्त्रवित्॥ ८॥**

अन्तर्वाणिद्वयं **शास्त्रज्ञे**। अन्तः अन्तश्शरीरे वाणी शास्त्रशरीरभूता अधिदैवतभूता अस्येत्यन्तर्वाणिः। समासान्तस्यानित्यत्वाद् 'नद्यृतश्च' (५. ४. १५३) इति न कप्। 'गोस्त्रियोरुपसर्जनस्य' (१. २. ४८) इति ह्रस्वत्वम्॥

**परीक्षकः कारणिकः**

परीक्षकद्वयं **निरूपके**। कारणं हेतुः, तेन व्यवहरति। 'चरति' (४. ४. ८) इति ठकि कारणिकः॥

**वरदस्तु समर्धकः ।**

यो देवतादिर्वरं वाञ्छितं फलं ददाति, तत्र वरदद्वयम् । समृध्यति समृद्धया युज्यत इति ण्वुलि समर्धकः ॥

**हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥**

हृष्टहृदये हर्षमाणचतुष्कम् । 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३. २. १२९)। हर्षमाणविकुर्वाणौ । अथवा विकुर्वाणे 'अकर्मकाच्च' (१. ३. ३५) इति तेङ् । प्रमनाः सान्तः ॥

**दुर्मना विमना अन्तर्मनाः**

वैमनस्ययुक्ते दुर्मनस्त्रयम् । त्रयमेव सान्तम् ॥

**स्यादुत्क उन्मनाः ।**

सोत्कण्ठे उत्कद्वयम् । 'उत्क उन्मनाः' (५. २. ८०) इति निपातितम् । उच्छब्दात् तद्वति कन्प्रत्ययः । उन्मनाः सान्तः ॥

**दक्षिणे सरलोदारौ**

दक्षिणत्रयम् ऋज्वाशये । वनौषधौ सरल उक्तः ॥

**सुकलो दातृभोक्तरि ॥ ८ ॥**

एक एव दाता च भोक्ता च स सुकलः । त्यागभोगयुक्त इत्यन्यः । सुष्ठु कल्पत इति सुकलः । पृषोदरादिः ॥

**तत्परे प्रसितासक्तौ**

तत्परे तात्पर्यवति प्रसितद्वयम् । 'षिञ् बन्धने' । 'षञ्ज सङ्गे' । क्तः ॥

---

१. 'आत्मनेपदम् । प्र' क. ज. पाठः.

**इष्टार्थोद्युक्त उत्सुकः।**

इष्टार्थे अभिमतप्रयोजने उद्युक्त उद्यतः उत्सुकः ॥

**प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥**

धनादिना ख्याते प्रतीतषट्कम्। विदिर्लाभे। 'वित्तो भोगप्रत्यययोः' (८. २. ५८) इति निपातनाद् न नत्वम्। वित्तः ॥

**गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ।**

त्यागशौर्यादिगुणैः ख्याते कृतलक्षणद्वयम्। 'लक्षणं नामचिह्नयोः'। कृतमभ्यस्तमनुरागाद् लक्षणं नामास्येति कृतलक्षणः। आहतं गुणितम् असकृदुच्चारितं नामास्येत्याहतलक्षणः ॥

**इभ्य आढ्यो धनी**

बहुधने इभ्यत्रयम्। इभमर्हतीति इभ्यः। 'दण्डादिभ्यो यत्' (५. १. ६६)। एत्यैनं ध्यायन्तीत्याढ्यः। घञर्थे कः। पृषोदरादिढत्वम् ॥

**स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥**

**अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः।**

स्वामिदशकं प्रभौ। 'स्वामिन्नैश्वर्ये' (५. २. १२६) इति मत्वर्थे निपातनात् स्वामी। 'अश्नोतेराशुकर्मणि वरट् च' (उ० ५. ५८) इति वरट् अकारस्य च ईकारः। ईश्वरः। 'पातेर्डतिः' (उ० ४. ५८)। पतिः। ईशितृनेतारौ तृन्नन्तौ। क्विपि अधिभूः। 'प्रभौ परिवृढः' (७. २. २१) इति परिवृढो निपातितः। बृंहेः क्तः इडागमाभावः नकारहकारयोर्लोपः परस्य च ढत्वं निपात्यते। अधिपातीत्यधिपः ॥

**अधिकर्द्धिः समृद्धः स्यात्  ।**

अधिकर्द्धिद्वयम् अतिशयितसम्पद्युक्ते ॥

**कुटुम्बव्यापृतस्तु यः ॥ ११ ॥**
**स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।**

कुटुम्बं पोष्यवर्गादि । तत्र व्यापृतः पोषणादिव्यग्रो यः, तत्र अभ्यागारिकद्वयम् । अगारं भक्तिः सेव्यमस्येत्यागारिकः । 'अचित्तादेश-कालाऽट्ठक्[§]' (४. ३. ९६) । अभ्यधिक आगारिकोऽत्यन्तागारशरणोऽभ्या-गारिकः । उपादधाति कुटुम्बमित्युपाधिः । आविष्टलिङ्गत्वादयं योषिदादौ च पुमान् ॥

**वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १२ ॥**

यः प्रत्येकमवयवशुद्ध्या रूपवान् सुन्दरः, स सिंहसंहननः ॥

**निर्धार्यः कार्यकर्ता यः सम्पनन् सत्त्वसम्पदा ।**

व्यसने यदविकारकं, तत् सत्त्वम् । तत्सम्पदा सम्पतन् उद्यमं कुर्वन् यः कार्यकर्ता, स निर्धार्यः । क्वचित् 'संयुत' इति पाठः ॥

**अवाचि मूकः**

अवाग्द्वयं वोब्बेति ख्याते । अवाक् चान्तः ॥

**अथ मनोजवः स पितृसन्निभः ॥ १३ ॥**

मनोजवद्वयं पितृतुल्ये । जुः सौत्रः । लोकानां मनो जवति प्रविश-तीति अच् ॥

**सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ।**

परिणेत्रे योऽलङ्कृत्य कन्यां सत्कृतां ददाति, स कूकुदः । दीर्घादिः ॥

**लक्ष्मीवाँल्लक्ष्मणः श्लीलः श्रीमान्**

---

§ 'ठञ्' इति मुद्रिताष्टाध्यायीपाठः ।

लक्ष्मीवच्चतुष्कं सम्पद्युक्ते शोभायुक्ते च । 'लक्ष्म्या अच्च' (ग० ५. २. १००) इति पामादिपाठाद् नः अकारश्चान्तादेशः । लक्ष्मणः । सिध्मादिलचि श्लीलः । 'कपिलकादीनां रो लत्वमापद्यते' (वा० ८. २. १५) इति लत्वम् ॥

**स्निग्धस्तु वत्सलः ॥ १४ ॥**

स्निग्धद्वयं स्निग्धे । 'वत्सांसाभ्यां कामबले' (५. २. ९८) इति मत्वर्थलचि वत्सलः ॥

**स्याद् दयालुः कारुणिकः कृपालुः सूरतः समाः ।**

दयालुचतुष्कं कृपालौ । 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' (३. २. १५८) । दयालुः । कारुण्ययोगात् कारुणिकः । 'अत इनिठनौ' (५. २. ११५) इति ठन् । 'हलस्तद्धितस्य' (६. ४. १५०) इति यलोपः । कृपां लातीति कृपालुः । 'डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यानम्' (वा० ३. २. १८०) इति डुः । सूरतो दीर्घादिः ॥

**स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥**

स्वतन्त्रपञ्चकं स्वतन्त्रे । स्वतन्त्रः स्वप्रधानः । स्वेन आत्मना ईर्ते प्रचरतीति णिनिः । 'स्वादीरेरिणोर्वृद्धिर्वक्तव्या' (वा० ६. १. ८९) इति वृद्धिः । स्वैरी । स्वच्छन्दः स्ववशः । निरवग्रहः परेणानियम्यः ॥

**परतन्त्रः पराधीनः परवान् नाथवानपि ।**
**अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १६ ॥**

परतन्त्रनवकं परायत्ते । परस्मिन् अधीनः पराधीनः । 'सप्तमी शौण्डैः' (२. १. ४०) इति समासः । 'अषडक्षाशितंग्वलङ्कर्मालंपुरुषाध्युत्तरपदात् खः' (५. ४. ७) इति खः । परशब्दः श्रेष्ठवचनः । अधिगत इनः ईश्वरोऽनेनेति अधीनः । ह्रस्वादिः । निहन्यत इति

निघ्नः। 'स्थास्नापाव्यधिहनियुध्यर्थम्' इति घञर्थे कः। 'यती प्रयत्ने'। क्तः। आयत्तः॥

**खलपूः स्याद् बहुकरः**

खलपूद्वयं सम्मार्जनकारिणि कोळगोमीति[1] ख्याते। खलं भूस्थानकण्ठेषु। तत् पुनातीति क्विप्। खलपूः। बहु करोति सम्मार्ष्टीति 'किंयत्तद्बहुषु कृञोऽज्विधानम्' (वा० ३. २. २१) इत्यच्। बहुकरः॥

**दीर्घसूत्रश्चिरक्रियः।**

स्वल्पकालसाध्ये कर्मणि चिरेण कार्यकारिणि दीर्घसूत्रद्वयम्। दीर्घं सूत्रमस्येति दीर्घसूत्रः। चिरं क्रिया अनुष्ठानमस्येति चिरक्रियः॥

**जाल्मोऽसमीक्ष्यकारी स्यात्**

गुणदोषानपरामृश्य यः करोति स जाल्मः॥

**कुण्ठो मन्दः क्रियासु यः ॥१७॥**

क्रियासु व्यापारेषु मन्दः कुण्ठः। 'कुठि च' इत्यतः पचाद्यच्॥

**कर्मक्षमोऽलङ्कर्मीणः**

अनायासेन कर्मनिष्पादके कर्मक्षमद्वयम्। पराधीनवत् खप्रत्ययेन अलङ्कर्मीणः॥

**क्रियावान् कर्मसूद्यतः।**

कर्म कर्तुमुद्यते क्रियावान् तान्तः॥

**स कार्मः कर्मशीलो यः**

१. 'गो' म. पाठः,

कार्मद्वयं कर्मशीले। 'कार्मस्ताच्छील्ये' (६. ४. १७२) इति निपातनात् साधुः ॥

**कर्मशूरस्तु कर्मठः ॥ १८ ॥**

कर्मशूरद्वयं कर्मठे। 'कर्मणि घटोऽठच्' (५. २. ३५)। कर्मठः ॥

**भरण्यभुक् कर्मकरः**

भरण्यं वेतनं यो भुङ्क्ते, स कर्मकरः। अयं शूद्रविशेषाभिधानप्रस्तावेऽभिहितः। इह तु क्रियाशब्दप्रक्रमेण भरण्यभुगिति पर्यायान्तरदर्शनार्थं कर्मकारेण सह विषयभेदप्रदर्शनार्थं चानूदितः ॥

**कर्मकारस्तु तत्क्रियः।**

तत्क्रियः वेतनं विना कर्मक्रियो दासादिः कर्मकारः। 'कर्मण्यण्' (३. २. १) ॥

**अपस्नातो मृतस्नातः**

मृतमुद्दिश्य स्नाते अपस्नातद्वयम् ॥

**आमिषाशी तु शौष्कलः ॥ १९ ॥**

आमिषाशिद्वयं मत्स्यमांसभक्षणशीले। शौष्कलस्तालव्यादिमूर्धन्यमध्यः ॥

**बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः।**

बुभुक्षितचतुष्कं जातबुभुक्षे। त्रिषु तारकादित्वाद् इतच्। अत्तमिच्छतीति जिघत्सुः ॥

**परान्नः परपिण्डादः**

---

१. 'घाम्र' ख. ङ. पाठः.

परान्नोपजीविनि परान्नद्वयम् । परस्यान्नमस्येति वैयधिकरण्येन बहुव्रीहिः । परपिण्डमत्तीति अण् । परपिण्डादः ॥

**भक्षको घस्मरोऽद्मरः ॥ २० ॥**

भक्षकत्रयं भक्षणपरे । 'सृघस्यदः क्मरच्' (३. २. १६०) । घस्मरः । अद्मरः ॥

**आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।**

आद्यूनद्वयम् उदरपूरके । 'दिवोऽविजिगीषायाम्' (८. २. ४९) इति निष्ठातकारस्य नत्वे आद्यूनः । 'उदराट्ठगाद्यूने' (५. २. ६७) इति ठक् । औदरिकः । विजिगीषाविवर्जित इति, योऽत्यन्तक्षुधया बाध्यमान उदर एव प्रसक्त इत्यर्थः ॥

**उभावात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ॥ २१ ॥**

पोष्यवर्गं विहाय स्वोदरमात्रपूरके आत्मंभरित्रयम् । 'फलेग्रहिरात्मंभरिश्च' (३. २. २६) इति निपातितः । चकारात् कुक्षिंभरिरपि । भृञ इन् उपपदस्य (नु ? मु) मागम इति जयादित्यः । भाष्ये तु कुक्षिंभरिसिद्ध्यर्थम् अत्यल्पमिदमुच्यते भृञः कुक्ष्यात्मनो(नुं ? मुं) (चेति) वक्तव्यमिति चकाराद् उदरंभरिमपि समा(स ? दध)ते । 'आत्मोदरकुक्षिषु भृञः ख च' इति कातन्त्रे वररुचिसूत्रम् ॥

**सर्वान्नीनस्तु सर्वान्नभोजी**

चतुर्णामपि वर्णानां योऽन्नं भुङ्क्ते, तत्र सर्वान्नीनद्वयम् । 'अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु' (५. २. ९) इति खः । सर्वान्नीनः ॥

**गृध्नुस्तु गर्धनः ।**

**लुब्धोऽभिलाषुकस्तृष्णक्**

गृध्नुपञ्चकं लुब्धे । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३. २. १४०) । गृध्नुः । 'जुचङ्क्रम्य—' (३. २. १५०) इत्यादिना युचि गर्धनः ।

लुभेः क्तः। लुब्धः। 'लष कान्तौ'। 'लषपत—' (३.२.१५४) इत्यादिना उकञ्। अभिलाषुकः। 'स्वपितृषोर्नजिङ्' (३.२.१७२) इति नजिङि तृष्णक्। जान्तः। 'तत् करोति—' (ग० ३.१.२६) इति ण्यन्ताद् ण्वुलि तृष्णकोऽजन्तोऽपीष्यते॥

**समौ लोलुपलोलुभौ॥ २२॥**

अतिशयलुब्धे लोलुपद्वयम्। लुपेर्लुभेश्च यङ्। पचाद्यच्। 'यङोऽचि च' (२.४.७४) इति यङो लुक्। 'न धातुलोप आर्धधातुके' (१.१.४) इति गुणनिषेधः॥

**उन्मदस्तून्मदिष्णुः स्याद्**

उन्मदद्वयम् उन्मादशीले। उद्गतो मदोऽस्येत्युन्मदः। 'अलंकृञ्-निराकृञ्—' (३.२.१३६) इत्यादिनेष्णुचि उन्मदिष्णुः॥

**अविनीतः समुद्धतः।**

अविनीतद्वयम् अविनीते। हन्तेः क्तः। समुद्धतः॥

**मत्ते शौण्डोत्कटक्षीबाः,**

मत्तचतुष्कं मत्ते। शुण्डा पानागारं, तत्र भवा स्थितिरस्येति 'शेषे' (४.२.९२) अण्। शौण्डः। 'संप्रोदश्च कटच्' (५.२.२९) इति कटच्। उत्कटः। 'अनुपसर्गात् फुल्लक्षीब—' (८.२.५५) इति निपातितः। 'क्षीबृ मदे'। क्तः। तत्र तकारलोप इडभावश्च निपात्यते॥

**कामुके कमितानुकः॥ २३॥**

**कम्रः कामयिताभीकः कमनः कामनोऽभिकः।**

कामुकनवकं कामुके। कमेः पूर्ववदुकञ्। कामुकः। 'आयादय आर्धधातुके वा' (३.१.३१) इति णिङन्ताददन्ताच्च तृन्। कामयिता

कमिता च । 'अनुकाभिकाभीकः कमिता' (५. २. ७४) इति निपातनात् त्रयं निपातितम् । तत्र कमितेत्यर्थे कप्रत्ययान्ता एते निपात्यन्ते । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (३. २. १६७) । कम्रः । 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युच् । कमनः । 'कमेर्णिङ' (३. १. ३०) इति णिङ् । कामनः ॥

**विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ २४ ॥**

विधेयचतुष्कं विधेये । 'स्यादाश्रवो विधेय' इति रत्नकोषः । विनयं विधिनिषेधवचनं ग्रहीतुं शीलमस्येति णिनिः । विनयग्राही । वचनेस्थित इत्यलुक्समासः । वाक्यमेव वा । आदिष्टं श्रृणोतीति अच् । आश्रवः ॥

**वश्यः प्रणेयः**

वश्यद्वयं वशंगते । वशम् आयत्तिं गतो वश्यः । 'वशं गतः' (४. ४. ८६) इति यत् । प्रणेतुं शक्यः प्रणेयः ॥

**निभृतविनीतप्रश्रिताः समाः ।**

निभृतत्रयं विनीते । श्रिञः क्तः । प्रश्रितः ॥

**धृष्टे धृष्णग् वियातश्च**

धृष्टत्रयं निर्लज्जे । 'धृषेश्चेति वक्तव्यम्' (वा० ३. २. १७२) नजिङ् । धृष्णक् । धृष्णुगिति पाठे 'त्रसिगृधि—' (३. २. १४०) इत्यादिना क्नुः । 'या प्रापणे' । क्तः । वियातः ॥

**प्रगल्भः प्रतिभान्वितः ॥ २५ ॥**

प्रत्युत्पन्नमतित्वं प्रतिभा, तदन्विते प्रगल्भः ॥

**स्यादधृष्टे तु शालीनः**

अधृष्टद्वयं सलज्जे । 'शालीनकौपीने अधृष्टाकार्ययोः'(५. २. २०) इत्यनेन शालाशब्दात् खप्रत्ययो निपातितः । शालीनस्तालव्यादिः ॥

**विलक्षो विस्मयान्विते ।**

विलक्षद्वयं वैलक्ष्ययुक्ते ॥

**अधीरे कातरः**

व्यसनादावाकुलहृदये अधीरद्वयम् ॥

**त्रस्नुर्भीरुभीरुकभीलुकाः ॥ २६ ॥**

त्रस्नुचतुष्कं भयशीले । 'त्रसिगृधिधृषिक्षिपेः क्नुः'(३.२. १४०) । त्रस्नुः । 'भियः क्रुक्लुकनौ' (३. २. १७४) । भीरुभीलुकौ । 'भियः क्रुकन् वक्तव्यः' (वा० ३. २. १७४) । भीरुकः ॥

**आशंसुराशंसितरि**

आशंसुद्वयम् आशंसनशीले । प्रियार्थस्य प्राप्तुमिच्छा आशंसा । तच्छील आशंसुः । 'सनाशंसभिक्ष उः' (३. २. १६८) । आशंसुः ॥

**ग्रहयालुर्ग्रहीतरि ।**

ग्रहयालुद्वयं ग्रहणशीले । 'ग्रह ग्रहणे' । चुरादिणिचि 'स्पृहिगृहि —' (३. २. १५८) इत्यादिना आलुच् । 'अयामन्ताल्वाय्येत्न्विष्णुषु' (६. ४. ५५) इति णेः अयादेशः ॥

**श्रद्धालुः श्रद्धया युक्ते**

श्रद्धायुक्ते श्रद्धालुः । दयालुवदालुच् ॥

**पतयालुस्तु पातुके ॥ २७ ॥**

पतनशीले पतयालुद्वयम् । ग्रहयालुवत् पतयालुः । 'लषपत —' (३. २. १५४) इत्यादिना उकञ् । पातुकः ॥

**लज्जाशीलोऽपत्रपिष्णुः**

लज्जाशीलद्वयं **लज्जाशीले**। 'अलंकृञ्निराकृञ्—' (३.२.१३६) इत्यादिना इष्णुच्। अपत्रपिष्णुः ॥

**स्याद् वर्धिष्णुस्तु वर्धनः।**

अपत्रपिष्णुवद् वर्धिष्णुः। 'अनुदात्तेतश्च हलादेः (३.२.१४९) इति युचि वर्धनः ॥

**उत्पतिष्णुस्तूत्पतिता**

**उत्पतनशीले** उत्पतिष्णुद्वयम्। उत्पूर्वात् पतेः अपत्रपिष्णुवद् उत्पतिष्णुः ॥

**अलंकरिष्णुस्तु मण्डनः ॥ २८ ॥**

अलंकरिष्णुद्वय**मलंकरणशीले**। अपत्रपिष्णुवदलंकरिष्णुः। 'क्रुधमण्डार्थेभ्यश्च' (३.२.१५१) इति युचि मण्डनः ॥

**भूष्णुर्भविष्णुर्भविता**

भूष्णुत्रयं **भवनशीले**। 'ग्लाजिस्थश्च ग्स्नुः' (३.२.१३९) इति चकाराद् ग्स्नुः। 'भुवश्च' (३.२.१३८) इतीष्णुचि भविष्णुः। छान्दसोऽप्ययं भाषायां निबद्धः ॥

**वर्तिष्णुर्वर्तनः समौ।**

वर्तिष्णुद्वयं **वर्तनशीले**। अपत्रपिष्णुवद् वर्तिष्णुः। वर्धनवद् युचि वर्तनः ॥

**निराकरिष्णुः क्षिप्नुः स्यात्**

निराकरिष्णुद्वयं **निराकरणशीले**। अपत्रपिष्णुवदिष्णुचि निराकरिष्णुः। त्रस्नुवत् क्षिप्नुः ॥

**सान्द्रस्निग्धस्तु मेदुरः ॥ २९ ॥**

सान्द्रस्निग्धद्वयं **नवमेघवदतिस्निग्धे**। 'भञ्जभासमिदो घुरच्' (३.२.१६१)। मेदुरः ॥

### ज्ञाता तु विदुरो विन्दुः

ज्ञातृत्रय ज्ञानशीले। तृनि ज्ञाता। 'विदिभिदिच्छिदेः कुरच्' (३. २. १६२)। विदुरः। 'विन्दुरिच्छुः' (३. २. १६९) इत्यनेन विदेर्ज्ञानार्थाद् विन्दुर्निपातितः॥

### विकासी तु विकस्वरः।

विकासिद्वयं विकसनशीले। 'कस गतौ'। विपूर्वः। 'वौ कसलषकत्थस्रम्भः' (३. २. १४३) इति घिनुण्। विकासी। 'स्थेशभासपिसकसो वरच्' (३. २. १७५)। विकस्वरः। दन्त्यसः॥

### विसृत्वरो विसृमरः प्रसारी च विसारिणि॥ ३०॥

विसृत्वरचतुष्कं प्रसरणशीले। 'इण्नशजिसर्तिभ्यः क्वरप्' (३. २. १६३)। विसृत्वरः। 'सृघस्यदः क्मरच्' (३. २. १६०)। विसृमरः। 'प्रे लपसृद्रुमथवदवसः' (३. २. १४५) इति घिनुण्। प्रसारी। मत्स्ये विसारी उक्तः॥

### सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी।

सहिष्णुषट्कं क्षमाशीले। अलंकरिष्णुवत् सहिष्णुः। वर्तनवत् सहनः। 'क्षमूष् सहने'। तृन्। क्षन्ता। इट्पक्षे क्षमिता। 'शमित्यष्टाभ्यो घिनुण्' (३. २. १४१)। क्षमी॥

### क्रोधनोऽमर्षणः कोपी

क्रोधनत्रयं क्रोधने। मण्डनवत् क्रोधनः। न मर्षयतीत्यमर्षणः। आवश्यकणिनौ कोपी॥

### चण्डस्त्वत्यन्तकोपनः॥ ३१॥

चण्डद्वयमतिकोपने। 'चडि कोपे'। चण्डः। पचाद्यच्। क्रोधनवत् कोपनः॥

**जागरूको जागरिता**

**जागरणशीले** जागरूकद्वयम् । 'जागरूकः' (३. २. १६५) इत्यनेन ऊकगुणौ निपातितौ ॥

**घूर्णितः प्रचलायितः ।**

घूर्णितद्वयं **निद्राघूर्णिते** । 'घुण घूर्ण भ्रमणे' । क्तः । घूर्णितः । प्रचल इवाचरतीति क्यङन्तात् क्तः । प्रचलायितः ॥

**स्वप्नक् शयालुर्निद्रालुः**

स्वप्नक्त्रयं **निद्राशीले** । 'स्वपितृषोर्नजिङ्' (३. २. १७२) । स्वप्नक् । जान्तः । 'शीङश्चेति वक्तव्यम्' (वा० ३. २. १५८) इत्यालुः । शयालुः । दयालुवन्निद्रालुः ॥

**निद्राणशयितौ समौ ॥ ३२ ॥**

**निद्रां गते** निद्राणद्वयम् । 'संयोगादेरातो धातोर्यण्वतः' (८. २. ४३) इति निष्ठातकारस्य नत्वे निद्राणः । शेतेः क्तः । शयितः ॥

**पराङ्मुखः पराचीनः**

पराङ्मुखद्वयं **विमुखे** । 'विभाषाञ्चेरदिक्स्त्रियाम्' (५. ४. ८) इति खः । पराचीनः ॥

**स्यादवाङप्यधोमुखः ।**

अवाङ्मुखद्वयम**धोमुखे** । अञ्चतेः ऋत्विगादिना किन् । अवाङ् । चान्तः । स्त्रियामवाची ॥

**देवानञ्चति देवद्र्यङ्**

देवान् गच्छति, पूजयति वा देवद्र्यङ् । चान्तः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (६. ३. ९२) इत्यद्र्यादेशः । स्त्रियां देवद्रीची ॥

**विष्वद्र्यङ् विष्वगञ्चति ॥ ३३ ॥**

विष्वक् समन्ताद् गच्छति यः, स विष्वद्र्यङ्। विष्वक्सेनप्रस्तावे षकारो निरूपितः। सर्वं देवद्र्यङ्वत् ॥

**यः सहाञ्चति सध्र्यङ् सः**

सह तुल्यं गच्छतीति सध्र्यङ्। चान्तः। 'सहस्य सध्रिः' (६. ३. ९५) इति सध्र्यादेशः। स्त्रियां सध्रीची ॥

**स तिर्यङ् यस्तिरोऽञ्चति।**

वक्रं गच्छति यः स तिर्यङ्। चान्तः। 'तिरसस्तिर्यलोपे' (६. ३. ९४) इति तिरःशब्दस्य तिरीत्यादेशः ॥

**वदो वदावदो वक्ता**

वदत्रयं वक्तरि। पचाद्यच्। वदः। 'चरिचलिपतिवदीनामच्याक् चाभ्यासस्य' (वा० ६. १. १२) इत्यागागमः द्विर्वचनं च। वदावदः। तृचि वक्ता ॥

**वागीशो वाक्पतिः समौ ॥ ३४ ॥**

निरवद्योद्दामवाणीके वागीशद्वयम् ॥

**वाचोयुक्तिपटुर्वाग्ग्मी**

वचनयुक्तिज्ञे वाचोयुक्तिपटुद्वयम्। 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसङ्ख्यानम्' (वा० ६. ३. २१) इत्यलुकि वाचोयुक्तिपटुः। नाममालायां तु वाचोयुक्तिरित्येव नाम। 'वाचो ग्मिनिः' (५. २. १२४) इति वाग्ग्मी। द्विगकारवान् ॥

**वावदूकोऽतिवक्तरि।**

अत्यन्तवक्तरि वावदूकः। वदेर्यङन्ताद् 'यजजपदशां यङः'

**जागरूको जागरिता**

**जागरणशीले** जागरूकद्वयम्। 'जागरूकः' (३. २. १६५) इत्यनेन ऊकगुणौ निपातितौ ॥

**घूर्णितः प्रचलायितः।**

घूर्णितद्वयं **निद्राघूर्णिते** । 'घुण घूर्ण भ्रमणे' । क्तः । घूर्णितः । प्रचल इवाचरतीति क्यङन्तात् क्तः । प्रचलायितः ॥

**स्वप्नक् शयालुर्निद्रालुः**

स्वप्नक्त्रयं **निद्राशीले** । 'स्वपितृषोर्नजिङ्' (३. २. १७२) । स्वप्नक् । जान्तः । 'शीङश्चेति वक्तव्यम्' (वा० ३. २. १५८) इत्यालुः । शयालुः । दयालुवन्निद्रालुः ॥

**निद्राणशयितौ समौ ॥ ३२ ॥**

**निद्रां गते** निद्राणद्वयम्। 'संयोगादेरातो धातोर्यण्वतः' (८. २. ४३) इति निष्ठातकारस्य नत्वे निद्राणः । शेतेः क्तः । शयितः ॥

**पराङ्मुखः पराचीनः**

पराङ्मुखद्वयं **विमुखे** । 'विभाषाञ्चेरदिक्स्त्रियाम्' (५. ४. ८) इति खः । पराचीनः ॥

**स्यादवाङप्यधोमुखः।**

अवाङ्मुखद्वयम**धोमुखे** । अञ्चतेः ऋत्विगादिना किन् । अवाङ् । चान्तः । स्त्रियामवाची ॥

**देवानञ्चति देवद्र्यङ्**

देवान् गच्छति पूजयति वा देवद्र्यङ् । चान्तः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (६. ३. ९२) इत्यद्र्यादेशः । स्त्रियां देवद्रीची ॥

**विष्वग्यङ् विष्वगञ्चति ॥ ३३ ॥**

विष्वक् समन्ताद् गच्छति यः, स विष्वग्यङ्। विष्वक्सेनप्रस्तावे षकारो निरूपितः। सर्वं देवद्र्यङ्वत् ॥

**यः सहाञ्चति सध्र्यङ् सः**

सह तुल्यं गच्छतीति सध्र्यङ्। चान्तः। 'सहस्य सध्रिः' (६. ३. ९५) इति सध्र्यादेशः। स्त्रियां सध्रीची ॥

**स तिर्यङ् यस्तिरोऽञ्चति।**

वक्रं गच्छति यः स तिर्यङ्। चान्तः। 'तिरसस्तिर्यलोपे' (६. ३. ९४) इति तिरःशब्दस्य तिरीत्यादेशः ॥

**वदो वदावदो वक्ता**

वदत्रयं वक्तरि। पचाद्यच्। वदः। 'चरिचलिपतिवदीनामच्याक् चाभ्यासस्य' (वा० ६. १. १२) इत्यागागमः द्विर्वचनं च। वदावदः। तृचि वक्ता ॥

**वागीशो वाक्पतिः समौ ॥ ३४ ॥**

निरवद्योद्दामवाणीके वागीशद्वयम् ॥

**वाचोयुक्तिपटुर्वाग्ग्मी**

वचनयुक्तिज्ञे वाचोयुक्तिपटुद्वयम्। 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसङ्ख्यानम्' (वा० ६. ३. २१) इत्यलुकि वाचोयुक्तिपटुः। नाममालायां तु वाचोयुक्तिरित्येव नाम। 'वाचो ग्मिनिः' (५. २. १२४) इति वाग्ग्मी। द्विगकारवान् ॥

**वावदूकोऽतिवक्तरि।**

अत्यन्तवक्तरि वावदूकः। वदेर्यङन्ताद् 'यजजपदशां यङः'

(३. २. १६६) इति बहुवचननिर्देशादन्यतोऽप्यूक इति धातुपारायणम्। 'चेक्रीयीतान्तानां यजिजपिदंशिवदाम्' इत्यूक इति कालापाः ॥

**स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ॥ ३५ ॥**

जल्पाकचतुष्कं गर्ह्यभाषिणि । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' (३. २. १५५) । 'आलजाटचौ बहुभाषिणि' (५. २. १२५) इत्यालजाटच्प्रत्ययाभ्यां वाचालवाचाटौ । एतौ कुत्सार्थे प्रत्ययौ ॥

**दुर्मुखे मुखराबद्धमुखौ**

दुर्मुखत्रयमप्रियवादिनि । निन्दितमुखो दुर्मुखः । खरवन्मुखरः । अबद्धमुखो ह्रस्वादिः ॥

**शक्लः प्रियंवदे ।**

शक्लद्वयं प्रियंवदे । 'शक्लृ शक्तौ' । †'मूङ्पूङ्शकिभ्यः क्लः' (उ० ४. ११०) । शक्लः । 'प्रियवशे वदः खच्' (३. २. ३८) । प्रियंवदः ॥

**लोहलः स्यादस्फुटवाग्**

लोहलद्वयमव्यक्तवचने ॥

**गर्ह्यवादी तु कद्वदः ॥ ३६ ॥**

निन्द्यवादिनि गर्ह्यवादिद्वयम् । कुत्सितं वदतीति 'रथवदयोश्च' (६. ३. १०२) इति कोः कद्भावः । कद्वदः ॥

**समौ कुवादकुवदौ**

परदोषकथनशीले कुवादद्वयम् । कर्मण्यणि कुवादः । पचाद्यचि कुवदः ॥

**स्यादसौम्यस्वरोऽस्वरः ।**

काकस्वरादिरसौम्यस्वरोऽस्वरः ॥

† 'मूशक्यबिभ्यः क्लः' इति मुद्रितोणादिपाठः ।

**रवणः शब्दनः**

**शब्दकारिणि** रवणद्वयम्। उभयत्र 'चलनशब्दार्थादकर्मकाद्युच्' (३. २. १४८)॥

**नान्दीवादी नान्दीकरः समौ ॥ ३७ ॥**

**भेरीसमाननान्दीवादनशीले** नान्दीवादिद्वयम्। अथवा नान्दीश्लोकपठनकारिणि। तथाच भरताचार्यः—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रवर्तते।
देवद्विजनृपादीनां तस्मान्नान्दीति सा स्मृता ॥"

णिनिः। नान्दीवादी। दिवाकरवत् टः। नान्दीकरः। 'मदकलकलविङ्कीकाकुनान्दीकरेभ्यः' इति मुरारिः॥

**जडोऽज्ञे**

जडद्वयं **जडे**। तदुक्तम्—

"इष्टं वाऽनिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात्।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः" ॥

**अनेडमूकस्तु वक्तुं श्रोतुमशिक्षिते।**

**वचनश्रवणरहिते**ऽनेडमूकः। कृतनञ्समासोऽवयवार्थशून्य एव रूढः।

'त्रिलिङ्गोऽनेडमूकः स्याच्छठवाक्छ्रुतिवर्जिते'

इति रभसश्च। केचित्तु एडश्चासौ मूकश्चेत्येडमूकमिच्छन्ति। पूर्वं पृथक् कथितत्वात् तयोः समुदायेऽपि रूपमूह्यमिति कृत्वा नेच्छन्ति॥

**तूष्णींशीलस्तु तूष्णीकः**

**मौनशीले** तूष्णींशीलद्वयम्। *'तूष्णींशीले कां मलोपश्च वक्तव्यः' (वा० ५. ३. ७२) इति को मलोपश्च॥

*'शीले को' इति मुद्रितवार्त्तिकपाठः।

**नग्नोऽवासा दिगम्बरः ॥ ३८ ॥**

परिधानवस्तुशून्ये नग्नत्रयम् । ओलस्जिधातोर्लभ एव वर्णव्यत्ययान्नग्नः । अवासाः सान्तः ॥

**निष्कासितोऽपकृष्टः स्याद्**

निष्कासितद्वयं निःसारिते । निष्कासिते प्रथमो मूर्धन्यो द्वितीयो दन्त्यसः ॥

**अपध्वस्तस्तु धिक्कृतः ।**

कृतधिक्कारेऽपध्वस्तद्वयम् ॥

**आत्तगर्वोऽभिभूतः स्याद्**

अरिणा भग्नदर्पे आत्तगर्वद्वयम् । आत्तो गृहीतो गर्वोऽस्येत्यात्तगर्वः । 'ब[illegible]त गन्ध अर्दने' । आत्तगन्ध इति पाठ इत्यन्यः ॥

**दापितः साधितः समौ ॥ ३९ ॥**

धनादिकं दापितद्वयम् । ददातेर्ण्यन्तात् पुकि दापितः । 'दय दानगतिरक्षणहिंसादानेषु' । ण्यन्तादिति पुरुषोत्तमः ॥

**अधिक्षिप्तः प्रतिक्षिप्तः**

अधिक्षिप्तद्वयं कृताक्षेपे प्रेषिते वा । तदुक्तम्—

"आहूय प्रेष्यते यस्तु प्रतिक्षिप्तः स उच्यते"

इति ॥

**बद्धे कीलितसंयतौ ।**

कीलेन निश्चलीकृते कीलितद्वयम् । रज्ज्वा तु बद्धे वक्ष्यति ॥

**आपन्न आपत्प्राप्तः स्यात्**

आपन्नद्वयमापद्ग्रस्ते ॥

**कान्दिशीको भयद्रुतः ॥ ४० ॥**

**भयोपद्रुते** कान्दिशीकद्वयम् । कां दिशं गच्छामीति चिन्तयन् पलायितः कान्दिशीकः । पृषोदरादिः ॥

**आक्षारितः क्षारितोऽभिशस्ते**

**परस्त्रियाः परपुरुषस्य वा मैथुनं प्रति दूषिते** आक्षारितत्रयम् । **मैथुनं प्रत्याहूत** इत्यन्यः ॥

**संकसुकोऽस्थिरे ।**

असन्देहविषयेऽपि यः सन्देहकृत्, तत्र संकसुकद्वयम् । 'कस गतौ' । 'समि कस उकन्' (उ० २. ३२) इत्युकन् । संकसुको द्विदन्त्यो ह्रस्वमध्यः ॥

**व्यसनार्तोपरक्तौ द्वौ**

दैवी मानुषी वा पीडा व्यसनं, तदार्ते व्यसनार्तद्वयम् । चन्द्रार्कौ राहुग्रस्तावुपरक्तावुभौ ॥

**विहस्तव्याकुलौ समौ ॥ ४१ ॥**

**शोकादिभिरितिकर्तव्यताशून्ये** विहस्तद्वयम् ॥

**विक्लवो विह्वलः**

विक्लवद्वयं **स्वकीयाङ्गधारणाशक्ते** ॥

**स्यात्तु विवशोऽरिष्टदुष्टधीः ।**

आसन्नमरणमरिष्टं, तेन दूषितबुद्धिर्विवशः ॥

**कश्यः कशार्हे**

कशामश्वताडनीमपराधाद् योऽर्हति, तत्र कश्यद्वयम् । 'दण्डादिभ्यो यः' (९. १. ६६) । कश्यः ॥

**सन्नद्धे त्वाततायी वधोद्यते ॥ ४२ ॥**

कृतसन्नाहे हन्तुमुद्यते आततायी ॥

**द्वेष्ये त्वक्षिगतः**

द्वेष्यद्वयं द्वेष्ये ॥

**वध्यः शीर्षच्छेद्य इमौ समौ ।**

वध्यद्वयं वध्ये । कश्यवद् वध्यः । 'शीर्षच्छेदाद् यच्च' (५. १. ६५) । शीर्षच्छेद्यः ॥

**विष्यो विषेण यो वध्यः**

विषेण वध्यो विष्यः । 'नौवयोधर्म—' (४. ४. ९१) इत्यादिना यत् ॥

**मुसल्यो मुसलेन यः ॥ ४३ ॥**

मुसलेन वध्यो मुसल्यः । कश्यवद् यः ॥

**शिश्विदानः कृष्णवर्त्मा**

कृष्णवर्त्मा पापाचारः । शिश्विदानः द्वितालव्यः । 'श्विता वर्णे' । 'श्वितेर्दश्च' (उ० २. ९३) इत्यानच् सनो लुग् दश्चान्तादेशः ॥

**चपलश्चिकुरः समौ ।**

चपलद्वयं चपले ।

"अविमृश्य तु यः कार्यं पुरुषो वधबन्धनाद्यमाचरति ।
अविनिश्चितकारित्वात् स तु खलु चपलो बुधैर्ज्ञेयः ॥"

**दोषैकदृक् पुरोभागी**

दोषैकद्रष्टा, पुरोभागी, नान्तः ॥

**निकृतस्त्वनृजुः शठः ॥ ४४ ॥**

निकृतत्रयं वक्राशये । 'शठ कैतवे' । तालव्यादिः । पचादिः । शठः ॥

**कर्णेजपः सूचकः स्यात्**

कर्णेजपद्वयमनुचितादौ मरोचके । 'स्तम्बकर्णयो रमिजपोः' (३. २. १३) इति 'हस्तिसूचकयोरिति वक्तव्यम्' (वा० ३. २. १३) इत्यच् । कर्णेजपः । 'सूच पैशुन्ये' । ण्वुल् । सूचकः । दन्त्यादिः ॥

**पिशुनो दुर्जनः खलः ।**

परस्परभेदनशीले पिशुनत्रयम् । पिडिकाख्यशाखे पिशुनोक्ता ॥

**नृशंसो घतुाकः क्रूरः पापः**

नृशंसचतुष्कं परद्रोहाचरणशीले । 'शसु हिंसायाम्' । नैरुक्तो वर्णागमः । नृशंसः । ण्वुलि घातकः । पूर्वमुकत्रा हिंसाशील उक्तः । 'कृती छेदने' । *'कृतेः क्रू च' (उ० २. २३)इति रक क्रू चादेशः । क्रूरः ॥

**धूर्तस्तु वञ्चकः ॥ ४५ ॥**

धूर्तद्वयं प्रतारणशीले । धुर्वीधातोर्हस्तवत् तः । धूर्तः । सृगालेऽपि वञ्चक उक्तः ॥

**अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।**

अज्ञषट्कं मूर्खे । यादृशो जातो विवेकशून्यो यथाजातः । विधेय-शब्दाद् ज्योत्स्नाद्यणि वैधेयः । परदत्तं[1] श्यतीति बलिशः । बलिश एव बालिशः ॥

**कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः ॥ ४६ ॥**

कदर्यपञ्चकं कृपणे । उग्रवत् क्षुद्रः । कुत्सितं पचानः कि-

१. 'त्तं पश्य' ङ. छ. पाठः.

'कृतेश्छः क्रू च' इति मुद्रितोणादिपाठः ।

म्पचानः । 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३. २. १२९) । 'मितनखे च'(३. २. ३४) इति खश् । मितम्पचः । मितशब्देनार्थग्रहणात् 'पान्तावल्पम्पचान् मुनीन्' (स० ६. श्लो० ९६) इति भट्टिरिति रक्षितः ॥

**निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।**

निःस्वपञ्चकं दरिद्रे । निष्क्रान्तः स्वाद् निःस्वः । विधा समृद्धिर्दुःस्थास्येति दुर्विधः । 'इणूसिजिदीङुष्यविभ्यो नक्' (उ० ३. २) इति दीङो नक् । दीनः । पचाद्यचि दरिद्रः । दुःपूर्वो गमिर्निःस्वे ॥

**वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४७ ॥**

वनीयकपञ्चकं प्रार्थके । 'वनु याचने' । ध्वनिवद् इः । वनीमिच्छतीति क्यचि ण्वुल् । वनीयकः । एवमन्तःस्थयमध्यः ।

"नवकदम्बकदम्बकसन्ततप्रसवनीपवनीपकषट्पदः"

(न गच्छति?) इति कप्फिणाभ्युदये यमकादोष्ठ्यमध्यः । 'मार्ग अन्वेषणे' । ल्युट् । मार्गणः । याचतेर्ण्वुल् । याचकः । 'अर्थाच्चासन्निहिते' (वा० ५. २. १३५) इतीनिः । अर्थी ॥

**अहङ्कारी स्यादहंयुः**

अहङ्कारिद्वयमहङ्कारयुक्ते । 'अहंशुभमोर्युस्' (५. २. १४०) इति युस् । अहंयुः । सकारः 'सिति च' (१. ४. १६)इति पदसंज्ञार्थः । 'वा पदान्तस्य' (८. ४. ५९) इति परसवर्णविकल्पः ॥

**शुभंयुस्तु शुभान्वितः ।**

शुभंयुद्वयं शुभान्विते ॥

**दिव्योपपादुका देवाः**

दिवि भवा दिव्याः । मात्रादिकारणमनपेक्ष्यादृष्टवशादुत्पद्यन्त इति दिव्योपपादुकाख्या देवाः । कर्मधारयसमासः । देवनामत्वेऽप्यस्य त्रिलिङ्गत्वादिह वर्गे पाठः ॥

**नृगवाद्या जरायुजाः ॥ ४८ ॥**

नृगवादयो जरायुजशब्देनोच्यन्ते । आद्येन खराश्वप्रभृतयः ॥

**स्वेदजाः कृमिदंशाद्याः**

कृमिदंशाद्याः स्वेदजाः । ऊष्मा स्वेदः । आद्येन शकाद्याः ॥

**पक्षिसर्पादयोऽण्डजाः ।**

पक्षिमत्स्यसर्पादयोऽण्डजाः ॥

**उद्भिदस्तरुगुल्माद्याः**

तृणतरुगुल्माद्या उद्भिद उच्यन्ते ॥

उद्भिच्छब्दस्याभिधेयमुत्पाद्यास्य पर्यायमाह—

**उद्भिदुद्भिज्जमुद्भिदम् ॥ ४९ ॥**

उद्भित्त्रयं तरुगुल्मादिषु । उद्भिनत्तीति क्विप् । उद्भित् । भूमेरुद्भेदनमुद्भित्, ततो जातमुद्भिज्जम् । सम्पदादिक्विबन्ताज्जनेर्डः । इगुपधलक्षणः कः । उद्भिदम् । कामचारात् क्लीबनिर्देशः ॥

**सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।**
**कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५० ॥**

सुन्दरद्वादशकं शोभने । ङीपि सुन्दरी । दारुवच्चारु । 'सुविनिर्दुर्भ्यः—' (८. ३. ८८) इति षत्वे सुषमम् । 'राजसूय—' (३. १. ११४) इत्यादिना रोचतेः क्यबन्ताद् रुच्यं निपातितम् ॥

**तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।**

बहुशो दर्शनेऽप्यधिकां प्रीतिमुत्पादयति, असेचनकम् । ह्रस्वादि ॥

**अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५१ ॥**

अभीष्टषट्कं **प्रिये**। 'हृदयस्य प्रियः' (४. ४. ९५) इति यत्। हृद्यम्। 'हृदयस्य हृल्लेखयदण्लासेषु' (६. ३. ५०) इति हृदादेशः। वल्लतेः रासभवद् वल्लभः॥

**निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः।**
**कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः॥ ५२॥**

निकृष्टत्रयोदशकं **जात्यादिना निन्दिते**। कृषेः क्तः। निकृष्टप्रतिकृष्टौ। अश्वनाम्नि अर्वा नान्त उक्तः। *'रिफ कत्थन युद्धादौ'(?)। कर्मणि घञ्। रेफः। अदन्तः।

"रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गवत्"

इति रभसश्च। रेपाः सान्तोऽपि पवर्गप्रथमवान्। तथाच माघे—'राजतः पुपुविरे † विरेपसः' (स० १४. श्लो० ३५) इति। 'या प्रापणे'। 'अर्तिह्री—' (७. ३. ३६) इत्यादिना पुक्। 'अचो यत्' (३. १. ९७)। याप्यः। अवशब्दादधःशब्दाच्च $'अवाधसोर्लोपश्च' इति भावार्थे मक्। अवमाधमौ। 'पूयी विसरणे'। अच्। कुपूयः। कुत्सा सञ्जातास्येति तारकादित्वादितच्चि कुत्सितः। 'अवद्यपण्य—' (३. १. १०१) इत्यादिना नञ्पूर्वाद् वदेर्यत्प्रत्ययान्तादवद्यं निपातितम्। 'खिट उत्रासने'। अच्। खेटः। 'गर्ह गल्ह कुत्सायाम्'। ण्यत्। गर्ह्यः। अणतेः क्वुन्। अणको ह्रस्वादिः॥

**मलीमसं तु मलिनं कच्चरं मलदूषितम्।**

मलीमसचतुष्कं **मलिने**। 'ज्योत्स्नातमिस्रा—' (५. २. ११४) इत्यादिना मलशब्दान्मत्वर्थे इनजीमसच्प्रत्ययान्तौ मलिनमलीमसौ निपातितौ। 'रथवदयोश्च' (६. ३. १०२) इति चकारात् कोः कति पचाद्यच्। कच्चरम्॥

---

* 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु' इति मुद्रितधातुपाठे दृश्यते। † 'निरेनसः' इति मुद्रितमाघे दृश्यते। $ 'अवद्यावमाधमार्वरेफाः' इति मुद्रितोणादौ दृश्यते।

**पूतं पवित्रं मेध्यं च**

पूतत्रयं **पवित्रे**। 'मेधृ सङ्गमे'। ण्यत्। मेध्यम्। ब्रह्मवर्गेऽपि पवित्रनाम प्राणिविषयमुक्तम् ॥

**वीध्रं तु विमलार्थकम् ॥ ५३ ॥**

स्वभावनिर्मलं वस्तुमात्रं वीध्रम्। विपूर्वादिन्धेः 'वाविन्धेः* क्रन्' (उ० २. २९) इति क्रन्। कित्त्वादनुनासिकलोपः ॥

**निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्।**

निर्णिक्तपञ्चकं **प्रक्षालिते**। णिजिरः क्तः। 'उपसर्गादसमासेऽपि णोपदेशस्य' (८. ४. १४) इति णत्वम्। निर्णिक्तम्। 'शुध शौचे'। क्तः। शोधितम्। 'मृजू शुद्धौ'। क्तः। मृष्टम्। निष्क्रान्तं शोध्यं क्षालनीयं निःशोध्यम् ॥

**असारं फल्गु**

फल्गुद्वयमसारे। 'फल निष्पत्तौ'। वल्गुवद् उः गुगागमश्च। फल्गु ॥

**शून्यं तु वशिकं तुच्छरिक्तके ॥ ५४ ॥**

शून्यचतुष्कं **शून्ये**। शून्यवशिकौ तालव्यशौ। रिक्तमेव रिक्तकम् ॥

**क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः।**
**मुख्यवर्यवरेण्याश्च प्रबर्हानवरार्ध्यवत् ॥ ५५ ॥**
**परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्।**

प्रधानसप्तदशकं **प्रधाने**। क्लीब इति निर्देशादजहल्लिङ्गता। तेन

१. 'नाकुव' ग. पाठः.

* 'वाविन्धेः' इत्येव मुद्रितोणादिपाठः।

स्त्री प्रधानमित्येव भवति । 'न जाने समधानो मे' इति चण्डीपाठः, सह प्रधानेन वर्तत इति साधुः । प्रकृष्टं मुखमारम्भोऽस्येति प्रमुखम् । 'शाखादिभ्यो यः' (५. ३. १०३) । मुख्यः । 'वर इच्छायाम्' । चुरादिरदन्तः । 'अचो यत्' (३. १. ९७) । वर्यः । ‡'वृङ एण्यः' (उ० ३. ९८) । अवरस्मिन्नर्धे भवम् अवरार्ध्यम् । 'परावराधमोत्तमपूर्वाच्च' (४. ३. ५) इति यत् । नञा अनवरार्ध्यम् । 'अग्राद् यत्' (४. ४. ११६) । 'घच्छौ च' (४. ४. ११७) इति यथाक्रमं यद्घच्छप्रत्ययाः । अग्रयम् अग्रियम् अग्रीयं च ।

"अग्रं प्राग्रहरं श्रेष्ठं मुख्यं वर्यं प्रहर्षणम्"

इति त्रिकाण्डे पाठादेकविंशतिरेव श्रेष्ठ इत्यन्यः ॥

**श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश्चातिशोभने ॥ ५६ ॥**

श्रेयःपञ्चकमतिप्रशस्ये । ईयसुन्नन्तः श्रेयान् । 'पुषः कित्' (उ० ४. ४) इति कलच् । पुष्कलः ॥

**स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।**
**सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५७ ॥**

व्याघ्रादयः सप्त उत्तरपदीभूताः श्रेष्ठार्थविषयाः पूर्वपदार्थस्य श्रेष्ठत्ववाचकाः पुँल्लिङ्गाश्च स्युः । तद् यथा — पुरुषव्याघ्रः । आद्येन वृषभादयः ॥

**अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।**

अप्राग्र्यत्रयमप्रधाने । द्वयहीने क्लीबलिङ्गे ॥

**विशङ्कटं पृथु बृहद् विशालं पृथुलं महत् ॥ ५८ ॥**
**वड्रोरु विपुलं**

विशङ्कटनवकं महति । 'वेः शालच्छङ्कटचौ' (५. २. २८) । विशङ्कटविशालौ तालव्यशौ । भृगुवत् पृथु । पृषदादौ महद्बृहती अतिप्रत्य-

‡ 'वृञः' इति मुद्रितोणादिपाठः ।

यान्वे निपातिते। सिध्मादिलचि पृथुलम्। वदेः 'स्फायितञ्चिवाञ्च—' (उ० २. १३) इत्यादिना रक्। वद्रः। 'महति ह्रस्वश्च' (उ० १. ३२) इत्यनेन ऊर्णोतेः कुः। उरु। 'पुल महत्त्वे'। इगुपधलक्षणः कः। विपुलम्॥

**पीनपीव्नी तु स्थूलपीवरे।**

पीनचतुष्कं **स्थूले**। उपचितमांसं विपुलम् आयतमाका(शा:रा)-दिति[1] भेदः। ओप्यायीतः क्तः। 'ओदितश्च' (८. २. ४५) इति तो नः। 'प्यायः पी' (६. १. २८) इति पीभावः। पीनम्। 'प्यैङ् वृद्धौ'। 'ध्याप्योः सम्प्रसारणं च' (उ० ४. ११६) इति कनिप्। 'हलः' (६. ४. २) इति दीर्घः। पीवा। स्त्रियां 'वनो र च' (४. १. ७) इति ङी-ब्रेफौ। पीवरी। 'स्थूल परिबृंहणे'। चुरादिपचादी। स्थूलम्। 'छित्वर—' (उ० ३. १) आदिसूत्रेण पीवरं निपातितम्॥

**स्तोकाल्पक्षुल्लकाः सूक्ष्मश्लक्ष्णदभ्रं कृशं तनु॥ ५९॥**
**स्त्रियौ मात्रात्रुटी पुंसि लवलेशकणाणवः।**

स्तोकचतुर्दशकमल्पे।

"अल्पं दभ्रं स्तोकं लवाणुलेशा नरे श्लक्ष्णम्"

इति रत्नकोषः। चातकेऽपि स्तोक उक्तः। क्षुल्लकोऽपि पामरे। 'सूच पैशुन्ये'। 'सूचेः स्मन्' (उ० ४. १७८)। सूक्ष्मम्। दन्त्यादिः। 'श्लिष आलिङ्गने'। 'श्लिषेरच्चोपधायाः' (उ० ३. १९) इति क्स्नः उपधाया अकारश्च। श्लक्ष्णम्। 'कृश तनूकरणे'। इगुपधलक्षणः कः। कृशम्। दन्भे रकि दभ्रम्। 'माङ् माने'। 'हुयामाश्रुसुहासिभ्यस्त्रन्' (उ० ४. १६९)। मात्रा। त्रुटिरुक्तः स्वर्गवर्गे। 'लिश अल्पीभावे'। घञ्। लेशः॥

**प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु॥ ६०॥**
**पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च।**

प्रभूतद्वादशकं **प्रचुरे**। प्राङ्पूर्वाद् अजेः क्यप्। प्राज्यम्। बहूनर्थान् लाति बहुलम्। पुरून् हन्तीति पुरुहम्। 'अन्येष्वपि—'

---

१. 'दिभे' ङ. छ. पाठः.

(३. २. १०१) इति डः। 'पृभिदिव्यधिगृधिधृषिभ्यः' (उ० १. २३) इति कुः। पुरु। 'इष्ठस्य यिट् च' (६. ४. १५९) इति बहोर्भूभाव इडागमश्च। भूयिष्ठम्। शिशिरवत् स्फिरशब्दो निपातितः। भूयः ईयसुन्नन्तम्। अद्रिवत् क्रिन्। भूरि॥

**परश्शताद्यास्ते येषां परा सङ्ख्या शतादिकात्॥ ६१॥**

यच्छताद् बहु, तत् परश्शतम्। द्वितालव्यम्। शतादेरर्थादुत्तराः सङ्ख्या येषां सङ्ख्येयानां, ते पराः शतात् परश्शताः। आदिना पराः सहस्रात् परस्सहस्राः। परा अयुतात् परायुताः। तथाच नाममाला—

"अश्वसहस्रादश्वीयं परस्सहस्रं सहस्रतोऽप्यधिकम्"

इति। 'पञ्चमी' (२. १. ३७) इति योगविभागात् समासः। राजदन्तादित्वात् शतशब्दस्य परनिपातः। पारस्करादित्वात् सुट्। सुटश्चाभक्तत्वाद् विसर्जनीयो न भवति। श्चुत्वमेव भवति। परस्सहस्रे तु द्विदन्त्य एव।

"आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परश्शताः"

इति माघः। (स० १२. श्लो० ५०)

"ब्रह्मादयो ब्रह्महिताय तप्त्वा परस्सहस्राः शरदस्तपांसि"

इति परस्सहस्रस्य भवभूतेः स्त्रीलिङ्गप्रयोगः। सङ्ख्यानमात्रेऽपि शतादिकं वर्तते इति परश्शतं गवां, परस्सहस्रं गवामिति नपुंसकत्वमेव। शतादधिका सङ्ख्या गवामित्यर्थः॥

**गणनीये तु गणेयं**

गणयितुं शक्ये गणनीयद्वयम्। 'गण सङ्ख्याने'। चुरादिण्यन्ताद् 'अचो यत्' (३. १. ९७)। गणेयम्। 'क्यस्य विभाषा' (६. ४. ५०) इत्यतोऽनुवृत्तस्य विभाषाग्रहणस्य व्यवस्थितविभाषात्वाद् 'णेरनिटि' (६. ४. ५१) इति न णिलोप इति धातुप्रदीपटीका। गण्यं तु चिन्त्यम्॥

**सङ्ख्याते गणितम्**

गणिते सङ्ख्यातद्वयम्॥

**अथ समं सर्वम्।**
**विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ॥**
**समग्रसकलाखण्डपूर्णादीन्यप्यनूनके।**

समचतुर्दशकं **सर्वस्मिन्** । समशब्दः सर्वनामसंज्ञकः । सर्तेः 'सर्वनिघृष्वरिष्व—' (उ० १. १५९) इत्यादिना वन्प्रत्ययान्तः सर्वशब्दो निपातितः। गणदेवतायां विश्व उक्तः। कृतेः 'कृत्यशूभ्यां क्स्नः' (उ० ३. १७)। कृत्स्नम्। अग्रेण शिखरेण सङ्गतं समग्रम्। दन्त्यादिः। पूरीधातोः पूर्णम् ॥

**घनं निरन्तरं सान्द्रं**

घनत्रयं घने। सान्द्रं दन्त्यादि ॥

**पेलवं विरलं तनु ॥ ६३ ॥**

पेलवत्रय **विरले** ॥

**समीपे निकटासन्नसन्निकृष्टसनीडवत्।**
**सदेशाभ्याससविधसमर्यादसवेशवत् ॥ ६४ ॥**
**उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्।**

समीपपञ्चदशकं **समीपे** । सङ्गता आपोऽस्मिन् इति समीपम्। 'ऋक्पूरब्धूःपथामानक्षे' (५. ४. ७४) इति अः समासान्तः। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६. ३. ९७) इतीत्वम्। निकटादिवत् सदेशादिवच्च उपकण्ठादयः समीपे इति वच्छब्दार्थः। अभ्यासो दन्त्यसः। 'समीपेऽभ्यसनेऽभ्यासः' इति दन्त्यादौ रभसः। तालव्यान्तस्तु चिन्त्यः। कण्ठं सामीप्यमुपगत उपकण्ठः। 'अभेश्चाविदूर्ये' (७. २. २५) इतीण्निषेधे अभ्यर्णः। 'पर्यभिभ्यां च' (५. ३. ९) इति तसिः। अभितः ॥

**संसक्ते त्वव्यवहितमपटान्तरमित्यपि ॥ ६५ ॥**

संसक्तत्रयं **संलग्ने** । सञ्जेः संसक्तम् ॥

नेदिष्ठमन्तिकतमं

अतिसमीपे नेदिष्ठद्वयम् । 'अन्तिकबाढयोर्नेदसाधौ' (५. ३. ६३) इत्यन्तिकस्य नेदादेशः इष्ठन्प्रत्ययश्च । नेदिष्ठम् । अतिशायने तमपि अन्तिकतमम् । ननु च 'अन्तिकस्य तमपि कादिलोपः, आद्युदात्तत्वं च' इत्यनुवृत्तौ, 'तमे तादेश्च' इति तमप्रत्यये 'अन्तिकस्य तकाद्योः' तकारादेः ककारादेश्च लोपो भवति । तत्र तादिलोपे अन्तिकं, कादिलोपे अन्तिमं वा प्राप्नोति । कथमन्तिकतमम् । उच्यते । 'कादिलोपे बहुलम्' इति वचनात् पक्षे लोपः । अन्तिकस्य तम इव सदि वा तादेर्लोपवचनम् ।

"अन्तिकतमोऽतिसन्निधिरन्तिसदन्तिकसदन्तमोऽन्तिकतमः"

इति रत्नकोषः ॥

स्याद् दूरं विप्रकृष्टकम् ।

दूरद्वयं दूरमात्रे । 'इण् गतौ' । 'दुरीणो लोपश्च' (उ० २. २१) इति दुस्पूर्वादिणो रक्, इणो लोपश्च । 'रो रि' (८. ३. १४) इति रेफलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६. ३. १११) इति दीर्घत्वम् ॥

दवीयश्च दविष्ठं च सुदूरे

दवीयस्त्रयमतिदूरे । दूरशब्दस्य 'स्थूलदूर—' (६. ४. १५६) इत्यादिना ईयसुन्निष्ठनोर्यणादिभागलोपौ गुणश्च । दवीयः दविष्ठं च ॥

दीर्घमायतम् ॥ ६६ ॥

दीर्घद्वयं दीर्घे ॥

वर्तुलं निस्तलं वृत्तं

वर्तुलत्रयं वर्तुले । वृतेर्बहुलवचनाद् 'हृषेरुलच्' (उ० १. १०१) । वर्तुलम् ॥

बन्धुरं तून्नतानतम् ।

स्वभावाद् यदुन्नतम्, उपाधिवशादीषन्नतं, तद् बन्धुरम् ।

*"बन्धुरं बन्धुरे रम्ये नदे हंसे तु बन्धु(रम्?रः)"
इति रभसः ॥

**उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे**

उच्चषट्कमुच्चे । उच्चिनोतेर्डः[1] । उच्चः । प्रकृष्टोंऽशुर्दीप्तिरस्येति प्रांशुः । उद्गतं नतमुन्नतम् । ऊर्ध्वं श्रित उच्छ्रितः ॥

**अथ वामने ॥ ६७ ॥**
**न्यङ्नीचखर्वह्रस्वाः स्युः**

न्यक्पञ्चकं खर्वसामान्ये । नृवर्गे तु 'खर्वो ह्रस्वश्च वामनः' इति नरवचना उक्ताः । निपूर्वादञ्चेः ऋत्विगादिना क्विन् । 'क्विन्प्रत्ययस्य कुः' (८. २. ६२) इति कुत्वम् । न्यक् चान्तः । स्त्रियां नीची । पामरे नीच उक्तः । 'खर्व माने' । पचाद्यच् । खर्वः ॥

**अवाग्रेऽवनतानतम् ।**

अवाग्रत्रयमवनताग्रे । अवनतमग्रमस्येत्यवाग्रम् ॥

**अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम् ॥ ६८ ॥**
**आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ।**

अरालैकादशकं वक्रे । ऊर्मिर्भङ्गः, तद्योगान्मतुपि ऊर्मिमत् । कुटिं कुटिलतां लातीति कः । कुटिलम् । 'भुजो कौटिल्ये' । क्तः । 'ओदितश्च' (८. २. ४५) इति नत्वम् । भुग्नम् ॥

**ऋजावजिह्मप्रगुणौ**

ऋजुत्रयमवक्रे ॥

**व्यस्ते त्वप्रगुणाकुलौ ॥ ६९ ॥**

व्यस्तत्रयं व्यस्ते । यथा आकुलाः केशपाशाः ॥

**शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ।**

१. 'च्चरते' छ. पाठः.

* "बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः' इति भानुजिसम्मतः पाठः ।

शाश्वतपञ्चकं कालत्रयव्यापिनि। शश्वच्छब्दाद् भवार्थाणि शाश्वतः। द्वितालव्यः। ठञि शाश्वतिकोऽप्यत्र। 'सायंचिरं—' (४. ३. २३) इत्यादिना ट्युट्युलौ तुट् च। सदातनः॥

**स्थास्नुः स्थिरतरे स्थेयान्**

स्थास्नुत्रयमतिस्थिरे। जिष्णुवत् स्थास्नुः। 'प्रियस्थिर—' (६. ४. १५७) इत्यादिना स्थिरशब्दस्य स्थादेशे स्थेयान्। शाश्वताष्टकमेव स्थिर इति कश्चित्॥

**एकरूपतया तु यः॥ ७०॥**

**कालव्यापी स कूटस्थः**

एकेनैव स्वभावेन निरवधिकालस्य व्यापक आकाशादिः कूटस्थः॥

**स्थावरो जङ्गमेतरः।**

जङ्गमेतरः प्राणितोऽन्यः स्थावरः। ईश्वरवद् वरच्॥

**चरिष्णुजङ्गमचरत्रसमिङ्गं चराचरम्॥ ७१॥**

चरिष्णुषट्कं जङ्गमे। गमेः 'नित्यं कौटिल्ये गतौ' (३. १. २३) इति यङ्। 'नुगतोऽनुनासिकान्तस्य' (७. ४. ८५) इति नुक्। तस्य चानुस्वारः। पचाद्यच्। 'यङोऽचि च' (२. ४. ७४) इति यङो लुक्। जङ्गमम्। त्रस्यति चलतीति त्रसम्। पचाद्यजन्तम्। इङ्गति गच्छतीति इङ्गम्। वदावदवच्चराचरम्॥

**चलनः कम्पनः कम्प्रः**

चलनत्रयं चलनशीले। 'चलनशब्दार्थादकर्मकाद् युच्' (३. २. १४८)। चलनः। कम्रवत् कम्प्रः॥

**चलं लोलं चलाचलम्।**
**चञ्चलं तरलं चैव पारिप्लवपरिप्लवे॥ ७२॥**

चलसप्तकं चलमात्रे। 'लुड इत्येके' इत्यतः पचाद्यचि लोलम्। लोलतिरपरिपठितधातुरिति माघटीकाकृत्। वदावदवच्चलाचलम्। चञ्चतेः कलच्।

चञ्चलम् । 'अन्येषामपि—'(६. ३. १३७) इति दीर्घत्वे पारिप्लवम् । पचाद्यच् । परिप्लवम् ॥

**अतिरिक्तः समधिकः**

अतिरिक्तद्वयमधिके ॥

**दृढसन्धिस्तु संहतः ।**

दृढसन्धिद्वयं दृढसन्धाने । हन्तेः क्तः । संहतः ॥

**कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥ ७३ ॥**

**जरठं मूर्तिमन्मूर्तं**

कर्कशनवकं **कठिने** । 'कठ कृच्छ्रजीवने'। 'बहुलमन्यत्रापि' (उ० २. ५१) इतीनच् । कठिनम् । घातके क्रूर उक्तः । 'कठिचकिभ्यामोरच्' (उ० १. ६७) । कठोरम् । 'दृढः स्थूलबलयोः' (७. २. २०) इत्यत्र परिबृढवद् दृढो निपातितः । मूर्तिः काठिन्यं, तद्योगान्मूर्तिमत् । 'तदस्यास्त्यस्मिन्निति मतुप्' (५. २. ९४) । अर्शआद्यचि मूर्तम् ॥

**प्रवृद्धं प्रौढमेधितम् ।**

प्रवृद्धत्रयं **प्रौढे** । प्रैषवद् वृद्धौ प्रौढः । एधेः क्तः । एधितः ॥

**पुराणप्रतनप्रत्नपुरातनचिरन्तनाः ॥ ७४ ॥**

पुराणपञ्चकं **पुरातने** । 'सायंचिरं—' (४. ३. २३) इत्यादिना ट्युः । पुराणम् । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४. ३. १०५) इति निपातनान्न तुट् । 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षे तुटि पुरातनम् । 'प्रान्नश्च पुराणे' (वा० ५. ४. ३०) इति प्रशब्दान्नप्रत्ययः । चकारात् (त्नप्) तनप् (च) । प्रत्नं प्रतनं च ॥

**प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ।**

**नूत्नश्च**

---

१ 'च' क. ग. पाठः.

प्रत्यग्रसमकं नवे । प्रतिगतोऽग्रोऽस्य प्रत्यग्रः । 'पादार्घाभ्यां च' (५. ४. २५) इति चकाराद् यत् । नव्यः । 'नवशब्दस्य नूआदेशस्त्नप्तनखाश्च प्रत्यया वक्तव्याः' (वा० ५. ४. ३०) इति यथाक्रमं खतनत्नप्प्रत्ययाः । नवीननूतननूत्नाः ॥

**सुकुमारं तु कोमलं मृदुलं मृदु ॥ ७५ ॥**

सुकुमारचतुष्कं कोमले । मृदुलं सिध्मादि । पृथुवन्मृदु ॥

**अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ।**

अन्वक्चतुष्टयमनुगन्तरि । अनु पश्चादञ्चतीत्यन्वक्, चान्तः । स्त्रियामनूची । अनुगतं पादेन्द्रियमन्वक्षम् । पदस्य पश्चादनुपदम् । 'अव्ययं विभक्ति —' (२. १. ६) इत्यादिना समासः ॥

**प्रत्यक्षं स्यादैन्द्रियकम्**

इन्द्रियग्राह्ये वस्तुनि प्रत्यक्षद्वयम् । अक्षं प्रति प्रत्यक्षम् । आभिमुख्येऽव्ययीभावः । कुलालादेराकृतिगणत्वाद् वुञ् । ऐन्द्रियकम् ॥

**अत्यध्यक्षमतीन्द्रियम् ॥ ७६ ॥**

अत्यध्यक्षद्वयमप्रत्यक्षे । अतिक्रान्तमध्यक्षमत्यध्यक्षम् ॥

**एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ।**
**अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि च ॥ ७७ ॥**

एकतानसप्तकमेकाग्रे । एकस्मिन् तानोऽस्यैकतानः । 'तन यज्ञोपकरणयोः' । चुरादिण्यन्ताद् 'एरच्' (३. ३. ५६) । तानः ॥

**पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः**

आदिपञ्चकमादौ । 'दक्षिणापश्चात्पुरसस्त्यक्' (४. २. ९८) । पौरस्त्यः । दिगादित्वाद् यत् । आद्यः ॥

**अथास्त्रियाम् ।**
**अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम् ॥ ७८ ॥**

अन्तषट्कमन्ते । जघन्यान्त्यौ दिगादी । पौरस्त्यवत् पाश्चात्यः ।

अनचि च' (८. ४. ४७) इति द्वित्वे द्वितकारः । शाकल्यमते त्रितकारम् । ‡'अग्रपश्चाड्डिमच्' (वा० ४. ३. २३) । पश्चिमम् ॥

**मोघं निरर्थकं**

मोघद्वयं निष्फले ॥

**स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ।**

स्पष्टचतुष्कं व्यक्ते । अञ्जेः क्तः । व्यक्तम् ॥

**साधारणं तु सामान्यम्**

यदेकमनेकसंबन्धि, तत्र साधारणद्वयम् । पूर्वं तु 'सदृक् । साधारणः' इत्युक्तम् । तुल्ये साधारणः साधितः, स्त्रियां साधारणी साधारणा च । स्वार्थिकष्यञि सामान्यम् । तेन जातेरन्यत्रापीति प्रयोगः । 'सामान्योऽयं धर्मसेतुर्नृपाणाम्' । सामान्यं धनम् । सामान्या भूमिः ॥

**एकाकी त्वेक एककः ॥ ७९ ॥**

एकाकिनयमेकके । 'एकादाकिनिच्चासहाये' (५. ३. ५२) इत्याकिनिच् । एकाकी । चकारात् पक्षे कन्लुकौ च । एककः एकश्च ॥

**भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ।**

अन्यतरादयः पञ्च भिन्नार्थवाचकाः । पञ्चैव सर्वनामसंज्ञकत्व इत्येव नाम ॥

**उच्चावचं नैकभेदम्**

उच्चावचद्वयमनेकप्रकारे । उदक् चासाववाक् चेत्युच्चावचं, मयूरव्यंसकादिषु निपातितम् । 'उच्चावचा वीचयः' इति प्रयोगः । न एको भेदोऽस्येति त्रिपदो बहुव्रीहिः । 'सुप् सुपा' इति नशब्देन सह समासः ॥

**उच्चण्डमविलम्बितम् ॥ ८० ॥**

उच्चण्डद्वयं तूर्णे ॥

**अरुन्तुदं तु मर्मस्पृग्**

अरुन्तुदद्वयं मर्मपीडाकरे । विधुन्तुदवदरुन्तुदः । क्विनि मर्मस्पृक्, शान्तम् ॥

**अबाधं तु निरर्गलम् ।**

अबाधद्वयमनिवारिते ॥

**प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥ ८१ ॥**

प्रसव्यचतुष्कं प्रतिकूले । पुत्रः 'अचो यत्' (३. १. ९७) । प्रसव्यापसव्यौ । 'अपदुस्सुषु स्थः' (उ०१. २९) इति तिष्ठतेः कुः । 'अम्बाम्ब—' (८. ३. ९७) इत्यादिना षत्वम् । अपष्ठु ॥

**वामं शरीरे सव्यं स्याद्**

शरीरे वाममङ्गं(सव्यम्) । 'सव्यं वामे च दक्षिणे' इति त्वजयः ॥

**अपसव्यं तु दक्षिणम् ।**

दक्षिणमङ्गमपसव्यम् । 'द्विवकार' इति वर्णदेशना ॥

**सङ्कटं ना तु सम्बाधः**

सङ्कटद्वयमल्पावकाशे । 'सम्प्रोदश्च कटच्' (५.२.२९)। सङ्कटम् । घञि सम्बाधः । पुल्लिङ्ग एव नान्यलिङ्गः ॥

**कलिलं गहनं समे ॥८२॥**

दुष्प्रवेशे, दुर्विवेक इति यावत् । तत्र कलिलद्वयम् । यथा गहनं शास्त्रम् । सलिलवत् कलिलम् ॥

**सङ्कीर्णे सङ्कुलाकीर्णे**

जनादिना निरन्तरव्याप्ते सङ्कीर्णद्वयम् । द्वयं दन्त्यादि । 'शङ्केरुलचि तालव्यादी'ति तु गोवर्धनः ॥

**मुण्डितं परिवापितम् ।**

मुण्डितद्वयं कृतकेशखण्डने । यथा मुण्डितं शिरः । 'मुडि खण्डने' । क्तः । मुण्डितः । वपेरनेकार्थत्वाद् मुण्डनेऽपि वृत्तिः । तथाच भाष्यं—

"वपिः प्रकिरणे दृष्टो मुण्डने चापि दृश्यते" ।

**ग्रथितं सन्दितं दृब्धं**

ग्रथितत्रयं **ग्रथिते** । 'ग्रन्थ सन्दर्भे' । क्र्यादिः । क्तः । **ग्रथितम्** । **'ग्रथि** कौटिल्ये' । भूवादिः । 'इदितो नुम् धातोः' (७. १. ५८) इति नुमि ग्रन्थितमिति वा पाठः । 'मृद क्षोदे' । अनेकार्थत्वाद् **धातूनां** ग्रन्थनेऽपि वृत्तिः । णिच् । क्तः । मर्दितः । 'दृभि ग्रन्थे' । क्तः । दृब्धम् ॥

**विसृतं विस्तृतं ततम् ॥ ८३ ॥**

**लब्धप्रसरे** विसृतत्रयम् । 'सृ गतौ' । 'स्तृञ् आच्छादने' । **ह्रस्वा**-दिः । 'तनु विस्तारे' । क्तः । विसृत-विस्तृत-ततानि ॥

**अन्तर्गतं विस्मृतं स्यात्**

अन्तर्गतद्वयं **विस्मृते** ॥

**प्राप्तप्रणिहिते समे ।**

प्राप्तद्वयं **प्रकर्षेण निहिते** । अधिक्षिप्ते इति केचित् । **लब्धपर्याये** च प्राप्तं वक्ष्यते । 'नेर्गद —' (८. ४. १७) इत्यादिना णत्वे प्रणिहितम् ॥

**वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ॥ ८४ ॥**

वेल्लितषट्कं **कम्पिते** । 'धू विधूनने' । आधूतः । **'धुञ् कम्पने'** । ह्रस्वादिः । धुतः ॥

**नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ।**

नुत्तसप्तकं **प्रेरिते** । **'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्'** (८. २. ५६) इति निष्ठानत्वविकल्पे नुत्तनुन्नौ ॥

**परिक्षिप्तं तु निवृतं**

**परिखादिना** **वेष्टिते** परिक्षिप्तद्वयम् । वृञो निवृतम् ॥

**मुषितं मूषितार्थकम् ॥ ८५ ॥**

मुषितद्वयं **मुषिते** । 'मुष स्तेये' । क्रैयादिको ह्रस्वोपधः । **'मूष स्तेये'** । भौवादिको दीर्घोपधः ॥

**प्रवृद्धप्रसृते**

**प्रवृद्धद्वयं प्रसरणे** । प्रपूर्वो वृधिः प्रसरणे ।

"तस्मादयं प्रववृधे पृथिवीपतीनामुद्गीतपुण्यचरितो भुवनेषु वंशः" इति भवभूतिश्च । प्राक् प्रौढेऽपि प्रवृद्ध उक्तः । इत आरभ्य समे इति वक्ष्यमाणं योज्यम् ॥

**न्यस्तनिसृष्टे**

न्यस्तद्वयं न्यस्ते । निक्षिप्त इति यावत् ॥

**गुणिताहते ।**

गुणितद्वयं गुणिते । यथा पञ्चधा गुणिता द्वादशसंख्या षष्टिर्भवति ।

**निदिग्धोपचिते**

निदिग्धद्वयमुपचिते । दिहेः क्तः ॥

**गूढगुप्ते**

कृतसङ्गोपने गूढद्वयम् ॥

**गुण्डितरूषिते ॥ ८६ ॥**

गुण्डितद्वयं धूलिप्रक्षिप्ते । गुण्डिर्वेष्टने । रूषिस्तु मूर्धन्यान्तो भ्वादेरपरिसमाप्तत्वाज् ज्ञेयः ॥

**द्रुतावदीर्णे**

जातद्रवीभावे मांसादौ द्रुतद्वयम् ॥

**उद्गूर्णोद्यते**

उद्यते शस्त्रादौ उद्गूर्णद्वयम् । 'गुरी उद्यमे' । क्तः । उद्गूर्णः ॥

**काचितशिक्यिते ।**

काचितद्वयं शिक्यारोपिते । 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' इति णिजन्तात् क्तान्तद्वयम् । काचितम् । शिक्यितम् ॥

**घ्राणघ्राते**

(जिघ्रे)घ्रीते पुष्पादौ घ्राणद्वयम् । नुन्नवद् विभाषा नत्वम् ॥

**दिग्धलिप्ते**

दिग्धद्वयं चन्दनादिलिप्ते ॥

**समुदक्तोद्धृते समे ॥ ८७ ॥**

कूपादेरुद्धृते जलादौ समुदक्तद्वयम् ॥

**वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम् ।**

नदीप्राकारादिना वेष्टिते वेष्टितपञ्चकम् ॥

**रुग्णं भग्ने**

रुग्णद्वयं भग्ने । 'रुजो भङ्गे' । 'भञ्जो आमर्दने' । क्तः ॥

**अथ निशितक्ष्णुतशातानि तेजिते ॥ ८८ ॥**

शाणादौ तीक्ष्णीकृते निशितचतुष्कम् । 'शो तनूकरणे' । 'शाच्छोरन्यतरस्याम्' (७. ४. ४१) इति इत्त्वविकल्पः । निशितम् । 'क्ष्णु तेजने' । 'तिज निशाने' । चुरादिः ॥

**स्याद् विनाशोन्मुखं पक्कं**

विनाशोन्मुखे पक्कम् । परिणते च वक्ष्यति । 'पचो वः'(८. २. ५२) इति निष्ठावत्वम् । यथा पक्को वटुः । विनाशोन्मुख इत्यर्थः ॥

**ह्रीणह्रीतौ तु लज्जिते ।**

ह्रीणत्रयं लज्जिते । नुत्तवद् विकल्पेन नत्वे ह्रीणह्रीतौ । लज्जितस्तारकादिः ॥

**वृत्ते तु वृत्तवावृत्तौ**

वृतादित्रयं वृत्ते । सूत्रादेर्विवरणं[2] वृत्तिरुच्यते । दिवादौ 'तप ऐश्वर्ये' इत्यनन्तरं 'वावृतु वर्तने' इति पठ्यते । यत्प्रयोगो भट्टौ—

"ततो वावृत्यमानासौ रामशालां न्यविक्षत"

इति । अत्र रामं वृण्वतीत्यर्थः । तन· क्त· । वावृत्तः ॥

**संयोजित उपाहितः ॥ ८९ ॥**

पदार्थे पदार्थान्तरेण संयुक्तीकृते संयोजितद्वयम् ॥

**प्राप्यं गम्यं समासाद्यं**

१. 'जाभ्यां क्तः' ख. ग. घ., 'जिभ्यां क्तः' क. पाठः. २. 'दौ व' ग. घ. पाठः.

प्राप्तुं शक्ये प्राप्यत्रयम्। ण्यति प्राप्यम्। 'पोरदुपधात्' (३. १. ९८) इति यति गम्यम् ॥

**स्यन्नं रीणं स्रुतं स्नुतम्।**

स्नुते जलादौ स्यन्नचतुष्कम्। 'स्यन्दू प्रस्रवणे'। क्तः। स्यन्नम्। 'स्नु प्रस्रवणे'। क्तः। स्नुतम् ॥

**सङ्गूढः स्यात् सङ्कलितः**

लेखकादिना (संवृतकृतीते[1]) सङ्गूढद्वयम् ॥

**अवगीतः ख्यातगर्हणे ॥ ९० ॥**

ख्याता प्रसिद्धा गर्हणा यस्य सोऽवगीतः ॥

**विविधः स्याद् बहुविधो नानारूपः पृथग्विधः।**

विविधचतुष्कं नानाप्रकारे ॥

**अवरीणो धिक्कृतश्चापि**

अवरीणद्वयं कृतधिक्कारे। पूर्वोक्तस्यैव चा[2]धिक्कृतस्य अवरीण इति पर्यायान्तरं दृश्यते ॥

**अवध्वस्तोऽवचूर्णितः ॥ ९१ ॥**

दृष्[3]चूर्ण(?) लेखादौ अवध्वस्तद्वयम्। 'सत्यापपाश—' (३. १. २५) इत्यादिना णिच्। क्तः ॥

**अनायासकृतं फाण्टं**

अनायाससाध्यं फाण्टम्।

"द्रव्यादीयोत्थितात[4] तोये प्रतप्ते चैव संस्थिते।
रसो निर्याति यः सद्यः स फाण्ट इति संस्तुतः[5]" ॥

'क्षुब्धस्वान्त—' (७. २. १८) इत्यादिना 'फण गतौ' इत्यतो निष्ठायामिडभावे फाण्टं निपातितम् ॥

१. 'ति' ङ. पाठः. २. 'वाधिकक्रु' ङ. पाठः. ३. 'सा' ङ. पाठः. ४. 'द' घ. च. पाठः. ५. 'ती' ङ. पाठः. ६. 'स्कु' ज. पाठः.

**स्वनितं ध्वनितं समे ।**

कृतस्वने स्वनितद्वयम् ॥

**बद्धे सन्दानितं मूर्णमुद्दितं सन्दितं सितम् ॥ ९२ ॥**

बद्धषट्कं बद्धे । सन्दानितं तारकादि । 'मुर्वी बन्धने' । क्तः । वलोपदीर्घनत्वानि । मूर्णम् । मूत इति पाठे 'मूञ् बन्धने' । क्तः । 'दो अवखण्डने' । उद्दितसन्दितौ । 'षिञ् बन्धने' । क्तः । सितम् ॥

**निष्पक्कं कथितं**

निष्पक्वद्वयं क्वथिते । 'क्वथ निष्पाके' । क्तः । क्वथितम् ॥

**पाके क्षीराज्यहविषां श्रृतम् ।**

क्षीरादीनां पाके श्रृतम् । 'श्रा पाके' । 'श्रृतं पाके' (६. १. २७) इति निपातितम् । पाकेऽभिधेये श्रातेर्निष्ठायां श्रृभावो निपात्यते ॥

**निर्वाणो मुनिवह्न्यादौ**

'निर्वाणोऽवाते' (८. २. ५०) इति निष्ठानत्वम् । निर्वाणो मुनिः । निर्वाणो वह्निः । निर्वाणो हस्ती । मुक्तो, नष्टो, मग्नश्चेति यथाक्रमं निर्वाणशब्दार्थाः ॥

**निर्वातस्तु गतेऽनिले ॥ ९३ ॥**

वाते तु नत्वाभावाद् निर्वातो गते वायौ ॥

**पक्कं परिणते**

पक्वद्वयं परिणते । यथा परिणता बुद्धिः ॥

**गूनं हन्ने**

कृतमलोत्सर्गे गूनद्वयम् । 'गु पुरीषोत्सर्गे' । 'दुग्वोर्दीर्घत्वं चेति वक्तव्यम्' (वा० ८. २. ४४) इति निष्ठानत्वं दीर्घत्वं च । गूनम् । हदेः क्तः । हन्नम् ॥

**मीढं तु मूत्रिते ।**

मीढद्वयं **मूत्रिते** । 'मिह सेचने' । क्तढत्वष्टुत्वढलोपदीर्घत्वानि ॥

**पुष्टे तु पुषितं**

पुष्टद्वयं **पुष्टे पक्ष्यादौ** । 'पुष पुष्टौ' । दिवादिरनिट् । भ्वादेस्तु सेटः पुषितम् ॥

**सोढे क्षान्तम्**

सोढद्वयं **क्षान्ते** । यथा सोढोऽपराधः । 'सहिवहोरोदवर्णस्य' (६. ३. ११२) । सोढः ॥

**उद्धानमुद्गते ॥९४॥**

उद्धानद्वयमुद्गते । 'ओहाङ् गतौ' । उत्पूर्वः । ओदित्त्वान्नत्वम् । उद्धानम् ॥

**दान्तस्तु दमिते**

पूर्वं तपःक्लेशसह उक्तम् । इदानीं सामान्येन **वहनादिक्लेशसहे** दान्तद्वयम् ॥

**शान्तः शमिते**

शान्तद्वयं **शान्ते** । णिचि 'वा दान्त—' (७. २. २७) इत्यादिना विभाषेट् । शान्तशमितौ ॥

**प्रार्थितेऽर्दितः ।**

प्रार्थितद्वयं **प्रार्थिते** । 'अर्द गतौ याचने च' । क्तः । अर्दितः ॥

**ज्ञप्तस्तु ज्ञपिते**

ज्ञप्तद्वयं **विनेश** इति ख्याते । 'ज्ञा मारणतोषणनिशामनेषु' । एतेष्वेवार्थेष्वित्यन्यः । पूर्ववद् विभाषेट् ॥

[illegible]

**छन्नश्छादिते**

छन्नद्वयं **छन्ने**। यथा मेघच्छन्नं नभः ॥

**पूजितेऽञ्चितः ॥ ९५ ॥**

पूजितद्वयं **पूजिते**। 'अञ्चेः पूजायाम्' (७. २. ५३) इतीट्। 'नाञ्चेः पूजायाम्' (६. ४. ३०) इत्युपधानलोपाभावः। अञ्चितः ॥

**पूर्णस्तु पूरिते**

पूर्णद्वयं **पूरिते** ॥

**क्लिष्टः क्लिशिते**

क्लिष्टद्वयं **क्लिष्टे**। 'क्लिशू विबाधने'। 'क्लिशः क्त्वानिष्ठयोः' (७. २. ५०) इतीड्विकल्पः। क्लिष्टक्लिशितौ ॥

**अवसिते सितः।**

अवसितद्वयं **समाप्ते**। 'षो अन्तकर्मणि'। क्तः ॥

**प्रुष्टप्लुष्टोषिता दग्धे**

प्रुष्टचतुष्कं **दग्धे**। 'श्रिपु प्रुषु प्लुषु दाहे'। 'उष दाहे'। क्तः। 'दह भस्मीकरणे'। क्तः ॥

**तष्टत्वष्टौ तनूकृते ॥ ९६ ॥**

तष्टत्रयं **वेश्वतेति** ख्याते। 'तक्षू त्वक्षू तनूकरणे'। 'स्कोः संयोगाद्योरन्ते च' (८. २. २९) इति कलोपः ॥

**वेधितच्छिद्रितौ विद्धे**

वेधितत्रयं **वेधिते**। ण्यन्तात् क्तः। वेधितः। द्वौ तारकादी ॥

१. 'लोडने' क. ख. ग. घ. पाठः. २. 'प' छ., 'च' ग., 'चश्वत' ट. पाठः.

**विन्नवित्तौ विचारिते ।**

विन्नत्रयं विचारिते । 'विद विचारणे' । नुन्नवद् विभाषा निष्ठानत्वम् ॥

**निष्प्रभे विगतारोकौ**

निष्प्रभत्रयं प्रभाशून्ये । रुचेर्घञि नञ्समासे अरोकः ॥

**विलीने विद्रुतद्रुतौ ॥ ९७ ॥**

घृतादौ विलीने विलीनत्रयम् ॥

**सिद्धे निर्वृत्तनिष्पन्नौ**

सिद्धत्रयं सिद्धे ॥

**दारिते भिन्नभेदितौ ।**

दारितत्रयं विदारिते ॥

**ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्तते ॥ ९८ ॥**

ऊतत्रयं सन्तते वस्त्रादौ । 'ऊयी तन्तुसन्ताने' । क्तयलोपौ । ऊतम् । 'षिवु तन्तुसन्ताने' । स्यूतम् । वेञ उतम् ॥

**स्यादर्हिते नमस्यितनमसितमपचायितार्चितापचितम् ।**

अतः परमावर्गमार्याच्छन्दः । अर्हितषट्कं नमस्कृते । 'नमोवरिवश्चित्रङः क्यच्' (३. १. १९) । 'क्यस्य विभाषा' (६. ४. ५०) इति यलोपविकल्पः । नमस्यितनमसितौ । 'चायृ पूजानिशामनयोः' । अपचायितम् । 'अपचितश्च' (७. २. ३०) इति निपातनाद् अपचितम् । अपपूर्वाच्चायतेर्निष्ठायामनिट्त्वं चिभावश्च निपात्यते ॥

**वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ॥ ९९ ॥**

कृतपरिचर्ये वरिवसितचतुष्कम् । नमस्यितद्वयवद् वरिवस्यितद्वयम् । '[illegible] [illegible]' । [illegible] ॥

**सन्तापितसन्तप्तौ धूपितधूपायितौ च दूनश्च।**

सन्तापितपञ्चकमध्वादिश्रान्ते। 'गुपूधूपविच्छि—' (३. १. २८) इत्यादिना 'आयादय आर्धधातुके वा' (३. १. ३१) इति आयविकल्पे धूपितधूपायितौ। 'टुदु उपतापे'। 'दुग्वोर्दीर्घश्च' (वा० ८. २. ४४) इति नत्वम्। दूनम्॥

**हृष्टो मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः॥ १००॥**

प्रीतियुक्ते हृष्टषट्कम्। 'हृषु अलीके'। अनेकार्थत्वाद् हृष्टः। 'न ध्याख्या —' (८. २. ५७) इत्यादिना नत्वनिषेधे मत्तः। 'ह्लादो निष्ठायाम्' (६. ४. ९५) इत्युपधाह्रस्वत्वे प्रह्लन्नः॥

**छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्।**

छिन्नाष्टकं छिन्ने। 'शाच्छोरन्यतरस्याम्' (७. ४. ४१) इतीत्त्वविकल्पे छातं छितं च। 'दाप् लवने'। दातम्। 'दो अवखण्डने'। 'द्यतिस्यतिमास्थामित् ति किति' (७. ४. ४०) इतीत्त्वम्। दितम्। 'ओव्रश्चू छेदने'। क्तः। वृक्णम्॥

**स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्॥ १०१॥**

स्रस्तसप्तकं च्युते। 'स्रन्सु भ्रन्सु ध्वन्सु अवस्रंसने'। क्तः। स्रस्तत्रयम्। 'गड सेचने'। गलितम्॥

**लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च।**

लब्धषट्कं लब्धे। विदिर्लाभे। विन्नम्। 'भू प्राप्तावात्मनेपदी'। 'आ धृषाद् वा' इति पक्षे चुरादिणिच्। भावितम्। भूतम्। 'षद्लृ विशरणादौ'। आङः षदेः पद्यर्थे णिच्। आसादितम्॥

**अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम्॥ १०२॥**

अन्वेषितपञ्चकमन्वेषिते। 'एषृ हेषृ गतौ', 'गवेष मार्गणे', 'इषु इच्छायां', 'मार्ग अन्वेषणे', 'मृग अन्वेषणे'। क्तः॥

**आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ।**

आर्द्रसप्तकं स्तिमिते । आर्द्रत्वेऽप्यार्द्रम् । तेन सह वर्तमानं सार्द्रम् । 'क्लिदू आर्द्रभावे' । क्लिन्नम् । 'तिम ष्टिम आर्द्रभावे' । तिमितस्तिमिते । 'उन्दी क्लेदने' । नुन्नवद् विकल्पेन नत्वे समुन्नम्, उत्तं च ॥

**त्राणं त्रातं रक्षितमवितं गोपायितं गुप्तम् ॥ १०३ ॥**

त्राणषट्कं रक्षिते । नुत्तनुन्नवत् त्रातत्राणे । 'अव रक्षणे' । अवितम् । धूपायितवद् गोपायितम् ॥

**अवगणितमवमतावज्ञाते अवमानितं च परिभूते ।**

अवगणितपञ्चकं परिभूते । अवपूर्वो गणिरवज्ञायाम् । 'मान पूजायाम्' । चुरादिः ॥

**त्यक्तं हीनं विधुतं समुज्झितं धूनमुत्सृष्टम् ॥ १०४ ॥**

त्यक्तषट्कं त्यक्ते । 'ओहाक् त्यागे' । हीनम् । 'धुञ् कम्पने' । ह्रस्वादिः । 'धू विधूनने' । दीर्घादिः, तुदादिः ॥

**उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ।**

उक्तषट्कमभिहिते । वदेः उदितम् ॥

**बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगतम् ॥**

बुद्धसप्तकं बुद्धे । 'बुध अवगमने' । बुद्धम् । 'बुध बोधने' । बुधितम् । मनःशब्दात् 'तत् करोति—' इति णिचि टिलोपः । मनितम् । 'विद ज्ञाने' । विदितम् । 'षो अन्तकर्मणि' । अवसितम् ॥

**ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।**
**सङ्गीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ॥ १०६ ॥**

ऊरीकृतैकादशकमङ्गीकृते । ऊरीकृतं दीर्घादि । अन्यथार्याभङ्गः ।

"क्रीडयापि न वैद्येन वितथा वागुरीकृता।
हन्तुं चारिमृगान् बाणसन्ततिर्वागुरीकृता॥"

इति कीचकवधे यमकादू ह्रस्वादि च। शृणोतेः, आश्रुनसंश्रुतोपश्रुताः। 'गॄ शब्दे'। दीर्घादिः। गीर्णम्॥

**ईडितशस्तपणायितपनायिताः प्रणुतपणितपनितानि।**
**अभिगीर्णवर्णिताभिष्टुनेडितानि स्तुतार्थानि॥ १०७॥**

ईडितद्वादशकं स्तुते। 'ईड स्तुतौ'। ईडितम्। इडितं च। 'पन स्तुतौ'। 'पण व्यवहारे'। धूपायितधूपितवत् पणायितपनायितपणितपनितानि। नौतेः प्रणुतम्॥

**भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम्।**
**अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते॥ १०८॥**

भक्षितचतुर्दशकं भक्षिते। प्रत्यवपूर्वः स्यतिरभ्यवहारे। 'गिल अदने'। गिलितम्। 'प्सा भक्षणे'। प्सातम्। 'अन्नाण्णः' (४. ४. ८५) इति निपातनादू जग्ध्यादेशाभावपक्षे अन्नम्। 'अदो जग्धिर्ल्यप् ति किति' (२. ४. ३६) इति जग्धादेशः। जग्धम्। 'ग्रसु ग्लसु अदने'। ग्रस्तं ग्लस्तं च॥

**क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः।**
**क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः॥ १०९॥**

क्षेपिष्ठादयः षड् यथाक्रमं क्षिप्रादीनामतिशये। प्रकर्षोऽतिशयः। तद् यथा—अतिशयितः क्षिप्रः क्षेपिष्ठः। अतिशयितं क्षुद्रं क्षोदिष्ठमित्यादि॥

**साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः।**
**बाढव्यायतबहुगुरुवामनवृन्दारकातिशये॥ ११०॥**

साधिष्ठादयः षड् यथाक्रमं बाढादीनामतिशये। अतिशयेन चातिशयी लक्ष्यते। तद् यथा—अतिशयेन बाढं दृढं साधिष्ठम्।

अतिशयेन दीर्घं द्राघिष्ठमित्यादि । इष्ठनि, 'स्थूलदूरयुवह्रस्वक्षुद्रक्षिप्राणां यणादिपरं पूर्वस्य च गुणः' (६. ४. १५६)।(प्रेष्ठादि?) 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः'(६. ४. १५७) इति प्रेष्ठादि । 'अन्तिकबाढयोर्नेदसाधौ' (५. ३. ६३) इति साधादेशे साधिष्ठः ॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे
विशेष्यनिघ्नवर्गः ॥

## अथ सङ्कीर्णवर्गः ।

**प्रकृतिप्रत्ययार्थाद्यैः सङ्कीर्णे लिङ्गमुन्नयेत् ।**

सङ्कीर्णे इति । लिङ्गसङ्कीर्णे भिन्नजातीयेन संसृष्टे रूपभेदादिना निश्चेतुमशक्ये इह चान्यत्र च प्रकृतिप्रत्ययार्थैर्लिङ्गमुन्नयेत्, लिङ्गविशेषमवधारयेदित्यर्थः । प्रकृत्यर्थवशेन यथा—अपरस्पराः सार्था गच्छन्तीत्यादेर्वाच्यलिङ्गता । प्रत्ययार्थवशेन यथा—शान्तिः दान्तिः । क्तिन्नन्तत्वात् स्त्रीत्वम् । प्रायेणात्र प्रकृतिप्रत्ययार्थाद्यैर्लिङ्गं समुन्नीयत इत्यत्रैव चेदमुक्तम् । यद्यप्यत्र रूपभेदादिनैव लिङ्गनिर्णयः, (?) तथाप्यभ्युच्चयार्थमुक्तम् । अपरस्परा इत्यादौ न रूपभेदादिना विवक्षितलिङ्गप्रतीतिः । तथाहि, अत्र पुँल्लिङ्गमात्रप्रतीतेः । प्रकृत्यर्थेन लिङ्गमुन्नयेदिति वचनादपरम्पराणि ब्राह्मणकुलानि वहन्तीति नपुंसकत्वमपि । एवं स्यूत्यादीनामपि न रूपभेदाल्लिङ्गावगतिः, अपितु स्त्रीप्रत्ययार्थेनैव । अत्र च सङ्कीर्ण इत्युपलक्षणम् । तेन पूर्ववर्गेऽपि क्वचित् प्रकृतिप्रत्ययार्थाद्यैर्लिङ्गमुन्नयेत्, यत्र रूपभेदादिना लिङ्गनिश्चयाभावः । तद् यथा—'मुत् प्रीतिः प्रमदो हर्षः' इत्यादौ मुत्प्रीत्यादीनां स्त्रीत्वादिकम् । यच्चोक्तं लिङ्गादिसङ्ग्रहे 'स्त्रीभावादावनिक्तिन्' इत्याद्यूह्यं, तत एव स्यूत्यादीनां स्त्रीत्वादिकमवगम्यते । तत् किमत्र प्रत्ययार्थेन लिङ्गमुन्नयेदित्युच्यते । तन्न । यतस्तदेवानेन स्मर्यते । आद्यशब्देन व्यक्तलिङ्गेन सामानाधिकरण्यं लिङ्गशास्त्रं परस्परसाहचर्यादि च गृह्यते । तेन 'शुचिस्त्वय-

---

१. 'रा' क. ख. ग. ङ. छ. ञ. ट. पाठः.

माषाढे' 'तस्य बृन्दमि'त्यौपगवादिषु शुच्यौपगवादीनां पुंस्त्वक्लीबत्वमवधार्यते। अथ कथमयं सङ्कीर्णवर्ग इत्युच्यते। सङ्कीर्णैः सङ्कीर्णार्थैः शब्दैरारब्धत्वात्। कथमेत एव सङ्कीर्णार्थाः। भिन्नार्थत्वात्। भिन्नजात्यर्थसंसर्ग एव हि सङ्करः। पूर्वं च सत्क्रियाङ्गानां (?) वर्णानां भूम्यादेश्च वस्तुनः प्रकरणबद्धाः समानार्थाः शब्दाः क्रमेणोक्ताः। एते च नैकप्रकरणबद्धाः। तथाच क्रियत इति कर्म। मनिनन्तः कर्मशब्दः। कृतिः क्रियेति 'कृञः श च' (३. ३. १००) इति भावप्रत्ययान्तः क्रियाशब्दः। 'अपरस्पराः क्रियासातत्ये' (६. १. १४४) इति क्रियासातत्ये गम्यमाने सततगमनादिक्रियासाधने सार्थादावपरस्परशब्दो वर्तते अपरे च परे च[1] अपरस्पराः सार्था गच्छन्तीति। यद्येवं क्रमाभावादिह लिङ्गसङ्करो न युक्तः। यदुक्तं—'न सङ्करः, कृतोऽत्र भिन्नलिङ्गानाम्' इति, उच्यते। यद्यपि वस्त्वर्थानां क्रमेणाभिधानमिह नास्ति, तथापि भावाभावाभिधायिनोऽत्र निबद्धा इत्यस्त्येव शब्दानां क्रमाभिधानमिति॥

**कर्म क्रिया**

कर्मद्वयं क्रियायाम्।

"कर्म व्याप्ये क्रियायां च[2] पुन्नपुंसकयोर्मतम्"

इति रुद्रः।

"क्षपयत्यशुभं कर्म कर्मणां चिनुते शुभम्"

इति च। क्रिया प्राक् साधिता॥

**तत्सातत्ये गम्ये स्युरपरस्पराः॥ १॥**

तच्छब्देन क्रिया परामृश्यते। अविच्छेदेन क्रियासमापकेषु सार्थादिषु अपरस्पराः।

"निर्दिष्टं कर्मसातत्ये सुधीभिरपरस्परम्"

इति भागुरिः।

"अपरस्परा गदिता क्रियासातत्यवाचिका"

इत्यमरमाला। एतद्वर्गादिस्थश्लोकव्याख्याने अपरस्परं सुव्यक्तम्। अत्र सकृदर्थे न सुट्। अपरपरा अपरपरे इत्येव रूपम्॥

---

१. 'नाः श' म. पाठः. २. 'चेति' घ. ङ. पाठः.

**साकल्यासङ्गवचने पारायणपरायणे ।**

यथाक्रमं साकल्यवचनं पारायणम् , आसङ्गवचनं परायणम् । पारं पर्यन्तमयते गच्छत्यत्रेति पारायणम् । यथा धातुपारायणम् ।

"रत्नपारायणं नाम लङ्केयं मम मैथिलि !"

(स० ५. श्लो० ८९)

इति भट्टिप्रयोगादाविष्टलिङ्गम् । अत्र सकलरत्नार्थो गम्यत इति साकल्यवचनत्वम् । परम् अयनम् आसक्तिस्थानं परायणम् । यथा धर्मपरायणो धर्मासक्त इत्यर्थः । 'अथ मोहपरायणा' (कुमा० स० ४. श्लो० १) इति कालिदासः ॥

**यदृच्छा स्वैरिता**

यदृच्छाद्वयं स्वाच्छन्द्ये ॥

**हेतुशून्या त्वास्या विलक्षणम् ॥ २ ॥**

हेतुना कारणेन शून्या निष्प्रयोजना आस्या स्थितिः विलक्षणम् ॥

**शमथस्तु शमः शान्तिः**

कामक्रोधादिप्रध्वंसे शमथत्रयम् । बाहुलकोऽथः । शमथः । शत्रयं तालव्यम् ॥

**दान्तिस्तु दमथो दमः ।**

ब्रह्मचर्यादिक्लेशसहिष्णुतायां दान्तित्रयम् ॥

**अवदानं कर्म वृत्तं**

वृत्तं विशुद्धं कर्म, तदवदानम् । 'दैप् शोधने' । ल्युट् ॥

**काम्यदानं प्रचारणम् ॥ ३ ॥**

तन्त्रेण काम्यशब्दो द्विरावर्त्यते । तेन काम्यस्य वस्तुनः कामनापूर्वकं दानं प्रचारणम् । महादानं च तदुच्यते । 'प्रचारणं महादानम्' इति त्रिकाण्डम् ॥

**वशक्रिया संवदनं**

मणिमन्त्रादिभिर्वशीकरणे वशक्रियाद्वयम् । भावल्युटि संवदनम् ।

करणल्युटि वशक्रियासाधनेऽपि मन्त्रादौ । तथाच—'जयश्रियः संवदनं यतस्तत्' (स० १६. श्लो० ७४) इति रघुः ॥

**मूलकर्म तु कार्मणम् ।**

**कामणे**ति ख्याते मूलकर्मद्वयम् । मूलकर्म नान्तम् । 'तद्युक्तात् कर्मणोऽण्' (५. ४. ३६) इति स्वार्थेऽण् । 'अन्' (६. ४. १६७) इति प्रकृतिभावः । कार्मणम् ॥

**विधूननं विधुवनं**

विधूननद्वयं **कम्पने** । 'धूञ्प्रीञोर्नुग् वक्तव्यः' (वा० ७. ३. ३७) इति नुक् । विधूननम् । कुटादित्वाद् गुणाभावः । एवं स्फुटनस्फुरणगुरणेषु ॥

**तर्पणं प्रीणनावने ॥ ४ ॥**

तर्पणत्रयं **प्रीणने** । विधूननवन्नुक् । प्रीणनम् । 'अव रक्षणगतिप्रीत्यादौ' । अनेकार्थत्वाल्ल्युट् । अवनम् ॥

**पर्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि ।**

**मरणोद्यतस्य निषेधे** पर्याप्तित्रयम् । यथा—'पर्याप्तो नु सुहृदं महाभागः' इति ॥

**सेवनं सीवनं स्यूतिः**

सेवनत्रयं **सीवनक्रियायाम्** । 'अन्येषामपि—' (६. ३. १३७) इति दीर्घत्वे सीवनम् ॥

**विदरः स्फुटनं भिदा ॥ ५ ॥**

**वस्त्रादेः स्फुटने** विदरत्रयम् । दरवद् विदरः । स्फुटनं कुटादि । भिदाद्यङि भिदा ॥

**आक्रोशनमभीषङ्गः**

आक्रोशनद्वयं शापे। 'सञ्ज सङ्गे'। घञि षत्वे अभीषङ्गः॥

**संवेदो वेदना न ना।**

संवेदद्वयमनुभवे। 'घट्टि*वादिविदिभ्य उपसङ्ख्यानम्' (वा० ३. ३. १०७) इति युचि वेदना। न ना न पुमानित्यर्थः॥

**संमूर्छनमभिव्याप्तिः**

सर्वतो व्यापने संमूर्छनद्वयम्। 'मुर्छा मोहसमुच्छ्राययोः'॥

**याच्ञा भिक्षार्थनार्दना॥ ६॥**

याच्ञाचतुष्कं याचनायाम्। 'अर्द गतौ याचने च'। 'हेतुमति च' (३. १. २६) इति चकारात् स्वार्थणिचि अर्दना॥

**वर्धनं छेदने**

वर्धनद्वयं छेदने। 'वर्धच्छेदनपूरणयोः'। चुरादिः। वर्धनम्॥

**अथ द्वे आनन्दनसभाजने।**

**आप्रच्छनम्**

आनन्दनत्रयं संवर्गणे। संवर्गणं च बान्धवादेरालिङ्गनचुम्बनस्वागतभाषणादि। आमन्त्रणमिति क्वचित् पाठः। 'सभाज प्रीतिसेवनयोः'। चुरादिणिच्। सभाजनम्॥

**अथाम्नायः संप्रदायः**

शिष्यपरम्परागते सदुपदेशे आम्नायद्वयम्। 'म्ना अभ्यासे'। घञ्॥

**क्षये क्षिया॥ ७॥**

क्षयद्वयमपचये। 'क्षय उक्तः। षित्त्वादङि क्षिया॥

---

* 'वन्दिबि' इति मुद्रितवार्त्तिकपाठः।

**ग्रहे ग्राहः**

ग्रहद्वयं **ग्रहणे निबन्धे** च । बाहुलकाद् घञ् । ग्राहः । तथाच 'कण्ठे स्वयंग्राहनिषक्तबाहुम्' इति ॥

**वशः कान्तौ**

वशद्वयमिच्छायाम् । 'वश कान्तौ' । 'वशिरण्योरुपसङ्ख्यानम्' (वा० ३. ३. ५८) इत्यप् । वशः ॥

**रक्षणस्त्राणे**

रक्षणद्वयं **रक्षणे** । 'यजयाच—' (३. ३. ९०) इत्यादिना नङ् । रक्ष्णः ॥

**रणः क्वणे ।**

**क्वणने** शब्दकरणे रणद्वयम् । वशवदप् । रणः ॥

**व्यधो वेधे**

व्यधद्वयं **वेधने** । जपवद् व्यधः । 'विध विधाने' । घञ् । वेधः ॥

**पचा पाके**

पचाद्वयं **पचने** । षित्त्वादङ् । पचा । घञि पाकः ॥

**हवो हूतौ**

हवद्वयं **हवने** ॥

**वरो वृतौ ॥ ८ ॥**

वरद्वयं **वरणे** । वेष्टने प्रार्थनाविशेषे चेत्यन्यः ॥

**ओषः प्लोषे**

ओषद्वयं **दाहे** । घञ् ॥

**नयो नाये**

नयद्वयं **नीतौ** । बाहुलकाद् 'एरच्' (३. ३. ५६) । नयः । 'श्रिणीभुवोरनुपसर्गे' (३. ३. २४) इति घञि नायः ॥

**ज्यानिर्जीर्णौ**

ज्यानिद्वयं **जीर्णतायाम्** । 'ग्लाम्लाज्याहाभ्यो निः' (वा० ३. ३. ९५) । ज्यानिः । 'जॄ वयोहानौ' । क्तिन् । §'ॠकारल्वादिभ्यः क्तिन् निष्ठावद् भवतीति वक्तव्यम्' (वा० ८. २. ४४) इति निष्ठातिदेशाद् नत्वम् । जीर्णिः ॥

**भ्रमिर्भ्रमे ।**

भ्रमिद्वयं **भ्रमणे** । *'इक् कृष्यादिभ्यः' (वा० ३. ३. १०८) इतीक् । भ्रमिः । तत्र भ्रमी गौरादिरपि ॥

**स्फातिर्वृद्धौ**

स्फातिद्वयं **वृद्धौ** । 'स्फायी ओप्यायी वृद्धौ' । क्तिन् । स्फातिः ॥

**प्रथा ख्यातौ**

प्रथाद्वयं **ख्यातौ** । 'घटादयः षितः' । षित्त्वादङ् । प्रथा ॥

**स्पृष्टिः पृक्तौ**

स्पृष्टिद्वयं **स्पर्शे** । 'पृची संपर्के' । क्तिन् । पृक्तिः ॥

**स्नवः स्रवे ॥ ९ ॥**

स्नवद्वयं **स्रवणे** । 'ॠदोरप्' (३. ३. ५७) । स्नवः । 'स्रु गतौ' । स्रवः । बाहुलकघञि स्रावोऽपि ॥

**विधा समृद्धौ**

विधाद्वयं **समृद्धौ** । विधानं विधा । 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् ॥

**स्फुरणं स्फरणे**

स्फुरणद्वयं **किञ्चिच्चलने** । 'स्फुर स्फुरणे' । कुटादिः । उदुपधान्तः । ल्युट् । स्फुरणम् । अदुपधान्तः स्फर इत्येके । ल्युट् । स्फरणम् ॥

---

§ 'ॠल्वा', * 'इर्त् कृ' इति मुद्रितवार्त्तिकपाठः ।

**प्रमितौ प्रमा ।**

तत्त्वानुभूतौ प्रमितिद्वयम् । बाहुलकात् क्तिन् । प्रमितिः । अङि प्रमा ॥

**प्रसूतिः प्रसवे**

प्रसूतिद्वयं प्रसवे ॥

**श्च्योते प्राघारः**

श्च्योतद्वयं घृतादिक्षरणे । 'श्च्युतिर् क्षरणे' । श्च्योतः । 'घृ घृ सेचने' । घञि 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति दीर्घत्वे प्राघारः ॥

**क्लमथः क्लमे ॥ १० ॥**

क्लमथद्वयं प्रयासे ॥

**उत्कर्षोऽतिशये**

उत्कर्षद्वयमतिशये । कृषेर्घञ् । उत्कर्षः । शीङोऽतिशयः ॥

**सन्धिः श्लेषे**

सन्धिद्वयं सन्धाने ॥

**विशय आशये ।**

यथा आमाशयो जलाशयः । शेतेरच् । विशयः आशयः । आश्रय इति पाठे श्रिञो रूपम् ॥

**क्षिपायां क्षेपणं**

क्षिपाद्वयं प्रेरणे । 'क्षिप प्रेरणे' । भिदादिः ॥

**गीर्णिर्गिरौ**

गीर्णिद्वयं गिलने । जीर्णिवद् गीर्णिः । गिरिः कृष्यादिः ॥

**गुरणमुद्यमे ॥ ११ ॥**

गुरणद्वयमुद्यमने । †'गुरै उद्यमने' । कुटादिः । ल्युटि गुरणम् । दीर्घोपधपाठे 'गूर उद्यमने' इत्यत्र चुरादौ[2] व्युत्पाद्यः । यमेर्घञि उद्यमः । 'अड उद्यमे' इति निपातनाद् वृद्ध्यभावः ॥

**उन्नाय उन्नये**

उन्नायद्वयमुन्नायने । 'अवोदोर्नियः' (३. ३. २६) इति घञि उन्नायः । बाहुलकाद् 'एरच्' (३. ३. ५६) । उन्नयः ॥

**श्रायः श्रयणे**

श्रायद्वयमाश्रयणे । 'श्रिणी—' (३. ३. २४) इत्यादिना घञि श्रायः ॥

**जयने जयः ।**

जयनद्वयं जये । 'जि जिये' । ल्युडचौ ॥

**निगादो निगदे**

निगादद्वयं शब्दने । 'नौ गदनद —' (३. ३. ६४) इत्यादिना पक्षेऽच् ॥

**मादो मदे**

मादद्वयं दर्पे । उत्तरपदाधिकारे 'सधमादस्थयोश्छन्दसि' (६. ३. ९६) इति निपातनाद् घञि मादः । 'मदोऽनुपसर्गे' (३. ३. ६७) इत्यप् । मदः ॥

**उद्वेग उद्भ्रमे ॥ १२ ॥**

उद्वेगद्वयं चमत्कारे ॥

१. 'रु' अ., 'र' क. ख. पाठः. २. 'दौ ल्युड् व्यु' ङ. पाठः.

† 'गुर्' इति मुद्रितधातुपाठः ।

**विमर्दनं परिमले**

विमर्दनद्वयं कुङ्कुमादिमर्दने । परिमलः । 'मल मल्ल धारणे' । घञ् । संज्ञापूर्वकत्वाद् न वृद्धिः ॥

**अभ्युपपत्तिरनुग्रहः ।**

अभ्युपपत्तिद्वयं दानाद्यनुग्रहे ॥

**निग्रहस्तु निरोधः स्याद्**

अननुग्रहे निग्रहः ॥

**अभियोगस्त्वभिग्रहः ॥ १३ ॥**

अभियोगद्वयमुद्योगे । येनाभियुक्तश्चात्र इत्युच्यते । आभिमुख्येन युद्धादिनिमित्तं प्रवृत्तिरित्यपरे ॥

**मुष्टिबन्धस्तु सङ्ग्राहः**

मुष्टिबन्धद्वयं मुष्टेर्बन्धने । दृढत्वे 'समि मुष्टौ' (३. ३. ३६) इति घञ् ।

"स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम्"

(स० ७. श्लो० ४०)

इति भट्टिः । 'खटको मुष्टिः स्त्रियां च संग्राह' इति वोपालितो मुष्टावेव पठति ॥

**डिम्बे डम्बरविप्लवौ ।**

परचक्रादिजे महाभये चाठक इति ख्याते डिम्बत्रयम् । डिम्बं मूर्धन्यादि पवर्गतृतीयवच्च ॥

**बन्धनं प्रसितिश्चारः**

येन निगडादिना बध्यते, तत्र बन्धनत्रयम् । 'समे तूद्दानबन्धने' इत्यनेन बन्धनक्रियायां प्रागुक्तः । 'षिञ् बन्धने' । क्तिन् । प्रसितिः । चार उक्तः । 'बन्धापसव्ययोश्चार' इति रुद्रः ॥

**स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥**

स्पर्शत्रयं **रोगे** । तथाच रुद्रः — 'रुजायां स्पर्शो दानस्पर्शयोरपि' इति । 'स्पृश उपताप इति वक्तव्यम्' (वा० ३. ३.१६) इति घञ् । स्पर्शः । वासरूपविधिना च तृच् । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (६. १. ५९) इति पक्षे स्प्रष्टा । उपतापकमात्रे स्पर्शत्रयमित्यन्यः । कश्चित् पुनरिदमाह — चरणानां कर्मणि चारस्पर्शौ । स्प्रष्टृद्वयमुपतापकारिणि ॥

**निकारो विप्रकारः स्याद्**

निकारद्वयमपकारे । कृञो घञ् ॥

**आकारस्त्विङ्ग इङ्गितम् ।**

आकारत्रयमिङ्गिते । अन्यस्तु अप्रियार्थसूचके चक्षुरादिचेष्टाविशेष इङ्गितं, भ्रुकुटिमुखरागादौ आकार इति मन्यते ।

"इङ्गितं चेष्टितादन्यदाकारस्त्वङ्गवैकृतम्"

इति तन्त्रान्तरं च ।

"तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च"

(रघु० स० १. श्लो० २०)

इति कालिदासोऽपि ॥

**परिणामो विकारे**

परिणामद्वयं **विकारे** । प्रकृतेश्चान्यथात्वं विकारः । यथा मृत्पिण्डविकारो घटः, काष्ठस्य भस्म ॥

**द्वे समे विकृतिविक्रिये ॥ १५ ॥**

विकृतिद्वयं **प्रकृतेरन्यथात्वमात्रे** । तच्च नावश्यं परिणामरूपमेव । यथा मुखस्य विकृतिः । 'अमार्गो[1] विक्रिया स्त्रियाम्' इत्यमरमाला । अत उन्मार्गे द्वयमित्यन्यः । चत्वारोऽप्येकार्थे इत्यपरः ॥

१. 'र्गे' ग. पाठः.

**अपहारस्त्वपचयः**

अपहारद्वयमपचये ॥

**समाहारः समुच्चयः ।**

समाहारद्वयं कूटीकरणे । यथा श्लोकसमुच्चयादिः ॥

**प्रत्याहार उपादानं**

विषयेभ्य इन्द्रियाहरणे प्रत्याहारद्वयम् ॥

**विहारस्तु परिक्रमः ॥ १६ ॥**

पद्भ्यां गमने विहारद्वयम् ॥

**अभिहारोऽभिग्रहणं**

अन्नाहारेऽभिहारद्वयम् । चौर्यकरणे वा । अभिमुखग्रहणे वेत्यन्यः ॥

**निर्हारोऽभ्यवकर्षणम् ।**

शल्यादेरुत्पाटने निर्हारद्वयम् ॥

**अनुकारोऽनुहारः स्याद्**

अनुकारद्वयं सादृश्ये ॥

**अर्थस्यापगमे व्ययः ॥ १७ ॥**

अर्थस्यापगमे व्ययः । 'व्यय वित्तसमुत्सर्गे' । चुरादिणिच् । 'अतो लोपः' (६. ४. ४८) इत्यकारलोपः ॥

**प्रवाहस्तु प्रवृत्तिः स्यात्**

जलादीनामविच्छिन्नायां सन्ततौ प्रवाहद्वयम् ।' प्रवाहो घञन्तः ॥

**प्रवहो गमनं बहिः ।**

---

१. 'कटिक' ध. ञ., 'कु' क. पाठः.   २. 'से' ञ. पाठः.

गृहनगरादेर्बाह्यगमनं यात्रा प्रवहो बाहुलकादपि । 'प्रवहः स्याद् बहिर्यात्रा' इति त्रिकाण्डः ॥

**वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥**

वियामषट्कं संयामे । 'यमः समुपनिविषु च' (३. ३. ६३) इति पक्षेऽप् ॥

**हिंसाकर्माभिचारः स्याद्**

अथर्ववेदोक्तं हिंसात्मकं कर्माभिचारः ॥

**जागर्या जागरा द्वयोः ।**

जागर्याद्वयं जागरे । 'जागर्तेरकारो वेति वक्तव्यम्' (वा० ३. ३. १०१) इति शप्रत्ययाकारप्रत्ययौ । शपक्षे 'सार्वधातुके यक्' (३. १. ६७) इति यक् । 'जाग्रोऽविचिण्णल्ङित्सु' (७. ३. ८५) इति गुणे जागर्या । परत्वाद् 'रिङ् शयग्लिङ्क्षु' (७. ४. २८) इति रिङि जाग्रियेति धातुपारायणम् । अकारप्रत्ययपक्षे जागरेति ॥

**विघ्नोऽन्तरायः प्रत्यूहः**

विघ्नत्रयं विघ्ने । 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कः । विघ्नः ॥

**स्यादुपघ्नोऽन्तिकाश्रये ॥ १९ ॥**

समीपभूत आश्रये उपघ्नः । 'उपघ्न आश्रये' (३. ३. ८५) इत्यप्रत्ययान्तो निपातितः ॥

**निर्वेश उपभोगः स्यात्**

निर्वेशद्वयमुपभोगे । घञ् ॥

**परिसर्पः परिक्रिया ।**

**परिजनादिवेष्टने** परिसर्पद्वयम् । 'गम्लृ सृप्लृ गतौ' । घञि. परिसर्पः ॥

**विधुरं तु प्रविश्लेषः**

**दुःस्थितकाद् विक्लवत्वे** विधुरद्वयम् । प्रकृष्टो विश्लेषः प्रविश्लेषः ।

"वैकल्येऽपि च विश्लेषे विधुरं विकचे त्रिषु"

इति त्रिकाण्डशेषः ॥

**अभिप्रायश्छन्द आशयः ॥ २० ॥**

अभिप्रायत्रयमभिप्राये । छन्दोऽदन्तः । 'अभिप्रायवशौ छन्दौ' इत्यनेकार्थे वक्ष्यति । सान्तोऽप्यभिप्रायवाची छन्दश्शब्द इति जयादित्यः ॥

**संक्षेपणं समसनं**

**विस्तीर्णस्य संक्षेपे** संक्षेपणद्वयम् ॥

**पर्यवस्था विरोधनम् ।**

पर्यवस्थाद्वयं **विरोधने** । अङि पर्यवस्था ॥

**परिसर्या परीसारः**

**भूमौ सर्वतो भ्रमणे** परिसर्याद्वयम् । परिचर्यावत् परिसर्या । 'उपसर्गस्य—' (६. ३. १२२) इत्यादिना दीर्घत्वे परीसारः ॥

**स्यादास्या त्वासना स्थितिः ॥ २१ ॥**

आस्यात्रयमुपवेशने । 'आस उपवेशने' । भावे ण्यत् । आस्या । 'ण्यासश्रन्थो युच्' (३. ३. १०७) । आसना । 'स्थागापापचो भावे' (३. ३. ९५) इति क्तिन् । स्थितिः ॥

**विस्तारो विग्रहो व्यासः**

विस्तारत्रयं **पटादीनां विस्तीर्णतायाम्** । 'प्रथने वावशब्दे' (३. ३. ३३) इति घञ् । विस्तारः । 'असु क्षेपणे' । घञ् । व्यासः ॥

**स तु शब्दस्य विस्तरः ।**

स च व्यासो न शब्दसम्बन्धी विस्तारः । शब्दविषये तु अशब्द इति निषेधादवेव भवति । यथा वाचां विस्तरः ॥

**स्यान्मर्दनं संवाहनं**

मर्दनद्वयं मर्दने । 'वाहृ प्रयत्ने' । भावे ल्युट् । संवाहनम् । संवहनमित्यपपाठः । वहेर्मर्दने वृत्त्यभावात् ॥

**विनाशः स्याददर्शनम् ॥ २२ ॥**

विनाशद्वयं लु(क्ता? प्ता)यने । तथाहि नश्यतिरदर्शने वर्तते । प्रयुक्तं च भट्टिना — 'ननाश शत्रुर्ददृशे सुवेलः' इति । तिरोबभूवेत्यर्थः ॥

**संस्तवः स्यात् परिचयः**

संस्तवद्वयं परिचये ॥

**प्रसरस्तु विसर्पणम् ।**

स्वल्पविटपादेर्वर्धने प्रसरद्वयम् ॥

**नीवाकस्तु प्रयामः स्यात्**

महार्घाद् धान्यादिषु जलादीनामतिशये नीवाकद्वयम् । 'वच परिभाषणे' । घञि दीर्घत्वे नीवाकः ॥

**संनिधिः संनिकर्षणम् ॥ २३ ॥**

संनिधिद्वयं संनिधौ । संनिधिर्ना ॥

**लवोऽभिलावो लवने**

लवत्रयं धान्यादीनां छेदने । 'ऋदोरप्' (३. ३. ५७) । लवः । 'निरभ्योः पूल्वोः' (३. ३. २८) इति घञि अभिलावः ॥

**निष्पावः पवने पवः।**

धान्यादीनां पूतीकरणे बहुलीकरणादौ निष्पावत्रयम्। घञ्-ल्युडपः॥

**प्रस्तावः स्यादवसरः**

प्रस्तावद्वयमवसरे। 'प्रे द्रुस्तुस्रुवः' (३. ३. २७) इति घञ्। प्रस्तावः॥

**त्रसरः सूत्रवेष्टनम्॥ २४॥**

तन्तुवायानां तसलीति ख्याते तसरद्वयम्। 'तन्यृषिभ्यां क्सरन्' (उ० ३. ७५)। एवं तसरोऽसंयोगादिरुणादावुक्तः। 'त्रसी उद्वेगे'। बाहुलकोऽरः। त्रसर इत्यन्यः॥

**प्रजनः स्यादुपसरः**

स्त्रीगवीषु पुंगवानां प्रथमगमनं प्रजनद्वयम्। भावे घञि 'जनिवध्योश्च' (७. ३. ३५) इति वृद्धिप्रतिषेधः। प्रजनः पुमान्। क्लीबं त्वपपाठः। 'प्रजने सर्तेः' (३. ३. ७१) इत्यप्। उपसरः॥

**प्रसरः प्रणयः समौ**

प्रसरद्वयं प्रश्रये॥

**धीशक्तिर्निष्क्रमः**

"शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥"

धीगुण एव धीशक्तिः, तत्र निष्क्रमः॥

**अस्त्री तु संक्रमो दुर्गसंचरः॥ २५॥**

संक्राम इति ख्याते संक्रमद्वयम्॥

**प्रत्युत्क्रमः प्रयोगार्थः**

---

१. 'ति' ज. पाठः. २. 'री' ञ. पाठः. ३. 'निषेधे प्रज' ङ. पाठः.

प्रकृष्टप्रयोगो युद्धं, तदर्थं यत् प्रत्युपक्रमणं तत् प्रत्युत्क्रमः । 'प्रत्युत्क्रमः प्रयुद्धार्थम्' इति भागुरिः ॥

**प्रक्रमः स्यादुपक्रमः ।**

प्रथमारम्भे प्रक्रमद्वयम् ॥

**स्यादभ्यादानमुद्घात आरम्भे**

आरम्भमात्रेऽभ्यादानत्रयम् । पञ्चैतारम्भमात्रे इत्यन्यः ॥

**संभ्रमस्त्वरा ॥ २६ ॥**

संभ्रमद्वयं संभ्रमे । घटादेः षित्त्वादङ् । त्वरा ॥

**प्रतिबन्धः प्रतिष्टम्भः**

कार्यप्रतीघाते प्रतिबन्धद्वयम् । 'स्तन्भेः' (८. ३. ६७) इति षत्वे प्रतिष्टम्भः ॥

**अवनायस्तु नियातनम् ।**

अधोनयेऽवनायद्वयम् । 'अवोदोर्नियः' (३. ३. २६) इति घञ् । अवनायः ॥

**उपलम्भस्त्वनुभवः**

उपलम्भद्वयमनुभवे । उपलम्भादौ 'उपसर्गात् खल्घञोः' (७. १. ६७) इति नुम् ॥

**समालम्भो विलेपनम् ॥ २७ ॥**

कुङ्कुमादिना गात्रघर्षणे समालम्भद्वयम् ॥

**विप्रलम्भो विप्रयोगः**

स्त्रीपुंसयोर्विरहे विप्रलम्भद्वयम् ॥

**विलम्भस्त्वतिसर्जनम् ।**

विलब्धौ विलम्भद्वयम् ॥

**विश्रावस्तु प्रविख्यातिः**

अतिशयितायां प्रसिद्धौ विश्रावद्वयम् । 'वौ क्षुश्रुवः' (३. ३. २५) इति घञ् । विश्रावः ॥

अवेक्षा प्रतिजागरः ॥ २८ ॥

अवेक्षाद्वयं प्रत्यवेक्षणे ॥

निपाठनिपठौ पाठे

निपाठत्रयं पठने ॥

तेमस्तेमौ समुन्दने।

तेमत्रयमार्द्रीभवने। 'तिम ष्टिम आर्द्रभावे'। घञ्। 'उन्दी क्लेदने'। ल्युट् ॥

आदीनवास्रवौ क्लेशे

आदीनवत्रयं रोगादिक्लेशे। अत्यन्तदीना दरिद्राः सन्त्यत्रेति आदीनवः। वप्रकरणे 'अन्येभ्योऽपि—' (वा० ५. २. १०९) इति मत्वर्थीयो वः॥

मेलके सङ्गसंगमौ ॥ २९ ॥

मेलकत्रयं सङ्गमे। 'मिल सङ्गे'। घञ्। स्वार्थे कः। मेलकः॥

संवीक्षणं विचयनं मार्गणं मृगणा मृगः।

अपहृतवस्तुनस्तात्पर्यान्वेषणे संवीक्षणपञ्चकम्। 'मार्ग अन्वेषणे'। मार्गणम्। 'मृग अन्वेषणे'। चुरादिरदन्तः। युचि मृगणा। ण्यन्ताद् घञि णिलोपः। मृगः॥

परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥

परिरम्भचतुष्टयमालिङ्गने। 'रभेरशब्लिटोः' (७. १. ६३) इति नुम्। परिरम्भः। 'उपसर्गात् सुनोति—' (८. ३. ६५) इत्यादिना षत्वे परिष्वङ्गः। 'गुहू संवरणे'। लघूपधगुणः। तस्य च 'ऊदुपधाया गोहः' (६. ४. ८९) इत्यूत्त्वम्। उपगूहनम्॥

निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्।

निर्वर्णनपञ्चकं दर्शने॥

प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः॥ ३१ ॥

प्रत्याख्यानचतुष्कं निराकरणे। 'असु क्षेपणे'। निरसनम्॥

**उपशायो विशायश्च पर्यायशयनार्थकौ ।**

उपशायद्वयं क्रमात् महरिकादीनां शयने । 'व्युपयोः शेतेः पर्याये' (३. ३. ३९) इति घञ् ॥

**अर्तनं च ऋतीया च हृणीया च घृणार्थके ॥ ३२ ॥**

घृणा जुगुप्सा तदर्थे अर्तनत्रयम् । ऋतिः सौत्रः । ल्युट् । अर्तनम् । 'ऋतेरीयङ्' (३. १. २९) इतीयङि ऋतीया । 'हृणीङ् लज्जायाम्' । कण्ड्वादिः । ततो यगन्तादप्रत्यये हृणीया । ऊष्मादिः ॥

**स्याद् व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।**

अन्यस्यान्यस्य रूपेण ग्रहे विपर्यासचतुष्कम् । अस्यतेर्घञ् । विपर्यासः । 'इण् गतौ' । 'एरच्' (३. ३. ५६) । विपर्ययः ॥

**पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥**

पर्ययचतुष्कं व्यतिक्रमे । पूर्वमानुपूर्(वे ? वी)प्रक्रमेणानुक्रमादय उक्ताः, इह तु व्यत्ययप्रक्रमेण पर्ययः । 'परावनुपात्यय—' (३. ३. ३८) इत्यनुक्रमे घञ् । इह तु 'एरच्' (३. ३. ५६) । पर्ययः ॥

**प्रेषणं यत् समाहूय तत्र स्यात् प्रतिशासनम् ।**

(भर्तारान्विता? भृत्यादीनां) यत् प्रेषणं, तत् प्रतिशासनम् ॥

**संस्तावस्तु क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥**

यज्ञे स्तुतिं कुर्वतां ब्राह्मणानामवस्थानभूमौ संस्तावः । 'यज्ञे समि स्तुवः' (३. ३. ३१) इति घञ् ॥

**निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।**

काष्ठतक्षणार्थमधःस्थापितकाष्ठे उद्घनः । 'उद्घनोऽत्याधानम्' (३. ३. ८०) इति निपातितः । हन्तेरप्, हकारस्य च घकारः ॥

**स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥**

---

१. 'पूर्वक' छ. पाठः. २. 'का' ट., 'कार पित्वा य' ञ., 'कारं बित्वा य' ध. पाठः.

**तृणादिगुच्छोन्मूलनकारिणि खनित्रादौ** स्तम्बघ्नद्वयम् । 'स्तम्बे क च' (३. ३. ८३) इति कापौ प्रत्ययौ घत्वं च ॥

**आविधो विध्यते येन तत्र**

**येन** भ्रमरादिना **विध्यते, तत्र** आविधः। 'घञर्थे कविधानम्' (वा० ३. ३. ५८) इति कः ॥

**विष्वक्समे निघः।**

विष्वक्समे **समन्तात् समारोहपरिणाहे वृक्षादौ** निघः । 'निघो निमितम्' (३. ३. ८७) इति निपातितः । हन्तेरप्, टिलोपः, घत्वं च ॥

**उत्कारश्च निकारश्च द्वौ धान्यक्षेपणार्थकौ ॥ ३६ ॥**

**धान्यस्योर्ध्वप्रेरणे** उत्कारद्वयम्। 'कॄ धान्ये' (३. ३. ३०) इति घञ्॥

**निगारोद्गारविक्षावोद्ग्राहा निगरणादिषु।**

निगारचतुष्टयं यथाक्रमं **निगरणोद्गारणक्षवणोद्ग्रहणेषु** । एतच्च आदिशब्देन गृह्यते। तत्र निगारोऽभ्यवहारः। उद्गार उद्गार इति ख्यातः। क्षवः कासः । उद्ग्राह उद्ग्राहणीति ख्यातः । ऊर्ध्वीकृत्यापि ग्रहण-मित्यन्यः। 'उन्न्योर्ग्रः' (३. ३. २९) इति घञि निगारोद्गारौ। 'वौ क्षुश्रुवः' (३. ३. २५) इति घञि विक्षावः। 'उदि ग्रहः' (३. ३. ३५) इति घञि उद्ग्राहः। यद्यपि गीर्णिर्गिरावित्युक्तः, तथापि शब्दान्यत्वादुद्गारशब्दप्रसङ्गाच्च निगारोऽपि निग(र इति ? रण इव) पुनरुच्यते ॥

**आरत्यवरतिविरतय उपरामे**

**अथार्थाद्द्वयम्**। आरतिचतुष्टयमुपरतौ । आङादिपूर्वाद् रमेः क्तिनि त्रयम् । 'यमु उपरमे' इति निपातनाद् घञि अवृद्धौ उपरमः। 'अबाधकान्यपि निपातनानी'ति उपरामः॥

**घा क्रिया तु निष्ठेवः ॥ ३७॥**

**निष्ठ्यूतिर्निष्ठीवनं निष्ठेवनमित्यभिन्नानि ।**

मुखादिना श्लेष्मादिनिःसरणे निष्ठेवचतुष्कम् । 'वा स्त्रियाम्' इति पाठात् स्त्रियामङि निष्ठेवा । अथवा 'उपरामे च' इति पाठे चकारादारक्तावप्यारतिशब्दः । अवरतिविरतिशब्दौ विरामेऽपि ॥

**जवने जूतिः**

जवनद्वयं वेगे । जुः सौत्रो वेगे । 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' (३. ३. ९७) इति निपातनात् क्तिनि दीर्घः ॥

**सातिस्त्ववसानं स्याद्**

सातिद्वयमवसाने । क्रियासमाप्तावित्यन्यः । जूतिवत् स्यतेः सातिः ॥

**अथ ज्वरे जूर्तिः ॥ ३८ ॥**

ज्वरद्वयं ज्वरणे । ज्वररोगे इति यावत् । ज्वरयतेर्घञ् । ज्वरः । घटादित्वान्न वृद्धिः । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (६. ४. २०) इत्यूठि जूर्तिः ॥

**उदजस्तु पशुप्रेरणम्**

गवादिपशूनां प्रेरणे उदजद्वयम् । 'समुदोरजः पशुषु' (३. ३. ६९) इत्यप् । उदजः ॥

**अकरणिरित्यादयः शापे ।**

शापे आक्रोशे, क्रियाक्षेपे इति यावत् । अकरणिः, अजननिरित्यादयोऽनिप्रत्ययान्ताः शब्दा बोद्धव्याः । आदिना 'आक्रोशेऽवन्योर्ग्रहः' (३. ३. ४५) इति घञन्तश्च । 'आक्रोशे नञ्यनिः' (३. ३. ११२) । अकरणिः । यथा—'अकरणिस्ते वृषल ! भूयात्' ।

"तस्याजननिरेवास्तु जननीक्लेशकारिणः" (माघ० स० २. श्लो० ४५) इति । 'अवग्राहोऽद्य ते वृषल ! भूयाद्' इति । 'निग्राहोऽद्य वृषल ! भूयाद्' इति ॥

**गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ॥ ३९ ॥**

गोत्रप्रत्ययान्तेभ्य औपगवादिभ्यस्तस्य बृन्दमित्यर्थे 'गोत्रोक्षोष्ट्रोरभ्र—' (४.२.३९)इत्यादिना वुञि कृते औपगवकम्। आदिना कापटवकमित्यादि विज्ञेयम्। बृन्दम् इत्ययमधिकारो वर्गसमाप्तिर्यावत्॥

**आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम्।**

अचेतसाम् अप्राणिनाम्। अपूपानां बृन्दम् आपूपिकम्। शाष्कुलिकम्। आदिना आपौपिकप्रभृतयः। 'अचित्तहस्तिधेनोष्ठक्' (४.२.४७)॥

**माणवाना तु माणव्य**

माणवा बालाः, तेषां समूहो माणव्यम्। 'ब्राह्मणमाणवबाडवाद् यत्' (४.२.४२)॥

**सहायानां सहायता॥४०॥**

**सहायानां समूहे** सहायता। 'ग्रामजनबन्धुसहायेभ्यस्तल्' (४.२.४३)॥

**हल्या हलानां**

**हलानां समूहे** हल्या। 'पाशादिभ्यो यः' (४.२.४९)॥

**ब्राह्मण्यबाडव्ये तु द्विजन्मनाम्।**

**ब्राह्मणानां समूहे** ब्राह्मण्यद्वयम्। माणव्यवद् यत्॥

**द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमिति क्रमात्॥४१॥**

पर्शुकानां पार्श्वास्थिखण्डानां समूहः पार्श्वम्। *'पर्शोर्णस् वक्तव्यः' (वा० ४.२.४३) इति णस्प्रत्ययः। 'सिति च' (१.४.१६) इति पदसंज्ञायाम् 'ओर्गुणः' (६.४.१४६) इति न गुणः। पृष्ठानां स्तोत्राणां बृन्दं पृष्ठ्यम्। न त्वधमावयववचनः। 'पृष्ठादुपसङ्ख्यानम्' (वा० ४.२.४२) इति यत्॥

* 'पर्श्वा णस्' इति मुद्रितवार्तिकपाठः

**खलानां खलिनी खल्यापि**

खलो धान्यसंचयस्थानम् । **तेषां समूहे** खलिनीद्वयम् । '**इनित्रकट्यचश्च**' (४. २. ५१) इतीनिः । खलिनी । यति खल्या ॥

**अथ मानुष्यकं नृणाम् ।**

**नृणां समूहे** मानुष्यकम् । 'गोत्रोक्षोष्ट्र—' (४. २. ३९) इत्यादिना वुञ् ॥

**ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ॥ ४२ ॥**
**अपि साहस्रकारीषवार्मणाथर्वणादिकम् ।**

**ग्रामादिसमूहे** यथाक्रमं ग्रामतादिपञ्चकम् । सहायतावत् तलि द्वयम् । अपरं पाशादियदन्तम् । पाशादिषु पोटगलेति पठ्यते । तत्र पोटशब्दात् पृथगेव गलशब्द इति प्रतिपन्ने गल्येत्युदाहृतम् । अन्ये त्वाहुः— एक एवायं पोटगलशब्दः । तत्र पोटगल्येति रूपं साधु, न तु गल्येति । ततश्च पोटगल्येत्यत्र बोद्धव्यम् । तथाहि तत्र पाल्यकीर्तेर्विवरणं पोटगलो बृहत्काशः । पृथगित्यनेन ग्रामतादीनां पर्यायतां निरस्यति । पृथक् पृथगिति सम्बन्धप्रतिपादनार्थमपिशब्दः । सहस्राणां समूहः साहस्रम् । करीषः शुष्कगोमयः, तत्समूहे कारीषम् । वर्म कवचं, तत्समूहे वार्मणम् । भिक्षादिपाठादण् । 'आथर्वणिकस्येकलोपश्च' (४. ३. १३३) इति अणि इकलोपे आथर्वणम् । आदिना अङ्गाराणां समूह आङ्गारम् । चर्मणां समूहे चार्मणम् ॥

इति बन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे

सङ्कीर्णवर्गः ।

---

**नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।**
**भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥**

ननु य एव पूर्ववर्गेणोक्ताः, त एवात्रापि कान्तादिवर्गेऽभिहिताः । अथावश्यमनेकार्थवर्गारम्भः कार्यः, तदा ते किमिति पर्यायेषूक्ता इति

शङ्कायामाह — **नानार्था** इत्यादि । अत्रैव कान्तखान्तादिवर्गे **नानार्था** अनेकार्थाः शब्दा उक्ताः, न पूर्वपर्यायवर्गे । यथा—

"मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः"

इति । केऽपीति वचनात् केऽप्यत्र नोक्ता एव । यथा घोण्टा सृगालकोलौ, पूगे च पूर्ववर्ग एवोक्ताः । ये तु शब्दा येष्वर्थेषु भूरिप्रयोगाः काव्यादिषु दृष्टाः, ते तु पर्यायेष्वपि तेषु तेष्वर्थेषूक्ताः । अत्रापि यथा — नाकशब्दः स्वर्गे, अत्राप्याकाशे कीर्तितः । कीर्तनं चाध्येतुः स्मरणार्थम् । अतः सर्वं सुस्थम् ॥

**आकाशे त्रिदिवे नाकः**

त्रिदिवे स्वर्गे ॥

**लोकस्तु भुवने जने ।**

भुवनं स्वर्गादि । जनो मनुष्यादिः ॥

**पद्ये यशसि च श्लोकः**

पद्यं चतुष्पदी । 'श्लोकृ सङ्घाते' । घञि श्लोकः ॥

**शरे खड्गे च सायकः ॥ २ ॥**

सायको दन्त्यादिः ॥

**जम्बुकौ क्रोष्टुवरुणौ**

वरुणो दिक्पतिः ॥

**पृथुकौ चिपिटार्भकौ ।**

चिपिटः 'चिडउ' इति ख्यातः ॥

**आलोकौ दर्शनोद्द्योतौ**

चक्षुर्विज्ञानं दर्शनम्, उद्द्योत आतपः ॥

**भेरीपटहमानकौ ॥ ३ ॥**

१. 'तु तेषु तेष्वर्थेषु पर्यायवर्गेषू' क. ख. घ. ङ. छ. ट. पाठः. २. 'तः सम्यगध्ये' ठ. पाठः.

'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (२. ४. २) इत्येकवद्भावे भेरीपटहम् ॥

**उत्सङ्गचिह्नयोरङ्कः**

उत्सङ्गः क्रोडम् ॥

**कलङ्कोऽङ्कापवादयोः ।**

अङ्कश्चिह्नम् ॥

**तक्षको नागवर्धक्योः**

नागो नागविशेषः ॥

**अर्कः स्फटिकसूर्ययोः ॥ ४ ॥**

अर्को वृक्षभेदोऽपि ॥

**मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः ।**

पुंसि आत्मनीत्यर्थः । तथाच रभसः—'प्रजापत्यात्मवातार्के कः' इत्यादि । रूपभेदादेव शिरोम्बुनोः कं क्लीबम् ॥

**स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥**

तुच्छधान्ये वातानेति ख्याते । संक्षेपे क्षुद्रे । तथाच बुद्धचरितं—
"निबोध किञ्चित्तु पुलाकमात्रं वाक्यं मुनेर्वाक्यविदां वरस्य"

इति । भक्तसिक्थके भक्तगुडके[१] । 'पुल महत्त्वे' । 'पिनाकादयश्च' (उ० ४. १५) इति आकः । पुलाकः ॥

**उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।**

पुच्छमूलोपान्ते गुदस्याच्छादके मांसपिण्डे ॥

**कमण्डलौ च करकः**

वनौषधौ 'करकदाडिमौ' इत्युक्तम् । तदपेक्षया कमण्डलौ चेति समुच्चयः ॥

---

१. 'के । भक्तजाड्ड' केचित् । पु' क. ख. ग. घ. ङ. च. छ. ज. ट. पाठः.

सुगते च विनायकः ॥ ६ ॥

चकाराद् गणपतौ च ॥

किष्कुर्हस्ते वितस्तौ च

"किष्कुर्हस्ते वितस्तौ च प्रकोष्ठेऽप्यनपुंसकम्"

इति रुद्रः ॥

शूककीटे च वृश्चिकः।

चकाराद् गोमये वृश्चिके च वृश्चिकः ॥

प्रतिकूले प्रतीकस्त्रिष्वेकदेशे च पुंस्ययम् ॥ ७ ॥

प्रतिकूले प्रतीपे त्रिषु। एकदेशे अवयवे नरि ॥

स्याद् भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च।

भूनिम्बः चिराइतेति ख्यातः। कत्तृणे रामकर्पूराख्ये। भूस्तृणे गन्धरवेड इति ख्याते ॥

ज्योत्स्निकायां च घोषे च कोशातकी

ज्योत्स्निका पाजिरालीति ख्याते। घोषको लताविशेषः ॥

अथ कट्फले ॥ ८ ॥

सिते च खदिरे सोमवल्कः स्याद्

सित इति खदिरविशेषणम् ॥

अथ सिह्लके।

तिलकल्के च पिण्याकः

तिलकल्का तिलखलिः ॥

बाह्लीकं रामठेऽपि च ॥ ९ ॥

'बाह्लीकं धीरहिङ्गुवोर्नाधदेशयोः'। धीरं कुङ्कुमम् ॥

**महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः ।**

महेन्द्रः ॥

**रुक्तापशङ्कास्वातङ्कः**

रुग् रोगः । शङ्का भयम् ॥

**स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ १० ॥**

स्वल्पे कनिष्ठे । स्तोके चेत्यन्यः । अपिना नीचेऽपि ॥

**जैवातृकः शशाङ्केऽपि**

दीर्घायुषि च जैवातृकः ॥

**खुरेऽप्यश्वस्य वर्तकः ।**

"पक्षिभेदे नरि क्लीबं खुरेऽप्यश्वस्य वर्तकः" ॥

**व्याघ्रेऽपि पुण्डरीको ना**

"पुण्डरीकं सितच्छत्रे सिताम्भोजेऽपि कीर्तितम् ।
पुण्डरीको व्याघ्रभेदे दिग्गजक्षुप्रभेदयोः ॥"

इत्यजयः ॥

**यवान्यामपि दीप्यकः ॥ ११ ॥**

जीरकेऽपि दीप्यकः ॥

**शालावृकाः कपिक्रोष्टुश्वानः**

शालावृकस्तालव्यादिः ॥

**स्वर्णेऽपि गैरिकम् ।**

शिलाविकारे च गैरिकम् ॥

**पीडार्थेऽपि व्यलीकं स्याद्**

अप्रियकार्यवैलक्ष्येष्वपि व्यलीकम् । दीर्घमध्यम् ॥

**अलीकं त्वप्रियेऽनृते ॥ १२ ॥**

दीर्घमध्यमलीकम् ॥

**शीलान्वयावनूके द्वे**

शीलं स्वभावः । अन्वयो वंशः ॥

**शल्कं शकलवल्कले ।**

तालव्यादि शकलं खण्डवाचि । 'शल्कं तु वल्कले खण्डे' इत्यजयः । 'शशाङ्कशल्काकृतिपाण्डरेण' (स० १७. श्लो० ९१) इति भारविप्रयोगः । अथवा शकलं मत्स्यानां कवचप्राया त्वक्, तद्योगात् शकली मत्स्यः । वल्कलं वृक्षादित्वक् ॥

**साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥**
**दीनारेऽपि च निष्कोऽस्त्री**

सहाष्टभिर्वर्तत इति साष्टम् । साष्टं च तत् शतं चेति साष्टशतम् अष्टोत्तरशतम् । हेम्नीति स्वर्णमात्रे । उरोभूषणे मुखखण्डाख्ये । पले इति हेमपले । दीनारे देशान्तरे स्वनामप्रसिद्धे ॥

**कल्कोऽस्त्री समलैनसोः ।**
**दम्भेऽपि**

समलः पापाशयः ।

"त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टभदम्भयोः"

इति रुद्रः ॥

**अथ पिनाकोऽस्त्री शूलशङ्करधन्वनोः ॥ १४ ॥**

शूलोऽस्त्रभेदः ॥

**धेनुका तु करेण्वां च**

करेणुः हस्तिनी । नवप्रसूतगवीषु च धेनुका ॥

**मेघजाले च कालिका ।**

मेघजाले मेघवृन्दे ।

"धूमरीयोगिनीभेदे मानवाब्देषु कालिका ।
क्रय्यदेये वस्तुमूल्ये काष्ण्यें काल्यां घनावलौ ॥"

इति रभसः । धूमरीह हेतिका । काल्याः कृष्णत्वम् ॥

**कारिका यातनावृत्त्योः**

यातना तीव्रवेदना । वृत्तिः सूत्रप्रायो बह्वर्थः प्रक्षिप्तो विवरश्लोकः ॥

**कर्णिका कर्णभूषणे ॥ १५ ॥**
**करिहस्ताङ्गुलौ पद्मबीजकोश्यां**

कर्णभूषणं तालपत्रम् ॥

**त्रिषूत्तरे ।**

उत्तरे वृन्दारकादयः कान्तवर्गोक्तास्त्रिपु । अवधेरनिर्देशेऽपि कान्तविजातीयतया न मयूखादयः ॥

**वृन्दारकौ रूपिमुख्यौ**

रूपिस्वरूपिमनोज्ञा इति पर्यायः । मुख्यो वृन्दारकः । पुरुषवृन्दारको योषिद्वृन्दारिका कलत्रवृन्दारकम् ॥

**एके मुख्यान्यकेवलाः ॥ १६ ॥**

प्रधानान्यैकाकिनाम् एकशब्दः । मुख्ये यथा— 'सर्वसार्थैकबन्धुः' । अन्यार्थे यथा—'एके आचार्याः' । केवलार्थे यथा— एकाकिभिः वम्' ॥

**स्याद् दाम्भिके कौक्कुटिको यश्चादूरेरितेक्षणः ।**

---

१ 'ष' क. ट. 'ख्य' वा पाठः

कुहनावृत्तिर्दाम्भिकः । पादविक्षेपदेशे चक्षुः संयम्य यो भिक्षुर्गन्ता सोऽदूरेक्षणो भिक्षुः । तौ कौक्कुटिकाख्यौ ।

"मिथ्याचर्या कुक्कुटिरीर्यापथकल्पना कुहना"

इति रत्नकोषः । 'संज्ञायां ललाटकुक्कुट्यौ पश्यति' (४. ४. ४६) इति ठक् ॥

**लालाटिकः प्रभोः फालदर्शी कार्याक्षमश्च यः ॥ १७ ॥**

यः सेवकः कोपचिह्नसंलक्षणाय प्रभोर्ललाटमेव पश्यति, स्वामिकार्ये च यो नोपयुज्यते, तौ लालाटिकौ । कौक्कुटिकवट्ठक् ॥

कान्तः ।

**मयूखस्त्विट्करज्वालासु**

त्विड् दीप्तिः । करः किरणः ॥

**अलिबाणौ शिलीमुखौ ।**

अलिः भ्रमरः ॥

**शङ्खो निधौ ललाटास्थि कम्बौ न स्त्री**

निधौ निधिभेदे ललाटास्थि च । न स्त्री पुंनपुंसकम् ॥

**इन्द्रियेऽपि खम् ।**

"खशब्दः शून्यबिन्दौ च स्वर्गाकाशेन्द्रियेषु च"

इति व्याडिः ॥

**घृणिज्वाले अपि शिखे**

शिखा चूडादावपि ॥

खान्तः ।

**शैलवृक्षौ नगावगौ ।**

नगशब्देन अगशब्देन च शैलवृक्षावुच्येते ॥

**आशुगौ वायुविशिखौ**

विशिखो बाणः ॥

**शरार्कविहगाः खगाः ॥ १९ ॥**

अर्को रविः ॥

**पतङ्गौ पक्षिसूर्यौ च**

शालिभेदे शलभे च पतङ्गः ॥

**पूगः क्रमुकवृन्दयोः ।**

क्रमुको गुवाकवृक्षः । एतत्फले तु क्लीबम् ॥

**पशवोऽपि मृगाः**

हरिणाः सर्वपशवश्च मृगाः ॥

**वेगः प्रवाहजवयोरपि ॥ २० ॥**

विष्ठादेर्बहिर्निर्गमे प्रवाहः । किम्पाकवृक्षेऽपि महाकालाख्ये वेगः ॥

**सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।**

स्वभावः प्रकृतिः । निर्मोक्षस्त्यागः । निश्चये यथा— 'गृहाण शस्त्रं यदि सर्ग एष ते' । अध्याये काव्यपरिच्छेदे । सृष्टिर्निर्माणम् ॥

**योगः सन्नहनोपायध्यानसंगतियुक्तिषु ॥ २१ ॥**

सन्नहनं कवचम् । उपायः सामभेदादिः । सङ्गतिः सङ्गमः ॥

**भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।**

स्त्र्यादीत्यादिशब्देन हस्त्यादीनामपि भृतौ ॥

**चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ २२ ॥**

शबले कर्बुरे । पक्षिवाची सारङ्गो दन्त्यादिः । हरिणे तु तालव्यादिरपि ॥

**कपौ च प्लवगः**

भेकेऽपि प्लव(मातङ्ग:?ग:) ॥

**शापे त्वभिषङ्गः पराभवे।**

मिथ्याभिशंसनं शापः।

"आक्रोशे शपथेऽपि स्यादभिषङ्गः पराभवे"

इति रुद्रः ॥

**यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ २३ ॥**

यानं रथः। आदिना शकटलाङ्गलादेः। कृतादिषु कृतत्रेताद्वापरकलिषु ॥

**स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले।**
**लक्ष्यदृष्टया स्त्रियां पुंसि गौः**

लक्ष्यदृष्ट्या प्रयोगदर्शनात् स्त्रियां पुंसि च गोशब्द उन्नेयः।

"स्वर्गे वज्रे च रश्मौ च बलीवर्दे च गौः पुमान्।
स्त्री बाणरोहिणीदृग्वाग्भूष्वप्सु च ककुप्सु च ॥"

इति त्रिकाण्डशेषः ॥

**लिङ्गं चिह्नशेफसोः ॥ २४ ॥**

चिह्नं लक्षणम् ॥

**शृङ्गं प्राधान्यसान्वोश्च**

प्राधान्यं[1] प्रमुखम्। चकारात् पश्ववयवादौ च ॥

**वराङ्गं मूर्धगुह्ययोः।**

"गुडत्वचि वराङ्गं स्याद् योनिमस्तकहस्तिषु।"

इति रभसः ॥

१. 'प्सु भूम्नि च ॥' क. ख. ङ. च. छ. ञ. ट. ठ., 'प्सु च. भूम्नि व' च. पाठः.

**भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिषु ॥ २५ ॥**

काम इच्छा । यत्नो हितैषिता, यद्योगाद् भगिनीति प्रयोगः ।

"ज्ञानवैराग्ययोर्योनौ भगमक्षी तु भास्करे"

इति रुद्रः ॥

गान्तः ।

---

**परिघः परिघातेऽस्त्रेऽपि**

परिघातो हननम् । अस्त्रे अस्त्रविशेषे । लोहबद्धलगुडे अर्गलेऽपि परिघः ॥

**ओघो वृन्देऽम्भसां रये ।**

द्रुतनृत्येऽपि ओघः ॥

**मूल्ये पूजाविधावर्घः**

मूल्ये यथा — महार्घः पटः ॥

**अंहोदुःखव्यसनेष्वघम् ॥ २६ ॥**

व्यसनं रागद्वेषादि अघम् ॥

**त्रिष्विष्टेऽल्पे लघुः**

त्रिषु इष्टे रुच्ये ।

"कृष्णागुरुणि शीघ्रे च लघु क्लीबेऽगुरौ त्रिषु ।
निःसारे च मनोज्ञे च पृक्कायां च लघुः स्त्रियाम् ॥"

इति रभसः ॥

घान्तः ।

---

**काचाः शिक्यमृद्भेददृग्रुजः ।**

शिक्यमुत्क्षेपणद्रव्यम् । मृद्भेदः काच इत्येवाख्यातः । दृग्रोगः पटलप्रायः ॥

**विपर्यासे विस्तरे च प्रपञ्चः**

विपर्यासे वैपरीत्ये ॥

**पावके शुचिः ॥ २७ ॥**

**मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु।**

मासि आषाढे। धर्माद्यैः परीक्षणमुपधा, तामतिक्रान्ते अमात्ये सचिवे, उपधाशुद्ध इत्यर्थः। मेध्ये पवित्रे ॥

**अभिषङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥ २८ ॥**

अभिषङ्गे अत्यासक्तौ। स्पृहायां यथा — अन्ने रुचिः ॥

चान्तः।

**केकिताक्ष्यावहिभुजौ**

अहीन् भुङ्क्ते इति क्विप्। अहिभुक्। जान्तः ॥

**दन्तविप्राण्डजा द्विजाः।**

विप्र इत्युपलक्षणम्। क्षत्रियवैश्ययोरपि द्विजः ॥

**अजा विष्णुहरच्छागाः**

"द्वयोश्छागे हरब्रह्मविश्वस्मरहरिष्वजः"

इति रभसः ॥

**गोष्ठाध्वनिवहा व्रजाः ॥ २९ ॥**

निवहः सङ्घः ॥

**धर्मराजौ जिनयमौ**

जिनो बुद्धः ॥

**कुञ्जो दन्तेऽपि न स्त्रियाम्।**

लतापिहितोदरेऽपि कुञ्जः ॥

**वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥ ३० ॥**

क्षेत्रे नगरद्वारे च वलजं क्लीबम्। † (वल्गुदर्शना वाकुस्त्रीति ?)। तत्र ‡ रूपभेदात् स्त्रियाम् ॥

**समे क्ष्मांशे रणेऽप्याजिः**

समे क्ष्मांशे समे भूभाग इति यावत् ॥

**प्रजा स्यात् सन्ततौ जने ।**

सन्ततिरपत्यम् ॥

**अब्जौ शङ्खशशाङ्कौ च**

धन्वन्तरौ चाब्जः ॥

**स्वके नित्ये निजं त्रिषु ॥ ३१ ॥**

'स एषां ग्रामणीः' (५. २. ७८) इति कन्। स्वक आत्मीयः ॥

जान्तः ।

---

**पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः ।**

प्रवीणो निपुणः ॥

**संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना ॥ ३२ ॥**

चेतना धीः। नाम आख्या। हस्ताद्यैरर्थसूचनेति। युद्धे वस्त्रक्रियादौ (?) च हस्तादिव्यवहार उपांशु क्रियते, सापि संज्ञा। आदिना भ्रूलोचनादिग्रहणम्। सूर्यपत्नी च संज्ञा ॥

ञान्तः ।

**काकेभगण्डौ करटौ**

कटैकादशाहश्राद्धयोरपि करटः ॥

**गजगण्डकटी कटौ ।**

शवेऽपि कटोऽकारान्तः ॥

---

१. 'न्ती' ख. ठ., 'स्ता' ङ., 'स्मितं त' घ. पाठः. २. 'यः सोऽपि'. क ख. पाठः.

---

† 'क्लीबमि'त्येतदनन्तरं 'तत्र' इत्यतः पूर्वं 'वा तु स्त्रीति । वल्गुदर्शना' इति पठनीयम्। ‡ तत्र वल्गुदर्शनायां रूपभेदाद् 'वलजा' इति रूपस्य पुन्नपुंसकव्यावृत्तत्वादित्यर्थः। क्षेत्रपुरद्वारयोस्तु 'वलजे' इति निर्दिष्टरूपस्य स्त्रीक्लीबसाधारणत्वमुभयलिङ्गत्वगमकमित्यभिप्रायः।

**शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३३ ॥**

खिलिन (?) इत्युणादिः। इकारान्तस्त्वत्र पाठः। (खलति खल्वितः ?) निष्कुषितमेढ्मलो दुश्चर्मा। शिपिविष्टस्तालव्यादिः॥

**देवशिल्पिन्यपि त्वष्टा**

देवशिल्पी विश्वकर्मा। वर्धकौ च त्वष्टा॥

**दिष्टं दैवेऽपि न द्वयोः।**

दिष्टं प्राक्तनं कर्म। कालेऽपि दिष्टो ना॥

**रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३४ ॥**

रसे पिप्पल्यादिरसे। अकार्ये अकरणार्हे रूपभेदात् कटु क्लीबम्॥

**रिष्टं क्षेमाशुभाभावेषु**

क्षेमं कल्याणम्। अशुभं पापम्। अभावो विनाशः। खड्गेऽपि रिष्टो ना॥

**अरिष्टे तु शुभाशुभे।**

"क्लीबं शुभे(ऽशुभे) तक्रे सूत्यगारान्तचिह्नयोः।
अरिष्टो लशुने काके निम्बफेनिलवृक्षयोः॥"

इति रभसः॥

**मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३५ ॥**
**अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्।**

मायेन्द्रजालादि। निश्चलमाकाशादि। यन्त्रं यन्त्रविशेषः, येन मृगो बध्यते। राशिः पुञ्जः। अयो लोहं येन हन्यते, सोऽयोघनः हाथइडेति ख्यातः। सीराङ्गं फालः॥

**सूक्ष्मैलायां त्रुटिः स्त्री स्यात् कालेऽल्पे संशयेऽपि सा॥**

कालेऽत्यन्तसूक्ष्मकाले॥

---

१. 'तु' च. पाठः.

**अत्युत्कर्षाश्रयः कोट्यो मूले लम्बकचे जटा ।**

लम्बकचे जटा मांस्यां च ॥

**व्युष्टिः फले समृद्धौ च**

फले हेतुकृते, न तु सस्ये । 'नियमादिफले व्युष्टिः समृद्धौ च स्त्रि-याम्' इति हि रभसः ।

> "तस्यैव तपसो व्युष्ट्यां प्रसादाच्च स्वयम्भुवः ।
> नासुरेभ्यो न देवेभ्यो (हं ? भयं मम कदाचन) ॥"

इति प्रयोगोऽपि ॥

**दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥ ३७ ॥**

दर्शनं वीक्षणम् । (सिद्धान्तः निश्चयः ?) ॥

**इष्टिर्यागेच्छयोः**

बाहुलकात् क्तिनि इष्टिः ॥

**सृष्टं निश्चिते बहुनि त्रिषु ।**

बहुनि प्रचुरे ॥

**कष्टे तु कृच्छ्रगहने**

दुरधिगमान्तःपातं गहनम् ॥

**दक्षामन्दागदेषु तु ॥ ३८ ॥**
**पटुर्द्वौ वाच्यलिङ्गौ च**

दक्षोऽनलसः । अमन्दस्तीक्ष्णः । अगदो नीरुक् । द्वौ कष्टपटू वा-च्यलिङ्गौ ॥

टान्तः ।

---

**नीलकण्ठः शिवेऽपि च ।**

दात्यूहग्रामचटकखञ्जरीटमयूरेष्वपि नीलकण्ठः ॥

**पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥ ३९ ॥**

---

1. 'इष्यामिति प्रयोगः । दर्शनं' ख. पाठः.

अन्तर्जठरमुदरमध्यम् । कुसूलो मरावः । 'कुस संश्लेषणे' । 'कुसेः कूल—' इत्यादिना ऊलः । कुसूलः । एवं दन्त्यसः । गृहस्यान्तरमन्तर्गृहम् ॥

**निष्ठा निष्पत्तिनाशान्ताः**

नाशोऽदर्शनम् । अन्तो विनाशः ॥

**काष्ठोत्कर्षे स्थितौ दिशि ।**

स्थितिर्मर्यादा ॥

**त्रिषु ज्येष्ठोऽतिशस्तेऽपि**

अतिशस्तेऽतिशयप्रशस्ते । अपिनाग्रजातिवृद्धयोश्च । वृद्धप्रशस्ययोरिष्ठनि 'वृद्धस्य च', 'ज्य च' (५. ३. ६२. ६१) इति ज्यादेशः ॥

**कनिष्ठोऽतियुवाल्पयोः ॥ ४० ॥**

अतियूनि अत्यल्पे च कनिष्ठः । 'युवाल्पयोः कनन्यतरस्याम्' (५. ३. ६४) इति कनादेशः ॥

ठान्तः ।

---

**दण्डोऽस्त्री लगुडेऽपि स्याद्**

"दण्डो यमे मानभेदे चण्डांशोः पारिपार्श्विके ।
दण्डो लगुडमन्थानदमसैन्येषु वाजिनि ॥"

इति धरणिः ॥

**गुडो गोलेक्षुपाकयोः ।**

गोलो मृत्तिकादिगुडकः । इक्षुपाको गुडाख्य एव ॥

**सर्पमांसात्पशू[1] व्याडौ**

मांसात्पशुर्व्याघ्रादिः ॥

---

१. 'हिंस्रपशू' ग. पाठः.

**भूगोवाचस्त्विडा इलाः ॥४१॥**

गौः स्त्रीगवम् । संक्षेपार्थं डान्तवर्गे एवोक्ता[1] ॥

**क्ष्वेडा वंशशलाकापि**

सिंहनादे क्ष्वेडा । 'ना तु ध्वनौ विषे' इति रुद्रः ॥

**नाडी कालेऽपि षट्क्षणे ।**

षट्क्षणात्मके काल इत्यर्थः । सिरायां शाकादिनाले च नाडी ॥

**काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥ ४२ ॥**

दण्डे यथा — कदलीकाण्डः । अर्वा कुत्सितः । वर्गे यथा — त्रिकाण्डोऽमरकोषः । अवसरो निर्व्यापारस्थितिः । क्षण इति यावत् । वारिणि यथा — 'शरत्काण्डसमद्युतिः' ॥

**स्याद् भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।**

सुवर्णादिकृतमश्वाभरणसामान्यं भाण्डम् । अमत्रं पात्रम् । वणिजां मूलधनं भाण्डमित्येव ख्यातम् ॥

डान्तः ।

---

**भृशप्रतिज्ञयोर्बाढं**

प्रतिज्ञा अभ्युपगमः ॥

**प्रगाढं भृशकृच्छ्रयोः ॥ ४३ ॥**

कृच्छ्रं गहनम् ॥

---

1. 'क्ता । एवं शशशल्यसि' ग. पाठः.

**शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ।**

संहते यथा—व्यूढोरस्कः॥

ढान्तः।

---

**भ्रूणोऽर्भके स्त्रैणगर्भे**

अर्भको बालः। स्त्रिया अपत्यं स्त्रैणः, स्त्रैणश्चासौ गर्भश्चेति कर्मधारयः॥

**बाणो बलिसुते शरे॥ ४४॥**

बलिसुतो बाणासुरः। झिण्ट्यां तु बाणा द्वयोः॥

**कणोऽतिसूक्ष्मे धान्यांशे**

अतिसूक्ष्मे अत्यल्पे। पृथगेवेदं नाम। धान्यांशः कण इत्येव ख्यातः॥

**संघाते प्रमथे गणः।**

संघाते बृन्दे। प्रमथाः रुद्रानुचराः॥

**पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च॥ ४५॥**

द्यूतादिषूत्सृष्टे अङ्क इति ख्याते। आदिना मेषकुक्कुटादौ धनोत्सृष्टे, तत्राप्यङ्कः क्रियते। भृतौ वेतने। धने अर्थे॥

**मौर्व्यां द्रव्याश्रये सत्त्वशुक्लसन्ध्यादिके गुणः।**

'द्रव्यं भव्ये गुणाश्रये' इति वक्ष्यति। तत्र भव्योऽभिप्रेतानां पात्रम्। गुणाश्रयस्तु पृथिव्यादिः। (त?अ)त्रोभयोर्ग्रहणम्। तेन भव्याश्रिते त्यागशौर्यादिके पृथिव्या(द्या)श्रिते च रूपरसादिके गुणः। आदिशब्दस्य सत्त्वादिभिः प्रत्येकमभिसम्बन्धः। सत्त्वादीनि सत्त्वरजस्तमांसि। शुक्लादिः शुक्लकृष्णलोहितादिः। सन्ध्यादिः सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षट्॥

**निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः॥ ४६॥**

'क्षणो व्यापारशून्यत्वे' इति रुद्रः। कालविशेषो मुहूर्तस्य द्वादशो भागः ॥

**वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे।**

आदिना क्षत्रविट्शूद्रा नीललोहितादयश्च। अक्षरे वा क्लीबं, पक्षे पुमान् ॥

**ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥ ४७ ॥**

श्रेष्ठं प्रधानम्। अधिपः पतिः ॥

**ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ।**

आदिना शशकोष्ट्रप्रभृतीनां ग्रहणम्। भ्रूमध्यलोमावर्तविशेषेऽपि च ऊर्णा। एतच्च महापुरुषलक्षणम्। 'अन्तरान्तरेण युक्ते' (२. ३. ४) इत्यनेन भ्रुवौ इत्यत्र द्वितीया ॥

**हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ ४८ ॥**

सुवर्णस्य प्रतिमा। या हरितवर्णा, सापि हरिणी ॥

**त्रिषु पाण्डौ च हरिणः**

चकारान्मृगे ॥

**स्थूणा स्तम्भेऽपि वेश्मनः।**

लोहप्रतिमायां च स्थूणा ॥

**तृष्णे स्पृहापिपासे द्वे**

तृष्णेत्युपलक्षणम्। तृष्णा तृट् तर्ष इत्येतेऽपि लिप्सापिपासयोः ॥

**जुगुप्साकरुणे घृणे ॥ ४९ ॥**

जुगुप्सा निन्दा ॥

**वणिक्पथेऽपि विपणिः**

वणिक्पथो हट्टः।

"आपणे पण्यवीथ्यां च पण्ये च विपणिः स्त्रियाम्"
इति रुद्रः ॥

**सुरा प्रत्यक् च वारुणी।**

प्रत्यक् प्रतीची दिक् ॥

**करेणुरिभ्यां स्त्री नेभे**

इभ्यां हस्तिन्यां स्त्री करेणुः। इभे तु हस्तिनि ना पुमानित्यर्थः ॥

**द्रविणं तु धनं बलम् ॥ ५० ॥**

बलं पराक्रमः ॥

**शरणं गृहरक्षित्रोः**

शरणं तालव्यादि ॥

**श्रीपर्णं कमलेऽपि च।**

अग्निमन्थेऽपि श्रीपर्णम् ॥

**विषाभिमरलोहे[1]षु तीक्ष्णं क्लीबं खरे त्रिषु ॥ ५१ ॥**

अभिमरो युद्धम्। यः शीघ्रं कार्यकारी स खरस्त्रिषु ॥

**प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु।**

येनाग्निरनुमीयते, स हेतुः धूमादिः। मर्यादा सीमा। शास्त्रे यथा—आर्षं प्रमाणम्। इयत्ता मानम्। प्रमाता यथार्थानुभवयुक्तः ॥

**करणं साधकतमे क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५२ ॥**

साधकतमं कारकभेदः ॥

**प्राण्युत्पत्तौ संसरणमसंबाधचमूगतौ।**
**घण्टापथे**

प्राणिनामुत्पत्तौ जन्मनि। असंकटेन रथाश्वादिगमनमसंबाधचमूगतिः। घण्टापथो नगरस्योपनिर्गमः ॥

1. 'हि' क. ख. ङ. च. पाठः.

**अथ वान्तान्ने समुद्धरणमुन्नये ॥ ५३ ॥**

वान्तान्ने भुक्तोज्झिते । उन्नय उत्तोलनम् ॥

**अतस्त्रिषु विषाणं स्यात् पशुशृङ्गेभदन्तयोः ।**

अतः परं णकारान्तास्त्रिषु । विषाणं मूर्धन्यषम् ॥

**प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥ ५४ ॥**

क्रमनिम्नोर्व्यां वाच्यलिङ्गतया त्रिषु त्रिलिङ्गः । पूर्वप्रवणा भूः । पूर्वप्रवणो देशः । पूर्वप्रवणं स्थलम् । ना त्विति त्रिष्वित्यस्य बाधकः ॥

**संकीर्णौ निचिताशुद्धौ**

निचितं व्याप्तम् ॥

**इरिणं शून्यमूषरम् ।**

इरिणं ह्रस्वादि दीर्घादि च ॥

णान्तः ।

---

**देवसूर्यौ विवस्वन्तौ**

देवो देवसामान्यम् ॥

**सरस्वन्तौ नदार्णवौ ॥ ५५ ॥**

"सरस्वती स्यात् स्त्रीरत्ने नद्यां नद्यन्तरे गवि"

इत्यजयः ॥

**पक्षितार्क्ष्यौ गरुत्मन्तौ**

पक्षिसामान्यं पक्षी ॥

**शकुन्तौ भासपक्षिणौ**

**अग्न्युत्पातौ धूमकेतू**

उत्पातः प्रसिद्धः । धूमः केतुश्चिह्नमस्येति धूमकेतुः अग्निः ॥

**जीमूतौ मेघपर्वतौ ॥ ५६ ॥**

देवताख्याख्यौषधे[1] च जीमूतः ॥

**हस्तौ तु पाणिनक्षत्रे**

नक्षत्रं तारकाभेदः ॥

**मरुतौ पवनामरौ ।**

अमरे, मरुत्वानिन्द्रः ॥

**यन्ता हस्तिपके सूते**

सूत सारथौ ॥

**भर्ता धातरि पोष्टरि ॥ ५७ ॥**

धातरि यथा — वज्रस्य भर्ता ॥

**यानपात्रे शिशौ पोतः**

यानपात्रे वहित्रे ॥

**प्रेतः प्राण्यन्तरे मृते ।**

प्राण्यन्तरं प्रेताख्यमेव ॥

**ग्रहभेदे ध्वजे केतुः**

ध्वजश्चिह्नम् ॥

**पार्थिवे तनये सुतः ॥ ५८ ॥**

पार्थिवो राजा ॥

१. 'षिविशेषे च' ठ. पाठः.

**स्थपतिः कारुभेदेऽपि**

बृहस्पतिसवयाजी कञ्चुकी च स्थपतिः ॥

**भूभृद् भूमिधरे नृपे ।**

भूमिधरः पर्वतः ॥

**मूर्धाभिषिक्तो भूपेऽपि**

क्षत्रियमात्रे प्रधानेऽपि मूर्धाभिषिक्तः ॥

**ऋतुः स्त्रीकुसुमेऽपि च ॥५९॥**

हेमन्तादावपि ऋतुः ॥

**विष्णावप्यजिताव्यक्तौ**

"त्रिषु स्यादस्फुटोऽव्यक्तः क्लीबं तु परमात्मनि"
इति रुद्रः ॥

**सूतस्त्वष्टरि सारथौ ।**

त्वष्टा वर्धकिः ॥

**व्यक्तः प्राज्ञेऽपि**

स्फुटेऽपि व्यक्तः ॥

**दृष्टान्तावुभौ शास्त्रनिदर्शने ॥६०॥**

शास्त्रं, व्याकरणशास्त्रादि । निदर्शनमुदाहरणम् ॥

**क्षत्ता स्यात् सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।**

द्वाःस्थे प्रतिहारे । क्षत्रियायामिति पाठः । वैश्यायामित्यपपाठः ॥

**वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ॥६१॥**

प्रकरणं प्रक्रिया। प्रस्ताव इत्यन्यः। प्रकारो विशेषः॥

**आनर्तः समरे नृत्तस्थाननीवृद्विशेषयोः।**

नृत्तस्थानं मण्डपादि। नीवृद्विशेषो जनपदभेदः॥

**कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु॥ ६२॥**

दैवं जन्मान्तरीयं शुभाशुभकर्म। अकुशलकर्म पापकर्म॥

**श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः।**
**इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः॥ ६३॥**

श्लेष्मादीत्यादिशब्देन वातपित्ते। रसः आहारस्य परिणामः विकारः सारो भागः। रक्तमसृक्। आदिना मांसादिः। महाभूतानि पृथिव्यप्तेजोवाय्वाकाशानि। तद्गुणाः पृथिव्यादीनामाश्रिता गन्धरसरूपस्पर्शशब्दाः। इन्द्रियाणि घ्राणजिह्वाचक्षुःस्पर्शश्रोत्राणि। अश्मविकृतिर्गैरिकमनःशिलादिः। शब्दयोनिः भूवादिः। एते धातुवाच्याः॥

**कक्ष्यान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे।**

कक्ष्यान्तरे प्रकोष्ठान्तरे। नृपस्यासर्वगोचर इत्येतदस्यैव[१] विशेषणम्।
"शुद्धान्तोऽन्तःपुरे गुह्ये कक्ष्याभेदे च भूपतेः"
इत्यजयः॥

**कासूसामर्थ्ययोः शक्तिः**

कासूः शर्वला॥

**मूर्तिः काठिन्यकाययोः॥ ६४॥**

काठिन्यं दृढता॥

**विस्तारवल्ल्योर्व्रततिः**

१. 'त्वस्यै' क. ग. ङ. पाठः.

विस्तारो विस्तीर्णता ॥

**वसती रात्रिवेश्मनोः ।**

स्थितावपि वसतिः । सर्वत्रेयं स्त्री ॥

**क्षयार्चयोरपचितिः**

क्षयो हानिः । अर्चा पूजा ॥

**सातिर्दानावसानयोः ॥ ६५ ॥**

अवसानमन्तः ॥

**अर्तिः पीडाधनुःकोट्योः**

अर्तिः ह्रस्वादिः । धनुःकोटिरटनिः ॥

**जातिः सामान्यजन्मनोः ।**

जन्म जननम् । चुल्ल्यामपि जातिः ॥

**प्रचारस्यन्दयो रीतिः**

प्रचारो व्यवहारः । स्यन्दः प्रस्रवणम् । लोहकिट्टे च रीतिः ॥

**ईतिर्डिम्बप्रवासयोः ॥ ६६ ॥**

डिम्ब उपप्लवः । स च षड्विधः । तदुक्तम्—

"अतिवृष्टिरनावृष्टिः शरभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥"

'ई गतौ' । दीर्घादिः । क्तिनि ईतिः ॥

**उदयेऽधिगमे प्राप्तिः**

उदय उद्गमः । अधिगमो लाभः ॥

कक्ष्यान्तरे प्रकोष्ठान्तरे । नृपस्यासर्वगोचर इत्येतदस्यैव विशेषणम् ।

"शुद्धान्तोऽन्तःपुरे गुह्ये कक्ष्याभेदे च भूपतेः"

इत्यजयः ॥

**कासूसामर्थ्ययोः शक्तिः**

कासूः शर्वला ॥

**मूर्तिः काठिन्यकाययोः ॥**

काठिन्यं दृढता ॥

**विस्तारवल्ल्योर्व्रततिः**

विस्तारो विस्तीर्णता ॥

**वसती रात्रिवेश्मनोः ।**

स्थितावपि वसतिः । सर्वत्रेयं स्त्री ॥

**क्षयार्चयोरपचितिः**

क्षयो हानिः । अर्चा पूजा ॥

**सातिर्दानावसानयोः ॥ ६८ ॥**

अवसानमन्तः ॥

**अर्तिः पीडाधनुष्कोट्योः**

अर्तिर्ह्रस्वादिः । धनुष्कोटिरटनिः ॥

**जातिः सामान्यजन्मनोः ।**

जन्म जननम् । चुल्ल्यामपि जातिः ॥

**प्रचारस्यन्दयो रीतिः**

प्रचारो व्यवहारः । स्यन्दः प्रस्रवणम् । लोहकिट्टे च रीतिः ॥

१. 'स्यस्य' क. ग. छ. पाठः.

**ईतिर्डिम्बप्रवासयोः ॥ ६६ ॥**

डिम्ब उपप्लवः । स च षड्विधः । तदुक्तम्—

"अतिवृष्टिरनावृष्टिः शरभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥"

'ई गतौ' । दीर्घादिः । क्तिनि ईतिः ॥

**उदयेऽधिगमे प्राप्तिः**

उदय उद्गमः । अधिगमो लाभः ॥

**त्रेता त्वग्नित्रये युगे ।**

गार्हपत्याद्यग्नित्रयं त्रेता ॥

**वीणाभेदेऽपि महती**

नारदस्य वीणाभेदः । महत्त्वयुक्तायां च महती ॥

**भूतिर्भस्मनि संपदि ॥ ६७ ॥**

अणिमादिगुणेऽपि भूतिः ॥

**नदीनगर्योर्नागानां भोगवती**

नागनदी नागनगरी च भोगवती ॥

**अथ सङ्गरे ।**

**सङ्गे सभायां समितिः**

सङ्गरो युद्धम् । सङ्गः सङ्गमः ॥

**क्षयावासावपि क्षितिः ॥ ६८ ।**

क्ष्मापि क्षितिः ॥

**रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।**

हन्तेर्हेतिशब्दः क्तिन्नन्तः । 'निर्मार्ष्टयसौ नीतिमयेन हेतिना' इति कपिष्णाभ्युदये । ततः शस्त्रे बाहुलकात् पुंस्यपि ॥

**जगती जगनिच्छन्दोविशेषेऽपि क्षितावपि ॥ ६९ ॥**

जगति भुवने। छन्दोविशेषे द्वादशाक्षरपादे ॥

**पङ्क्तिश्छन्दोऽपि दशमं**

दशम छन्दो दशाक्षरपादकम्। राजिदशसंख्ययोरपि पङ्क्तिः ॥

**स्यात् प्रभावेऽपि चायतिः।**

दीर्घत्वागामिकालयोरप्यायतिः ॥

**पत्तिर्गतौ च**

"पत्तिर्ना पतगे सैन्यविशेषे तु स्त्रियां मता" ॥

**मूले तु पक्षतिः पक्षभेदयोः ॥ ७० ॥**

पक्षभेदयोरिति षष्ठी। एकः पक्षो मासार्धं, तस्य मूले प्रतिपदीत्यर्थः। द्वितीयो विहगावयवः। तन्मूलं कक्षस्थानम् ॥

**प्रकृतिर्योनिलिङ्गे च**

योनिरुत्पत्तिकारणम्। लिङ्गं स्त्रीत्वादि।

"पौरामात्यादिलिङ्गेषु स्वभावे प्रकृतिर्मता।
सत्त्वरजस्तमसां च समवस्थापि दृश्यते॥"

इति व्याडिः ॥

**कैशिक्याद्याश्च वृत्तयः।**

"भारती सात्त्वती चैव कैशिक्यारभटी तथा।
चतस्रो वृत्तयस्त्वेतास्तासु नाट्यं प्रतिष्ठितम्"॥

**सिकताः स्युर्वालुकापि**

वालुकायां सिकताः बहुत्वे। 'बहवश्च समाः सिकताः' इति वामनः। सिकतामयदेशश्च सिकता ॥

**वेदे श्रवसि च श्रुतिः ॥ ७१ ॥**

श्रवसि कर्णे । वार्तायां च श्रुतिः ॥

**वनिता जनितात्यर्थानुरागायां च योषिति ।**

जनितात्यर्थानुरागायां योषिति योषिन्मात्रेऽपि वनिता ॥

**गुप्तिः क्षितिव्युदासेऽपि**

क्षितिव्युदासो गर्तार्थं क्षितेरुत्खननम् । गोपनेऽपि गुप्तिः ॥

**धृतिर्धारणधैर्ययोः ॥ ७२ ॥**

सुखे योगान्तरे यागे च धृतिः ॥

**बृहती क्षुद्रवार्ताकीच्छन्दोभेदे महत्यपि ।**

छन्दोभेदो नवाक्षरपादः । महती विपुला । कण्टकारिकायामुत्तरीयेऽपि बृहती ॥

**वाशिता स्त्रीकरेण्वोश्च**

स्त्रीति स्त्रीमात्रम् ॥

**वार्ता वृत्तौ जनश्रुतौ ॥ ७३ ॥**

**वार्तं फल्गुन्यरोगे च त्रिषु**

वृत्तौ वर्तने । किंवदन्ती जनश्रुतिः । फल्गुन्यसारे क्लीबम् । अरोगे नीरोगे त्रिषु ॥

**अप्सु च घृतामृते ।**

आज्ये च घृतम् ।

"अयाचिते यज्ञशेषे निर्वाणे चापि सुन्दरे ।
अमृतं वारिणि प्रोक्तमतिहृद्ये च वस्तुनि ॥"

इति व्याडिः ॥

**कलधौतं रूप्यहेम्नोः**

रूप्यमन्तस्थावत् ॥

**निमित्तं हेतुलक्ष्मणोः ॥ ७४ ॥**

'निमित्तं कारणे चिह्ने' इत्यजयः ॥

**श्रुत शास्त्रावधृतयोः**

अवधृतं आकलिते ॥

**युगपर्याप्तयोः कृतम् ।**

युगं (सत्य)युगम् । पर्याप्तं निवारणम् ।

"शक्तौ निवारणे तृप्तौ पर्याप्तं स्याद् यथेप्सिते"

इति रुद्रः ॥

**अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ ७५ ॥**

कर्म जीवानपेक्षीति साहसं कर्म ॥

**युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।**

युक्तं न्याय्यम् । क्ष्मादौ महाभूतपञ्चके । ऋते सत्ये । प्राणीति प्राणिमात्रम् । अतीते वृत्ते । भूतं क्लीबम् । उत्तरपदभूतो भूतशब्दः समे सदृशे वर्तते । यथा पितृभूतो मातृभूतः ।

"क्ष्मा(दौ च तौ? दावृते) च भूतं स्यात् पिशाचादौ नृशण्डयोः"

इत्यमरमाला ॥

**वृत्तं पद्ये चारित्रे त्रिष्वतीते दृढनिस्तले ॥ ७६ ॥**

श्लोकचरित्रयोर्वृत्तं क्लीबम् ॥

**महद्राज्यं च**

महद् बृहदपि ॥

**अवगीतं जन्ये स्याद् गर्हिते त्रिषु ।**

जन्ये जनापवादे क्लीबम् ॥

**श्वेतं रूप्येऽपि**

सितेऽपि श्वेतम् ॥

**रजतं हेम्नि रूप्ये सिते त्रिषु ॥ ७७ ॥**

हेमरूप्ययोः क्लीबम् ॥

**अवदातः सिते पीते शुद्धे**

शुद्धे विशुद्धेऽवदातं कर्म ॥

**बद्धार्जुनौ सितौ ।**

बद्धः । अर्जुनः धवलः ॥

**युक्तेऽतिसंस्कृते मर्षिण्यभिनीतः**

युक्ते न्याय्ये । मर्षः क्षमा

**अथ संस्कृतम् ॥**

**कृत्रिमे लक्षणोपेतेऽपि**

क्रियया निर्वृत्तं कृत्रिमं । घटादि । लक्षणोपेते पाणिनीयादिलक्षण-युक्ते शब्दे साककह इति ख्याते ॥

**अनन्तोऽनवधावपि ।**

अवधिशून्ये । दुरालभा वि (शापू ? शल्या दू ) र्वा (पि ?) उत्पलशा-(लिनी ? रिवा) ।

"अनन्तो ना हरौ शेषे नगे क्लीबं विहायसि" ॥

**ख्याते हृष्टे प्रतीतः**

हृष्टः सन्तुष्टः ॥

**अभिजातस्तु कुलजे बुधे ॥ ७९ ॥**

कुलजः कुलीनः ॥

**विविक्तौ पूतविजनौ**

विगतजनसङ्घातो विजनः ॥

**मूर्छितौ मूढसोच्छ्रयौ ।**

मूढो मूर्खः । सोच्छ्रयो वृद्धियुक्तः ॥

**द्वौ चाम्लपरुषौ शुक्तौ**

'शुक्तं पूताम्लनिष्ठुर' इति तालव्यादौ रभसः । अम्लविशेषेऽपि शुक्तम् । यदाह —

"मृन्मयादिशुचौ भाण्डे मक्षौद्रगुडकाञ्जिके ।
धान्यराशौ त्रिरात्रस्थं चुक्रं तच्छुक्तमुच्यते" ॥

**शिती धवलमेचकौ ॥ ८० ॥**

'शितिर्धवलकोष्णयोरि'ति तालव्यादावजयः । स्त्रियां शिती ॥

**सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ।**

सत्ये यथासंभूते । अभ्यर्हिते अर्चिते ॥

**पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ॥ ८१ ॥**

अरात्यभियुक्तः शत्रुणाक्रान्तः । अग्रतः कृतः पुरो व्यवस्थापितः ॥

**निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ।**

आश्रयो निवासः । अवातो वातशून्यो देशः ॥

**जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिताः**

जात उत्पन्नः । उन्नद्ध उन्नतः । प्रवृद्धो बहलतां गतः ॥

**उत्थितास्त्वमी ॥**

**वृद्धिमत्प्रोद्यतोत्पन्नाः**

वृद्धिमदादिषु त्रिषु उत्थितः । प्रोद्यते यथा — सूत्थितो राजा ॥

**आदृतौ सादरार्चितौ* ।**

* अत्र तान्तसमाप्तिर्मातृकासु न दृश्यते ।

**अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ॥ ८३ ॥**
**निदानागमयोस्तीर्थमृषिजुष्टजले गुरौ ।**

निदानमादिकारणम् । आगमो मुनिवचनम् । ऋषिसेवितजलं वाराणस्यादि ॥

**समर्थस्त्रिषु शक्तिस्थे सम्बद्धार्थे हितेऽपि च ॥ ८४ ॥**

शक्तिस्थे शक्तियुक्ते । सम्बद्धोऽर्थोऽस्येति सम्बद्धार्थः ॥

**दशमीस्थौ क्षीणरागवृद्धौ**

क्षीणरागो नष्टबीजः ॥

**वीथी पदव्यपि ।**

पदवी मार्गः । पङ्क्तिर्गृहाङ्गं रूपकं च वीथी ॥

**आस्थानीयत्नयोरास्था**

आस्थानी सभा ॥

**प्रस्थोऽस्त्री सानुमानयोः ॥ ८५ ॥**

मानं परिमाणविशेषश्च ॥

थान्तः ।

**अभिप्रायवशौ छन्दौ**

अभिप्राय आशयः । वशे यथा स्वच्छन्दाश्छात्राः ॥

**अब्दौ जीमूतवत्सरौ ।**

पर्वतभेदेऽप्यब्दः

**अपवादौ तु निन्दाज्ञे**

आज्ञा निदेशः ॥

**दायादौ सुतबान्धवौ ॥ ८६ ॥**

बान्धवो ज्ञातिः ॥

**पादा रश्म्यङ्घ्रितुर्यांशाः**

**चन्द्राग्न्यर्कास्तमोनुदः ।**

अर्कः सूर्यः ॥

**निर्वादो जनवादेऽपि**

जनवादो निन्दा । अवज्ञानिश्चितवादयोरपि निर्वादः ॥

**शादो जम्बालशष्पयोः ॥ ८७ ॥**

शष्पं नवतृणम् ॥

**सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ।**

आर्तध्वनिराराव:, तत्सहिते रुदिते आक्रन्दः । त्रातरि यथा— निराक्रन्दं जगत् । दारुणे इति रणविशेषणम् ॥

**स्यात् प्रसादोऽनुरोधेऽपि**

कार्यप्रमाणप्रसक्तिषु प्रसादः ॥

**सूदः स्याद् व्यञ्जने त्रिषु ॥ ८८ ॥**

सूपकारोऽपि सूदः ॥

**गोष्ठाध्यक्षेऽपि गोविन्दः**

हरौ च गोविन्दः ॥

**हर्षेऽप्यामोदवन्मदः ।**

यथा आमोदशब्दो हर्षे तथा मदशब्दश्च । अतिनिर्हारिगन्धोऽप्यामोदः । गर्वगजदानयोश्च मदः ॥

**प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ॥ ८९ ॥**

प्रधानमेव प्राधान्यम् । राजलिङ्गं राजचिह्नं कनकदण्डादि । ककुच्छब्दोऽप्येषु ॥

**स्त्री संविज्ज्ञानसम्भाषाक्रियाकाराजिनामसु ।**

क्रियायाः कारो निश्चयः । आजिः युद्धम् । स्त्रीति [illegible]दा शरदा च सम्बध्यते ॥

**धर्मे रहस्युपनिषत्**

वेदान्तेऽप्युपनिषत् ॥

**स्यादृतौ वत्सरे शरत् ॥ ९० ॥**

ऋतुविशेषे ऋतौ ॥

**पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।**

व्यवसितिश्च व्यवसायः । लक्ष्मं व्याजः । 'पदं स्थानेऽपदेशे चे'त्यादिना
गेश्च । लक्ष्मपाठे तु लक्ष्म चिह्नम् । तथाहि—

"पदं स्थाने परित्राणे व्यवसायापदेशयोः" (?)

जयः ॥

**गोष्पदं सेविते माने**

सेविते गोभिरेव सेविते देशे । मीयतेऽनेनेति मानं गोखुरश्वभ्रं गोष्प-
दमात्रक्षेत्रम् । गोष्पदं मूर्धन्यवत् ।

"गोष्पदं गोपदश्वभ्रे गवां च गतिगोचरे"

इति रभसः ॥

**प्रतिष्ठा कृत्यमास्पदम् ॥ ९१ ॥**

प्रभुत्वं स्थानमात्रकं च प्रतिष्ठा । कृत्यं कार्यम् ॥

**त्रिष्विष्टमधुरौ स्वादू**

इष्टो मृष्टः । दान्तवर्गावधि त्रिष्वित्यधिकारः ॥

**मृदू चातीक्ष्णकोमलौ ।**

अतीक्ष्णो मन्दः ॥

**मूढाल्पापटुनिर्भाग्या मन्दाः स्युः**

मूढो मूर्खः ॥

**द्वौ तु शारदौ ॥**

**प्रत्यग्राप्रतिभौ**

प्रत्यग्रोऽभिनवः । अधृष्टोऽप्रतिभः । शारदस्तालव्यादिः ।

विद्वान् पण्डितः ॥

दान्तः।

**व्यामो वटश्च न्यग्रोधौ**

व्यामो विआम इति ख्यातः। वटो वृक्षभेदः ॥

**उत्सेधः काय उन्नतिः ॥ ९३ ॥**

उन्नतिः उच्छ्रायः। 'सिधु गत्याम्'। घञ्। उत्सेधः ॥

**पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ।**

पर्याहारः भोत्स इति ख्यातः ॥

**परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥ ९४ ॥**

यज्ञियतरुरुदुम्बरादिः, तच्छाखायां परिधिः। उपसूर्यमादित्यमण्डलम् ॥

**बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः।**

बन्धकं भूम्यादिबन्धकम्। अधिष्ठानमाक्रमणम् ॥

**स्युः समर्थननीवाकनियमाश्च समाधयः ॥ ९५ ॥**

दुर्घटप्रतिविधानं समर्थनम्। धान्यादिष्वादरो नीवाकः। नियम इन्द्रियसंयमः ॥

**दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे।**
**मुख्यानुयायिनि शिशौ प्रकृतस्यानिवर्तने ॥ ९६ ॥**

चतुर्षु अनुबन्धः। प्रकृतिप्रत्ययादेर्योऽदर्शनीयो लोप्यस्वभावो वर्णः, सोऽनुबन्धः। यथा—[1]तिपः पकारः। विवाहामन्त्रणयात्रायां यो मुख्यं पित्रादिकमनुयाति शिशुः, तत्राप्यनुबन्धः। प्रकृतस्यानिवर्तने निवर्तनाभावे। [2]यथा—वैरानुबन्धः। अनुवर्तनामिति क्वचित् पाठः ॥

**विधुर्विष्णौ चन्द्रमसि**

चन्द्रमसि चन्द्रे ॥

1. 'रः प्रसिद्धः ॥ य' ठ. पाठः. 2. 'प' क., 'वा' म. पाठः.

**परिच्छेदे बिलेऽवधिः ।**

परिच्छेदः सीमा ॥

**विधिर्विधाने दैवेऽपि**

विधानं क्रिया । दैवं कर्म ॥

**प्रणिधिः प्रार्थने चरे ॥ १७ ॥**

प्रार्थनचरौ सुप्रसिद्धौ ॥

**बुधवृद्धौ पण्डितेऽपि**

सुगते बुधितेऽपि बुधः । स्थविरेऽपि वृद्धः । शैलेये तु क्लीबम् ॥

**स्कन्धः समुदयेऽपि च ।**

समुदयः समूहः ।

"प्रकाण्डेंऽशे नृपे स्कन्धः समुदायसमूहयोः"

इति रुद्रः ॥

**देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ॥ १८ ॥**

देशे देशविशेषे ॥

**विधा विधौ प्रकारे च**

विधानं विधिः । राजवेतने हस्त्यन्नेऽपि विधिः ॥

**साधु रम्येऽपि च त्रिषु ।**

रम्यं मनोहरम् । वार्धुषिके सज्जने च साधुः ॥

**वधूर्जाया स्नुषा स्त्री च**

जाया स्वभार्या । स्नुषा पुत्रादिभार्या । स्त्रीति स्त्रीमात्रम् । वधूः नवोढा, पृक्का शटी च ॥

**सुधा लेपोऽमृतं स्नुहिः ॥ १९ ॥**

लेपः सौधादिलेपनद्रव्यम् । स्नुहिः सिन्धुः ॥

१. 'मी' क. ठ. अ. पाठः. २. 'पः कभु इति ख्यातः । स्नु' ब. पाठः.

**सन्धा प्रतिज्ञा मर्यादा**

प्रतिज्ञायां यथा — सत्यसन्धः । मर्यादायां यथा —

"उपकारिणि विस्रब्धे शुद्धमतौ यः समाचरति पापम्
तं जनमसत्यसन्धं भगवति ! वसुधे ! कथं वहसि" ॥

**श्रद्धा सम्प्रत्ययः स्पृहा ।**

स्पृहा काङ्क्षा ॥

**मधु मद्ये पुष्परसे क्षौद्रेऽपि**

"दैत्यचैत्रवसन्तेषु द्रुमभेदे च ना मधुः" ॥

**अन्धं तमस्यपि ॥ १०० ॥**

अक्षिहीनेऽप्यन्धः ॥

**अतस्त्रिषु**

अतः परे धान्तवर्गान्तास्त्रिषु ॥

**समुन्नद्धौ पण्डितंमन्यगर्वितौ ।**

पाण्डित्याभिमानयुक्तः पण्डितंमन्यः ॥

**ब्रह्मबन्धुरधिक्षेपे निर्देशे**

अधिक्षेपे यथा — ब्रह्मबन्धो ! किमेवं त्वमित्यादि । निर्देश इति । यस्य द्वेषाद् नाम न ग्रहीतव्यं, स ब्रह्मबन्धुर्निर्दिश्यत इत्यर्थः ॥

**अथावलम्बितः ॥ १०१ ॥**

**अविदूरोऽप्यवष्टब्धः**

अवलम्बित आश्रितः । अविदूर आस(न्ने?न्नो) नातिदूरश्च ॥

**प्रसिद्धौ ख्यातभूषितौ ।**

भूषितोऽलङ्कृतः ॥

धान्तः ।

---

**सूर्यवह्नी चित्रभानू**

वह्निरग्निः ॥

**भानू रश्मिदिवाकरौ ॥ १०२**

रश्मिः किरणः ॥

**भूतात्मानौ धातृदेहौ**

भूतानां प्राणिनां परमात्मत्वाद् ब्रह्मा भूतात्मा । पृथिव्यादिभूतस्वभावाद् देहोऽपि ॥

**मूर्खनीचौ पृथग्जनौ ।**

नीचो हीनजातिः ॥

**ग्रावाणौ शैलपाषाणौ**

अभेदाच्छैलेऽपि ग्रावा ॥

**पत्रिणौ शरपक्षिणौ ॥ १०३ ॥**

श्येनाख्यविहगोऽपि पत्री ॥

**तरुशैलौ शिखरिणौ**

अपामार्गे शिखरी ॥

**शिखिनौ वह्निबर्हिणौ ।**

बर्हिणो मयूरः ॥

**प्रतियत्नावुभौ लिप्सोपग्रहौ**

लिप्सा तृष्णा । उपग्रहो बन्दीग्रहणादिः । सतो गुणान्तराधानेऽपि प्रतियत्नः ॥

**अथ सादिनौ ॥ १०४ ॥**

**सारथिहयारोहौ**

हयारोहोऽश्ववा(वा?)रः ॥

**वाजिनोऽश्वेषुपक्षिणः ।**

इषुः काण्डः ॥

**कुलेऽप्यभिजनो जन्मभूम्यामपि**

कुलस्थानेऽप्यभिजनः ॥

**अथ हायनाः ॥ १०५ ॥**

**वर्षार्चिर्व्रीहिभेदाश्च**

वर्षो वत्सरः । अर्चिर्मयूखः ॥

**चन्द्राग्न्यर्का विरोचनाः ।**

अर्को रविः ॥

**केशेऽपि वृजिनः**

"वृजिनं कल्मषे क्लीबं के(शो?शे)नो[1] कु(न्त ? टि)ले त्रिषु"

ते रभसः ॥

**विश्वकर्मार्कसुरशिल्पिनोः ॥ १०६ ॥**

अर्को रविः ॥

**आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।**

ब्रह्म परमात्मा । वर्ष्म कायः ॥

**शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ॥ १०७ ॥**

घातुकश्चासौ मत्तेभश्चेति कर्मधारयः । एवं वर्षुकाब्दः ॥

**अभिमानोऽर्थादिदर्पेऽज्ञाने प्रणयहिंसयोः ।**

अर्थादीत्यादिना कु(लदर्पा?)लादिदर्पे ॥

**घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ॥१०८॥**

मूर्तिः काठिन्यं, स एव गुणः । यथा — अभ्रघनः । मूर्ते काठिन्ययुक्ते यथा — घनं दधि । निरन्तरे यथा — घनं वनम् । मुस्तकविस्तारलोहमुद्गरे(षु) घनो ना, कांस्यतालादिवाद्ये च क्लीबम् ॥

**इनः सूर्ये**

इनो ह्रस्वादिः । 'हेतुरह्नामिनो वः' इति मयूरः ॥

**प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ।**[2]

"प्रभौ भूमिपतौ राजा क्षत्रिये रजनीपतौ"

इति रभसः । अतः प्रभाविति राज्ञि सम्बध्यते ॥

**वाणिन्यौ नर्तकीदूत्यौ**

---

१. 'शानां तरलेऽपि च इति विश्वः ॥' इति ठ. पाठः. २. नान्तरल क. ख, [illegible] ग. ट. पाठः.

(मत्ता?) मत्तस्त्री विदग्धा च वाणिनी ॥

**स्रवन्त्यामपि वाहिनी ॥ १०९ ॥**

सेनाभेदे सेनामात्रे च वाहिनी ॥

**ह्रादिन्यौ वज्रतडितौ**

तडिद् विद्युत् ॥

**वन्दायामपि कामिनी ।**

वृक्षे विजातीयप्ररोहो वन्दा, विलासिनी च कामिनी ॥

**त्वग्देहयोरपि तनुः**

"त्वचि काये तनुः स्त्री स्यात् त्रिष्वल्पे विरले कृशे"
(इति रभसः) ॥

**सूनाधोजिह्विकापि च ॥ ११० ॥**

अधोजिह्विका गलासुतुण्डीति ख्याता । वधस्थानेऽपि सूना । वधालोप इत्यन्यः ॥

**क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ।**
**मन्दे**

तुच्छं शून्यम् । मन्दे वितानीभूतहृदये ॥

**अथ केतनं कृत्ये केतावुपनिमन्त्रणे ॥ १११ ॥**

कृत्यं कार्यम् । केतुर्ध्वजः । निमन्त्रणमेवोपनिमन्त्रणम् ॥

**वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ।**

तत्त्वं परमात्मा । तपसि यथा—ब्रह्मचारी । विप्रो द्विजातिः ॥

**उत्साहने च हिंसायां सूचने चापि गन्धनम् ॥ ११२ ॥**

उत्साहनमुत्साहः । सूचनमभिनयः ॥

**आतञ्चनं प्रतीवापजवनाप्यायनार्थकम्**

"अपायस्तु प्रतीवा(यो ? पो) मारि[2]रीतिरुपद्रवः"

इति निघण्टुः। जवनं वेगः। आप्यायनं पीवनम्॥

**व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि॥ ११३॥**

लाञ्छनं चिह्नम्। निष्ठानं तेजनम्। स्त्रीपुंसयोरुपस्थोऽवयवः॥

**स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्।**

लोकापवादो लोकवादः। पशुयुद्धे, अहियुद्धे, पक्षियुद्धे॥

**स्यादुद्यानं निस्सरणे वनभेदे प्रयोजने॥ ११४॥**

निस्सरणे गृहादिनिर्गमे। कृत्रिमवनं वनभेदः॥

**अवकाशे स्थितौ स्थानं**

स्थितौ यथा— गवां स्थानेऽश्वो वध्यताम्॥

**क्रीडादावपि देवनम्।**

आदिना व्यवहारविजिगीषापरिदेवनेष्वपि। पाशके तु पुंसि॥

**उत्थानं पौरुषे तन्त्रे सन्निविष्टोद्गमेऽपि च॥ ११५॥**

पौरुषे यथा — उत्थानसम्पन्नो राजा। (त्रस्थेन ? तन्त्रे) सैन्ये॥

**व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च।**

प्रतिरो(ह ? ध) आस्कन्दनम्॥

**मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने॥ ११६॥**

**निर्वर्तनोपकरणानुव्रज्यासु च साधनम्।**

मारणे यथा — रससाधनम्। मृतस्य संस्कारोऽग्निदानम्। गतिर्गमनम्। द्रव्यं धनम्। अर्थस्य भूमिधनादेर्दापने। उपकरणमुपायो हस्त्यश्वादिः। अनुव्रज्या अनुगमनम्॥

---

१. 'वा' क. ख. ग. ञ. ट. पाठः. २. 'त' क. पाठः.

**निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ॥ ११७ ।**

दानं त्यागः ॥

**व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ।**

विपद् दुःखम् । भ्रंशोऽपायपतनम् । कामजे दोषे कोपजे च दोषे ॥

**पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि ॥**

अणीयसीति तन्त्वाद्यंशस्य विशेषणम् ॥

**तिथिभेदे क्षणे पर्व**

तिथिभेदे पूर्णिमायाम् ।

"दर्शप्रतिपदोः सन्धौ ग्रन्थिप्रस्तावयोरपि ।
पर्व क्लीबं महे चैव विषुवत्प्रभृतिष्वपि ॥"

इति रभसः ॥

**वर्त्म नेत्रच्छदेऽध्वनि ।**

नेत्रच्छदे पिधानचर्मपुटे ॥

**अकार्यगुह्ये कौपीनं**

अकार्यमकर्तव्यम् । गुह्यमुपस्थः । तादर्थ्यात् तदावरणं चीराख्यं च वस्त्रं कौपीनम् ॥

**मैथुनं सङ्गतौ रते ॥ ११९ ॥**

संगतिः संयोगः । 'विवाहः सङ्गतिरि'ति कलिङ्गः ॥

**प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिह्नयोः ।**
**प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः ॥ १२० ॥**

**क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ।**
**गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे ॥ १२१ ॥**

**संनिवेशे च संस्थानं**

आकृति(सू?मू)र्त्योरपि संस्थानम् ॥

लक्ष्म चिह्नप्रधानयोः।

चिह्नं प्रसिद्धम् ॥

**आच्छादनं संपिधानमपवारणमित्युभे ॥ १२२ ॥**

संपिधानं परिधानम्। अपवारणं तिरोधानम्। एते आच्छादनाख्ये ॥

**आराधनं साधने स्यादवाप्तौ तोषणेऽपि च।**

साधनं निष्पादनम्। अवाप्तिर्लाभः। तोषणं सन्तोषणम् ॥

**अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ॥ १२३ ॥**

चक्रं रथाङ्गम्। पुरं नगरम्। अध्यासनमाक्रमणम् ॥

**रत्नं स्वजातिश्रेष्ठेऽपि**

स्वजातिश्रेष्ठे—स्त्रीरत्नम् अश्वरत्नम्। मरतकादौ च रत्नम् ॥

**वने सलिलकानने।**

(नि)लयनिवासयोरपि वनम् ॥

**तलिनं विरले स्तोके वाच्यलिङ्गं**

'त्रिष्व(ष्टे ? ल्पे) तलिनं ल(ये ? वे)' इति रभसः ॥

**तथोत्तरे ॥ १२४ ॥**

यथा तलिनं वाच्यलिङ्गं, तथोत्तरे नान्तावधि वाच्यलिङ्गाः ॥

**समानाः सत्समैके स्युः**

सत् सज्जनः। समः सदृशः। एकस्मिन् यथा—समानोदरे शयितः

**पिशुनौ खलसूचकौ।**

सूचकः कर्णेजपः ॥

'सोत्पादनम् ॥' क. ख. ग. ङ. च. छ. ञ. पाठः.

**हीनन्यूनावूनगर्ह्यौ**

हीनन्यूनौ द्वावनेकार्थौ । गर्ह्यः कुत्सितः ॥

**वेगिशूरौ तरस्विनौ ॥ १२५ ॥**

शूरो बली ॥

**अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि ।**

अपराद्धोऽपराधवान् । अभिग्रस्तः शत्रुणा आक्रान्तः ॥

नान्तः ।

---

**कलापो भूषणे बर्हे तूणीरे संहतेऽपि च ॥ १२६ ॥**

भूषणं काञ्च्यादि । बर्हं मयूरपिञ्छम् ॥

**परिच्छदे परीवापः पर्याप्तौ सलिलस्थितौ ।**

परिच्छदः पटकुटीपटवादिः । सर्वतो व्यापनं पर्याप्तिः । सलिलस्थितौ जलाधारे ॥

**गोधुग् गोष्ठपतिर्गोपौ**

गोधुग् गोपालः । गोष्ठपतिः गोष्ठाध्यक्षः । अग्नौ च ॥

**हरो विष्णुर्वृषाकपिः ॥ १२७ ॥**

वृषाकपिर्मूर्धन्यषः ॥

**बाष्पमूष्माश्रु**

ऊष्मणि — बाष्पायते स्थाली । अश्रुणि — बाष्पाम्भसां बिन्दवः । समाहारद्वन्द्वे ऊष्माश्रु ॥

**कशिपुस्त्वन्नमाच्छादनं द्वयम् ।**

अन्नमाहारः । आच्छादनं वस्त्रम् ।

"एकोक्त्या कशिपू भक्ताच्छादने द्वे पृथक्कृते"

इति रभसः । कशिपुस्तालव्यमध्यः पुमांश्च । क्लीबमिति त्रिकाण्डशेषः ॥

**तल्पं शय्याट्टदारेषु**

अट्टोऽट्टालिका । वक्ष्यमाणोऽस्त्रियामिति तल्पेनापि[1] संबध्यते । तथा च भट्टिः—'ययुः सुषुप्सवस्तल्पान्' (स० ८. श्लो० १०१) इति ॥

**स्तम्बेऽपि विटपोऽस्त्रियाम् ॥ १२८ ॥**

पल्लवे शाखायां च विटपम् ॥

**प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ।**
**भेद्यलिङ्गा अमी**

प्राप्तरूपादित्रयं भेद्यलिङ्गं बुधमनोज्ञयोः ॥

**कूर्मी वीणाभेदश्च कच्छपी ॥ १२९ ॥**

कमठीसारस्वतवीणयोः कच्छपी ॥

पान्तः ।

---

**रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः ।**

फान्तः ।

**अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने ॥ १३० ॥**

यो मृतो नैव कायान्तरं लभते, किं(न्त्व)शरीरी, स मरणजन्मनोर्मध्यभवत्वादन्तराभवसत्त्वम् ॥

**कम्बुर्ना वलये शङ्खे**

वलयो बाहुभूषणम् ॥

**द्विजिह्वौ सर्पसूचकौ ।**

सूचकः कर्णेजपः ॥

**पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ॥ १३१ ॥**

पूर्वोऽन्यलिङ्गः वाच्यलिङ्गः सन् प्रागाह पूर्वदिग्देशकालसम्बन्धि वस्तु आह । यथा—पूर्वो ग्रामः, पूर्वं धनं, पूर्वा नदी । यदा च पूर्वजान् पितामहादीनाह, तदा पुंबहुत्वे वर्तते । यथा—पूर्वे वदन्ति । पूर्वैः कृतम् ॥

बान्तः ।

---

१. 'ल्पमिति' ङ. छ. पाठः.

**कुम्भौ घटेभमूर्धांशौ**

इभमूर्धांशो मस्तकपिण्डद्वयम् ॥

**डिम्भौ तु शिशुबालिशौ ।**

बालिशो मूर्खः ॥

**स्तम्भौ स्थूणाजडीभावौ**

जडीभावो निष्पन्दता ॥

**शम्भू ब्रह्मत्रिलोचनौ ॥ १३२ ॥**

विष्णौ च शम्भुः ।

**कुक्षिभ्रूणार्भका गर्भाः**

गर्भस्थसत्त्वेऽपि भ्रूणः ॥

**विस्रम्भः प्रणयेऽपि च ।**

"विस्रम्भः स्यात् परिचये विश्वासे विप्रलम्भयोः"

इत्यजयः ॥

**स्याद् भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ॥**

अक्षः पाशकः ॥

**स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ।**

महारजने पुष्पे कौसुम्भ इत्येवाख्याते । करके कमण्डलौ ॥

**क्षत्रियेऽपि च नाभिर्ना**

"सुराट्क्षत्रिययोर्नाभिः पुंसि प्राण्यङ्गके द्वयोः ।
चक्रमध्ये प्रधानेऽपि स्त्रियां कस्तूरिकामदे ॥"

इति रभसः ॥

**सुरभिर्गवि च स्त्रियाम् ॥ १३४ ॥**

वसन्तजातीफलचम्पकेऽपि सुरभिर्ना, सुगन्धिमनोज्ञयोस्त्रिषु ।

**सभा संसदि सभ्ये च**

संसद् गोष्ठी। सभ्यः सभासत्॥

**त्रिष्वध्यक्षेऽपि वल्लभः।**

दयिते च वल्लभः॥

भान्तः।

**किरणप्रग्रहौ रश्मी**

अश्वादिसंयमनी रज्जुः प्रग्रहः॥

**कपिभेकौ प्लवङ्गमौ॥ १३५॥**

प्रवङ्गमोऽप्यत्र॥

**इच्छामनोभवौ कामौ**

निकाम(रेतः)का(मे!म्ये)षु च कामं क्लीबम्॥

**शौर्योद्योगौ पराक्रमौ।**

प्राणमात्रेऽपि पराक्रमः॥

**धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः॥ १३६॥**

षट्सु धर्मः॥

**उपायपूर्व आरम्भ उपधा चाप्युपक्रमः।**

उपायज्ञानपूर्वको यः कार्यारम्भः स उपायपूर्वः। अमात्यशीलपरीक्षोपाय उपधा॥

**वणिक्पथः पुरं वेदो निगमाः**

वणिक्पथो वाणिज्यम्॥

**नागरो वाणिक्॥ १३७॥**

**नैगमौ द्वौ**

नगरे भवो नागरः॥

**बले रामो नीलचारुसिते त्रिषु।**

बले रामो ना, नीलादित्रये त्रिषु॥

**शब्दादिपूर्वो बृन्देऽपि ग्रामः**

शब्दादिपूर्वो ग्रामो बृन्दे। यथा — शब्दग्रामः। विषयग्रामः। अपिना संवसथेऽपि ग्रामः॥

**क्रान्तौ च विक्रमः॥१३८॥**

क्रान्तिः क्रमणम्। पराक्रमो विक्रमः॥

**स्तोमः स्तोत्रेऽध्वरे बृन्दे जिह्मस्तु कुटिलेऽलसे।**

**गुल्मा रुक्सभ्यसेनाश्च**

रुक्सभ्यो गुल्मपतिरिति केचित। सभ्योऽपपाठः, स्तम्ब इत्येव पाठ इत्यन्यः। सेनाभेदः सेना। गुल्मकेऽपि गुल्मः॥

**जामिः स्वसृकुलस्त्रियोः॥१३९॥**

"प्रहरे संयमे यामो यामिः स्वसृकुलस्त्रियोः"

इति रभसः।

"जिह्मस्तु कुटिले मन्दे जामिः स्वसृकुलस्त्रियोः"

इति चवर्गादावजयः॥

**क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु।**

क्षितिर्भूमिः। युक्ते न्याय्ये॥

**त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा॥**

हरिति यथा — शुकः श्यामः। शारिबा श्यामलता। (अनन्तापन?) यस्या[1] मूलम् अनन्तमूलमिति ख्यातम्। निशा रात्रिः॥

**ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु।**

१ 'यन्नस्या' अ॰ पाठः.

"ललाम च ललामं च भूषावालधिवाजिषु ।
चिह्नप्रभावपुण्ड्रेषु प्रधाने ध्वजशृङ्गयोः ॥"

इत्यजयः । अतोऽदन्तमपि ललामम् । पुच्छं लाङ्गूलम् । पुण्ड्रं गवादीनां ललाटे चित्रम् ॥

**सूक्ष्ममध्यात्ममपि**

आत्मन्यधि अध्यात्मम् । परमात्मनीत्यर्थः । स्वल्पेऽपि सूक्ष्मम् ॥

**आदौ प्रधाने प्रथमः**

प्रधाने श्रेष्ठे ॥

**त्रिषु ॥ १४१ ॥**

**वामौ वल्गुप्रतीपौ द्वौ**

मान्तं यावत् त्रिष्वित्यधिकारः । वामो मनोहरः । यथा — वामलोचना । प्रतीपो विपरीतः ॥

**अधमौ न्यूनकुत्सितौ ।**

न्यूनः ऊनः ॥

**जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ॥ १४२ ॥**

परिभुक्तं भुक्तोज्झितम् । यातयामे यद्वयमन्तःस्थम् ॥

मान्तः ।

---

**तुरङ्गगरुडौ तार्क्ष्यौ**

तुरङ्गोऽश्वः ॥

**निलयापचयौ क्षयौ ।**

निलयो गृहम् । अपचयो ह्रासः ॥

**श्वशुर्यौ देवरश्यालौ**

'राजश्वशुराद् यत्' (४. १. १३७) इति यत् । श्वशुर्यः ॥

**भ्रातृव्यौ भ्रातृजद्विषौ ॥ १४३ ॥**

'भ्रातुर्व्यच्च' (४. १. १४४) इति व्यत् । भ्रातृव्यः ॥

**पर्जन्यौ रसदब्देन्द्रौ**

'पृषु सेचने' । 'पर्जन्यः' (उ० ३. १०३) इत्यनेन अन्यप्रत्ययः षकारस्य चवर्गीयो जकारश्च निपात्यते । पर्जन्यः । अर्जेर्वान्यप्रत्ययः पुडागमश्च धातोः । रसदब्दः सशब्दो मेघः ॥

**स्यादर्यः स्वामिवैश्ययोः ।**

स्वामी प्रभुः ॥

**तिष्यः पुष्ये कलियुगे**

पुष्यो नक्षत्रभेदः ॥

**पर्यायोऽवसरे क्रमे ॥ १४४ ॥**

प्रकारेऽपि पर्यायः ॥

**प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।**
**रन्ध्रे शब्दे**

अधीने यथा — 'स्वप्रत्यया वृत्तिरभीतवासः'। हेतौ यथा — 'अपेक्षते प्रत्ययमुत्तमं त्वाम्' । (स ?) शब्दः स(न्ध्य ? न्क्य)जादिः ॥

**अथानुशयो दीर्घद्वेषानुतापयोः ॥ १४५ ॥**

दीर्घद्वेषश्चिरद्वेषः ॥

**स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते ।**

असाकल्यमकार्त्स्न्यम् । नागानां गजानां मध्यमं गतं गमनं नातित्वरया नातिमन्दं सेवितम् ॥

**समयाः शपथाचारकालसिद्धान्तसंविदः ॥ १४६ ॥**

क्रियाकारो निश्चय इति यावत् (?) ॥

१. 'धी' अ. पाठः.

**व्यसनान्यशुभं दैवं विपदित्यनयास्त्रय[1]।**

व्यसनं भ्रंशादिदोषः। अशुभं दैवविशेषणम्॥

**अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽपि**

नाशेऽप्यत्ययः॥

**अथापदि॥ १४७॥**

**युद्धायत्योः संपरायः**

आयतिरागामिकालः॥

**पूज्यस्तु श्वशुरेऽपि च।**

पूजार्हेऽपि पूज्यः॥

**पश्चादवस्थायि बलं समवायश्च संनयौ॥ १४८॥**

सेनायाः पृष्ठस्थायि बलम्। समवायः समूहः।

"समुन्नयः समुदये पृष्ठस्थायिबलेऽपि च"

इति त्वजयः॥

**सङ्घाते सन्निवेशे च संस्त्यायः**

सन्निवेशो निकर्षणम्॥

**प्रणयास्त्वमी।**

**विस्रम्भयाच्ञाप्रेमाणः**

विस्रम्भः परिचयः॥

**विरोधेऽपि समुच्छ्रयः॥ १४९॥**

विरोधो वैरम्। उन्नतावपि समुच्छ्रयः॥

**विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि।**

यस्य यो ज्ञात इति येन य एकान्तं परिशीलितो निषेवित इति यावत्। शब्दादिकाः शब्दस्पर्शरूपरसगन्धाः॥

---

1. 'यि द्न्वब' क. ख. ङ. च. छ., यिमुदन्वब' घ. पाठः.

**निर्यासेऽपि कषायोऽस्त्री**

निर्यासः क्वाथरसः ।

> "रसभेदेऽङ्गरागे च निर्यासे च विलेपने ।
> कषायोऽस्त्री त्रिलिङ्गस्तु सुरभौ रुधिरेऽपि च ॥"

इति रभसः ॥

**सभायां च प्रतिश्रयः ॥ १८० ॥**

आश्रयमन्दिरयोरपि प्रतिश्रयः ॥

**प्रायो भूम्न्यन्तगमने**

भूम्नि बाहुल्ये । अन्तं गम्यतेऽनेनेत्यन्तगमनम् । संन्यासपूर्वकमनशनम् ॥

**मन्युर्दैन्ये क्रतौ क्रुधि ।**

'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरमालायां पुंस्काण्डम् ॥

**रहस्योपस्थयोर्गुह्य**

कमठेऽपि गुह्यः पुमान् ॥

**सत्यं शपथतथ्ययोः ॥ १८१ ॥**

युगभेदेऽपि सत्यम् ॥

**वीर्यं बले प्रभावे च**

बलं रेतः ॥

**द्रव्यं भव्ये गुणाश्रये ।**

भव्यो भाग्यसंपन्नः ॥

**धिष्ण्यं स्थाने गृहे भेऽग्नौ**

भे नक्षत्रे । 'गृहे धिष्ण्यः पुमानि'ति शाश्वतः ॥

**भाग्यं कर्म शुभाशुभम् ॥१५२॥**

शुभाशुभमिति सङ्घातविगृहीतम्। तेन न केवलमशुभं शुभं च॥

**कशेरुहेम्नोर्गाङ्गेयं**

कशेरु स्वनामप्रसिद्धम् ॥

**विशल्या दन्तिकापि च।**

दन्तिका दन्तीमूलम्। ओषधिभेदे च विशल्या ॥

**वृषाकपायी श्रीगौर्योः**

वृषाकपेर्भार्या वृषाकपायी। 'वृषाकप्यग्नि—' (४. १. ३७) इत्यादिना ङीबैकारादेशौ ॥

**अभिख्या नामशोभयोः ॥ १५३ ॥**

कीर्त्तावप्यभिख्या ॥

**आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम्।**
**उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः॥ १५४॥**

आरम्भादिषु नवसु क्रियाशब्दः ॥

**छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः।**

अनातप आतपाभावः ॥

**कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने॥ १५५ ॥**

मध्येभबन्धनं करिकक्षरज्जुः। त्रिकाण्डशेषे तु कक्षा मूर्धन्यान्ते पठ्यते ॥

**कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः।**

देवता यज्ञदेवताविशेषः। धनस्त्रीभूम्यादिभिर्भेदनीयो यः परराष्ट्रे पुरुषः, तत्र वर्तमानः कृत्यशब्दो वाच्यलिङ्गः। इतः परं यान्तावधि त्रिष्वित्यनुवर्तते ॥

**जन्यः स्याज्जनवादेऽपि**

जामातृस्निग्धेऽपि जन्यः ॥

**जघन्योऽन्त्येऽधमेऽपि च ॥ १५६ ॥**

अन्त्ये पश्चाद्भवे ॥

**गर्ह्याधीनौ च वक्तव्यौ**

गर्ह्यः कुत्सितः । अधीनो वचनग्राही ॥

**कल्यौ सज्जनिरामयौ ।**

सज्जं संभृतम् । निरामयो नीरुक् ॥

**आत्मवाननपेतोऽर्थादर्थ्यौ**

आत्मवान् विज्ञः । 'अर्थ्यौ विज्ञार्थशालिनोः' इत्यजयः । 'धर्मपथ्यर्थन्यायादनपेते' (४. ४. ९२) इति यत् । अर्थ्यः ॥

**पुण्यं तु चार्वपि ॥ १५७ ॥**

सुकृतेऽपि पुण्यम् ॥

**रूप्यं प्रशस्ते रूपेऽपि**

'रूपादाहतप्रशंसयोर्यप्' (५. २. १२०) इति यप् । रूप्यम् ॥

**वदान्यो वल्गुवागपि ।**

व(र्ण ? ल्गु)वाग् वाग्मी । दानशीलेऽपि वदान्यः ॥

**न्याय्येऽपि मध्यं**

न्याय्यमुचितम् । आद्यन्ताभ्यामन्यश्च मध्यः ॥

**सौम्यं तु सुन्दरे सोमदैवते ॥ १५८ ॥**

सोमदैवते यथा—सौम्यं हविः । 'सोमाट्ट्यण्' (४. २. ३०) इति ट्यण् ॥

निवहावसरौ वारौ

निवहः समूहः ॥

संस्तरौ प्रस्तराध्वरौ ।

वल्कलदर्भादिशय्या प्रस्तरः ॥

गुरू गीर्पतिपित्राद्यौ

गीर्पतिः सुरमन्त्री ॥

द्वापरौ युगसंशयौ ॥ १५९ ॥

युगं तृतीयम् ॥

प्रकारौ भेदसादृश्ये

भेदे नानाविधे ॥

आकाराविङ्गिताकृती ।

आकृतिः संस्थानम् ॥

किंशारू धान्यशूकेषू

इषुः शरः । धनुश्च किंशारुः, ना ॥

मरू धन्वधराधरौ ॥ १६० ॥

धन्वा निर्जलो देशः । धराधरो गिरिः ॥

अद्रयो द्रुमशैलार्काः

अर्को रविः ॥

स्त्रीस्तनाब्दौ पयोधरौ ।

अब्दो मेघः ॥

ध्वान्तारिदानवा वृत्राः

स वृत्रो य इन्द्रेण हतः ॥

**बलिर्हस्तांशवः कराः ॥ १६१ ॥**

राजग्राह्यो भागो बलिः ॥

**प्रदरा भङ्गनारीरुग्बाणाः**

नारीरुग् रक्तप्रवाहः ॥

**अस्राः कचा अपि ।**

नेत्राम्बुरुधिरयोरप्यस्रः ॥

**अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ ॥ १६२ ॥**

प्राप्तकालेऽपि यस्य गोः शृङ्गं नोत्पद्यते, यस्य वा पुरुषस्य कालेऽपि न श्मश्रुसम्भवः, तौ तूबरौ ॥

**स्वर्णेऽपि राः**

'रादेवीर्विहले (?) स्वर्ण' इति रुद्रः ॥

**परिकरः पर्यङ्कपरिवारयोः ।**

"भवेत् परिकरो बृन्दे परिवारविवेकयोः ।
आरम्भगात्रिकाबन्धपर्यङ्केषु परिच्छदे ॥"

इत्यजयः । परिवारः परिजनः ॥

**मुक्ताशुद्धौ च तारः स्यात्**

मुक्तायाः शुद्धिः धवलता । अत्युच्चस्वरोऽपि तारः ॥

**शारो वायौ स तु त्रिषु ॥ १६३ ॥**

**कर्बुरे**

कर्बुरे शबले त्रिषु । शारः तालव्यादिः ॥

१. 'भे' क. छ. ट. पाठः. २. 'वि' ञ., 'वीतिह' ख., 'विः ह' ट. पाठः.

* 'रा दाने विभ्रमे स्वर्णे' इति पाठः स्यात् ।

**अथ प्रतिज्ञाजिसंविदापत्सु संगरः।**

आजिः युद्धम्। संवित् क्रियाकारः। आपद् विपत्तिः॥

**वेदभेदे गुप्तिवादे मन्त्रः**

गुप्तिवादे सम्यगालोचने॥

**मित्रो रवावपि॥१६४॥**

सुहृदि मित्रं क्लीबम्॥

**मखेषुयूपखण्डेऽपि स्वरुः**

इषुः काण्डम्। दम्भोलौ स्वरुः॥

**गुह्येऽप्यवस्करः।**

गूढेऽप्यवस्करः॥

**आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते॥ १६५॥**

तूर्यरवे साङ्ग्रामिके॥

**अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च।**

अपचिकीर्षयाभिक्रम्याक्रमणमभियोगः॥

**स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे॥ १६६॥**

जङ्गमः परिजनः।

"(परीवारः) परिजने खड्गकोषे परिच्छदे"

इति रुद्रः॥

**विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्।**

विटपी वृक्षः। 'वृक्षासनयोर्विष्टर.' (८. ३. ९३) इति षत्वम्॥

**द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे॥१६७॥**

निकटवाची अनन्तरशब्दः। अनन्तरे द्वाःस्थे प्रतीहारिशब्दा णिन्यन्त

[illegible]

**विपुले नकुले विष्णौ बभ्रुः स्यात् पिङ्गले त्रिषु ।**

विपुल इति नकुलविशेषणम् ॥

**सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥ १६८ ॥**

बलं सामर्थ्यम् । स्थिरांशः खदिरसारादिः । न्याय्ये युक्ते क्लीबम् । वरे श्रेष्ठे ॥

**दुरोदरो द्यूतकरे पणे द्यूते दुरोदरम् ।**

द्यूतकरोऽक्षदेवी, तत्र पुंसि । अन्यत्र क्लीबम् ।

"आश्रित्य दुर्गं गिरिकन्दरोदरं क्रीडन्नमुष्मिन् सततं दरोदरम्" इति निरुकारं गोवर्धनः पठति ॥

**महारण्ये दुर्गपथे कान्तारः पुन्नपुंसकम् ॥ १६९ ॥**

दुर्गपथे अनवगम्यवने ॥

**मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।**

अन्यशुभद्वेषः परसंपत्तावसहमानता । तद्वति परसंपत्तिद्वेषिणि ॥

**देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥ १७० ॥**

देवात् सकाशाद् वृते वाञ्छिते । मनाक्प्रिये मनागिष्टे । जामातर्यपि वरः ॥

**वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ।**

घटे कलशे ॥

**ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ॥ १७१ ॥**

चमूजघने सेनायाः पश्चाद्भागे ॥

**यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।**
**शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ १७२ ॥**

चतुर्दशसु हरिः ॥

**शर्करा कर्परांशेऽपि**

कर्परांशो झिकराख्यः । शर्कराश्म(री?)रोगयोश्च ॥

**यात्रा स्याद् यापने गतौ ।**

यापनं स्नानभोजनादिना वर्तनम् ॥

**इरा भूवाक्सुराप्सु स्यात्**

सुरा मद्यम् ॥

**तन्द्रा निद्राप्रमीलयोः ॥ १७३ ॥**

प्रमीला मोहप्राया ॥

**धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ।**

मात्रा उपमिता उपमाता इति व्याख्याता ॥

**क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ॥ १७४ ॥**

**त्रिषु क्रूरेऽधनेऽल्पेऽपि क्षुद्रः**

अङ्गविकला व्यङ्गा । सरघा मधुमक्षिका ॥

**मात्रा परिच्छदे ।**

**अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे ॥ १७५ ॥**

परिच्छदः परिकरः । यथा — कापालिकस्य मात्रा । अल्पे यथा— शाकस्य मात्रा । परिमाणे यथा — किं हस्तिमात्रोऽङ्कुशः । एषु मात्रा स्त्रियाम् । कार्त्स्न्ये — जीवमात्रं न हिंस्यात् । अवधारणे — पयोमात्रं भुङ्क्ते । अनयोः क्लीबम् ॥

**आलेख्याश्चर्ययोश्चित्रं**

आलेख्यं चित्रकरकर्म ॥

**कलत्रं श्रोणिभार्ययोः**

श्रोणिः कटीभागः ॥

---

१. 'सि' ख. पाठः. २. 'स्का' क. ख. ग. घ. ङ. च. छ. ट., 'का' ञ. पाठः,

**योग्यभाजनयोः पात्रं**

योग्यः शक्तः । तीरद्वयान्तरे पात्रम् ॥

**पत्रं वाहनपक्षयोः ॥ १७६ ॥**

वाहनमश्वादि । पक्षो गरुत् । पर्णेऽपि पत्रम् ॥

**निदेशग्रन्थयोः शास्त्रं**

निदेश आज्ञा ॥

**शस्त्रमायुधलोहयोः ।**

आयुधं खड्गादि ॥

**स्याज्जटांशुकयोर्नेत्रं**

जटा वृक्षमूलम् । अंशुकं नेत्राख्यम् । लोचनमन्थकर्षणयोरपि नेत्रम् ॥

**क्षेत्रं पत्नीशरीरयोः ॥ १७७ ॥**

केदारसिद्धस्थानयोश्च क्षेत्रम् ॥

**मुखाग्रे क्रोडहलयोः पोत्रं**

सूकरमुखाग्रे हलमुखाग्रे च पोत्रम् ॥

**गोत्रं च नाम्नि च ।**

"गोत्रं कुले बले नाम्नि गोत्रस्तु धरणीधरे ।
गोत्रा भुवि गवां वृन्दे"

इत्यजयः ॥

**सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ॥ १७८ ॥**

आच्छादने छदने ॥

**अजिरं विषये कायेऽपि**

विषयो रूपादिः । अङ्गणेऽप्यजिरम् ॥

**अम्बरं व्योम्नि वासासि ।**

सुगन्धिद्रव्यभेदेऽप्यम्बरम् ॥

**चक्रं राष्ट्रेऽपि**

"चक्रः कोके व्रजे पुंसि क्लीबे सैन्यरथाङ्गयोः ।
ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते ॥"

इति त्रिकाण्डशेषः ॥

**अक्षरं तु मोक्षेऽपि**

'अक्षरं ब्रह्मवर्णयोरि'ति रुद्रः ॥

**क्षीरमप्सु च ॥ १७९ ॥**

दुग्धेऽपि क्षीरम् ॥

**स्वर्णेऽपि भूरिचन्द्रौ द्वौ**

प्रचुरेऽपि भूरिस्त्रिषु । स्वर्णपर्याये त्वस्य रूपभेदाद् क्लीबत्वमुक्तम् ।

"इन्दुकर्पूरकम्पिल्लाश्चन्द्राश्चन्द्रोऽपि हेमनि"

इति रुद्रः ॥

**द्वारमात्रे तु गोपुरम् ।**

पूर्द्वारे कैवर्तीमुस्तके च गोपुरम् ॥

**गुहादम्भौ गह्वरे द्वे**

गुहा गुहा इति ख्याता । 'गह्वरी गुहे'ति तृणादिवृत्तिः ॥

**रहोऽन्तिकमुपह्वरे ॥ १८० ॥**

रहो विजनम् । अन्तिकं समीपम् ॥

**पुरोऽधिकमुपर्यग्राणि**

पुर इति पुरस्तात् । प्रलयविनाशेऽप्यग्रम् ॥

**अगारे नगरे पुरम् ।**

**मन्दिरं च**

यथा पुरमगारे नगरे च तथा मन्दिरमप्युभयोः ॥

**अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥ १८१ ॥**

विषयो जनपदः । उपद्रवो नागरादिः ॥

**दरोऽस्त्रियां भये श्वभ्रे**

श्वभ्रो गर्तः ॥

**वज्रोऽस्त्री हीरके पवौ ।**

पविर्वज्रम् ॥

**तन्त्रं प्रधाने सिद्धान्ते सूत्रवापे परिच्छदे ॥ १८२ ॥**

प्रधाने यथा — स्वतन्त्रः । कुविन्दा येन तन्तुवापं कुर्वन्ति, स सूत्रवापः । परिच्छदे पाचकादौ(?) ॥

**औशीरं चामरे दण्डेऽप्यौशीरं शयनासने ।**

चमरस्यायं चामरो दण्डः । आसनं पीठादि ॥

**पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ॥ १८३ ॥**
**व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ।**

करिहस्ताग्रेऽङ्गुलौ । वाद्यभाण्डमुखं मुरजादिमुखम् । खड्गस्य फलं मध्यम् ॥

**अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ॥ १८४ ॥**
**छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ।**

अवकाशे — 'मृणालसूत्रान्तरमप्यलभ्यम्' । अन्तर्धौ — 'ज्योत्स्नान्तराणीव कलान्तराणि' । भेदे — 'यदन्तरं वायसवैनतेययोः' । तादर्थ्ये — तवान्तरे[2] ऋणं गृहीतम् । छिद्रं रन्ध्रम् ॥

१. 'वायका' ग. ङ. च. छ. ज., 'वायिका' क. ख. ट., 'पायिका' घ. पाठः.
२. 'रेण ऋ' ट. पाठः.

**मुस्तेऽपि पिठरं**

"स्थाल्यां ना पिठरः क्लीबं मुस्तमन्थनदण्डयोः" ॥

**राजकशेरुण्यपि नागरम् ॥ १८५ ॥**

राजकशेरु विशिष्टं तृणम् । शुण्ठ्यां च क्लीबम् । विदग्धे तु नागरः ॥

**शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ।**

शार्वरं तालव्यादि । घातुको मारणशीलः । अतः परं वाच्यलिङ्गग्रहणं रान्तान्तमनुवर्तते ॥

**गौरोऽरुणे सिते पीते**

चन्द्रेऽपि गौरः ॥

**व्रणकार्यप्यरुष्करः ॥ १८६ ॥**

भल्लातक्यां चारुष्करः ॥

**जठरः कठिनेऽपि स्याद्**

"उदरे जठरो न स्त्री बद्धकक्खटयोस्त्रिषु"

इति रुद्रः ॥

**अधस्तादपि चाधरः ।**

हीने त्वधरास्त्रिषु । ओष्ठे तु ना ॥

**अनाकुलेऽपि चैकाग्रः**

अप्येकतानोऽप्येकाग्रः ॥

**व्यग्रोऽन्यासक्त आकुले ॥ १८७ ॥**

अन्यासक्तो दन्त्यवान् ॥

**उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्याद्**

उदीच्यो देशादिः । प्रतिवाक्ये तु उत्तरं क्लीबम् ॥

**अनुत्तरः ।**

**एषां विपर्यये श्रेष्ठे**

उपर्यादीनां विपर्यये अनुत्तरः । नञ्समासः ॥

**दूरानात्मोत्तमाः पराः ॥ १८८ ॥**

अ(न्या?ना)त्मनि यथा — परस्य भोजनमिच्छति ग्लानः ॥

**स्वादुप्रियौ च मधुरौ**

रसेऽपि मधुरः पुंसि । रसवति त्रिषु । विषेऽपि क्लीबम् ॥

**क्रूरौ कठिननिर्दयौ ।**

भयङ्करेऽपि क्रूरः ॥

**उदारो दातृमहतोः**

दक्षिणेऽप्युदारः ॥

**इतरस्त्वन्यनीचयोः ॥ १८९ ॥**

नीचः पामरः ॥

**मन्दस्वच्छन्दयोः स्वैरः**

मन्दः मन्थरः ॥

**शुभ्रमुद्दीप्तशुक्लयोः ।**

दीप्तम् उद्दीप्तम् ॥

रान्तः ।

**चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ॥ १९० ॥**

चूडा शिखा । किरीटं रत्नादिघटितम्[1] । संयताः कचाः धम्मिल्लः ॥

**द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ।**

मातङ्गो हस्ती ॥

---

१. 'ह' क. ख. ग. ङ. छ. ट. ठ. पाठः.

**कृतान्तानेहसोः कालः**

अनेहा समयः ॥

**चतुर्थेऽपि युगे कलिः ॥ १९१ ॥**

युद्धेऽपि कलिः ॥

**स्यात् कुरङ्गेऽपि कमलः**

पद्मजलयोः कमलं क्लीबम् ॥

**प्रावारेऽपि च कम्बलः ।**

प्रावारे मेषलोमादिमये । उत्तरासङ्गसास्नानागविशेषाणामपि कम्बलः ॥

**करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् ॥ १९२ ॥**

करो राजप्रत्यादेयः । उपहारः पूजोपहारः । प्राण्यङ्गजमिति जराश्लथं चर्म, यौवनादिकृतमुदरे जटिकाकारं[1] च चर्म ॥

**स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ।**

सीरी बलभद्रः ॥

**वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ॥ १९३ ॥**

वातसमूहो वात्या ।

"वातूलो वातसङ्घाते वातले मरुतोऽसहे"

इति व्याडिः ॥

**भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः ।**

शठः खलः । श्वापदो व्याघ्रः ।

**मलोऽस्त्री पापविट्किट्टानि**

1. 'रं चर्म' ख. छ. ट. पाठः.

पापम् अपुण्यम् । विट् गू(ढं१थम्) । किट्टानि स्वेदशिङ्घाणकादीनि ॥

**अस्त्री शूलं रुगायुधम् ॥ १९४ ॥**

रुक् शूलम् । आयुधं त्रिशूलादि । वेश्यायां तु शूला ॥

**शङ्कावपि द्वयोः कीलः**

शङ्कुः कीलकः । कफोणिघातज्वालयोस्तु कीलः ॥

**पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ।**

अश्रिः कोणः ॥

**कला शिल्पे कालभेदेऽपि**

चित्रं गीतिचित्रादिनैपुण्यम् (?) । कालभेदो निमेषाणां चत्वारिंशदधिकपञ्चशतानि ॥

**आली सख्यावली अपि ॥ १९५ ॥**

आवलिः पङ्क्तिः । सेतौ चालिः ॥

**अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।**

अब्धेरम्बुविकृतिर्जलवृद्धिः । कालो घटिकादिः । मर्यादा सीमा ॥

**बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ॥ १९६**

शितिः कृष्णः । गावः स्त्रीगव्यः ।

"कृत्तिकासु स्त्रियां भूम्नि बहुला बहुला गवि ।
एलायां च पुमानग्नौ कृष्णपक्षे शितौ त्रिषु ॥"

इति रभसः ॥

**लीला विलासक्रिययोः**

केलौ च लीला ॥

**उपला शर्करापि च ।**

१. 'धं' ठ. पाठः. २. 'त्रा' ख. ङ. च. पाठः.

शर्करा खण्डविकारः ॥

"उपलौ रत्नपाषाणावुपला शर्करापि च"

इति रुद्रः ॥

**शोणितेऽम्भसि कीलालं**

शोणितं रक्तम् ॥

**मूलमाद्ये शिफाभयोः ॥१९७॥**

आद्यं निजम् ॥

"मूलं निजे शिफायां स्यान्नक्षत्रान्तिकयोरपि"

इत्यजयः ॥

**जालं समूह आनायो गवाक्षक्षारकावपि ।**

आनाये यथा — 'जाले पुनर्निपतितः शफरो वराकः' इति । अव्यक्ता कलिका क्षारकः ॥

**शीलं स्वभावे सद्वृत्ते**

शोभनं वृत्तं सद्वृत्तम् ॥

**सस्ये हेतुकृते फलम् ॥ १९८ ॥**

सस्यं धान्यादि । हेतुकृते यथा — प्रमाणफलमनुभवः ॥

**छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ।**

छदिः गृहच्छादनम् ॥

**अधःस्वरूपयोरस्त्री तलं**

अधोऽर्थे रसातलम् । स्वरूपे करतलम् ॥

**स्याच्चामिषे पलम् ॥ १९९ ॥**

'पलमुन्मानमांसयोरि'ति रुद्रः ॥

**और्वानलेऽपि पातालं**

रसातलेऽपि पातालम् ॥

**चेलं वस्त्रेऽधमे त्रिषु ।**

वस्त्रे क्लीबं चेलम् । अधमे यथा — ब्राह्मणचेली ॥

**कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥ २०० ॥**

शङ्कुकीर्णश्वभ्रं कीलकाकीर्णगर्तः ॥

**निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ।**

निर्णीते केवलं क्लीबम् । यथा —

"केवलं दन्तभङ्गाय दन्तिनः शैलताडनम्" ।

एकस्मिन् यथा — केवलो व्रजति । कृत्स्ने सकले यथा — केवला भिक्षवः ॥

**पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ॥ २०१ ॥**

पर्याप्तिः सामर्थ्यम् । शिक्षितो निपुणः ॥

**प्रवालमङ्कुरेऽप्यस्त्री**

"वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे"

इति रभसः ॥

**त्रिषु स्थूलं जडेऽपि च ।**

जडोऽबुद्धिः । पीवरेऽपि स्थूलम् ॥

**करालो दन्तुरे**

दन्तुरमुन्नतावनतम् ॥

**चारौ दक्षे च पेशलः ॥ २०२ ॥**

चारुर्जन्ममनोहरः ॥

**मूर्खेऽर्भकेऽपि बालः स्यात्**

मूर्खार्भकावज्ञशिशू । हस्तिघोटकयोर्बालधौ कुन्तले च पुमान् । ह्रीबेरे क्लीबं बालम् ॥

**लोलश्चलसतृष्णयोः ।**

सतृष्णः साकाङ्क्षः । जिह्वालक्ष्म्योस्तु लोला । (शाखी ?) ॥

लान्तः ।

---

**दवदावौ वनारण्यवह्नी**

वनारण्याग्न्योर्दवो दावश्च । बाहुलकात् पचाद्यचि दवः । दुनोतेः 'दुन्योरनुपसर्गे' (३. १. १४२) इति णः । दावः ॥

**जन्महरौ भवौ ॥ २०३ ॥**

जन्म उत्पत्तिः । संसारेऽपि भवः ॥

**मन्त्री सहायः सचिवौ**

सहायः निजः ॥

**पतिशाखिनरा धवाः ।**

शाखी शाखिविशेषः ॥

**अवयः शैलमेषार्काः**

अर्को रविः ॥

**आज्ञाह्वानाध्वरा हवाः ॥ २०४ ॥**

आह्वानमाहूतिः । 'हवतेश्चोपसंख्यानमि'ति णः । हावः ॥

**भावः सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु ।**

सत्त्वे पदार्थे । चेष्टा क्रिया । जन्मनि यथा — बीजादङ्कुरस्य भावः ॥

**स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ॥ २०५ ॥**

उत्पाद उत्पत्तिः । गर्भमोचनं प्रसूतिः ॥

**अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ।**

"अविश्वासेऽपलापेऽपि निकृतावपि निह्नवः"

इति रुद्रश्च ॥

**उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ॥ २०६ ॥**

उत्सेकः उद्धतिः । अमर्षोऽक्षमा । इच्छाप्रसर इच्छाया अतिरोहः । मह आनन्दकालः ॥

**अनुभावः प्रभावे च सतां च मतिनिश्चये ।**

सतां मतेरभिप्रायस्य निश्चये निश्चायके । अनुभावो भावबोधकः । यथा — देवानुभावः । सतामिति किं, चौरस्य प्रभावः ॥

**स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ॥ २०७ ॥**

जन्मनो हेतुः कारणम् । आद्योपलब्धये प्रथमज्ञानार्थं, स्थानम् । यथा — वाल्मीकिः संस्कृतप्रभवः । हिमालयो गङ्गाप्रभवः ॥

**शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ।**
**ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु ॥ २०८ ॥**

भभेदे नक्षत्रभेदे ॥

**स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ।**

ज्ञातौ स्वः पुंसि ॥

**स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ॥ २०९ ॥**

स्त्रीकटीवस्त्रबन्धो ग्रन्थिः । 'नीवीं प्रति प्रणिहिते तु करे प्रियेण' । परिपणो वणिजां मूलधनम् ॥

**शिवा गौरीफेरवयोः**

फेरवः सृगालः ॥

**द्वन्द्वं कलहयुग्मयोः ।**

कलहे युद्धे ॥

**द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ॥ २१० ॥**

द्रव्ये वस्तुनि। असवः प्राणाः। तथा च निस्सत्त्वो मनुष्यः। सत्त्वशब्दो द्वितकारवान् ॥

**क्लीबं नपुंसके षण्डे वाच्यलिङ्गमविक्रमे।**

षण्डः तृतीया प्रकृतिः। अत्र वर्तमानः क्लीबशब्दो नपुंसकलिङ्गः। अविक्रमोऽलसः।

"अस्त्री नपुंसके क्लीबं वाच्यलिङ्गमविक्रमे"

इति तु रुद्रः ॥

वान्तः।

---

**द्वौ विशौ वैश्यमनुजौ**

वैश्यो विट् ॥

**द्वौ चराभिमरौ स्पशौ ॥ २११ ॥**

चरो गूढपुरुषः। अभिमरः सङ्ग्रामः ॥

**द्वौ राशी पुञ्जमेषाद्यौ**

मेषाद्यो मेषवृषमिथुनप्रभृतिः ॥

**द्वौ वंशौ कुलमस्करौ।**

मस्करो वेणुः ॥

**रहःप्रकाशौ वीकाशौ**

प्रकाशः स्फुटः ॥

**निर्वेशो भृतिभोगयोः ॥ २१२ ॥**

**कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु।**

क्षुद्रः कृपणः ॥

**पदे लक्ष्ये निमित्तेऽपदेशः स्यात्**

पदे व्याजे ॥

कुशमप्सु च ॥ २१३ ॥

दशावस्थानेकविधापि

अनेकविधावस्था बाल्यादिः ।

"दशावस्था(ववस्थायां ? दीपवर्त्योः) वस्त्रांशे भूम्नि पुंस्त्रियोः"

इति रभसः ॥

आशा तृष्णापि चायता ।

आयता दीर्घा तृष्णा । दिगप्याशा ॥

वशा स्त्री करिणी च स्याद्

वशा आयत्ता ।

"वशा वन्ध्यगवीयूथ्योरायत्तायोषितोरपि"

इत्यजयः ॥

दृग् ज्ञाने ज्ञातरि त्रिषु ॥ २१४॥

ज्ञाने बुद्धौ ॥

स्यात् कर्कशः साहसिकः कठोरामसृणावपि ।

कठोरो दृढो निर्दयश्च । अमसृणो दुस्पर्शश्च ॥

प्रकाशोऽतिप्रसिद्धेऽपि

'प्रकाशः स्फुटरोचिषोः' इत्यजयः । आतपेऽपि प्रकाशः ॥

शिशावज्ञे च बालिशः ॥ २१५ ॥

अज्ञो मूर्खः ॥

शान्तः ।

---

सुरमत्स्यावनिमिषौ

सुरो देवः ॥

**पुरुषावात्ममानवौ।**

आत्मा क्षेत्रज्ञः ॥

**काकमत्स्यात्खगौ ध्वाङ्क्षौ**

मत्स्यात्खगः बकः। 'ध्वाङ्क्षौ च (काकवासनौ? बकवायसौ)' इत्यमरमाला ॥

**कक्षौ तु तृणवीरुधौ॥ २१६ ॥**

वीरुत् लता ॥

**अभीषुः प्रग्रहे रश्मौ**

प्रग्रहोऽश्वादीनां मुखरज्जुः। रश्मिः किरणः। हरिप्रबोधयमकात् तालव्यान्तोऽप्यभीशुः ॥

**प्रैषः प्रेषणमर्दने।**

मर्दनं पीडा। 'प्रैषः प्रेषणपीडयोः' इत्यजयः ॥

**पक्षः सहायेऽपि**

पञ्चदशदिनात्मकेऽपि काले पक्षः ॥

**उष्णीषं शिरोवेष्टकिरीटयोः ॥ २१७ ॥**

शिरोवेष्टो वस्त्रादिमयः ॥

**शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः।**

शुक्लो बहुलशुक्रः ॥

**कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः॥२१८॥**

अर्थौघो धनसमूहः ॥

**द्यूतेऽक्षे शारिफलकेऽप्याकर्षः**

अक्षः पाशकः ॥

---

१. 'स्त्रा' ग. पाठः.

**अथाक्षमिन्द्रिये ।**

**ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे ॥ २१९ ॥**

द्यूताङ्गे पाशकादौ । व्यवहारे यथा — प्राड्विवाकाक्षदर्शकौ । कलिद्रुमो बिभीतकः ॥

**कर्षूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनी।**

कुल्याभिधायिनी नद्यभिधायिनी ।

"करीषाग्नौ पुमान् कर्षूः कुल्यायामपि च स्त्रियाम्"

इति रभसः ॥

**पुंभावे तत्क्रियायां च पौरुषं**

पुरुषस्य भावे पुरुषस्य क्रियायां च ।

"उर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ।
भावे कर्मणि च क्लीबं पुरुषस्य च तेजसि" ॥

**विषमप्सु च ॥ २२० ॥**

"स्त्री विषातिविषायां स्यात् क्लीबे क्ष्वेडे जलेऽपि च" ॥

**उपादानेऽप्यामिषं स्याद्**

उत्कोचादिकेषूपादानम् । मत्स्येऽप्यामिषम् ॥

**अपराधेऽपि किल्बिषम् ।**

**स्याद् वृष्टौ लोकधात्र्यंशे वत्सरे वर्षमस्त्रियाम् ॥ २२१ ॥**

लोकधात्र्यंशो भारतवर्षादिः ।

"पुन्नपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु"

इति रुद्रः ॥

**प्रेक्षा नृत्येक्षणं प्रज्ञा**

नृत्तस्येक्षणं वीक्षणम् । प्रज्ञा धीः ॥

**भिक्षा सेवार्थना भृतिः ।**

अर्थना याच्ञा ॥

**त्विड् शोभापि**

'कान्तौ वाचि रुचौ त्विट् स्त्री' इति रभसः ॥

**त्रिषु परे**

परे षान्तास्त्रिषु ।

**न्यक्षं कार्त्स्न्यनिकृष्टयोः ॥**

कार्त्स्न्यं साकल्यम् । निकृष्टोऽधमः । 'न्यक्षो कार्त्स्न्यनिकृष्टावि'त्यमरमाला ॥

**प्रत्यक्षेऽधिकृतेऽध्यक्षः**

अधिकृतो ग्रामादिष्वधिकृतः ॥

**रूक्षस्त्वप्रेमण्यचिक्कणे ।**

अप्रेम्णि प्रेमशून्ये ॥

पान्तः

**रविश्वेतच्छदौ हंसौ**

श्वेतच्छदो हंसः ॥

**सूर्यवह्नी विभावसू ॥ २२३ ॥**

वह्निः अग्निः ॥

**वत्सौ तर्णकवर्षौ द्वौ**

तर्णको गोपोतः । वर्षो वत्सरः ॥

**सारङ्गाश्च दिवौकसः ।**

सारङ्गाश्चातकाः । देवाश्च दिवौकसः ॥

**शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ॥ २२४ ॥**

शृङ्गारादयो नव नाट्यरसाः । विषं क्ष्वेडं जलं च । वीर्यं पारतः । गुणे तिक्तादौ । रागो रक्तिः ॥

**पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ।**

"शेखरे कर्णपूरेऽस्त्री स्यादुत्तंसोऽवतंसवत्"
इति रुद्रः ॥

**देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ॥ २२५ ॥**

रश्मिः प्रग्रहः किरणं च । रत्नधनयोः क्लीबं वसु ॥

**विष्णौ च वेधाः**

ब्रह्मणि पण्डिते च वेधाः ॥

**स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ।**

हिताशसा अभीष्टाशंसनम् ॥

**लालसे प्रार्थनौत्सुक्ये**

"तृष्णातिरेके वाञ्छायामौत्सुक्ये लालसा द्वयोः"
इति रुद्रः ॥

**हिंसा चौर्यादिकर्म च ॥ २२६ ॥**

आदिना त्रासनबन्धनादिविधेऽपि हिंसा ॥

**प्रसूरश्वापि**

अश्वा वडवा । माता च प्रसूः ॥

**भूद्यावौ रोदस्यौ रोदसी च ते ।**

भूद्यावौ सहिते विगृहीते च रोदसीरोदःशब्दयोर्वाच्ये । तथाचाजयः—

"रोदसी रोदसा सार्धं पृथ्वीस्वर्गे दिवि क्षिताविती"
इति ॥

**ज्वालाभान्वोर्न पुंस्यर्चिः**

मयूखो भानुः ॥

**ज्योतिर्भद्योतदृष्टिषु ॥ २२७ ॥**

"ज्योतिर्ना भास्करेऽग्नौ च क्लीबं भद्योतदृष्टिषु"
इति रुद्रः ॥

**पापापराधयोरागः**

आगः क्लीबम् ॥

**खगबाल्यादिनोर्वयः ।**

खगः पक्षी । बाल्यादि यौवनादि ॥

**तेजःपुरीषयोर्वर्चः**

वर्चः क्लीबम् ॥

**महस्तूत्सवतेजसोः ॥ २२८**

तेजो रश्मिः ॥

**रजो गुणे च स्त्रीपुष्पे**

गुणः रज इति ख्यातः आत्मगुणः । स्त्रीपुष्पम् आर्तवम् ॥

**राहौ ध्वान्ते गुणे तमः**

गुणे तमआख्ये आत्मगुणे ॥

**छन्दः पद्येऽभिलाषे च**

अभिलाष इच्छा । वेदेऽपि छन्दः ॥

**तपः कृच्छ्रादिकर्म च ॥ २२९ ॥**

सान्तपनादिकं कृच्छ्रं व्रतम् । धर्मेऽपि तपः'। शिशिरर्तुमाघयोस्तु
पुमान् ॥

**सहो बलं सहा मार्गः**

सहो बलम् । मार्गे सहाः पुमान् ॥

**नभः खं श्रावणो नभाः ।**

खमाकाशम् ॥

**ओकः सद्माश्रयश्चौकाः**

आश्रय इत्याश्रयमात्रम् ॥

**पयः क्षीरं पयोऽम्बु च ॥२३०॥**

क्षीरं दुग्धम् ॥

**ओजो दीप्तौ बले**

अवष्टम्भेऽप्योजः ॥

**स्रोत इन्द्रिये निम्नगारये ।**

*इन्द्रिये ॥

**तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि**

बलं पराक्रमः ॥

**अतस्त्रिषु ॥२३१॥**

अतः परे सान्तास्त्रिषु ॥

**विद्वान् विदंश्च**

विदन् प्राज्ञः । आत्मवित्पण्डितयोरपि विद्वान् ॥

**बीभत्सो हिंस्रोऽपि**

हिंस्रो हिंसाशीलः ।

"बीभत्सो विकृते पार्थे क्रूरे पापिघृणात्मनोः"

इत्यजयः ॥

---

* 'इन्द्रि ... न्द्रिये' इति ग. घ. म. पुस्तकेषु सान्तरः पाठो दृश्यते । अत इन्द्रि-द्वारे इन्द्रिये इति पाठः सम्भाव्यते ।

**अतिशये त्वमी ।**

अमी सान्तपर्यन्ता अतिशये वर्तन्ते । सर्वे स्त्रियां त्वयन्ताः ॥

**वृद्धप्रशस्ययोर्ज्यायान्**

अतिशयवृद्धेऽतिशयप्रशस्ते ज्यायान् ॥

**कनीयांस्तु युवाल्पयोः ॥ २३२ ॥**

अत्यर्थतरुणाल्पयोः कनीयान् ॥

**वरीयांस्तूरुवरयोः**

अतिमहति अतिश्रेष्ठे च वरीयान् ॥

**साधीयान् साधुबाढयोः ।**

अत्यर्थशोभने अत्यर्थगाढे च साधीयान्

सान्तः ।

---

**दलेऽपि बर्हं**

दलं पत्रम् । मयूरपिञ्छोऽपि बर्हम् ॥

**निर्बन्धोपरागार्कादयो ग्रहाः ॥ २३३ ॥**

निर्बन्धो बालग्रहः । सूर्याचन्द्रमसो राहुग्रसनमुपरागः । आदिना चन्द्रादयोऽष्टौ ॥

**द्वार्यापीडे क्राथरसे निर्यूहो नागदन्तके ।**

द्वारि द्वारे । आपीडः शेखरः । क्राथरसे घने द्रव्यनिर्यासे । आलम्बनार्थं गेहादिभित्तिनिर्गतं काष्ठद्वयं नागदन्तकः ॥

**तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ॥ २३४ ॥**

वणिजां तुलादण्डस्य सूत्रे । अश्ववृषादीनां रश्मौ योक्त्रे । प्रग्रहो-ऽपि ॥

**पत्नीपरिजनादानमूलशापाः परिग्रहाः ।**

आदानं स्वीकारः । शापः शपथः ॥

**दारेषु च गृहाः**

गृहेऽपि गृहाः पुंसि ॥

**श्रोण्यामप्यारोहो वरस्त्रियाः ॥ २३५ ॥**

"हस्त्यारोहे द्रुमाङ्गे च वरारोहाकटावपि ।
आरोहणेऽपि चारोहो दीर्घत्वेऽपि समुच्छ्रये" ॥

**व्यूहो वृन्देऽपि**

बलविन्यासे व्यूहः ॥

**अहिर्वृत्रेऽपि**

वृत्रे वृत्रासुरे । सर्पेऽप्यहिः ॥

**अग्नीन्द्वर्कास्तमोपहाः ।**

अर्को रविः ॥

**परिच्छदे नृपार्हेऽर्थे परिबर्हः**

नृपार्होऽर्थः सितच्छत्रादिः ॥

हान्तः ।

---

**अव्ययाः परे ॥ २३६ ॥**

परेऽनेकार्था अव्यया उच्यन्ते ॥

**आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।**

आङित्यव्ययो ङकारानुबन्धवान् । ईषदर्थे— आपिङ्गलः । अभिव्याप्तौ—आजन्म ब्रह्मचारी । सीमार्थे — आ उदकान्तात् (न?) प्रोषन्तं प्रियमनुव्रजेत् । धातुयोजे क्रियायोगज इत्यर्थः । यथा — आहरति ॥

**आ प्रगृह्यः स्मृतौ वाक्येऽपि**

आ इत्यङित्। स च 'निपात एकाजनाङ्' (१. १. १४) इति प्रगृह्यसंज्ञकः। स्मृतौ — आ ज्ञातं स जटायुरेष इति। वाक्ये — आ एवं मन्यसे इति। एवं मन्यस इत्यर्थः॥

**आस्तु स्यात् कोपपीडयोः॥ २३७॥**

सविसर्ग आः कोपपीडयोः॥

**पापकुत्सेषदर्थे कु**

पापे — कुब्राह्मणः। कुत्सायां — कुदानमप्रीतिकरम्। कुशब्दस्येषदर्थस्य कादेशे कोष्णम्॥

**धिङ् निर्भर्त्सननिन्दयोः।**

अपकारैर्भयोत्पादनं निर्भर्त्सनम्॥

**चान्वाचयसमाहारेतरेतरसमुच्चये॥ २३८॥**

एकस्य यत्र प्राधान्येन विधानमपरस्य तदनुष्ठानाविरोधितया, सोऽन्वाचयः। यथा — भिक्षामट गाश्चानय। समाहारे — शुष्मिणीं हरीतकीं चाद्धि। इतरेतरे — माता पिता च जयनः। समुच्चये — योगिने रोगिणे च दद्यात्॥

**स्वस्त्याशीःक्षेमपुण्यादौ**

आशीः आशीर्वादः। स्वस्ति ते भूयात्। क्षेमे — 'नि(सृत्य ? वर्त्य) मां स्वस्ति गताः स्वयूथ्याः'। पुण्यं पापक्षालनम्। आदिना मङ्गलादौ॥

**प्रकर्षे लङ्घनेऽप्यति।**

प्रकर्षो नितान्तम्। लङ्घनमतिक्रमणम्। अपिना प्रशंसायामपि॥

**स्वित् प्रश्ने च वितर्के च**

वितर्को विकल्पः॥

**तु स्याद् भेदेऽवधारणे॥ २३९॥**

भेदः पृथक्करणम्॥

---

१. 'च भक्षम्।' क. ख. ग. घ. ङ. च. छ. ञ. ट. पाठः.

**सकृत् सहैकवारे चापि**

सकृद् दन्त्यादिः ॥

**आराद् दूरसमीपयोः ।**

आराद् ग्रामः, शनैर्गच्छ ॥

**प्रतीच्यां चरमे पश्चाद्**

प्रतीच्यां पश्चिमायां दिशि । यथा — पश्चादागतः । चरमे — 'आरोपितं यद् गिरिशेन पश्चात्' । कुमारोत्पत्तिकालादित्यर्थः ॥

**उताप्यर्थविकल्पयोः ॥ २४० ॥**

'उत बाढविकल्पयोरि'त्यजयः ॥

**पुनःसहार्थयोः शश्वत्**

शश्वत् तालव्यः ॥

**साक्षात् प्रत्यक्षतुल्ययोः ।**

साक्षाद् दन्त्यादिः ॥

**खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत ॥ २४१ ॥**

आमन्त्रणे — एहि बत ॥

**हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ।**

वाक्यारम्भे — हन्त वदामि त्वाम् ॥

**प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥ २४२ ॥**

मुख्यसदृशः प्रतिनिधिः । यथा — विष्णुरर्जुनतः प्रति । सदृश इत्यर्थः । (प्रा ? व्या)प्तुमिच्छा वीप्सा । वृक्षं वृक्षं प्रति । लक्षणे — वृक्षं प्रति विद्योतते विद्युत् । आदिना इत्थम्भूताख्यानभागप्रतिदानस्तोकेषु । कश्चित् प्रकारमापन्न इत्थंभूतः, तस्याख्याने — साधुर्देवदत्तो मातरं प्रति । भागे — यदत्र मां प्रति स्यात् । गृहीतस्य प्रत्यर्पणं प्रतिदानम् । तिलेभ्यः प्रति माषान् प्रयच्छति । स्तोके — अन्नं प्रति । शाकं प्रति । प्रयोगत इति शिष्टप्रयोगानुसारतः ॥

**इति हेतुप्रकरणप्रकाशादिसमाप्तिषु।**

हेतौ — हस्तीति पलायते। प्रकरणं प्रक्रमः प्रस्ताव इति पर्यायाः। यथा — इति वृत्तान्तः। एषोऽयं प्रस्ताव इत्यर्थः। प्रकाशे — इति पाणिनेर्यशः। प्रकटमित्यर्थः। आदौ — 'शमित्यष्टाभ्यो घिनुण्' । (३.२.१४१) समाप्तौ — हलिति प्रत्याहारः ॥

**प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि ॥ २४३ ॥**

चतुर्षु पुरस्तात् ॥

**यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे।**

यावत्तावच्छब्दौ चतुर्षु ॥

**मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ॥ २४४ ॥**

अथोअथशब्दौ पञ्चसु ॥

**वृथा निरर्थकाविध्योः**

अविधौ यथा — 'वृथावाक्यं च वर्जयेत्' ॥

**नानानेकोभयार्थयोः।**

अनेकार्थे बहुलप्रकारे ॥

**नु पृच्छायां विकल्पे च**

पृच्छा प्रश्नः ॥

**पश्चात्सादृश्ययोरनु ॥ २४५ ॥**

पश्चादर्थे — अनु रथं गच्छ। सादृश्ये — मातरमनुकरोति ॥

**प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु।**

अवधारणमेवार्थः। अनुनयः सान्त्वनम् ॥

**गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ॥ २४६ ॥**

पवर्गीयपकारवानयमपिशब्दः। गर्हा निन्दा ॥

**उपमायां विकल्पे वा**

उपमायां — शुक्तौ वा रजताकारः ॥

**सामि त्वर्धे जुगुप्सिते ।**

अर्धे — सामि भुक्तम् ॥

**अमा सह समीपे च**

समीपम् अन्तिकम् ॥

**कं वारिणि च मूर्धनि ॥ २४७ ॥**

'कं शिरस्सुखतोयेष्वि'त्यजयः ॥

**इवेत्थमर्थयोरेवं**

इवार्थ औपम्यम् । इत्थंशब्दार्थः प्रकारः । 'एवंप्रकार औपम्य' इत्यजयः ॥

**नूनं तर्केऽर्थनिश्चये ।**

तर्के ऊहे । अर्थनिश्चये — 'नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता' ॥

**तूष्णीमर्थे सुखे जोषं**

तूष्णीमर्थो मौनम् । 'जोषं तूष्णीं सुखेऽव्ययमि'ति चवर्गादावजयः ॥

**किं पृच्छायां जुगुप्सने ॥ २४८ ॥**

जुगुप्सायां — स किंराजा, यो न रक्षति ॥

**नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ।**

पञ्चसु नाम । प्राकाश्ये — 'राजाभूच्छूद्रको नाम' । सम्भाव्ये — अपीह भविष्यति सीता नाम । क्रोधे — किन्नाम शकुनः । उपगमः स्वीकारः । अस्तु नाम धनी, किञ्चिद् ददाति । कुत्सने — स्नानेऽपि नाम पुण्यम् ॥

**अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥ २४९ ॥**

भूषणे — कन्यामलङ्करोति । पर्याप्तिः पूर्णता । यथा — अलं भुक्तवान् । शक्तौ — अलं मल्लो मल्लाय । वारणे — अलं बाले ! रुदित्वा । निरर्थकेऽप्यलम् ॥

**हुं वितर्के परिप्रश्ने**

अनुमतौ च हुम् ॥

**समयान्तिकमध्ययोः।**

अन्तिके निकटे ॥

**पुनरप्रथमे भेदे**

अप्रथमे — पुनर्ददाति। भेदे — भ्रातृषु पुनर्दीर्घो भवान् ॥

**निर्निश्चयनिषेधयोः ॥ २५० ॥**

निश्चये — निरुक्तम्

**स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा।**

प्रबन्धो वाक्यरचना पुराणादिः, चिरन्तन इति यावत्। अतीतं भूतम्। निकटः सन्निहितः। आगामिनि अनागते ॥

**ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ॥ २५१ ॥**

ऊ(र)र्यादित्रयं विस्तारेऽङ्गीकारे च ॥

**स्वर्गे परे च लोके स्वर्**

परे चेति लोकविशेषणम्। व्योम्नि च स्वः ॥

**वार्तासंभाव्ययोः किल।**

वार्तायाम् — एवं किल राजाभवत्। संभाव्ये — स ते किल दास्यति ॥

**निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु ॥ २५२ ॥**

निषेधे — किं खलु रुषित्वा। वाक्यालङ्कारे — अथ खलु स भवान् विस्तीर्णां परिषदमामन्त्रयते स्म। जिज्ञासायां — किं खलु जानासि। सान्त्वने — देहि खलु प्रतिवचनम् ॥

**समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः।**

साकल्ये — अभितो वनं दग्धम् ॥

---

• 'न' ≡ 'नार'

**नामप्राकाश्ययोः प्रादुः**

नामशब्दार्थे प्रादुः । अनादरणीयं केचिज्जन्म वर्णयन्ति । प्रादुर्भूतानि सौधे तृणानि । प्राकाश्ये — प्रादुर्भवन्ति निशि तारकाः ॥

**मिथोऽन्योन्यं रहस्यपि ॥ २५३ ॥**

रहसि विजने ॥

**तिरोऽन्तर्धौ तिर्यगर्थे**

तिर्यगर्थे — तिरः कृत्वा का(ण्ड?ण्डं) गतः ॥

**हा विषादशुगार्तिषु ।**

खेदशोकदुःखेषु हा ॥

**अहहेत्यद्भुते खेदे**

अद्भुते विस्मये — अहह कथं जानासि । खेदे — अहह विधेरपुण्यता ॥

**हि हेताववधारणे ॥ २५४ ॥**

हेतुः कारणम् । विशेषेऽपि हिः । दीर्घान्तस्तु दुःखहेतौ ॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे
अनेकार्थवर्गः ।

## अथाव्ययवर्गः ।

**चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः ।**

चिरायेत्यादयस्त्रयो दीर्घकालवाचकाः । आदिना चिरं चिरेण चिरादित्यादि ॥

**मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत् समाः ॥ १ ॥**

मुहुःपञ्चकमसकृदर्थे पौनःपुन्ये ॥

**स्राग् झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते।**

स्रागादयः (पञ्च ? सप्त) द्रुते शीघ्रे। मङ्क्षुशब्द ओष्ठ्यादिरनुस्वारवानुकारान्तः। स्राग् दन्त्यसः॥

**बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे॥ २॥**

बलवत्षट्कं निर्भरे अतिशये। किमुत समस्तम्॥

**पृथग् विनान्तरेणर्ते हिरुङ् नाना च वर्जने।**

पृथक्षट्कं वर्जने वियोगे। विनञ्भ्यां नानाञौ प्रत्ययौ। विना नाना। मध्यार्थवाच(कम?को)ऽप्यन्तरेणशब्दः। मध्यार्थे सामीप्ये च हिरुक्॥

**यत् तद् यतस्ततो हेतौ**

यदादिचतुष्टयं हे[illegible]

**असाकल्ये तु चिच्चन॥ ३॥**

चिदादिद्वयमसाकल्ये। यथा— किञ्चित् किञ्चन॥

**कदाचिज्जातु**

कदाचिद्द्वयं कदाचिदर्थे। जातु चवर्गीयतृतीयादि॥

**सार्धं तु साकं सत्रा समं सह।**

सार्धपञ्चकं सहार्थे। सजूरशब्दोऽप्यत्र॥

**आनुकूल्यार्थकं प्राध्वं**

प्राध्वंशब्द आनुकूल्ये। नम्रेऽपि प्राध्वम्॥

**व्यर्थके तु मुधा वृथा॥ ०॥**

मुधाद्वयं व्यर्थके निष्फले॥

**आहो उताहो किमुत विकल्पे किं किमूत च।**

आहोषट्कं विकल्पे वितर्के॥

"दृष्ट आहो उताहो च विकल्पार्थे प्रयोक्तृभिः"

इति भागुरिः। एवं दीर्घादिः॥

"ईश्वरेऽधिकृतेऽधि स्याद् विकल्पे विस्मयेऽप्यहो"

इति रुद्रो ह्रस्वं पठति। उताहो किमुतेति च समस्तम्। किं किमु उत इति शब्दत्रयम्। उत ह्रस्वादि॥

**तु हि च स्म ह वै पादपूरणे**

तुषट्कं श्लोकपादपूरणे॥

**पूजने स्वती॥ ८॥**

सुशब्दोऽतिशब्दश्च पूजने॥

**दिवाह्नीति**

दिवाशब्दोऽह्नि दिने॥

**अथ दोषा च नक्तं च रजनाविति।**

अह्नीति रजनावितीतिशब्दाभ्यां दिवादोषादीनामधिकरणप्रधानतां दर्शयति। रजनौ रात्रौ दोषाद्वयम्॥

**तिर्यगर्थे साचि तिरोऽपि**

तिर्यगर्थे वक्रार्थे साचिद्वयम्। 'साचि स्त्रियामि'ति तु रत्नकोषः॥

**अथ सम्बोधनार्थकाः॥ ९॥**

**स्युः प्याट् पाडङ्ग हे है भोः**

प्याट्षट्कं संबोधने। प्याट् पाट् पवर्गीयादी। अङ्ग इतिच्छेदः॥

**समया निकषा हिरुक्।**

समयात्रयं मध्ये। तथाच विश्वप्रकाशः—'समयान्तिकमध्ययोरि'ति।

"निकषा त्वन्तिके मध्ये रक्षोवाची त्वनव्ययम्"

इति। निकटे त्रयमिदमिति केचित्। तदयुक्तम्। निकषान्तिक इति वक्ष्यमाणेन पुनरुक्तेः। समयान्तिकमध्ययोरिति पुनरुक्तिर्न दोषः।

"भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते"
इत्यनेन परिहृतत्वात् ॥

**अतर्किते तु सहसा**

अतर्कितेऽनालोचिते सहसा ॥

**स्यात् पुरः पुरतोऽग्रतः ॥ ७ ॥**

पुरस्त्रयम् अग्रत इत्यर्थे । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (५. ३. ३९) इति असि पुरादेशश्च । पुरः । परतो निरुकारः शब्द इत्यन्यः ॥

**स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ।**

देवहविर्दाने स्वाहापञ्चकम् । पितृहविर्दानेऽपि स्वधा ॥

**किञ्चिदीषन्मनागल्पे**

किञ्चित्त्रयमल्पेऽणौ ॥

**प्रेत्यामुत्र भवान्तरे ॥ ८ ॥**

भवान्तरे जन्मान्तरे प्रेत्यद्वयम् । प्रेत्यशब्दोऽदन्तः(?) ॥

**वद् वा यथा तथैवैवं साम्ये**

वदादिषट्कं साम्ये सादृश्ये । अग्निवदयं वटुः ॥

**अहो ही च विस्मये ।**

अहोद्वयं विस्मये । अहो ह्रस्वादि । प्रमादेऽपि ही ॥

**मौने तु तूष्णीं तूष्णीकां**

तूष्णीमादिद्वयं मौने । 'अकच्प्रकरणे तूष्णीमः काम्प्रत्ययो वक्तव्यः' (५. ३. ७२) इति[1] काम्प्रत्ययः । मकारो 'मिदचोऽन्त्यात् परः' (१. १. ४७) इति विशेषणार्थः । तूष्णीकाम् ॥

1. 'वादि' क. ख. ठ. पाठः.

**सद्यः सपदि तत्क्षणे ॥ ९ ॥**

सद्योद्वयं (क्ष? तत्क्ष)णे। 'सद्यःपरुद्—' (५.३.२२) इत्यादिसूत्रे सद्यो निपातितः। अहन्यभिधेये द्यस्प्रत्ययः प्रकृतेश्च सभावः। समाने अहनि सद्यः ॥

**दिष्ट्या शमुपजोषं चेत्यानन्दे**

आनन्दे चित्तानन्दे दिष्ट्यात्रयम्। शं तालव्यादि। शुभसन्तोषशब्दावप्यत्र ॥

**अथान्तरेऽन्तरा।**
**अन्तरेण च मध्ये स्युः**

अन्त(स्त्र? रेत्र)यं मध्ये ॥

**प्रसह्य तु हठार्थकम् ॥ १० ॥**

हठार्थकं बलात्कारार्थकम् ॥

**युक्ते द्वे साम्प्रतं स्थाने**

युक्ते उचिते साम्प्रतद्वयम् ॥

**अभीक्ष्णं शश्वदनारते।**

अभीक्ष्णमादिद्वयमनारते सतते ॥

**अभावे नह्य नो नापि**

नहिचतुष्टयमभावे। नहि समस्तम्। नहिशब्दात् परः अकारः। यथा — नहि स्थूलम्। अस्थूलः। नो जागर्ति। न जागर्ति।

"नहि नोऽना न मा मास्म प्रतिषेधे प्रकीर्तिताः"

इति त्रिकाण्डम्। अपिशब्देन अनशब्दस्य ग्रहणम्[1]। तथाच शृङ्गारप्रकाशः—'अनोपमा ते बुद्धिरि'ति[2] ॥

**मास्म मालं च वारणे ॥ ११ ॥**

मास्मत्रयं वारणे निषेधे ॥

१. 'णम्। अ', २. 'ति शृङ्गारप्रकाशे ॥' ठ. पाठः.

**पक्षान्तरे चेद् यदि च**

चेदादिद्वयं पक्षान्तरे ॥

**तत्त्वे त्वद्धाञ्जसा द्वयम् ।**

अद्धाद्वयं तत्त्वे सत्ये । 'रवा बद्धा' इति कप्फिणाभ्युदये भाषासमावेशः । तत्र प्राकृतपक्षे रवाः शब्दाः बद्धाः संयताः । बन्ध बन्धने क्तः । संस्कृते तु रवौ सूर्ये अद्धा तत्त्वमिति प(रि? द)च्छेदः । अञ्जसाशब्दो दन्त्यसकारवान् ॥

**प्राकाश्ये प्रादुराविः स्याद्**

प्राकाश्ये स्फुटत्वे प्रादुरादिद्वयम् ॥

**ओमेवं परमं मते ॥ १२ ॥**

मतेऽनुमते ओमादित्रयम् ।

"अव्ययं स्यादनुज्ञाने परमं परमः परे"

इति रुद्रः ॥

**समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।**

समन्ततआदिचतुष्टयं सर्वत इत्यर्थे । समन्तादित्यप्यत्र ॥

**अकामानुमतौ कामम्**

अकामानुमतौ अनिच्छयानुमतौ कामम् । अथवा आकामानुमताविति दीर्घोऽयमाकारः, न नञ् । तेन निकामानुमतौ काममित्यर्थः । तथाच त्रिकाण्डे—'कामं कामाभ्यनुज्ञायामि'ति ॥

**असूयोपगमेऽस्तु च ॥ १३ ॥**

असूयापूर्वके उपगमे अस्तु । यथा—'अस्तु नाम शूरः, तथापि जेष्यामि ।

"असूयायामनुज्ञाने पीडायामस्तु दृश्यते"

**ननुच स्याद् विरोधोक्तौ**

ननुचेति समस्तं विरोधोक्तौ ॥

**कच्चित् कामप्रवेदने ।**

कामप्रवेदने इच्छाया आख्याने कच्चित् ॥

**निःषमं दुःषमं गर्ह्ये**

निःषमद्वयं गर्ह्ये । 'सुविनिर्दुर्भ्यः—' (८. ३. ८८) इति मूर्धन्यषत्वम् ॥

**यथास्वं तु यथायथम् ॥ १४ ॥**

यो य आत्मा यश्चात्मीयः तत्र यथास्वमादिद्वयम् । यथास्वमिति वीप्सायामव्ययीभावः । स्वशब्दोऽत्रात्मीयवचनः आत्मवचनश्च । 'यथास्वे यथायथम्'(८. १. १४) इति यथायथं निपातितम् ॥

**मृषा मिथ्या च वितथे**

वितथेऽसत्ये मृषाद्वयम् ॥

**यथार्थं तु यथातथम् ।**

यथार्थद्वयं सत्ये ॥

**स्युरेव तु पुनर्वै वेत्यवधारणवाचकाः ॥ १५ ॥**

एवादयः पञ्चावधारणे । चकारोऽयमन्त इति रुद्रः । वाकार इत्यन्यः ॥

**प्रागतीतार्थकं**

अतीतार्थे प्राक् ॥

**नूनमवश्यं निश्चये द्वयम् ।**

नूनमादिद्वयं निश्चये ॥

**संवद् वर्षे**

वर्षे वत्सरे उक्तः ॥

**अवरे त्ववार्ग्**

अर्वागवरे । यथा — अर्वाक् तीरम् ॥

**आमेवं**

आमित्येवंशब्दार्थे ज्ञानावधारणे । 'आं ज्ञाननिश्चये' इति हि वोपालितः ॥

**स्वयमात्मना ॥ १६ ॥**

आत्मनेत्यस्यार्थे स्वयम् ॥

**अल्पे नीचैः**

दैर्घ्येणाल्पे नीचैः ॥

**महत्युच्चैः**

दीर्घत्वेन महति उच्चैः ॥

**प्रायो भूम्नि**

भूम्नि बाहुल्ये प्रायः ॥

**अद्रुते शनैः ।**

अशीघ्रे शनैः ॥

**सना नित्ये**

सना नित्ये । सदाशब्दोऽप्यत्र ॥

**बहिर्बाह्ये**

बहिः ॥

**स्मातीते**

अस्तमदर्शने ॥ १७ ॥

अदर्शनेऽस्तम् ॥

अस्ति सत्त्वे

सत्त्वे विद्यमाने अस्ति ॥

रुषोक्तावू

रुषोक्तौ रोषे । ऊ इति दीर्घादिः ॥

उं प्रश्ने

प्रश्ने पृच्छायाम् । उं ह्रस्वादिः ॥

अनुनये त्वयि ।

अनुनये सान्त्वने अयि । यरलवीययकारः ॥

हुं तर्के स्याद्

तर्के वितर्के हुम् ॥

उषा रात्रेरवसाने

रात्र्यन्ते उषा ॥

नमो नतौ ॥ १८ ॥

नतौ प्रणामे नमः ॥

पुनरर्थेऽङ्ग

अङ्ग पुनरर्थे ॥

निन्दायां दुष्ठु

दुष्ठु निन्दायाम् ॥

सुष्ठु प्रशंसने ।

सुष्ठु प्रशंसायाम् ॥

**सायं साये**

साये दिनान्ते सायम् ॥

**प्रगे प्रातः प्रभाते**

प्रगेप्रातःशब्दौ प्रभाते । प्रातःशब्दो रेफान्तः ॥

**निकषान्तिके ॥ १९ ॥**

अन्तिके समीपे निकषा ॥

**परुत् परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ।**

पूर्वे अब्दे वर्षे परुत् । पूर्वतरे अब्दे वर्षे परारि । यति गच्छति, वर्तमाने अब्दे वर्षे इति यावत् । ऐषमः मूर्धन्यषः । शब्दत्रयं 'सद्यः-परुद् —' (५. ३. २२) इत्यादिसूत्रेण निपातितम् । पूर्वपूर्वतरयोः परभावः उदारिच्प्रत्ययौ, इदम ऐभावः समसण्प्रत्ययश्च निपात्यन्ते ॥

**अद्यात्राह्नि**

अत्रास्मिन्नहनि अद्यशब्दः ॥

**अथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २० ॥**
**तथाधरान्यान्यतरेतरात् पूर्वेद्युरादयः ।**

पूर्वेऽह्नीत्यादिशब्देन उत्तरेऽह्नीत्यादीनां षण्णां ग्रहणम् । पूर्वेद्युरादय इत्यादिशब्देन उत्तरेद्युःप्रभृतीनां षण्णां ग्रहणम् । तद् यथा —पूर्वस्मिन्नहनि पूर्वेद्युः । उत्तरस्मिन्नहनि उत्तरेद्युः । अपरस्मिन्नहनि अपरेद्युः । अधरास्मिन्नहनि अधरेद्युः । अन्यास्मिन्नहनि अन्येद्युः । अन्यतरास्मिन्नहनि अन्यतरेद्युः । इतरास्मिन्नहनि इतरेद्युः । एते सद्यःपरुदादिना निपातिताः । तत्र पूर्वादिशब्देभ्य एद्युस्प्रत्ययः ॥

**उभयद्युश्चोभयेद्युः**

उभयस्मिन्नहनि उभयद्युद्वयम् । 'द्युश्चोभयाद् वक्तव्यः' (वा० ५. ३. २२) इति द्युः । उभयद्युः । सद्यःपरुदादिसूत्रेणैव उभयेद्युर्निपातितः । उभयशब्दादेद्युस् निपात्यते ॥

**परे त्वह्नि परेद्यवि ॥ २१ ॥**

परस्मिन्नहनि परेद्यवि ॥

**ह्योऽतीते**

गतेऽह्नि ह्यश्शब्दः ॥

**अनागतेऽह्नि श्वः**

अनागते भविष्यत्यह्नि श्वः । तालव्यशः ॥

**परश्वश्च परेऽहनि ।**

अनन्तरागामिदिवसात् परस्मिन्नहनि परश्च इति ख्याते परश्वः अतिक्रान्ते तु परतरे दिने परश्वो जात इति गौणः प्रयोगः ॥

**तदा तदानीं**

तस्मिन् काले तदाद्वयम् । 'सर्वैकान्यकियत्तदः काले दा' (५. ३. १५) इति दा । तदा ॥

**युगपदेकदा**

तुल्यकाले युगपदादिद्वयम् । युगपच्छब्दो निर्विकारः, किन्तु पकारवान् ॥

**सर्वदा सदा ॥ २२ ॥**

सर्वकाले सर्वदाद्वयम् । 'सर्वस्य सोऽन्यतरस्यां दि' (५. ३. ६) इति सभावविकल्पः ॥

**एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा ।**

एतर्ह्यादिपञ्चकम् एतस्मिन् काले ॥

**दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥**

पूर्वादिषु दिग्देशकालेषु प्राक्त्रयम्। यथा—पूर्वे प्राक्। उत्तरे उदक्। पश्चिमे प्रत्यक्। आदिना अपागवागादयः। प्राच्युदीचीप्रतीच्यवाचीशब्देभ्यः 'पञ्चमीसप्तमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (५. ३. २७) इति अस्ताति-प्रत्ययः। तस्य 'अञ्चेर्लुक्' (५. ३. ३०) इति लुक्। 'लुक् तद्धितलुकि' (१. २. ४९) इति ङीपो लुक्। 'तद्धितश्चासर्वविभक्तिः' (१. १. ३८) इत्यव्यय-त्वम् ॥

इत्यव्ययवर्गः।

---

## अथ लिङ्गादिसंग्रहवर्गः।

**सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः।**
**अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥**

सलिङ्गशास्त्रैरित्यादि। सलिङ्गशास्त्रैः लिङ्गलक्षणसहितैरित्यर्थः। लिङ्गलक्षणं च 'स्त्रियामीदूद्विरामकाजि'ति वक्ष्यति। जकारस्य प्रत्येकमभि-संबन्धः। सन्नादिजैश्चिकीर्षादिभिः। कृज्जसंगृहीतस्यापि गोबलीवर्दन्यायात् पृथगुपादानम्। यतः सन्नन्ताद् 'अ प्रत्ययात्' (२. ३. १०२) इति अकारा-दिभिरेव कृद्भिश्चिकीर्षादयः शब्दा निष्पाद्यन्ते। अनुक्तैः बाहुल्येन पूर्ववर्गेष्व-नभिहितैः। अयं वक्ष्यमाणः सङ्ग्रहः। लिङ्गं सङ्कीर्णवदिहोन्नयेत्। यथा सङ्कीर्णवर्गे प्रकृतिप्रत्ययाद्यर्थैः लिङ्गोन्नयनं, तथात्रापि पूर्ववर्गानुक्तानां नाम्नां लिङ्गोन्नयनम्। तत्र 'अर्धर्चाः पुंसि च' (२. ४. ३१) इति वचनात् प्रकृत्यर्थेना-र्धर्चादीनां 'स्त्रियां क्तिन्' (३. ३. ९४) इत्यादेर्वचनात् प्रत्ययार्थेन क्तिन्नन्ता-दीनां मातृष्वस्रादीनामभिधेयद्वारेण क्रियाव्ययविशेषणानां न्यायतो वक्ष्यमा-णादिति ॥

**लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः।**

लिङ्गशेषविधिरित्यादि। पूर्वमनुक्तस्य लिङ्गस्यायं विधिरिति लिङ्गशे-षविधिः। स च व्यापकस्तदा स्याद्, यदि प्रागुक्तैरिहोक्तैश्च विशेषैरबा-

धितो भवति । तथाहि— स्वर्गपर्याय इह पुंसि वक्ष्यते । तस्य 'द्योदिवौ द्वे स्त्रियौ', 'क्लीबे त्रिविष्टपमि'त्यपवादः ॥

**स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥**

स्त्रियाम् । स्त्रियामित्ययमधिकारः पुंस्त्वविधेः प्राक् । ईद् ऊद् विरामौ अन्तौ यस्य तद् ईदूद्विरामं, तच्च तदेकाच् चेति ईदूद्विरामैकाज् नाम स्त्रियां स्यात् । यथा — श्रीः ह्रीः भीरित्यादयः । ऊकारान्तो यथा—(श्रूः ? स्रूः) भ्रूः । सयोनिप्राणिनाम च । योनिर्भगम् । तत्सहितानां प्राणिनां नाम स्त्रियां स्यात् । यथा — माता दुहिता याता ॥

**नाम विद्युन्निशावीणावल्लीदिग्भूनदीह्रियाम् ।**

नामेत्यादि । विद्युदादीनां यावद् नाम स्त्रियां स्यात् । विद्युत् तडित् । रात्रीनिशारजनीवीणाविपञ्च्यादीनां ङ्याबूङन्तमित्येव सिद्धे झटिति स्त्रीत्वावगमार्थम् । अन्ये तु वाणीति पठन्ति वाग् गौः(धी ? गी)रित्याद्यर्थम् । ह्रिय एकाच्त्वात् त्रपादेश्चाबन्तत्वात् सिद्धे स्त्रीत्वे स्पष्टार्थं वचनम् । शेषं तु ज्ञेयं शिष्टप्रयोगत इति वचनाद् व्रीडा द्वयोः । तथाच कालिदासः — 'व्रीडादमुं देवमुदीक्ष्य मन्ये' (कुमा० स० ७. श्लो० ६७) इति । केषाञ्चिद् धियामिति पाठः । तेन चित्संविदादीनां स्त्रीत्वमुक्तं स्यात् ॥

**अदन्तैर्द्विगुरेकार्थः**

अदन्तैर्द्विगुरेकार्थः अकारान्तैः पूलादिभिः सह यो द्विगुसमासः सः, एकार्थः, एकोऽर्थोऽस्येत्येकार्थः, समाहारद्विगुरित्यर्थः । स स्त्रियाम् । पञ्चपूली [illegible] ॥

**न स पात्रयुगादिभिः ॥ ३ ॥**

स द्विगुरेकार्थः पात्रयुगादिभिरदन्तैः कृतो न स्त्रियाम् । द्विपात्रं चतुर्युगमित्यादि, । तद्धितार्थोत्तरपदसमाहारे च'(२. १. ५१) इति समासः ॥

**तल् वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् ।**
**स्त्रीभावादावनिक्तिण्ण्वुणच्क्यपोऽयुजक्विञिशाः ॥**

## उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् ।

तल् । एतदन्तं स्त्रियाम् । 'तस्य भावस्त्वतलौ' (५. १. ११९) । धार्मिकता पटुता । वृन्दे येनिकव्यत्राः समूहे ये यादयः प्रत्ययास्तदन्ताः स्त्रियां स्युः । 'पाशादिभ्यो यः' (४. २. ४९) । पाश्या । 'इनित्रकट्यचश्च', (४. २. ५१) । यथाक्रमं खलिनी गोत्रा रथकट्या । वैरमैथुनिकादिवुन् । वैरं विरोधः मैथुनिको विवाहः । अनयोरर्थयोर्यो वुः, तदन्तः स्त्रियाम् । 'द्वन्द्वाद् वुन् वैरमैथुनिकयोः' (४. ३. १२५) इति वुन् । अश्वमहिषिका । अत्रिभरद्वाजिका । आदिना 'पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च' (५. ४. १) इत्यादेर्ग्रहणम् । द्वौ द्वौ पादौ, द्विपदिकादयः । 'स्त्रीभावादावनिक्तिण्ण्वुणच्क्यपोऽयुजङिञिशाः । स्त्रीत्वविशिष्टे भावे कारकेऽपि ये अनिप्रभृतयः प्रत्ययाः तदन्ताः स्त्रियां स्युः । 'आक्रोशे नञ्यनिः' (३. ३. ११२) । अकरणिरित्यादयः । 'स्त्रियां क्तिन्' (३. ३. ९४) । कृतिः स्तुतिः । 'रोगाख्यायां ण्वुल् बहुलम्' (३. ३. १०८) । प्रच्छर्दिकाविपादिकादयः । 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (३. ३. १११) । भवतः शायिकादयः । ण्वु इति ण्वुल्ण्वुचोरुभयोर्ग्रहणम् । 'कर्मव्यतिहारे णच् स्त्रियाम्' (३. ३.४३) । व्यावहासीत्यादयः । 'संज्ञायां समज—' (३. ३. ९९) इत्यादिना क्यप् । समज्येत्यादयः । स्त्रीभावादेरन्यत्र 'वदः सुपि क्यप् च' (३. १. १०६) इत्यादिना क्यप् । मृषोद्यम् । ब्रह्मभूयम् । स्त्रीभावेऽविधानाच्छिष्टप्रयोगादेव ब्रह्महत्यादौ स्त्रीत्वम् । 'अ प्रत्ययात्' (३. ३. १०२)इत्यः । चिकीर्षादयः । 'ण्यासश्रन्थो युच्' (३. ३. १०७) । कारणा हारणा । 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) । पचा भिदा । 'विभाषाख्यानपरिप्रश्नयोरिञ् च' (३. ३. ११०) । कां कारिमकार्षीः । इमां कारिमकार्षम् । 'ग्लाम्लाज्याहाभ्यो निः' (वा० ३. ३. ९५) । ग्लान्यादयः । नकारस्य चुत्वेन ञद्वयवान् पाठः । 'कृञः श च' (३. ३. १००) । क्रिया । उणादिषु निरूरीश्च । औणादिका न्यादयः स्त्रियाम् । 'कृबीज्यात्वरिभ्यो निः' (उ० ४. ४९) । कर्ण्यादयः । क्वचिद् 'उणादिष्वनिरूरीश्चे'ति पाठः । 'अर्तिसृधृधम्यश्यमितरिभ्योऽनिः' (उ० २. १०२) । धमन्यादयः । 'कृषिचमि—' (उ० १. ८४) इत्यादिना ऊः । कर्षूः चमूः । 'अवितृस्तृतन्त्रिभ्य ईः' (उ० ३. १५९) । अवीः तरीः स्तरीः तन्त्रीः । ङ्याबूङन्तं चलं स्थिरम् । ङ्याद्यन्तं जङ्गमवाचि स्थावरवाचि च स्त्रियाम् ।

जङ्गमं — कदली कन्दली च। अनयोर्मृगजातिमात्रवाचित्वात् 'सयोनिप्राणिनाम चे'त्यनेन न सिध्यति। शिवाशब्दः सृगालीं सृगालं चाह। खरकुटीव खरकुटी। मनुष्यः चञ्चेव चञ्चामनुष्यः खरकुटी नापितशाला। चञ्चा तृणमयः पुरुषो यः क्षेत्ररक्षणाय क्रियते। 'ऊङुतः' (४. १. ६६)। ब्रह्मबन्धूः धवबन्धूः। एतौ निन्दायां कस्याञ्चिद् ब्राह्मणजातौ वर्तेते। स्थावरं ङ्याबूङन्तं यथा — ताडी केतकी खट्वा माला अलाबूः। चलस्थिरग्रहणम् अ(टा ? पा)र्थम्। (अ ? य)तो ङ्याबूङन्तं चलं स्थिरं च न व्यभिचरति॥

**तत् क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णादिक् ॥ ५ ॥**

तत् क्रीडायां प्रहरणं चेद् मौष्टा पाल्लवा णादिक्। तन्मुष्ट्यादिकं यदि क्रीडायां प्रहरणं, तदा तस्मिन्नर्थे विहितस्य णस्य इयं दिग् उदाहरणोद्देशः — मौष्टा पाल्लवेति। 'तदस्यां प्रहरणमिति क्रीडायां णः' (४. २. ५७)। मुष्टिः प्रहरणमस्याम् इति मौष्टा क्रीडा। एवं पाल्लवा। दिग्ग्रहणं दाण्डाद्यर्थम्॥

**घञो ञः सा क्रियास्यां चेद् दाण्डपाता हि फाल्गुनी।**
**श्यैनम्पाता च मृगया तैलम्पाता स्वधेति दिक् ॥ ६ ॥**

घञो ञ इत्यादिः श्लोकः। घञ इति घञन्तात् सा घञ्वाच्या क्रिया अस्यां फाल्गुनिकादिकायामित्यत्रार्थे यो ञो विहितः स स्त्रियाम्। तस्य च अस्य दाण्डपाता फाल्गुनीत्यादि दिक् उदाहरणोद्देशः। दण्डपातोऽस्यां फाल्गुन्यामिति दाण्डपाता फाल्गुनी। 'घञः सास्यां क्रियेति ञः' (४. २. ५८)। फाल्गुनपौर्णमास्यां हि क्वापि देशे राजदण्डः पतति। श्येनपातोऽस्यामिति श्यैनम्पाता मृगया। तिलपातोऽस्यामिति तैलम्पाता स्वधा। 'श्येनतिलस्य पाते ञे' (६. ३. ७१) इति मुम्। इतिशब्दः प्रकारार्थः। तेन मुसलपातोऽस्यामिति मौसलपाता भूरित्यादि च॥

**स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि।**

स्त्री स्यादित्यादि। अपचितस्वभावा स्त्री। निदर्शनान्तरेण यदा अपचयविवक्षा (प्रो ? प्रयो)क्तुस्तदा काचिद् मृणाल्यादिः स्त्रीलिङ्गा स्यात्। काचिदिति किम्। अल्पो वृक्षो वृक्षकः॥

---

१. 'चारि॥' म. पाठः. २. 'अ' ग. म. पाठः. ३. 'नादिकाया' क. ठ., 'निकाया' छ. पाठः.

पाणिन्यादिभिरनुशिष्टलिङ्गमभिधाय तदवशिष्टानि कानिचिन्नामानि कान्तक्रमेणाह —

**लङ्का शेफालिका टीका धातकी पञ्जिकाढकी ॥ ७ ॥**

लङ्केत्यादि। तत्र लङ्कादीनां 'ङ्याबूङन्तमि'ति सिद्धे पुनः पाठो नामार्थः। नगरीशाखयोर्लङ्का। शेफालिका सेफालीति ख्याता। अस्यास्तु लिङ्गप्रपञ्चार्थः पाठः। टीकृधातोरच्। टीका सकलपदव्याख्यात्री। धातकी धातृपुष्पिका। पञ्जिका विषमपदभञ्जिका आयव्ययार्था च। आढकी तुवरिका ॥

**सिध्रका शारिका हिक्का प्राचिकोल्का पिपीलिका।**
**तिन्दुकी कणिका भङ्गिः सुरुङ्गासूचिमाढयः ॥ ८ ॥**

सिद्धाख्यस्तरुः सिध्रका, दन्त्यादिः। पक्षिविशेषः शारिका, तालव्यादिः। हेक्केटीति ख्याता हिक्का। प्राचिका वनमक्षिका। उल्का शुका इत्येव ख्याता। पिपीलिका पिंपडीति ख्याता। तिन्दुकी काकेन्दुवृक्षः। कणिका परमाणुः व्रीहिश्च। भङ्गिः गात्रभङ्गिः। भङ्गिः प्रकार इत्यन्यः। सुरुङ्गा विवरभेदः। सूचिः दन्त्यसा स्वनामप्रसिद्धा। माढिः पत्रशिरा। 'माढिः पत्रशिरे'ति रत्नकोषः। अनुच्छेलितत्वं वस्त्रान्तं च माढि(?) ॥

**पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत्।**
**सातिः कन्था तथासन्दी नाभी राजसभापि च ॥ ९ ॥**

पिच्छा भक्तमण्डः शाल्मलनिर्यासश्च। अनङ्गीकृतसिद्धान्तो वादो वितण्डा।

"काकिणी मानदण्डस्य तुरीयांशे *प(ल?ण)स्य च"

इति टवर्गान्ते धरणिः।

†"पणोनमानदण्डानां तुरीयांशे च काकिनी"

---

१. 'क' ङ. छ. पाठः. २. 'च' ठ, 'र्च्छा' घ. ट. पाठः. ३. 'सू' ष. पाठः. ४. 'न्त' ठ. पाठः. ५ 'धिः' ट., 'डिः' ठ. पाठः. ६. 'फ' ग. छ पाठः. ७. 'कनिः' ग. ञ. पाठः.

---

* 'काकिनी पणपादेऽपि मानपादे' इति मेदिनी। † 'पणोदमानगण्डानाम्' इति रभसः' इति भानुजिदीक्षितः।

इति तवर्गान्ते रभसः । अशेषप्रतिपक्षचूर्णनाच्चूणः महाभाष्यम् । प्रचुरकपर्दिका च चूर्णा । ङीषि चूर्णी च । 'शण श्रण दाने' । तालव्यादिः । पचादिः । 'तस्य विकारः' (४. ३. १३४) इत्यणि शाणीति वर्णदेशना । द्रुणी कच्छपी वृश्चिकी च । दरत् कूलदराणिः प्रपातश्च । सातिः तीव्रवेदना दानावसा(नौ ? ने) च[1] । 'ऊतियूतिजूति —' (३. ३. ९७) इत्यादिना निपातिता । कन्था कन्थिका[2] । आसन्दी स्वल्पखट्वा वेत्रासनं च । 'आतपः क्षत्रिये नाभिरि'ति परतः पुंस्त्वेऽपि वक्ष्यति । किराते तु नाभिशब्दः पुमानुक्तः[3]—

"समुच्छ्वसत्पङ्कजकोषकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः" (स० ८. श्लो० २४)

इति[4] । लिङ्गशास्त्रकृतां स्त्रियामेव नाभिरिति सम्मतम् । तथाच चन्द्रगोमी —

"ईदूदन्ता य एकाच इदन्ताङ्गानि देहिनः"

इति । राज्ञां सभा कुटी राजसभा । अपिचेति निपातसमुदायः समुच्चये । तेन भम्मादीनां-ग्रहणम् ॥

**झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।**
**लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥**

"झणरी झल्लरी च द्वौ हुडुक्के वालचक्रके"

इति रभसः । सदेवार्चनं गीतनृत्यं चर्चरी । पारी घटी । 'होरेति लग्नं भवनस्य चार्धमि'ति वराहमिहिरः । भवनं च[5] तत्र राशिः परिभाषितः । लटिधातोः विल्ववत् कन् । लट्वा ग्रामचटकः करञ्जबीजमध्यं[6] च[7] । सिध्मला सिध्म इति ख्यातः, यत्र (वङ्गलवच्चाराणां?) प्रीतिः । किलासीति च । लाक्षा जतु । लिक्षा केशकृमिः । गण्डूषा जलादिना मुखपूरणम् । एतदपि लिङ्गानुशासनकृत एवामनन्ति । 'गण्डूषमुज्झितवता पयसः सरोषम्'

1. 'ने । प' ठ. पाठः. 2. 'न्थाधिका' ङ. छ, 'न्धधिका' ञ. पाठः. 3. । लि', 4. 'ति । स्त्रियामेवेति लिङ्गशास्त्रकृतः । रा', 5. 'च राशिः । ल' ठ. 6. 'करञ्जबज' च. पाठः. 7. 'चं' क. ख. पाठः. 8. 'ध्म कि' ङ. पाठः.

इत्यादिप्रयोगस्तु काव्यसमयतो ऽनाम्नातमपि लिङ्गं प्रयुज्यत इत्येतत्परः । बोपालितस्तु काव्यप्रयोगानुग्रहार्थं गण्डूषा क्वापि मुखपूर्तिरित्युक्तवान् । गृध्रसी दन्त्यसा कटिरोगः । चमसी दन्त्यसा मुद्गादिपिष्टके । मसी लिपिप्रयोजना प्रसिद्धैव । 'स्त्रीपुंसयोर्मषी'ति व्याडिराह ॥

इति स्त्रीलिङ्गप्रकरणम् ।

---

**पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।**
**स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥**

पुंस्त्वे, अधिकारोऽयं प्राङ् नपुंसकाविधेः । सभेदानुचराः सपर्यायाः सुरासुराः । स्वरूपप्राधान्येऽप्यर्थबहुत्वाद् बहुवचनम् । सुरशब्दोऽसुरशब्दश्च पर्यायसहितो विशेषवाचिना अनुचरवाचिना च सहितः पुंस्त्वे स्यात् । तद् यथा — मरुतो द्युषदो लेखा इत्यादि । विशेषबाधितत्वाद् दैवतानि देवताश्चेत्यादि । तद्भेदा आदित्यविश्वादयः । तदनुचराः हाहा हूहूरित्यादयः । एवमसुरा अपि । स्वर्गेत्यादि । स्वर्गादय ऊनविंशतिर्यथासंभवं सभेदाः सपर्यायाश्च पुंस्त्वे । स्वर्गो नाक इत्यादि । विशेषबाधितत्वाद् द्योशब्दादीनां स्त्रीत्वाद्यूह्यम् । यागः क्रतुः तद्विशेषः कुण्डपाय्यादिः । अद्रिः शैलः । मेघो जलदः । अब्धिः समुद्रः । लवणोदादयो भेदाः । द्रुर्वृक्षः । कालः समयः । मासादयो भेदाः । असिः खड्गः । चन्द्रहासादयो भेदाः । शरो बाणः[1] । भल्लादयो भेदाः । अरिः शत्रुः ॥

**करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।**
**अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥ १२ ॥**

करो राजग्राह्यार्थः रश्मिपाणी च । गण्डः कपोलः । ओष्ठोऽधरः । दोर्बाहुः । दन्तो द्विजः । कण्ठो गलः । केशः कचः । नखः करजः । स्तनः कुचः । अह्नाहान्ताः एतदन्ताः पुंस्त्वे स्युः । पूर्वाह्णः सायाह्नः मध्याह्नः । उत्तराहः द्व्यहः, त्र्यहः । क्ष्वेडभेदाः । क्ष्वेलो विषम् । तद्विशेषाः पुंस्त्वे । सौराष्ट्रिकः शौल्किकेयः । रात्रान्ताः प्रागसंख्यकाः । रात्रशब्दोऽयम् 'अहः-

---

१. 'ता विमुखं पू' ख. च. पाठः.

सर्व—' (५. ४. ८७) इत्यादिना समासान्ताच्प्रत्ययान्तः । एतदन्ताः पुंस्त्वे, यदि संख्यापूर्वपदा न स्युः । पूर्वरात्रः अर्धरात्रः । प्रागसंख्यका इति किम् । पञ्चरात्रम् ॥

**श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।**
**कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥**

श्रीवेष्टाद्याश्च निर्यासाः श्रीविष्टप्रभृतयस्तरुद्रवाः पुंस्त्वे स्युः । आदिना श्रीवासाः सर्जरसाः । असन्नन्ता अबाधिताः । असन्नन्ताश्च पुंसि स्युः । अङ्गिराः पुरोधाः । अन्नन्तो यथा — प्रतिदिवा दिवसः । अबाधिता इति किम् । सुमनसोऽप्सरसः ललाम । विशेषैर्यद्यबाधित इत्युक्तत्वात् पुनरबाधिता इति पाठस्तत्स्मरणार्थः । कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः । तुकाररुकारान्ताः कशेरुत्रिकवर्जिताः पुंसि स्युः । केतुः सेतुः चरुरित्यादिः । कशेरु प्रसिद्धं तालव्यवत् । जतु लाक्षा । वस्तु पदार्थः । उपलक्षणत्वादेतेषां दारुप्रभृतीन्यपि हित्वा ॥

**कषणभमरोपान्ता यद्यदन्ता अमी अथ ।**
**पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥**

कषणभमरोपान्ताः यद्यदन्ता अमी । कादिवर्णषट्कोपान्ताः पुंसि स्युः अदन्ताश्चेत् । कुहकः पुलकः । कल्माषः अम्बरीषः । पाषाणः पणः । कौस्तुभः गर्दभः । व्यामः ग्रामः । प्राग्भारः मसारः । अयं च दन्त्यवान् स्फटिकवाची च । तथाच कप्फिणाभ्युदये —

'प्रभारसप्रक्रमसारसालां मसारसालां दधती धिनोति ।
आक्रीडभूरच्छिदुरा परागे दुरापरागेऽपि रतिं दधाना ॥''

इति । अथ पथनयनसटोपान्ताः । अथादित्वाददन्ता इति नाभिसंबध्यते । पादिवर्णषट्कोपान्ताः पुंसि स्युः । सूपः पूपः । आवसथः निशीथः । इनः फेनः । कुलायः हयः । वेतसः पनसः । कटः कुटः । गोत्राख्या वंशसंज्ञाः पुंस्त्वे स्युः । कुत्सः गौतमः । चरणाह्वयाः वेदशाखासंज्ञाः पुंस्त्वे स्युः । कठः कलापः ॥

---

१. २. ३, 'ख' ग. ठ. पाठः.

**नाम्न्यकर्तरि भावे च घञजन्नङ्णघाथुचः।**
**ल्युः कर्तरीमनिज् भावे को घोः किः प्रादितोऽन्यतः॥**

संज्ञायां कर्तृवर्जिते कारके भावे च ये घञादयस्तदन्ताः पुंसि स्युः। नाम्न्यकर्तरि घञ् यथा — प्रास्यति तमिति प्रासः कुन्तः। 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति घञ्। चकारादसंज्ञायां च। लाभो लब्धः। दायो दत्तः। भावे घञ् यथा — पाकः त्यागः रागः। 'भावे च' (४. ४. १४४) इति घञ्। 'एरच्' (३. ३. ५६)। नयः जयः। 'ॠदोरप्' (३. ३. ५७)। करः हरः। 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३. ३. ९०)। यज्ञः यत्नः। 'नौ ण च' (३. ३. ६०)। न्यादः। 'पुंसि संज्ञायां घः —' (३. ३. ११८)। प्रच्छदः। 'ट्वितोऽथुच्' (३. ३. ८९)। श्वयथुः। ल्युः कर्तरि। नन्द्यादिल्युप्रत्ययान्ताः पुंस्त्वे स्युः। 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३. १. १३४)। सङ्कर्षणो मधुसूदनः। इमनिज् भावे कः। एतौ भावे पुंस्त्वे भवतः। 'पृथ्वादिभ्य इमनिज् वा' (५. १. १२२)। प्रथिमा महिमा। 'घञर्थे कविधानं कर्तव्यम्' (वा० ३. ३. ५८) इति कः। प्रस्थः विघ्नः। 'सुपि स्थः' (३. २. ४) इत्यत्र योगविभागाद् भावे कः। आखूत्थः शलभोत्थः। एतयोश्च मतान्तरेण क्लीबत्वमपि शिष्टप्रयोगतः। तथाच शब्दार्णवः —

"आखूत्थशलभोत्थादितत्तदुत्थानमद्वयोः"

इति। अतोऽनपुंसकपाठो वृत्तौ प्रमादज इति रक्षितोक्तं युक्तमेव। घोः किः प्रादितोऽन्यतः। घुशब्देन दाब्दैब्वर्जितदाधाग्रहणम्। ततः प्रादिपरात् तदन्यपराच्च यः किप्रत्ययः तदन्तः पुंसि। 'उपसर्गे घोः किः' (३. ३. ९२)। आदिः आधिः। 'कर्मण्यधिकरणे च' (३. ३. ९३) इति किः। बालधिः शेवधिः॥

**द्वन्द्वेऽश्वबडवावश्वबडवा न समाहृते।**
**कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च॥ १६॥**

द्वन्द्वे समासे अश्वबडवशब्दस्य पुंस्त्वम्। तद् यथा — अश्वबडवौ। पुनरश्वबडवा इति बहुवचननिर्देशः 'पूर्ववदश्वबडवौ' (२. ४. २७) इत्यस्मिन्

सूत्रे द्विवचनस्यातन्त्रत्वाद् बहुवचनान्तत्वेऽपि पुंस्त्वदर्शनार्थः । न समाहृते न समाहारे इत्यर्थः । तत्र तु अश्ववडवमिति नपुंसकत्वमेव । 'विभाषा वृक्षमृग—' (२. ४. १२) इत्यादिना इतरेतरयोगे समाहारे च समासः । 'कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च' । कान्तशब्दः सूर्येन्दुपर्यायपूर्वः अयःशब्दपूर्वश्च पुंस्त्वे स्यात् । सूर्यकान्तः अर्ककान्तः चन्द्रकान्तः इन्दुकान्तः अयस्कान्तः ॥

**वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।**
**पुङ्खो न्यूङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥**

लक्षणेऽनुक्तांश्च स्पष्टार्थं कान्तक्रमेणाह । वटकः पिष्टकभेदः । अनुवाको वेदभेदः । रल्लकः कम्बलविशेषो मृगभेदश्च । कुडङ्गकः छादिः, चल इति ख्यातः । 'कुडुङ्को ना छदिः पिटमि'ति वोपालितः । पुङ्खः काण्डस्य मूलम् । उखणखेत्यादौ इगुपधलक्षणः कः । पृषोदरादित्वाद् धातोः पुडागमो नुगागमश्च । पुङ्खः । पृषोदरादित्वादेवोपधादीर्घनुमागमौ । एवं न्यूङ्खो दीर्घोपधः । सामवेदनिरन्तराः षडोङ्कारा न्यूङ्खः । समुद्गः संपुटकः परुकादिः । विटो नागरः । पट्टः पेषणशिला, आधानादि च । घटः तुला । खटः करस्य प्रहारविशेषः । श्लेष्मान्धकूपयोश्च खटः ॥

**कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ।**
**गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥**

कोट्टो-दुर्गपुरम् । अरघट्टः कूपभेदः । कोट्टारः समस्त इति कस्यचिन्मतम्

'कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके"

इति रभसः । घट्टः शुल्कः । हट्टः क्रयविक्रयस्थानम् ।

"सिल्हे गन्धरसे सान्द्रे देहा(का?गा)रैकदेशयोः ।
(वे?बो)ले गोले च पिण्डः स्यात्" ॥

"गोण्डः पामरजातौ च वृद्धनाभौ च सम्मतः"।
'पिचण्डौ पक्षपश्वङ्गे'

इति रुद्रः। पिचण्डवत् कोष्ठादयोऽपि पुंसीति वत्यर्थः। 'कुब्जे पृष्ठगडे गडु रि'ति रुद्रः। करण्डो वंशादिरचितो भाण्डभेदः। लगुडो लोहमयः प्रहरण विशेषः। 'बरण्डो यौवने गण्डे स्यादि'ति विश्वप्रकाशः। पत्रादिमूलके व रण्डः। किणो व्रणाह्वयः। घुणः काष्ठकीटः॥

**दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः।**
**कासमर्दोऽर्दतिः कुन्दः फेनस्तूपौ सपूपकौ॥ १९॥**

दृतिः चर्मपुटकः। सीमन्तः केशविन्यासः। हरिद् वर्णविशेषः। त द्वति ते त्रिषु। रोमन्थः पागुल इति ख्यातः। उद्गीथः प्रणवः सामवेदध्वनि-श्चेत्यरुणदत्तः। बुद्बुदो जलादिविकारः। कासमर्दो वृक्षभेदो गुल्मभेदश्च। अर्दतिः अग्निः। याचनेत्यन्यः। कुन्दः कुन्दकारशिल्पिनः शिल्पोपकरणम्। माध्यं कुन्दम्। बाधितत्वान्मतान्तरेण तत्रापि पुंस्त्वम्। फेनो जलपरिणामः। स्तूपो मृदादिकृतोन्नतप्रदेशः। पूपः पिष्टकः॥

**आतपः क्षत्रिये नाभिः कणयक्षुरकेदराः।**
**पूरखुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः॥ २०॥**

आतपः सूर्यालोकः। क्षत्रिये वर्तमानो नाभिः पुमान्। प्राण्यङ्गवाची स्त्रीप्रकरणेऽभिहितः। कणयः शरभेदेन इत्यन्यः। क्षुरो लोमशातनः।

"स्थितं सबाष्पं त्वयि चक्षुरस्य समं पृषत्का मयि च क्षुरस्य"

इति कीचकवधयमकम्। केदरः संव्यवहारपदार्थ इत्यन्यः। तरुभेद इत्यपरः। पूरो नदीकूलद्वयपूरणम्। खुरप्रो बाणभेद। 'दशाननाक्षिप्तखुरप्रखण्डित' इति राजशेखरः।

"भजेथाः पश्चान्मां वरतनु! पुरस्तान्मृगखुर-
क्षुरप्रव्यालेख्यस्थपुटितविभागा वबभुवः"

---

१. 'कु' क. ख. ढ. पाठः. २. 'पः' घ. ङ. च. छ. ञ. पाठः. ३. 'द इ' क. ख. ग. ङ. च. छ. ञ. ढ. ठ. पाठः. ४. 'मा' ग. घ. ङ. छ. ञ. ढ. ठ. 'रा' ख. पाठः.

इत्यन्यः। चुक्रः सन्धानकृतोऽत्यम्लश्चुक इति ख्यातः।

"जारजे विधवापुत्रे गोलको मणिके गुले"

इति रभसः। हिङ्गुलो रागद्रव्यम्। 'देहेऽध्यात्मनि पुद्गलः' इति रुद्रः॥

**वेतालभल्लमल्लाश्च पुरोडाशोऽपि पट्टिसः।**
**कुल्मासो रभसश्चैव संकटाहः पतद्ग्रहः॥ २१॥**

वेतालः सत्त्वविशेषः[1]। भल्लः काण्डभेदः। मल्लो बाहुयोधः। पुरोडाशस्तालव्यश इति वर्णदेशनाकृतोक्तम्। स च यागोपयुक्तः पिष्टभेदः।

"परशुः पट्टिसो रामः स एव च परश्वधः"

इति निगमाख्यमभिधानम्। अयं च दन्त्यसः। 'असितोमरकुन्दमहापट्टिसम्' (स० १२. श्लो० ४७) इत्यादिभट्टिभाषासमावेशोऽपि।

"कुल्माषो यवके पुंसि काञ्जिके[2] स्यान्नपुंसकम्"

इति मूर्धन्यान्ते रभसः। बोरवधान्यम्। माषमिश्रभक्तमित्यन्यः। प्रागस्य सकारो निरूपितः। रभसो वेगहर्षयोः[3]।

"उत्कण्ठसटवराटकरभसाः स्त्रीत्वे तु डाबन्ताः"

इति त्रिकाण्डशेषः।

"स्तूपे[4] च पाकपात्रे च कटाहो महिषीशिशौ"

इति त्रिकाण्डशेषः। पतद्ग्रहः पतिगहेति ख्यातः॥

इति पुंलिङ्गप्रकरणम्।

**द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम्।**
**शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम्॥ २२॥**

---

१. 'द्रुकविशेषः। पट्टसः परशुः स', २. 'क्षि', ३. 'योः। रभसा डाबन्ता-

**हलहेमशुल्बलोहं सुखदुःखशुभाशुभम् ।**
**जलपुष्पाणि लवणं व्यञ्जनाद्यनुलेपनम् ॥ २३ ॥**

**द्विहीन** इत्यादिश्लोकद्वयम् । खादिषड्विंशतिवाचकं बाधरहितं नपुंसके । अन्यच्चेति बाधितादन्यत् । चकाराद् द्वारान्तिकाङ्गणरणादयः । खशब्देनेन्द्रियाकाशयोर्ग्रहणम् । हृषीकं करणम् । अरण्यं वनम् । पर्णं पत्रम् । श्वभ्रं छिद्रम् । हिमं तुहिनम् । उदकं जलम् । शीतं हिमम् । उष्णं तिग्मम् । मांसं पिशितम् । रुधिरं रक्तम् । मुखं आस्यम् । अक्षि चक्षुः । द्रविणं द्रव्यम् । बलं[1] शक्तिः सेना च । हलं लाङ्गलम् । हेम स्वर्णम् । शुल्बं ताम्रम् । लोहम् अयः । सुखं[2] शर्म । दुःखं प्रसिद्धम् । शुभं शिवम् । अशुभं अकल्याणम् । जलपुष्पाणि कमलोत्पलादीनि । लवणं सामुद्रम् । व्यञ्जनं तेमनम् । आदिना दधितक्रादिविशेषग्रहणम् । अनुलेपनं समालम्भनम् ॥

**कोट्याः शतादिसंख्यान्या वा लक्षा नियुतं च तत् ।**
**द्व्यच्कमासिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥**

कोट्याः शतादिसंख्यान्या । कोट्या अन्या शतादिसंख्या क्लीबे । असन्तं यशः पयः । इसन्तं सर्पिः हविः । उसन्तं वपुः आयुः । अन्नन्तं कर्म । यदनान्तमकर्तरि । कर्तुरन्यद् यद् अनप्रत्ययान्तं तत् क्लीबे । गमनं दानम् । अकर्तरीति किम् । पवमानो दहनः ॥

**त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ।**
**पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥**

त्रान्तं सलोपधं शिष्टम् । लोपधसहितं त्रान्तं क्लीबे । त्रान्तं यथा—कलत्रं गात्रम् । लोपधं यथा—तुमुलं लाङ्गूलम् । सोपधं चेति केषाञ्चिद् बोधः । तदा यवसं बिसमित्यादि । शिष्टम्, अबाधितमित्यर्थः । एतेन गलवलच-

१. 'लशब्देन शक्तिसेनयोर्ग्रहणम् । बलं स्थाम तेमन बल सैन्यम् ।' क. ख. ग. घ. ङ. च, छ. ञ. ट. पाठः. २. 'खदुःखं प्र' ठ. पाठः.

शब्दीनां न भवति । रात्रं प्राक्संख्ययान्वितम् । संख्यापूर्वपदं रात्रशब्दान्तं क्लीबे । त्रिरात्रं पञ्चरात्रम् । पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः । पात्रादिभिरदन्तैर्यो द्विगुसमास एकार्थः स पात्रादेराकृतिगणत्वाल्लक्ष्यानुसारतः शिष्टप्रयोगानुसारतो द्विहीने । द्विपात्रं चतुर्युगम् । अन्यस्त्वाह — शिष्टमित्यनुवर्तमानादेव लक्ष्यानुसारतः इति पृथक् सूत्रम् । द्विगुरेकार्थ इत्यप्यनुवर्तते । एकार्थो द्विगुः शिष्टः लक्ष्यानुसारेण द्विहीने स्यात् । सप्तकुमारि त्रिजगत् । लक्ष्यानुसारवचनात् क्वचिदप्रवृत्तिः । 'त्रिवली तरङ्गतरला' 'त्रिजगतीजीवा(न्त?तु)रेणेक्षणा' ॥

**द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात् परः ।**
**षष्ठ्याश्छाया बहूनां चेद् विच्छायं संहतौ सभा ॥**

द्वन्द्वैकत्वाव्ययीभावौ । द्वन्द्वस्यैकत्वं द्वन्द्वैकत्वम् अव्ययीभावश्च नपुंसके स्यात् । अश्वबलीवर्दं धवखदिरपलाशम् । अव्ययीभावो यथा — अधिस्त्रि अधिकुमारि । पथः संख्याव्ययात् परः । संख्याव्ययाभ्यां परो यः कृतसमासान्तः पथशब्दः, क्लीबे । द्विपथं चतुष्पथम् । अव्ययपरो यथा — विपथम् उत्पथम् । षष्ठ्याश्छाया बहूनां चेद् । विच्छायम् । षष्ठ्यन्ताद् या छाया, क्लीबे सा यदि बहूनां सम्बन्धिनी । उदाहरणदिशमाह — वीनां पक्षिणां बहूनां छाया विच्छायम् । अनया दिशा शलभच्छायम् । बहूनामिति किम् । एकस्य तरोः छाया तरुच्छाया । संहतौ सभा । समूहार्था सभा षष्ठ्यन्तात् परा क्लीबे । दाससभम् ॥

**शालार्थापि परा राजामनुष्यार्थादराजकात् ।**
**दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥**

शालार्थापि परा राजामनुष्यार्थादराजकात् । राजवर्जिताद् राजपर्यायाद् अमनुष्यार्थाच्च षष्ठ्यन्तात् परा शालार्था गृहवाचिनी या सभा अपिशब्दात् संहत्यर्था च, क्लीबे स्यात् । उभयोरुक्तयोरुदाहरणदिशमाह — दासीसभं नृपसभं रक्षःसभमिमा दिशः । दिग्ग्रहणाद् गोपालसभं मनुष्यसभम् ईश्वरसभं पिशाचसभम् ॥

**उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने।**
**कोपज्ञकोपक्रमादि कन्थोशीनरनामसु॥ २८॥**

'उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने। कोपज्ञकोपक्रमादि'। उपज्ञान्त उपक्रमान्तश्च षष्ठीसमासः तयोरेवोपज्ञोपक्रमयोः प्राथम्यप्रतिपादने गम्यमाने क्लीबे स्यात्। उदाहरणमाह — उपज्ञायते परिज्ञायत इत्युपज्ञा। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ्। कस्य ब्रह्मण उपज्ञा प्रथमज्ञेया कोपज्ञं प्रजा, तेनादौ सृष्टत्वात्। उपक्रम्यत इत्युपक्रमः। कस्य प्रजापतेरुपक्रमः कोपक्रमं प्रजा, प्रथमतस्तेन कृतेत्यर्थः। आदिना विप्रोपज्ञं प्रतिग्रहः। आढ्योपक्रमं दानम्। कन्थोशीनरनामसु। उशीनराख्यजनपदप्रतिबद्धग्रामाणां नामसु विषयभूतेषु षष्ठ्यन्तात् परा कन्था क्लीबे। सौपमीणां कन्था सौषमिकन्थम्, आह्व(र)कन्थम्। उशीनरादन्यत्र दाक्षिकन्था वाहीकग्रामस्याख्या। नाम्नोऽन्यत्र वीरणानां कन्था वीरणकन्था। उशीनरेष्वपि नायं कन्थान्तः संज्ञा॥

**भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः।**
**अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः॥ २९॥**

'भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः। अदन्तप्रत्ययाः'। नश्च णश्च कश्च चिच्च तेभ्योऽन्ये भावे ये अदन्ता धातुविहिताः प्रत्ययाः, समूहभावकर्मसु अदन्तास्तद्धिताः, ते क्लीबे। तत्र धातुविहिता यथा — वस्तव्यं चेयं ब्रह्मभूयं सांराविणम्। नणकचिद्भ्योऽन्ये इति किम्। 'यजयाच—' (३. ३. ९०) इत्यादिना नङ्। प्रश्नः। 'नौ ण च' (३. ३. ६०)। न्यादः। 'सुपि स्थः' (३. २. ४) इति योगविभागात् कः। आखूत्थः। चकार इत्संज्ञको यस्य स चित्। यथा — 'एरच्' (३. ३. ५६)। चयः। 'ट्वितोऽथुच्' (३. ३. ८९)। वेपथुः। समूहे अदन्तप्रत्यया यथा — चाषाणां समूहः चाषम्। एवं भैक्षम्। 'तस्य समूहः' (४. २. ३७) इत्यण्। भावेऽदन्तप्रत्यया यथा — 'तस्य भावस्त्वतलौ' (५. १. ११९)। गोत्वं शुक्लत्वम्। कर्मणि यथा — 'गुणवचनब्राह्मणादिभ्यः—' (५. १. १२४) इति ष्यङ्। ब्राह्मण्यं

राज्यम् । पुण्यसुदिनाभ्यां त्वहः परः । एताभ्यां परः कृतसमासान्तो योऽहश्शब्दः, क्लीबे । पुण्याहम् । 'राजाहःसखिभ्यष्टच्' (५. ४. ९०१)। सुदिनशब्दः प्रशस्तवाची ॥

**क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।**
**चोचं पिञ्छं गृहस्थूणं तिरीटं मर्मयोजने ॥ ३० ॥**

क्रियाव्ययानां भेदकान्येकत्वेऽपि । क्रियाणामव्ययानां च भेदकानि विशेषकानि क्लीबे भवन्ति । एकत्वेऽपि, एकवचनान्तानि च भवन्तीत्यर्थः । मन्दं पचति मृदु पचति । अव्ययविशेषणं यथा — रम्यं स्वः । इदानीं नामान्युक्तादन्यानि कानिचिदाह — उक्थं (मासः॒साम)विशेषः । तोटकं रूपभेदे वृत्तभेदश्च । 'अथ तोटकमब्धिसकारकृतमि'तिच्छन्दःसूत्रम् । चोचं तालफलं कदलीफलादीनां त्वक् च । पिञ्छं मयूरशिखण्डम् । गृहस्य स्थूणा स्तम्भो गृहस्थूणम् । तिरीटं वेष्टनम् । शिरोभूषणमित्यन्यः । मर्म प्राणस्थानम् । योजनं चतुःक्रोशात्मकम् ॥

**राजसूयं वाजपेयं गद्यपद्ये कृते कवेः ।**
**माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥**

राजसूयवाजपे(यौ॒ये) यागविशेषौ । कवेः कृते ये गद्यपद्ये, क्लीबे ।

"अपादः पदसन्तानो गद्यं पद्यं चतुष्पदी" ।

कविकृतादन्यत्र गद्या वाग् गद्योऽयमर्थो गद्यं वचः । पद्यः पङ्कः पद्या धूलिः पद्यं रजः । माणिक्यं रत्नविशेषः । भाष्यलक्षणं तु

"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"

सिन्दूर दन्त्यस सीमन्तप्रसाधकम् । चीरं जीर्णवस्त्रखण्डम् । कुचीरमित्यपि [१]दृश्यते । चीवरं भिक्षूणां प्रावरणविशेषः । पञ्जरं कायास्थि पक्षिस्थापनकं च ॥

१. 'पद्यं तत्क्ष' ठ. पाठः.

**लोकायतं हरीतालं विदलं स्थालबाडवम् ।**

लोकायतं चार्वाकशास्त्रम् । हरीतालं धातुविशेषः । विदलं द्विधा कृतं कलायादिकं वंशादिफालिश्च । स्थालं भोजनपात्रविशेषः । बाडवं कुङ्कुमम् ॥

इति नपुंसकप्रकरणम् ।

---

**पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥**

पुन्नपुंसकयोः, अयमधिकारः । शेषः प्रकृतेभ्यः स्त्रीपुन्नपुंसकेभ्यो यः शेषः स पुन्नपुंसकयोः । स च विहारमण्डपादिः । अथवा शेषशब्द एव पुन्नपुंसकयोर्बोद्धव्यः । अर्धर्चादिरेव वा शेषः । नामानि कानिचिदाह—ऋचोऽर्धमर्धर्चः । 'ऋक्पूरब्धूःपथामानक्षे' (५. ४. ७४) इत्यः ।

"पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लिक(सिह्ल)के ।
रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम् ॥"

**मोदकस्तण्डकस्तङ्कः शाटकः खर्वटोऽर्बुदः ।**
**पातकोद्योगचरकतमाला मालको नडः ॥ ३३ ॥**

मोदको भक्षभेदः । तण्टकः श्लोकच्छन्दोभेदः । खञ्जन इत्यन्यः । तङ्कः प्रियविरहजस्तापः । शाटको वस्त्रभेदः । ग्रामशतमध्यस्थो ग्रामशतवास्तव्यजनोपजीव्यो ग्रामः खर्वटः ।

"अर्बुदो मांसपरु(षि ? ष)दशकोटिषु न स्त्रियाम्" ।

पातको ब्रह्महत्यादिः । उद्योगोऽभियोग उद्यमश्च । चरकं चिकित्साशास्त्रम् । बरकं वा पाठः, स्यूतवस्त्रयुगाख्यम् । तथाच वृत्तौ रूपम् । तमालो वृक्षभेदो वंशत्वक् च । मालकः पर्वतभूमिक्षेत्रम् । नडः नड इति ख्यातः ॥

**कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेलितं क्षेमकुट्टिमम् ।**
**सङ्गमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥**

कुष्ठा ...न्धद्रव्यं व्याधिभेदश्च । मुण्डो मस्तकः । मुण्डितवचनश्च । शीधु मद्यम् । बुस्तं स्थालीभ्रष्टं मांसम् । पनसादिफलस्य सार-

भागस्य चोप इति ख्यातस्य । क्ष्वेलितं सिंहनादः । क्षेमं लब्धार्थरक्षणम् । कुट्टिमं स्थण्डिलम् । सङ्गमं सङ्गतिः । प्रस्थैश्चतुर्भिराढकः, स एव शतमानम् । अर्मं अक्षिरोगः अन्धा इति ख्यातः । शम्बलं पाथेयम् । तालव्यादि दन्त्यादि च । अव्ययं चवाहहादिकम् । ताण्डवं नृत्तम् ॥

**कवियं कर्म कर्पासि पारं वारो युगन्धरम् ।**
**यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥**

'कवियं वा ना तुरङ्गमुखभाण्डमि'ति वोपालितः । कर्म व्याप्ये क्रियायां च । कर्पासि कर्पासीफलम् । पारं नद्यादिपरतीरम् । वारः समूहोऽवसरो राजादिद्वारं परिपाटिश्च । युगन्धरः कूबरः । पर्वतविशेष इत्यन्यः । यूपं यागे पशुबन्धनदारु । प्रग्रीवं मुखशालेति चाणक्यटीकाकृत् । मत्तवारणाख्यं दार्वित्यरुणदत्तः । गृहादौ वीथ्याद्याकर्षणं प्रग्रीवमित्यन्यः । यज्ञोपकरणपात्रविशेषः पात्रीवम् । मुद्गादिविकारो यूषम् । चवर्गीयादिरव्ययमिति वर्णदेशनाकृत् । चमसं सोमपानपात्रं दन्त्यसम् । चिक्कसो यवचूर्णम् ॥

अर्धर्चादिगणे घृतक्षीरादयः पठ्यन्ते, चान्द्रलिङ्गानुशासने च तृणरेणचरणादयः । ते च कथमिह नोक्ता इत्यत आह—

**अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।**
**तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥**

अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं पुन्नपुंसकत्वमुक्तम् । तद् वैदिकं छान्दसं ध्रुवं निश्चितम् । तत् तस्माद् इह लौकिके नामलिङ्गानुशासने अनुपयुक्तत्वान्नोक्तम् । ननु चात्यन्तविदुषोऽपि पुरुषस्याशेषलौकिक(प्र)योगपारगत्वासंभवात् सन्दिग्धमेतत् । किमस्ति लोकानां प्रयोगो न वेत्याह — लोकेऽपि तच्चेदस्ति घृतादीनां पुंस्त्वादि, (वि ?) शेषवद् । अनुक्तलिङ्गसङ्ग्रहार्थमिह वक्ष्यते — 'शेषं तु ज्ञेयं शिष्टप्रयोगत' इति । यथा ग्रन्थविस्तरभयादनुक्तमपीह शेषं शिष्टप्रयोगतो ज्ञेयं, तथा तदपि शिष्टप्रयोगतो ज्ञेयम् ॥

पुन्नपुंसकविशेषणम् ।

**स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः।**
**जातिभेदाः**

स्त्रीपुंसयोः, अधिकारोऽयम्। अपत्यान्ताः अपत्यप्रत्ययान्ताः सर्वे स्त्रीपुंसयोः स्युः। 'तस्यापत्यम्' (४. १. ९२) इत्यण्। औपगवः। 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप्। औपगवी। गार्ग्यः गार्गी। द्विचतुःषट्पदोरगाः द्विपदचतुष्पदषट्पदवाचिनः उरगवाचिनश्च स्त्रीपुंसयोः। मानुषः मानुषी। सिंहः सिंही। द्विरेफः द्विरेफी। उरगः उरगीत्यादि। जातिभेदविशिष्टा एव जातिवाचिनः स्त्रीपुंसयोः। द्रुणी द्रुणः। मत्सी मत्स्यः। पूर्वयोगोऽस्यैव प्रपञ्चः। केचिदेकयोगमामनन्ति। तेषामयमर्थः— द्विपदादयो जातिभेदविशिष्टा एव जातिवाचिनः स्त्रीपुंसयोः, न सर्वे। तथाहि— पुरुषादयः पुंस्येव, स्त्रीप्रभृतयः स्त्रियामेवेष्यन्ते। द्विपदादिग्रहणं च जातिभेदोपलक्षणार्थम्। ते न द्विपदादिजातियोगेऽपि द्रुणमत्स्यादयः स्त्रीपुंसयोरिति॥

**पुमाख्याश्च स्त्रीयोगैः सह मल्लकः॥ ३७॥**
**मुनिर्वराटकः स्वातिर्वर्णको जाटलिर्मनुः।**
**मूषा सुपाटी कर्कन्धूर्यष्टिः शाटी कटिः कुटिः॥ ३८॥**

पुमाख्याश्च स्त्रीयोगैः सह मल्लकः।

"मुनिर्वराटकः स्वातिर्वर्णको जाटलिर्मनुः।
मूषा सुपाटी कर्कन्धूर्यष्टिः शाटी कटिः कुटिः॥"

इति पाठः। तत्र पुमाख्याः स्त्रीयोगैः सहेति सूत्रभेदः। तस्यार्थः—पुमाख्याः स्त्रीयोगैः सह स्त्रीपुंसयोः स्युः। यथा—प्रष्ठोऽग्रगामी पुरुषविशेषः। स यदा तात्स्थ्यात् स्त्रियां वर्तते तदा प्रष्ठा स्त्री। 'पुंयोगादाख्यायाम्'(४. १. ४८) इति ङीप्। नामान्यनुक्तान्याह— मल्लको मल्लिका भाजनभेदः। मुनिरयं मुनिरियं वा, तपस्वी। वराटको वराटिका कपर्दिः। स्वातिरयं स्वातिरियं, नक्षत्रभेदः। वर्णको वर्णिका, नीलिकादिः। जाटलिरयं जाटलिरियं वृक्षभेदः। अयं मनुः प्रजापतिः इयं मनुस्तद्भार्येति चन्द्रलिङ्गवृत्तिः। मूषा मूषः स्वर्णादिविलयनभाण्डम्। सुपाटः सुपाटी परिमाणविशेषः। रुधिरधारेति तु गोवर्धनः।

इयमयं वा कर्कन्धूः, बदरी । इयमयं वा यष्टिः, दण्डः । शाटी शाटो वस्त्रभेदः । कट आसनविशेषः ओषधिविशेषश्च । कटिः श्रोणिः । अयं कुटिरियं कुटिः, स्वल्पावासः । कुटी इति पाठः प्रथमाद्विवचनान्तः । 'जातिभेदा यष्टिमुष्टिस्वातयः कीटवृश्चिकाः' इति पाठान्तरम् । ह्रस्वेकारोऽपि कीटशब्दोऽस्ति ॥

स्त्रीपुंसविवरणम् ।

---

**स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ।**
**औचित्यमौचिती मैत्र्यं मैत्री वुञ् प्रागुदाहृतः ॥ ३९ ॥**

स्त्रीनपुंसकयोः, अधिकारोऽयम् । भावक्रिययोः ष्यञ् क्वचिच्च । क्वचिदिति भावक्रिययोर्विशेषणमसाकल्यार्थम् । चकार एवार्थे । भावकर्मणोर्विहितः ष्यञ् स्त्रीनपुंसकयोः स्यात् । उदाहरणमग्रसूत्रे । वुञ् । क्वचिच्चेत्यनुवर्तते । क्वचिदेव भावकर्मणोर्विहितो वुञ् स्त्रीनपुंसकयोः स्यात् । पूर्वसूत्रस्योदाहरणमाह — उचितस्य भावः कर्म वा औचित्यम् औचिती । एवं मैत्र्यं मैत्री । उदाहरणस्य दिङ्मात्रत्वाद् वैदग्ध्यं वैदग्धीत्यादि । वुञ् प्रागुदाहृत इति । मनुष्यवर्गादावुदाहृतम् । वार्धकं चौरिका । मनोज्ञादित्वाद् वुञ् ॥

**षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः ।**
**स्याद् वा नृसेनं श्वनिशं गोशालमितर च दिक् ॥ ४० ॥**

षष्ठ्यन्तेत्यादि । षष्ठ्यन्तपूर्वपदाः सेनादयोऽपुंसि स्त्रीक्लीबयोः स्युः । उदाहरणान्याह — वा नृसेनमित्यादिना । वावचनाद् नृसेना श्वनिशा गोशाला यवसुरं यवसुरा । तरुच्छायं तरुच्छाया । दिगिति उदाहरणदिगियमित्यर्थः । अपराणि च पाण्डवसेनं पाण्डवसेनेत्यादीनि द्रष्टव्यानि ॥

**आबन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ।**
**त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥**

आबन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् । आबन्तोत्तरपदोऽबन्तो-

हरणादिक् । तामाह—त्रिखट्वमित्यादिना । तक्षन्शब्दस्यानन्तत्वाद् नकारलोपः ॥

स्त्रीनपुंसकविवरणम् ।

---

**त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ।**

त्रिष्वित्यधिकारोऽयम् । नामान्याह । पात्रीषट्कं त्रिषु । पात्री पात्रं पात्रः, भाजनविशेषः । पत्रादिरचिता पुटी । वेष्टितः स्थलभागो वाटी । पेटी वेत्रादिरचिता । कुवलो बदरीतरुः । स्त्रियां कुवली । दाडिमः प्रसिद्धः । स्त्रियां दाडिमी ॥

त्रिलिङ्गविवरणम् ।

---

**परलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥ ४२ ॥**

इदानीमुच्चावचेन लिङ्गमाह—परलिङ्गं स्वप्रधाने द्वन्द्वे । द्वन्द्वसमासे स्वप्रधाने उभयपदार्थप्रधाने, इतरेतरद्वन्द्व इत्यर्थः, परं परस्थस्य शब्दस्य यल्लिङ्गं तत् स्यादित्यर्थः । उदाहरणं तु कुक्कुटमयूर्यौ मयूरीकुक्कुटौ । स्वप्रधान इति किम् । वाक्त्वचम् । श्रीस्रजम् । तत्पुरुषेऽपि तत् । तत् परस्थलिङ्गं तत्पुरुषेऽपि समासे स्यात् । करकिसलयं भुजलता ॥

**अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।**
**तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः ॥ ४३ ॥**

अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः । अर्थान्ताः, प्राद्यलमादिशब्दाः पूर्वाः पूर्वपदभूताश्च यत्र तेऽपि समासाः परोपगाः परकीयलिङ्गोपगाः, वाच्यलिङ्गा इत्यर्थः । अर्थान्ता यथा— विप्रार्थः सूपः । विप्रार्था यवागूः विप्रार्थं पयः । प्रादिना प्रपरादयो गृह्यन्ते । अतिक्रान्तः खट्वामतिखट्वः पुरुषः, अतिखट्वा स्त्री, अतिखट्वं ब्राह्मणकुलमित्यादि । एवम् अलञ्जीविकः प्राप्तजीविकः आपन्नजीविकः । तद्धितार्थे द्विगुः । तद्धितार्थे यो द्विगुः सोऽपि परकीयलिङ्गोपगः । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । पञ्चकपाला यवागूः । पञ्चकपालं हविः । संख्यासर्वनामतदन्तकाः । संख्याशब्दाः सर्वनामानि तदन्तकाश्च अन्यलिङ्गाः स्युः । बहवो नराः बह्व्यः स्त्रियः बहूनि ब्राह्मणकुलानि । विंशत्यादौ बाध(मुपेयम ? ज्ञेयः) ।—

यथा :— सर्वः सर्वा सर्वम् । विश्वः विश्वा विश्वम् । तदन्तका यथा — परमसर्वः परमसर्वा परमसर्वम् ॥

**बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ।**
**गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ॥ ४४ ॥**

बहुव्रीहिरदिङ्नाम्नाम् । दिग्वाचिव्यतिरिक्तानां बहुव्रीहिरन्यलिङ्गः । तस्योदाहरणं किमित्याह — उन्नेयं तदुदाहृतम् । तस्योदाहृतमुदाहरणमुन्नेयम् ऊहनीयम् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । प्राप्तोदकं नगरम् । अदिङ्नाम्नामिति किम् । उत्तरपूर्वा दिक् । गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः । गुणयोगेन द्रव्ययोगेन क्रियायोगेन चोपाधिना विशेषणेन परगामिनः धर्मिणि ये प्रवृत्ताः ते परोपगाः अन्यलिङ्गाः । गुणशब्दो यथा — शुक्लः शुक्ला शुक्लम् । द्रव्यशब्दो यथा — दण्डी दण्डिनी दण्डि । क्रियाशब्दो यथा — कृतः कृता कृतम् ॥

**कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।**
**अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥**

कृतः कर्तर्यसंज्ञायाम् । कर्तरि वर्तमानाः कृत्संज्ञकप्रत्यया अन्यलिङ्गाः स्युः । पाचकः पाचिका पाचकम् । असंज्ञायामिति किम् । दुनोतीति दावः । वनाग्नेरियं संज्ञा । कृत्याः कर्तरि कर्मणि । कर्तरि कर्मणि च ये कृत्यप्रत्ययाः तदन्ता अन्यलिङ्गाः स्युः । हव्यस्तरुः हव्या लता हव्यं फलम् । कर्मणि — वाच्यः वाच्या वाच्यम् । अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः । तेन रक्ताद्यर्थे ये अणादयः प्रत्यया विहिताः तदन्ता नानार्थभेदकाः नानार्थविशेषकाः सन्तः अन्यलिङ्गा भवन्ति । कुसुम्भेन रक्तः कौसुम्भः पटः । कौसुम्भी शाटी । कौसुम्भं वस्त्रम् ॥

**षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।**
**परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥**

षट्संज्ञकास्त्रिषु समाः । षकारनकारान्ताः संख्याः षट्संज्ञका इतिप्रत्ययान्ताश्च । ते त्रिषु लिङ्गेषु समाः तुल्याः । षट् स्त्रियः षड् जनाः षट्

कुलानि । एवं पञ्च स्त्रियः पञ्च जनाः पञ्च कुलानि । कति स्त्रियः कति जनाः कति कुलानि । षट्संज्ञकस्यापि संख्यान्तर्गतत्वादेव त्रिलिङ्गत्वे लब्धे संख्यासर्वनामतदन्तका इत्यस्यैवायं प्रपञ्चः । युष्मदस्मत्तिङव्ययम् । युष्मदस्मदी तिङन्तमव्ययं च त्रिषु लिङ्गेषु तुल्यरूपम् । यथा — त्वं प्रिया त्वं नाथः त्वं मित्रम् । एवम् अहं प्रिया अहं नाथः अहं मित्रं च । तिङन्तं यथा — अयं पचति इयं पचति इदं पचति । अव्ययं यथा — उच्चैर्गिरिः उच्चैः शाला उच्चैर्गृहम् । परं विरोधे । लिङ्गलक्षणयोर्विरोधे सति परं लक्षणं प्रवर्तते । यथा — मानुषो मानुषी भ्रमरो भ्रमरी इत्यत्र 'कषणभमरोपान्ता यद्यदन्ता अमी' इति पुंस्त्वे प्राप्ते 'द्विचतुःषट्पदोरगाः' इति स्त्रीपुंलिङ्गाः । शेषं तु ज्ञेयं शिष्टप्रयोगतः । यदत्र ग्रन्थविस्तरभयाद् लिङ्गं नाम च नोक्तं तत् शिष्टानां पूर्वाचार्याणां महाकवीनां च प्रयोगादवसेयम् । यथा —

"अ(न?)न्तोत्क्रुत्यन्तं गायत्र्याद्यं तथा छन्दः"

इति स्त्रीत्वानुशासनमरुणस्येत्यन्यद् बोद्धव्यम् । नामानुशासनं यथा — 'निलिम्पा द्युषदो देवा' इत्यादि गङ्गाधरादीनाम् ।

त्रीणि व्याकरणान्यधीत्य सकलं साहित्यमालोक्य च
प्राज्ञाध्यापकभाषितानि हृदये न्यस्याकृतेदं स हि ।
प्राज्ञेनानु सनातनेन बहुशः प्रत्यक्षरं शोधितं
जिज्ञासा यदि शब्दवर्त्मनि तदा चैतत् समालोक्यताम् ॥

इति वन्द्यघटीयश्रीसर्वानन्दकृतौ टीकासर्वस्वे लिङ्गादिसंग्रहवर्गः ।

समाप्तं च टीकासर्वस्वम् ।

शुभं भूयात् ।

१. 'त', २. 'नोच्यते किन्तु पू' ठ. पाठः.

## अमरटीकासर्वस्वप्रथमकाण्डे स्मृता ग्रन्थकर्तारः ।


अजयः — २१, ९५, १८७, १९२, २००, २०६. पृष्ठेषु.

अभिनन्दः — २८, ४५.

अरुणदत्तः — १६४.

आचार्यः — १४५, १४६, १४७, १४९, १५०, १५१, १५२, १५९, १६०, १६३.

कात्यायनः — १०८, १२२.

कालिदासः — ४९, १४४, १९२.

कीर्त्तिमतालङ्कारः (?) — १८२.

कोहलाचार्यः — ११९.

गोवर्धनः — १६४.

घटकर्परः — ८२, १७७, १९४.

चन्द्रगोमी — १३८, १७८, १८२.

चरकः — ८४.

चाणक्यः — ११८.

चान्द्राः — ६३, ६७, १७५, १७८.

जयपोऌयायिकः (?) — २२.

जयादित्यः — १३८.

तारपालः — ८८, १९१.

दण्डी — ३, ७०.

दत्तिलः — १४४.

धर्मदासः — १६१.

नाममालाकृत् — २०२.

नारदः — १३३.

न्यासकृत् — १५४.

म: — ४९, १२३, १६१, १७५, १८५.
पूर्णचन्द्रः — ३४.
बुद्धबन्धुः — ३२.
भट्टवामनः — ११६.
भट्टिः — ३९.
भरताचार्यः — १४९, १६१, १६२.
भवभूतिः — १४.
भागुरिः — ९३, १११, १२५, १२३, १९९.
भारविः — २९, ७६. ९७, १५५, १६१, १६४.
भीमसेनः — ८.
मनुः — १०, १५, १२०, १८६.
माघः — १०, १७, ३६, ३९, ४१, ८७, ८८, ९७, ११२, १२१,
१५३, १५७, १६६, १८०, १८२, १९७.
मातृगुप्तः — १४६, १४७, १५०, १५१, १६०.
माधवः — २०४.
मुरारिः — ५२.
मैत्रेयः — २३.
योगेश्वरः — १९८.
रक्षितः — ८४, २०६.
रभसः — २१, २२, ३८, ४९, ६६, ७२, ८०, ८६, १५३, १६५,
१६७, १८९, १८७, १९०, १९५, २०२.
राजशेखरः — १६९, १७०.
रामदासः — ४०, १७४.
राहुलः — १९८, १९९.
रुद्रः — ५८, ७२, ८४, ९८, १११, ११३, १७३, १७४, १७६,
१८७, २०४, २०६.
रुद्रटः — १७९.
रुद्रदासः — २२.

वररुचिः — ३.
वराहमिहिरः — ६६, ७२.
वर्णदेशनाकृत् — २१.
वामनः — ६, ३६, ८९, १०८, १७९, १८२.
विनीतकीर्त्तिः — १६५.
विभाकरवर्मा — १०९.
विशाखदत्तः — १५५.
विशाखिलः — १३४.
वोपालितः — ३५, ८४, १०७, १६५, १८८, २०६.
व्याडिः — २, ३.
व्यासः — ४०, ११७, ११८.
शाश्वतः — १३९.
शिखण्डः — ३१.
श्रीकण्ठसोमः — ३६.
श्रीनिवासः — ९१.
श्रीपोव्योकः(?) — २१.
संसारावर्तः — १६, २७, ३९, ४६, १९१.
सनातनः — ६, ५६.
हड्डचन्द्रः — ८६, १५३, १६७.
हरिः — १६.

# क्षीरस्वामिस्मृता ग्रन्थकर्तारः

## द्वितीयं काण्डम् ।

II. *refers to the second part and* III. *to the third part of this work.*


आचार्याः II. ३१.

इन्दुः II. ७१, ८४, ८५, ८७, ८९, १०१, १०४, १११, ११३, १२०, १३१, १३७, १३९, १४१, १४२, १४६, १७१, १७६, १९०, १९८, २०७.

उपाध्यायः II. ६२, ३०६. III. १४९, १५५, २८१.

कश्मीराः III. ११०.

कात्यः II. १०, १९, ३६, ४९, ६०, ६६, ६७, २४५, २७४, २७६, ३४१. III. १२, १५, २९, ४८, ६६, १७२, १९६, २१०.

कालिदासः II. २९१.

गौडः II. ९०. ९४, ९७, १६२, १७३, २२६, २५०, ३५७. III. ९६, २२४.

गौडाः II. ३५, ११२, १८१. III. १००.

गौतमः III. ८.

चन्द्रः II. ८४, ८५, ९२, ११४. III. १२, २१२.

चन्द्रनन्दनः II. ११७, १२१, १४७, १५१, १७२.

चाणक्यः (कौटिल्यः) II. १९, २३, ३३, ४१. III. ७०, १३२, २७०, २७३.

तान्त्रिकाः III. १७८.

दुर्गः II. ११५. III. १४०.

द्रमिडाः II. २६५. III. १९१, २७२.

धन्वन्तरिः II. ७४, ९२, १०५, १३२, १७९, १९१, १९१, २००, २०२, ३८०, ३८५. III. १८६, १९६, २३१, २४०, २४१.

धातुविदः III. २३७.
नन्दः III. १२.
नारदः III. २४८.
निमिः II. ११०, २४२. III २४४.
नैरुक्ताः II. ३०९, ३२२, ३४६. III. ७, १९१, २३५.
पालकाप्यः III. ८२.
पौराणिकाः III. २६३.
प्राच्याः II. १३१, १३५, २७६. III. ९, २०१.
भरतः II २६६, ३६८. III. ६८, १२२.
भागुरिः II. २, १४४, २७७, ३५३. III. २०, १९५, २१०, २११.
भुग्नः II १९. ६९. २१९. III. १०५, १३१, १६२, १९९, १९९, २७५.
भुजः (?) II ३५६.
मनुः II. ९, २६१, २७८. III. ६, १३, २४, ३१, ४३, १५२, १५४.
मालाकारः III १९५.
मुनिः II १७४, २९२, ३३०, ३९०, ३७१. III. ३१, १००, १०५, ११०, १३१, १९३, १७९, १९०, १९१, २६७, २७४, २८४.
याज्ञवल्क्यः III ४४.
वात्स्यायनः II. १२८.
वामनः II. १७.
वाहटः III. १८६.
वैद्याः II. ९२, १९०, १५४, १६२, १७०, १८९, १९१, ३२३, ३२४, ३२९, ३२७. III. १८५, १८६, १८९.
शाश्वतः II. २, ११, २२, ४३, ४९, ५०, ९९, ६०, ६१, ७३, ८६, १०९, ११७, १४४, १५४, १६०, २१८, २२९, २४६, २६८, ३१९, ३१२, ३३४, ३४९. III. ४९, ९९, ७५, १२७, १२८, ३१९, १३४, २००, २१०, २३५, २७७, २८१.

II. ८८, ११७. III. १०४, ११३, २००, २१७
५३, २७१.

II. १

सज्जनः III. १९७.

सभ्याः II १२८, १५८, ३७७. III. १४६, २११, २७२.

सुश्रुतः II. १९१.

सौश्रुताः II. ११७.

स्मार्ताः III. २९०.

## क्षीरस्वामिस्मृता ग्रन्थाः।

### द्वितीयं काण्डम्।

अर्थशास्त्रम् III. ७४.

आगमः II २२८, २७३, ३८५. III. २१

ज्योतिषम् III. १३.

धनुर्वेदः III. १२२, १२३.

नाट्यशास्त्रम् II. १४६.

नाममाला II. १०२, १४१, ३४१.

निघण्टुः II. २, १००, २९२. III. २१६

निरुक्तम् II. २२९. III. २४३.

पारमेश्वरम् III. ६१.

पुराणम् III १९०.

बालरामायणम् II. २७३.

भरतशास्त्रम् III. १३८.

भारतम्  II. १८९. III. ११८.

भाष्यम्  II. १९४. III. २२३.

माला  II. १५, १९, ३५, ११०, १२८, १६३, २००, २२०, २२९. २७६. III. १०६, १७५, १८५, १९५, २०३, २०९, २११, २१७. २२१, २८२, २८३.

मेखला  II. १५४.

वैद्यकम्  III. ६३.

सूदशास्त्रम्  III १८७.

स्मृतिः  II. २९१. III २१५, २४८, २७७.

## टीकासर्वस्वस्मृता ग्रन्थकर्तारः

### द्वितीयं काण्डम्।

अजयः  II. ४, २४, ३५, ४२, ४७, ६०, ८४, ८८, १०९, ११२, १५५, १४७, २७५. III. ९३, ९३, १०३, १०५, ११०, १६९, २११.

अरुणः  II. २३, ३११, ३३६, ३४४. III. २१३, २७७.

अरुणदत्तः  II. २५, २६.

अर्धनारीश्वरः  II. २३९.

अश्वघोषः  II. ३२२.

ईश्वरकृष्णः  II. ३३६.

कलापाः  II. १९९.

कलिङ्गः  II. १०७.

कामन्दकः III. ११७.

कालिदासः II. १५, ११०, २४१, २६८, २९३, ३९१.

काश्मीरवल्लभदेवः II. ११०.

गङ्गदेवः II. ८७.

गोपदत्तः II. १२८.

गोवर्धनः II. २७७, ३१८. III. २०, १७५.

घटकर्परः II. २९०.

चन्द्रगोमी II. ४७, ६४, ३३९. III. ४०.

चाणक्यः II. २३.

चाणक्यटीकाकृत् II. २१४. III. १२५, २३१.

चान्द्राः II. ४७, २१५, २७७, ३३७. III. १५९.

जयादित्यः II. २७८. III. १३.

जातरूपः II १३४.

टीकाकृत् III. १५४, २८२.

तारपालः II. १५, १०८, २१२, २४३. III २३७, २६९.

दण्डी III. १३९.

दामोदरः II. १९७.

दुर्गसिंहः II. ३०१.

देवेश्वरः III. २०४.

धनञ्जयः II. ३४१.

धर्मः II. १२०.

न्यासकारः III. १२६, २०६.

परिभाषावृत्तिकाराः III. १०९.

पुरुषोत्तमदेवः II. ११९, २१९, २२१, २७७. III २०.

प्राणेश्वरः II. १५.

बलशर्मा II. ३५०.

बाणः II. २२५, ३०१. III. १९२, १९८, २३०

II. ९०, ५४, १४३, २८९, ३०३, ३६१

II. ११५, २३९.

भागुरिः II. २२७, ३३४. III. ८४, ०.

भारविः II ३२५, ३६७, III. १०.

भासकविः II. ३०५.

II ३२, १०१, १०६.

मनुः II ९, ६९, २९७, ३१३, ३६५ III. ७, २६, २९, २२७.

माघः II ५, २३, ३४, ५६, ६०, ६१, ६६, ६८, ६९, १००, २२६, २४१, ३४८, ३५४, ३६७, ३७१. III. ६०, ८६, ८८, ९५, ११६, १३९, २००.

माधवः II ८१, ९१. III. २३९, २४५, २८२.

माथुराजः II ३११.

मुरारिः II ३२८.

मौद्गल्यायनः II ८९.

रक्षितः II ३११. III. ४०, १६५, २६६.

रभसः II १६, १७, २१, ३९, ६६, ७९, ८०, ८६, ८९, ९१, १००, १०५, १०८, ११५, ११६, १२०, १२२, १२३, १२४, १३९, १४५, १५४, १५५, १६२, १७२, १७४, १९७, २०९, २१८, २२४, २२७, २२८, २३०, २४१, २७४, २८५, २९८, ३००, ३०३, ३०७, ३१६, ३२३, ३२५, ३२७, ३३३, ३३६, ३३७, ३४५, ३५७, ३६०, ३६४, ३६७, ३७२, ३७३, ३७४, ३८२, ३८४, ३८५, ३८८. III. ४, ७, १४, २३, ७१, ८६, ९३, १०९, ११६, १२९, १५०, १६१, १६६, १७०, १७२, १७७, १८१, १८६, २०८, २३९, २४३, २४६, २६१, २८३

राजशेखरः II. १३, ३१८.

रामदासः II. ३, ४, २७, ३५२.

रुद्रः ८, ३७, ८१, ८३, ११०, १२९, १५४, १६८, २१०
२६०, २९८, ३४७, ३७६, ३८०, ३८२, ३८५
III. ५, ७०, ८३, ८८, ९९, १६५, १२७, २४२.

वररुचिः II ६९, २९४, ३५१, ३६१, ३९१. III. १२५
२५७.

वराहः II. ३२, २९३, ३६४, ३६५.

वल्लभः II २३, ३५०.

वसन्तराजः II. ५५, ३५२.

वात्स्यायनः II २६४.

वामनः II १७, ४०, ६९.

वार्त्तः III. १९०.

वाहटः II ९९.

विक्रमादित्यः II २१७.

विदग्धाः III. १७८.

विनीतकीर्तिः III १०२.

विभाकरवर्मा II. २४१.

विशाखदत्तः III ९३.

विश्वरूपः II ४१.

वृष्काः (?) III. १६०.

वोपालितः II ३६, ४३, २२६, २३०, २४९, २९६, ३२३,
३४८. III. ५२, ५३, ८७, १०६, १४१, १४२,
१९३. १९९, १७६, १८१, २२२, २२५,
५०, ६६, १२७, २३०, २५२, ३८५. III. [illegible]
२३७, २४२

शबरस्वामी  II. ३५२.
शाकटायनः  II. ३०३. III. १११.
शालिहोत्रः  II. २१६.
शाश्वतः  II. १३२, ३४७.
शुभाङ्गः  II. २६१, ३७१.
शूद्रकः  II. १९.
श्रीकण्ठः  II. २१९. III. २२१.
सनातनः  III. २००, २४०.
सुश्रुतः  II. ३३३.
सोमनन्दी  II. २६५.
हट्टचन्द्रः  II. २६, ७२, २६१, ३३२, ३८०. III. ८८
१८२, २७३.
हलायुधः  II. २२, ४१, ५५, २२८, २४०, ३०२
III. २३९.


---

## टीकासर्वस्वस्मृता ग्रन्थाः ।

### द्वितीयं काण्डम् ।

---


अनुन्यासः  II. ३३६.
अनेकार्थः  II २४.
अन्यतन्त्रम्  III. १८४.
अभिज्ञानशाकुन्तलम्  II १६६.
अभिधानमाला  III. ५.
अमरमाला  II. ८, १२, २८, ३०, ३१, ३४, ४२, ४:
६४, ९८, ९९, १२२, १३३, २१०, २२१,
२२३, २३३, २४२, ३१२, ३२७, ३३५, ३४१,
३४३, ३४४, ३४६, ३८२. III. ८, १०२, १३२,
२२७, २३६, २४२, २५०, २६४, २८३.

अर्थशास्त्रम् II. २४. III १९.
अश्वचरितम् II. ५५.
आर्याकोशः II. ६३.
आश्चर्यमञ्जरी III. ८३, १७७.
उणादिः II ३३६, ३३७, ३९४, ३६८, ३७९. III. ५०, ८३, १२१, १३४, १४२.
उणादिवृत्तिः II. २०७, ३३०. III. १५३, १६४, २६४.
उत्पलिनी II ६३, १०३, २२८. III. १३४.
उपाध्यायसर्वस्वम् II. १९७. III २७७.
कण्ठभूषणालङ्कारः II. ३९६.
कफ्फिणाभ्युदयः II. ३९, २९१, ३८१. III १७७.
कातन्त्रटीका II. ३०३, ३०४.
कादम्बरी II. २४०, २४१.
कामशास्त्रम् II. २६६.
काव्यालङ्कारः II ४०.
किरातम् II. ७२, ३७१.
कीचकवधः II ५८, १९३, २८४.
कुमारचरितम् II. २१८.
कुमारसम्भवः II. ३५०, ३७०.
केसरमाला II. २३२, २९३.
कोशान्तरम् II. १०७, १४१, १६४, १७९.
कोष्ठाध्यक्षप्रधानटीका II. २२४.
गणितम् III. २२९.
गोवर्धनीयोणादिवृत्तिः II ३०५. III २४१.
चान्द्रलिङ्गानुशासनम् II. ३२२.
जातकमाला III. ९०.
ज्योतिषम् II. ३२३.
तन्त्रान्तरम् II. ८३, ९०, १४१, १४८, १९४, २०१, २७७. III. २६२.

त्रिकाण्डः II ५६, २५५. III. १०१, १३
त्रिकाण्डशेषः II. १७, ६४, ११०, २१८, ३१८,
४४, १३१, १२४, १२६, १६४, २५१.
ढुण्ढियमकम् II. ९६.
दुर्घटः II २७७.
देवीमाहात्म्यम् III. १२०.
द्विरूपकोशः II. २१. III. १६४, १६६.
धरणिः II. १०१, २१७, ३०२. III ५३, ५६, ६४, १६२
धातुपारायणम् II १९८. III. १६९.
धातुप्रदीपः II. ३८, ४८, ५८, ६७, ११३, २१९, २१०,
२३१, २७७, ३०५, ३८६. III १२५, १६५,
१६८, २२७, २३०.
धातुवृत्तिः III. १३४.
नाट्योक्तिः III. २५.
नाथीयधातुवृत्तिः II ३६०.
नाममाला II. २१, २२, २६, ४८, ६९, २६८, २७९,
३३१, ३४४, ३९०. III. ५५, ८९, ११८, १५१,
१६९, २०८, २३४, २३९, २५०, २७७,
२८३.
नामानुशासनम् II. ६. III २०४.
नारकस्तुतिः II. २२७.
नैगमाढ्यमभिधानम् II. २७९. III १९२, ११८.
न्यासः II. २६६. III. १४९, २१२.
पुरुषोत्तमटीका III. ११८.
प्राकृतशास्त्रम् II. ३६१.
बालरामायणम् III ९४.
यमकम् II. १००, २२४, २४६, २१७. III १३४
III. २४१.
बृहदुत्पलिनी II. ३१०.
भाषासमावेशः II. ६९, २१७, २३१.

| | |
|---|---|
| | II. २६६. III १२८. |
| | II. ११, ३११. |
| भाषावृत्ति | III. ६५. |
| भाषासमावेशः | II. ११५. |
| भाष्यम् | II. २२४, २२१, २७८, ३११ |
| महान्यासः | II. ३७९. |
| महाभारतम् | II. १२४, ३०४, ३२१. |
| महिम्नःस्तोत्रम् | II. २२४. |
| माघयमकम् | II. ३२४. III. २३४. |
| योगयात्रा | II. ४६. |
| योगशतकम् | III २४७. |
| योगशतकव्याख्यानम् | III. २४०. |
| रघुवंशम् | II. २१, २८, १२८, २६२, ३१३. III. ४५, ७२. |
| रत्नकोशः | II ६, २२, २५, ७६, १९८, २०४, २३०, २९३, ३०२, ३३८. III ६०, ९७, १५९, १७०, १७१, १७२, १९०, २२७, २४७, २५४, २७०, २८४. |
| रत्नमाला | II. ३३, ७८, ११०, १२८, १४८, १७३, ३३० III ३१, १८७, २४०, २५१. |
| रन्तिकोशः | II. ६८, ७४. |
| रभसकोशः | II. १८०. |
| रुद्रकोशः | II. ८७. |
| रूपरत्नाकरः | III. २४१. |
| लटकोशः | II ११५. |
| लिङ्गकारिका | II. १५२. III ४० |
| लिङ्गानुशासनम् | II १७. |
| | II. २०४ |

वर्णदेशना II. ४६, ६६, ६८, २१७, २१८, २२६, २९८, ३३६. III. ९१, १२६, १७१, १८०, १८३.
वर्णविधिः II. १५२.
वात्स्यायनम् III. ६१.
वायुपुराणम् III. [illegible]
वासवदत्ता II. २११, २१५, २३७, ३३१.
विदग्धमुखमण्डनम् II. २११. ३४१. III. १९, १९२.
विश्वप्रकाशः II. ३३, ९५, ९१, १५४, १९५. III ८६, २१९.
विष्णुपुराणम् II. ७.
वृत्तिः II. ३४, ५८. III १०२, १५९, २७१.
वैद्यकम् II. १०६, १०७, १४३, १४७, १५२, १६१, २०१, २४२, २४४, ३०९. III. १९३.
वैद्यकरत्नमाला II. १०७.
शब्दार्णवः II. १९, १२२, १३२, १८३, २२९, २३९, २८९, २८७, ३२१, ३२८, ३४१, ३८०. III. १९७, २३७, २७१.
शाकटायनसूत्रम् II. ३०४.
शुभाङ्ककोशः II. २४८.
शृङ्गारप्रकाशः II. ७८, ३७०.
संसारावर्तः II. ३२८. III १९१
संहिता II. ३२.
सुभाषितावलिः II. १३०.
हरिवंशः II. ७६. III २१४.
हर्षचरितम् II. २१७, २१५. II

| ग्रन्थनाम. | पृष्ठम्, |
|---|---|
| अमरमाला | ५१, ६०, ९२, १०१, १२४, १४९, १५७. |
| उणादिवृत्तिः | १३३. |
| काष्फिणाभ्युदयम् | २४, ९८, १६३, १७१. |
| कातन्त्रम् | १०. |
| किरातम् | १७४. |
| कीचकवधम् | ४९, १७९. |
| चण्डीपाठः | २८. |
| चन्द्रलिङ्गवृत्तिः | १८७. |
| चान्द्रलिङ्गानुशासनम् | १८६ |
| छन्दस्सूत्रम् | १८४. |
| तन्त्रान्तरम् | ६०. |
| त्रिकाण्डम् | २८, [illegible]२, ६२, १६२, १६३. |
| त्रिकाण्डशेषः | ६३, ८१, ११६, १२५, १३१, १८०. |
| धातुपारायणम् | १८, ६२. |
| धातुप्रदीपटीका | ३०. |
| नाममाला | १७, ३०. |
| निगमाभिधानम् | १८०. |
|  | १११. |
| न्यासः | ३. |
| न्यासरत्नमतिः | ,, |
| बुद्धचरितम् | ७४. |
| भट्टिभाषासमावेशः | १८०. |
| भाष्यम् | १०, ३८. |
| रघुः | ५३. |
|  | १२, २९, ३२, ७९, १६०. |

| ग्रन्थनाम. | पृष्ठम्. |
| --- | --- |
| वररुचिसूत्रम् | १८. |
| वर्णदेशना | २८. १७४. |
| विदग्धम् | १३५. |
| विश्वप्रकाशः | १६०, १७९ |
| वृत्तिः | ३८, ३९. |
| शब्दार्णवः | १७७. |
| शृङ्गारप्रकाशः | १६२. |


## स्मृता ग्रन्थ

---


| कर्तृनाम. | पृष्ठम्. |
| --- | --- |
| अजयः | ३८, ७६, ७७, ९२. ९५, ९७, १०१, १०३, १०६, ११८, १२०, १२१, १२३, १२६, १२८, १३२, १३९, १४४, १४५, १४८, १५०, १५४, १५६. |
| अरुणः | १९१. |
| अरुणदत्तः | १७९, १८६. |
| कालापाः | १८. |
| कालिदासः | ५२, ६०, १७०. |
| गङ्गाधरादयः | १९१. |
| गोवर्धनः | १३०, १८७. |
| चन्द्रगोमी | १७४. |
| जयादित्यः | १०, ६३. |
| धरणिः | ८७, १०६, १७३. |
| पाल्यकीर्तिः | ७२. |
| पुरुषोत्तमः | २०. |

| कर्तृनाम. | पृष्ठम्. |
|---|---|
| भट्टिः | २४, ४१, ५२, ५९, ६४, ११७. |
| भरताचार्यः | १९. |
| भवभूतिः | ३०, ४०. |
| भागुरिः | ५१, ६६, १६०. |
| भारविः | ७७. |
| मयूरः | ११९. |
| माघः | ३०. |
| माघटीकाकृत् | ३४. |
| मुरारिः | १०. |
| रक्षितः | २४. |
| रभसः | १९, ३१, ३२, ७४, ७८, ८१, ८२, ८३, ८५, ८६, १०३, १०६, १११, ११२, ११४, ११५, ११६, ११८, १२०, १२४, १२८, १४०, १४३, १४६, १४७, १५४, १५८, १८०. |
| राजशेखरः | १७९. |
| रुद्रः | ५१, ५२, ६०, ७५, ७७, ८१, ८२, ८८, ९०, ९१, ९४, १०१, १०८, १२८, १२९, १३३, १३५, १३९, १४१, १४३, १४६, १४८, १४९, १६०, १६३, १६४, १७९, १८.. |
| लिङ्गशास्त्रकृत् | १७४. |
| वराहमिहिरः | ,, |
| वङ्गदेशीयाः | १८०, १८६. |
| वोपालितः | ५२, १६५, १७५. |
| व्याडिः | ७९, ९९, १००, १३७, १७५. |
| शाश्वतः | १२४. |

## शुद्धिपत्रम् ।

९७तमस्य पृष्ठस्य सर्वाः, ९८तमस्य पृष्ठस्य सप्त च पङ्क्तय आवृत्ताः ।

## अमरटीकासर्वस्वप्रथमकाण्डे स्मृता ग्रन्थाः ।

अजयकोशः — २. पृष्ठे.

अनुन्यासः — ६०.

अमरमाला — ७, ११२, ११३, १५०, १५३, १७२, १८०, १९२, १९३, २०२.

आगमः — ३८, ९९, ७१, १७०, १९९.

आश्चर्यपर्व — ३८.

आश्चर्यमञ्जरी — ९५, १८३.

उत्पलिनी — ३, १९२.

ओष्ठ्यकारिका — ७.

कप्फिणाभ्युदयः — १८, ३९, ५१, १३२, २०३.

कविरहस्यम् — १३८.

कामन्दकीयम् — १०६.

काव्यादर्शः — १०९.

काव्यालङ्कारः — १०८.

किरातः — ९८.

कीचकवधः — ३०, ११०.

गणितचूडामणिः — ९१.

गोवर्धनोणादिवृत्तिः — ४४.

चण्डीपाठः — ८.

चित्रलेखा — ११९.

जानकीहरणम् — ७२, ११०.

तन्त्रान्तरम् — १८८.

त्रिकाण्डम् — ३, १७, ७२, १८१.

त्रिकाण्डशेषः — ३६, ५६, ८६.

दमयन्ती — ११९.

देवीशतकम् — ९४.

द्विरूपकोशः — १४४.

धरणिकोशः — ८९, १६१, १९४, २

धातुपारायणम् — ३४, १७९.

धातुप्रदीपः — ९९, १५३, १५७, १८१.

नन्दयन्ती — १४७.

नाममाला — २७, ६८, ८२, ८७.

नामानुशासनम् — १५३.

निगमः — २०४.

पार्श्वमितिः(?) — ११९.

बाणयुद्धम् — २३.

बुद्धचरितम् — ९.

बृन्दावनम् — ५५, ११३.

बृहत्कथा — ११९.

भगवद्गीता — १९, ९९, १००,

भट्टिकाव्यम् — ३६, ७९.

भट्टिभाषासमावेशः — (भट्टिकाव्यत्रयोदशसर्गः) ७६, १२८, १७७.

भागवृत्तिः — ६०.

भारतम् — १७, ४१, ६४, ११७, १९८.

मत्स्यपुराणम् — ११८.

महिम्नःस्तोत्रम् — १७.

माधविका — ११८.

मार्कण्डेयपुराणम् — ४२, ५१.

मोक्षधर्मः — ३९.

रघुः — ४७, ९३, १९८.

रत्नकोशः — ४, ४१, ५८, १२३, १४७, १५६, १७८

रत्नमाला — ११२, १८८, २०४.

[illegible]: — १९२.
लैङ्गम् — ९०, ९१.
वर्णदेशना — १८, ३२, ३३, ३४, ३९, ९२, ८९, १३७, १९४.
वर्णविवेकः — ६६.
वायुपुराणम् — ३१, ४६, ५०
वासनामञ्जरी — २१.
वासवदत्ता — ३७, ६८, ७०, ११९, १२८, १७१, १८९, १९१, २०४, २०५, २०६.
विदग्धम् — ३२, ७८, ११९.
विश्वप्रकाशः — २५, ५५, ९७, १६१.
विष्णुपुराणम् — १७, १९, ९२.
वृत्तिः — ६, ९, ३७, ८९, १४८, १९२.
वृद्धामरकोशः — २२.
वेणीसंहारम् — ७३.
शब्दार्णवः — १५, ४०, ४६, ७१, ७७, ८४, ८६, १४५, १९१, २०१.
शालिहोत्रम् — ३३, ४१.
शिल्पलेखः — १७३.
शिवभद्रम् — १२७.
शूद्रकवधः — ११९.
शृङ्गारप्रकाशः — ५८, ८२, ९९, १०९.
श्रीरामायणम् — ९, ६९, ६७.
श्रुतिः — ४२.
सरस्वतीकण्ठाभरणम् — (अलङ्कारः)२, ५८, ९३, ११९
संक्षिप्तभारतम् — १६.
साङ्ख्यशास्त्रम् — १६०.
साम्बपुराणम् — १५, २०, ४५, ७०.
साहित्यकल्पतरुः — २१.

सुन्दरानन्दचरितम् — १४.

सूरजातकमाला — १७२.

सूर्यशतकम् — ७६, ९३.

स्कान्दपुराणम् — ३१.

स्वप्नवासवदत्तम् — १४७.

हर्षचरितम् — ११८.

हरिप्रबोधयमकम् — ३३, ५६, १७६, १८२

हरिवंशम् — १७, १८, २०, २५, ३९.